# चक्रदत्तः।

( चिकित्सासंग्रहग्रन्थः )

महामहोपाध्याय-चरकचतुरानन-

श्रीमच्चक्रपाणि दत्तेन विरचितः।

श्रीशिवदाससेनविरचितया

तत्त्वचन्द्रिकासमाख्यया व्याख्यया समलङ्कृतः।

पण्डितकुलपति वि, ए, उपाधिधारि-

श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्यात्मजाभ्यां

पण्डित-श्रीमदाशुबोधविद्याभूषण-पण्डित-श्रीमन्नित्यबोध-

विद्यारत्नाभ्यां प्रतिसंस्कृतः प्रकाशितश्च।

पञ्चमसंस्करणम्।

कलिकातामहानगर्य्यां

वाचस्पत्ययन्त्रे

मुद्रितः।

ई १८३३।



षष्ठमुद्रार्थः।

प्रकाशक—{ पण्डित-श्रीआशुबोधविद्याभूषण
तथा
पण्डित-श्रीनित्यबोधविद्यारत्न ।

प्राप्तिस्थान—{ २न०, रमानाथ मजुमदार ष्ट्रीट्, आम्हार्ष्ट-ष्ट्रीट् पोष्ट-अफिस । कलिकाता ।

प्रिण्टर—वि, वि, मुखर्जी ।

२ न०, रमानाथ मजुमदार ष्ट्रीट्, कलिकाता ।

# सूचीपत्रम् ।

---

## अथ ज्वरातीसारचिकित्सा ।

## अथातीसारचिकित्सा ।
## ( Diarrhœa. )

## अथाग्निमान्द्यादिचिकित्सा ।

( Dyspepsia. )

## अथ क्रिमिचिकित्सा।

(Worms.)



## अथ पाण्डुरोगादिचिकित्सा।

(Anæmia.)

## अथ मूर्च्छाचिकित्सा ।

( Cyncopy. )



## अथ मदात्ययचिकित्सा ।

( Alcoholism. )





## अथ दाहचिकित्सा ।

( Burning. )



## अथोन्मादचिकित्सा ।

( Insanity. )

---

## अथ वातरक्तचिकित्सा।

### ( L-prosy )

---

## अथ परिणामशूलचिकित्सा ।

( Intestinal Colic.

---

## अथ हृद्रोगचिकित्सा ।

(Angina Pectoris, cordialgia.)



---

## अथ मूत्रकृच्छ्रचिकित्सा ।

(Dysuria.)

## अथ मूत्राघातचिकित्सा ।
(Strangury.)



## अथाश्मरीचिकित्सा ।
(Stone or Calculus.)



## अथ प्रमेहचिकित्सा ।
(Diabetes, Spermatorrhœa, Gonorrhœa, Polyuria, &c.)

## अथ स्थौल्यचिकित्सा ।

( Obesity. )



## अथोदरचिकित्सा ।

( Ovarian Tumour, Ascitis, Dropsy, &c. )



## अथ प्लीहयकृच्चिकित्सा ।

( Spleen and Liver. )

## अथ शोथचिकित्सा ।

## ( Dropsy or Anasarca. )



## अथ वृद्धि-व्रध्नचिकित्सा ।

## ( Hypertrophy and Bubo. )



## गलगण्ड-गण्डमालाऽपची-ग्रन्थ्यर्बुदचिकित्सा ।

## ( Bronchocele, Scrofula, enlargement of Lymphatic Glands, Goitre, and Tumour. )

---

## अथ श्लीपदचिकित्सा ।

( Elephantiasis. )



---

## अथ विद्रधिचिकित्सा ।

( Deep-seated Abscess. )



---

## अथ व्रणशोथचिकित्सा ।

( Boils, Inflammation of wound. )

---

## अथ नाडीव्रणचिकित्सा ।

( Sinus, Fistula. )

---

## अथ कुष्ठचिकित्सा ।

### ( Leprosy. )

## अथ मसूरिकाचिकित्सा ।
( Small-pox. )



---

## अथ क्षुद्ररोगचिकित्सा ।

---

## अथ मुखरोगचिकित्सा ।

( Disease of the Mouth. )

---

## अथ नासारोगचिकित्सा।

## ( Disease of the Nose. )



---

## अथ नेत्ररोगचिकित्सा।

## ( Eye-disease. )

———

अथासृग्दरचिकित्सा ।

( Menorrhagia. )

## अथ बालरोगचिकित्सा ।

## ( Diseases of Children. )

—:—



## अथ वृष्याधिकारः।



——

## अथ स्नेहाधिकारः।

विषयाः । पृष्ठाङ्काः ।

## अथ निरूहाधिकारः ।



## अथ नस्याधिकारः ।



विषयाः । पृष्ठाङ्काः ।



## अथ धूमपानाधिकारः ।



## अथ कवलगण्डूषाधिकारः ।



## अथाश्च्योतनाञ्जन-तर्पण-पुटपाकाधिकारः ।

# चक्रदत्तः।

———

मङ्गलाचरणम्।—

गुणत्रयविभेदेन मूर्त्तित्रयमुपेयुषे।
त्रयीभुवे त्रिनेत्राय त्रिलोकीपतये नमः ॥ १ ॥

ग्रन्थस्य अभिधेयादिनिर्देशः।—

नानायुर्वेदविख्यात-सद्योगैश्चक्रपाणिना।
क्रियते सङ्ग्रहो गूढ़-वाक्यबोधकवाक्यवान् ॥ २ ॥

---

यः सप्तवर्षदेशीयो दधार धरणीधरम्।
कंसध्वंसकरं वन्दे तं देवं देवकीसुतम् ॥ १ ॥
तातः किमद्य भातीति यं दृष्ट्वा दृष्टपूर्वकम्।
अभूत् स्कन्देऽपि सन्देहस्तं देहं शिवयोर्भजे ॥ २ ॥
टीका रत्नप्रभा चक्र-दत्तनिर्मितसङ्ग्रहे।
यद्यप्यास्ते तथाऽप्येष सङ्क्षेपाय समोद्यमः ॥ ३ ॥
विस्तरोक्तञ्च सङ्क्षिप्य प्रतिक्षिप्य च दूषणः।
व्याख्यान्तरञ्च निक्षिप्य टीकेयं क्रियते मया ॥ ४ ॥

विशिष्टशिष्टाचारानुमितश्रुतिबोधितकर्त्तव्यताकं प्रारिप्सितग्रन्थसमाप्तिफलकं तत्प्रतिबन्धकविघ्नध्वंसमात्रफलकं वा स्वयं कृतमिष्टदेवतानमस्कारं शिष्यशिक्षार्थमादौ निबध्नाति, गुणत्रयेत्यादि।—गुणत्रयं सत्त्वरजस्तमोरूपम्। मूर्त्तित्रयं ब्रह्महरिहर-स्वरूपम् ॥ १ ॥

प्रेक्षावतां प्रवृत्त्यर्थं सम्बन्धाभिधेयप्रयोजनमाह, नानेत्यादि।—सदिति—सिद्ध-फलः। गूढवाक्यं गूढार्थं वचनं, तद्बोधकं तदर्थप्रतिपादकं यत् वाक्यं वचनं तद्युक्तः; यथा—नवज्वरे षडङ्गादिभेषजविधानं, तथा तत्रैव "न दद्यात् तत्र भेषजम्" इति भेषजनिषेधोऽपि, अतो विधिनिषेधयोरेकविषयत्वेन विरोधः स्यात्, अतस्तत्परि-हारार्थं "मुख्यभेषजसम्बन्धो निषिद्धः" इत्यादि वचनं निबद्धमिति। सङ्ग्रहेण

# अथ ज्वरचिकित्सा ।

चिकित्सायाः क्रमः ।—

रोगमादौ परीक्षेत ततोऽनन्तरमौषधम् ।
ततः कर्म भिषक् पश्चाज्ज्ञानपूर्वं समाचरेत् ॥ ३ ॥

नवज्वरे अपथ्यानि ।—

नवज्वरे दिवास्वप्न-स्नानाभ्यङ्गान्नमैथुनम् ।
क्रोधप्रवातव्यायाम-कषायांश्च विवर्जयेत् ॥ ४ ॥

---

अत्र सद्योगानां वाच्य-वाचकलक्षणः सम्बन्धः, सद्योगा एवाभिधेयाः, अवान्तर-प्रयोजनं चिकित्सितं, मुख्यन्तु आरोग्यमिति ॥ २ ॥

तत्र चिकित्साक्रममाह, रोगमित्यादि ।—आदौ निदानपूर्वरूपादिभिः रोगं परीक्षेत । ततोऽनन्तरं रोगपरीक्षानन्तरमौषधं परीक्षेत । ज्ञानपूर्वमिति—कर्मदर्शन-जनितज्ञानपूर्वम्; ज्ञायते अनेनेति ज्ञानं शास्त्रं, तत्पूर्वकमिति वा ॥ ३ ॥

तत्र ज्वरस्य सर्वरोगप्रधानत्वात् प्रथमं तच्चिकित्सिते वक्तव्ये कृतमपि भेषजं निदानसेवनादकृतमिव भवतीति निदानपरिवर्जनस्यैव गरीयस्त्वात् प्रथमं निदान-परिवर्जनरूपं चिकित्सितमाह, नवज्वरे इत्यादि ।—अत्रान्नं गुर्वन्नं, लघ्वन्नस्य विधा-नात्; अत एवोक्तं हारीते—"गुर्वन्नभोजनाच्चापि विष्टम्भो दोषकोपनम्" (३ स्था० २अ०) इति । कषायांश्चेति—"न तु कल्पनमुद्दिश्य कषायः प्रतिषिध्यते" (चि० ज्वर०) इति चरकवाक्यस्वरसात्, कषायशब्देनात्र कषाय-रसमात्रमुच्यते, न तु स्वरसादिः; अत एव जतूकर्णेऽपि—"कषायरसगुरुरूक्ष-स्निग्धस्नानाभ्यङ्गान्नं नवज्वरे वर्जयेत्" इत्युक्तम् । हरिश्चन्द्रेणापि "नात्र स्वरसादीनां निषेधः" इत्युक्तम् । तथा—"स्तभ्यन्ते न विपच्यन्ते कुर्वन्ति विषमज्वरम् । दोषा बद्धाः कषायेण स्तम्भित्वात् तरुणज्वरे" (चि० ज्व०) इति चरकवचने स्तम्भित्वा-दित्ययं हेतुः कषायरसवर्जनाभिप्रायेणैव सङ्गच्छते; उक्तं हि "कषायः स्तम्भनः शीतः" इति; स्तभ्नाति येन सः स्तम्भनः । वाग्भटेऽप्युक्तं—"पित्तं मृद्वपरत्वेऽपि कषायस्तु न शस्यते । नवज्वरे मलस्तम्भात् कषायो विषमज्वरम् । कुरुतेऽरुचिहृल्लास-हिक्काऽऽध्मानादिकानपि ॥" (चि० १अ०) इति ॥ ४ ॥

क्षयादिजज्वरे लङ्घननिषेधः।—

ज्वरे लङ्घनमेवादावुपदिष्टमृते ज्वरात्।
क्षयानिलभयक्रोध-कामशोकश्रमोद्भवात् ॥ ५ ॥

"आमाशयसमुत्थानां पूर्वं लङ्घनमौषधम्" इत्युक्तम्; ज्वरोऽप्यामाशयसमुत्थः, अतएव लङ्घनमुपदिशति, ज्वरे लङ्घनमित्यादि।—यद्यपि लङ्घनबृंहणीये—"चतुष्प्रकारा संशुद्धिः" (च० सू० लङ्घनबृं०) इत्यादिना दशविधमेव लङ्घनमुक्तं, तथाऽपि व्यायामप्रवातयोर्वर्जनीयत्वेनैव उक्तत्वात् संशोधनादीनाञ्चावस्थाविशेषनियतत्वात् पारिशेष्यादत्रोपवास एव लङ्घनशब्देनोच्यते; अत एव लङ्घनमेवेत्येवकारेण संशोधनादिरूपं लङ्घनं निषिध्यते; तेन ज्वरस्य पूर्वरूपे वमनघृतपानादिविधानं तस्य न निषेधः। वाग्भटेनापि "स्नानाभ्यङ्गप्रदेहांश्च परिशेषञ्च लङ्घनम्" (चि० १ अ०) इत्यनेन नवज्वरे अनशनरूपलङ्घनापेक्षया परिशिष्टलङ्घनप्रतिषेधं कुर्वता संशोधनादिरूपं लङ्घनं निषिध्यते। किं वा चरकेण निदानस्थाने "हितं लघ्वशनमपतर्पणं वा" (ज्वर०) इति यदुक्तं, तत् पूर्वरूपावस्थायाम्; व्यक्तायान्तु लङ्घनमेवेत्येवकारेण लघ्वशनमपि निषिध्यते इति ज्ञेयम्। ननु लङ्घनबृंहणीये कफपित्तजच्छर्द्यादिषु मध्ये ज्वरं पठित्वा उक्तं—"पाचनैस्तान् भिषक् प्राज्ञः प्रायेणादावुपाचरेत्" (च० सू० लङ्घनबृं०) इति; इह तु लङ्घनमेवादावित्यतो विरोधः? नैवम्; तत् भेषजप्रयोगस्यादौ पाचनं, न तु ज्वरस्यादावित्यवगम्यते; किं वा आदावेव लङ्घनं कार्य्यमिति योज्यम्; तेन जीर्णज्वरे न लङ्घनं कार्य्यमिति बोधयति; उक्तं हि वाग्भटे—"शुद्धवातक्षयागन्तु-जीर्णज्वरिषु लङ्घनम्। नेष्यते तेष्वभिहितं शमनं यच्च कर्षणम् ॥" (चि० १ अ०) इति। हारीतेन तु—"पित्तश्लेष्मविशुद्ध्यर्थं कुर्य्याद्वमनमादितः" (३स्था० २अ०) इति यदुक्तं तत् "कफप्रधानान्" (च० चि० ज्वर०) इत्यादिवक्ष्यमाणावस्थायां ज्ञेयम्। क्षयशब्देन धातुक्षयकृतं ज्वरं किं वा राजयक्ष्मकृतं ज्वरं गृह्णाति। अनिलशब्देन निरामानिलग्रहणम्; उक्तं हि "शुद्धवातक्षयागन्तु-जीर्णज्वरिषु लङ्घनम्। नेष्यते" (वा० चि० १ अ०) इति। किं वा क्षयानिलशब्देन धातुक्षयकुपितानिलग्रहणम्; यदुक्तं—"वायोर्धातुक्षयात् कोपो मार्गस्यावरणेन च" इति। यस्तु वायुर्मार्गावरणेन कुप्यति, स आवरकधर्मितया प्रायेण सामो भवति, तत्र लङ्घनं मात्रया कर्त्तव्यमेव, यदुक्तं "सामे वातेऽपि लङ्घनम्" इति। अनिलज्वरमभिधायापि कामादिज्वराभिधानं कामादिज्वरेषु कालान्तरेण वातसम्बन्धो भवति, तेन प्रथममपि वातसम्बन्धे कामादिज्वराणाम् अलङ्घनीयतोपदर्शनार्थम् ॥ ५ ॥

लङ्घनप्रयोगहेतुः।—

आमाशयस्थो हत्वाऽग्निं सामो मार्गान् पिधापयन्।
विदधाति ज्वरं दोषस्तस्माल्लङ्घनमाचरेत्॥ ६॥

लङ्घनस्य गुणाः।—

अनवस्थितदोषाग्नेर्लङ्घनं दोषपाचनम्।
ज्वरघ्नं दीपनं काङ्क्षा-रुचिलाघवकारकम्॥ ७॥

यथाबलं लङ्घनस्य कर्त्तव्यतोपदेशः।—

प्राणाविरोधिना चैनं लङ्घनेनोपपादयेत्।
बलाधिष्ठानमारोग्यं यदर्थोऽयं क्रियाक्रमः॥ ८॥

अलङ्घनीयाः।—

तत्तु मारुतक्षुत्तृष्णा-मुखशोषभ्रमान्विते।
कार्य्यं न बाले वृद्धे वा न गर्भिण्यां न दुर्बले॥ ९॥

सम्यक् लङ्घनस्य लक्षणम्।—

वातमूत्रपुरीषाणां विसर्गे गात्रलाघवे।
हृदयोद्गारकण्ठास्य-शुद्धौ तन्द्राक्लमे गते॥ १०॥

---

लङ्घनोपपत्त्यर्थं ज्वरस्य सम्प्राप्तिमाह, आमाशयस्थ इत्यादि वाग्भटस्य।—अत्र यत्तदोर्नित्यसम्बन्धात् यस्मादिति लभ्यते॥ ६॥

लङ्घनफलमाह, अनवस्थितेत्यादि सुश्रुतस्य।—अनवस्थितौ स्वस्थाने स्वमाने चानवस्थितौ दोषाग्नी यस्य स तस्य। काङ्क्षा अन्नप्रार्थना, रुचिः अभ्यवहार-पाटवम्॥ ७॥

एतच्च लङ्घनं तथा कार्य्यं,यथा न बलहानिः स्यादित्याह, प्राणाविरोधिनेत्यादि।—प्राणो बलं, विरोधश्चातिक्षय इहोच्यते। हेतुमाह, बलाधिष्ठानमित्यादि, अधिष्ठानमाश्रयः, अत्र बहुव्रीहिः; अत एवोक्तं, "यस्माद्बलवतः सर्वक्रियाप्रवृत्तिस्तस्माद्बलमेव प्रधानमधिकरणानाम्" इति। यदर्थः आरोग्यार्थः॥ ८॥

अलङ्घनीयानाह,—तत्त्वित्यादि॥ ९॥

सम्यक्कृतस्य लङ्घनस्य लक्षणमाह, वातमूत्रेत्यादि।—हृदयस्य शुद्धिः गौरवादि-राहित्यं, कण्ठस्य शुद्धिः कफानुलिप्ततादिविरहः, आस्यस्य शुद्धिः अविकृतरसत्वम्। तन्द्रा निद्रावत् क्लान्तिः, क्लमो दोषजा ग्लानिः। क्षुत्पिपासासहोदये इति—क्षुत्-

क्षेदे जाते रुचौ चापि क्षुत्पिपासासहोदये।
कृतं लङ्घनमादेश्यं निर्व्यथे चान्तरात्मनि ॥ ११ ॥

अतिलङ्घनस्य लक्षणम्।—

पर्व्वभेदोऽङ्गमर्दश्च कासः शोषो मुखस्य च।
क्षुत्प्रणाशोऽरुचिस्तृष्णा दौर्बल्यं श्रोत्रनेत्रयोः ॥ १२ ॥
मनसः सम्भ्रमोऽभीक्ष्णमूर्द्ध्ववातस्तमो हृदि।
देहाग्निबलहानिश्च लङ्घनेऽतिकृते भवेत् ॥ १३ ॥

ज्वरविशेषे वमनविधिः।—

सद्योभुक्तस्य वा जाते ज्वरे सन्तर्पणोत्थिते।
वमनं वमनार्हस्य शस्तमित्याह वाग्भटः ॥ १४ ॥

ज्वरस्य अवस्थान्तरविशेषे वमनविधिः।—

कफप्रधानानुत्क्लिष्टान् दोषानामाशयस्थितान्।

---

पिपासयोर्युगपदुदये इत्यर्थः। वाग्भटेऽप्युक्तं—"क्षुत्तृट्सहोदयः शुद्ध-हृदयोद्गारकण्ठता" (चि० १अ०) इति। किन्तु—"सृष्टमारुतविण्मूत्रं क्षुत्पिपासाऽसहं लघुम्। प्रसन्नात्मेन्द्रियं क्षामं नरं विद्यात् सुलङ्घितम् ॥" (उ० ३९ अ०) इति सुश्रुतदर्शनात् क्षुत्पिपासयोरसहोऽसहस्य उदय इति चक्रेण व्याख्यातम्; किन्तु न सहते इत्यसहः, पचाद्यजन्तः कर्त्तरि दृश्यते, तेन असहशब्दस्यासह्यार्थत्वकल्पने कष्टं स्यादिति॥ कृतमिति—सम्यक्कृतम्। अन्तरात्मनीति—अन्तरिन्द्रिये मनसीत्यर्थः ॥ १०।११ ॥

अतिलङ्घितलक्षणमाह, पर्व्वभेद इत्यादि।—अरुचिः सत्यामपि बुभुक्षायाम् अन्नाभिनन्दनम्। श्रोत्रनेत्रयोर्दौर्बल्यं स्वविषयग्रहणासामर्थ्यम्। सम्भ्रमोऽनवस्थितत्वं, भ्रान्तिरित्यन्ये। अभीक्ष्णमिति—अतिशयेन। ऊर्द्ध्ववातः हिक्काश्वासकर्णक्ष्वेडनतृष्णा-द्यः, न पुनरुद्गारविशेषः अतिलङ्घनेन कफक्षयात्; स च पुनः कफकोपात् भवति, यदुक्तम्—"अधः प्रतिहतो वायुः श्लेष्मणा मारुतेन च। करोति नित्यमुद्गारमूर्द्ध्ववातः स उच्यते ॥" इति। तमः हृदि मोह इत्यर्थः ॥ १२।१३ ॥

ज्वरारम्भे एव वमनावस्थामाह, सद्य इत्यादि।—सन्तर्पणोत्थिते इत्यत्र "आमे विशेषतः" (चि० १अ०) इति वाग्भटे पाठो दृश्यते ॥ १४ ॥

तरुणातरुणज्वरे अवस्थाविशेषे अविशेषेण वमनमाह, कफप्रधानानित्यादि चरकस्य।—कफः प्रधानो येषां ते कफप्रधानाः। उत्क्लिष्टान् हृल्लासादिना बहि-

बुद्धा ज्वरकरान् काले वम्यानां वमनैर्हरेत् ॥ १५ ॥

अवस्थाविशेषे वमनप्रयोगे दोषः।—

अनुपस्थितदोषाणां वमनं तरुणे ज्वरे।
हृद्रोगं श्वासमानाहं मोहञ्च कुरुते भृशम् ॥ १६ ॥

ज्वरविशेषे शीतोष्णपानीयजलविधिः।—

तृष्यते सलिलञ्चोष्णं दद्याद्वातकफज्वरे।
मद्योत्थे पैत्तिके वाऽपि शीतलं तिक्तकैः शृतम् ॥ १७ ॥

द्विविधजलस्य गुणः।—

दीपनं पाचनञ्चैव ज्वरघ्नमुभयञ्च तत्।
स्रोतसां शोधनं बल्यं रुचिस्वेदप्रदं शिवम् ॥ १८ ॥

---

निर्गमनोन्मुखान्। काले यथोक्तायामवस्थायाम। वम्यानामिति—वमनयोग्यानां, तेन गर्भिण्यादिनिषेधः, यदुक्तं वक्ष्यमाणवमनाधिकारे ॥ १५ ॥

उक्तावस्थाव्यतिरेकेण वमने दोषमाह, अनुपस्थितेत्यादि चरकस्य।—अनुपस्थितदोषाणाम अनुत्क्लिष्टदोषाणामित्यर्थः ॥ १६ ॥

लङ्घनकाले तृष्यतः जलमाह, तृष्यते इत्यादि चरकस्य।—वातकफज्वरे इति—वातज्वरे कफज्वरे वातकफज्वरे च उष्णं सलिलमङ्गशृतं ज्ञेयम; यदाह अग्निवेशः,—"क्वाथ्यमानन्तु यत् तोयं निष्फेनं निर्मलीकृतम। भवत्यर्द्धावशिष्टञ्च तदुष्णोदकमुच्यते॥" मद्योत्थे इत्यादि—मद्यस्य अत्युष्णवीर्यत्वादम्लत्वाच्च पित्तकर्तृत्वात् तज्जन्यज्वरस्य पित्तजत्वेन परिग्रहे सिद्धेऽपि पुनस्तदभिधानम अन्यास्मिन्नपि मद्योत्थरोगे तिक्तकशृतजलस्य यौगिकत्वबोधनार्थमित्याहुः। तिक्तकैः शृतमिति—वक्ष्यमाणमुस्तादिभिस्तिक्तकैः शृतम्। ज्वरघ्नमुभयञ्च तदिति—उभयमुष्णं तथा तिक्तकशृतशीतञ्च। घृतं दीपनमपि न पाचनं, लङ्घनं पाचनमपि न दीपनमित्यतः पदद्वयोक्तिः। यद्यपि त्रिदोषजकफपित्तज्वरयोः पानीयं नोक्तं, तथाऽपि सामान्येन विमानस्थाने यदुक्तं—"किं नु खलु भगवन्! ज्वरितेभ्यः पानीयमुष्णं भूयिष्ठं प्रयच्छन्ति" (च० वि० जनपदोद्धं०) इत्यादिना, तत्सामान्यादुष्णमेव जलं देयम्। वातपित्तज्वरेऽप्यर्थदाहकारके शीतमङ्गशृतं जलं देयमित्यपि विमान एव "नात्यर्थोत्सन्नपित्ते" (च० वि० जनपदोद्ध०) इत्यादिना ग्रन्थेन सूचितम् ॥ १७।१८ ॥

षडङ्गपानीयम् ।—

मुस्तपर्पटकोशीर-चन्दनोदीच्यनागरैः ।
शृतशीतं जलं दद्यात् पिपासाज्वरशान्तये ॥ १९ ॥

तरुणज्वरे गौणभेषजप्रयोगस्य निर्दोषता ।—

मुख्यभेषजसम्बन्धो निषिद्धस्तरुणे ज्वरे ।
तोयपेयादिसंस्कारे निर्दोषं तेन भेषजम् ॥ २० ॥

षड़ङ्गपरिभाषा ।—

यदप्सु शृतशीतासु षड़ङ्गादि प्रयुज्यते ।
कर्षमात्रं ततो द्रव्यं साधयेत् प्रास्थिकेऽम्भसि ॥
अर्द्धशृतं प्रयोक्तव्यं पाने पेयादिसंविधौ ॥ २१ ॥

---

तिक्तकैः शृतमिति यदुक्तं तदाह, मुस्तेत्यादि ।—चन्दनं रक्तचन्दनम् ; यदुक्तम् —"उक्ते चन्दनशब्दे तु गृह्यते रक्तचन्दनम्" । उदीच्यं बालकम् । अत्र तु शुण्ठी अतिक्ताऽप्यामाशयदुष्टिकारणकज्वरहितत्वाद्विहिता । वाग्भटे तु पद्मकाष्ठं पठ्यते न तु शुण्ठी ॥ १९ ॥

ननु "ज्वरितं षडहेऽतीते" ( च० चि० ज्वर० ) इत्यादिना सप्ताहानन्तरमेवौषधदानं वक्ष्यति, अत्र तु सप्ताहाभ्यन्तर एव षडङ्गाद्यौषधविधानम्, अतः पूर्वापरग्रन्थविरोधं निराचिकीर्षुराह, मुख्यभेषजसम्बन्ध इत्यादि ।—अन्नपानादेरसंस्कारकतया यदौषधमुपयुज्यते तत् प्रधानं, तद्भिन्नं पुनरप्रधानमिति । तेन प्रधानौषधस्यैव तरुणज्वरे निषेधः, नाप्रधानस्य षडङ्गादेः । उपयुज्यते इत्यनेन भक्षणविषये उपयोगो विवक्षितः, तेन स्वेदादीनामप्रधानत्वात् तरुणज्वरे न निषेधः । अष्टाङ्गाद्यवलेहोऽपि प्रधानत्वात् तरुणज्वरे देय एव, यतस्त्रिदोषजज्वरे तु सप्ताहाभ्यन्तर एव तस्य विधानं तदपवादरूपमेवेति उत्सर्गापवादरूपतया विधिनिषेधयोर्न विरोधः ॥ २० ॥

उक्तषडङ्गतोयसाधनार्थं तथा वक्ष्यमाणस्य कषायसाध्यपेयादेः साधनार्थञ्च भेषजजलमानव्यवस्थापिकां वृद्धवैद्यव्यवहारसिद्धां परिभाषामाह, यदप्सु इत्यादि ।—शृतशीतं शृतशीतलजलनिमित्तं यत् षडङ्गादि द्रव्यं प्रयुज्यते, तत् कर्षमात्रम्, आदिशब्देन पेयादिसम्पादनार्थं जलसंस्कारकधान्यपिप्पली-पञ्चमूली-धान्यपञ्चकादि-

यवागूप्रयोगकालः ।—

वमितं लङ्घितं काले यवागूभिरुपाचरेत् ।
यथास्वौषधसिद्धाभिर्मण्डपूर्वाभिरादितः ॥ २२ ॥

ज्वरघ्नी लाजपेया ।—

लाजपेयां सुखजरां पिप्पलीनागरैः शृताम् ।
पिबेज्ज्वरी ज्वरहरां क्षुद्वानल्पाग्निरादितः ॥ २३ ॥

---

आह: । पेयादिसंविधावित्यादिशब्दात्तु यूषरसादीनां ग्रहणम् । अत्र मध्यवीर्य्यस्यापि षडङ्गादेः क्वाथो मन्दानलपुरुषविषयतया ज्ञेयः, मध्यवीर्य्यस्य हि द्रव्यस्यार्द्धपलप्रमाणमग्रे व्यवस्थापनीयम् । प्रास्थिके इति—द्रवद्वैगुण्याच्छरावचतुष्टये ; "द्वैगुण्यं कुडवादूर्द्ध्वं प्रस्थादिस्रुतिमानतः" इत्युक्तेः । इमाञ्च परिभाषां क्वाथसाध्ययवागूविषयत्वेन वृद्धाः प्रायः समाद्रियन्ते ॥ २१ ॥

वमनलङ्घनयोरनन्तरं यद्विधेयं तदाह, वमितमित्यादि चरकस्य ।—अवस्थावशात् कदाचिद्वमितं, कदाचिल्लङ्घितं, कदाचिच्च वमितलङ्घितम् । वमनानन्तरं हि यदि सम्यग्विशुद्धिर्न भवति, तदा तदहर्लङ्घनमपि क्रियते इत्यत उक्तं, काले इति—अन्नदानयोग्यकाले । यथास्वौषधं यस्यां यवाग्वां यद्भेषजं पिप्पलीनागरादि वाच्यं तत्सिद्धाभिः ; किं वा यस्मिन् ज्वरे यद्यद्भेषजं पाचनं वाच्यं तत्सिद्धाभिः ; उक्तं हि सुश्रुते—"अन्नकाले हिता पेया यथास्वं पाचनैः कृता" ( उ० ३९ अ० ) इति । यद्यत् स्वं यथास्वमिति वीप्सायामव्ययीभावः । मण्डपूर्वाभिरिति—मण्डः पूर्वः प्रधानोऽच्छतया यासां ताभिरित्यर्थः ; एतेन पेयाया ग्रहणं, तस्या एव बहुद्रवत्वेन मण्डप्रधानत्वात् ; विलेप्यास्तु निरासः, तस्या अल्पद्रवत्वेन मण्डप्रधानत्वाभावात् । अन्ये तु मण्डः पूर्वः प्रथमाभ्यवहार्य्यो यासां ताभिः इत्यर्थः, तेन प्रथमं स्वच्छभागं खादित्वा ततो घनभागः खाद्य इत्याहुः ॥ २२ ॥

लाजपेयामित्यादि चरकस्य ।—अत्र "लाजपेयाम्" इत्यादिना "घृतभृष्टां ज्वरापहाम्" ( चि० ज्वर० ) इत्यन्तेन चरके दश यवाग्वोऽभिहिताः ; तत्र "पिप्पलीनागरैः शृताम्" इत्यन्ता श्लेष्मघ्नीति हरिश्चन्द्रः । अन्ये तु लाजपेयां सुखजरामित्येकां, पिप्पलीनागरैः शृतामिति द्वितीयाम्, एवं शेषाभिः सममेकादश पेया इति व्याचक्षते ; किन्तु "प्राक् लाजपेयां सुजरां सशुण्ठीम्" ( चि० १ अ० ) इति वाग्भटदर्शनात् हरिश्चन्द्रपक्ष एव समीचीनः, यतोऽस्मिन् प्रकरणे तत्र लाजपेया नोच्यते ॥ २३ ।

ज्वरघ्नी रक्तशालिकृता पेया ।—

पेयां वा रक्तशालीनां पार्श्ववस्तिशिरोरुजि ।
श्वदंष्ट्राकण्टकारीभ्यां सिद्धां ज्वरहरां पिबेत् ॥ २४ ॥

ज्वरे कोष्ठबद्धादौ रक्तशालिकृता पेया ।—

कोष्ठे विबद्धे सरुजि पिबेत् पेयां शृतां ज्वरी ।
मृद्वीकापिप्पलीमूल-चव्यचित्रकनागरैः ॥ २५ ॥

द्वन्द्व-सन्निपातज्वरे पेया ।—

पञ्चमूल्या लघीयस्या गुर्व्या ताभ्यां सधान्यया ।
कणया यूषपेयादि-साधनं स्यात् यथाक्रमम् ॥
वातपित्ते वातकफे त्रिदोषे श्लेष्मपित्तजे ॥ २६ ॥

सन्निपातज्वरे पेया ।—

यवागूः स्यात् त्रिदोषघ्नी व्याघ्रीदुःस्पर्शगोक्षुरैः ॥ २७ ॥

कल्कसाध्ययवागूपाकपरिभाषा ।—

कर्षार्द्धं वा कणाशुण्ठ्योः कल्कद्रव्यस्य वा पलम् ।
विनीय पाचयेद्युक्त्या वारिप्रस्थेन चापराम् ॥ २८ ॥

---

पेयामित्यादि चरकस्य ।—श्वदंष्ट्रा गोक्षुरम् । मृद्वीका द्राक्षा । चित्रकं रक्तचित्रकं मानलत्वात् । पञ्चमूल्येत्यादि चत्वारो योगा अवचारणयैव व्याख्याताः । यवागूः स्यादित्यादौ व्याघ्री कण्टकारी । दुःस्पर्शा दुरालभा ॥ २४—२७ ॥

कल्कसाध्ययवागूसाधनार्थं परिभाषामाह, कर्षार्द्धं वेत्यादि ।—कर्षार्द्धं वेति कर्षार्द्धं प्रत्येकम् । त्रिविधं हि भेषजद्रव्यं वीर्य्यभेदात् ; तीक्ष्णवीर्य्यं यथा—शुण्ठ्यादि, मध्यवीर्य्यं—बिल्वाग्निमन्थादि, मृदुवीर्य्यम्—आमलक्यादि ; तत्र कणाशुण्ठ्योरिति तीक्ष्णद्रव्योपलक्षणं, तेन तीक्ष्णद्रव्यमात्रस्यैव कर्षप्रमाणमिति ज्ञापितम् । कल्कद्रव्यस्य वा पलमिति मृदुद्रव्योपलक्षणं, तेनान्यस्यापि मृदुवीर्य्यद्रव्यस्यामलक्यादेः पलं ग्राह्यमिति ज्ञापयति ; एतेन तीक्ष्णमृदुद्रव्ययोः कर्षपलमानव्यवस्थया मध्यवीर्य्यस्य बिल्वाग्निमन्थादेरनुक्तमप्यर्द्धपलमानं सामर्थ्यादेव ज्ञेयम् । यत् पुनर्मध्यवीर्य्यस्य षडङ्गादेः कर्षप्रमाणमुक्तं, तन्मन्दानलपुरुषाभिप्रायेणेत्युक्तमेव । विनीयेति—कल्कीकृत्य, प्रक्षिप्य इति वा । अपरामिति—अन्याम्, अन्यत्वञ्च कषायसाध्ययवागूमपेक्ष्य, तेन कल्क-

पेयादिषु क्वाथसाधनपरिभाषा।—

**षड़ङ्गपरिभाषेव प्रायः पेयादिसम्मता ॥ २९ ॥**

यवाग्वा मात्रा।—

**यवागूमुचिताद्भक्ताच्चतुर्भागकृतां वदेत् ॥ ३० ॥**

मण्डादीनां लक्षणम्।—

**सिक्थकै रहितो मण्डः पेया सिक्थसमन्विता।**

साध्यामित्यर्थः। एवञ्च तीक्ष्णद्रव्यापेक्षया कर्षप्रमाणं, मृदुद्रव्यापेक्षया च पलप्रमाणं, मध्यवीर्य्यद्रव्यापेक्षया चार्द्धपलप्रमाणं द्रव्यं विनीय कल्कसाध्यां यवागूं वारिप्रस्थेन द्रवद्वैगुण्यात् शरावचतुष्टयमानेन साधयेदिति योजना। ननु प्रबलानलबलादौ पुरुषे बहुयवाग्वादि विधेयं, तत्र कथं वारिप्रस्थेन यवागूसाधनं भविष्यति? इत्याह, युक्तयेति।—एतेन यत्र उत्तमबलानले बहुयवागूर्विधेया, तत्र युक्त्या जलस्य प्रस्थद्वयं त्रयं वा तण्डुलानुरूपं दत्त्वा यवागूं साधयेत्, अल्पबलानले तु वारिप्रस्थेनेत्यर्थः। अपरानिति पाठे—यूषादीनिति; तेन पेयासाधनरीत्या यूषादयोऽपि साधनीया इति प्रतिपादितम् ॥ २८ ॥

अथ क्वाथसाध्ययवागूसाधनार्थं कथमिह परिभाषा नोक्ता? इत्यत आह,—षड़ङ्गपरिभाषेवेत्यादि। अन्ये तु—"क्वाथ्यद्रव्याञ्जलिं क्षुण्णं श्रपयित्वा जलाढ़के। अर्द्धशृतेन तेनाथ यवाग्वाद्युपकल्पयेत ॥" इत्येवं परिभाषामप्यवैशङ्कितोक्तां क्वाथसाध्ययवागूविषयत्वेनेत्याहुः। अस्यार्थः,—अञ्जलिः पलचतुष्टयं, श्रपयित्वा जलाढ़के द्रवद्वैगुण्यात् जलस्य षोड़शशरावे। द्रव्यं तावद्द्विविधं—वीर्य्यप्रधानं रसप्रधानञ्च; तत्र आद्यं भेषजद्रव्यं, द्वितीयं पुनराहारद्रव्यं मांसादि; तत्र रसप्रधानद्रव्याभिप्रायेणैव चतुष्पलद्रव्याभिधानमत्र ज्ञेयम्; तेन परिभाषेयं "सिद्धा वराहनिर्य्यूहे यवागूः बृंहणी मता" (च० सू० अपामार्ग०) इत्यादि यवागूविषया बोध्या। वृन्दस्तु—"वृद्धवैद्याः पलं द्रव्यं ग्राहयित्वाढ़केऽम्भसि। भेषजस्यातिबाहुल्यात् कदाचिदरुचिर्भवेत् ॥" इति जेज्जड़व्याख्यातमेव वृद्धवैद्यव्यवहारं निजपद्येन लिखितवान् ॥ २९ ॥

इदानीं यवाग्वर्थं क्रियमाना कियत्परिमिततण्डुला देया? इत्यत आह, यवागूमित्यादि।—उचितादिति—अभ्यस्तात्। चतुर्भागकृतामिति—चतुर्थभागकृतां तद्द्विगुणीयभुक्तापेक्षया ॥ ३० ॥

पेयादीनां लक्षणमाह, सिक्थकैरित्यादि।—अत्र द्रवसिक्थसमन्विता यवागूरिति यवाग्वाः सामान्यलक्षणम्; सा च द्विविधा पेया-विलेपीभेदात्; तत्र यवाग्वा

यवागूर्बहुसिक्था स्याद्विलेपी विरलद्रवा ॥ ३१ ॥

अन्नादिपाके जलपरिमाणनिर्देशः।—

अन्नं पञ्चगुणे साध्यं विलेपी तु चतुर्गुणे।
मण्डश्चतुर्दशगुणे यवागूः षड्गुणेऽम्भसि ॥ ३२ ॥

अवस्थाविशेषे यवाग्वा अहितकारिता।—

पांशुधाने यथा वृष्टिः क्लेदयत्यतिकर्दमम्।
तथा श्लेष्मणि संवृद्धे यवागूः श्लेष्मवर्द्धनी ॥ ३३ ॥

---

एवोपरितनभागो मण्डः, न तु पृथक् मण्डः साध्यते, आयुर्वेदशास्त्रेऽदर्शितत्वात्। यस्तु क्वचिन्मण्डगुणो मण्डोपयोगो वा श्रूयते सोऽप्यस्यैव बोध्यः। ननु मण्डश्चतुर्दशगुणजलसाध्यः, यवागूस्तु षड्गुणजलसाध्या इत्यनन्तरमेव वक्ष्यति, तत् कथमुच्यते यवाग्वा उपरितनभागो मण्डः? नैवम्; तत्र यवागूशब्देन पेया विवक्षिता; तेन पेयाया पृथक् जलमानं नोक्तम्; द्रवसिक्थसमन्वितत्वमेव यवागूसामान्यलक्षणं, तेन चतुर्दशगुणजलसिद्धस्यापि मण्डस्य सिक्थसमन्वितावस्थायां यवागूत्वमेव, तेन सुष्ठूक्तं यवाग्वा उपरितनभागो मण्ड इति; पेया इति संज्ञाबलात् बहुद्रवत्वमल्पसिक्थत्वञ्च ज्ञेयम्; तेन सिक्थसमन्विता यवागूः पेयेति, पेयालक्षणे बहुद्रवत्वमल्पसिक्थत्वञ्च लक्षणतया बोध्यम्। तथा विरलद्रवा बहुसिक्था च यवागूर्विलेपीति विलेपीलक्षणं बोध्यम्; तेन पेयाविलेपीव्यतिरेकेण पृथक् यवागूर्नास्तीत्याहुः; अत एव वाग्भटेऽपि यवागूगुणः पृथक् नोक्तः; तदुक्तं—"मण्डपेयाविलेपीनामोदनस्य च लाघवम्। यथापूर्वं शिवस्तत्र मण्डो वातानुलोमनः॥" (सू० ६ अ०) इति। तथा चरकेऽप्यन्नपानेऽध्याये मण्डपेयाविलेप्योदनानामेव गुणो दर्शितः, न पृथक् यवाग्वा इति। यत्तु द्रव्यगुणे माधवकरेण पेयाविलेपीगुणं पठित्वा लिखितं—"तृष्णापनयनी लघ्वी दीपनी बस्तिशोधनी। ज्वरे चैवातिसारे च यवागूः सर्वदा हिता॥" इति, तत् सामान्यगुणाभिप्रायेण बोध्यं, सामान्यक्षीरगुणवत्। यत्तु प्रयोगरत्नाकरे—"चतुर्विधं भवेद्भक्तं जलदानप्रमाणतः। तत्र भक्तं विलेपी च यवागूः पेयया सह॥" इति, तत्र मण्ड एव पेयाशब्देन विवक्षितः; यतस्तदनन्तरमेव पेयायां चतुर्दशगुणजलमुक्तं तत्रैव—"पञ्चगुणे जले भक्तं विलेपी च चतुर्गुणे। यवागूः षड्गुणे तोये चतुर्दशगुणे परा॥" इति ॥ ३१ ॥

यवाग्वाद्यर्थं जलपरिमाणमाह, अन्नमित्यादि सूत्रद्वयम्।—यवागूरत्र पेया ॥३२॥

यवागूः कस्मिन् विषये न कार्येत्याह, पांशुधाने इत्यादि।—पांशुधाने पांशुसञ्चये अतिकर्दमं यथा स्यात् तथा क्लेदयति क्लेदं जनयति ॥ ३३ ॥

ज्वरविशेषे यवाग्वा अहितकारिता।—

**मदात्यये मद्यनित्ये ग्रीष्मे पित्तकफाधिके।**
**ऊर्द्ध्वगे रक्तपित्ते च यवागूरहिता ज्वरे॥ ३४॥**

निषिद्धयवागूज्वरे तर्पणप्रयोगविधिः।—

**तत्र तर्पणमेवाग्रे प्रदेयं लाजशक्तुभिः।**
**ज्वरापहैः फलरसैर्युक्तं समधुशर्करम्॥ ३५॥**

---

मदात्यये इत्यादि चरकस्य।—चरके एतद्वचनस्योपरि "ऋते मद्यसमुत्थितात्" इत्यस्ति, तेन मद्यकारणके ज्वरे यवागूर्निषिद्धैव; तेन मदात्यये व्याधौ तथा मद्यनित्ये मद्यपे योऽमद्यहेतुकोऽपि ज्वरः सोऽपि पेयाऽनर्हः, तथा ग्रीष्मे यो ज्वरः, तथा पित्तकफाधिको यो ज्वरः, तथा ऊर्द्ध्वगरक्तपित्तिनो यो ज्वरः, तेषु सर्वेषु यवागूर्न हितेति। इह मदात्ययादीनां पेयाऽनर्हत्वेन तेषु जातोऽपि ज्वरः पेयाऽनर्हः। पित्तकफाधिके इत्यनेन पित्तकफयोरतिमात्रोद्गमे सति पेयाया अदानं बोधयति; तेन कफजे ज्वरे पित्तजे ज्वरे अनुद्भूतदोषे पेया देया; उक्तं हि—"कफजेऽपि यदा चोष्णो लङ्घनादिक्रमात् कफः। शस्ता एव यवाग्वस्तु तत्र पित्तेऽप्ययं क्रमः॥" इति। अत एव चरके "पैत्तिके वाऽथ शीतां मधुयुतां पिबेत् यवागूम्" (चि० ज्वर०) इत्यनेन पित्तेऽपि यवागूरुक्ता। "पांशुधाने यथा वृष्टिः" (२ स्था० १ अ०) इत्यादि हारीतवचनमपि अतिवृद्धकफविषयं ज्ञेयम्। अन्ये तु मिलितपित्तकफाधिके पुरुषे यवागूप्रतिषेधमाहुः। ऊर्द्ध्वगे कफपित्ते चेति पाठान्तरमनार्षं, पित्तकफाधिके इत्यनेनैव तदर्थस्य लाभात्; सुश्रुतेऽपि—"कफपित्तपरीतस्य ऊर्द्ध्वास्रपित्तिनस्तथा" (उ० ३९ अ०) इत्युक्तम्। अन्ये तु ऊर्द्ध्वगे इति—ऊर्द्ध्वगरक्तपित्ते। कफपित्ते चेति—कफयुक्तपित्ते, पित्तस्थानगते कफे इत्यर्थः; उक्तं हि वाग्भटे—"मद्योद्भवे मद्यनित्ये पित्तस्थानगते कफे। ग्रीष्मे तयोर्वाऽधिकयोस्तृड्दाहच्छर्दिपीड़िते॥ ऊर्द्ध्वप्रवृत्ते रक्ते च पेयां नेच्छन्ति तेषु तु॥" (चि० १ अ०) इति व्याख्याय कफपित्ते चेति पाठमुपपादयन्ति॥ ३४॥

यद्यपि चरके "ऊर्द्ध्वगे तर्पणं पूर्वम्" (चि० रक्त०) इति वचसा यवागूं बाधित्वा ऊर्द्ध्वगे रक्तपित्ते तर्पणं विहितमेव, तथाऽप्यूर्द्ध्वगरक्तपित्तिनो यो ज्वरस्तत्रापि तर्पणादिक्रमः कार्यः इत्याह, तत्रेत्यादि।—ज्वरापहाणि फलानि द्राक्षादाड़िमादीनि; उक्तं हि—"द्राक्षादाड़िमखर्ज्जूर-पियालैः सपरूषकैः। तर्पणादिषु कर्त्तव्यं तर्पणं ज्वरनाशनम्॥" इति॥ ३५॥

तर्पणस्वरूपम्।—

द्रवेणालोडितास्ते स्युस्तर्पणं लाजशक्तवः॥ ३६॥

वातजादिज्वरे अन्नदानविधिः।—

श्रमोपवासानिलजे हितो नित्यं रसौदनः।

मुद्गयूषौदनश्चापि देयः कफसमुद्भवे॥

स एव सितया युक्तः शीतः पित्तज्वरे हितः॥ ३७॥

यवाग्वादिनिमित्तं ज्वरापहतण्डुलनिर्देशः।—

रक्तशाल्यादयः शस्ताः पुराणाः षष्टिकैः सह।

यवाग्वोदनलाजार्थे ज्वरितानां ज्वरापहाः॥ ३८॥

द्वन्द्वजज्वरे यूषाः।—

मुद्गामलकयूषस्तु वातपित्तात्मके हितः।

ह्रस्वमूलकयूषस्तु कफवातात्मके हितः॥

निम्बकुलकयूषस्तु हितः पित्तकफात्मके॥ ३९॥

---

तर्पणशब्दार्थमाह,—द्रवेणालोडितास्ते स्युरित्यादि॥ ३६॥

श्रमेत्यादि।—नित्यमिति सर्वदा, नवे पुराणे च। रसो मांसरसः, तेनोपसिक्त ओदनः रसौदनः। एवं मुद्गयूषौदन इत्यत्रापि व्याख्येयम्। अयञ्च रसौदनः दीप्ताग्निं प्रति बोध्यः; उक्तं हि सुश्रुते—"उपवासश्रमकृते ज्वरे वाताधिके तथा। दीप्ताग्निं भोजयेत् प्राज्ञो नरं मांसरसौदनम्॥" (उ० ३९अ०) इति। मुद्गयूषौदनश्चापीति —कफजे मुद्गयूषौदनो देयो यवाग्वा अहितत्वात्। स एवेति—मुद्गयूषौदनः॥ ३७॥

रक्तशाल्यादय इत्यादि चरकस्य।—चरके पुराणा इत्यत्र "शालयः" इति पठन्ति, तेन यवकादीनां निरास इत्याहुः। ये तु पुराणा इति पठन्ति, तन्मते यद्यपि "शूकधान्यं शमीधान्यं समातीतम्" (च० सू० अन्नपाना०) इत्यनेन पुराणस्योपयोगो लब्धः, तथाऽपि प्रमादादतिनवस्य तथाऽतिपुरातनस्य च ग्रहणं मा भूदित्येतदर्थं पुराणा इत्युक्तम्॥ ३८॥

सम्प्रति द्वन्द्वजेष्वाहारविधिमाह, मुद्गामलकेत्यादि।—आमलकापेक्षया मुद्गस्य भूयसी मात्रा, आहारद्रव्यत्वात्। योगोऽयं यद्यपि सुश्रुतेन अन्नपानाध्याये कफपित्तज्वरहरत्वेन निर्दिष्टः, तथाऽपीह वातपित्तज्वरेऽभिधानात् वातपित्तज्वरहरत्वमपि वचनबलादेवाध्यवसीयते। ह्रस्वमूलको बालमूलकः। अत्र शमीधान्यस्य यूषयोनित्वात् मुद्गाद्यपि बोध्यम्। एवं यत्र नास्ति तत्र सर्वत्र, किंवा व्यञ्जनपरो यूषः।

ज्वरे यूषार्थं द्विदलनिर्देशः।—

मुद्गान् मसूरांश्चणकान् कुलत्थान् समुकुष्टकान्।
आहारकाले यूषार्थं ज्वरिताय प्रदापयेत्॥ ४०॥

ज्वरे शाकनिर्देशः।—

पटोलपत्रं वार्त्ताकुं कुलकं कारवेल्लकम्।
कर्कोटकं पर्पटकं गोजिह्वां बालमूलकम्॥
पत्रं गुडूच्याः शाकार्थं ज्वरिताय प्रदापयेत्॥ ४१॥

ज्वरे हितभोजनस्य अवश्यकर्त्तव्यता।—

ज्वरितो हितमश्नीयात् यद्यप्यस्यारुचिर्भवेत्।
अन्नकाले ह्यभुञ्जानः क्षीयते म्रियतेऽथवा॥ ४२॥

---

निम्बकुलकेत्यादि सुश्रुतस्य।—निम्बस्य पत्रं, तथा कुलकस्य पटोलस्य च पत्रम्॥ ३९॥

मुद्गानित्यादि सुश्रुतस्य।—मुकुष्टको वनमुद्गः॥ ४०॥

पटोलेत्यादि सुश्रुतस्य।—वार्त्ताकुः वार्त्ताकुफलम्। कुलकमपि पटोलफलम्। कर्कोटकं काँकरोल इति ख्यातम्। गोजिह्वा दार्वीशाकः॥ ४१॥

इदानीं ज्वरितस्यारुचावपि हितभोजनं नियमयन्नाह, ज्वरित इत्यादि।—अस्यारुचिरपि यदि भवेत् तथाऽपि ज्वरितो हितमेवाश्नीयादेव इत्युभयत्रापि नियमः; यतो दिनान्ते भोजयेदित्यनेन भुजि-क्रिया विहितैव। "न हि तस्याहितं भुक्तमायुषे वा सुखाय वा" (सु० उ० ३९ अ०) इत्यादिना हितमपि विहितम्; अतः सिद्धे सत्यारम्भो नियमाय भवति। विपक्षे दण्डमाह, अन्नकाल हीत्यादि—यतोऽन्नकाले हितम् अभुञ्जानः पुरुषः क्षीयते म्रियते वा। अन्ये तु अरुचौ सत्याम् अशितुर्भोजने इच्छाभावात् अपिशब्दं भिन्नक्रमेण योजयित्वा नञं प्रश्लिष्यान्यथा व्याचक्षते, अस्य यदि अरुचिर्भवेत् तदा अहितमप्यश्नीयात्, कुतः? इत्याह, अन्नकाले हीत्यादि, यतोऽभुञ्जानस्य धातुक्षयो मरणं वा स्यात् तस्मादहितमश्नीयादित्यर्थः। न चैवंव्याख्याने "गुर्वभिष्यन्दकाले च" (सु० उ० ३९ अ०) इत्याद्युत्तरग्रन्थविरोधः स्यादिति वाच्यम्; यतस्तेनापि ग्रन्थेन अहितं न प्रतिषिध्यते, अन्यथा व्याख्यानात्; तथा हि ज्वरी ना पुरुषः गुर्वभिष्यन्दकाले च कथञ्चन कदाचिदद्यात् सकृद्भुञ्जीतेत्यर्थः, यतो भुक्तं भोजनम् आयुषे वा सुखाय वा न अहितं किन्तु हितमेव। हि-शब्दस्थाने तु-शब्दपाठेऽपि तु-शब्दः निपातस्थाने-

ज्वरे अरुचौ मातुलुङ्गादियोगद्वयम्।—

अरुचौ मातुलुङ्गस्य केशरं साज्यसैन्धवम्।
धात्रीद्राक्षासितानां वा कल्कमास्येन धारयेत्॥ ४३॥

ज्वरे पथ्यद्रव्ये अरुचौ रुचिजननोपायः।—

सातत्यात् स्वाद्वभावात् वा पथ्यं द्वेष्यत्वमागतम्।
कल्पनाविधिभिस्तैस्तैः प्रियत्वं गमयेत् पुनः॥ ४४॥

ज्वरे पथ्यदानकालः।—

ज्वरितं ज्वरमुक्तं वा दिनान्ते भोजयेल्लघु।

---

कार्य्यत्वात् हितौ व्याख्येयः। नन्वेषा व्याख्या तदैव सङ्गच्छते, यदि अहितार्थ-सुपदेशः क्वापि शास्त्रे तिष्ठति; किं तर्हि? हितस्यैव सर्व्वोपदेशः। अवस्थायां तदपि हितमिति चेत्, तर्हि अहितमिति व्याहतम्? सत्यं, प्रायः सर्व्वदा मुक्तादिवन्न हितमिति कृत्वा अहितमित्युच्यते, अत एवाहुः,—"मनोऽनुकूलं यदपथ्यं तदपि क्रियते एव" इति। यदुक्तं चरके—"मनसोऽप्यानुकूल्येन तुष्टिरूर्ज्जो रुचिर्बलम्। सुखोपभोगिता च स्याद्व्याधेश्चापि बलक्षयः॥" (चि० योनिव्यापत्०) इति। किन्तु जेज्जड़मते एषा व्याख्या न सङ्गच्छते, यतो ज्वरितो हितमित्यादेरनन्तरमेव हितविधायकमहित-प्रतिषेधकं "सततं विषमं वाऽपि" इत्यादि "वर्जयेच्च समासतः" इत्यन्तं ग्रन्थं जेज्जड़ः पठति, तन्मध्ये च गुर्व्वभिष्यन्दीत्यादिग्रन्थोऽप्यस्ति, ततो गुर्व्वभिष्यन्दीत्यादिवाक्यस्याहित-विधायकत्वव्याख्याने प्रकरणमसङ्गतं स्यात्; तथा चन्द्रिकाकारेणापि "ज्वरितस्य मन्दाग्नेर्गुर्व्वन्नापाकोऽजीर्णम्, अभिष्यन्दिनः स्रोतोरोधकत्वेन ज्वरवृद्धिः" इत्यादि व्याख्यातम्; एतच्च गुर्व्वभिष्यन्दीत्यादिग्रन्थोऽप्यहितप्रतिषेधकपरतया ऋजुमार्गेणैव व्याख्येयः। ज्वरितो हितमश्नीयादित्याद्यपि हितविधायकतया एव व्याख्येयम्, अहितस्य रोगवर्द्धकत्वेन सर्व्वत्र निषेधात्, उक्तरीत्या गुर्व्वभिष्यन्दीत्यादिग्रन्थविरोधाच्चेति॥ ४२॥

इदानीं बलवदुपद्रवत्वेनारुचेः प्रतीकारमाह,—अरुचावित्यादि। योगान्तर-माह—धात्रीत्यादि॥ ४३॥

अथ हितमेव यदि सततोपयोगादनभिमतरसादियोगाद्वा रुचिविषयो न स्यात्, तदा किं कार्य्यम्? इत्याह, सातत्यादित्यादि द्वढ़बलस्य।—सातत्यादिति—सततोप-योगात्, सततोपयोगाद्धि स्वाद्वन्नमपि अप्रियं भवतीत्यनुभवसिद्धम्, अस्वादु तु स्वत एवाप्रियम्। स्वादुरभीष्टो रसः। तैस्तैः कल्पनाविधिभिरिति—स्वरसकल्कादिसूद-शास्त्रोक्तविधानैः पुनः प्रियत्वं गमयेत्॥ ४४॥

श्लेष्मक्षयविवृद्धोष्मा बलवाननलस्तदा ॥ ४५ ॥

ज्वरे गुरुपाकादिद्रव्यसेवननिषेधः।—

गुर्वभिष्यन्द्यकाले च ज्वरी नाद्यात् कथञ्चन।
न हि तस्याहितं भुक्तमायुषे वा सुखाय वा ॥ ४६ ॥

नवज्वरे पाचनानि।—

लङ्घनं स्वेदनं कालो यवाग्वस्तिक्तको रसः।
पाचनान्यविपक्वानां दोषाणां तरुणे ज्वरे ॥ ४७ ॥

---

अन्नकालमाह ज्वरितमित्यादि वाग्भटस्य।—दिनान्ते इत्यपराह्णे; सुश्रुतेऽप्युक्तं—"सर्वज्वरेषु सप्ताहं मात्रावद्भोजनं हितम्। दिनापायेऽन्यथा तद्धि ज्वरवेगाभिवर्द्धनम्॥" (उ० ३९ अ०) इति। ज्वरितमित्यादिवाक्यानन्तरं वाग्भटवचनं यथा—"यथोचितेऽथवा काले देशसात्म्यानुरोधतः। प्रागल्पवह्निर्भुञ्जानो न ह्यजीर्णेन पीड्यते॥" (चि० १ अ०) इति। तेन यस्य पुरुषस्य य उचित आहारकालः, तस्मिन्नेव तं भोजयेत्; यथोचिते हि काले देशसात्म्यानुरोधतः प्राय क्षुद्बोधो भवति, तदतिक्रमे च क्षुदपगमो भवति, तेन तत्र दिनान्तापेक्षा च न कर्त्तव्येत्याह, प्रागित्यादि।—अल्पवह्निरिति—कायाग्नेर्बहिर्निःसरणात् ज्वरितोऽल्पवह्निरेव भवति, देशसात्म्यानुरोधात् अल्पवह्निरपि प्रागेव पूर्वाह्णेऽपि भुञ्जानोऽजीर्णेन न पीड्यते न बाध्यते इत्यर्थः॥ ४५॥

नन्वरुचावपि सर्वां हितमेव भोक्तव्यं, नाहितमित्युक्तम्, अतस्तत् किमहितं यन्न भोक्तव्यम्? इत्याह, गुर्वित्यादि सुश्रुतस्य।—गुरु पिष्टकादि। अभिष्यन्दि दोषधातुमलस्रोतसां क्लेदजनकम् अम्लकादि। नाद्यात् न खादेत्। तथा अकाले अप्राप्ते अतीते च काले हितमपि नाद्यात्। कथञ्चन कदाचिदपि। अत्र हेतुर्न हीत्यादि॥४६॥

इदानीं लङ्घनमेवादाविति यदुक्तं, तस्य पाचनतां दर्शयन् प्रसङ्गात् स्वेदादीनामपि पाचनतामाह, लङ्घनमित्यादि।—काल इति—अष्टाहः। तिक्तकरसोऽत्र यवागूपानीयादिसंस्कारकत्वेन ज्ञेयः, स्वतन्त्रभेषजप्रयोगस्य तरुणे निषेधात्; उक्तञ्च—"भेषजं ह्यामदोषस्य भूयो ज्वलयति ज्वरम्" (सु० उ० ३९ अ०) इति। अविपक्वानामित्युक्तेऽपि यत् तरुणे ज्वरे इत्युक्तं, तदष्टाहादूर्द्ध्वमतरुणे ज्वरे अपक्वेषु दोषेषु पाचनकषायस्य प्राधान्यमावेदयति, न तु लङ्घनादीनाम्; किंवा अविपक्वग्रहणमष्टाहादूर्द्ध्व-

तरुणमध्यपुराणज्वराणाम् अवधिनिर्देशः।—

आ-सप्तरात्रं तरुणं ज्वरमाहुर्मनीषिणः।
मध्यं द्वादशरात्रन्तु पुराणमत उत्तरम् ॥ ४८ ॥

नवज्वरे पाचनादिकषायदानविधिः।—

पाचनं शमनीयं वा कषायं पाययेत्तु तम्।
ज्वरितं षडहेऽतीते लघ्वन्नप्रतिभोजितम् ॥ ४९ ॥

नपि सामत्वानुवृत्तिर्भवतीति सूचनार्थम्; अत एवाष्टाहादूर्द्धमपि आमपाचनार्थं "पाचनं शमनीयं वा" इत्यादि वक्ष्यति ॥ ४७ ॥

ननु ज्वरस्य तरुणता कियन्तं कालं तिष्ठति? इत्याह, आसप्तरात्रमित्यादि।—सप्तरात्रं व्याप्य, आङयम् अभिविधौ न मर्य्यादायाम्, अष्टाहस्य निरामज्वरकालत्वेनोक्तत्वात्। "मध्यं द्वादशरात्रम्"इति पाठः साधीयान्, न तु "मध्यं चतुर्दशाहन्तु" इति, जतुकर्णे "जीर्णस्त्रयोदशदिवसः" इत्युक्तत्वात्। अत उत्तरमिति—द्वादशाहानन्तरं त्रयोदशदिवसमारभ्य, पुराणमिति—जीर्णज्वरमाहुः। यत्तु—"त्रिसप्ताहव्यतीतस्तु ज्वरो यस्तनुतां गतः। प्लीहाग्निसादं कुरुते स जीर्णज्वर उच्यते॥" इति तन्त्रान्तरं तदतिजीर्णाभिप्रायेण बोध्यम्। यद्यपि तरुणज्वर एवात्र प्रकृतस्तथाऽपि मध्यपुराणयोरत्राभिधानमेकवाक्यनिबद्धत्वात् ॥ ४८ ॥

ननु लङ्घनानन्तरं किं कर्त्तव्यम्? इत्याह, पाचनमित्यादि।—एतच्च विकल्पद्वयं योग्यतया यथाक्रममामदोष-पक्वदोषविषयं ज्ञेयम्; तेन पाचनं सामस्य, निरामस्य शमनमिति ज्ञेयम्। षडहेऽतीते इति—ज्वरोत्पाददिनमारभ्य षडहेऽतिक्रान्ते सप्तमेऽहनि लघ्वन्नप्रतिभोजितं ज्वरितम् अर्थादष्टमेऽहनि पाचनं शमनीयं वा पाययेदिति योजना, एवञ्च "अष्टाहो निरामज्वरलक्षणम्" (च० चि० ज्वर०) इति पूर्ववाक्येन, तथा "निःसप्तता निरामज्वरलक्षणम्" इति खरनादवाक्येन, तथा "सप्तरात्रात् परं केचिन्मन्यन्ते देयमौषधम्" (उ० ३९ अ०) इति सुश्रुतवाक्येन, तथा "सप्ताहादौषधं केचित्" (चि० १ अ०) इति वाग्भटवचनेन सहैकवाक्यता उपपन्ना भवति। अन्ये पुनरमुमेवार्थं प्रकारान्तरेणेच्छन्ति—षडहे अतीते इति ज्वरोत्पाददिनं परित्यज्य गणना कार्य्या वह्निदिनपरिहारेण परिहारगणनावत्, तेन षडहे अतीते इत्यस्य सप्तमे अतीते इत्येवार्थो भवति। भट्टारहरिचन्द्रेणापि सप्तमे दिने कषायपानं यत् व्याख्यातं, तत्राप्ययमभिप्राय उन्नेयः, अन्यथा सुश्रुतादिविरोधो दुष्परिहर इति। चन्द्रिकाकारेणोक्तम्—"अचिरोत्पन्नदिन-

चतुष्टयवत् ज्वरस्य सप्ताहं सामताकालः, तत्र न पाचनं न वा शमनं न शोधनम्" इति । यत्तु पेयाद्यनन्तरं हारीतेनोक्तम्—"एतां क्रियां प्रयुञ्जीत षड्रात्रं सप्तमेऽह्नि । पिबेत् कषायसंयोगान् ज्वरघ्नान् माधुसाधितान् ॥" (३ स्था० २ अ० ) इति, तथा "इति षाड्रात्रिकः प्रोक्तो नवज्वरहितो विधिः । ततः परं पाचनीयं शमनं वा ज्वरे हितम् ॥" इति खरनादवचनञ्च पूर्वोक्तरीत्या अष्टाहप्रतिपादकमेव ज्ञेयम्; अथवा पैत्तिकज्वराभिप्रायेण तद्वचनद्वयं व्याख्येयम्; यतः सुश्रुते—"सप्तरात्रात् परं केचिन्मन्यन्ते देयमौषधम्" ( उ० ३९ अ० ) इत्याद्यभिधाय "पैत्तिके वा ज्वरे देयमल्पकालसमुत्थिते । अचिरज्वरितस्यापि भेषज्यं दोषपाकतः ॥" ( उ० ३९ अ० ) इत्युक्तम् । वाग्भटेनापि—"मृदुर्ज्वरो लघुर्देहश्चलिताश्च मला यदा । अचिरज्वरितस्यापि भेषज्यं योजयेत् तदा ॥" (चि० १ अ०) इति यदुक्तं, तदपि सुश्रुतसंवादात् पित्तज्वरपरमेव ज्ञेयम्; एतद्वचनद्वयं सप्ताहादर्वागपि पाचनकषायदानप्रतिपादकमनुद्भूतसामतायामेव ज्ञेयम्, उद्भूतसामतायान्तु भेषजदानस्य बलवदपायजनकत्वात्, अत एवाह वाग्भटः,—"सप्ताहादौषधं केचिदाहुरन्ये दशाहतः । केचिल्लघ्वन्नभुक्तस्य योज्यमामोल्बणे न तु ॥ तीव्रज्वरपरीतस्य दोषवेगोदये यतः । दोषेऽथवातिनिचिते तन्द्रास्तैमित्यकारिणि ॥ अपच्यमानं भैषज्यं भूयो ज्वलयति ज्वरम् ॥" ( चि० १ अ० ) इति । अपैत्तिकज्वरे तु वातजादौ सप्ताहादर्वाक् पाचनमपि न देयमेव । सप्ताहानन्तरमपि यदि सम्यक् दोषपाकलक्षणानि ज्वरमार्दवलघुत्वादीनि न भवन्ति तदा पाचनम्, अन्यथा तु शमनं देयम्; एतदभिप्रायेणैव—"मृदौ ज्वरे लघौ देहे प्रचलितेषु मलेषु च । पक्वं दोषं विजानीयाज्ज्वरे देयं तदौषधम् ॥" ( उ० ३९ अ० ) इति सुश्रुतवचनं ज्ञेयम् । न चैतद्वचनं ज्वरमार्दवादौ दोषपाकलक्षणे सञ्जाते सत्येव भैषज्यस्य देयतां बोधयति, तत्र च सप्ताहानन्तरमपि नियमो नास्तीति वाच्यम्; "सप्तरात्रात् परं केचित्—" ( सु० उ० ३९ अ० ) इत्यादिवचनैः सप्ताहानन्तरमेव भेषजदानस्य बोधितत्वात्, तेन सप्ताहादर्वाक् पाचनं शमनञ्च न देयमिति स्थितम् । व्याख्यानान्तरन्तु "ज्वरे पेयाः कषायाश्च" इत्यादिव्याख्यानावसरे एव व्याख्येयम् । ननु सप्तरात्रादूर्ध्वं ज्वरस्य निरामत्वात् किमर्थं तत्र पाचनं दीयते ? यदुक्तम्—"अष्टाहो निरामज्वरलक्षणम्" ( च० चि० ज्व० ) इति, सत्यप्यष्टाहे यदि न निरामत्वं, तदा लक्षणमेव न स्यात् सामनिरामसाधारणत्वात्, असाधारणधर्मो हि लक्षणं भवति । अत्राहुः,—द्विविधा हि सामता; एका—दोषस्य तरुणत्वरूपा, तरुणत्वञ्च सप्ताहमात्रम्; तदुक्तं पुष्कलावते—"आ सप्तरात्रं तरुणम्" इत्यादि । द्वितीया तु—रसस्य गुरुत्वैरस्यदृष्यारोचकादिरूपा । तत्र

अवस्थाविशेषे पाचनशमनकषाययोः दानविधिः।—

सप्ताहात् परतोऽस्तब्धे सामे स्यात् पाचनं ज्वरे।
निरामे शमनं स्तब्धे सामे नौषधमाचरेत्॥ ५०॥

रससामतालक्षणम्।—

लालाप्रसेको हृल्लास-हृदयाशुद्ध्यरोचकाः।
तन्द्राऽऽलस्याविपाकास्य-वैरस्यं गुरुगात्रता॥ ५१॥
क्षुन्नाशो बहुमूत्रत्वं स्तब्धता बलवान् ज्वरः।
आमज्वरस्य लिङ्गानि— ॥ ५२॥

---

प्रथमा अष्टाहादपैति; अत्र हरिचन्द्रेण हेतुरप्युक्तः,—"सप्तानां धातूनां धात्वग्निना सप्ताहेनामपाकात् अष्टाहेनैव नैरास्यम्" इति; उक्तञ्च—"सप्ताहेनैव पच्यन्ते सप्तधातुगता मलाः। निरामश्चाप्यतः प्रोक्तो ज्वरः प्रायोऽष्टमेऽहनि॥" (च० चि० ज्वर०) इति। द्वितीया पुनः सप्ताहात् परतोऽपि कदाचिद्दोषबाहुल्यादग्निमान्द्याच्चानुवर्तते; उक्तञ्च—"श्लेष्मलानामशान्तानां ज्वरः प्रायः कफाधिकः। परिपाकं न सप्ताहेनापि याति कदूष्मणाम्॥" (च० चि० ज्वर०) इति। अतस्तत्र पाचनमुचितमेव; अत एवाह सुश्रुतः,—"बहुदोषस्य मन्दाग्नेः सप्तरात्रात् परं ज्वरे। लङ्घनाम्बुयवागूभिर्यदा दोषो न पच्यते॥ तदा तं मुखवैरस्य-तृष्णारोचकनाशनैः। कषायैः पाचनैर्हृद्यैर्ज्वरघ्नैः समुपाचरेत्॥" (उ० ३९ अ०) इति॥ ४९॥

इदानीं सप्ताहानन्तरमेव यस्यामवस्थायां पाचनं शमनञ्च देयं तदाह, सप्ताहादित्यादि।—अस्तब्धे सामे इति—लालाप्रसेक इत्यादि वक्ष्यमाणस्य रससामतालक्षणस्य निवृत्तौ सत्यां प्राप्तलघुभावे मधुभाण्डावलेपन्यायेन स्थितस्य कोष्ठावलेपकामभागस्य पाकार्थं पाचनं देयम्। निरामे शमनमिति—पाचनेन कोष्ठावलेपकस्यामभागस्य पाकात् सर्व्वाङ्गिरामत्वे सतीत्यर्थः; सर्व्वाङ्गिरामता च दशरात्रात् परमेव दोषसामता-रससामतयोः सर्व्वथा निवृत्त्या प्रायशो भवतीति। अत एव "दशरात्रात् परं केचिद्वा-सव्यमिति निश्चितम्" (उ० ३९ अ०) इति सुश्रुतेनोक्तम्। किंवा यत्र दोषाणामनतिबहुत्वात् सप्ताहेनैव रससामताऽपि निवर्त्तते, तत्र सप्ताहानन्तरमपि शमनादि देयम्। स्तब्धे सामे नौषधमाचरेत् इति—लालाप्रसेकादिरससामतालक्षणानां सत्त्वादप्राप्तलघुत्वे सप्ताहानन्तरमपि पाचनं शमनञ्च न देयमित्यर्थः॥ ५०॥

रससामतालक्षणमाह, लालाप्रसेक इत्यादि।—हृदयाशुद्धिः हृदयगौरवम्॥५१।५२॥

सामज्वरे औषधदानस्य अनिष्टकारिता।—

—न दद्यात् तत्र भेषजम्।

भेषजं ह्यामदोषस्य भूयो ज्वलयति ज्वरम्॥ ५३॥

आमपाकलक्षणम्।—

मृदौ-ज्वरे लघौ देहे प्रचलेषु मलेषु च।

पक्वं दोषं विजानीयाज्ज्वरे देयं तदौषधम्॥ ५४॥

सर्वज्वरेषु नागरादिः।—

नागरं देवकाष्ठञ्च धन्याकं बृहतीद्वयम्।

दद्यात् पाचनकं पूर्वं ज्वारिताय ज्वरापहम्॥ ५५॥

औषधप्रयोगस्य अविषयाः।—

पीताम्बुर्लङ्घितः क्षीणोऽजीर्णी भुक्तः पिपासितः।

न पिबेदौषधं जन्तुः संशोधनमथेतरत्॥ ५६॥

---

न दद्यादित्यत्र हेतुमाह—भेषजमित्यादि॥ ५३॥

पाकलक्षणमाह, मृदावित्यादि सुश्रुतस्य।—मृदौ मन्दीभूते, मान्द्यञ्च ज्वरस्य आमरसस्य पाकात् स्रोतसि शुद्धे पुनः कोष्ठगते चोष्मणि भवति। प्रचलेषु प्रतिबन्धका-स्यामरसस्य व्यपगमात् अविरुद्धेषु मलेषु वातपित्तकफशकृदादिषु। पक्वमिति—निरामम्। दोषमित्यनेन दुष्टिकारकत्वात् शकृदप्युच्यते इत्याहुः। देयं तदौषधमिति—अल्पदोषे अल्पसामतायां पाचनं, सर्वथा निरामत्वे तु शमनं शोधनं यथावस्थं देयम्। एतदनन्तरन्तु अन्यदपि पक्वलक्षणम् एकीयमतेन सुश्रुतेनोक्तं, यथा—"दोषप्रकृति-वैकृत्यादेकेषां पक्वलक्षणम्" (उ० ३९ अ०) इति। ज्वरारम्भकाले यो दोषस्वभावः सम्प्राप्तिरूपः तस्यान्यथात्वादल्पत्वादेकेषां मते पक्वलक्षणमिति। अन्ये तु, प्रथमा प्रकृतिः आमरससम्मूर्च्छितानां ज्वरजननसमर्थानां स्वकार्य्यस्य ज्वरतीव्रत्व-देहगुरुत्व-मलविबन्धादेरुत्पादनं, ततो विपर्य्ययो वैकृत्यम्; प्रथमा प्रकृतिरप्याम एव; यदुक्तं—"प्रथमां दोषदुष्टिञ्च केचिदामं प्रचक्षते" इति॥ ५४॥

इदानीं सर्वज्वरसाधनार्थं पाचनकषायमाह, नागरमित्यादि भेलस्य।—योगो-ऽयं द्रव्यगुणपर्य्यालोचनया वातकफजे इति भद्रः, व्याधिप्रत्यनीकतया तु पित्तजे हितत्वमस्याभ्युपगम्य सर्वज्वरविषयत्वं ज्ञेयमित्याह सर्वज्वरेष्विति। अत एव तन्त्रापि एतत्प्रभृतियोगान्ते पठ्यते "सर्वज्वरेषु पठ्यन्ते यथादोषबलं प्रति" इति॥ ५५॥

यैर्भेषजं न पेयं तानाह, पीताम्बुरित्यादि।—भुक्त इति कर्त्तरि

अन्नहीनौषधस्य गुणः रोगिविशेषे अपकारिता च।—

वीर्य्याधिकं भवति भेषजमन्नहीनं
हन्यात् तदामयमसंशयमाशु चैव।
तत् बालवृद्धयुवतीमृदुभिश्च पीतं
ग्लानिं परां नयति चाशु बलक्षयञ्च॥ ५७॥

जीर्णौषधस्य लक्षणम्।—

अनुलोमोऽनिलः स्वास्थ्यं क्षुत् तृष्णा सुमनस्कता।
लघुत्वमिन्द्रियोद्गार-शुद्धिर्जीर्णौषधाकृतिः॥ ५८॥

अजीर्णौषधस्य लक्षणम्।—

क्लमो दाहोऽङ्गसदनं भ्रमो मूर्च्छा शिरोरुजा।
अरतिर्बलहानिश्च सावशेषौषधाकृतिः॥ ५९॥

औषधाजीर्णे भोजनस्य भोजनाजीर्णे औषधस्य च अपकारिता।—

औषधशेषे भुक्तं पीतञ्च तथौषधं सशेषेऽन्ने।
न करोति गदोपशमं प्रकोपयत्यन्यरोगांश्च॥ ६०॥

---

त्तः। अथशब्दः समुच्चये निपातस्यानेकार्थत्वात्, तेनेतरत् शमनञ्च न पिवेदित्यर्थः॥ ५६॥

परिणामप्रयुक्तभेषजगुणमाह, वीर्य्याधिकमित्यादि।—भोजनसमयक्रियमाणौषधापेक्षया वीर्य्येणोत्कृष्टमित्यर्थः। अन्नहीनमिति हेतुगर्भविशेषणम्; यतोऽन्नहीनभेषजनावरकदोषाभावादखिलमेव स्रोतः प्रतिपद्यते कोष्ठञ्च सम्यक् भावयति। अन्नहीने इति पाठान्तरे—कोष्ठे इति शेषः॥ ५७॥

भेषजपाकलक्षणमाह,—अनुलोमोऽनिलः स्वास्थ्यमित्यादि॥ ५८॥

भेषजस्यासम्यक्पाकलक्षणमाह,—क्लम इत्यादि॥ ५९॥

भेषजाजीर्णे भोजने अन्नाजीर्णेऽपि भेषजोपयोगे दोषमाह, औषधशेषे इत्यादि।—भुक्तं भोजनम्, एतच्चाभ्यवहारोपलक्षणं, तेन लेहपानयोरपि ग्रहणम्। भुक्तमित्यस्य सम्बन्धे न करोति गदोपशममित्यन्तर्भावितो ण्यर्थो ज्ञेयः, यतः प्रस्तुतत्वादौषधमेव गदोपशमकं युक्तम्; तेनायमर्थः,—भेषजाजीर्णे भोजनमौषधमेव गदोपशमं न कारयतीत्यर्थः। पीतमित्यन्तःपरिमार्जनाभिप्रायेणोक्तम्; तेन लेहादीनामपि ग्रहणम्। सशेषेऽन्ने इत्येव पाठः, अन्यथा छन्दोभङ्गः स्यात्॥ ६०॥

भोजनात् पूर्वमौषधसेवनस्य गुणाः ।—

शीघ्रं विपाकमुपयाति बलं न हिंस्या-
दन्नावृतं न च मुहुर्वदनान्निरेति ।
प्राग्भुक्तसेवितमथौषधमेतदेव
दद्याच्च वृद्धशिशुभीरुवराङ्गनाभ्यः ॥ ६१ ॥

दोषाद्यपेक्षया मात्रानिर्देशः ।—

मात्राया नास्त्यवस्थानं दोषमग्निं बलं वयः ।
व्याधिं द्रव्यञ्च कोष्ठञ्च वीक्ष्य मात्रां प्रयोजयेत् ॥ ६२ ॥

दोषादीनाम् उत्तमाद्यपेक्षया मात्रानिर्देशः ।—

उत्तमस्य पलं मात्रा त्रिभिश्चाक्षैश्च मध्यमे ।
जघन्यस्य पलार्द्धेन स्नेहक्वाथ्यौषधेषु च ॥ ६३ ॥

क्वाथ्यद्रव्यस्य परिमाणभेदेन जलपरिमाणम् ।—

कर्षादौ तु पलं यावद्दद्यात् षोड़शिकं जलम् ।
ततस्तु कुड़वं यावत्तोयमष्टगुणं भवेत् ॥

---

भोजनसमयोपयुज्यमानस्याप्यौषधस्य विषयविशेषे गुणमाह, शीघ्रमित्यादि ।—शीघ्रपाकिता बुभुक्षितस्य प्रबलजठरानलसम्बन्धादित्यभिसन्धिः । प्राग्भुक्तसेवितमिति—भक्तात् पूर्वमव्यवहितकाले सेवितम् ॥ ६१ ॥

तत्र भेषजं किंपरिमाणमित्याह, मात्राया इत्यादि ।—अवस्थानमिति—नैयत्यम्; अत एव चरकेणाप्युक्तं—"मात्रा खलु व्याधिबलापेक्षिणी" इति ॥ ६२ ॥

तर्हि मन्दबुद्धेरनध्यवसायः स्यात्? इत्यतः क्वाथ्यस्य मानं प्रसङ्गात् स्नेहस्याप्याह, उत्तमस्येत्यादि ।—स्नेहक्वाथ्यौषधेष्विति—स्नेहरूपाणि क्वाथ्यरूपाणि चौषधानि तेषु, किंवा चौषधं स्वरसगुड़ादि ॥ ६३ ॥

क्वाथ्यस्य तावत् पलमानं, तच्च कियता जलेन क्वथनीयमतस्तन्मानमाह, कर्षादावित्यादि श्लोकद्वयम् ।—क्वाथविषयेयं परिभाषा । पलं यावदिति—एकपलम् । षोड़शिकं जलमिति—षोडशकर्षादिरूपम्, अत एव कर्षादिमानक्वाथ्यापेक्षया दीयमानस्य षोड़शगुणजलस्य वस्तुगत्या कुड़वादिमानत्वेऽपि न द्वैगुण्यं, जलमानस्यापि कर्षादिरूपतया निर्दिष्टत्वात्; उक्तं हि—"रक्तिकादिषु मानेषु यावन्न कुड़वो भवेत् । शुष्कद्रवार्द्रयोश्चापि तुल्यं मानं प्रकीर्त्तितम् ॥" इति । रक्तिकादिष्विति—

क्वाथ्यद्रव्यपले कुर्य्यात् प्रस्थार्द्धं पादशेषितम् ॥ ६४ ॥

चरकमते सुश्रुतमते च माषपलयोः स्वरूपनिर्देशः।—

द्वात्रिंशन्माषकैर्माषश्चरकस्य तु तैः पलम्।
अष्टाचत्वारिंशता स्यात् सुश्रुतस्य तु माषकः ॥ ६५ ॥
द्वादशभिर्धान्यमाषैश्चतुःषष्ट्या तु तैः पलम्।
एतच्च तुलितं पञ्च-रक्तिमाषात्मकं पलम् ॥ ६६ ॥
चरकार्द्धपलोन्मानं चरके दशरक्तिकैः।
माषैः पलं चतुःषष्ट्या यद्भवेत् तत् तथेरितम् ॥ ६७ ॥

---

रक्तिकादिरूपतया निर्दिष्टेष्वित्यर्थः। तत इति—एकपलादूर्द्ध्वं पलद्वयमारभ्य कुडवपर्य्यन्तमित्यर्थः। अत्र पलं यावदित्यन्तस्यैव वचनस्य पेयक्वाथविषयता; ततस्तु कुडवं यावदित्यादि तु सम्पूर्णश्लोकानुरोधादेवोक्तम; अत एव पलं यावदित्यस्य पेयक्वाथविषयत्वं दृढ़यन् पादावशिष्टत्वञ्च बोधयन् कथान्तरोक्तवचनमुपन्यस्यति, क्वाथ्यद्रव्यपले कुर्य्यादित्यादि।—प्रस्थार्द्धमिति—द्रवद्वैगुण्यात् षोडश पलानि; अत एवोक्तमन्यत्र—"क्वाथ्यद्रव्यपले वारि द्विरष्टगुणमिष्यते। चतुर्भागावशिष्टञ्च पेयं पलचतुष्टयम॥" इति। द्विरष्टगुणमिति—षोड़शगुणमित्यर्थः; एतेन पले क्वाथ्ये दीयमानस्यापि षोड़शगुणजलस्य पादावशिष्टताकथनेन कर्षादौ दीयमानस्य षोडशगुणजलस्य पादावशिष्टता कार्य्येति सूचयति; उक्तञ्चान्यत्र—"द्रव्यमापोथितं क्वाथ्यं दत्त्वा षोडशिकं जलम। पादावशिष्टं कर्त्तव्यमेष क्वाथविधिः स्मृतः॥" इति ॥ ६४ ॥

इदानीं क्वाथ्यस्य पलविकर्षादिकमित्यादि यदुक्तं, तत सर्वमकिञ्चित्करं, यतो रक्तिकादिज्ञानाधीनं माषकज्ञानं, माषकज्ञानाधीनञ्च कर्षपलादिज्ञानं तदेव मूलं निर्णीतम्, अतो माषकादिमानं व्यवस्थापयितुं परिभाषामाह, द्वात्रिंशन्माषकैरित्यादि।—द्वात्रिंशद्धान्यमाषकैरित्यर्थः, तेन द्वात्रिंशता व्रीहिमाषैः साधारणैर्माषकः, तैश्च माषकैरष्टाचत्वारिंशता चरकमते पलं स्यादिति योज्यम; सुश्रुतमते पुनः व्रीहिमाषैर्द्वादशभिर्माषकः, तैर्माषकैश्चतुःषष्ट्या पलमित्यर्थः। इदानीं सुश्रुतचरकमते यावतीभी रक्तिभिर्माषको भवति तदाह, एतच्चेत्यादि।—एतदिति—द्वादशधान्यमाषकैश्चतुःषष्ट्या माषकैः सुश्रुतेन यत् पलमुक्तं तत रक्तिकाभिस्तुलितं सत् पञ्चरक्तिमाषात्मकं भूत्वा चरकार्द्धपलोन्मानं भवतीत्यर्थः। एतदेव विशदयति, चरके दशरक्तिकैरित्यादि—यतश्चरके द्वात्रिंशन्माषकात्मकैरष्टाचत्वारिं-

तस्मात् पलं चतुःषष्ट्या माषकैर्दशरक्तिकैः।
चरकानुमतं वैद्यैश्चिकित्सासूपयुज्यते ॥ ६८ ॥

## वातज्वर-चिकित्सा।

विल्वादिः पिप्पलीमूलादिश्च।—

विल्वादिपञ्चमूलस्य क्वाथः स्याद्वातिके ज्वरे।
पाचनं पिप्पलीमूल-गुडूचीविश्वजोऽथवा ॥ ६९ ॥

किरातादिः।—

किराताब्दामृतोदीच्य बृहतीद्वयगोक्षुरैः।
सस्थिराकलसीविश्वैः क्वाथो वातज्वरापहः ॥ ७० ॥

---

अन्माषकैः यत् पलमीरितमुक्त, तद्दशरक्तिकैश्चतुःषष्ट्या माषकैस्तुलितं सत् तथा तावन्मानमेव भवेत्, यतश्चतुर्विंशत्या माषकलायैर्दशरक्तिकास्तुल्या भवन्ति, ततश्च दशरक्तिकमानाश्चतुःषष्टिमाषकाश्चतुर्विंशतिमाषकलायैर्गुणिताः सन्तः षट्शताधिक-पञ्चदशशतमाषकलाया भवन्ति; एवं चरकमतेऽपि द्वात्रिंशन्माषकलायप्रमाणा येऽष्टाचत्वारिंशन्माषकास्ते द्वात्रिंशता गुणिताः सन्तः षट्त्रिंशदधिकपञ्चदशशतमाष-कलायाः स्युरिति दशरक्तिकमाषकृतपलमानेन सह द्वात्रिंशन्माषकलायप्रमाणमाष-कृतपलमानस्य तुल्यता। सुश्रुतमते पुनर्द्वादशमाषकलाया माषकः, ते चतुःषष्टिः पलमित्युक्तम्; ते चतुःषष्टिमाषका द्वादशमाषकलायगुणिताः सन्तोऽष्टचत्वारिंशच्छतमाषकलाया भवन्तीति चरकोक्तपलमानादर्द्धेन सुश्रुतोक्तपलमानमिति। इदानीं चरकसुश्रुतोक्तमानयोर्मध्ये चरकोक्तमानमेव व्यवहारोपयोगिकमित्याह, तस्मादि-त्यादि।—यस्मात् चरकोक्तमानमेव वैद्यैश्चिकित्सासूपयुज्यते, तस्माद्दशरक्तिकैश्चतुःषष्ट्या माषकैर्यत् पलं तदेव व्यवहारसिद्धमिति शेषः ॥ ६५—६८ ॥

पाचनयोगद्वयमाह, विल्वादीत्यादि।—विल्वादिपञ्चमूलं महत् पञ्चमूलम्। अवचारणाऽप्यनेन क्रियते। पिप्पलीमूलेत्यादिकन्तु क्वाथविषयमेवेति, क्वाथार्थोक्त-पाचनयोगेन गणरूपेणैव अवचारणा क्रियते, न पुनरगणरूपेण, अवचारणायोगेनापि गणरूपेणैव कषायोऽपि क्रियते, तेन धान्यपिप्पल्यादिना कषायविधिरित्याहुः। केचित्तु क्वाथार्थोक्तपाचनयोगेनागणरूपेणापि अवचारणामाहुः ॥ ६९ ॥

किरातेत्यादि।—किरातः चिरातेति ख्यातम्। अब्दो मुस्तकम्। अमृता गुडूची। उदीच्य बालकम्। स्थिरा शालपर्णी। कलसी पृश्निपर्णी। विश्वः शुण्ठी; विश्वञ्चाने

रास्नादिः।—

रास्ना वृषादनी दारु सरलं सैलवालुकम्।
कषायः शर्कराक्षौद्र-युक्तो वातज्वरापहः॥ ७१॥

क्वाथादौ प्रक्षेपस्य मात्रा।—

प्रक्षेपः पादिकः क्वाथ्यात् स्नेहे कल्कसमो मतः॥ ७२॥
परिभाषामिमामन्ये प्रक्षेपेऽप्युचिरे यथा।
कर्षश्चूर्णस्य कल्कस्य गुडिकानाञ्च सर्वशः॥
द्रवशुक्त्या स लेढव्यः पातव्यश्च चतुर्द्रवः॥ ७३॥
मात्रा क्षौद्रघृतादीनां स्नेहक्वाथेषु चूर्णवत्॥ ७४॥

---

विल्वस्य क्वचित् पाठः। "योगवाहः परं वायुः" (च० चि० ज्व०) इति पित्तयुक्ते पाचनोऽयं योज्य इति निश्चलः॥ ७०॥

रास्नेत्यादि।—वृषादनी वन्दा। एलवालुकं स्वनामख्यातम्। हारीतोऽयं योगः, किन्तु तत्रान्तराङ्गमन्यथा पठ्यते,—"क्वाथं सगुडसर्पिष्कं पिबेद्वातज्वरापहम्" (३स्था० २अ०) इति, एवं चन्द्रटेऽपि। शर्कराक्षौद्रपाठस्तु बहुषु पुस्तकेष्वेवास्ति, अत आर्षेणापि भवितव्यम्, अतः पित्तश्लेष्मयुते तत्प्रक्षेपो बोध्यः। अयं योगो गुडमात्रप्रक्षेपादपि सर्वगुणेन पठ्यते॥ ७१॥

क्षौद्रशर्करयोर्मानार्थं परिभाषामाह, प्रक्षेप इत्यादि।—क्वाथ्यात् क्वथनीयद्रव्यात् रास्नादेः उत्तमपक्षापेक्षया पलात् पादिकः कर्ष इत्यर्थः; एवं मध्यमाधमापेक्षया यथायथं ज्ञेयम्। स्नेहे कल्कसमो मत इति—"कल्कस्तु स्नेहपादिकः" इत्युक्तेः कल्कसमः पादिक इत्यर्थः। इमामिति—वक्ष्यमाणाम्। कर्ष इत्यादावपि क्षौद्रादीनां मात्रा चूर्णवदित्यतिदेशेन कर्ष एवार्थः, अत एकार्थत्वादनुमतैव; एवं "सितोपलागुडक्षार-सामान्यांशप्रकल्पना" इति वचनस्यापि "प्रक्षेपः पादिकः क्वाथ्यात्" इति वचनेन सहैकवाक्यता ज्ञेया; तथा हि, सितोपलादिकमत्रोपलक्षणं, तेन मध्वादिकमपि ज्ञेयम्; सामान्यमुत्सर्गसिद्धं पलविकर्षार्द्धपलरूपं यत् क्वाथ्यद्रव्यमानं तस्यांशेन चतुर्भागरूपेण प्रकल्पना येषां ते तथा; तेनापि क्वाथ्यात् पादिक एव प्रक्षेपो ज्ञेयः। "समानेषां प्रकल्पना" इति पाठपक्षेऽपि—समाना चूर्णसमाना कर्ष इत्यर्थः; तेन "मात्रा क्षौद्रघृतादीनां स्नेहक्वाथेषु चूर्णवत्" इत्यनेन सहैकवाक्यता। यत्र क्वाथप्रधानता तत्र "प्रक्षेपः पादिकः" इत्यादि परिभाषा, एवं यत्र चूर्णापेक्षी

बिल्वादि:।—

बिल्वादिपञ्चमूली च गुड़ूच्यामलके तथा।
कुस्तुम्बुरुसमो ह्येष कषायो वातिके ज्वरे॥ ७५॥

पिप्पल्यादि:।—

पिप्पलीशारिवाद्राक्षा-शतपुष्पाहरेणुभि:।
कृत: कषाय: सगुडो हन्यात् श्वसनजं ज्वरम्॥ ७६॥

गुडूच्यादि:।—

गुड़ूची शारिवा द्राक्षा शतपुष्पा पुनर्नवा।
सगुड़ोऽयं कषाय: स्याद्वातज्वरविनाशन:॥ ७७॥

---

द्रव: तत्र "कर्षश्चूर्णस्य कल्कस्य" इति परिभाषा। द्रवयुक्त्या स लिढ़्य इति— स लिढ़्यश्चेत् तदा द्रवयुक्त्या द्रवार्द्धपलेन इत्यर्थ:। पातव्यश्चेत् तदा चतुर्द्रव: चतुर्गुण-द्रव:। इद्धवैद्यव्यवहारस्तु पञ्चकषायावधीयेति॥ ७२—७४॥

बिल्वादीत्यादि।—कुस्तुम्बुरु धनीयकम्। सम: इति—समभागकृत: कषाय: इत्यर्थ:, एतेन "भागेऽप्यनुक्ते समता विधेया" इति परिभाषार्थ: सूचित:; किंवा शम: तालव्यादि:; तेन नायं पाचनयोग:, किं तर्हि? शमन इत्यर्थ:। चन्द्राटेऽपि शमनाधिकारेऽयं योग: पठित:; तत्र शमनलक्षणं यथा—"न शोधयति यद्दोषान् समान् नोदीरयत्यपि। समीकरोति च क्रुद्धांस्तत् संशमनमुच्यते॥" इति। न शोधयति यद्दोषानिति—दुष्टान् दोषान् न देहान्नि:सारयति, एतेन शोधनं व्यवच्छिनत्ति, समान् नोदीरयत्यपीति—अदुष्टानपि वृद्ध्या न विमार्गगान् करोति; अनेन पाचनं व्यवच्छिनत्ति; पाचनं हि दोषान् विमार्गीकुर्वन् पचति, यथा चाग्नि: स्थाल्यां शालितण्डुलादीन् विमार्गीकुर्वन्नेव पचति। न कोपयतीति क्वचित् पाठ:, स च न सङ्गत:, नोदीरयतीत्यनेन पौनरुक्त्यात्, किञ्च अस्मिन् पाठे शोधनव्यवच्छेदाय पदान्तरं मृग्यम्॥ ७५॥

पिप्पलीत्यादि सुश्रुतस्य।—यत्र शारिवेका पठ्यते तत्रानन्तमूलमेव, एवमन्यत्रापि ज्ञेयम्। श्वसनजमिति—वातजम्। पिप्पलीशारिवेत्यादिकमारभ्य वातज्वरे ये वाच्यास्ते शमनयोगा एव बोध्या:, यस्मात् सुश्रुते "अत: संशमनीयानि कषायाणि निबोध मे" ( उ० ३९ अ० ) इत्यभिधाय एते योगा उक्ता:॥ ७६॥

गुड़ूचीत्यादि।—तन्त्रान्तरे गुड़ूचीस्थाने पिप्पली पठ्यते॥ ७७॥

द्राक्षादिः।—

द्राक्षागुडूचीकाश्मर्य्य-त्रायमाणाः सशारिवाः।
निष्क्वाथ्य सगुड़ं क्वाथं पिबेद्वातज्वरापहम्॥ ७८॥

शतावर्य्यादिः।—

शतावरीगुड़चीभ्यां स्वरसो यन्त्रपीड़ितः।
गुड़प्रगाढ़ः शमयेत् सद्योऽनिलकृतं ज्वरम्॥ ७९॥

## पित्तज्वरचिकित्सा।

कलिङ्गादिः।—

कलिङ्गं कट्फलं मुस्तं पाठा तिक्तकरोहिणी।
पक्वं सशर्करं पीतं पाचनं पैत्तिके ज्वरे॥ ८०॥

तिक्तादिः।—

सक्षौद्रं पाचनं पैत्ते तिक्ताब्देन्द्रयवैः कृतम्॥ ८१॥

लोध्रादिः।—

लोध्रोत्पलामृतापद्म-शारिवाणां सशर्करः।
क्वाथः पित्तज्वरं हन्यादथवा पर्पटोद्भवः॥ ८२॥

पटोलादिः।—

पटोलयवनिष्क्वाथो मधुना मधुरीकृतः।
तीव्रपित्तज्वरामर्दी पानात् तृड्दाहनाशनः॥ ८३॥

---

द्राक्षेत्यादि सुश्रुतस्य।—काश्मर्य्यं गाम्भारीफलम॥ ७८॥

शतावरीत्यादि।—अनयोः स्वरसः सम एव ग्राह्यः॥ ७९॥

पैत्तिकज्वरे पाचनयोगमाह, कलिङ्गमित्यादि।—कलिङ्गम् इन्द्रयवः। पाठा आकनादी। तिक्तकः पटोलः॥ ८०॥

सक्षौद्रमित्यादि।—तिक्ता कटुकी॥ ८१॥

लोध्रोत्पलेत्यादि।—उत्पलं नीलोत्पलम्। पद्मं च पद्मपुष्पम्; "गुड़ूचीशारिवा-लोध्र-कमलोत्पलशर्कराः" इत्यायुर्वेदसारदर्शनात् एक एवायं योगः। सुश्रुते तु योगद्वयं पठ्यते—"गुड़ूचीपद्मलोध्राणां शारिवोत्पलयोस्तथा। शर्करामधुरः क्वाथः शीतः पित्तज्वरापहः॥" (उ० ३९ अ०) इति। किंवा एतद्वचनसंवादात् सुश्रुतेऽप्येकयोगो व्याख्येयः। पर्पटोद्भव इत्यत्रापि सशर्कर इति योज्यम्॥ ८२॥

पटोलेत्यादि।—स्पष्टम्॥ ८३॥

दुरालभादिः ।—

दुरालभापर्पटकप्रियङ्गु-भूनिम्बवासाकटुरोहिणीनाम् ।
जलं पिबेच्छर्करयाऽवगाढं तृष्णाऽस्रपित्तज्वरदाहयुक्तः ॥ ८४ ॥

त्रायमाणादिः ।—

त्रायमाणा च मधुकं पिप्पलीमूलमेव च ।
किराततिक्तकं मुस्तं मधूकं सविभीतकम् ॥
सशर्करं पीतमेतत् पित्तज्वरविनाशनम् ॥ ८५ ॥

मृद्वीकादिः ।—

मृद्वीका मधुकं निम्बं कटुकारोहिणी समा ।
अवश्यायस्थितं पाक्यमेतत् पित्तज्वरापहम् ॥ ८६ ॥

पर्पटकादिः ।—

एकः पर्पटकः श्रेष्ठः पित्तज्वरविनाशनः ।
किं पुनर्यदि युज्येत चन्दनोदीच्यनागरैः ॥ ८७ ॥

विश्वादिः ।—

विश्वाम्बुपर्पटोशीर-घनचन्दनसाधितम् ।
दद्यात् सुशीतलं वारि तृट्छर्दिज्वरदाहनुत् ॥ ८८ ॥

---

दुरालभेत्यादि ।—शर्कराऽत्र प्रक्षेपविधिनैव ; अन्ये त्ववगाढमिति वचनात् सम्यक् माधुर्य्योपादिका शर्करा देयेत्याहुः ॥ ८४ ॥

त्रायमाणेत्यादि ।—त्रायमाणा बलालता इति । मधुकं यष्टिमधु । मधूकं मधूक-पुष्पं पित्तहन्तृत्वात् ॥ ८५ ॥

मृद्वीकेत्यादि ।—मृद्वीका द्राक्षा । कटुकारोहिणी कटुरोहिणी । अवश्यायस्थितं शिशिरस्थितं, न तु शीतकषायम् ; अत आह, पाक्यमिति—एतेन पाकं कृत्वैव शिशिरे स्थापयेत, न तु "द्रव्यादापोथितात् तोये" इत्यादि शीतकषायविधिना ॥ ८६ ॥

एक इत्यादि ।—चन्दनं रक्तचन्दनम् । नागरं कटुकमपि न पित्ते विरुध्यते मधुर-पाकित्वात् ॥ ८७ ॥

विश्वेत्यादि ।—अम्बु बालकम् । घनं मुस्तम् ॥ ८८ ॥

पर्पटादिक्वाथत्रयम्।—

पर्पटामृतधात्रीणां क्वाथः पित्तज्वरापहः।
द्राक्षाऽऽरग्वधयोश्चापि काश्मर्य्यस्याथवा पुनः॥ ८९॥

द्राक्षादिः।—

द्राक्षाऽभयापर्पटकाब्दतिक्ता-क्वाथं सशम्पाकफलं विदध्यात्।
प्रलापमूर्च्छाभ्रमदाहशोष-तृष्णान्विते पित्तभवे ज्वरे तु॥९०॥

अन्तर्दाहे धन्याकादिः।—

व्युषितं धन्याकजलं प्रातः पीतं सशर्करं पुंसाम्।
अन्तर्दाहं शमयत्यचिरात् दूरप्ररूढमपि॥ ९१॥

पित्तज्वरे शीतक्रियोपदेशः।—

पित्तज्वरेण तप्तस्य क्रियां शीतां समाचरेत्॥ ९२॥

---

पर्पटेत्यादि।—अमृता गुडूची, छान्दसत्वात् ह्रस्वः। द्राक्षेत्यादि सुश्रुतस्य।—आरग्वधः शोणालुः; अस्य च चरके फलिनीवर्गे सुश्रुते पत्रवर्गे पाठात् अन्तःपरिमार्जने फलं, बहिःपरिमार्जने कुष्ठादौ पत्रं ज्ञेयम्; तेनात्र फलमेव; एवं काश्मर्य्या अपि फलमेव। अत्र द्राक्षाऽऽरग्वधयोश्चापीत्येको योगः, काश्मर्य्यस्याथवेति द्वितीयः। इदञ्च योगद्वयं—"गुडूचीपद्मलोध्राणां शारिवोत्पलयोस्तथा। शर्करामधुरः क्वाथः शीतः पित्तज्वरापहः॥" (उ० ३९ अ०) इत्यस्यानन्तरं सुश्रुते पठ्यते, तेनात्र योगद्वये शर्करामधुरः क्वाथः इत्यनुवर्त्त्य टीकाकारैः शर्कराप्रक्षेपो विधेय इति व्याख्यातम्॥ ८९॥

द्राक्षेत्यादि हारीतस्य।—शम्पाकः शोणालुः तस्य मज्जभागः प्रक्षेप इति केचित्, अयं पक्षः प्रचारी। अन्ये तु तत्फलैः सह मिलित्वा क्वाथ इत्याहुः॥ ९०॥

व्युषितमित्यादि।—धन्याकक्वाथ एव व्युषितः कार्य्यः इति कश्चित्। अन्ये तु—"द्रव्यादापोथितात् तोये प्रतप्ते निशि संस्थितात्। कषायो योऽभिनिर्याति स शीतः समुदाहृतः॥ षड्भिः पलैश्चतुर्भिर्वा सलिलाच्छीतफाण्टयोः। आप्लुतं भेषजपलं रसाख्यायां पलद्वयम्॥" इति शास्त्रयुक्त्या शीतकषायमित्याहुः। वृद्धवैद्यास्तु भेषजार्द्धपले जलपलद्वयेन शीतकषायं कुर्वन्ति॥ ९१॥

पित्तज्वरेण तप्तस्येत्यादि।—तप्तस्येत्यनेन वक्ष्यमाणा प्रदेहाद्या शीतलक्रिया कीर्ष-

तृष्णादौ विदार्य्यादिः ।—

विदारी दाड़िमं लोध्रं दधित्थं बीजपूरकम् ।
एभिः प्रदिह्यान्मूर्द्धानं तृड्दाहार्त्तस्य देहिनः ॥ ९३ ॥

दाहे योगचतुष्टयम् ।—

घृतभृष्टाऽम्लपिष्टा च धात्री लेपाच्च दाहनुत् ।
अम्लपिष्टैः सुशीतैर्वा पलाशतरुजैर्दिहेत् ॥
बदरीपल्लवोत्थेन फेनेनारिष्टकस्य वा ॥ ९४ ॥

तृष्णादौ कालेयादिः ।—

कालेयचन्दनानन्ता-यष्टीबदरकाञ्जिकैः ।
सघृतैः स्याच्छिरोलेपस्तृष्णादाहार्त्तिशान्तये ॥ ९५ ॥

दाहे शीतक्रियाविशेषः ।—

उत्तानसुप्तस्य गभीरताम्र-कांस्यादिपात्रं प्रणिधाय नाभौ ।
तत्राम्बुधारा बहुला पतन्ती निहन्ति दाहं त्वरितं सुशीता ॥ ९६ ॥

दाहे शीतक्रियाविशेषः ।—

पीतकाञ्जिकवस्त्राव-गुण्ठनं दाहनाशनम् ॥ ९७ ॥

---

संशोधनानि च । स्नानाभ्यङ्गदिवास्वप्न शीतव्यायामयोषितः ॥ कषायगुरुभक्ष्याणि क्रोधा-दीनि तथैव च । सारवन्ति च भोज्यानि वर्जयेत् तरुणज्वरी ॥" (उ० ३९ अ०) ॥९२॥

विदारीत्यादि ।—दाड़िमस्य फलम् । दधित्थं कपित्थफलम् । बीजपूरकस्य केशरम् ॥ ९३ ॥

घृतेत्यादि ।—धात्री आमलकी; आदौ अम्लकाञ्जिकपिष्टा पश्चात्मनाक्घृत-भृष्टेत्यर्थः । अम्लपिष्टैरित्यादि ।—अम्लं काञ्जिकम् । पलाशतरुजैः पलाशनवपल्लवैः दिहेत् लिम्पेत् । बदरीपल्लवोत्थनेत्यादि ।—अत्रापि बदरीपल्लवं काञ्जिकेन पिष्टा प्रचुरकाञ्जिकेन गोलयित्वा मन्थानदण्डेन प्रमथ्य फेनग्रहणं कर्त्तव्यम् । एवं निम्ब-पत्रस्येत्याहुः ॥ ९४ ॥

कालेयेत्यादि ।—कालेयं कालीयकाष्ठम् । अनन्ता अनन्तमूलम् । बदरं बदर-फलम् । सघृतैरिति—घृतमत्र शतधौतं प्रयच्छन्ति वृद्धाः ॥ ९५ ॥

उत्तानेत्यादि ।—सर्वत्रैव कफसम्बन्धं विना यथा गात्रे अम्बुकणा न पतन्ति, तथा कार्य्यम् ॥ ९६ ॥

जिह्वादिशोषे शिरोलेपः ।—

जिह्वातालुगलक्लोम-शोषे मूर्द्ध्नि तु दापयेत् ।
केशरं मातुलुङ्गस्य मधुसैन्धवसंयुतम् ॥ ९८ ॥

## कफज्वरचिकित्सा ।

मातुलुङ्गादिः कषायश्च ।—

मातुलुङ्गशिफाविश्व-ब्राह्मीग्रन्थिकसम्भवम् ।
कफज्वरेऽम्बु सक्षारं पाचनं वा कणादिकम् ॥ ९९ ॥

पिप्पल्यादिः ।—

पिप्पली-पिप्पलीमूल-चव्यचित्रकनागरम् ।
मरिचैलाजमोदेन्द्र-पाठारेणुकजीरकम् ॥ १०० ॥
भार्गी महानिम्बफलं हिङ्गु रोहिणिसर्षपम् ।
विडङ्गातिविषे मूर्वा चेत्ययं कीर्त्तितो गणः ॥ १०१ ॥
पिप्पल्यादिः कफहरः प्रतिश्यारोचकज्वरान् ।
निहन्याद्दीपनो गुल्म-शूलघ्नस्त्वामपाचनः ॥ १०२ ॥

कटुकादिः कुष्ठादिश्च ।—

कटुकं चित्रकं निम्बं हरिद्राऽतिविषे वचा ।
कुष्ठमिन्द्रयवं मूर्वां पटोलञ्चापि साधितम् ॥
पिबेन्मरिचसंयुक्तं सक्षौद्रं श्लैष्मिके ज्वरे ॥ १०३ ॥

---

जिह्वेत्यादि सुश्रुतस्य ।—लेपोऽयम् । क्लोम पिपासास्थानम् । मूर्द्ध्नि शिरस्तालुमध्ये ॥ ९८ ॥

मातुलुङ्गेत्यादि ।—शिफा मूलम् । ब्राह्मी ब्राह्मीशाकम् । ग्रन्थिकं पिप्पलीमूलम् । सक्षारमिति मातुलुङ्गशिफेत्यादिविशेषणमेव, न तु कणादिकमित्यस्य ; यतस्तन्त्रान्तरे "पिप्पल्यादिकान्तु पाचनं कफजे ज्वरे" इत्युक्तं, न तु यवक्षारप्रक्षेप इति । कणादिकमिति—सुश्रुतोक्तपिप्पल्यादिगणः ॥ ९९ ॥

अतस्तमेव गणं निर्दिशति—पिप्पलीत्यादि ॥ १००—१०२ ॥

कटुकमित्यादि तन्त्रान्तरस्य ।—सुश्रुते—"हरिद्रा चित्रकं निम्बमुशीराति-

निम्बादिः ।—

निम्बविश्वामृता दारु शटी भूनिम्बपौष्करम् ।
पिप्पल्यौ बृहती चेति क्वाथो हन्ति कफज्वरम् ॥ १०४ ॥

सिन्धुवारक्वाथः ।—

सिन्धुवारदलक्वाथः सोषणः कफजे ज्वरे ।
जङ्घयोश्च बले क्षीणे कर्णे वा पिहिते पिबेत् ॥ १०५ ॥

आमलक्यादिः ।—

आमलक्यभया कृष्णा चित्रकश्चेत्ययं गणः ।
सर्वज्वरकफातङ्क-भेदी दीपनपाचनः ॥ १०६ ॥

त्रिफलादिः दशमूलादिश्च ।—

त्रिफलापटोलवासाच्छिन्नरुहातिक्तरोहिणीषड्ग्रन्थाः ।
मधुना श्लेष्मसमुत्थे दशमूलीवासकस्य वा क्वाथः ॥ १०७ ॥

मुस्तादिः ।—

मुस्तं वत्सकबीजानि त्रिफला कटुरोहिणी ।
परूषकाणि च क्वाथः कफज्वरविनाशनः ॥ १०८ ॥

---

पठति। कटुकेत्यादिवचान्त एको योगः, कुष्ठादिपटोलान्तो द्वितीयः; अत एव वृन्दे पूर्वार्द्धं परित्यज्य कुष्ठमित्यादि द्वितीयार्द्धमेव पठ्यते। डल्लनस्तु एकयोगत एव सुश्रुतटीकायां व्याख्यातवान्। पटोलमिति—पटोलपत्रम्; "पटोलादिष्कदलम्" इति वचनात्। साधितमित्यनन्तरं कषायमिति शेषः। मरिचमल्पं मधु तु प्रचुरं प्रक्षेप्यं तीक्ष्णमृदुवीर्य्यत्वादिति चक्रः ॥ १०३ ॥

निम्बेत्यादि।—पौष्करं पुष्करमूलं, तदभावे कुष्ठम्, एवं सर्वत्र। बृहती कण्टकारी ॥ १०४ ॥

सिन्धुवारेत्यादि आयुर्वेदसारस्य।—सोषण इति—सपिप्पलीकः, अत एव कणाढ्य इति पठ्यते; अन्ये तु ऊषणशब्देन मरिचं व्याख्यानयन्ति व्यवहरन्ति च ॥ १०५ ॥

आमलकीत्यादि।—स्पष्टम् ॥ १०६ ॥

त्रिफलेत्यादि।—छिन्नरुहा गुडूची। तिक्तरोहिणी कटुरोहिणी। षड्ग्रन्था वचा। अयं योगो दशमूलीवासकक्वाथसाहचर्य्यात् क्वाथ एव। दशमूलीवासकाभ्यां मिलिताभ्यां क्वाथः। अत्रापि मधु प्रक्षिपन्ति ॥ १०७ ॥

चातुर्भद्रावलेहिका ।—

कट्फलं पौष्करं शृङ्गी कृष्णा च मधुना सह ।
कासश्वासज्वरहरः श्रेष्ठो लेहः कफान्तकृत् ॥ १०९ ॥

चूर्णादीनां मात्रा ।—

कर्षश्चूर्णस्य कल्कस्य गुड़िकानाञ्च सर्वशः ।
द्रवशुक्त्या स लेढ़व्यः पातव्यश्च चतुर्द्रवः ॥ ११० ॥

रोगाधिष्ठानभेदेन अवलेहप्रयोगकालः ।—

ऊर्द्धजत्रुगरोगघ्नो सायं स्यादवलेहिका ।
अधोरोगहरो या तु सा पूर्वं भोजनान्मता ॥ १११ ॥

पिप्पलीप्रयोगः ।—

क्षौद्रोपकुल्यासंयोगः कासश्वासज्वरापहः ।
प्लीहानं हन्ति हिक्काञ्च बालानाञ्च प्रशस्यते ॥ ११२ ॥

## द्वन्द्वज-ज्वरचिकित्सा ।

चिकित्साविधिः ।—

संसृष्टदोषेषु हितं संसृष्टमथ पाचनम् ॥ ११३ ॥

## वातपित्तज्वर-चिकित्सा ।

नवाङ्गः ।—

विश्वामृताब्दभूनिम्बैः पञ्चमूलीसमन्वितैः ।
कृतः कषायो हन्त्याशु वातपित्तोद्भवं ज्वरम् ॥ ११४ ॥

---

कट्फलमित्यादि ।—कट्फलं स्वनामख्यातम । शृङ्गी कर्कटशृङ्गी ॥ १०९ ॥

कर्ष इत्यादि ।—परिभाषेयं व्याख्याता पूर्वमेव, किन्तु इदं कर्षमानम् उत्तमपुरुषमपेक्ष्य कथितं, तेन मध्यमजघन्यापेक्षया कर्षमानादपकर्षो ज्ञेयः; व्यवहारस्तु द्विकर्षमात्रकैरिति ॥ ११० ॥

अवलेहोपयोगार्थं समयमाह—ऊर्द्धेत्यादि ॥ १११ ॥

क्षौद्रोपकुल्येत्यादि ।—उपकुल्या पिप्पली ॥ ११२ ॥

द्वन्द्वानां चिकित्सामाह, संसृष्टमित्यादि ।—संसृष्टं मिलितं वातहरादिभिः ॥ ११३ ॥

विश्वामृतेत्यादि ।—अमृता गुडूची । पञ्चमूली स्वल्पा पञ्चमूली ॥ ११४ ॥

त्रिफलादिः ।—

त्रिफलाशाल्मलीरास्ना-राजवृक्षाटरूषकैः ।
शृतमम्बु हरेत् तूर्णं वातपित्तोद्भवं ज्वरम् ॥ ११५ ॥

किराततिक्तादिः ।—

किराततिक्तममृता-द्राक्षामामलकीशटीम् ।
निष्क्वाथ्य पित्तानिलजे क्वाथं तं सगुडं पिबेत् ॥ ११६ ॥

निदिग्धिकादिः ।—

निदिग्धिकाबलारास्ना-त्रायमाणाऽमृतायुतैः ।
मसूरविदलैः क्वाथो वातपित्तज्वरं जयेत् ॥ ११७ ॥

पञ्चभद्रम् ।—

गुडूची पर्पटं मुस्तं किरातं विश्वभेषजम् ।
वातपित्तज्वरे देयं पञ्चभद्रमिदं शुभम् ॥ ११८ ॥

मधुकादिः ।—

मधुकं शारिवे द्राक्षा मधूकं चन्दनोत्पलम् ।
काश्मरी पद्मकं लोध्रं त्रिफलां पद्मकेशरम् ॥ ११९ ॥
परूषकं मृणालञ्च न्यसेदुत्तमवारिणि ।
मधुलाजसितायुक्तं तत् पीतमुषितं निशि ॥ १२० ॥

---

त्रिफलेत्यादि ।—शाल्मलीवृक्षस्य मूलम् । राजवृक्षस्य शोणालुवृक्षस्य फलम्, अन्तःपरिमार्जनत्वादिति प्रागेवोक्तम् । अटरूषको वासकः ॥ ११५ ॥

किराततिक्तमित्यादि सुश्रुतस्य ।—अमृता गुडूची ॥ ११६ ॥

निदिग्धिकेत्यादि ।—निदिग्धिका कण्टकारी । मसूरविदलैरिति—व्रीहिमसूरविदलैरिति वकुलः ; अन्ये तु मसूरविदलं श्यामालतामाहुः ; यद्यप्यस्याः पर्य्याये मसूरविदला पठ्यते, तथाऽपि लिङ्गमशिष्टं लोकाश्रयत्वात् इति लिङ्गे अनादरः ; अस्याश्च द्रव्यगुणे ज्वरहन्तृत्वमस्ति, व्यवहारस्तु क्वचिदनया क्वचित् व्रीहिमसूरेणेति ॥ ११७ ॥

गुडूचीति ।—पञ्चभद्रस्य पित्तकफहन्तृत्वमपि बोध्यम् ; यदाह हारीतः,—"किरातं पर्पटं मुस्तं गुडूची विश्वभेषजम् । पित्तश्लेष्मज्वरे कुर्य्यात् पाचनं ज्वरनाशनम् ॥" (२ स्था० २ अ० ) इति ॥ ११८ ॥

मधुकमित्यादि ।—हे शारिवे श्यामालताऽनन्तमूले । मधूकं मधूकपुष्पम् ।

वातपित्तज्वरं दाह-तृष्णामूर्च्छावमिभ्रमान्।
शमयेद्रक्तपित्तञ्च जीमूतानिव मारुतः॥ १२१॥

### पित्तश्लेष्मज्वरचिकित्सा।

पटोलादिः।—

पटोलं चन्दनं मूर्वा तिक्ता पाठाऽमृता गणः।
पित्तश्लेष्मारुचिच्छर्दि-ज्वरकण्डूविषापहः॥ १२२॥

गुडूच्यादिः।—

गुडूची निम्बधन्याकं पद्मकं चन्दनानि च।
एष सर्वज्वरान् हन्ति गुडूच्यादिस्तु दीपनः॥
हृल्लासारोचकच्छर्दि-पिपासादाहनाशनः॥ १२३॥

चातुर्भद्रक पाठासप्तकौ।—

किरातं नागरं मुस्तं गुडूचीञ्च कफाधिके।
पाठोदीच्यमृणालैस्तु सह पित्ताधिके पिबेत्॥ १२४॥

कण्टकार्य्यादिः।—

कण्टकार्य्यमृताभार्गी-नागरेन्द्रयवासकम्।

---

उत्पलं नीलोत्पलम्। काश्मरी गाम्भारी, अस्याः फलं वृद्धोपदेशात्। पद्मस्य केशरं किञ्जल्कः। मृणालमुशीरम्। उत्तमवारिणि तण्डुलोदके। एतत् सर्वं शीतकषाय-विधिना गृहीत्वा पेयम्॥ ११९—१२१॥

पित्तकफज्वरचिकित्सामाह, पटोलमित्यादि सुश्रुतस्य।—गणोक्तत्वात् क्वाथ-कल्कादिकल्पनाऽस्य बोध्या॥ १२२॥

गुडूचीत्यादि।—पद्मकं पद्मकाष्ठम्; यत्र पद्ममित्यस्ति तत्र प्रायः पद्मकेशरमेव गृह्यते। अत्र अत्यन्तदाहपिपासायां वृद्धाः शीतीकृत्य मधु प्रक्षिपन्ति, तच्च बहुधा दृष्टफलम्॥ १२३॥

किरातमित्यादि।—"पाठोदीच्यमृणालैस्तु सह पित्ताधिके पिबेत्" इति किरातादि पाठादिभिः सह मेलयित्वा पिबेत्; अतः पाठासप्तकत्वम्। मृणाल-मुशीरम्। पित्ताधिके इत्यत्र कफे इति शेषः; तत्कर्णोऽप्युः—"भूनिम्ब-घन-गुडूची शुण्ठ्यस्ता वा सबाल्यमयपाठाः" इति॥ १२४॥

भूनिम्बं चन्दनं मुस्तं पटोलं कटुरोहिणी ॥ १२५ ॥
कषायं पाययेदेतत् पित्तश्लेष्मज्वरापहम्।
दाहतृष्णाऽरुचिच्छर्दि-कासहृत्पार्श्वशूलनुत् ॥ १२६ ॥

वासाप्रयोगः।—

सपत्रपुष्पवासाया रसः क्षौद्रसितायुतः।
कफपित्तज्वरं हन्ति सास्रपित्तं सकामलम् ॥ १२७ ॥

पटोलादिः।—

पटोलं पिचुमर्दश्च त्रिफला मधुकं बला।
साधितोऽयं कषायः स्यात् पित्तश्लेष्मोद्भवे ज्वरे ॥ १२८ ॥

अमृताष्टकः।—

गुडूचीन्द्रयवारिष्ट-पटोलं कटुरोहिणी।
नागरं चन्दनं मुस्तं पिप्पलीचूर्णसंयुतम् ॥ १२९ ॥
अमृताष्टक इत्येष पित्तश्लेष्मज्वरापहः।
हृल्लासारोचकच्छर्दि-तृष्णादाहनिवारणः ॥ १३० ॥

पटोलादिः।—

पटोलयवधन्याकं मधुकामलकचन्दनम्।
पैत्तिके श्लेष्मपित्तोत्थे ज्वरे तृट्छर्दिदाहनुत् ॥ १३१ ॥

पञ्चतिक्तम्।—

क्षुद्राऽमृताभ्यां सह नागरेण सपौष्करञ्चैव किराततिक्तम्।
पिबेत् कषायन्त्विह पञ्चतिक्तं ज्वरं निहन्त्यष्टविधं समग्रम् ॥ १३२ ॥

---

कण्टकारीत्यादि।—भार्गी वामनहाटी। इन्द्र इन्द्रयवः। यवासकं दुरालभा। एष योगः पित्तोत्तरे कफे इति केचित् ॥ १२५ १२६ ॥

सपत्रेत्यादि।—रसः स्वरसः, तस्य गुरुत्वात् अर्द्धपलं प्रायेणोपयुज्यते। सिता-मधुनोस्तु प्रत्येकं चतुर्माषकयोरत्र प्रक्षेप इति ॥ १२७ ॥

पटोलमित्यादि।—पिचुमर्दो निम्बः ॥ १२८ ॥

गुडूचीत्यादि।—अमृताष्टके—अरिष्टो निम्बः ॥ १२९ १३० ॥

पटोलेत्यादि।—स्पष्टम् ॥ १३१ ॥

क्षुद्रेत्यादि।—क्षुद्रा कण्टकारी। नागरस्य कटुत्वेऽपि क्वथिणी गच्छतीति न्यायात् पञ्चतिक्तसंज्ञा ॥ १३२ ॥

कटुकीप्रयोगः।—

सशर्करामक्षमात्रां कटुकामुष्णवारिणा।
पीत्वा ज्वरं जयेज्जन्तुः कफपित्तसमुद्भवम्॥ १३३॥

धान्यपटोलम्।—

दीपनं कफविच्छेदि वातपित्तानुलोमनम्।
ज्वरघ्नं पाचनं भेदि शृतं धान्यपटोलयोः॥ १३४॥

## वातश्लेष्मज्वरचिकित्सा।

रूक्षस्वेदस्य कर्त्तव्यता।—

कफवातज्वरे स्वेदान् कारयेत् रूक्षनिर्मितान्॥ १३५॥

रूक्षस्वेदस्य प्रयोजनम्।—

स्रोतसां मार्दवं कृत्वा नीत्वा पावकमाशयम्।
हत्वा वातकफस्तम्भं स्वेदो ज्वरमपोहति॥ १३६॥

---

सशर्करामित्यादि सुश्रुतस्य।—कल्कं कल्पनेयम्। शर्कराकटुरोहिण्योः मिलित्वा समभागेन कर्षः। वैद्यप्रसारकेऽपि समभाग एवोक्तः। चक्रस्तु शर्कराया उपसर्जनत्वात् कटुकायाश्च प्राधान्यात् कटुकाया द्वादश माषकाः सितायाश्चत्वार इति; तन्न; आयुर्वेदसारे—"सितां कटुकया युक्तां पीत्वा चोष्णेन वारिणा। जीर्णज्वरं जयेज्जन्तुः कफपित्तकृतं ज्वरम्॥" इत्यत्र सिताया एव प्राधान्येन निर्देशात्; तस्मात् "भागोऽप्यनुक्ते समता विज्ञेया" इति वचनात् समभागतैव युक्ता॥ १३३॥

दीपनमित्यादि।—अत्र धान्यकस्य दश माषकाः, पटोलस्य दश माषकाः; पटोलस्य तु षण्माषका इति केचित्, तन्न, समभागबाधकाभावात्। शृतं क्वाथः। व्यवहारस्तु व्यञ्जनेनैव॥ १३४॥

वातकफज्वरचिकित्सामाह, कफवातेत्यादि।—रूक्षनिर्मितानिति—करीषबुष-पाषाणवालुकानिर्मितान्; यद्यपि वातश्लेष्मणि स्निग्धरूक्ष एव स्वेदो युक्तः, यदुक्तं—"स्वेदोऽनिले स्निग्धरूक्षो वातश्लेष्मणि शस्यते" इति, तथाऽपि आमाशयगतस्यैव दोषस्य ज्वरारम्भकत्वात् वातेऽपि रूक्ष एव स्वेद उक्तः; उक्तं हि—"आमाशयगते वाते कफपूर्वः प्रशस्यते"॥ १३५।१३६॥

रूक्षबालुकास्वेदः।—

खर्परभृष्टपटस्थितकाञ्जिकसिक्तो हि बालुकास्वेदः।
शमयति वातकफामयमस्तकशूलाङ्गभङ्गादीन्॥ १३७॥

मुस्तादिः।—

मुस्तनागरभूनिम्बं त्रयमेतत् त्रिकार्षिकम्।
कफवातामशमनं पाचनं ज्वरनाशनम्॥ १३८॥

पञ्चकोलः।—

पिप्पलीपिप्पलीमूल-चव्यचित्रकनागरम्।
दीपनीयः स्मृतो वर्गः कफानिलगदापहः॥ १३९॥

पिप्पलीक्वाथः।—

पिप्पलीभिः शृतं तोयमनभिष्यन्दि दीपनम्।
वातश्लेष्मविकारघ्नं प्लीहज्वरविनाशनम्॥ १४०॥

आरग्वधादिः।—

आरग्वधग्रन्थिकमुस्ततिक्ता-हरीतकीभिः क्वथितः कषायः।
सामे सशूले कफवातयुक्ते ज्वरे हितो दीपनपाचनश्च॥१४१॥

---

तत्रैव रूक्षस्वेदमाह, खर्परेत्यादि।—स्विद्यते अनेनेति स्वेदः, बालुका एव स्वेदः बालुकास्वेदः, तेन खर्परभृष्टेत्यादि विशेषणं सङ्गच्छते। बालुकाप्रकार इत्यपि पाठः॥ १३७॥

मुस्तेत्यादि।—प्रत्येकं कर्षः॥ १३८॥

पिप्पलीत्यादि।—योगोऽयमव्यवहारतया क्वाथेनापि क्रियते। प्रत्येकं कोलप्रमाणयोगादस्य पञ्चकोल इति संज्ञा ज्ञेया॥ १३९॥

पिप्पलीभिः शृतमित्यादि।—पिप्पल्यास्तीक्ष्णवीर्य्यत्वात् क्वाथान्तरवत् अस्य अर्द्धपलादिमानेन क्वाथो न युज्यते, तेन कर्षमेकमल्पं वा गृहीत्वा कषायः कार्य्यः। प्रवले श्लेष्मणि वाते च योज्यः। वृद्धास्तु क्वाथेन व्यवहरन्ति, अष्टमाषकं गृहीत्वा षडङ्गवदर्द्धशृतमात्रावशेषामपि कुर्वन्ति॥ १४०॥

आरग्वधेत्यादि।—आरग्वधः शोणालुफलम्। ग्रन्थिकं पिप्पलीमूलम्। तिक्ता कटुकी। "दीपनपाचनश्च" इत्यत्र "दीपनभेदनोऽग्नौ" इत्यपि पाठः॥ १४१॥

क्षुद्रादिः।—

क्षुद्राऽमृतानागरपुष्कराह्वयैः कृतः कषायः कफमारुतोद्भवे।
सश्वासकासारुचिपार्श्वरुक्करे ज्वरे त्रिदोषप्रभवे च शस्यते॥१४२॥

दशमूलम्।—

दशमूलीरसः पेयः कणायुक्तः कफानिले।
अविपाकेऽतिनिद्रायां पार्श्वरुक्श्वासकासके॥ १४३ ॥

मुस्तादिः।—

मुस्तं पर्पटकः शुण्ठी गुडूची सदुरालभा।
कफवातारुचिच्छर्दि-दाहशोषज्वरापहः॥ १४४ ॥

दार्व्यादिः।—

दारुपर्पटभार्ग्यब्द-वचाधान्यककट्फलैः।
साभयाविश्वपूतीकैः क्वाथो हिङ्गुमधूत्कटः॥ १४५ ॥
कफवातज्वरे पीतो हिक्काश्वासगलग्रहान्।
कासश्वासप्रसेकांश्च हन्यात् तरुमिवाशनिः॥ १४६ ॥

क्षौद्रादीनां प्रक्षेपे परिभाषा।—

मात्रा क्षौद्रघृतादीनां स्नेहक्वाथेषु चूर्णवत्।
माषिकं हिङ्गु सिन्धूत्थ-जरणाद्यास्तु शाणिकाः॥ १४७ ॥

---

क्षुद्रेत्यादि।—क्षुद्रा कण्टकारी॥ १४२॥

दशमूलीत्यादि।—रसः क्वाथः। अविपाके दोषाणामपाके; तेन पाचनत्वमस्य॥ १४३॥

मुस्तमित्यादि।—क्वाथेन॥ १४४॥

दार्व्वित्यादि।—पूतीको नाटाकरञ्जः इति निश्चलः; किन्तु भूतीक इति पाठो बहुपुस्तकेषु दृश्यते, स च टीकायां न व्याख्यातः; भूतीकश्च यमानी॥ १४५।१४६॥

हिङ्गुक्षौद्रयोः प्रक्षेपार्थं परिभाषामाह, मात्रेत्यादि।—चूर्णवदिति—कर्षमित्यर्थः। उतमस्य पलं मात्रेति पक्षे इयं मात्रा ज्ञेया। माषिकं हिङ्ग्विति छेदः। आद्यशब्देन सैन्धव-सौवर्चल मरिचादयः॥ १४७॥

मुखशोषादौ मातुलुङ्गादिः ।—

मातुलुङ्गफलकेशरो घृतः सिन्धुजन्ममरिचान्वितो मुखे ।
हन्ति वातकफरोगमास्यगं शोषमाशु जड़तामरोचकम् ॥ १४८॥

## सन्निपातज्वरचिकित्सा ।

चिकित्सासूत्रम् ।—

लङ्घनं वालुकास्वेदो नस्यं निष्ठीवनं तथा ।
अवलेहोऽञ्जनञ्चैव प्राक् प्रयोज्यं त्रिदोषजे ॥ १४९ ॥

चिकित्साक्रमः ।—

सन्निपातज्वरे पूर्वं कुर्य्यादामकफापहम् ।
पश्चात् श्लेष्मणि सङ्क्षीणे शमयेत् पित्तमारुतौ ॥ १५० ॥

---

मातुलुङ्गेत्यादि ।—सिन्धुजन्म सैन्धवम् ॥ १४८ ॥

सन्निपातज्वरचिकित्सामाह, लङ्घनमित्यादि ।—यद्यपि सन्निपातज्वरस्त्रिदोषारब्धः, तथाऽपि आमाशयस्य कफस्थानत्वात् स्थानित्वेन च कफ एव बली; अतस्तत्प्रत्यनीकचिकित्सा प्रथमतो विधेया; अतः कफप्रत्यनीकमेव लङ्घनादिकं प्रथमं कर्त्तव्यम् इत्याह, लङ्घनमित्यादि; अत एवोक्तमन्यत्र—"श्लेष्माणमादावेवादौ कुर्य्यात् व्याधौ त्रिदोषजे" इति; यत पुनस्तन्त्रान्तरे—"शमयेत् पित्तमेवादौ ज्वरेषु समवायिषु। दुर्निवारतमं तद्धि ज्वरार्त्तेषु विशेषतः ॥" तथा—"वातस्थान् जयेत् पित्तं पित्तस्थान् जयेत् कफम्। त्रयाणां वा जयेत् पूर्वं यो भवेद्बलवत्तमः ॥" इत्युक्तं, तत् पुनरवस्थाविशेषे बोध्यम्; तथा हि, सामज्वरे कफमेवादितः प्रतिकुर्य्यात्, आमपाकान्ते पित्तमेवादौ, चिरजे मारुतमेवादाविति; अत्रार्थे तन्त्रान्तरं—"ज्वरे त्रिदोषजे सामे शमयेत् कफमादितः। पाकान्तमागते पित्तं चिरजे विषमेऽनिलम् ॥" इति। अन्ये पुनः,—"वातस्थानु जयेत् पित्तम्" इत्यादिश्लोकमतीसारविषयतया वर्णयन्ति। ननु वातादीनां विभिन्नसञ्चयप्रकोपादीनां युगपदुपस्थानाभावात् कथं सम्भूय सान्निपातिकव्याध्यारम्भकत्वम्? अथ मन्यते, त्रिदोषकरनिदानवशेन प्रकोपादेर्युगपदुपस्थितिरिति, तदपि न मनोरमम्; यतस्तथाविधनिदानोपसेवनेऽपि दोषाणां विपरीतैर्गुणैः परस्परोपघातात् युगपत् प्रकोपस्य अनुपपत्तेः। अत्रोच्यते—न खलु दोषाणां निखिल एव गुणो विपरीतः, समानस्यापि कतिपयगुणस्य सद्भावात् समानेन हि गुणेन दोषाणामन्योऽन्यप्रकोपस्यापि सम्भवात्; तथा हि, रौक्ष्यलाघवादैर्वायुस्तैजसं पित्तं प्रकोपयति, पित्तमप्येवमेव वायुं, वायुरपि शैत्यात्

लङ्घनस्य सीमानिर्देशः।—

त्रिरात्रं पञ्चरात्रं वा दशरात्रमथापि वा।
लङ्घनं सन्निपातेषु कुर्य्याद्वाऽऽरोग्यदर्शनात् ॥ १५१ ॥

लङ्घनसहत्वे हेतुनिर्देशः।—

दोषाणामेव सा शक्तिर्लङ्घने या सहिष्णुता।
न हि दोषक्षये कश्चित् सहते लङ्घनादिकम् ॥ १५२ ॥

आर्द्रकादिनिष्ठीवनम्।—

आर्द्रकस्वरसोपेतं सैन्धवं कटुकत्रयम्।
आकण्ठं धारयेदास्ये निष्ठीवेच्च पुनः पुनः ॥ १५३ ॥
तेनास्य हृदयात् श्लेष्मा मन्यापार्श्वशिरोगलात्।
लीनोऽप्याकृष्यते शुष्को लाघवञ्चास्य जायते ॥ १५४ ॥
पर्वभेदोऽङ्गमर्दश्च मूर्च्छाकासगलामयाः।
मुखाक्षिगौरवं जाड्यमुत्क्लेशश्चोपशाम्यति ॥ १५५ ॥
सकृद्द्वित्रिचतुः कुर्य्यात् दृष्ट्वा दोषबलाबलम्।
एतद्धि परमं प्राहुर्भेषजं सन्निपातिनाम् ॥ १५६ ॥

---

कफं, कफोऽपि तथा वायुं, पित्तञ्च द्रवत्वेन कफं, कफोऽपि तथा पित्तमिति गुणसाम्यम्; न च वाच्यं, विपरीतस्तु गुणो भूयान् अल्पं समानगुणमभिभूय प्रशमयत्येव; कुतो न करोत्येव? यतो दूष्यापेक्षया त्रिदोषकरद्रव्यप्रभावाच्च दोषगुणा दूषयन्ति परं न शमयन्तीति; दृढबलश्चाह—"विरुद्धैरपि न त्वेते गुणैर्घ्नन्ति परस्परम्। दोषाः सहजसात्म्यत्वात् घोरं विषमहीनिव ॥" (च० चि० त्रिमर्मीय०) इति। अस्यार्थस्तु अस्मदीयचरकतत्त्वप्रदीपिकायामनुसन्धेयः ॥ १४९।१५० ॥

लङ्घनं सूचयित्वा दोषभेदेन तदवधिमाह, त्रिरात्रमित्यादि।—त्रिरात्रादि लङ्घनविधिविकल्पो यथाक्रममुल्बणवाताद्यपेक्षया ज्ञेयः। कुर्य्याद्वाऽऽरोग्यदर्शनादित्यभिधानं समवृद्धदोषत्रयापेक्षया बलसम्पत्तौ च ज्ञेयम् ॥ १५१ ॥

एतावन्तं कालं कथं लङ्घनं कर्त्तुं शक्यम्? इत्याशङ्क्याह, दोषाणामित्यादि।—"लङ्घनादिकम्" इत्यत्र आदिशब्दात् वालुकास्वेदादीनामपि ग्रहणम् ॥ १५२ ॥

निष्ठीवनमाह, आर्द्रकेत्यादि।—आर्द्रकस्वरसमुष्णं कृत्वा सैन्धवादिचूर्णमनुकर्षं दत्त्वा। निष्ठीवनमुपदिशन्ति वृद्धाः ॥ १५३—१५६ ॥

मातुलुङ्गादि नस्यम्।—

मातुलुङ्गार्द्रकरसं कोष्णं त्रिलवणान्वितम्।
अन्यद्वा सिद्धिविहितं तीक्ष्णं नस्यं प्रयोजयेत्॥ १५७॥
तेन प्रभिद्यते श्लेष्मा प्रभिन्नश्च प्रसिच्यते।
शिरोहृदयकण्ठास्य-पार्श्वरुक् चोपशाम्यति॥ १५८॥

मधूकसारादि नस्यम्।—

मधूकसारसिन्धूत्थ-वचोषणकणाः समाः।
श्लक्ष्णं पिष्टाऽम्भसा नस्यं कुर्य्यात् संज्ञाप्रबोधनम्॥ १५९॥

सैन्धवादि नस्यम्।—

सैन्धवं श्वेतमरिचं सर्षपं कुष्ठमेव च।
वस्तमूत्रेण पिष्टानि नस्यं तन्द्रानिवारणम्॥ १६०॥

शिरीषबीजाद्यञ्जनम्।—

शिरीषबीजगोमूत्र-कृष्णामरिचसैन्धवैः।
अञ्जनं स्यात् प्रबोधाय सरसोनशिलावचैः॥ १६१॥

अष्टाङ्गावलेहिका।—

कट्फलं पौष्करं शृङ्गी व्योषं यासश्च कारवी।
श्लक्ष्णचूर्णीकृतञ्चैतन्मधुना सह लेहयेत्॥ १६२॥

---

नस्यमाह, मातुलुङ्गेत्यादि।—लवणत्रयं सैन्धव-सौवर्चल-विड़म्। सिद्धिविहितमिति।—अस्य योगस्य भालुकितन्त्रोक्तत्वात् भालुकितन्त्रस्यैव सिद्धिस्थाने ज्ञेयम्॥१५७।१५८॥

मधूकसारेत्यादि।—मधूकं फलविशेषः, तस्य सारः फलास्थि। ऊषणं मरिचम्। अम्भसा कोष्णेन॥ १५९॥

सैन्धवमित्यादि।—श्वेतमरिचं शोभाञ्जनबीजम्॥ १६०॥

अञ्जनमाह,शिरीषेत्यादि।—शिला मनःशिला। सरसोनेत्यादिविशेषणादेको योगः, पृथक्पाठात् पृथक् योगोऽपि बोध्यः; यदुक्तमायुर्वेदसारे—"शुकाख्यबीजगोमूत्र-कणामरिचसैन्धवैः। शिलावचारसोनैर्वा अञ्जनं स्यात् प्रबोधनम्॥" इति॥ १६१॥

अवलेहमाह,कट्फलमित्यादि।—यासा दुरालभा। कारवी कृष्णजीरकम्। सान-

एषाऽवलेहिका हन्ति सन्निपातं सुदारुणम्।
हिक्कां श्वासञ्च कासञ्च कण्ठरोगं नियच्छति॥ १६३॥
ऊर्द्ध्वगश्लेष्महरणे उष्णे स्वेदादिकर्म्मणि।
विरोध्युष्णे मधु त्यक्त्वा कार्य्यैषाऽऽर्द्रकजै रसैः॥ १६४॥

---

पाते स्वेदस्य सर्वदा हितत्वेन अग्निसम्बन्धसमुद्भूतं देहस्य उष्णत्वं, मधु च उष्णे विरुध्यते, अतस्तत्र मधु त्यक्त्वा आर्द्रकस्वरसेनावलेहः कार्य्य इत्याह, ऊर्द्ध्वगेत्यादि।—एकमुष्णे इति पदं स्वेदादिविशेषणम्, अपरञ्चोपपत्त्यर्थम; यस्मात् उष्णविरोधि मधु ततो मधु त्यक्त्वा इत्यर्थः। ननु —"क्रियायास्तु गुणालाभे क्रियामन्यां प्रयोजयेत्। पूर्वस्यां शान्तवेगायां न क्रियासङ्करो हितः॥" (सू० ३५ अ०) इत्यनेन सुश्रुते क्रियासङ्करो निषिद्धः, तत् कथं नस्यनिष्ठीवनादीनां युगपदेव सन्निपातज्वरे विधानम्? अत्रोच्यते, क्रियासङ्करो ह्यनेकक्रियामेलकः, तस्य च दूषकत्वं न सङ्करत्वमात्रेण, किं तर्हि? अतिमात्रत्वेन अग्निमान्द्यजनकतया तथा परस्परगुणविरोधादुभयोरपि निष्फलतया च; एतद्दोषद्वयमन्तःपरिमार्जने एव सम्भवति, न पुनर्वहिःपरिमार्जने नस्यनिष्ठीवनादौ। एतदभिसन्धाय वृन्दोऽपि समाधानमुक्तवान्; यथा,—"क्रियाभिस्तुल्यरूपाभिः क्रियासाङ्कर्य्यमिष्यते। भिन्नरूपतया यास्तु ताः कुर्वन्ति न दूषणम॥" इति। तुल्यरूपता चात्रान्तःपरिमार्जनत्वेनैव ज्ञेया; तेनायमर्थः,—एकस्मिन् अन्तःपरिमार्जने उपयुक्ते यद्यपरमन्तःपरिमार्जनमुपयुज्यते, तेनैव क्रियासाङ्कर्य्यस्य उक्तरीत्या दूषकत्वं, न वहिःपरिमार्जने नस्यादाविति। कषायादिभेषजोपयोगानन्तरं पुनरवलेहादिदाने च यद्यपि क्रियासाङ्कर्य्यदोषो भवत्येव, तथाऽपि साध्याङ्गतया न विरोधः, तदङ्गता चानादिवृद्धव्यवहारात्, दोषानुपलम्भाच्च बोध्यम्; किं वा क्रियासाङ्कर्य्यस्य दोषस्याल्पतया कण्ठरोधादिबलवदपायप्रशमकतया च निषिद्धमप्यवलेहादिकमवस्थाविशेषे अङ्गीक्रियते; यथा पीतविषे बालादौ वमनम्। अन्ये तु कल्पनया तुल्यरूपतां व्याख्याय कषायावलेहयोर्युगपदुपयोगेऽपि कल्पनाभेदान्न साङ्कर्य्यमित्याहुः; तन्न, सुश्रुते अग्निमान्द्यादिहेतुत्वेन क्रियासङ्करमात्रस्यैव दोषत्वमुक्तम्; अत्र चातुल्यरूपता तुल्यरूपता वेति विशेषो नास्ति; केवलं वृन्देनैव कषायनस्यादीनां सन्निपाते युगपदुपयुज्यमानानामविरोधार्थं क्रियाभिस्तुल्यरूपाभिरिति वचनं निबद्धम्; तच्च क्रियाद्वयं कल्पनया तुल्यरूपमतुल्यरूपं वा भवतु, उभयथाऽप्यतिमात्रादिना अग्निमान्द्यादिहेतुतया निषिद्धमेव; तेनाभिन्नकल्पनात्मकेऽपि भेषजद्वये युगपद्युक्ते अतिमात्रत्वादिना अग्निमान्द्यादिहेतुत्वं दूषकतावीजमस्त्येवेति;

पञ्चमुष्टिकः।—

यवकोलकुलत्थानां मुद्गमूलकशुण्ठयोः।
एकैकमुष्टिमाहृत्य पचेदष्टगुणे जले ॥ १६५ ॥
पञ्चमुष्टिक इत्येष वातपित्तकफापहः।
शस्यते गुल्मशूले च श्वासे कासे क्षये ज्वरे ॥ १६६ ॥

चातुर्भद्रक-पञ्चमूलकम्।—

पञ्चमूलीकिराताद्दिर्गणो योज्यस्त्रिदोषजे।
पित्तोत्कटे च मधुना कणया च कफोत्कटे ॥ १६७ ॥

महत् पञ्चमूलम्।—

बिल्वश्योणाकगम्भारी-पाटलागणिकारिकाः।
दीपनं कफवातघ्नं पञ्चमूलमिदं महत् ॥ १६८ ॥

स्वल्पपञ्चमूलम्।—

शालपर्णीपृश्निपर्णी-बृहतीद्वयगोक्षुरम्।
वातपित्तहरं वृष्यं कनीयः पञ्चमूलकम् ॥ १६९ ॥

---

तस्मात् अन्तःपरिमार्जनत्वेनैव तुल्यरूपत्वं, बहिःपरिमार्जने च भिन्नरूपत्वं व्याख्याय कषायनस्याञ्जनादिषु क्रियासाहर्य्यदोषत्वं परिहरणीयम् ॥ १६२—१६४ ॥

यवेत्यादि।—प्रत्येकं यवादीनां मुष्टिमत्तर्नखं, न तु पलं द्रव्यबाहुल्यात्; अयमेव पक्षः प्रचारी। एकैकं द्रव्यमाहृत्य समुदितानामेषां मिलित्वा पलमानं पचेदित्यन्ये। चक्रः पुनर्यवादीनामाहारद्रव्यत्वात् प्रत्येकं पलमानत्वेऽपि न दोष इत्याह। अस्यैव योगस्य धान्यशुण्ठीयोगात् सप्तमुष्टिक इत्यपि नाम; यदुक्तं,—"यवकोल-कुलत्थैश्च मुद्गमूलकशुण्ठकैः। धन्याकबिम्बसंयुक्तैर्यूषः स्यात् सप्तमुष्टिकः॥" ॥१६५।१६६॥

पञ्चमूलीत्यादि।—वातपित्तोत्कनवाङ्गयोग एवायम्। अत्र पुनर्मधुयोगात् पित्तोल्बणत्रिदोषहन्तृत्वं, पिप्पलीयोगाच्च कफोल्बणत्रिदोषहन्तृत्वमस्य ज्ञेयम्। अत्र कनीयस्या एव पञ्चमूल्या व्यवहारः। अन्ये पुनः श्लेष्मोल्बणे महतीं पञ्चमूलीमाहुः ॥१६७॥

दशमूलस्य उक्तत्वादुक्तव्याख्यानानुरोधाच्च पञ्चमूलद्वयमाह, बिल्वेत्यादि।—महातरुसम्भवत्वात् बिल्वादिपञ्चमूलस्य महत्त्वं, स्वल्पतरुसम्भवत्वाच्च शालपर्ण्यादीना-

दशमूलम्।—

उभयं दशमूलन्तु सन्निपातज्वरापहम्।
कासे श्वासे च तन्द्रायां पार्श्वशूले च शस्यते॥
पिप्पलीचूर्णसंयुक्तं कण्ठहृद्ग्रहनाशनम्॥ १७०॥

चतुर्दशाङ्गः।—

चिरज्वरे वातकफोल्वणे वा त्रिदोषजे वा दशमूलमिश्रः।
किराततिक्तादिगणः प्रयोज्यः शुद्ध्यर्थिने वा त्रिवृता विमिश्रः॥१७१॥

वातश्लेष्महरोऽष्टादशाङ्गः।—

दशमूली शटी शृङ्गी पौष्करं सदुरालभम्।
भार्गी कुटजवीजञ्च पटोलं कटुरोहिणी॥ १७२॥
अष्टादशाङ्ग इत्येष सन्निपातज्वरापहः।
कासहृद्ग्रहपार्श्वार्त्ति-श्वासहिक्कावमीहरः॥ १७३॥

पित्तश्लेष्महरोऽष्टादशाङ्गः।—

भूनिम्बदारुदशमूलमहौषधाब्द-
तिक्तेन्द्रवीजधनिकेभकणाकषायः।
तन्द्रीप्रलापकसनारुचिदाहमोह-
श्वासादियुक्तमखिलं ज्वरमाशु हन्ति॥ १७४॥

मुस्तादी गणः।—

मुस्तपर्पटकोशीर-देवदारुमहौषधम्।

---

मत्वलं ज्ञेयम्। सुश्रुते तु गोक्षुरस्थाने एरण्डमूलं पठ्यते, चरके तु गोक्षुर इति; तेन सुश्रुतप्रयोगेषु एरण्डमूलेन, चरकादिप्रयोगेषु गोक्षुरेणैव व्यवहार इति। आश्लि-ष्टोवादावप्येरण्डमूलेनैवेति॥ १६८—१७०॥

चिरज्वरे इत्यादि।—वातकफोल्वणे इत्युभयत्रापि सम्बध्यते। शुद्ध्यर्थिने वा त्रिवृता विमिश्र इति—मलविबन्धे सति शोधनार्थं त्रिवृतुरत्रिवृच्चूर्णमाषकाणां प्रक्षेप इत्याहुः॥ १७१॥

दशमूलीत्यादि।—स्पष्टम्॥ १७२।१७३॥

भूनिम्बेत्यादि।—इन्द्रवीजम् इन्द्रयवः॥ १७४॥

त्रिफला धन्वयासञ्च नीली कम्पिल्लकं त्रिवृत् ॥ १७५ ॥
किराततिक्तकं पाठा बला कटुकरोहिणी ।
मधुकं पिप्पलीमूलं मुस्ताद्यो गण उच्यते ॥ १७६ ॥
अष्टादशाङ्गमुदितमेतद्वा सन्निपातनुत् ।
पित्तोत्तरे सन्निपाते हितञ्चोक्तं मनीषिभिः ॥
मन्यास्तम्भे उरोघाते उरःपार्श्वशिरोग्रहे ॥ १७७ ॥

शव्यादिः गणः ।—

शटी पुष्करमूलञ्च व्याघ्री शृङ्गी दुरालभा ।
गुडूची नागरं पाठा किरातं कटुरोहिणी ॥ १७८ ॥
एष शव्यादिको वर्गः सन्निपातज्वरापहः ।
कासहृद्ग्रहपार्श्वार्त्ति-श्वासे तन्द्रायाञ्च शस्यते ॥ १७९ ॥

बृहत्यादिः गणः ।—

बृहत्यौ पुष्करं भार्गी शटी शृङ्गी दुरालभा ।
वत्सकस्य च वीजानि पटोलं कटुरोहिणी ॥ १८० ॥
बृहत्यादिर्गणः प्रोक्तः सन्निपातज्वरापहः ।
कासादिषु च सर्वेषु देयः सोपद्रवेषु च ॥ १८१ ॥

भार्ग्यादिः ।—

भार्गीं पुष्करमूलञ्च रास्नां विल्वं यमानिकाम् ।
नागरं दशमूलञ्च पिप्पलीञ्चाप्सु साधयेत् ॥ १८२ ॥

---

मुस्तेत्यादि ।—नीली नीलबुह्ना । कम्पिल्लकं गुण्डारोचनी । बलास्थाने वचेति न पाठः, आयुर्वेदसारादौ बलापाठात् ॥ १७५—१७७ ॥

शटीत्यादि ।—किरातस्थाने केचित पटोलं पठन्ति, तन्न; हारीत-चतुर्वर्ग-चन्द्राट-विदेहेषु किरातस्यैव पाठादिति ॥ १७८।१७९ ॥

बृहत्यावित्यादि ।—कासादिष्वित्यत्र आदिशब्दग्रहणात् शव्याद्युक्तहृद्ग्रहादीनां ग्रहणम्; चरकेऽपि शव्यादनन्तरमस्य योगस्य पाठात् ॥ १८०।१८१ ॥

भार्गीमित्यादि भेलस्य ।—विल्वं विल्वमूलं, यौगिकमसत्यकत्वात् । दश

सन्निपातज्वरे देयं हृत्पार्श्वानाहशूलिनाम्।
कासश्वासाग्निमन्दत्वं तन्द्रीञ्च विनिवर्त्तयेत्॥ १८३॥

द्वितीयचतुर्दशाङ्गः।—

द्विपञ्चमूली षड्ग्रन्था विश्वम्भघ्ननखीद्वयम्।
कफवातहरः क्वाथः सन्निपातहरः परः॥ १८४॥

### अभिन्यासज्वरचिकित्सा।

कारव्यादिः।—

कारवीपुष्करैरण्ड-त्रायन्तीनागरामृताः।
दशमूलीशटीशृङ्गी-यासभार्गीपुनर्नवाः॥ १८५॥
तुल्या मूत्रेण निष्क्वाथ्य पीताः स्रोतोविशोधनाः।
अभिन्यासज्वरं घोरमाशु घ्नन्ति समुद्धतम्॥ १८६॥

मातुलुङ्गादिः।—

मातुलुङ्गाश्मभिद्बिल्व-व्याघ्रीपाठोरुबूकजः।
क्वाथो लवणमूत्राढ्योऽभिन्यासानाहशूलनुत्॥ १८७॥

अभिन्यासस्य लक्षणम्।—

निद्रोपेतमभिन्यासं चीणं विद्याद्धतौजसम्॥ १८८॥

---

मूलञ्चेति पाठपक्षेऽपि भागद्वयं तस्य ग्राह्यं, किन्तु भेले "नागरञ्च मृणालञ्च पिप्पलीञ्च" इति पाठो दृश्यते ; एवं चन्द्राटेऽपि, अत एकभागस्तस्येति युक्तम्॥ १८२।१८३॥

द्विपञ्चमूलीत्यादि।—द्विपञ्चमूली दशमूली। षड्ग्रन्था वचा। रटघ्ननखीद्वयं कालाकड़ा-गुड़काँउलीभेदात्, रक्तश्वेतपुष्पभेदाद्वा॥ १८४॥

सन्निपातज्वरभेदस्याभिन्यासस्य चिकित्सामाह, कारवीत्यादि।—कारवी कृष्ण-जीरकम्। त्रायन्ती त्रायमाणा। मूत्रेण गोमूत्रेण॥ १८५।१८६॥

मातुलुङ्गेत्यादि।—अश्मभित् पाषाणभेदी। बिल्वस्य मूलम्। लवणं सैन्धवम्। मूत्रं गोमूत्रम्। गोमूत्रसैन्धवे प्रक्षिप्य क्वाथः पेयः। गतप्रयोगदर्शनात् गोमूत्रेण क्वाथः प्रक्षेपञ्च लवणमित्येके॥ १८७॥

रुग्विनिश्चये अभिन्यासलक्षणस्य अनुक्तत्वात् तल्लक्षणमिहैवाह, निद्रोपेतमित्यादि।—सन्निपातज्वरमेव निद्रोपेतमभिन्यासं विद्यात्। क्षीणं विद्याद्धतौजसमिति—

दशमूलीक्काथः।—

कण्ठरोधकफश्वास-हिक्कामन्यासपीड़ितः।
मातुलुङ्गार्द्रकरसं दशमूल्यम्भसा पिबेत् ॥ १८९ ॥

व्योषादिः।—

व्योषाब्दत्रिफलातिक्ता-पटोलारिष्टवासकैः।
सभूनिम्बामृतायामैस्त्रिदोषज्वरनुज्जलम् ॥ १९० ॥

विश्वादिः।—

विश्वविशालात्रिफला-कटुकारग्वधैः कृतः।
सक्षारो भेदनः क्काथः पेयः सर्वज्वरापहः ॥ १९१ ॥

स्वेदाधिक्ये कुलत्थोद्धूलनम्।—

स्वेदोद्गमे ज्वरे देयश्चूर्णो भृष्टकुलत्थजः ॥ १९२ ॥

जिह्वाजाड्ये सैन्धवाद्युद्धूलनम्।—

घर्षेज्जिह्वां जड़ां सिन्धु-त्रूषणैः साम्लवेतसैः ॥ १९३ ॥

जिह्वाशुष्कतायां द्राक्षालेपः।—

उच्छुष्कां स्फुटितां जिह्वां द्राक्षया मधुपिष्टया।
लेपयेत् सघृतश्चास्यं सन्निपातात्मके ज्वरे ॥ १९४ ॥

निद्राजनने काकजङ्घाजटा।—

काकजङ्घाजटा निद्रां जनयेच्छिरसि स्थिता ॥ १९५ ॥

---

क्षीणमिति क्षीणधातुगतम्; अभिन्यासज्वरमेव सन्निपातज्वरमेव क्षीणधातुगतं हतौजसं विद्यात्; उक्तं सुश्रुते—"अभिन्यासन्तु तं प्राहुर्हतौजसमथापरे। सन्निपातज्वरं कृच्छ्रमसाध्यमपरे जगुः॥" (उ० ३९ अ०) इति ॥ १८८ ॥

कण्ठरोधेत्यादि।—दशमूलक्काथमेव मातुलुङ्गार्द्रकरसे प्रक्षिप्य पिबेदित्यर्थः ॥ १८९॥

व्योषेत्यादि।—अरिष्टो निम्बः, तस्य त्वक्। जलं क्काथः ॥ १९० ॥

विश्वादित्यादि।—विशाला गोरक्षकर्कटी। यवक्षारः प्रक्षेप्यः ॥ १९१ ॥

स्वेदोद्गमे इत्यादि।—स्वेदोद्गमे इत्यादि सन्निपातात्मके ज्वरे इत्यन्तं स्पष्टम् ॥ १९२—१९४ ॥

काकजङ्घेत्यादि।—जटा मूलम् ॥ १९५ ॥

सन्निपाते बृंहणादिनिषेधः ।—

सन्निपाते प्रकम्पन्तं प्रलपन्तं न बृंहयेत् ।
तृष्णादाहाभिभूतेऽपि न दद्याच्छीतलं जलम् ॥ १९६ ॥

कर्णमूलशोथस्य कष्टसाध्यता ।—

सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः ।
शोथः सञ्जायते तेन कश्चिदेव प्रमुच्यते ॥ १९७ ॥

कर्णमूलशोथस्य चिकित्साविधिः ।—

रक्तावसेचनैः पूर्वं सर्पिःपानैश्च तं जयेत् ।
प्रदेहैः कफपित्तघ्नैर्वमनैः कवलग्रहैः ॥ १९८ ॥

कर्णमूलशोथे गैरिकादिलेपः ।—

गैरिकं पांशुजं शुण्ठी-वचाकटुककाञ्जिकैः ।
कर्णशोथहरो लेपः सन्निपातज्वरे भृशम् ॥ १९९ ॥

कर्णमूलशोथे कुलत्थादिलेपः ।—

कुलत्थकट्फले शुण्ठी कारवी च समांशिकैः ।
सुखोष्णैर्लेपनं कार्य्यं कर्णमूले मुहुर्मुहुः ॥ २०० ॥

## जीर्णज्वरचिकित्सा ।

निदिग्धिकादिः ।—

निदिग्धिकानागरकामृतानां क्वाथं पिबेन्मिश्रितपिप्पलीकम् ।
जीर्णज्वरारोचककासशूल-श्वासाग्निमान्द्यार्दितपीनसेषु ॥ २०१ ॥

---

सन्निपाते इत्यादि ।—स्पष्टम् ॥ १९६ ॥

सन्निपातेति ।—सन्निपातज्वरस्यान्ते शेषे सन्निपातज्वरे गते वा इत्यर्थः ॥१९७॥

रक्तेति ।—रक्तावसेचनैरिति बहुवचनात् रक्तावसेचनं नैरन्तर्य्येण बोध्यम् ; अतुकर्णे—“अश्वद्रक्तस्य मोक्षणम्” इत्युक्तत्वात् । सर्पिश्च पञ्चतिक्तविफलाघृतादि । चकारात् वातकफघ्नलेहोऽपि बोध्यः ; यदुक्तं तत्रैव—“लेहाश्च कफवातघ्नाः कार्य्याः स्कन्धग्रहाः । त्रिफलाघृतपानं वा बलं ज्ञात्वा समाचरेत् ॥” इति ॥ १९८।१९९ ॥

कुलत्थेति ।—स्पष्टम् । दशमूलेनापि सुखोष्णेनात्र लेपमुपदिशन्ति ॥ २०० ॥

जीर्णज्वरचिकित्सामाह, निदिग्धिकेत्यादि ।—निदिग्धिका कण्टकारी । वातकफे क्रियते ; पित्तानुबन्धे पिप्पलीं त्यक्त्वा मधु प्रतिपदन्ति वृद्धाः । पिप्पलीचूर्णस्य माषकद्वयं प्रक्षेप्यं प्रचारादिति कश्चित् । पुराणप्रतिश्यायेऽप्ययं योगो दृष्टफलः ॥ २०१ ॥

निदिग्धिकादेः प्रयोगकालः।—

हन्त्यूर्द्ध्वगामयं प्रायः सायं तेनोपयुज्यते ॥ २०२ ॥

गुडूचीक्वाथः पञ्चमूलीक्वाथश्च।—

पिप्पलीचूर्णसंयुक्तः क्वाथश्छिन्नरुहोद्भवः।
जीर्णज्वरकफध्वंसी पञ्चमूलीकृतोऽथवा ॥ २०३ ॥

गुड़पिप्पली।—

कासाजीर्णारुचिश्वास-हृत्पाण्डुक्रिमिरोगनुत्।
जीर्णज्वरेऽग्निसादे च शस्यते गुड़पिप्पली ॥ २०४ ॥

## विषमज्वरचिकित्सा।

कलिङ्गकादि पञ्च क्वाथाः।—

कलिङ्गकाः पटोलस्य पत्रं कटुकरोहिणी।
पटोलं शारिवा मुस्तं पाठा कटुकरोहिणी ॥ २०५ ॥
निम्बं पटोलं त्रिफला मृद्वीका मुस्तवत्सकौ।
किराततिक्तममृता चन्दनं विश्वभेषजम् ॥ २०६ ॥
गुडूच्यामलकं मुस्तमर्द्धश्लोकसमापनाः।

---

अस्यैव योगस्य सोपपत्तिकं वैद्यव्यवहारसिद्धमुपयोगकालमाह, हन्तीत्यादि।—किन्तु विन्दुसारे प्रातःसमयेऽप्युक्तः; यथा—"श्वासकासविनाशाय मन्दाग्नेर्दीपनाय च। अरुचेश्च निवृत्त्यर्थं प्रातरुत्थाय तं पिबेत्॥" इति। तथा वृन्दोऽप्याह—"तच्च रात्रिज्वरे सायमन्यत्र प्रातरिष्यते" इति ॥ २०२ ॥

पिप्पलीत्यादि।—छिन्नरुहा गुडूची। पञ्चमूली च महती। योगद्वयेऽपि पिप्पलीचूर्णप्रक्षेपः; पित्तानुबन्धे मधु उपदिशन्ति वृद्धाः। इदञ्च योगद्वयं प्रायः सायमुपयुज्यते ॥२०३ ॥

कासेत्यादि।—गुड़पिप्पल्योः प्रत्येकं माषकत्रयेण व्यवहरन्ति वृद्धाः ॥ २०४ ॥

विषमज्वरचिकित्सामाह, कलिङ्गका इत्यादि वाग्भटस्य।—एते पञ्च योगाः पञ्चसु सन्तत-सततान्येद्युष्क-तृतीयक-चतुर्थकेषु यथासङ्ख्यं ज्ञेयाः। अन्ये तु सर्व एव योगाः सर्वत्र इत्याहुः; तत्र यथासङ्ख्यमेव युक्तम्; सततोल्लेखेन पटोलादि-योगस्य, तथा निम्बादेश्चान्येद्युष्कोल्लेखेन, गुडूच्यादेश्च चतुर्थकोल्लेखेन चारपाणौ दृष्टत्वात्। "सन्ततं सततान्येद्युस्तृतीयक-चतुर्थकान्" इति पाठस्तु वाग्भटे

कषायाः शमयन्त्याशु पञ्च पञ्चविधान् ज्वरान् ॥
सन्ततं सततान्येद्युस्तृतीयकचतुर्थकान् ॥ २०७ ॥

त्रिफलाक्वाथः।—

गुड़प्रगाढ़ां त्रिफलां पिबेद्वा विषमार्दितः ॥ २०८ ॥

मुष्टियोगः।—

दीर्घपत्रककर्णाख्य-नेत्रं खदिरसंयुतम्।
ताम्बूलैस्तद्दिने भुक्तं प्रातर्विषमनाशनम् ॥ २०९ ॥

गुडूच्यादिः।—

गुड़ूचीमुस्तधात्रीणां कषायं वा समाक्षिकम् ॥ २१० ॥

मुस्तादिः।—

मुस्तामलकगुड़ूचीविश्वौषधकण्टकारिकाक्वाथः।
पीतः सकणाचूर्णः समधुर्विषमज्वरं हन्ति ॥ २११ ॥

तृतीयके महौषधादिः।—

महौषधामृतामुस्त-चन्दनोशीरधान्यकैः।
क्वाथस्तृतीयकं हन्ति शर्करामधुयोजितः ॥ २१२ ॥

चतुर्थके वासादिः।—

वासाधात्रीस्थिरादारु-पथ्यानागरसाधितः।

---

चरके च नास्ति, वृन्देऽपि नास्ति, तेनायमर्द्धश्लोकः सङ्ग्रहे केनापि प्रमादात् लिखितः ॥ २०५—२०७ ॥

गुड़प्रगाढ़ामित्यादि सुश्रुतस्य।—त्रिफलामित्यत्र क्वथितामिति शेष इति डल्लनः। गुड़ोऽत्र प्रक्षेप्यः ॥ २०८ ॥

दीर्घपत्रकेत्यादि।—कर्णाख्यः काणाखोड़ इति ख्यातः, तस्य विशेषणं दीर्घपत्रेति। नेत्रं मूलं, तदपि शुष्कदेशजातं ग्राह्यमुपदिशन्ति वृद्धाः ॥ २०९ ॥

गुड़ूचीत्यादि सुश्रुतस्य।—अयं योगो यद्यपि पूर्वं चतुर्थके पठितः, तथाऽपि मधुयोगात् विषमज्वरमात्रहन्तृत्वमप्यस्य बोध्यम्। डल्लनस्तु यद्यपि योगोऽयं विषमज्वरे पठितः तथाऽपि समानतन्त्रोक्तत्वात् विषमज्वरविशेषे चतुर्थके एवायं बोध्य इत्याह ॥२१०॥

मुस्तेत्यादि।—मुस्तादिमहौषधादौ स्पष्टौ ॥ २११।२१२ ॥

सितामधुयुतः क्वाथश्चतुर्थकनिवारणः ॥ २१३ ॥

शेफालीस्वरसः ।—

मधुना सर्व्वज्वरनुत् शेफालीदलजो रसः ॥ २१४ ॥

गुडाजाजीप्रयोगः ।—

अजाजी गुड़संयुक्ता विषमज्वरनाशिनी ।
अग्निसादं जयेत् सम्यक् वातरोगांश्च नाशयेत् ॥ २१५ ॥

रसोनकल्कः ।—

रसोनकल्कं तिलतैलमिश्रं योऽश्नाति नित्यं विषमज्वरार्त्तः ।
विमुच्यते सोऽप्यचिराज्ज्वरेण वातामयैश्चापि सुघोररूपैः ॥२१६॥

औषधचतुष्टयस्य प्रयोगोपदेशः ।—

प्रातः प्रातः ससर्पिर्वा रसोनमुपयोजयेत् ।
पिप्पलीवर्द्धमानं वा पिबेत् क्षीररसाशनः ॥
षट्पलं वा पिबेत् सर्पिः पथ्यां वा मधुना लिहेत् ॥२१७॥

सुष्टियोगः ।—

पयस्तैलं घृतञ्चैव विदारीक्षुरसं मधु ।
सम्मर्च्छ्य पाययेदेतत् विषमज्वरनाशनम् ॥ २१८ ॥

सुष्टियोगः ।—

पिप्पली शर्करा क्षौद्रं घृतं क्षीरं यथाबलम् ।

---

वासेत्यादि ।—वासादौ वासास्थाने चन्द्राटे पाठः पठ्यते ; व्यवहारस्तु वासयैव । स्थिरा शालपर्णी । पथ्या हरीतकी ॥ २१२ ॥

मधुनेत्यादि ।—सर्व्वज्वरनुत् विषमाविषमज्वरनुत् ॥ २१४ ॥

अजाजीत्यादि ।—मनाक् भृष्टं कृष्णजीरकमिति चक्रः, सितजीरकमित्यन्ये ॥२१५॥

रसोनकल्कमित्यादि ।—भक्तात् पूर्व्वं कर्त्तव्यम् ; यदाह चरकः,—"रसोनस्य सतैलस्य प्राग्भक्तमुपसेवनम्" ( चि० ज्व० ) इति ॥ २१६ ॥

प्रातरित्यादि ।—पिप्पलीत्यादियोगौ सौश्रुतौ । षट्पलं सर्पिरत्रैव वक्ष्यमाणम् ॥२१७॥

पय इत्यादि ।—दुग्धं घृतं बोध्यम । विदारीक्षुरसमिति इक्षुरसस्थाने स्वरस इति न पाठः ; उक्तं हि हारीते—"विदारीक्षुरसः सर्पिर्मधु तैलं घृतं पयः । पिबेच्चतुर्थकश्वास-कासवातज्वरापहम् ॥" ( ३ स्था० २ अ० ) इति । अन्ये तु विदारीस्वरसो विषमज्वरनाशे ; चतुर्थके इक्षुरसात् योगान्तरमाहुः ॥ २१८ ॥

खजेन मथितं पेयं विषमज्वरनाशनम् ॥ २१९ ॥

मुष्टिप्रयोगौ।—

पयसा वृषदंशस्य शकृद्वेगागमे पिबेत्।
वृषस्य दधिमण्डेन सुरया वा ससैन्धवम् ॥ २२० ॥

नीलिन्यादि:।—

नीलिनीमजगन्धाञ्च त्रिवृतां कटुरोहिणीम्।
पिबेज्ज्वरस्यागमने स्नेहस्वेदोपपादित: ॥ २२१ ॥

सुरामांसयो: प्रयोगोपदेश:।—

सुरां समण्डां पानार्थे भक्ष्यार्थे चरणायुधान्।
तित्तिरींश्च मयूरांश्च प्रयुञ्ज्याद्विषमज्वरे ॥ २२२ ॥

चातुर्थके पेया।—

अक्षोटजसहस्रेण दलेन सुकृतां पिबेत्।
पेयां घृतप्लुतां जन्तुश्चातुर्थकहरां नरः ॥ २२३ ॥

सैन्धवाद्यञ्जनम्।—

सैन्धवं पिप्पलीनाञ्च तण्डुला: समन:शिला:।
नेत्राञ्जनं तैलपिष्टं विषमज्वरनाशनम् ॥ २२४ ॥

व्याघ्रीवसादिनस्यम्।—

व्याघ्रीवसा हिङ्गुसमा नस्यं तद्वत् ससैन्धवा ॥ २२५ ॥

---

[मुष्टी]त्यादि।—दुग्धं घृतं बोध्यम् ॥ २१९ ॥

पयसेत्यादि।—वृषदंशो विडाल:। वृषस्यापि शकृदित्यर्थ: ॥ २२० ॥

विषमज्वरे विशेषार्थमाह, नीलिनीत्यादि।—नीलिनी नीलबुह्ना। आगमने आगमनदिवसे ॥ २२१ ॥

सुरामित्यादि चरकस्य।—स्पष्टम् ॥ २२२ ॥

अक्षोटजेत्यादि।—अक्षोटजस्याक्षेरी ॥ २२३ ॥

सैन्धवमित्यादि चरकस्य।—अञ्जनशब्द: अभ्यञ्जनेऽपि वर्त्तते, तन्निरासाय नेत्रपदम् ॥ २२४ ॥

व्याघ्रीत्यादि।—व्याघ्रीति स्त्रीलिङ्गनिर्देशात् लिङ्गमेव प्रयोजकं न तु जाति: ॥२२५॥

चातुर्थके गुग्गुल्वादिधूपः ।—

कृष्णाम्बरदृढ़ाबद्ध-गुग्गुलूलूकपुच्छजः ।
धूपश्चातुर्थकं हन्ति तमः सूर्य्य इवोदितः ॥ २२६ ॥

चातुर्थके शिरीषपुष्पस्वरसादि नस्यम् ।—

शिरीषपुष्पस्वरसो रजनीद्वयसंयुतः ।
नस्यं सर्पिःसमायोगाच्चातुर्थकज्वरं जयेत् ॥ २२७ ॥

चातुर्थके अगस्त्यरसस्य नस्यम् ।—

नस्यं चातुर्थकं हन्ति रसो वाऽगस्त्यपत्रजः ॥ २२८ ॥

अष्टाङ्गधूपः ।—

पलङ्कषा निम्बपत्रं वचा कुष्ठं हरीतकी ।
सर्षपाः सयवाः सर्पिर्धूपनं ज्वरनाशनम् ॥ २२९ ॥

अपराजिताधूपः ।—

पुरध्यामवचासर्ज-निम्बार्कागुरुदारुभिः ।
सर्वज्वरहरो धूपः कार्य्योऽयमपराजितः ॥ २३० ॥

कम्पज्वरे धूपः ।—

वैड़ालं वा शकृत् योज्यं वेपमानस्य धूपने ॥ २३१ ॥

तृतीयके अपामार्गमूलधारणम् ।—

अपामार्गजटा कट्यां लोहितैः सप्ततन्तुभिः ।
बद्ध्वा वारे रवेस्तूर्णं ज्वरं हन्ति तृतीयकम् ॥ २३२ ॥

---

कृष्णाम्बरेत्यादि ।—अम्बरस्य कृष्णत्वं भृङ्गराजस्वरसादिभिः । उलूकः पेचकः ॥२२६॥

नस्यमाह, शिरीषेत्यादि ।—रजनीद्वयचूर्णं सर्पिश्च प्रक्षेप्यम् ॥ २२७ ॥

नस्यमित्यादि ।—अगस्त्यपत्रं वकसेनपत्रम् ॥ २२८ ॥

पलङ्कषेत्यादि ।—पलङ्कषा गुग्गुलुः ॥ २२९ ॥

पुरेत्यादि ।—पुरो गुग्गुलुः । ध्यामं गन्धतृणम् ॥ २३० ॥

वैड़ालमित्यादि ।—स्पष्टम् ॥ २३१ ॥

अपामार्गेत्यादि ।—अपामार्गस्य जटा मूलम् । पृष्ठे पादं दत्त्वा बन्धः कार्य्य इत्याहुः ; बन्धनविधिरायुर्वेदसारे यथा—"अपामार्गस्य मूलञ्च सम्यगक्षालिताननः । बध्नीयात् वामहस्तेन सर्वज्वरविमोचणम् ॥ २३२ ॥

ऐकाहिके विविधमूलधारणम्।—

काकजङ्घा बला श्यामा ब्रह्मदण्डी कृताञ्जलिः।
पृश्निपर्णी त्वपामार्गस्तथा भृङ्गरजोऽष्टमः॥ २३३॥
एषामन्यतमं मूलं पुष्येणोद्धृत्य यत्नतः।
रक्तसूत्रेण संवेष्ट्य बद्धमैकाहिकं जयेत्॥ २३४॥

जयन्तीमूलधारणम्।—

मूलं जयन्त्याः शिरसा धृतं सर्वज्वरापहम्॥ २३५॥

तृतीयकचतुर्थकयोः साधारणचिकित्साविधानम्।—

कर्म साधारणं जह्यात् तृतीयक-चतुर्थकौ।
आगन्तुरनुबन्धो हि प्रायशो विषमज्वरे॥ २३६॥

---

काकजङ्घेत्यादि।—काकजङ्घा स्वनामख्याता। श्यामा वृद्धदारकः। ब्रह्मदण्डी ब्रह्मयष्टिका। कृताञ्जलिः लाजालिया॥ २३३।२३४॥

मूलमित्यादि।—जयन्त्याः श्वेताया इत्याहुः, भूजयन्त्या इत्यन्ये॥ २३५॥

भूतानुबन्धिनोस्तृतीयक-चतुर्थकयोश्चिकित्सामाह, कर्मेत्यादि।—दैवव्यपाश्रयं बलि-मङ्गलादि, युक्तिव्यपाश्रयञ्च कषायादि, एतदुभयमपि चिकित्सितं साधारणशब्देनावोच्यते। जह्यादिति अन्तर्भूतण्यर्थमिदं, तेन साधारणं चिकित्सितं तृतीयक-चतुर्थकौ कर्मकृपौ जह्यात हापयेत्, निराकुर्यादित्यर्थः। ननु ज्वरान्तरे सर्वत्र युक्तिव्यपाश्रयं कषायादिकमेवोपदिष्टं, न दैवव्यपाश्रयम्, अत्र पुनः किमर्थं दैव-व्यपाश्रयमपि कर्त्तव्यत्वेन उपदिश्यते? इत्याह, आगन्तुरित्यादि—आगन्तुर्भूतादिः। विषमज्वरशब्देन तृतीयक-चतुर्थकावेवाभिमतौ; तृतीयक-चतुर्थकशब्देनाव तद्विपर्य्ययस्यापि ग्रहणम्। अन्ये तु यद्यप्यागन्तुरनुबन्धो हि इत्यादिवचनबलात् विषमज्वरमात्रे एव दैवव्यपाश्रयं कर्म कर्त्तव्यमित्यायाति, तथाऽपि तृतीयक-चतुर्थकाविति यदुक्तं तत् विशेषार्थम्; तेन तृतीयक-चतुर्थकयोः प्रायेण भूतानुबन्धजन्यत्वात् तयोरेव विशेषेण दैवव्यपाश्रयं कर्म कर्त्तव्यमित्याहुः। अन्ये तु साधारणशब्देन दोषमात्रसाधारणं युक्तिव्यपाश्रयमात्रं कर्मोच्यते; जह्यादित्यस्य त्यजतीत्यर्थः, तेन तृतीयक-चतुर्थके युक्तिव्यपाश्रयमात्रं न कार्य्यं, किन्तूभयमपि कार्य्यम्; एवञ्चागन्तुरनुबन्धो हीत्यादि द्वितीयार्द्धमपि सङ्गच्छते इत्याहुः॥ २३६॥

तृतीयकचतुर्थकयोः दैवव्यपाश्रयचिकित्सा।—

"गङ्गाया उत्तरे कूले अपुत्रस्तापसो मृतः।
तस्मै तिलोदकं दद्यान्मुच्यत्यैकाहिको ज्वरः" ॥
एतन्मन्त्रेण चाश्वत्थ-पत्रहस्तः प्रतर्पयेत् ॥॥ २३७ ॥
सोमं सानुचरं देवं समातृगणमीश्वरम्।
पूजयन् प्रयतः शीघ्रं मुच्यते विषमज्वरात् ॥ २३८ ॥
विष्णुं सहस्रमूर्द्धानं चराचरपतिं विभुम्।
स्तुवन् नामसहस्रेण ज्वरान् सर्वान् व्यपोहति ॥ २३९ ॥

घृतप्रयोगस्य कालनिर्देशः।—

ज्वराः कषायैर्वमनैर्लङ्घनैर्लघुभोजनैः।
रूक्षस्य ये न शाम्यन्ति सर्पिस्तेषां भिषग्जितम् ॥२४०॥

घृतप्रयोगस्य अकालः।—

निर्दशाहमपि ज्ञात्वा कफोत्तरमलङ्घितम्।

---

गङ्गाया इत्यादि।—एकच्छायाः पुष्करिण्या अकाकवादिते पानीयं नूतनघट्या नेतव्यम्; उदिते च रवौ पाणिदिने तर्पणं कार्य्यम्। अत्र कुशा यवाः कुसुमानि च उत्स्विन्नमाषभक्तादिना बलिश्चेत्युपदिशन्ति वृद्धाः। अस्य मन्त्रस्य केचिदाद्यश्लोकं पठन्ति यथा—"अङ्ग बङ्ग-कलिङ्गेषु सौराष्ट्र-मगधेषु च। वाराणस्याश्च यत् वृत्तं तत्र भरसि ? हे ज्वर! ॥" इति। सोममित्यादि।—सोममित्युमया सहितम्। अनुचरैर्नन्द्यादिभिश्च सहितम्। विष्णुमित्यादि।—नामसहस्रेण महाभारताद्युक्तेन ॥ २३७—२३९ ॥

इदानीं घृतप्रयोगान् विवक्षुः घृतस्य कालं विषयञ्चाह, ज्वराः कषायैरित्यादि।—अत्र कषायैरित्यसमासनिर्देशेन व्यस्तैरपि कषायादिप्रयोगैः रूक्षस्य सर्पिःपानं कर्त्तव्यमिति दर्शयति। वमनैरित्यनेन अवस्थाविधेयवमनप्रयोगान् सर्पिःपक्षपूर्वभाविणो दर्शयति। लङ्घनैरित्यनेन च लङ्घनं स्वेदनं काल इत्याद्युक्ता लङ्घनसमानफलाः स्वेदादयोऽपि गृह्यन्ते। रूक्षस्येति वचनेन कषायादिप्रयोगे सत्यपि यद्यपि सामानुबन्धत्वात् कफोत्तरतया वा यत्र रूक्षत्वं न भवति, तत्र सर्पिर्न दातव्यमिति दर्शयति। भिषग्जितं चिकित्सितम् ॥ २४० ॥

दशाहादूर्द्ध्वं हि घृतपानावस्था चरकेणोक्ता, इदानीं तदपवादमाह, निर्दशाहमपी-

न सर्पिः पाययेत् प्राज्ञः शमनैस्तमुपाचरेत् ॥

यावल्लघुत्वात्— ॥ २४१ ॥

मांसप्रयोगस्य कालः प्रयोगार्हमांसञ्च ।—

—अशनं दद्यान्मांसरसेन तु ।

मांसार्थमेणलावादीन् युक्त्या दद्याद्विचक्षणः ॥ २४२ ॥

निषिद्धमांसानि ।—

कुक्कुटांश्च मयूरांश्च तित्तिरिं क्रौञ्चमेव च ।

गुरूष्णत्वान्न शंसन्ति ज्वरे केचिच्चिकित्सकाः ॥२४३ ॥

निषिद्धमांसानामपि अवस्थाविशेषे प्रयोगार्हता ।—

लङ्घनेनानिलबलं ज्वरे यद्यधिकं भवेत् ।

भिषङ्मात्राविकल्पज्ञो दद्यात् तानपि कालवित् ॥२४४॥

पिप्पल्याद्यं घृतम् ।—

पिप्पल्यश्चन्दनं मुस्तमुशीरं कटुरोहिणी ।

कलिङ्गकास्तामलकी शारिवाऽतिविषे स्थिरा ॥ २४५ ॥

---

त्यादि ।—निर्गतो दशाहान्निर्दशाहः । अलङ्घितमिति—असञ्जातलङ्घितफलम् ; इयञ्चावस्था प्रबलसामदोषारब्धत्वात् ज्वरस्य तथा असम्यगुपचाराच्च भवतीति ज्ञेयम् । यावल्लघुत्वादिति छेदः, लघुत्वे तु जाते कफोत्तरता अलङ्घितता चापयाति, तेन तदा सर्पिःपानमनुवृत्तं कर्त्तव्यमित्यर्थः । यावदिति—यावल्लघुत्वात् लघुत्वपर्य्यन्तं शमनैरुपाचरेत, लघुत्वे सति सर्पिःपानम ; अथवा यावत् तावत् नित्ययोगित्वात् लघुत्वात् यावत् यावत्पर्य्यन्तं लघुत्वं, तावत् शमनैरुपाचरेत ॥ २४१ ॥

मांसरसेन अशनन्तु निर्दशाहज्वरे कफोत्तरेऽप्यलङ्घितेऽपि देयमित्याह, अशनं दद्यान्मांसरसेनेति ।—ननु किमर्थमेतादृशमशनं कफविरुद्धमपि कफप्रधानावस्थायां दीयते ? सत्यं, मांसरसस्य बलजनकत्वात्, बलस्य च दोषनिग्रहसमर्थत्वात् ; अत एवोक्तं तत्रैव—"बलं ह्यलं निग्रहाय दोषाणां बलकृच्च तत्" ( च० चि० ज्वर० ) इति । एणलावादीनित्यादिशब्दात् कपिञ्जलादीनां ग्रहणम ॥ २४२।२४३ ॥

लङ्घनेनेत्यादि ।—मात्राविकल्पज्ञ इति—विकल्पो विशिष्टकल्पना, संस्कार इत्यर्थः, मात्रायाः विकल्पज्ञश्चेत्यर्थः ; तेन तावती मात्रा कर्त्तव्या, तादृशः संस्कारश्च कार्य्यः, यथा लघुत्वानुपाते भवत इत्यर्थः ॥ २४४ ॥

सर्पिःपानावस्थां प्रतिपाद्य सर्पींष्याह, पिप्पल्य इत्यादि ।—कलिङ्ग इन्द्रयवः ।

द्राक्षाऽऽमलकबिल्वानि त्रायमाणा निदिग्धिका ।
सिद्धमेतैर्घृतं सद्यो ज्वरं जीर्णमपोहति ॥ २४६ ॥
क्षयं कासं शिरःशूलं पार्श्वशूलं हलीमकम् ।
अङ्गाभितापमग्निञ्च विषमं सन्नियच्छति ॥
पिप्पल्याद्यमिदं क्वापि तन्त्रे चौरेण पठ्यते ॥ २४७ ॥

गणद्वारा स्नेहपाके परिभाषा ।—

यत्राधिकरणेनोक्तिर्गणे स्यात् स्नेहसंविधौ ।

---

तामलकी भूम्यामलकी । शारिवा अनन्तमूलम । बिल्वं बिल्वशलाटुः, द्राक्षादिफलसाहचर्यात् । अत्र यद्यपि घृतस्य मानं नोक्तं, तथाऽपि वृद्धवैद्यव्यवहारात् प्रस्थमात्रं ग्राह्यते ; अत एवोक्तम—"अनिर्दिष्टप्रमाणानां स्नेहानां प्रस्थ इष्यते । अनुक्ते क्वाथ्यमाने तु पावमेकं प्रशस्यते ॥" इति । अन्ये—पक्तव्यघृतस्य मानानिर्देशे अभ्यवहार्यमानमेवेच्छातः पक्तव्यम ; यत्र तु प्रस्थादिमाननिर्देशं करोति, तत्र तावन्मानेनैव स्नेहेन प्रायो रोगोपशमो भवतीति ज्ञेयम ; तथा हि वातव्याध्यादौ भूरिस्नेहसाध्ये भूयसीमेव स्नेहमात्रां वक्ष्यति ; तथा प्रपौण्डरीकाद्यनस्ये यौगिकतया स्नेहस्य कुडवमानमेवोक्तम ; कुष्ठोक्ततिक्तषट्पलादौ तु अल्पघृतसंविधानेन तथैव पक्वस्य घृतस्य कार्यकर्तृत्वं भवतीति भेषजप्रभावदर्शी महर्षिर्बोधयति । तत्र यदि कुष्ठस्य दीर्घरोगतया भूयसा तिक्तषट्पलेन प्रयोजनं, तदा पुनःपुनः षट्पलमानं घृतं पक्तव्यं "यथा कुर्वन्ति स उपायः" ( सु० सू० ४१ अ० ) इति वचनात् । एवं पानीयकल्याणकल्यहरीतक्यादावपि प्रतिनियतमानकथनप्रयोजनं वाच्यम ; तस्मात् यादृच्छिकमाचार्यस्य क्वचिन्मानाभिधानमनभिधानञ्च क्वचिदिति । अत्र क्वचित् पुस्तके हलीमकमिति पाठः, क्वचिच्चारोचकमिति पाठद्वयमपि न प्रक्षेपणीयम् ; यतः सुश्रुते,—"जीर्णज्वरशिरःशूल गुल्मोदरहलीमकान्" ( उ० ३९ अ० ) इति दृश्यते । वाग्भटे च—"पिप्पलीन्द्रयवचावनितिक्ता-शारिवामलकतामलकीभिः । बिल्वमुस्तहिमपाटलिसेव्यैः द्राक्षयाऽतिविषया स्थिरया च ॥ घृतमाशु निहन्ति साधितं ज्वरमग्निं विषमं हलीमकम् । अरुचिं भ्रमतापमंसयोर्वमथुं पार्श्वशिरोरुजं क्षयम् ॥" ( चि० १ अ० ) इति दृश्यते, तस्मात् पाठद्वयमेव युक्तम् ॥ २४५—२४७ ॥

अत्र केचित् "कल्कक्वाथावनिर्देशे गणात् तस्मात् समावपेत्" ( चि० ३१ अ० ) इति सुश्रुतवचनात् पिप्पल्यादीनां कल्कत्वं कषायत्वञ्चेच्छन्ति ; अन्ये तु कल्कत्वमेव

तत्रैव कल्कनिर्व्यूहाविष्येते स्नेहवेदिना ॥
एतद्वाक्यबलेनैव कल्कसाध्यपरं घृतम् ॥ २४८ ॥

मानानुक्तौ परिभाषा ।—

जलस्नेहौषधानान्तु प्रमाणं यत्र नेरितम् ।
तत्र स्यादौषधात् स्नेहः स्नेहात् तोयं चतुर्गुणम् ॥
अनुक्ते द्रवकार्य्ये तु सर्व्वत्र सलिलं मतम् ॥ २४९ ॥

स्नेहादिपाके व्यूषितकरणस्य गुणाधिक्यम ।—

घृततैलगुडादींश्च नैकाहादवतारयेत् ।
व्यूषितास्तु प्रकुर्व्वन्ति विशेषेण गुणान् यतः ॥ २५० ॥

स्नेहस्य पाकसिद्धिलक्षणम ।—

स्नेहकल्को यदाऽङ्गुल्या वर्त्तितो वर्त्तिवद्भवेत् ।
वह्नौ क्षिप्ते च नो शब्दस्तदा सिद्धिं विनिर्दिशेत् ॥ २५१ ॥
शब्दस्योपरमे प्राप्ते फेनस्योपरमे तथा ।
गन्धवर्णरसादीनां सम्पत्तौ सिद्धिमादिशेत् ॥ २५२ ॥

क्षीरषट्पलकं घृतम ।—

पञ्चकोलैः ससिन्धूत्थैः पलिकैः पयसा समम् ।
सर्पिःप्रस्थं शृतं प्लीह विषमज्वरगुल्मनुत् ॥ २५३ ॥

---

ब्रुवते ; अत एतत्संशयनिरासार्थं परिभाषामाह, यत्रेत्यादि ।—अधिकरणेनेति—आधिकारितया ; तेन यत्रैवाचार्य्येण गणत्वमधिकृतं, तत्रैव विदारिगन्धादिगणादौ कल्ककषायकल्पना, यत्र त्वधिकृतगणत्वं नास्ति, तत्र कल्ककल्पनैव ; एतेन सुश्रुतोक्ता "कल्कक्वाथावनिर्देशे" ( चि० ३१ अ० ) इत्यादिका परिभाषा अधिकृतगणविषयैव, न तु भेषजसमूहमात्रविषया इति। ननु मा भूदुभयकल्पना, अनियमेन कदाचित् कल्ककल्पना, कदाचित् क्वाथकल्पना कुतो न स्यात ? इति चेन्नैवम ; कषायकल्पनायां द्रव्यं न साक्षात प्रधानभूतं स्नेहसाधने व्यवह्रियते, कल्कस्तु साक्षादेव स्नेहसम्बद्धः पच्यते इति कल्कस्य प्राधान्यात् तथा तद्वैयवहाराच्चेत्याह—एतद्वाक्यबलेनैवेत्यादि ॥२४८॥

जलेत्यादि ।—जलस्नेहेत्यादौ जलशब्दो द्रवमात्रोपलक्षकः ॥ २४९—२५२ ॥

पञ्चकोलैरित्यादि ।—पयसा सममित्यत्र सम-शब्दस्य तुल्यार्थतास्वीकारेण स्नेहसमं क्षीरं, त्रिगुणञ्च जलमर्थोऽधिकारीत्वात् षट्पलघृतस्यैवादात् ; तद्यथा,—

स्नेहपाके क्षीरदानपरिभाषा।—

अत्र द्रवान्तरानुक्तौ क्षीरमेव चतुर्गुणम्।
द्रवान्तरेण योगे हि क्षीरं स्नेहसमं भवेत्॥ २५४॥

दशमूलषट्पलकं घृतम्।—

दशमूलीरसे सर्पिः सक्षीरे पञ्चकोलकैः।
सक्षारैर्हन्ति तत् सिद्धं ज्वरकासाग्निमन्दताः॥
वातपित्तकफव्याधीन् प्लीहानञ्चापि पाण्डुताम्॥ २५५॥

स्नेहपाके क्वाथकल्कादिविषयिणी परिभाषा।—

क्वाथ्याच्चतुर्गुणं वारि पादस्थं स्याच्चतुर्गुणम्।
स्नेहात्, स्नेहसमं क्षीरं, कल्कस्तु स्नेहपादिकः॥
चतुर्गुणान्त्वष्टगुणं द्रवद्वैगुण्यतो भवेत्॥ २५६॥

---

"सक्षारैः पञ्चकोलैस्तु पलिकैस्त्रिगुणोदके। ससक्षीरं घृतप्रस्थं ज्वरार्शःप्लीह-गुल्मनुत्॥" इति। "क्षीरदध्यारनालैस्तु पाको यत्रेरितः क्वचित्। चतुर्गुणं जलं तत्र वीर्य्याधानार्थमावपेत्॥" परिभाषेयमनार्षेति कृत्वा केश्चित् नाद्रियते। अन्ये तु क्षीरादिसाधनविषयेयमित्याहुः॥ २५३॥

चक्रस्तु समनित्यस्य सहार्थतामाश्रित्याह,—अत्रेत्यादि। एतच्चान्ये दूषयन्ति, यतः सुश्रुतोक्तोदरचिकित्सिते षट्पलकेऽस्मिन्—"घृतप्रस्थं तत्तुल्य क्षीरम" (चि० १४ अ०) इति पठ्यते। चरकेऽप्युक्तं गुल्मे—"घृतप्रस्थं विपाचयेत् क्षीर-प्रस्थेन" (चि०) इति। व्यवहारस्तु क्वचित् त्रिगुणोदकेन,क्वचिच्चतुर्गुणोदकेनेति॥२५४॥

दशमूलीरसे इत्यादि।—रसः क्वाथः, जेज्जडमते क्वाथश्चतुर्गुणः, क्षीरन्तु स्नेह-समम्। स हि क्वाथ्याच्चतुर्गुणं वारीत्यादि परिभाषार्थमनु बुद्धा क्षीरयोगे सर्वत्र एवमेव पाकं व्याचष्टे। चक्रस्त्वाह,—यत्र क्वाथः क्षीरञ्चास्ति तत्र क्षीरेण सह स्नेहाच्चतुर्गुणो द्रवः कार्य्यः, यतः स्नेहपाके चतुर्गुण एव द्रव उत्सर्गसिद्धः; "स्नेहात् तोयं चतुर्गुणम्" (च० क० दन्तीद्रवन्तो०) इत्यत्र तोयस्य द्रवोपलक्षणत्वात्; अतः क्वाथोऽत्र त्रिगुणः क्षीरञ्च स्नेहसममिति, पञ्चकोलयवक्षाराः प्रत्येकं पलिकाः पूर्वोक्तषट्पलकमाहचर्य्यात् षट्पलत्वानुपपत्तेश्चेति॥ २५५॥

दशमूलोक्तार्थं परिभाषामाह, क्वाथ्यादित्यादि।—स्नेहसमं क्षीरमिति, यत्र द्रवान्तरमस्ति तत्रेदं, केवलक्षीरे तु क्षीरमेव चतुर्गुणं, पाकस्य चतुर्गुणद्रवेणैवोत्सर्ग-सिद्धत्वात् इति गयदासचक्रौ। अन्ये तु यत्रैव केवलं क्षीरं तत्रैव स्नेहसमं क्षीरं,

जतूकर्णे चतुर्गुणं "क्षीरदध्यारनालैस्तु" इत्यादिवचनादित्याहुः। द्रवद्वैगुण्यं भवेदिति— यद्यपि—"शुष्कद्रव्येष्विदं मानमेवमादि प्रकीर्त्तितम्। द्विगुणं तत् द्रवेष्विष्टं सदा एवोद्धृतेषु च॥" (च० क० दन्तीद्रवन्ती०) इति वचनात् द्रवमात्रे एव द्वैगुण्यमायाति, तथाऽपि सुनिषण्णकचाङ्गेरीघृते षोड़शपलरूपस्य द्रवप्रस्थस्य द्वैगुण्येन द्वात्रिंशत्पलरूपत्वे सिद्धे यदयमाचार्य्यः,—"विंशत्पलानि तु प्रस्थो विज्ञेयो द्विपलाधिकः" (च० चि० अर्श०) इति करोति, तेन द्वैगुण्याभिधायकपरिभाषाव्यभिचारः क्वचिदस्तीति ज्ञापयति; अत एव रक्तिकादौ त्रिपलपर्य्यन्ते कुडवपूर्वमाने द्रवार्द्रयोर्द्वैगुण्यं न कार्य्यम्; यदाह गोपुररक्षितः,—"रक्तिकादिषु मानेषु यावन्न कुडवो भवेत्। शुष्कद्रवार्द्रयोश्चापि तुल्यं मानं प्रकीर्त्तितम्॥" इति, तथा—"द्विगुणं कुडवादौ तु शुष्कान्मानं द्रवस्य च। आर्द्रस्य चाल्पशैथिल्यात् ज्ञेयमन्यत्र तत् समम्॥" इति; तथा जतूकर्णेऽप्युक्तम्—"आर्द्राणाञ्च द्रवाणाञ्च द्विगुणाः कुडवादयः"; एवञ्च कुड़वादिमानयोग्यस्यापि यत्र पलोल्लेखेन मानं तत्रापि न द्वैगुण्यं विधेयं, तेन—"रास्नानक्तमालनिर्य्यूहे तैलद्रोणं विपाचयेत्" (च० चि० वातव्या०) इत्यादिषु पलोल्लेखेन जलं गृह्यमाणं न द्विगुणं भवति। क्वचित्तु पलोल्लेखविधानेऽपि तन्त्रान्तरीयवाक्यैकवाक्यतया पलोल्लेखागतद्रवेऽपि कुड़वादिविवक्षां कृत्वा द्वैगुण्यं विधेयम्; यथा चरकीयचिकित्सिते "मधुकाष्टपलं द्राक्षाप्रस्थक्काथः" (चि०) इत्यादिना चरके यः प्रयोग उक्तः, स जतूकर्णे "द्राक्षाया मधुकार्द्धप्रस्थक्काथः" इत्यादिना ग्रन्थेन पठितः; तेन जतूकर्णे मधुकस्यार्द्धप्रस्थोल्लेखपाठात् कृतद्वैगुण्यमेव जलस्य भवति, तत्र यथा चरकेऽपि मधुकाष्टपलोल्लेखविहितेऽपि क्काथे कुड़वद्वयविवक्षया कृतद्वैगुण्यमेव जलं देयम्; एवमन्यदनुसरणीयम्। अत्र केचित् कुड़वस्यापि द्वैगुण्यं नेच्छन्ति, यदि हि द्विगुणः कुड़वः स्यात्, तदा "क्काथ्याच्चतुर्गुणम्" इत्यादि "कल्कश्च स्नेहपादिकः" इति परिभाषा सर्वतन्त्रसिद्धा बाधिता स्यादिति; यतः सुश्रुते,—"स्नेहकुड़वे साध्ये भेषजपलं पिष्टं कल्कम्" (चि० ३१ अ०) इत्युक्तम्; तथा च कृष्णात्रेयेणाप्युक्तं—"स्नेहपाकविधौ यत्र प्रमाणं नोदितं क्वचित्। स्नेहस्य कुडवं तत्र पचेत् कल्कपलेन तु॥" इति। अत्र हि यदि कुडवश्चतुष्पलरूपः स्यात्, तदैव कल्कपलस्य स्नेहपादिकत्वं घटते; अष्टपलरूपत्वे कल्कपलस्य स्नेहापेक्षया अष्टभागत्वमेव भवेदिति। एतच्च नातिसाधु, यतः सुश्रुते एव—स्नेहकुडवे साध्ये क्काथ्यद्रव्यप्रस्थो विधेयः इत्युक्तम्। तत्र कुड़वेनैव यदि स्नेहपलचतुष्टयं गृह्यते तदा चतुःपलस्नेहे षोड़शपलक्काथ्यग्रहणं स्यात्; न च तथा व्यवहरन्ति क्काथ्यषोड़शपलं हि अष्टपले एव स्नेहे गृह्यते, तस्मादसाधकमेतत् कुड़वाद्वैगुण्यस्येति द्वैगुण्यं कुड़वे

पञ्चादिद्रवेण पाकविषयिणी परिभाषा ।—

पञ्चप्रभृति यत्र स्युर्द्रवाणि स्नेहसंविधौ ।
तत्र स्नेहसमान्याहुरर्वाक् च स्याच्चतुर्गुणम् ॥ २५७ ॥

वासाद्यं घृतम् ।—

वासां गुडूचीं त्रिफलां त्रायमाणां यवासकम् ।
पक्त्वा तेन कषायेण पयसा द्विगुणेन च ॥ २५८ ॥

---

युक्तम्; अगस्त्यहरीतक्यां मधुनः कुडवं यत् चरकेणोक्तं, तत् तन्त्रान्तरे "मधुनश्च पलाष्टकम्" इति पठ्यते, तथा तन्त्रान्तरे—"त्रायमाणाचतुष्पलं (पक्त्वा) दशकेऽम्भसि शोषिते। कुडवे कुडवान् सर्पिः-क्षीरधात्रीरसान् पचेत् ॥" इत्युक्तम्; तत्र यदि चतुःपलं कुडवः स्यात् तदा चरकोक्तत्रायमाणाघृतेन सह विरोधः स्यात्; तथा हि—"जले दशगुणे साध्यं त्रायमाणाचतुष्पलम्" इत्यादि यावत् "रसस्यामलकानाञ्च क्षीरस्य च घृतस्य च। पलानि पृथगष्टाष्टौ दत्त्वा सम्यक् विपाचयेत् ॥" (चि॰ गुल्म॰) तथा अन्यत्राप्युक्तम्—"आर्द्रद्रव्यद्रवद्रव्य-पलैरष्टाभिरेव च। शुष्कद्रव्यचतुष्केण कुडवः समुदाहृतः ॥" इति; तस्मात् कुडवे द्वैगुण्यं साधु। यत्तु अष्टपलेऽपि स्नेहे कल्कस्य पलमानत्वं, तत् स्वरससाध्यस्नेहाभिप्रायेण पुष्पकल्काभिप्रायेण वा ज्ञेयम्; यदुक्तं,—"स्नेहे सिध्यति शुद्धाम्बु-निःक्वाथस्वरसैः क्रमात्। कल्कस्य योजयेदंशं चतुर्थं षष्ठमष्टमम् ॥" (वा॰ क॰ ६ अ॰) तथा—"अगस्त्य कोविदारस्य कर्बुदारस्य शाल्मलेः। कल्काढ्यत्वात् पुष्पकल्कं प्रशंसन्ति चतुःपलम् ॥" इति। अत्र स्नेहप्रस्थापेक्षया चतुःपलं कल्कं स्नेहादष्टमभाग एव भवतीत्यादि विशिष्टवचनेन "कल्कश्च स्नेहपादिकः" इति सामान्यवचनस्य बाधा क्वचिद्विषयविशेषे भवतीति न विरोधमावहतीति अलमतिप्रपञ्चेन, सर्वथा वृद्धव्यवहारानुमतमेव वर्त्मानुसरणीयमस्माभिरिति सङ्क्षेपः। विस्तरः पुनरस्मदीयचरकतत्त्वप्रदीपिकायामेव गवेषणीय इति ॥ २५६ ॥

पञ्चेत्यादि।—पञ्चप्रभृतीत्यादिपरिभाषार्थं पुनर्वासाद्यघृतव्याख्यावसरे एव व्यक्तीकरिष्यामः ॥ २५७॥

वासामित्यादि।—यवासकं दुरालभा। अत्र च-कारात् वासादिक्वाथोऽपि घृतात् द्विगुण इत्याहुः; युक्तञ्चैतत्, यतः स्नेहपाके चतुर्गुणमेव द्रवमुत्सर्गसिद्धम्; "स्नेहात् तोयं चतुर्गुणम्" (च॰ कल्प॰ दन्तीद्रवन्ती॰) इति वचनात्; तोयशब्दोऽपि तत्र द्रवमात्रोपलक्षक इति। अत्र "क्वाथ्यःमपि चातुर्गुण्यम्" इत्यादि परिभाषयैव

पिप्पलीमूलमृद्वीका-चन्दनोत्पलनागरैः।
कल्काक्रतैश्च विपचेत् घृतं जीर्णज्वरापहम् ॥ २५८ ॥

चोरकषायथा: प्रत्येकं द्वैगुण्य सिद्ध च कारोऽय क्वाथचातुर्गुण्यार्थं इति केचित् अन्ये तु—परिभाषाबलात् यद्यपि चोरं कषायश्च द्विगुण एव लभ्यते, तथाऽपि स्पष्टार्थं चीरद्वैगुण्याभिधानमित्याहुः, तन्न; चीरस्य हि मानानुक्तौ—"क्वाथ्याच्चतुर्गुणं वारि पादस्थं स्याच्चतुर्गुणम्। स्नेहात् स्नेहसमं चोरं कल्कतु स्नेहपादिकः॥" इति वचनात् चोरस्य द्रवान्तरसान्निध्ये सति स्नेहसमत्वमेव स्यात्; ततः कषायभागद्वयं चीरभागश्चैक इति कृत्वा "द्वाभ्यामपि चातुर्गुण्यम्" इति परिभाषार्थोऽप्यनुगृहीतो भवति; तस्मात् कर्त्तव्यं चीरद्वैगुण्याभिधानम्। अन्ये तु "द्वाभ्यामपि चातुर्गुण्यम्" इति परिभाषायां प्रत्येकमेव द्रवेण चातुर्गुण्यमिच्छन्ति, ततश्चेह कषायस्य चातुर्गुण्यं चीरस्य द्वैगुण्यमेव "पयसा द्विगुणेन च" इति वचनात्, तन्न; "एकेनापि चातुर्गुण्यं, द्वाभ्यामपि चातुर्गुण्यं, त्रिभिरपि चातुर्गुण्यं, चतुर्भिः समम्" इति वचनेन चतुर्भिः स्नेहसमताभिधानेन स्नेहाच्चातुर्गुण्यमेव द्रवस्योक्तम्; अतो द्वाभ्यां त्रिभिरपि तथा चातुर्गुण्यं कार्य्यं यथा स्नेहचातुर्गुण्यं स्यात्, तथा च मिलित्वैव चातुर्गुण्यं सिध्यति, न प्रत्येकमित्यर्थः। किञ्च यदि प्रत्येकं चातुर्गुण्यं विवक्षितं स्यात् तदा द्वयोस्त्रयाणां चातुर्गुण्यमिति कुर्य्यात्, तृतीयानिर्देशेन हि साहित्यं सूचयता मिलितयोरेव चातुर्गुण्यं प्रतीयते इति; अत एव एतत्परिभाषास्मरणात्—"पञ्च प्रभृति यत्र स्युर्द्रवाणि स्नेहसंविधौ। तत्र स्नेहसमान्याहुरर्वाक् च स्याच्चतुर्गुणम्॥" इति मिलित्वैव चातुर्गुण्यम्, अन्यथा एतद्वचनयोर्विरोधो दुष्परिहरः स्यात्। अन्ये तु—"अर्वाक् च स्याच्चतुर्गुणम्" इति प्रत्येकमेव चातुर्गुण्यम्, अन्यथा यत्र यत्र स्नेहपाके चत्वारि द्रवाणि सन्ति तत्र यदि द्रवचतुष्टयस्य मिलित्वा चातुर्गुण्यं स्यात्, तदा स्नेहसमान्याहुरेतावताऽपि द्रवचतुष्टयस्य मिलित्वा चातुर्गुण्ये सिद्धे "अर्वाक् च स्यात् चतुर्गुणम्" इति वचनं तावदेकद्वित्रिद्रवविषये चरितार्थमेव; यत्र वा द्रवचतुष्टयविषये अचरितार्थमित्युच्यते तावताऽपि न वस्तुगतिः; यस्मात् "एकेनापि चातुर्गुण्यम्" इत्यादि "चतुर्भिः समम्" इत्यनया परिभाषया द्रवचतुष्टयविषये तावन्मिलित्वा चातुर्गुण्यं सिद्धमेव, तदिदानीं प्रत्येकं स्नेहसमत्वेन साध्यताम्; "अर्वाक् च स्यात् चतुर्गुणम्" इति वचनेन साध्यतामिति। अन्ये पुनरनयैवानुपपत्त्या "चतुः प्रभृति" इति पठन्ति। श्रीकण्ठोऽपि गुणाधिकारे परिभाषायामस्यां चतुःप्रभृतीति पाठमेव स्वीकृतवान् ॥ २५८-२५८ ॥

गुड़ूच्यादीनि घृतानि।—

गुड़ूच्याः क्वाथकल्काभ्यां त्रिफलाया वृषस्य च।
मृद्वीकाया बलायाश्च सिद्धाः स्नेहा ज्वरच्छिदः॥ २६०॥

ज्वरे पेयादिप्रयोगस्य दिनसङ्ख्यानिर्देशः।—

ज्वरे पेयाः कषायाश्च सर्पिः क्षीरं विरेचनम्।
षड़हे षड़हे देयं कालं वीक्ष्यामयस्य च॥ २६१॥

गुड़ूच्या इत्यादि वाग्भटस्य।—गुड़ूच्यादीनां पञ्चानां पृथक् पृथक् क्वाथकल्काभ्यां सिद्धानि पञ्च घृतानि बोध्यानि॥ २६०॥

अत्र पेयादिकं यदिहोक्तं तत् व्याध्यवच्छिन्नकालविशेषापेक्ष्यमिति प्रतिपादयन् क्षीरादिकमभिधातुं पीठिकां रचयति, ज्वरे पेया इत्यादि।—अत्र पेया-कषाय-सर्पिः-क्षीर-विरेचनानामुत्सर्गविषया ज्वराद्यादारभ्य षड़हं यथाक्रमं देयत्वमुच्यते; तेन—"वमितं लङ्घितं काले यवागूभिरुपाचरेत्" (च० चि० ज्वर०) इत्यादि विशेष-वचनात् लङ्घितादेः षड़हातिक्रमेऽपि यत् पेयादिदानमुक्तं तन्न विरोधमावहति, सामान्यविधेः विशेषविधिना बाधनस्य सर्व्वैवानुमतत्वात्। ननु पेयादिप्रयोगे—"यावज्ज्वरमृदूभावात् षड़हं वा विचक्षणः" (चि० ज्वर०) इत्यादिना षड़हं यावत् यवागूर्देयेति चरकेणोक्तं, तथा अत्रापि षड़हे पेयादानमुक्तं, तदयं षड़हः किं ज्वरोत्पाददिनं गृहीत्वा भवतु? लङ्घनविषयदिनं हित्वा वा? नाद्यः, अनशनरूपलङ्घन-वैयर्थ्यात्, लङ्घनं ह्याद्य एवोपक्रमः; यदुक्तं—"ज्वरे लङ्घनमेवादौ" (च० चि० ज्वर०) इति। नापि द्वितीयः, "ज्वरितं षड़हेऽतीते लघ्वन्नप्रतिभोजितं" (च० चि० ज्वर०) इत्यनेन ज्वरदिनादारभ्याष्टमे पाचनं शमनीयं वा पाययेदित्युक्तत्वात् ज्वरदिनस्य क्रोडी-कृत्यैवाष्टाहः; यदुक्तम्—"अष्टाहो निरामज्वरलक्षणम्" (च० चि० ज्वर०) इति। अत्राहुः, ज्वरोत्पाददिनं गृहीत्वैवाष्टाहः प्रत्येतव्यः। "यावज्ज्वरमृदूभावात् षड़हं वा विचक्षणः" (च० चि० ज्वर०) इत्यनेनापि ज्वरोत्पाददिनमारभ्यैव षड़हपर्य्यन्तं पेयाप्रयोग उच्यते, पेया हि ज्वरे प्राधान्येन दोषपाचनार्थं क्रियते; यदुक्तं—"लङ्घनं स्वेदनं कालो यवाग्वस्तिक्तको रसः। पाचनान्यविपक्कानां दोषाणां तरुणे ज्वरे॥" (च० चि० ज्वर०) इति; न तु यस्मिन् षड़हे पेया, तस्मिन्नेव षड़हे लङ्घनादिकमपीति लङ्घनादिभिर्निरवकाशतया पेयाषड़हस्य निर्विषयत्वमिति वाच्यम्; तस्य वातज्वरविषयत्वात्, वातज्वरो ह्यलङ्घनीयः; यदुक्तम्—"ऋते ज्वरात्। क्षयानिलभयक्रोध-कामशोकश्रमोद्भवात्॥" (च० चि० ज्वर०) इति; तेनालङ्घनीये

जीर्णतरुणज्वरयोः क्षीरप्रयोगस्य गुणदोषौ ।—

## जीर्णज्वरे कफे क्षीणे क्षीरं स्यादमृतोपमम् ।

वातज्वरे पेया समयमेव षड़हं व्याप्नोति, एकद्वित्रिदिनं लङ्घिते पेया न दोषपाचनार्थं क्रियते, क्रियतेऽपि ज्वरे पञ्चचतुस्त्रिदिनं यावत् पेयादिकमेवेति नातो निर्विषयत्वं पेयाषड़हस्य ; यत्र तु दोषाणामतिसामतया सन्निपातज्वरे वा लङ्घनमेव षड़ात्रातिक्रमेणापि क्रियते, तत्र प्रादेशिके विधौ नायं पेयायाः षड़ात्रनियमः औत्सर्गिकः प्रवर्त्तते । ननु पेया दोषपाचनार्थं क्रियते, तर्हि अतिलङ्घिते पेया कथं क्रियते ? लङ्घनेनैव दोषपाकसिद्धत्वात् ; नैवम् ; अतिलङ्घिते पेया न दोषपाचनार्थं क्रियते, किं तर्हि ? लङ्घनवशात्क्षीणाग्निसन्धुक्षणाय, तत्राग्निसन्धुक्षणे जाते पुनरौषधपानमेव भवति । "ज्वरे पेयाः कषायाश्च" इत्यादावपि समानकार्य्याणां लङ्घनादीनामुपलक्षणभूता पेया ; यतः पेया यत्र प्रतिषिद्धा मद्योत्थे ज्वरादौ तत्र तर्पणक्रमेणापि षड़हो ग्राह्यः, तेन प्रथमषड़हे उत्सर्गतो लङ्घनादि पाचनं कार्य्यमिति पेया "षड़हे देयेति वचनेनोच्यते । कषायषड़होऽपि ज्वरोत्पादात् सप्तमदिनं परित्यज्याष्टमाहमारभ्यैव ज्ञेयं, सप्तमे ज्वरस्य तरुणत्वेन कषायपाननिषेधात् । यत्तु हारीते लङ्घनोष्णोदकमुस्तादिषड़ङ्गशृतजलपानपेयाभिधानानन्तरमुक्तम्—"एतां क्रियां प्रयुञ्जीत षड़ात्रं सप्तमेऽहनि । पिबेत् कषायसंयोगान् ज्वरघ्नान् साधुसाधितान् ॥" (२ स्था० १ अ०) इति, तथा खरनादेनापि—"लङ्घितालङ्घितं तस्मात् वमितं वा ज्वरार्दितम् । तस्मात्मत्वादतस्ताभिरादौ ज्वरमुपाचरेत् ॥ यवागूभिर्यथादोषम्" इत्यादि ; एवं जतुकर्णेनापि यवाग्वादिक्रममभिधायोक्तम्—"इति षड़ात्रिकः प्रोक्तो नवज्वरहितो विधिः । ततः परं पाचनीयं शमनं वा ज्वरे हितम् ॥" इति, तदपि प्रागुक्तरीत्या अष्टाहे एव कषायपानविधायकमिति प्रागेव प्रतिपादितम् । वस्तुतस्तु सप्तमाष्टमाहकषायपानविधायकानां वचनानामदूरान्तरत्वात् एव न परस्परविरोध इत्युक्तम् । एतन्मतेऽप्यनुद्भूतसामतायां सप्तमदिने एव कषायपानम्, उद्भूतसामतायान्तु अष्टमेऽहनि इति व्यवस्था ; तेनैतस्मिन् व्याख्याने हारीतखरनादवचनं यथाश्रुतमेव सङ्गच्छते । तथा "ज्वरे पेयाः कषायाश्च" इत्यादिनाऽपि पेयाषड़हानन्तरमेव सप्तमे दिने यत् कषायपानमुक्तं तदप्यनुद्भूतसामताऽभिप्रायेणेति न विरोधमावहति । कालं वीक्ष्यामयस्य च इति—ज्वरलक्षणस्यामयस्यावस्थारूपं कालं वीक्ष्य षड़हे यथाक्रमं पेयादि देयमित्यर्थः ॥ २६१ ॥

क्षीरपानावस्थामाह, जीर्णज्वरे इत्यादि ।—कफे क्षीणे इति—कफक्षयात् वात-

तदेव तरुणे पीतं विषवद्धन्ति मानवम् ॥ २६२ ॥

स्वल्पपञ्चमूलीक्षीरम्।—

कासाच्छ्वासात् शिरःशूलात् पार्श्वशूलात् सपीनसात्।
मुच्यते ज्वरितः पीत्वा पञ्चमूलीशृतं पयः ॥ २६३ ॥

क्षीरपाकपरिभाषा।—

द्रव्यादष्टगुणं क्षीरं क्षीरात् तोयं चतुर्गुणम्।
क्षीरावशेषः कर्त्तव्यः क्षीरपाके त्वयं विधिः ॥ २६४ ॥

त्रिकण्टकादि क्षीरम्।—

त्रिकण्टकबलाव्याघ्र-गुड़नागरसाधितम्।
वर्चोमूत्रविबन्धघ्नं शोथज्वरहरं पयः ॥ २६५ ॥

वृश्चीरादि क्षीरम्।—

वृश्चीरबिल्ववर्षाभू-पयश्चोदकमेव च।
पचेत् क्षीरावशिष्टन्तु तद्धि सर्वज्वरापहम् ॥ २६६ ॥

दोषभेदेन शीतोष्णक्षीरप्रयोगविधिः।—

शीतं वोष्णं ज्वरे क्षीरं यथास्वैरौषधैर्युतम् ॥ २६७ ॥

एरण्डमूलक्षीरम्।—

एरण्डमूलसिद्धं वा ज्वरे सपरिकर्त्तिके ॥ २६८ ॥

---

पित्तोत्तरतायां क्षीरममृतायते इत्यर्थः, यदुक्तं—"दाहतृष्णापरीतस्य वातपित्तोत्तरं ज्वरम्। बद्धप्रच्युतदोषं वा निरामं पयसा जयेत् ॥" (च० चि० ज्व०)..इति ॥२६२॥

कासादित्यादि।—पञ्चमूली स्वल्पा वातपित्तहन्तृत्वात् ॥ २६३ ॥

क्षीरसाधनपरिभाषामाह—द्रव्यादित्यादि ॥ २६४ ॥

त्रिकण्टकेत्यादि।—गुडः प्रक्षेप्यः, गुड़पाकस्य निष्प्रयोजनत्वादित्याहुः ॥ २६५ ॥

वृश्चीरेत्यादि।—वृश्चीरः श्वेतपुनर्नवा। वर्षाभूः रक्तपुनर्नवेति। पयोदकयोरौषधानां पूर्ववदेव मानम् ॥ २६६ ॥

शीतं वेत्यादि।—विकल्पः इच्छाविशेषकृतः, किंवा वाते उष्णं, पित्ते शीतमिति ॥ २६७ ॥

एरण्डेत्यादि।—अत्र बिल्वफलसिद्धं दुग्धमपि बोध्यं, चरकोक्तत्वात्। गुदे कर्त्तनवत् पीड़ा परिकर्त्तिका ॥ २६८ ॥

ज्वरे संशोधनप्रयोगावस्था ।—

ज्वरिभ्यो बहुदोषेभ्य ऊर्द्ध्वञ्चाधश्च बुद्धिमान् ।
दद्यात् संशोधनं काले कल्पे यदुपदेक्ष्यते ॥ २६९ ॥

ज्वरे वमनयोगाः ।—

मदनं पिप्पलीभिर्वा कलिङ्गैर्मधुकेन वा ।
युक्तमुष्णाम्बुना पीतं वमनं ज्वरशान्तये ॥ २७० ॥

ज्वरे विरेचनयोगाः ।—

आरग्वधं वा पयसा मृद्वीकानां रसेन वा ।
त्रिवृतां त्रायमाणां वा पयसा ज्वरितः पिबेत् ॥ २७१ ॥

ज्वरक्षीणस्य संशोधनविधिः ।—

ज्वरक्षीणस्य न हितं वमनं न विरेचनम् ।
कामन्तु पयसा तस्य निरूहैर्वा हरेन्मलान् ॥ २७२ ॥

ज्वरे निरूहानुवासनप्रयोगावस्था ।—

प्रयोजयेज्ज्वरहरान् निरूहान् सानुवासनान् ।
पक्वाशयगते दोषे वक्ष्यन्ते ये च सिद्धिषु ॥ २७३ ॥

जीर्णज्वरे शिरोविरेचनप्रयोगावस्था ।—

गौरवे शिरसः शूले विबद्धेष्विन्द्रियेषु च ।
जीर्णज्वरे रुचिकरं दद्याच्छीर्षविरेचनम् ॥ २७४ ॥

---

संशोधनावस्थामाह, ज्वरिभ्य इत्यादि ।—बहुदोषेभ्य इति अल्पदोषेषु संशोधननिषेधार्थमुक्तम् । काले इति—यथोक्तवमन-विरेचनयोग्यज्वरावस्थायाम् । कल्पे इति—कल्पस्थाने ग्रन्थे यदुपदेक्ष्यते तद्देयम् ॥ २६९ ॥

वमनयोगद्वयमाह, मदनमित्यादि ।—मदनं पिप्पलीयुक्तं कफे । कलिङ्गम् इन्द्रयवः, तद्युक्तं पित्तकफे । यष्टिमधुयुक्तन्तु दाहप्राये इत्याहुः ॥ २७० ॥

चतुरो विरेचनयोगानाह, आरग्वधमित्यादि ।—अत्र चरके वाग्भटे च त्रिवृतास्थले त्रिफला पाठो दृश्यते, टीकाकारैश्च त्रिफलैव व्याख्यायते ॥ २७१ ॥

ज्वरक्षीणस्येत्यादि ।—स्पष्टम् ॥ २७२ ॥

प्रयोजयेदित्यादि ।—सिद्धिषु सिद्धिस्थानोक्ताध्यायेषु ॥ २७३ ॥

नस्यावस्थामाह, गौरवे इत्यादि ।—विबद्धेष्विति—स्वविषयग्रहणासमर्थेषु ॥ २७४॥

जीर्णज्वरे अभ्यङ्गादिप्रयोगस्य गुणाः।—

अभ्यङ्गांश्च प्रदेहांश्च सस्नेहान् सानुवासनान्।
विभज्य शीतोष्णकृतान् दद्याज्जीर्णज्वरे भिषक्॥ २७५॥
तैराशु प्रशमं याति बहिर्मार्गगतो ज्वरः।
लभन्ते सुखमङ्गानि बलं वर्णश्च वर्द्धते॥ २७६॥

षट्कट्वरतैलम्।—

सुवर्चिकानागरकुष्ठमूर्वा-लाक्षानिशालोहितयष्टिकाभिः।
तैलं ज्वरे षड्गुणकट्वरसिद्धमभ्यञ्जनाच्छीतविदाहनुत् स्यात्॥२७७॥

कट्वरस्वरूपं तैलस्य पाकविशेषविशिष्टलक्षणञ्च।—

दध्नः ससारकस्यात्र तक्रं कट्वरमिष्यते।
घृतवत् तैलपाकोऽपि तैले फेनोऽधिकः परः॥ २७८॥

अङ्गारकं तैलम्।—

मूर्वा लाक्षा हरिद्रे द्वे मञ्जिष्ठा सेन्द्रवारुणी।
बृहती सैन्धवं कुष्ठं रास्ना मांसी शतावरी॥ २७९॥
आरनालाढकेनैव तैलप्रस्थं विपाचयेत्।
तैलमङ्गारकं नाम सर्वज्वरविमोक्षणम्॥ २८०॥

---

जीर्णज्वरेऽभ्यङ्गादीनाह, अभ्यङ्गानित्यादि।—विभज्येति—शीतोष्णसमुत्थज्वर-विभागेनेत्यर्थः, तेन उष्णोत्थे जीर्णज्वरे शीतद्रव्यकृताः प्रदेहादयः, शीतोत्थे तु उष्णद्रव्यकृता देया इत्यर्थः। बहिर्मार्गस्त्वगादिः; उक्तं हि—"शाखा रक्तादयो धातवस्त्वक् च, स बाह्यो रोगमार्गः" (च० सू० तिस्रैषणी०) इति॥ २७५।२७६॥

सुवर्चिकेत्यादि।—सुवर्चिका सर्जिकाक्षारः। लोहितयष्टिका मञ्जिष्ठा, सुश्रुत-वृद्धवाग्भटादिबहुतरतन्त्रसंवादात्; अन्ये तु—लोहितं चन्दनं, यष्टिका मञ्जिष्ठा, विदेह-संवादादित्याहुः; व्यवहारस्तु पूर्वव्याख्ययैव। शीतविदाहहन्तृत्वञ्च योगस्य अचिन्त्यशक्तित्वात्॥ २७७॥

तैलपाके विशेषं स्मारयति—घृतवदित्यादि॥ २७८॥

मूर्वेत्यादि।—इन्द्रवारुणी गोरक्षकर्कटी। अङ्गारको मङ्गलः, तत्कृतत्वादङ्गारक-संज्ञा॥ २७९।२८०॥

लाक्षादि तैलम् ।—

लाक्षाहरिद्रामञ्जिष्ठा-कल्कैस्तैलं विपाचयेत् ।
षड्गुणेनारनालेन दाहशीतज्वरापहम् ॥ २८१ ॥

ज्वरदाहहरं तैलम् ।—

यवचूर्णार्द्धकुड़वं मञ्जिष्ठाऽर्द्धपलेन तु ।
तैलप्रस्थः शतगुणे काञ्जिके साधितो जयेत् ॥
ज्वरं दाहं महावेगमङ्गानाञ्च प्रहर्षनुत् ॥ २८२ ॥

ज्वरदाहहरं तैलम् ।—

सर्जकाञ्जिकसंसिद्धं तैलं शीताम्बुमर्दितम् ।
ज्वरदाहापहं लेपात् सद्यो वातास्रदाहनुत् ॥ २८३ ॥

जीर्णज्वरघ्नतैलानां नामानि ।—

चन्दनाद्यमगुर्वाद्यं तैलं चरककीर्त्तितम् ।
तथा नारायणं तैलं जीर्णज्वरहरं परम् ॥ २८४ ॥

## आगन्तुज्वरचिकित्सा ।

आगन्तुज्वरे औषधनिर्देशः ।—

अभिघातज्वरो न स्यात् पानाभ्यङ्गेन सर्पिषः ।
क्षतानां व्रणितानाञ्च क्षतव्रणचिकित्सया ॥ २८५ ॥
ओषधीगन्धविषजौ विषपीतप्रबाधनम् ।

---

लाक्षेत्यादि ।—लाक्षादितैलं स्पष्टम् । अत्रापि दाहशीतहरत्वं प्रभावात् ॥२८१॥

यवेत्यादि ।—"मञ्जिष्ठाऽर्द्धपलेन" इत्यत्र "मञ्जिष्ठाद्विपलेन" इति न पाठः, सुश्रुत-चन्द्रटादौ अर्द्धपलेनेति पाठात् ॥ २८२ ॥

प्रदेहमाह, सर्जेत्यादि ।—सर्जो धूनकः कल्कः । काञ्जिकं चतुर्गुणम् । सिद्धं पक्वम् । ततः शीताम्बुमर्दितं शीतलजलेन तैलं सम्मर्द्य गाढ़ाभ्यङ्गः कार्य्यः ॥ २८३ ॥

चन्दनाद्यमित्यादि ।—नारायणतैलं वातव्याधौ वक्ष्यमाणम् ॥ २८४ ॥

अभिघातेत्यादि ।—न स्यात् न भवेत्, शाम्यतीत्यर्थः । क्षतानामिति—उरःक्षतानाम् । अत्रापि ज्वरो न स्यादिति योज्यम् । ओषधीत्यादि सुश्रुतस्य ।—प्रबाधनं चिकित्सितम् । विषपीतप्रबाधनैरिति पाठे—विषपीतस्य यानि चिकित्सितानि

जयेत् कषायैर्मतिमान् सर्वगन्धकृतैस्तथा ॥ २८६ ॥
अभिचाराभिशापोत्थौ ज्वरौ होमादिना जयेत् ।
दानस्वस्त्ययनातिथ्यैरुत्पातग्रहपीड़जौ ॥ २८७ ॥

क्रोधकामादिज्वरचिकित्सा।—

क्रोधजे पित्तजित् काम्या अर्थाः सद्वाक्यमेव च ।
आश्वासेनेष्टलाभेन वायोः प्रशमनेन च ॥
हर्षणैश्च शमं यान्ति कामक्रोधभयज्वराः ॥ २८८ ॥
कामात् क्रोधज्वरो नाशं क्रोधात् कामसमुद्भवः ।
याति ताभ्यामुभाभ्याञ्च भयशोकसमुद्भवः ॥ २८९ ॥

भूतज्वरचिकित्सा।—

भूतविद्यासमुद्दिष्टैर्बन्धावेशनताड़नैः ।
जयेत् भूताभिषङ्गोत्थं मनःशान्तैश्च मानसम् ॥ २९० ॥

---

तैरित्यर्थः। सर्वगन्धकृतैरिति—सर्वगन्धः सौश्रुत एलादिगणः; स एवात्र विषहरत्वादुचितः, न तु "चातुर्जातककर्पूर-कक्कोलागुरुशिल्हकम्। लवङ्गसहितञ्चैव सर्वगन्धं विनिर्दिशेत ॥" इति निघण्टुकारोक्तो ग्राह्यः, तस्योद्वर्त्तनादिमात्रविषयत्वात्। अभिचारेत्यादि सुश्रुतस्य।—अभिचारोऽथर्ववेदोक्तः श्येनादियागः। अभिशापो गुर्वादीनामनिष्टाभिशंसनम्। होमादिनेत्यादिशब्दात् प्रायश्चित्तबलिमङ्गलादयो गृह्यन्ते। उत्पातो निर्घातादिः। ग्रहपीड़जाविति—ग्रहपीड़ाजन्यौ। "ङ्यापोः सञ्ज्ञाच्छन्दसोर्बहुलम्" इति पीड़ाशब्दस्याकारस्य ह्रस्वत्वम्। सुश्रुते तु "उत्पातग्रहपीड़ितम्" ( उ० ३९ अ० ) इति पाठो दृश्यते ॥ २८५—२८७ ॥

क्रोधजे इत्यादि।—अत्र चरकः,—"काम्यैरर्थैर्मनोज्ञैश्च पित्तघ्नैश्चाप्युपक्रमैः। सद्वाक्यैश्च शमं याति ज्वरः कामसमुद्भवः ॥" ( चि० ज्व० ) इति। आश्वासेनेत्यादि चरकस्य।—स्पष्टम। कामादिजन्यान् ज्वरान् कामादयः परस्परं नाशयन्तीत्याह—कामादित्यादि चरकस्य ॥ २८८।२८९ ॥

भूतविद्येत्यादि सुश्रुतस्य।—भूतविद्या भूतानां यक्षराक्षसादीनां ज्ञानार्था प्रशमनार्था च विद्या, सा च सुश्रुतोत्तरतन्त्रादावनुसरणीया। बन्धावेशनताड़नैरिति—अनुप्रविष्टस्य भूतस्य पुनरपसरतो मन्त्रेण संयमनं बन्धः। मन्त्रेणाकृष्य मस्तके निवेशनमावेशनम्। ताड़नं मन्त्रैः सर्षपादिभिरभिहननम्। "ताड़नैः" इत्यत्र "पूजनैः" इति पाठः

वर्जनीयविधिः।—

व्यायामञ्च व्यवायञ्च स्नानं चङ्क्रमणानि च।
ज्वरमुक्तो न सेवेत यावन्नो बलवान् भवेत्॥ २९१॥

ज्वरमुक्तिलक्षणम्।—

देहो लघुर्व्यपगतक्लमभोहतापः
पाको मुखे करणसौष्ठवमव्यथत्वम्।
स्वेदः क्षवः प्रकृतियोगिमनोऽन्नलिप्सा
कण्डूश्च मूर्ध्नि विगतज्वरलक्षणानि॥ २९२॥

इति ज्वरचिकित्सा।

---

## अथ ज्वरातिसार-चिकित्सा।

पेयादिदानकालः।—

ज्वरातिसारे पेयादि-क्रमः स्याल्लङ्घिते हितः॥ १॥

---

सुश्रुते दृश्यते; टीकाकृतोऽपि पूजनैः बल्युपहारस्तुत्यादिभिरिति व्याख्यानयन्ति। भूताभिषङ्गोत्थमिति—भूताभिसम्बन्धोत्थम्। मनःशान्तेरिति—मनःप्रसादनैः। "मनः-शान्तैः" इत्यत्र "विज्ञानाद्यैः" इति पाठः सुश्रुते दृश्यते; टीकाकृतोऽप्यादिशब्दात् समाधिधैर्य्यादीनां ग्रहणमिति व्याचक्षते। मानसं कामक्रोधादिजम्॥ २९०॥

ज्वरमुक्तेन यन्न सेव्यं तदाह, व्यायामञ्चेत्यादि।—स्नानमूर्जस्करमपि ज्वरं प्रत्यान-यति; तदुक्तं—"स्नानमाशु ज्वरं कुर्य्याज्ज्वरमुक्तस्य देहिनः। तस्मान्मुक्तज्वरः स्नानं विषवत् परिवर्जयेत्॥" इति॥ २९१॥

ज्वरमुक्तिलक्षणमाह, देह इत्यादि वाग्भटस्य।—मुखे एव पाको व्याधि-प्रभावात्। एवं कण्डूश्च मूर्ध्नि इत्यपि॥ २९२॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां
ज्वरचिकित्साविवृतिः।

---

ज्वरे सत्युपद्रवत्वेनातीसारस्य सम्भवात् ज्वरानन्तरं ज्वरातीसार उच्यते—ज्वरातीसारे इत्यादि। ज्वरातीसारमेलकश्च ज्वरातीसाराभ्यामनन्यत्वात् इति कृत्वा

उत्पलषट्कम् ।—

ज्वरातिसारी पेयां वा पिबेत् साम्लां शृतां नरः ।

पृश्निपर्णीबलाबिल्व-नागरोत्पलधान्यकैः ॥ २ ॥

पाठादिः ।—

पाठेन्द्रयवभूनिम्ब-मुस्तपर्पटकामृताः ।

जयन्त्याममतीसारं सज्वरं समहौषधाः ॥ ३ ॥

नागरादिः ।—

नागरातिविषामुस्त-भूनिम्बामृतवत्सकैः ।

सर्वज्वरहरः क्वाथः सर्वातीसारनाशनः ॥ ४ ॥

ह्रीबेरादिः ।—

ह्रीबेरातिविषामुस्त-बिल्वधान्यकनागरैः ।

पिबेत् पिच्छाविबन्धघ्नं शूलदोषामपाचनम् ॥

सरक्तं हन्त्यतीसारं सज्वरं वाऽथ विज्वरम् ॥ ५ ॥

---

निदानसङ्ग्रहे माधवेन न पठितः; अत एवोक्तं सिद्धसारे—"ज्वरातिसारयोरुक्तं निदानं यत् पृथक् पृथक्। तत् स्याज्ज्वरातिसारस्य तेन नात्रोदितं पुनः ॥" इति। ननु एवं चिकित्साऽपि भविष्यतीति चेत्? नैवं, मिथो वर्द्धनात्; उक्तं हि—"ज्वरातीसारयोरुक्तं भेषजं यत् पृथक् पृथक्। न तन्मिलितयोः कार्य्यमन्योऽन्यं वर्द्धयेत् यतः ॥" प्रायेण हि ज्वरहरमौषधमनुलोमनम्, अतिसारहरञ्च स्तम्भनमिति परस्पर-विरुद्धत्वात् मिलितयोर्न कार्य्यमित्यर्थः ॥ १ ॥

ज्वरातिसारीत्यादि।—पेयां वेति वा-शब्दश्चरके यवाग्वन्तरापेक्षया; किंवा साम्लामित्यस्यानन्तरं वा-शब्दो योज्यः, तेनानम्लामपीति फलति। साम्लामिति—वृक्षदम्लाम्; अम्लत्वञ्च दाड़िमरसादिना; एतच्चाम्लसात्म्यं प्रति ज्ञेयम्। पृश्निपर्णी-त्यादि—सुश्रुते तस्मिन् योगे बालकमपि दृश्यते, यथा—"पृश्निपर्णीबलाबिल्व-धान्य-कोत्पलबालकैः। सनागरैः पिबेत् पेयां साधितामुदरामयी ॥" (उ० ४० अ०) ॥ २ ॥

पाठेत्यादि—प्रयोगोऽयं क्वाथेन ॥ ३ ॥

नागरेत्यादि।—वत्सक इन्द्रयवः; सिद्धसारे—"छिन्नाभूनिम्बशुण्ठ्यब्द-कलिङ्गाति-विषाकृतः" इत्युक्तत्वात् ॥ ४ ॥

ह्रीबेरेत्यादि।—ह्रीबेरादिर्वातश्लेष्मघ्नोति वृद्धाः। योगोऽयमवचारणयाऽपि। बिल्वं बिल्वशुण्ठकं, स्तम्भकत्वात्; एवं वक्ष्यमाणेषु ॥ ५ ॥

गुडूच्यादिः ।—

गुडूच्यतिविषाधान्य-शुण्ठीविल्वाब्दवालकैः ।
पाठाभूनिम्बकुटज-चन्दनोशीरपद्मकैः ॥ ६ ॥
कषायः शीतलः पेयो ज्वरातीसारशान्तये ।
हृल्लासारोचकच्छर्दि-पिपासादाहनाशनः ॥ ७ ॥

उशीरादिः ।—

उशीरं बालकं मुस्तं धन्याकं विश्वभेषजम् ।
समङ्गा धातकी लोध्रं विल्वं दीपनपाचनम् ॥ ८ ॥
हन्त्यरोचकपिच्छामं विबन्धं सातिवेदनम् ।
सशोणितमतीसारं सज्वरं वाऽथ विज्वरम् ॥ ९ ॥

पञ्चमूल्यादिः ।—

पञ्चमूलीबलाविल्व-गुडूचीमुस्तनागरैः ।
पाठाभूनिम्बह्रीबेर-कुटजत्वक्फलैः शृतम् ॥ १० ॥
हन्ति सर्वानतीसारान् ज्वरदोषं वमिं तथा ।
सशूलोपद्रवं श्वासं कासं हन्यात् सुदारुणम् ॥ ११ ॥

कलिङ्गादिः ।—

कलिङ्गातिविषाशुण्ठी-किराताम्बुयवासकम् ।
ज्वरातीसारसन्तापं नाशयेदविकल्पतः ॥ १२ ॥

वत्सकादिः श्वदंष्ट्रादिश्च ।—

वत्सकस्य फलं दारु रोहिणी गजपिप्पली ।

---

गुडूचीत्यादि ।—गुडूच्यादौ कुटजेन तत्फलं, लघुत्वात् पाचनत्वाच्च । अयं योगः पित्तश्लेष्मणोरपि व्याचक्षते ॥ ६।७ ॥

उशीरमित्यादि ।—यद्यपि समङ्गाशब्देन मञ्जिष्ठाऽप्युच्यते, तथाऽपि वराहक्रान्तयैव व्यवहरन्ति वृद्धाः ॥ ८।९ ॥

पञ्चमूलीत्यादि ।—यद्यपि—"पञ्चमूलीति सामान्यात् योज्या पित्ते कनीयसी । महती पञ्चमूलीति वातश्लेष्माधिके तथा ॥" इति वृन्देनोक्तं, तथाऽपि स्वल्पपञ्चमूल्यैव व्यवहरन्ति वृद्धाः ॥ १०।११ ॥

श्वदंष्ट्रा पिप्पली धान्यं विल्वं पाठा यमानिका ॥ १३ ॥
द्वावप्येतौ सिद्धयोगौ श्लोकार्द्धेनाभिभाषितौ।
ज्वरातीसारशमनौ विशेषाद्दाहनाशनौ ॥ १४ ॥

नागरादिः।—

नागरामृतभूनिम्ब-विल्ववालकवत्सकैः।
समुस्तातिविषोशीरैर्ज्वरातीसारहृज्जलम् ॥ १५ ॥

मुस्तकादिः।—

मुस्तकविल्वातिविषा-पाठाभूनिम्बवत्सकैः क्वाथः।
मकरन्दगर्भयुक्तौ ज्वरातीसारौ जयेत् घोरौ ॥ १६ ॥

घनादिः।—

घनजलपाठाऽतिविषा-पथ्योत्पलधान्यरोहिणीविश्वैः।
सेन्द्रयवैः कृतमम्भः सातीसारं ज्वरं जयति ॥ १७ ॥

कलिङ्गाद्यगुडिका।—

कलिङ्गविल्वजम्ब्वाम्र-कपित्थं सरसाञ्जनम्।
लाक्षां हरिद्रे ह्रीवेरं कट्फलं शुकनासिकाम् ॥ १८ ॥
लोध्रं मोचरसं शङ्खं धातकीवटशुङ्गकम्।
पिष्ट्वा तण्डुलतोयेन वटकानक्षसम्मितान् ॥ १९ ॥
छायाशुष्कान् पिवेत्क्षौद्रं ज्वरातीसारशान्तये।
रक्तप्रसादनाश्चैते शूलातीसारनाशनाः ॥ २० ॥

उत्पलादि चूर्णम्।—

उत्पलं दाड़िमत्वक् च पद्मकेशरमेव च।

---

कलिङ्गेत्यादि।—कलिङ्गादि यमानिकान्तं योगद्वयं पित्तोत्तरे इत्याहुः ॥१२—१४॥

नागरेत्यादि।—नागरामृतभूनिम्बेत्यादि जयतीत्यन्तं स्पष्टम् ॥ १५—१७ ॥

कलिङ्गेत्यादि।—अत्र हारीत-चन्द्राटसंवादात् कलिङ्गस्थाने कट्वङ्गं पठन्ति; कट्वङ्गस्य श्योणाकः। जम्ब्वाम्रफलयोरस्थि ग्राह्यम्। हरिद्रे इति—हरिद्राद्वयम्। तण्डुलोदकञ्च—"जलमष्टगुणं दत्त्वा पलं काण्डिततण्डुलात्। भावयित्वा ततो ग्राह्यं तण्डुलोदककर्मणि॥" इत्यनेन ग्राह्यम्। शुकनासिका चर्मकारवटकः॥ १८—२० ॥

उत्पलमित्यादि।—दाड़िमफलस्य त्वक्, "फलं स्याद्दाड़िमादीनाम्" इति

पिबेत् तण्डुलतोयेन ज्वरातीसारनाशनम् ॥ २१ ॥

व्योषाद्यं चूर्णम्।—

व्योषं वत्सकबीजञ्च निम्बभूनिम्बमार्कवम्।
चित्रकं रोहिणीं पाठां दार्वीमतिविषां समाम् ॥ २२ ॥
श्लक्ष्णचूर्णीकृतान् सर्वांस्तत्तुल्यां वत्सकत्वचम्।
सर्वमेकत्र संयुज्य प्रपिबेत् तण्डुलाम्बुना ॥ २३ ॥
सक्षौद्रं वा लिहेदेतत् पाचनं ग्राहि भेषजम्।
तृष्णारुचिप्रशमनं ज्वरातीसारनाशनम् ॥ २४ ॥
कामलां ग्रहणीदोषान् गुल्मं प्लीहानमेव च।
प्रमेहं पाण्डुरोगञ्च श्वयथुञ्च विनाशयेत् ॥ २५ ॥

सशोथज्वरातीसारे दशमूलीक्वाथः।—

दशमूलीकषायेण विश्वमक्षसमं पिबेत्।
ज्वरे चैवातिसारे च सशोथे ग्रहणीगदे ॥ २६ ॥

---

वचनात्। एवमन्यत्रापि बोध्यम्; अन्ये हृत्त्वचमाहुः। पद्मस्य केशरः किञ्जल्कः। चरके पित्तोत्तरे योगोऽयमित्याहुः ॥ २१ ॥

व्योषमित्यादि।—तत्तुल्यां वत्सकत्वचमिति—मिलितव्योषादिचूर्णतुल्याम् ॥२२—२५॥

दशमूलीत्यादि।—अत्र प्रक्षेप्यस्य शुण्ठीचूर्णस्य यत् कर्षमानत्वमुक्तं, तत् क्वाथ्यस्य दशमूलस्य पलद्वयामुत्तममात्रामपेक्ष्य; तेन मध्यमाधममात्रानुसारेण शुण्ठीचूर्णस्य ह्रासोऽपि बोध्यः; तेनात्र "प्रक्षेपः पादिकः क्वाथ्यात्" इत्येव परिभाषा प्रवर्त्तते, न तु "पातव्यश्च चतुर्द्रवः" इति वचनात् विश्वचूर्णापेक्षया दशमूलीक्वाथश्चतुर्गुणः कार्य्यः; यतः विश्वचूर्णापेक्षया दशमूलस्य पाचनदीपनत्वेन यौगिकत्वात् प्राधान्यम्। अपि च क्वाथकरणं हि क्वाथ्यमानापेक्षं, क्वाथ्यमानञ्च उत्तमपुरुषाद्यपेक्षम्; अतएव पल-बिकर्षार्द्धपलमानमुत्सर्गतो व्यवस्थितमस्त्येव, तदपेक्षस्य च क्वाथ्यस्य उत्तमपुरुषाद्य-पेक्षया व्याधिनिवृत्त्यै प्रयुज्यमानस्य न्यूनत्वकरणे भेषजस्याल्पमात्रत्वदोषात् व्याधि-निवृत्तिरेव न स्यादिति विपक्षे दोषदर्शनात् यथाऽवस्थितचतुर्भागावशिष्टक्वाथप्रयोगाच्च क्वाथस्यैव प्रधानता, ततश्च यदि "पातव्यश्च चतुर्द्रवः" इत्यनुसारात् विश्वचूर्णापेक्षया दशमूलीक्वाथश्चतुर्गुणो गृह्यते, तदा प्रधानस्य क्वाथस्य न्यूनता स्यात्; चतुर्भागावशिष्ट-

सशोथज्वरातीसारे विड़ङ्गादिः।—

विड़ङ्गातिविषामुस्तं दारुपाठाकलिङ्गकम्।
मरिचेन समायुक्तं शोथातिसारनाशनम्॥ २७॥

सशोथज्वरातीसारे किरातादिः।—

किराताब्दामृताविश्व-चन्दनोदीच्यवत्सकैः।
शोथातिसारशमनं विशेषाज्ज्वरनाशनम्॥ २८॥

सशोथज्वरातीसारे किरातादिः।—

किराताब्दामृतोदीच्य-मुस्तचन्दनधान्यकैः।
शोथातिसारहृड्दाह-शमनो ज्वरनाशनः॥ २९॥

इति ज्वरातिसारचिकित्सा।

---

## अथातीसार-चिकित्सा।

आमपक्वलक्षणस्य अवश्यज्ञेयत्वनिर्देशः।—

आमपक्वक्रमं हित्वा नातिसारे क्रिया यतः।
अतः सर्वातिसारेषु ज्ञेयं पक्वामलक्षणम्॥ १॥

---

क्वाथानुसारेण वा यदि चतुर्भागं चूर्णं गृह्यते, तदा चूर्णबाहुल्यं स्यादिति ; तेन यत्र क्वाथेन चूर्णपानं, तत्र "प्रक्षेपः पादिकः क्वाथ्यात्" इत्यस्यैव विषयः, न तु "पातव्यश्च चतुर्द्रवः" इत्यस्येति सिद्धः। एवमन्यत्रापि क्वाथेन चूर्णस्य कल्कस्य वा पाने क्वाथस्य प्राधान्यमनुमन्तव्यम्। अत एव वृषकादिचूर्णे वृन्दोऽप्याह—"क्वाथेन चूर्णपानं यत् तत्र क्वाथप्रधानता ; प्रवर्त्तते न तेनात्र चूर्णापेक्षी चतुर्द्रवः॥" इति। चूर्णापेक्षी चूर्णसानापेक्षीत्यर्थः॥ २६।२७॥

किरातेत्यादि।—स्पष्टम्॥ २८।२९॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां ज्वरातीसारचिकित्साविवृतिः।

---

ज्वरोपद्रवस्यातीसारस्य चिकित्सामभिधाय सम्प्रति स्वतन्त्रस्यातीसारस्य चिकित्सामाह, आमेत्यादि सुश्रुतस्य।—क्रिया चिकित्सा॥ १॥

आमपक्वयोः लक्षणे।—

मज्जत्यामा गुरुत्वाद्विट् पक्वा तूत्प्लवते जले।
विनाऽतिद्रवसङ्घात-शैत्यश्लेष्मप्रदूषणात्॥ २॥

आमपक्वयोः लक्षणे।—

शकृत् दुर्गन्धि साटोप-विष्टम्भार्त्तिप्रसेकिनः।
विपरीतं निरामन्तु कफात् पक्वञ्च मज्जति॥ ३॥

आमातीसारस्य चिकित्साक्रमः।—

आमे विलङ्घनं शस्तमादौ पाचनमेव च।
कार्य्यञ्चानशनस्यान्ते प्रद्रवं लघुभोजनम्॥ ४॥

आमातीसारे लङ्घनस्य उपयोगिता।—

लङ्घनमेकं मुक्त्वा न चान्यदस्तीह भेषजं बलिनः।

---

आमपक्वलक्षणमाह, मज्जतीत्यादि चरकस्य।—आमेति—आमान्विता विट् जले मज्जति, गुरुत्वादिति—आमाहितगुरुत्वात्। पक्वेति—निरामा, उत्प्लवते निरामत्वेन लघुत्वादित्यर्थः। द्वयोरप्यामपक्वलक्षणयोरपवादमाह, विनातिद्रवेत्यादि—अतिद्रवत्वात् आमाऽपि प्लवते, तथा अतिसङ्घातात् अतिकाठिन्यात् पक्वाऽपि मज्जति, तथा शैत्यश्लेष्मप्रदूषणात् कफसम्बन्धकृतगौरवेण पक्वाऽपि मज्जति। शैत्यस्थाने श्वैत्यपाठे—श्वेतवर्णता। एतेनातिद्रवत्वादिकं विना मज्जनोत्प्लवने सामनिरामलक्षणतया ज्ञेये इत्यर्थः॥ २॥

सामत्वनिरामत्वयोः सम्यग्ज्ञानार्थमपरमपि लक्षणमाह, शकृदित्यादि।—साटोपविष्टम्भावेवार्त्ती तत्सहितम्; किंवा आर्त्तिः शूलम्; आटोपो रुजापूर्वक उदरक्षोभः, विष्टम्भः सतोदशूलमलाप्रवृत्तिः, प्रसेकिनः कफप्रसेकिनः, किंवा प्रसेकः स्तोकस्तोकमलनिःसरणम्। कफात् पक्वञ्च मज्जतीत्यस्य तन्त्रान्तरीयवचनत्वान्न पौनरुक्त्यमाशङ्कनीयम्, इह तु सम्पूर्णश्लोकानुरोधात् पठितम्॥ ३॥

आमे इत्यादि।—प्रद्रवमिति—प्रकृष्टद्रवम्; प्रकर्षश्चात्र शास्त्रविहितत्वेन ज्ञेयः; तेनाविहितद्रवान्ननिषेधार्थं विहितलाजमण्डादिविधानार्थञ्च प्र-शब्दोपादानं ज्ञेयम्; अतः—“वर्जयेत् वैदलं शूली कुष्ठी मांसं क्षयी स्त्रियम्। द्रवमन्नमतीसारी सर्वञ्च तरुणज्वरी॥” इत्यादि वचनेन सहात्र न विरोधः। अन्ये तु—प्रगतद्रवमिति व्याख्याय विरोधं परिहरन्ति। अपरे तु—निपातस्यानेकार्थत्वात् प्र-शब्दस्य ईषदर्थतां व्याख्यानयन्ति। अन्ये तु—केवलद्रवस्यैव निषेधो न तु लाजमण्डादेरित्याहुः॥ ४॥

समुदीर्णं दोषचयं शमयति तत् पाचयत्यपि च ॥ ५ ॥

ह्रीबेरादिपानीयद्वयम् ।—

ह्रीबेरशृङ्गबेराभ्यां मुस्तपर्पटकेन वा ।
मुस्तोदीच्यशृतं तोयं देयं वाऽपि पिपासवे ॥ ६ ॥

अन्नदानविधिः ।—

युक्तेऽन्नकाले क्षुत्क्षामं लघून्यन्नानि भोजयेत् ॥ ७ ॥

अन्नम् ।—

औषधसिद्धाः पेया लाजानां शक्तवोऽतिसारहिताः ।
वस्त्रप्रस्रुतमण्डः पेया च मसूरयूषश्च ॥ ८ ॥

संस्कारभेदेन शक्तोः गुणाः ।—

गुर्वी पिण्डी खराऽत्यर्थं लघ्वी सैव विपर्य्ययात् ।
शक्तूनामाशु जीर्य्येत मृदुत्वादवलेहिका ॥ ९ ॥

पेयादिसाधनार्थं बृहच्छालपर्ण्यादिः ।—

शालपर्णी पृश्निपर्णी बृहती कण्टकारिका ।
बलाश्वदंष्ट्राबिल्वानि पाठानागरधान्यकम् ॥
एतदाहारसंयोगे हितं सर्वातिसारिणाम् ॥ १० ॥

---

लङ्घनपाचनधर्मध्ये लङ्घनस्य प्राधान्यमाह, लङ्घनमित्यादि ।—स्पष्टम् ॥ ५ ॥

ह्रीबेरेत्यादि ।—योगद्वयं षडङ्गविधिना षडङ्गशृतं बोध्यम् । उदीच्यं बालकम् ॥ ६।७ ॥

प्रद्रवं लघुभोजनमिति यदुक्तं तदेव दर्शयति, औषधसिद्धा इत्यादि ।—औषधं वक्ष्यमाणशालपर्ण्यादि-धान्यपञ्चकादिकम् । पेया चेति—पेया च वस्त्रप्रस्रुतेत्यर्थः ; अत एवोक्तं,—"वस्त्रस्रुता यवागूर्वाऽप्रस्रुतक्षुद्रभक्तकम्" इति ॥ ८ ॥

गुर्वीत्यादि ।—अत्यर्थं खरा कठिना शक्तुपिण्डिका गुर्वी स्यात् । सैव विपर्य्ययादिति—मृद्वी सा लघ्वी भवति । अवलेहिका अवलेहयोग्या पिण्डी ॥ ९ ॥

शालपर्ण्यादि ।—बृहच्छालपर्ण्यादौ बिल्वानि बिल्वशलाटवः सङ्ग्राहित्वात् ; यदुक्तं—"कफानिलहरं तीक्ष्णं स्निग्धं सङ्ग्राहि दीपनम् । कटुतिक्तकषायोष्णं बिल्वानामुदाहृतम् ॥" इति । एवं सर्वत्र लङ्घनयोगे बोध्यम् । क्वचित्तु बिल्वस्य मूलं

पेयासाधनार्थं स्वल्पशालपर्ण्यादिः।—

शालपर्णीबलाविल्वैः पृश्निपर्ण्या च साधिता।
दाडिमाम्ला हिता पेया पित्तश्लेष्मातिसारिणाम्॥ ॥११॥

यवागूप्रयोगे व्यञ्जनानामपकारिता।—

यवागूमुपभुञ्जानो न तु व्यञ्जनमाचरेत्।
शाकमांसफलैर्युक्ता यवाग्वोऽम्लाश्च दुर्जराः॥ १२॥

वातकफातिसारे आहारविधिः।—

धान्यपञ्चकसंसिद्धो धान्यविश्वकृतोऽथवा।
आहारो भिषजा योज्यो वातश्लेष्मातिसारिणाम्॥ १३॥

वातपित्तातिसारे कफातिसारे च आहारविधिः।—

वातपित्ते पञ्चमूल्या कफे वा पञ्चकोलकैः॥ १४॥

तृष्णादियुक्तातीसारे पानीयविधिः आहारविधिश्च।—

धान्योदीच्यशृतं तोयं तृष्णादाहातिसारनुत्।
आभ्यामेव सपाठाभ्यां सिद्धमाहारमाचरेत्॥ १५॥

अवस्थाविशेषे मलप्रवर्त्तनविधिः।—

दोषाः सन्निचिता यस्य विदग्धाहारमूर्च्छिताः।
अतिसाराय कल्पन्ते भूयस्तान् सम्प्रवर्त्तयेत्॥ १६॥

---

ज्ञेयं—"विल्वमूलं मरुत्श्लेष्म-च्छर्दिघ्नं न तु पित्तकृत्" इति गुणपाठात्। आहारसंयोगे इति—आहारस्य संयोजने, संस्कारे इति यावत्। सर्वातिसारिणामिति—आमपच्यमानपक्वातिसारिणां, प्रत्येक द्वन्द्व-सन्निपातातिसारिणां वा॥ १०॥

शालपर्णीत्यादि।—स्वल्पशालपर्ण्यादिः वाग्भटस्य॥ ११॥

यवागूमित्यादि।—यवाग्वोऽम्ला इति—अम्ला अम्लविपाकाः॥ १२॥

धान्यपञ्चकेत्यादि।—स्पष्टम्॥ १३॥

वातपित्ते इत्यादि।—पञ्चमूल्या इति—स्वल्पपञ्चमूल्या॥ १४॥

धान्योदीच्येत्यादि।—आभ्यामिति—धान्योदीच्याभ्याम्॥ १५॥

दोषा इत्यादि।—सन्निचिता इति—सञ्चयं प्राप्ताः। विदग्धशब्देनात्राविपक्वाहारवाचिना चतुर्विधमप्याम-विदग्ध-विष्टब्ध रसशेषरूपमजीर्णमुच्यते। मूर्च्छिता

आमातीसारे सङ्ग्राहिभेषजस्य अपकारिता ।—

न तु सङ्ग्रहणं दद्यात् पूर्वमामातिसारिणे ।
दोषा ह्यादौ रुध्यमाना जनयन्त्यामयान् बहून् ॥ १७ ॥
शोथपाण्ड्वामयप्लीह-कुष्ठगुल्मोदरज्वरान् ।
दण्डकालसकाध्मान-ग्रहण्यर्शोगदांस्तथा ॥ १८ ॥

अवस्थाविशेषे आमेऽपि सङ्ग्राहिभेषजस्य प्रयोगार्हता ।—

क्षीणधातुबलार्त्तस्य बहुदोषोऽतिनिस्रुतः ।
आमोऽपि स्तम्भनीयः स्यात् पाचनान्मरणं भवेत् ॥ १९ ॥

अवस्थाविशेषे विरेचनविधिः ।—

स्तोकं स्तोकं विबद्धं वा सशूलं योऽतिसार्य्यते ।
अभयापिप्पलीकल्कैः सुखोष्णैस्तं विरेचयेत् ॥ २० ॥

आमशूलादौ धान्यपञ्चकम् ।—

धान्यकं नागरं मुस्तं बालकं विल्वमेव च ।
आमशूलविबन्धघ्नं पाचनं वह्निदीपनम् ॥ २१ ॥

---

इति—वर्द्धिताः । सम्प्रवर्त्तयेदिति—स्वयं प्रवर्त्तमानदोषस्य उपेक्षया प्रवर्त्तनं कारयेत्; उक्तं हि.—"तेषूपेक्षैव भेषजम्" (वा० चि० ९ अ०) इति, तथा स्तोकं स्तोकं विबद्धं वा विरेचनयोगेन प्रवर्त्तयेत्; अत एव वक्ष्यति "स्तोकं स्तोकं विबद्धं वा" इत्यादि ॥ १६ ॥

नेत्यादि ।—न तु सङ्ग्रहणमित्यादौ पूर्वमिति विशेषणेनोत्तरकालमामातिसारिणेऽपि अतिनिस्रुतबहुदोषतया क्षीणधातवे सङ्ग्रहणं देयमिति दर्शयति; अत एव वक्ष्यति "क्षीणधातुबलार्त्तस्य" इति । अन्ये तु—पूर्वं सङ्ग्रहणं न देयमिति वचनेन प्रधानमम्बष्ठाशाल्मलकुटजत्वगादिसङ्ग्रहणं न देयमिति बोधयति; कुस्तोदीच्यादि तु पाचनं सङ्ग्रहणञ्च यत्, पूर्वमपि देयमेवेत्याहुः ॥ १७।१८ ॥

अवस्थायामामेऽपि सङ्ग्रहणं देयमित्याह, क्षीणेत्यादि ।—पाचनादिति—केवलपाचनात्, पाचनस्तम्भनन्तु हितमेव ॥ १९ ॥

विरेचनावस्थामाह, स्तोकमित्यादि सुश्रुतस्य ।—अभयापिप्पलीकल्कस्य सुखोष्णता कदुष्णयोगेन ज्ञेया ॥ २० ॥

धान्यकमित्यादि ।—अयं योगः सामपित्ते बोध्यः; यदुक्तमायुर्वेदसारे—"बिल्व,

धान्यचतुष्कम्।—

इदं धान्यचतुष्कं स्यात् पित्ते शुण्ठीं विना पुनः ॥ २२ ॥

प्रमथ्याद्वयम्।—

पिप्पलीं नागरं धान्यं भूतीकञ्चाभयां वचाम्।
ह्रीवेरभद्रमुस्तानि बिल्वं नागरधान्यकम् ॥ २३ ॥
पृश्निपर्णी श्वदंष्ट्रा च समङ्गा कण्टकारिका।
तिस्रः प्रमथ्या विहिताः श्लोकार्द्धैरतिसारिणाम् ॥
कफे पित्ते च वाते च क्रमादेताः प्रकीर्त्तिताः ॥ २४ ॥

प्रमथ्याया अर्थः।—

संज्ञा प्रमथ्या ज्ञातव्या योगे पाचनदीपने ॥ २५ ॥

---

बिल्व-घनोदीच्य-धान्यकैः क्वथितं जलम्। सामपित्तातिसारघ्नं दीपनं धान्यपञ्चकम् ॥" इति ॥ २१ ॥

धान्यपञ्चकं यदुक्तं तत् शुण्ठीव्यतिरेकेण कर्त्तव्यमित्येतदर्थमाह—इदं धान्यचतुष्कं स्यादित्यादि। भोजेऽप्युक्तं—"धान्यकं बालकं मुस्तं बिल्वं पित्ते प्रयोजितम्। आमशूलविबन्धघ्नं पाचनं वह्निदीपनम् ॥" इति। तथा चान्यत्राप्युक्तं—"धान्यकं बालकं मुस्तं बिल्वं पित्ते तु दीपनम्। आमशूलविबन्धघ्नं पाचनं नागरान्वितम् ॥" इति ॥ २२ ॥

पिप्पलीमित्यादि प्रमथ्याद्वयं चरकस्य।—अत्र भूतीकं यमानी। भद्रमुस्तं मुस्तकमेव। समङ्गा वराहक्रान्ता। एतास्तिस्रः प्रमथ्याः यथाक्रमं कफ-पित्त-वातेष्विति चरकटीकाकृतो व्याचक्षते; अतस्तमेवार्थं चक्रोऽप्याह,—कफे पित्ते चेत्यादि। यद्यपि ह्रीवेरमित्यादि द्वितीया योगो धान्यपञ्चकमेव, तथाऽपि तस्यैव प्रमथ्यासंज्ञाविधानार्थं पुनश्चरकवाक्यं लिखितम्। न च वाच्यं प्रमथ्यामध्यपठितं ह्रीवेरमित्यादिकमेवास्तु, किं धान्यपञ्चकयोगस्य पृथक् कथनेन? सत्यम्; धान्यपञ्चकसंज्ञया हि शास्त्रव्यवहारः कर्त्तव्यः; यथा—धान्यपञ्चकसंसिद्ध इत्यादि, तथा शुण्ठीरहितस्य तस्यैव धान्यचतुष्कसंज्ञयाऽपि; अत एतद्विशेषकथनार्थमेव तस्य पृथक् कथनमिति ज्ञेयम् ॥ २३।२४ ॥

संज्ञा प्रमथ्येत्यादि।—प्रमथ्याशब्दो हि वृद्धपरम्परया पाचनदीपनकषाये वैद्यशास्त्रे परिभाषितः श्रूयते; यथा विडङ्गकषायः शेखरिककषायशब्देन वैद्यैरुच्यते इति ॥ २५ ॥

आमातीसारे नागरादि चूर्णम्।—

नागरातिविषाहिङ्गु-वलासौवर्चलाभयाः।

पीत्वोष्णेनाम्भसा हन्यादामातीसारमुद्धतम्॥ २६॥

आमातीसारे पिप्पलीमूलादि चूर्णम्।—

अथवा पिप्पलीमूल-पिप्पलीद्वयचित्रकान्॥ २७॥

श्लेष्मातीसारे सौवर्चलादि चूर्णम्।—

सौवर्चलवचाव्योष-हिङ्गुप्रतिविषाभयाः।

पिवेत् श्लेष्मातिसारार्त्तश्चूर्णिताश्चोष्णवारिणा॥ २८॥

आमातीसारे हरिद्रादिवचादिप्रयोगोपदेशः।—

हरिद्रादिं वचादिं वा पिवेदामेषु बुद्धिमान्॥ २९॥

खडादिषु पिप्पल्यादिप्रयोगोपदेशः।—

खड़यूषयवागूषु पिप्पल्यादिं प्रयोजयेत्॥ ३०॥

खड़यूषः।—

तक्रं कपित्थचाङ्गेरी-मरिचाजाजिचित्रकैः।

सुपक्वः खड़यूषोऽयम्— ॥ ३१॥

काम्बलिकः।—

—अयं काम्बलिकोऽपरः।

---

नागरेत्यादि।—नागरादीनां चूर्णम्॥ २६॥

अथवेत्यादि।—अथवेत्यादि-चित्रकान्त एको योगः॥ २७॥

सौवर्चलेत्यादि।—प्रतिविषा अतिविषा॥ २८॥

हरिद्रादिमित्यादि।—हरिद्रादि-वचादिगणौ सौश्रुतौ; यदाह—"हरिद्रा-दारुहरिद्रा-कलसी-कुटजवीजानि मधुकञ्चेति"। "वचा मुस्ताऽतिविषाऽभया भद्रदारु नागकेशरञ्चेति" (सू० ३८ अ०)॥ २९॥

खड़यूषेत्यादि।—पिप्पल्यादिश्च सौश्रुतो गणो ज्वराधिकारे चक्रेणैवोक्तः॥ ३०॥

खड़यूषमाह, तक्रमित्यादि।—अयञ्च यूषः "कषाङ्गैं वा कषायपष्ठोः कल्कद्रव्यस्य वा पलम्" इत्यादिना बोध्यः; तेन तीक्ष्णवीर्य्याणां मरीचाजाजीचित्रकाणामल्पमानत्वं, कपित्थचाङ्गेर्य्योस्तु मध्यवीर्य्यत्वात् बहुमानत्वं, तक्रस्य तु प्रस्थमानत्वं कल्पनीयम्। यूषयोनित्वाच्च मुद्गोऽपि देयः॥ ३१॥

दध्यम्लो लवणस्नेह-तिलमाषसमन्वितः ॥ ३२ ॥

तृष्णादियुक्तातीसारे नागरादिधान्यादिक्वाथौ।—

नागरातिविषामुस्तैरथवा धान्यनागरैः।
तृष्णातीसारशूलघ्नं पाचनं दीपनं लघु ॥ ३३ ॥

आमाद्यतीसारे पाठादिः।—

पाठावत्सकबीजानि हरीतक्यो महौषधम्।
एतदामसमुत्थानमतीसारं सवेदनम्।
कफात्मकं सपित्तञ्च वर्चो बध्नाति च ध्रुवम् ॥ ३४ ॥

आमातीसारे मुस्तकक्षीरम्।—

पयस्युत्क्वाथ्य मुस्ता वा विंशतिं भद्रकाह्वयाः।
क्षीरावशिष्टं तत् पीतं हन्यादामं सवेदनम् ॥ ३५ ॥

अवस्थाविशेषे शीघ्रं स्तम्भनप्रयोगोपदेशः।—

पक्वोऽसकृदतीसारो ग्रहणीमार्दवात् यदा।
प्रवर्त्तते तदा कार्य्यः क्षिप्रं साङ्ग्राहिको विधिः ॥ ३६ ॥

वातातिसारे पञ्चमूल्यादिः।—

पञ्चमूलीबलाविश्व-धान्यकोत्पलविल्वजाः।

---

तथैव दध्यादियोगात् काम्बलिकसंज्ञामाह, अयमित्यादि।—दध्यम्ल इति—दध्ना अम्लीकृतः ॥ ३२ ॥

नागरैत्यादि।—नागरादौ शृतमिति शेषः; उक्तं हि चरके,—"नागरातिविषामुस्त-क्वाथः स्यादामपाचनः" ( चि० ग्रहणी० ) इति ॥ ३३ ॥

पाठेत्यादि सुश्रुतस्य।—अयं योगः क्वाथेन चूर्णेन वा प्रेयः; यतोऽयं योगः सुश्रुते विंशतियोगमध्ये पठितः, तदनन्तरं सुश्रुतेनैवोक्तं यथा—"प्रयोज्या विंशतिर्योगाः श्लोकार्द्धविहितास्त्वमी। धान्याम्लोष्णाम्बुमद्यानां पिबेदन्यतमेन वा ॥ निःक्वाथान् वा पिबेदेषां सुखोष्णान् साधुसाधितान् ॥" ( उ० ४० अ० ) इति ॥ ३४ ॥

पयसीत्यादि।—पयस्युत्क्वाथ्येत्यादौ त्रिगुणोदकं बोध्यम्; यदाह वाग्भटः,—"पयस्युत्क्वाथ्य मुस्ता वा विंशतिं त्रिगुणेऽम्भसि" ( चि० ९ अ० ) इत्यादि। अत्र छागदुग्धमित्याहुर्वृद्धाः ॥ ३५ ॥

पक्व इत्यादि।—स्पष्टम् ॥ ३६ ॥

वातातिसारिणे देयास्तक्रेणान्यतमेन वा ॥ ३७ ॥

कच्छटादिः।—

कच्छटजम्बूदाडिम-शृङ्गाटकपत्रबिल्वह्रीबेरम्।
जलधरनागरसहितं गङ्गामपि वेगिनीं रुन्ध्यात् ॥ ३८ ॥

नाभिपूरणम्।—

कृत्वाऽऽलवालं सुदृढं पिष्टैर्वाऽऽमलकैर्भिषक्।
आर्द्रकस्वरसेनाशु पूरयेन्नाभिमण्डलम् ॥
नदीवेगोपमं घोरमतीसारं निरोधयेत् ॥ ३९ ॥

पित्तातिसारे किराततिक्तकादिचूर्णम्।—

किराततिक्तकं मुस्तं वत्सकं सरसाञ्जनम्।
पित्तातिसाररोगघ्नं सक्षौद्रं वेदनापहम् ॥ ४० ॥

---

पञ्चमूलीत्यादि।—अत्र पञ्चमूली स्वल्पा महती वा। धान्यकोत्पलबिल्वजा इति—बिल्वजा बिल्वशलाटवः। अन्ये तु—बिल्वजा इत्यनन्तरं कल्पना इति शेषः; तेनाविशेषात् सर्वकल्पनैव कार्य्येत्याहुः, तन्न; स्वरसस्य असम्भवात् तत्कल्पनाया गुरुत्वाच्च; अत एव कल्कोऽपि न, पारिशेष्यात् कषायचूर्णौ वा योग्यत्वादित्याहुः। अन्यतमेनेति—काञ्जिकजलादीनामन्यतमेन। क्वाथपक्षे तक्रादौ अर्द्धजलं देयम् ॥ ३७ ॥

कच्छटेत्यादि।—कच्छटादीनां चतुर्णां पत्रम्। नागरान्तैरष्टभिः कषायः ॥३८॥

कृत्वेत्यादि।—स्पष्टम् ॥ ३९ ।

किराततिक्तकमित्यादि।—अत्र तण्डुलोदकमपि बोध्यम्; तेन एषां चूर्णं मधुसहिततण्डुलोदकेन पिबेदित्यर्थः; तदाह वाग्भटः,—"किराततिक्तकं मुस्तं वत्सकं सरसाञ्जनम्। कटङ्कटेरी ह्रीबेरं बिल्वमध्यं दुरालभा॥ तिला मोचरसो लोध्रं समङ्गा कमलोत्पलम्। नागरं धातकीपुष्पं दाडिमस्य त्वगुत्पलम्॥ अर्द्धश्लोकैः स्मृता योगाः सक्षौद्रास्तण्डुलाम्बुना॥" (चि० ९ अ०) इति। चरकेऽप्युक्तं—"किराततिक्तकं मुस्तं वत्सकः सरसाञ्जनः। बिल्वं दारुहरिद्रा च त्वक् ह्रीबेरं दुरालभाम्॥ चन्दनञ्च मृणालञ्च नागरं लोध्रमुत्पलम्। तिला मोचरसो लोध्रं समङ्गा कमलोत्पलम्॥ नागरं धातकीपुष्पमुत्पलं दाडिमत्वचः। कट्फलं नागरं पाठा जम्ब्वाम्रास्थि दुरालभा॥ योगाः षडेते सक्षौद्रास्तण्डुलोदकसंयुताः। पेयाः पित्तातिसारघ्नाः श्लोकार्द्धैस्तु निदर्शिताः॥" (चि० अतीसा०) इति। निश्चलस्तु किरातेत्यादौ क्वाथयित्वेति शेष इत्याह ॥ ४० ॥

पित्तातिसारे इन्द्रयवक्वाथः।—

पलं वत्सकवीजस्य श्रपयित्वा जलं पिबेत्।
यो रसाशी जयेच्छीघ्रं स पैत्तं जठरामयम् ॥ ४१ ॥

पित्तातिसारे मधूकादि चूर्णम्।—

मधुकं कट्फलं लोध्रं दाड़िमस्य फलत्वचम्।
पित्तातीसारे मध्वाक्तं पाययेत् तण्डुलाम्बुना ॥ ४२ ॥

पित्तश्लेष्मातिसारे कुटजादिः।—

कुटजातिविषामुस्तं हरिद्रापर्णिनीद्वयम्।
सक्षौद्रशर्करं शस्तं पित्तश्लेष्मातिसारिणाम् ॥ ४३ ॥

कुटजादिः।—

कुटजत्वक्फलं मुस्तं क्वाथयित्वा जलं पिबेत्।
अतीसारं जयत्याशु शर्करामधुयोजितम् ॥ ४४ ॥

छर्द्यतीसारे विल्वादिः।—

विल्वचूताम्थिनिर्य्यूहः पीतः सक्षौद्रशर्करः।
निहन्याच्छर्द्यतीसारं वैश्वानर इवाहुतिम् ॥ ४५ ॥

छर्द्यतीसारे पटोलादिः।—

पटोलयवधन्याक-क्वाथः पेयः सुशीतलः।
शर्करामधुसंयुक्तश्छर्द्यतीसारनाशनः ॥ ४६ ॥

छर्द्यतीसारे प्रियङ्ग्वादिचूर्णम्।—

प्रियङ्ग्वञ्जनमुस्ताख्यं पाययेत्तु यथाबलम्।
तृष्णातिसारच्छर्दिघ्नं सक्षौद्रं तण्डुलाम्बुना ॥ ४७ ॥

---

पलमित्यादि वाग्भटस्य।—रसाशी जाङ्गलमांसरसेन भुञ्जानः ॥ ४१ ॥

मधूकमित्यादि।—चूर्णविधया योगोऽयम् ॥ ४२ ॥

कुटजेत्यादि।—हरिद्राद्वयम्। पर्णिनीद्वयं शालपर्णी-पृश्निपर्ण्यौ। क्वाथेनायं योगः ॥ ४३ ॥

कुटजत्वगित्यादि।—स्पष्टम् ॥ ४४ ॥

विल्वेत्यादि।—ख्यातम् ॥ ४५ ॥

पटोलेत्यादि।—ख्यातम् ॥ ४६ ॥

प्रियङ्ग्वित्यादि।—अञ्जनं रसाञ्जनम्। चूर्णविधया योगोऽयम् ॥ ४७ ॥

वातपित्तातिसारे कलिङ्गकादि चूर्णम्।—

कलिङ्गकवचामुस्तं दारु सातिविषं समम्।
कल्कं तण्डुलतोयेन पिबेत् पित्तानिलामयी॥ ४८॥

सर्वातीसारे कुटजादिः।—

कुटजं दाड़िमं मुस्तं धातकीविल्वबालकम्।
लोध्रचन्दनपाठाश्च कषायं मधुना पिबेत्॥ ४९॥
सामे सशूले रक्तेऽपि पिच्छास्रावेषु शस्यते।
कुटजादिरिति ख्यातः सर्वातिसारनाशनः॥ ५०॥

सर्वातीसारे समङ्गादिः।—

समङ्गाऽतिविषा मुस्तं विश्वं ह्रीवेरधातकी।
कुटजत्वक्फलं विल्वं क्वाथः सर्वातिसारनुत्॥ ५१॥

आमातीसारे योगद्वयम्।—

दलोत्थः स्वरसः पेयो हिज्जलस्य समाक्षिकः।
जयत्यामतीसारं क्वाथो वा कुटजत्वचः॥ ५२॥

सर्वातीसारे योगाः।—

वटारोहन्तु सम्पिष्य श्लक्ष्णं तण्डुलवारिणा।
तत् पिबेत् तक्रसंयुक्तमतीसाररुजापहम्॥ ५३॥
तण्डुलजलपिष्टाङ्कोटमूलकर्षार्द्धपानमपहरति।
सर्वातिसारग्रहणीरोगसमूहं महाघोरम्॥ ५४॥
कल्कः कोमलबब्बोल-दलात् पीतोऽतिसारहा॥ ५५॥

---

कलिङ्गकेत्यादि।—अत्र सातिविषमिति कलिङ्गादिविशेषणम्॥ ४८॥

कुटजं दाड़िममित्यादि।—अत्र दाड़िमफलवल्कलम्॥ ४९।५०॥

समङ्गेत्यादि।—समङ्गा वराहक्रान्ता। क्वाथ इत्यत्र पचामिति शेषः॥ ५१॥

दलोत्थ इत्यादि।—स्पष्टः॥ ५२॥

वटारोहमित्यादि।—अत्र आरोहः अस्याधो भागः। तण्डुलेत्यादि।—सर्वातिसार-ग्रहणीत्यत्र संयोगादेरपि रेफस्य लघुत्वान्न छन्दोभङ्गः; तदुक्तं—"यदा तीव्रप्रयत्नेन संयोगादेरगौरवम्। न छन्दोभङ्गः इत्याहुस्तदा दोषाय सूरयः॥" इति। कल्क इत्यादि।—कोमलबब्बोलदलः बब्बोलकिशलयः॥ ५३—५५॥

सर्वातीसारे कुटजलेहः।—

कुटजत्वक्कृतः क्वाथो घनीभूतः सुशोभनः।
लेहितोऽतिविषायुक्तः सर्वातीसारनुद्भवेत्॥ ५६॥
वदन्त्यष्टमांशेन क्वाथादतिविषारजः।
प्रक्षेप्यत्वात् पादिकन्तु लेहादिति च नो मतिः॥ ५७॥

सर्वातीसारे अङ्कोठवटकः।—

सदार्व्यङ्कोठपाठानां मूलं त्वक् कुटजस्य च।
शाल्मलीशालनिर्य्यास-धातकीलोध्रदाड़िमम्॥ ५८॥
पिष्ट्वाऽक्षसम्मितान् कृत्वा वटकांस्तण्डुलाम्बुना।
तेनैव मधुसंयुक्तानेकैकान् प्रातरुत्थितः॥ ५९॥
पिबेदत्ययमापन्नो विड्विसर्गेण मानवः।
अङ्कोठवटको नाम्ना सर्वातीसारनाशनः॥ ६०॥

---

कुटजेत्यादि।—कुटजत्वक्कृतः क्वाथ इत्यादौ घनीभूत इति—चतुर्थभागावशिष्टः क्वाथ एव पुनः पाकात् तथा घनः कार्य्यः, यथा चूर्णे प्रक्षिप्ते लेहः स्यात्; अत एव सुशोभन इत्युक्तम्। अतिविषाचूर्णं कियद्देयमित्येतदर्थमाह, वदन्तीत्यादि।—चतुर्थभागावशिष्टक्वाथापेक्षया अष्टमांशेनातिविषाचूर्णं देयमिति वदन्ति वृद्धाः। चक्रस्तु स्वमतमाह, प्रक्षेप्यत्वादित्यादि—तदतिविषाचूर्णं पादिकं चतुर्भागावशिष्टक्वाथापेक्षयेत्यर्थः; कुतः? इत्याह, प्रक्षेप्यत्वादिति; लेहादिति ल्यब्लोपे पञ्चमी, लेहमुद्दिश्य प्रक्षेप्यत्वादित्यर्थः; तदुक्तं—"लेहे यत्र तु नो भागो निर्दिष्टो द्रवकल्कयोः। तत्रापि पादिकः कल्को द्रवात् कार्य्यो विजानता॥" इति। "कल्को दृषदि पेषितः" इति हि कल्कलक्षणम्; अतः कल्कशब्देन चूर्णस्यापि ग्रहणम्। द्रवादिति चतुर्भागावशिष्टात्; अतः क्वाथ्यपलचतुष्टये दत्तस्य शरावचतुष्टयजलस्य पादशेषादष्टपले क्वाथे अतिविषाचूर्णपलद्वयमित्यर्थः। लेहाकारीकृतक्वाथापेक्षया पादिकमिति तु न व्याख्येयं, द्रवात् पादिकः कार्य्य इत्युक्तेः। तत्रापि लेहाकारात् द्रवादिति व्याख्याने कष्टकल्पना स्यात्। अतिविषायुक्त इति घनीभूतक्वाथस्य विशेषणम्; तेन क्वाथे घनीभूते अतिविषाचूर्णप्रक्षेप इत्यर्थः। वृद्धवैद्यास्तु मधुनाऽपि लेहं कारयन्ति सायंसमयेऽपि॥ ५६।५७॥

सदार्वीत्यादि।—दार्वी दारुहरिद्रा। अङ्कोठः अङ्कोड़ इति ख्यातस्तरुः, तस्य

रक्तातीसारे ह्रीवेरादिसिद्धा पेया।—

पयस्यर्द्धोदके च्छागे ह्रीवेरोत्पलनागरैः।
पेया रक्तातिसारघ्नी पृश्निपर्ण्या च साधिता॥ ६१॥

रक्तातीसारे रसाञ्जनादि चूर्णम्।—

रसाञ्जनं सातिविषं कुटजस्य फलं त्वचम्।
धातकीशृङ्गवेरञ्च प्रपिबेत् तण्डुलाम्बुना॥ ६२॥
क्षौद्रेण युक्तं नुदति रक्तातिसारमुल्वणम्।
मन्दं दीपयते चाग्निं शूलञ्चापि निवर्त्तयेत्॥ ६३॥

शोथातिसारे विड़ङ्गादिः।—

विड़ङ्गातिविषा मुस्तं दारु पाठा कलिङ्गकम्।
मरिचेन समायुक्तं शोथातिसारनाशनम्॥ ६४॥

सामाद्यतिसारे वत्सकादिः।—

सवत्सकः सातिविषः सबिल्वः सोदीच्यमुस्तश्च कृतः कषायः।
सामे सशूले सहशोणिते च चिरप्रवृत्तेऽपि हितोऽतिसारे॥ ६५॥

---

मूलमेव ; उक्तं हि हारीते—"पलञ्चाङ्कोठमूलस्य पाठां दार्वीञ्च तत्समाम्। पिष्ट्वा तण्डुलतोयेन वटकानचसम्मितान्॥" (२ स्था० ३ अ०) इत्यादि॥ ५८—६०॥

पयस्येत्यादि चरकस्य।—नागरमत्र मुस्तं, न तु शुण्ठी ; "रक्तातिसारे चक्रा-ह्वीरकोष्ट्रीघनकलोत्पलैः" इति जतूकर्णसंवादात्। क्रोष्ट्री पृश्निपर्णी ; अत एव पृश्निपर्ण्यन्त एको योगः। अन्ये तु—"पृश्निपर्ण्या च साधितः" इति पृथक्पाठः ; पृश्नि-पर्णीक्वाथेन साधित इत्यर्थः ; तेनार्द्धोदकच्छागदुग्धं पृश्निपर्णीक्वाथेर्मिलित्वा पाकः कार्य्यः ; उक्तं हि वाग्भटे—"पयस्यर्द्धोदके च्छागे ह्रीवेरोत्पलनागरैः। पेया रक्तातिसारघ्नी पृश्निपर्णीरसान्विता॥" (चि० ९ अ०) इति ब्रुवते॥ ६१॥

रसाञ्जनमित्यादि।—अत्र कुटजस्य फलं त्वक् च ; सुश्रुतेऽप्युक्तं—"रसाञ्जनं सातिविषं त्वग्बीजं कौटजं तथा। धातकीं नागरञ्चैव पाययेत् तण्डुलाम्बुना॥ सशूलं रक्तजं हन्ति योगो मधुसमन्वितः॥" (उ० ४० अ०) इति॥ ६२।६३॥

विड़ङ्गेत्यादि।—अत्र मरिचस्य प्रक्षेप्यत्वमित्याहुः॥ ६४॥

सवत्सक इत्यादि।—वत्सकः कुटजः, तस्य त्वगिति, चन्द्रकलाटीकाकारः वैद्य-प्रसारकश्च। अन्ये तु—"बिल्वशक्रयवाम्भोद-बालकातिविषाकृतः। कषायो हन्त्यतीसारं

रक्तातीसारे दाड़िमादि:।—

कषायो मधुना पीतस्त्वचो दाड़िम-वल्कलात्।
सद्यो जयेदतीसारं सरक्तं दुर्निवारकम्॥ ६६॥

रक्तातीसारे गुड़बिल्वम्।—

गुड़ेन खादयेद्विल्वं रक्तातिसारनाशनम्।
आमशूलविबन्धघ्नं कुक्षिरोगविनाशनम्॥ ६७॥

बिल्वादिकल्कः।—

बिल्वाब्दधातकीपाठा-शुण्ठीमोचरसाः समाः।
पीता रुन्धन्त्यतीसारं गुड़तक्रेण दुर्जयम्॥ ६८॥

रक्तातीसारे षड्योगाः।—

शल्लकीबदरीजम्बु-पियालाम्रार्जुनत्वचः।
पीताः क्षीरेण मध्वाढ्याः पृथक् शोणितनाशनाः॥ ६९॥

रक्तातीसारे जम्ब्वादिस्वरसः।—

जम्ब्वाम्रामलकीनान्तु पल्लवानथ कुट्टयेत्।
सङ्गृह्य स्वरसं तेषामजाक्षीरेण योजयेत्॥
तं पिबेन्मधुना युक्तं रक्तातीसारनाशनम्॥ ७०॥

रक्तातीसारे बिल्वादिकल्कः।—

बिल्वं छागपयःसिद्धं सितामोचरसान्वितम्।

---

सामं पित्तसमुद्भवम्॥" (उ० ४० अ०) इति सुश्रुतसंवादात् फलमेवेत्याहुः, किन्तु प्रायो व्यवहारस्त्वचा, फलेनापि ज्वरे रक्तप्राबल्ये च; यदुक्तं—"कुटजः कफवातासृक्-त्वग्-दोषार्शोऽतिसारजित्। तद्वीजं रक्तपित्ताती-सारज्वरहरं हिमम्॥" इति॥ ६५॥

कषाय इत्यादि।—अत्र दाडिमात् कोमलत्वक्॥ ६६॥

गुड़ेनेत्यादि।—अत्र गुड़बिल्वयोः समभागः, बिल्वञ्च बिल्वशलाटुः, तच्च पानीये-नोत्स्विद्य ग्राह्यम्, उतस्वेदनशेषजलञ्चानुपेयम्॥ ६७॥

बिल्वाब्देत्यादि।—गुड़ेन मधुरीकृतं तक्रं गुड़तक्रम्। पेषणमपि तक्रेण आयुर्वेदसारसंवादात्॥ ६८॥

शल्लकीत्यादि।—अत्र क्षीरमाजं ग्राह्यमित्याहुः॥ ६९॥

जम्ब्वाम्रेत्यादि।—अत्र स्वरस-च्छागक्षीरयोः समभागः। मधुनोऽपि मात्रा चूर्णवदेव, "मात्रा क्षौद्रघृतादीनां स्नेहक्काथेषु चूर्णवत्" इत्युक्तेः॥ ७०॥

कालिङ्गचूर्णसंयुक्तं रक्तातिसारनाशनम् ॥ ७१ ॥

रक्तातीसारे योगः।—

ज्येष्ठाऽम्बुना तण्डुलीयं पीतञ्च ससितामधु ॥ ७२ ॥

रक्तातीसारे शतावरीकल्कः शतावरीघृतञ्च।—

पीत्वा शतावरीकल्कं पयसा क्षीरभुग्जयेत्।
रक्तातिसारी पीत्वा वा तया सिद्धं घृतं नरः ॥ ७३ ॥

रक्तातीसारे कुटजादिरसक्रिया।—

कुटजस्य पलं ग्राह्यमष्टभागजले शृतम्।
तथैव विपचेद्भूयो दाडिमोदकसंयुतम् ॥ ७४ ॥
यावच्चैव लसीकाभं शृतं तमुपकल्पयेत्।
तस्यार्द्धकर्षं तक्रेण पिबेद्रक्तातिसारवान् ॥ ७५ ॥
अवश्यमरणीयोऽपि मृत्योर्याति न गोचरम्।
क्वाथतुल्यं दाड़िमाम्बु भागानुक्तौ समं यतः ॥ ७६ ॥

रक्तातीसारे तिलशर्करा।—

कल्कस्तिलानां कृष्णानां शर्कराभागसंयुतः।

---

बिल्वं छागपयःसिद्धमित्यादि।—बिल्वशलाटूत्स्वेदनयोग्येन छागदुग्धेन किञ्चित्-पानीयसहितेनोत्स्विद्य ततः सितादिना संयोज्य लेह्यम्। अत्र बिल्वशलाटुमाष-काष्टकं, सिताया एकमाषकः, मोचरस-कलिङ्गयोश्चूर्णं मिलित्वा माषकम् इति वृद्ध-व्यवहारः, अजदुग्धमुत्स्वेदनार्थमष्टगुणपेयम् ॥ ७१ ॥

ज्येष्ठाम्बुनेत्यादि।—अत्रापि रक्तातिसारनाशनमिति योज्यम्। ज्येष्ठाम्बु तण्डुलाम्बु। तण्डुलीयकस्य क्षुद्रमारीषस्य मूलम् ॥ ७२ ॥

पीत्वेत्यादि चरकस्य।—वार्त्तापत्तोत्तरे योगोऽयमिति वदन्ति। पयसा पीत्वेत्यन्वयः। क्षीरभुगिति—क्षीरेण भुञ्जानः। तयेति—शतावर्य्या कल्क-स्वरसरूपतया। घृतं पीत्वेत्यन्वयः ॥ ७३ ॥

कुटजस्य पलमित्यादि।—कुटजछाल प्ल १, पा पानीय श १, शेष प्ल १। दाड़िमफलकल्क प्ल १, पा पा श १, शेष प्ल १। एतत् क्वाथद्वयं मिश्रीकृत्य तावत् पक्तव्यं, यावत् लसीकाभं स्यात्, ततोऽष्टमाषकं गृहीत्वा तक्रकर्षद्वयेन सह पातव्य-मित्यर्थः ॥ ७४—७६ ॥

कल्कस्तिलानामित्यादि।—शर्कराभागसंयुत इति—शर्कराया भागश्चतुर्थोऽंशः, तेन

आजेन पयसा पीतः सद्यो रक्तं नियच्छति ॥ ७७ ॥

गुदस्य दाहपाकभ्रंशेषु चिकित्सा।—

गुददाहे प्रपाके वा पटोलमधुकाम्बुना।
सेकादिकं प्रशंसन्ति छागेन पयसाऽपि वा ॥ ७८ ॥
गुदभ्रंशे प्रकर्त्तव्या चिकित्सा तत्प्रकीर्त्तिता ॥ ७९ ॥

पुटपाकसाध्यातीसारलक्षणम्।—

अवेदनं सुसम्पक्वं दीप्ताग्नेः सुचिरोत्थितम्।
नानावर्णमतीसारं पुटपाकैरुपाचरेत् ॥ ८० ॥

कुटजपुटपाकः।—

स्निग्धं घनं कुटजवल्कमजन्तुजग्ध-
मादाय तत्क्षणमतीव च पोथयित्वा।
जम्बूपलाशपुटतण्डुलतोयसिक्तं
बद्धं कुशेन च बहिर्घनपङ्कलिप्तम् ॥ ८१ ॥
सुस्विन्नमेतदवपीड्य रसं गृहीत्वा
क्षौद्रेण युक्तमतिसारवते प्रदद्यात्।
कृष्णात्रिपुत्रमतपूजित एष योगः
सर्वातिसारहरणे स्वयमेव राजा ॥ ८२ ॥

---

संयुत इत्यर्थः; तेन शर्करायाश्चत्वारो भागाः, एकस्तिलस्येति; उक्तं हि कर्त्तृकर्णे—"कृष्णतिलान् शर्करापादिकान् छागीपयसा" इति। एवं चरके वाग्भटेऽपि यथा—"कल्कास्तिलानां कृष्णानां शर्करापञ्चभागिकः" (चि० अती०। चि० ९ अ०) इति। शर्कराभागमपेक्ष्य पञ्चमो भागस्तिलकल्कस्येत्यर्थः ॥ ७७ ॥

गुददाहे इत्यादि।—पटोलमधुकाम्बुनेत्यर्द्धश्लोकेन। सेकादिकमित्यत्रादिशब्दात् प्रलेपादिग्रहः। चिकित्सा तत्प्रकीर्त्तितेति—गुदभ्रंशचिकित्सा, सा च क्षुद्ररोगे वाच्या ॥ ७८।७९ ॥

पुटपाकयोग्यावस्थामाह, अवेदनमित्यादि सुश्रुतस्य।—अवेदनमशूलमल्पशूलं वा। डल्लनस्तु नानावर्णमित्यनेन सान्निपातिकोऽतिसारः पुटपाकस्य विषय इति दर्शितमित्याह ॥ ८० ॥

स्निग्धमित्यादि।—अजन्तुजग्धमिति—न क्रिमिभिर्भक्षितम्। पोथयित्वा क्षौद-

पुटपाकस्य मात्रा पाकलक्षणञ्च।—

स्वरसस्य गुरुत्वेन पुटपाकपलं पिबेत्।
पुटपाकस्य पाकोऽयं वह्निरारक्तवर्णता॥ ८३॥

श्योणाकपुटपाकः।—

त्वक्पिण्डं दीर्घवृन्तस्य काश्मरीपत्रवेष्टितम्।
मृदाऽवलिप्तं सुकृतमङ्गारेष्ववकूलयेत्॥ ८४॥
स्विन्नमुद्धृत्य निष्पीड्य रसमादाय यत्नतः।
शीतीकृतं मधुयुतं पाययेदुदरामये॥ ८५॥

कुटजलेहः।—

शतं कुटजमूलस्य क्षुण्णं तोयार्मणे पचेत्।
क्वाथे पादावशेषेऽस्मिन् लेहं पूते पुनः पचेत्॥ ८६॥
सौवर्चलयवक्षार-विड़सैन्धवपिप्पली।
धातकीन्द्रयवाजाजी-चूर्णं दत्त्वा पलद्वयम्॥ ८७॥
लिह्याद्बदरमात्रं तत् पीतं क्षौद्रेण संयुतम्।
पक्वापक्वमतीसारं नानावर्णं सवेदनम्॥
दुर्वारं ग्रहणीरोगं जयेच्चैव प्रवाहिकाम्॥ ८८॥

---

यित्वा। जम्बूपत्रनिर्मितपुटे तण्डुलतोयेन सिक्तमित्यर्थः। योगोऽयं रक्तपित्तोत्तरे इत्याहुः॥ ८१—८३॥

त्वक्पिण्डमित्यादि कस्यचित् तन्त्रस्य।—त्वचः पिण्डरूपकल्कम्। दीर्घवृन्तः श्योणाकः। काश्मरी गाम्भारी। सुकृतमिति—कुशवेष्टनेन सुष्ठु बद्धमित्यर्थः। अवकूलयेत् अङ्गारैराच्छादयेत्, कूल आवरणे इत्यस्य रूपम्; दहेदित्यन्ये। उदरामये प्रकरणादतिसारे। सुश्रुते पुनरयं योगोऽन्यथा पठ्यते यथा—"त्वक्पिण्डं दीर्घवृन्तस्य पद्मकेशरसंयुतम्। काश्मरीपद्मपत्रैश्चावेष्ट्य सूत्रेण तं दृढम्॥" (उ० ४० अ०) शेषं तुल्यमेवेति। श्योणाकस्य त्वचं पद्मकेशरञ्च समभागं कृत्वा सम्पिष्य, तं पिण्डं गाम्भारी-पत्र-पद्मपत्रयोः पुटे निक्षिप्य, सूत्रेणावेष्ट्य मृत्तिकया चावलिप्य निर्धूमखदिराङ्गारेषु पुटपाकविधिना पक्वा रसो ग्राह्य इति व्याख्यानयन्ति टीकाकृतः। अत्र श्योणाकपुटपाके वाग्भटसंवादात् मधुस्थाने शर्कराप्रक्षेपोऽपि बोध्यः॥ ८४ ८५॥

शतमित्यादि:—अर्मणो द्रोणः। लेहमिति—लेहाकारो यथा भवति तथा

कुटजाष्टकः ।—

तुलामथार्द्रां गिरिमल्लिकायाः संक्षुद्य पक्त्वा रसमाददीत ।
तस्मिन् सुपूते पलसम्मितानि श्लक्ष्णानि पिष्ट्वा सह शाल्मलेन ॥८९॥
पाठां समङ्गातिविषां समुस्तां विल्वञ्च पुष्पाणि च धातकीनाम् ।
प्रक्षिप्य भूयो विपचेत् तु तावद्दर्वीप्रलेपः स्वरसस्तु यावत् ॥९०॥
पीतस्त्वसौ कालविदा जलेन मण्डेन वाऽजापयसाऽथवाऽपि ।
निहन्ति सर्वन्त्वतिसारमुग्रं कृष्णं सितं लोहितपीतकं वा ॥९१॥
दोषं ग्रहण्या विविधञ्च रक्तं शूलं तथाऽर्शांसि सशोणितानि ।
असृग्दरञ्चैवमसाध्यरूपं निहन्त्यवश्यं कुटजाष्टकोऽयम् ॥ ९२ ॥
तुलाद्रव्ये जलद्रोणो द्रोणे द्रव्यतुला मता ॥ ९३ ॥

षडङ्गघृतम् ।—

वत्सकस्य च वीजानि दार्व्याश्च त्वच उत्तमाः ।
पिप्पली शृङ्गवेरञ्च लाक्षा कटुकरोहिणी ॥ ९४ ॥
षड्भिरेभिर्घृतं सिद्धं पेयं मण्डावचारितम् ।
अतीसारं जयेच्छीघ्रं त्रिदोषमपि दारुणम् ॥ ९५ ॥

---

पचेत् । पलद्वयमिति मिलित्वा । आसन्नपाके चूर्णप्रक्षेपः । यवक्षारस्थाने गुड़क्षारपाठो न प्रसिद्धः । वदरमात्रम् इति—अष्टमाषकम् ; माषचतुष्टयेन व्यवहारः । क्षौद्रयुक्तमिति—उपयोगकाले अनुरूपं मधु दत्त्वा उपयोज्यम् ॥ ८६—८८ ॥

तुलामित्यादि ।—"तुलाद्रव्ये जलद्रोणः" इति वक्ष्यति । रसस्य पादावशिष्ट एवोत्सर्गसिद्धः । पलसम्मितानीति प्रत्येकं, द्रव्यप्रधानत्वान्निर्देशस्य । समङ्गा वराहक्रान्ता । शाल्मलेनेति—शाल्मलीवेष्टकेन । अत्र केचित् चूर्णं दत्त्वैव पाकः "प्रक्षिप्य भूयो विपचेत्" इति वचनात् प्रचाराच्चेत्याहुः । अन्ये तु—तस्मिन् सुपूते भूयः पचेत ; ततो मनाक् दर्वीप्रलेपनावस्थायां शाल्मलीवेष्टकादिचूर्णं प्रक्षिप्य, ततो रसः पीत इति योज्यम् ; एतेन—"प्रायो न पाकश्चूर्णानां भूरिचूर्णस्य योगतः" इत्यपि वचनमनुगृहीतं भवतीत्याहुः ; व्यवहारस्त्वनेनैवेति । जलेनेति—शीतलजलेनाग्निमान्द्ये ; मण्डेन वह्निदुष्टौ ; छागीदुग्धेन रक्ते ॥ ८९—९३ ॥

वत्सकस्येत्यादि ।—षडङ्गघृते दार्व्याश्च त्वच उत्तमाः इति सर्वत्र दार्व्यास्त्वच एव ग्राह्या उत्तमगुणत्वात्, तस्य दुर्लभत्वात् अत्र काष्ठमेव गृह्यते । षड्भिरिति एवं

क्षीरिद्रुमाद्यं घृतम्।—

क्षीरिद्रुमाभीरुरसे विपक्वं तज्जैश्च कल्कैः पयसा च सर्पिः।
सितोपलार्द्धं मधुपादयुक्तं रक्तातीसारं शमयत्युदीर्णम्॥९६॥

जीर्णातीसारे क्षीरप्रयोगः।—

जीर्णेऽमृतोपमं क्षीरमतीसारे विशेषतः।
छागं तद्भेषजैः सिद्धं देयं वा वारिसाधितम्॥९७॥

विबद्धवातातीसारे बिल्वादिलेहः।—

बालबिल्वं गुडं तैलं पिप्पली विश्वभेषजम्।
लिह्याद्वाते प्रतिहते सशूले सप्रवाहिके॥९८॥

प्रवाहिकायां योगद्वयम्।—

पयसा पिप्पलीकल्कः पीतो वा मरिचोद्भवः।
त्र्यहात् प्रवाहिकां हन्ति चिरकालानुबन्धिनीम्॥९९॥

प्रवाहिकायां बिल्वादिखडः।—

कल्कः स्याद्बालबिल्वानां तिलकल्कश्च तत्समः।
दध्नः सराम्लः स्नेहाढ्यः खडो हन्यात् प्रवाहिकाम्॥१००॥

---

यथालाभग्रहणनिषेधार्थम्। एभिः कल्कैर्यथाचतुर्गुणमेव जलं देयम्। इदमेव घृतं कुटजत्वचा सप्ताङ्गं भवति; तदुक्तं वैद्यप्रदीपे—"मण्डेन पेयं तत् सर्पिः सप्ताङ्गं कुटजत्वचा" इति॥९४।९५॥

क्षीरिद्रुमेत्यादि।—क्षीरिणो द्रुमाः वटोडुम्बरादयः। एषामन्यतमस्य समुदितस्य वा क्वाथः। शतावरीरसश्च घृतापेक्षया मिलित्वा त्रिगुणः। कल्कोऽप्येषामेव। पयश्च स्नेहसमम्। घृतमपेक्ष्य च सितायाः अर्द्धं षोडशपलमित्यर्थः। मधुनोऽपि घृतमपेक्ष्यैव पादिकत्वं ज्ञेयम्॥९६॥

क्षीरपानविषयमाह, जीर्णे इत्यादि।—तद्भेषजैरिति—अतिसारहन्तृभेषजैः। देयं वा वारिसाधितम् इति—केवलेन त्रिगुणेन जलेन साधितमित्यर्थः; उक्तं हि सुश्रुते—"यथाऽमृतं तथा क्षीरमतीसारेषु पूजितम्। चिरोत्थितेषु तत् पेयमपां भागैस्त्रिभिः शृतम्॥" (उ० ४० अ०)॥९७॥

बालबिल्वमित्यादि चरकस्य।—वाते प्रतिहते इति—विबद्धवाते॥९८॥

पयसेत्यादि।—दुग्ध प्र १, पिप्पली माष ४, अथवा मरिचचूर्णं माष २, एवं व्यवहरन्ति। सविबन्धायां प्रवाहिकायामयं योगः॥९९॥

प्रवाहिकायां विल्वोषणादिलेहः।—

विल्वोषणं गुड़ं लोध्रं तैलं लिह्यात् प्रवाहणे ॥ १०१ ॥

प्रवाहिकायां योगद्वयम्।—

दध्ना ससारेण समाक्षिकेण भुञ्जीत निश्चारकपीड़ितस्तु।
सुतप्तकुप्यक्कथितेन वाऽपि चीरेण शीतेन मधुप्लुतेन ॥ १०२ ॥

प्रवाहिकायां सफेनमलनिःसरणे योगः।—

दीप्ताग्निर्निष्पुरीषो यः सार्य्यते फेनिलं शकृत्।
स पिबेत् फाणितं शुण्ठी-दधितैलपयोघृतम् ॥ १०३ ॥

असाध्यातीसारलक्षणम्।—

शोथं शूलं ज्वरं तृष्णां कासं श्वासमरोचकम्।
छर्दिं मूर्च्छाञ्च हिक्काञ्च दृष्ट्वाऽतीसारिणं त्यजेत् ॥१०४॥
बहुमेही नरो यस्तु भिन्नविट्को न जीवति ॥ १०५ ॥

अतीसारे अपथ्यानि।—

स्नानाभ्यङ्गावगाहांश्च गुरुस्निग्धातिभोजनम्।
व्यायाममग्निसन्तापमतीसारी विवर्जयेत् ॥ १०६ ॥

इत्यतीसार-चिकित्सा।

---

कल्कः स्यादित्यादि चरकस्य।—अत्र स्नेहाख्याता तिलदधिसरयोगात्। खड़ इत्यस्यैव योगस्य संज्ञा। चरके "खड़"स्थाने "सद्यः" इति पाठान्तरम् ॥ १०० ॥

विल्वोषणमित्यादि।—विल्वं विल्वशलाटुः। ऊषणं मरिचम्; यदुक्तं—"विल्वपेशीं गुड़ं लोध्रं तैलं मरिचयोजितम्" इति। तैलेन लेहः ॥ १०१ ॥

दध्नेत्यादि सुश्रुतस्य।—ससारेण अनुद्धृतनवनीतेन। निश्चारकः प्रवाहिका; यदाह पराशरः,—"निर्वाहयेत् सफेनञ्च पुरीषं यो मुहुर्मुहुः। प्रवाहिकेति सा ख्याता कैश्चिन्निश्चारकश्च सः॥" इति। सुतप्तकुप्यक्कथितेनेति—अत्यन्ततप्तसुवर्णरजततार-लौहप्रक्षेपात् क्कथितेन। अन्ये तु—अघटितं रूप्यादि कुप्यमाचक्षते। केचित्तु—कुप्यस्थाने कूपं पठन्ति, व्याचक्षते च—"कूपः पाषाणभेदो दक्षिणापथे ख्यातः शङ्खनाभ्याकृतिः" इति ॥ १०२ ॥

दीप्ताग्निरित्यादि सुश्रुतस्य।—एतत् सर्वमालोड्य पेयम् ॥ १०३—१०६ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायाम् अतीसारचिकित्साविवृतिः।

# अथ ग्रहणी-चिकित्सा ।

चिकित्साक्रमः ।—

ग्रहणीमाश्रितं दोषमजीर्णवदुपाचरेत् ।
अतीसारोक्तविधिना तस्यामञ्च विपाचयेत् ॥ १ ॥

आमरसे कर्त्तव्यनिर्देशः ।—

शरीरानुगते सामे रसे लङ्घनपाचनम् ॥ २ ॥

अन्नदानस्य कालो विधिश्च ।—

विशुद्धामाशयायास्मै पञ्चकोलादिभिर्युतम् ।
दद्यात् पेयादि लघ्वन्नं पुनर्योगांश्च दीपकान् ॥ ३ ॥

पाचनी-ग्राहिणी-पेयाद्वयम् ।—

कपित्थबिल्वचाङ्गेरी-तक्रदाड़िमसाधिता ।
पाचनी ग्राहिणी पेया सवाते पाञ्चमूलिकी ॥ ४ ॥

---

ग्रहण्यतीसारयोः परस्परं कार्य्यकारणभावसम्बन्धोऽस्तीत्यनन्तरं ग्रहणीचिकित्सित-मुच्यते, ग्रहणीमाश्रितमित्यादि वाग्भटस्य ।—ग्रहणी अग्न्याधाननाड़ी, तदुक्तम—"अग्न्यधिष्ठानमन्नस्य ग्रहणात् ग्रहणी मता" ( च० चि० ग्रहणी० ) इति । अजीर्ण-वदुपाचरेदिति—यथाऽजीर्णेषु यथा वमनाद्युपचारो दीपनपाचनञ्चौषधं, तथेत्यर्थः । अतीसारोक्तविधिनेति —लङ्घनलघ्वन्नपाचनादिना ॥ १ ॥

शरीरानुगते इत्यादि चरकस्य ।—शरीरानुगते शरीरव्यापके । सामे रसे इति—आमशब्दोऽत्र भावप्रधानः, तेन आमतासहितेऽपक्वे इत्यर्थः । रसे इति—आहाररसे ॥ २ ॥

विशुद्धेत्यादि ।—विशुद्धामाशयायेति—वमनविरेचनलङ्घनैर्यथायोग्यतया निर्हृताम-दोषाय ॥ ३ ॥

कपित्थेत्यादि चरकस्य ।—कपित्थबिल्वयोः फलम् । दाड़िमफलस्य तु त्वक्, अन्ये तु फलमेवेत्याहुः । कपित्थादीनां चतुर्णां मृदुद्रव्यत्वेन मिलित्वा पलं कल्कः, तक्रञ्च द्रवस्थाने, तच्च तावज्ज्ञेयं यावता यवागूः सिध्यति । वृद्धवैद्यास्तु अत्यम्ल-गुरुत्वभिया तक्रजलाभ्यां तुल्याभ्यां पाकमिच्छन्ति । ग्राहिणीत्यन्ता एका यवागूः, एषा च वातकफे । सवाते पाञ्चमूलिकीति द्वितीया, वातातिसारे स्वल्पपञ्चमूलसिद्धा यवागूः, हितेति शेषः, "प्रवाहेवांयुतीसार:" इति कर्तृकर्णसंवादात् ॥ ४ ॥

ग्रहण्यां तक्रस्य गुणाः ।—

ग्रहणीदोषिणां तक्रं दीपन-ग्राहि-लाघवात् ।
पथ्यं मधुरपाकित्वान्न च पित्तप्रकोपणम् ॥ ५ ॥
कषायोष्णविकाशित्वाद्रौक्ष्याच्चैव कफे हितम् ।
वाते स्वाद्वम्लसान्द्रत्वात् सद्यस्कमविदाहि तत् ॥ ६ ॥

शुण्ठ्यादिः ।—

शुण्ठीं समुस्तातिविषां गुडूचीं पिबेज्जलेन क्वथितां समांशाम् ।
मन्दानलत्वे सततामतायामामेऽनुबन्धे ग्रहणीगदे च ॥ ७ ॥

धान्यकादिः ।—

धान्यकातिविषोदीच्य-यमानीमुस्तनागरम् ।
बलाद्विपर्णीबिल्वञ्च दद्याद्दीपनपाचनम् ॥ ८ ॥

---

तक्रस्य ग्रहणीदोषसात्म्यतां दोषत्रयहितत्वञ्च सहेतुकमाह, ग्रहणीदोषिणा-मित्यादि ।—दीपनग्राहिलाघवात् इति पथ्यत्वे हेतुः । मधुरपाकित्वान्न च पित्त-प्रकोपणमिति—अम्लत्वात् पित्तप्रकोपणे प्राप्ते मधुरपाकितया पित्तं न प्रकोपयति ; च-काराच्चापि पित्तं शमयतीति आकूतम् ; किं वा "सर्वमेवान्नं प्रायो ह्यस्य विदह्यते" (च० चि० ग्रहणी० ) इति उक्तेर्विदाहजनकं यदस्ति, तदपि तक्रप्रयोगे विदाहकृन्न भवति, मधुरपाकित्वात् तक्रस्य ; न तु जाताम्लत्वेन पित्तप्रकोपनिषेधार्थमयं ग्रन्थः, सद्यस्कोपयोगेन पित्तकारिणोऽम्लरसस्याभावात् ; अम्लत्वञ्च न प्रयोज्यं विदाहित्वादेव ; अत एवाह, सद्यस्कमविदाहीति—सद्योमथितमेव तक्रं पच्यमानावस्थायां विदाह-कृन्न भवति, किञ्चित्कालस्थितं पुनरम्लत्वात् विदाहि भवत्येव । यत्तु स्वाद्वम्लसान्द्र-त्वादित्यनेन अम्लरसत्वमुक्तं तदम्लानुरसतया ज्ञेयमित्याहुः । विकाशित्वादिति—दोषाक्रान्तस्रोतोविशोधकत्वादित्यर्थः । रौक्ष्यादित्यत्र "वैशद्यात्" इत्यपि पाठान्तरम् ; पैच्छिल्यरहितत्वादित्यर्थः । एतच्च बलिनो जीर्णावस्थायां ग्रहण्यां देयमित्याहुः ॥ ५।६ ॥

शुण्ठीमित्यादि ।—सततामतायामिति—सर्वदा आमकोष्ठतायाम् । आमेऽनुबन्धे इति—आमे प्रवर्त्तमाने इत्याहुः ; ग्रहणीगदविशेषणतया पुनरामानुबन्धे इति क्वचित् पाठो दृश्यते ॥ ७ ॥

धान्यकेत्यादि ।—योगोऽयं क्वाथेन ॥ ८ ॥

चित्रकाद्य-गुड़िका।—

चित्रकं पिप्पलीमूलं द्वौ क्षारौ लवणानि च।
व्योषहिङ्ग्वजमोदाञ्च चव्यञ्चैकत्र चूर्णयेत्॥ ९॥
गुड़िका मातुलुङ्गस्य दाड़िमस्य रसेन वा।
कृता विपाचयत्यामं दीपयत्याशु चानलम्॥ १०॥
सौवर्चलं सैन्धवञ्च विड़मौड्भिदमेव च।
सामुद्रेण समं पञ्च लवणान्यत्र योजयेत्॥ ११॥

श्रीफलादिः।—

श्रीफलशलाटुकल्को नागरचूर्णेन मिश्रितः सगुड़ः।
ग्रहणीगदमत्युग्रं तक्रभुजा शीलितो जयति॥ १२॥

पञ्चपल्लवम्।—

जम्बूदाड़िमशृङ्गाट-पाठाकञ्चटपल्लवैः।
पक्वं पर्य्युषितं बाल-विल्वं सगुड़नागरम्॥
हन्ति सर्वानतीसारान् ग्रहणीमतिदुस्तराम्॥ १३॥

नागरादिः।—

नागरातिविषामुस्त-क्वाथः स्यादामपाचनः॥ १४॥

---

चित्रकमित्यादि चरकस्य।—अत्र कपिञ्जलाधिकरणक-न्यायात् केचिल्लवणत्रयमिच्छन्ति, तन्न; "पटूनि पञ्च द्वौ क्षारौ मरिचं पञ्चकोलकम्। दीप्यकं हिङ्गु गुड़िका बीजपूररसे कृता॥ कोलदाड़िमतोये वा परं पाचन-दीपनी॥" (चि० ९ अ०) इति वाग्भटवचनात्; अत एव चक्रोऽप्याह, सौवर्चलमित्यादि।—औद्भिदं शाम्बरिलवणम्, उत्कारिकेत्यन्ये। सामुद्रकं करकचम्। गुड़िकेयमार्द्रकरसेनापि बोध्या, आयुर्वेदसारदर्शनात्॥ ९—११॥

श्रीफलेत्यादि।—नागरचूर्णं कटुत्वभावकृत्। सगुड़ इति—समगुड़ः। अयं योगो वाते इत्याहुः॥ १२॥

जम्बूदाड़िमेत्यादि।—एषां पल्लवैरास्तरणं कृत्वा अनुरूपञ्च जलं दत्त्वा बालविल्वमुत्स्वेद्य पर्य्युषितं कार्य्यम्। सगुड़नागरमिति—विल्वसमो गुड़ः, नागरचूर्णन्तु कटुत्वभावकारकम्। रक्ते तु नागरं न देयम्। उत्स्वेदनप्रेपजलमनुपेयमित्याहुर्वृद्धाः॥ १३॥

नागरेत्यादि।—स्पष्टम्॥ १४॥

वातग्रहण्याम् औषधनिर्देशः ।—

चूर्णं हिङ्ग्वष्टकं वात-ग्रहण्यान्तु घृतानि च ॥ १५ ॥

नागराद्यं चूर्णम् ।—

नागरातिविषामुस्तं धातकीं सरसाञ्जनम् ।
वत्सकत्वक्फलं विल्वं पाठां कटुकरोहिणीम् ॥ १६ ॥
पिबेत् समांशं तच्चूर्णं सक्षौद्रं तण्डुलाम्बुना ।
पैत्तिके ग्रहणीदोषे रक्तं यच्चोपवेश्यते ॥ १७ ॥
अर्शांस्यथ गुदे शूलं जयेच्चैव प्रवाहिकाम् ।
नागराद्यमिदं चूर्णं कृष्णात्रेयेण पूजितम् ॥ १८ ॥

तण्डुलोदकविधिः ।—

शीतकषायमानेन तण्डुलोदककल्पना ।
केऽप्यष्टगुणतोयेन प्राहुस्तण्डुलभावनाम् ॥ १९ ॥

भूनिम्बाद्यं चूर्णम् ।—

भूनिम्बकटुकाव्योष-मुस्तकेन्द्रयवान् समान् ।
द्वौ चित्रकात् वत्सकत्वग्भागान् षोड़श चूर्णयेत् ॥ २० ॥
गुड़शीताम्बुना पीतं ग्रहणीदोषगुल्मनुत् ।

---

चूर्णमित्यादि ।—हिङ्ग्वष्टकमग्निमान्द्ये वक्ष्यमाणम् ॥ १५ ॥

नागरेत्यादि ।—नागराद्यचूर्णं सक्षौद्रमिति—मधुप्रक्षेपयुक्तम् । कृष्णात्रेयः पुनर्वसुः । तण्डुलाम्बुना तण्डुलधावनाम्बुना ॥ १६—१८ ॥

तच्च तण्डुलाम्बु कथं कर्त्तव्यम् ? इति जिज्ञासायां स्वमतं वृन्दमतञ्चोपन्यस्यति, शीतकषायमानेनेत्यादि ।—शीतकषायविधानञ्च—"क्षुण्णमुष्णाम्बुनि व्युष्टं शीतमाहुश्चिकित्सकाः" इति । जलमत्र तण्डुलमपेक्ष्य षड्गुणं ग्राह्यम् ; उक्तं हि—"षड्भिः पलैश्चतुर्भिर्वा सलिलाच्छीतफाण्टयोः" इति । वृन्दमतमाह—केऽपीत्यादि । अन्ये तु—द्विगुणमम्बु तण्डुलेन समं चिरस्थितं तण्डुलाम्बु वदन्ति । अपरे तु—अनियततण्डुलमनियतजलेन प्रक्षाल्य जलं गृह्णन्ति ॥ १९ ॥

भूनिम्बेत्यादि ।—द्वौ चित्रकात् तथा वत्सकत्वग्भागान् षोड़शेति प्रथमभागापेक्षया द्विभागषोड़शभागपरिग्रहः । गुड़युक्तं शीताम्बु गुड़शीताम्बु ; गुड़श्चात्र

कामलाज्वरपाण्डुत्व-मेहारुच्यतिसारनुत् ॥
गुड़योगात् गुड़ाम्बु स्यात् गुड़वर्णरसान्वितम् ॥ २१ ॥

श्लेष्मग्रहण्यां चिकित्साविधिः।—

ग्रहण्यां श्लेष्मदुष्टायां वमितस्य यथाविधि।
कट्वम्ललवणक्षारैस्तीक्ष्णैश्चाग्निं विवर्द्धयेत् ॥ २२ ॥

पिप्पलीमूलादि चूर्णम्।—

समूलां पिप्पलीं क्षारौ द्वौ पञ्च लवणानि च।
मातुलुङ्गाभयारास्ना-शटीमरिचनागरम् ॥ २३ ॥
कृत्वा समांशं तच्चूर्णं पिबेत् प्रातः सुखाम्बुना।
श्लैष्मिके ग्रहणीदोषे बलवर्णाग्निवर्द्धनम् ॥ २४ ॥

वातग्रहण्यां पिप्पलीमूलादि घृतम्।—

एतैरेवौषधैः सिद्धं सर्पिः पेयं समारुते ॥ २५ ॥

भल्लातकक्षारः।—

भल्लातकं त्रिकटुकं त्रिफलां लवणत्रयम्।
अन्तर्धूमं द्विपलिकं गोपुरीषाग्निना दहेत ॥ २६ ॥
स क्षारः सर्पिषा पेयो भोज्ये वाऽप्यवचारितः।
हृत्पाण्डुग्रहणीदोष-गुल्मोदावर्त्तशूलनुत् ॥ २७ ॥

---

गुड़वर्णतामाधुर्य्योपपत्तिजनको देय इत्याह, गुडयोगादित्यादि। वैद्यप्रसारके तु—सर्वचूर्णसमो गुडः, शीतलजलेन च पानमित्युक्तम्। व्यवहारस्तु पूर्वेणैव। पैत्तिक-ग्रहण्यां मस्त्रपित्तचिकित्सितमपि बोध्यम; तदुक्तं वैद्यपदीपे—"अम्लपित्तहितं यच्च पानभोजनभेषजम्। पैत्तिके ग्रहणीदोषे तत् सर्वमुपकल्पयेत् ॥" इति ॥ २०।२१ ॥

ग्रहण्यामित्यादि।—स्पष्टम ॥ २२ ॥

समूलामित्यादि।—मातुलुङ्गस्यात्र मूलम् ॥ २३।२४ ॥

एतैरित्यादि।—एतैः पिप्पलीमूलादिभिः कल्करूपैः ॥ २५ ॥

भल्लातकमित्यादि चरकस्य।—गोपुरीषाग्निनेति अचिन्त्यप्रभावात् संयोग-संस्कारजशक्तीनामिति। स क्षार इति—भल्लातकादीनामन्तर्धूमदाहात् यः क्षारः स एव सर्पिषा पीत इत्यर्थः। भोज्ये व्यञ्जने वा स क्षारो देयः ॥ २६।२७ ॥

त्रिदोषग्रहण्यां चिकित्साविधिः।—

सर्वजायां ग्रहण्यान्तु सामान्यो विधिरिष्यते ॥ २८ ॥

मरिचादि चूर्णम्।—

चूर्णं मरिचमहौषधकुटजत्वग्भवं क्रमाद्द्विगुणम्।
गुड़मिश्रमथितपीतं ग्रहणीदोषापहं ख्यातम् ॥ २९ ॥

पाठाद्यं चूर्णम्।—

पाठाविल्वानलव्योष-जम्बूदाड़िमधातकी।
कटुकातिविषामुस्त-दार्व्वीभूनिम्बवत्सकैः ॥ ३० ॥
सर्व्वेरेतैः समं चूर्णं कौटजं तण्डुलाम्बुना।
सक्षौद्रञ्च पिबेच्छर्दि-ज्वरातिसारशूलवान् ॥
हृद्दाहग्रहणीदोषारोचकानलसादजित् ॥ ३१ ॥

कपित्थाष्टकं चूर्णम्।—

यमानीपिप्पलीमूल-चातुर्जातकनागरैः।
मरिचाग्निजलाजाजी-धान्यसौवर्चलैः समैः ॥ ३२ ॥
वृक्षाम्लधातकीकृष्णा-विल्वदाड़िमतिन्दुकैः।
त्रिगुणैः षड्गुणसितैः कपित्थाष्टगुणैः कृतः ॥ ३३ ॥

---

सर्व्वजायामित्यादि।—सामान्यो विधिरिति—प्रत्येकदोषोक्तचिकित्सामेलकेन त्रिदोषग्रहणीचिकित्सा कार्य्येत्यर्थः ॥ २८ ॥

चूर्णमित्यादि।—गुड़मिश्रतक्रेणालोड्य पीतमित्यर्थः ॥ २९ ॥

पाठेत्यादि।—पाठादिचूर्णे जम्बूफलास्थि ; एतत्साहचर्य्यात् दाड़िमफलस्यापि वीजम्। वत्सकः इन्द्रयवः ॥ ३०।३१ ॥

यमानीत्यादि।—अयं योगो वाग्भटे अतीसारचिकित्सिते लिखितः। अग्निश्चित्रकः। जलं वालकम्। समैरिति—समभागैः। वृक्षाम्लं महार्द्रकम्। त्रिगुणैरिति—एकभागापेक्षया वृक्षाम्लादीनां षण्णां प्रत्येकं त्रिगुणत्वम्। षड्गुणसितैः कपित्थाष्टगुणैः कृत इति—सिताकपित्थयोरपि षड्गुणाष्टगुणत्वे एकगुणापेक्षयैव ; एतैः कृतश्चूर्णं इति योज्यः। अरुणस्तु वाग्भटटीकायां षड्गुणसितैरिति पदं वृक्षाम्लादितिन्दुकान्तानां विशेषणं व्याख्याय मिलितवृक्षाम्लादिद्रव्यषट्कापेक्षया सितायाः षड्गुणत्वमाह, तथा सति सिताभागानां शतमष्टाधिकं भवति। अन्ये तु—"षड्गुणसिते कपित्थाष्टगुणे"

चूर्णोऽतीसारग्रहणी-क्षयगुल्मगलामयान् ।
कासश्वासाग्निसादार्शः-पीनसारोचकान् जयेत् ॥ ३४ ॥

दाड़िमाष्टकः ।—

कर्षोन्मिता तुगाक्षीरी चातुर्जातं द्विकार्षिकम् ।
यमानीधान्यकाजाजी-ग्रन्थिव्योषं पलांशिकम् ॥ ३५ ॥
पलानि दाड़िमादष्टौ सितायाश्चैकतः कृतः ।
गुणैः कपित्थाष्टकवच्चूर्णोऽयं दाड़िमाष्टकः ॥ ३६ ॥

वार्त्ताकुगुड़िका ।—

चतुष्पलं सुधाकाण्डात् त्रिपलं लवणत्रयात् ।
वार्त्ताकुकुड़वश्चार्कादष्टौ द्वे चित्रकात् पले ॥ ३७ ॥
दग्ध्वा रसेन वार्त्ताकोर्गुड़िका भोजनोत्तराः ।

---

इति पठन्ति, व्याख्यानयन्ति च—"एकभागापेक्षया कपित्थस्याष्टगुणत्वम्, अष्टगुणकपित्थापेक्षया च सितायाः षड्गुणत्वम्" इति ; तथा सति सितायाः अष्टचत्वारिंशद्भागा भवन्तीति । अपरे तु—"षड्गुणसितः कपित्थाष्टगुणीकृतः" इति चूर्णविशेषणं कृत्वा "समुदितचूर्णापेक्षया सिताकपित्थयोः षड्गुणाष्टगुणत्वम्" इत्याहुः । एतन्मतद्वयमपि न व्यवहारसिद्धं, शर्कराकपित्थयोरतिबहुत्वादिति ; तस्मादेकभागापेक्षयैव षड्गुणाष्टगुणत्वमिति । कपित्थभागाधिक्यादस्य कपित्थाष्टक इति संज्ञा ॥३२—३४॥

कर्षोन्मितेत्यादि वाग्भटस्य ।—तुगाक्षीरी वंशलोचना । चातुर्जातं त्वगेलापत्रकेशरम् । द्विकार्षिकमिति प्रत्येकं, निर्देशस्य द्रव्यप्रधानत्वात् । एवं यमान्यादिकमपि प्रत्येकं पलांशिकम् । ग्रन्थिकं पिप्पलीमूलम् । दाड़िमस्यात्र फलं, "फलन्तु दाड़िमादीनाम्" इत्युक्तेः ; एवमन्यत्रापि । च-कारात् सितायाः अपि अष्टौ पलानि ॥३५।३६॥

चतुष्पलमित्यादि वाग्भटस्य ।—त्रिपलं लवणत्रयादिति मिलित्वा, निर्देशस्य मानप्रधानत्वात् । "त्रिफला लवणानि च" इति ये पठन्ति, ते त्रिफलालवणैर्मिलित्वा चतुष्पलं वदन्ति, पूर्वोक्तचतुष्पलमित्यस्यापि सम्बन्धात् । लवणान्यविशेषात् पञ्चैवेत्याहुः । वार्त्ताकुकुड़व इति—शुष्कवार्त्ताकुफलचतुष्टयं व्यवहारात् । अर्कादिति—अर्कमूलात् । दग्ध्वा रसेन वार्त्ताकोरिति—अन्तर्धूमं दग्ध्वा क्षारीकृत्य वार्त्ताकुरसेन गुड़िकाः कार्या इत्यर्थः । "दग्धानि वार्त्ताकुरसे" इति च पाठः । भोजनोत्तरा इति—

भुक्त्वा भुक्तं पचन्त्याशु कासश्वासार्शसां हिताः ॥
विसूचिकाप्रतिश्याय-हृद्रोगशमनाश्च ताः ॥ ३८ ॥

अष्टपलं घृतम्।—

त्र्यूषणत्रिफलाकल्के विल्वमात्रे गुड़ात् पले।
सर्पिषोऽष्टपलं पक्त्वा मात्रां मन्दानलः पिबेत् ॥ ३९ ॥

विल्वगर्भं घृतम्।—

मसूरस्य कषायेण विल्वगर्भं पचेत् घृतम्।
हन्ति कुक्ष्यामयान् सर्वान् ग्रहणीपाण्डुकामलाः ॥
केवलव्रीहिजल्वङ्ग-क्वाथो व्युष्टस्तु दीपनः ॥ ४० ॥

शुण्ठीघृतम्।—

विश्वौषधस्य गर्भेण दशमूलजले शृतम्।
घृतं निहन्याच्छ्वयथुं ग्रहणीसामतामयम् ॥ ४१ ॥

---

भोजनमुत्तरं पश्चात्कालीनं यासां तथा, किंवा भोजनादुत्तराः। "भुक्त्वा भुक्तं पचन्ति" इत्यत्र "भुक्तं भुक्तम्" ( च० चि० ग्रहणी० ) इत्यपि पाठः ॥ ३७।३८ ॥

त्र्यूषणेत्यादि।—बिल्वमात्रे इति—षड्भिर्मिलित्वा पलमात्रे, कल्कस्य पादिकत्वात्। चतुर्गुणजलेनाष्टपलघृतस्यात्र पाकः; इत्थमेव फलदानक्षमत्वमस्य भवतीति महर्षिवचनादुन्नीयते। मात्रामिति—अग्निबलानुरूपपरिमाणम् ॥ ३९ ॥

मसूरस्येत्यादि।—मसूरस्य क्वाथोऽत्यल्पशिथिलपोट्टलकं बद्ध्वा कार्य्यः, एवं माषकुलत्थादीनामपि। विल्वगर्भमिति—बिल्वशलाटुकल्कम्। घृतमत्र पच्यमानमेव। व्रीहिमांसक्वाथस्य तदहःकार्य्यतामाह, केवलेत्यादि।—जल्वङ्गं छागादिमांसम्। "केवलम्" इति पाठे—केवलं समग्रं यथा स्यात् तथा व्युष्टो रात्रिव्युषितो दीपनः, यावता कालेन व्यक्तीभवति स एव दीपन इत्यर्थः। केवलव्रीहिजल्वङ्गपाठे तु—द्रव्यान्तरसंयुक्तव्रीह्यादिक्वाथस्य न दीपनत्वमित्याहुः; तत्तु न व्यवहारसिद्धम्; अत एव वृन्दे—"व्रीहिप्राण्यङ्गयोः क्वाथं व्युषितं दीपनं मतम्" इत्येवोक्तम्। व्युष्टेति पदसिद्धिस्तु "व्युष्टादिभ्योऽण्" इति सूत्रनिर्देशात् ॥ ४० ॥

विश्वौषधस्येत्यादि।—ग्रहणीसामतामयमिति—ग्रहणीनाड्याश्रितो यः सामतारूप आमयो रोगस्तमित्यर्थः ॥ ४१ ॥

नागरघृतम् ।—

घृतं नागरकल्केन सिद्धं वातानुलोमनम् ।
ग्रहणीपाण्डुरोगघ्नं प्लीहकासज्वरापहम् ॥ ४२ ॥

चित्रकघृतम् ।—

चित्रकक्वाथकल्काभ्यां ग्रहणीघ्नं शृतं हविः ।
गुल्मशोथोदरप्लीह-शूलार्शोघ्नं प्रदीपनम् ॥ ४३ ॥

विल्वादिघृतम् ।—

विल्वाग्निचव्यार्द्रकशृङ्गवेर-क्वाथेन कल्केन च सिद्धमाज्यम् ।
सच्छागदुग्धं ग्रहणीगदोत्थ-शोथाग्निमान्द्यारुचिनुद्वरिष्ठम् ॥ ४४ ॥

चाङ्गेरीघृतम् । —

नागरं पिप्पलीमूलं चित्रको हस्तिपिप्पली ।
श्वदंष्ट्रा पिप्पली धान्यं विल्वं पाठा यमानिका ॥ ४५ ॥
चाङ्गेरीस्वरसे सर्पिः कल्कैरेतैर्विपाचितम् ।
चतुर्गुणेन दध्ना च तत् घृतं कफवातनुत् ॥ ४६ ॥
अर्शांसि ग्रहणीदोषं मूत्रकृच्छ्रं प्रवाहिकाम् ।
गुदभ्रंशार्त्तिमानाहं घृतमेतद्व्यपोहति ॥ ४७ ॥

---

घृतमित्यादि ।—अत्र जलं चतुर्गुणम् ॥ ४२ ॥

चित्रकेत्यादि ।—चित्रकघृतं स्पष्टम् ॥ ४३ ॥

विल्वाग्नीत्यादि ।—आर्द्रकेति शृङ्गवेरविशेषणं, तेन शुष्कस्य शुण्ठीरूपस्य निरासः। विल्वादीनां क्वाथस्त्रिगुणः, चतुर्गुण इत्येके । छागक्षीरं स्नेहसमम् ॥ ४४ ॥

नागरमित्यादि ।—अत्र हस्तिपिप्पली चवी, जतूकर्णसंवादात्; तद्यथा,—"दधिधान्यविल्वपाठायमानिकापञ्चकोलगोक्षुरकैः। चाङ्गेरीस्वरसे सर्पिर्गुदनिःसृति-मूत्रार्त्तिनुत् ग्राहि" इति। द्रव्यावल्याञ्च हस्तिपिप्पली चवीपर्य्यायत्वेन दृश्यते—"चविका कोलवल्ली च हस्तिपिप्पल्यपीष्यते" इति। विल्वस्थाने विषापाठोऽपि जतूकर्णसंवादादेव न भवति। चाङ्गेरीस्वरसोऽप्यत्र चतुर्गुणः; चतुर्गुणेन दध्ना च इत्यत्र च-कारस्य समुच्चयार्थत्वात्; आयुर्वेदसारेऽपि—"चतुर्गुणेन दध्ना च चाङ्गेरीस्वरसेन च" इत्युक्तम्। अन्ये तु—"स्वरसे क्षीरवत् विधिः" इति वचनात् चाङ्गेरीस्वरसस्य स्नेहसम इत्याहुः; व्यवहारस्तु पूर्वव्याख्ययैव ॥ ४५—४७ ॥

मरिचाद्यं घृतम् ।—

मरिचं पिप्पलीमूलं नागरं पिप्पली तथा ।
भल्लातकं यमानी च विडङ्गं हस्तिपिप्पली ॥ ४८ ॥
हिङ्गु सौवर्चलञ्चैव विड़सैन्धववचव्यथ ।
सामुद्रं सयवक्षारं चित्रको वचया सह ॥ ४९ ॥
एतैरर्द्धपलैर्भागैर्घृतप्रस्थं विपाचयेत् ।
दशमूलीरसे सिद्धं पयसा द्विगुणेन च ॥ ५० ॥
मन्दाग्नीनां हितं सिद्धं ग्रहणीदोषनाशनम् ।
विष्टम्भमामं दौर्बल्यं प्लीहानमपकर्षति ॥ ५१ ॥
कासं श्वासं क्षयञ्चैव दुर्नाम सभगन्दरम् ।
कफजान् हन्ति रोगांश्च वातजान् क्रिमिसम्भवान् ॥
तान् सर्वान् नाशयत्याशु शुष्कं दावानलो यथा ॥ ५२ ॥

महाषट्पलकं घृतम् ।—

सौवचलं पञ्चकोलं सैन्धवं हवुषां वचाम् ।
अजमोदां यवक्षारं हिङ्गु जीरकमौद्भिदम् ॥ ५३ ॥
कृष्णाजाजीं सभूतीकं कल्कीकृत्य पलार्द्धकम् ।
आर्द्रकस्य रसं चुक्रं क्षीरं मस्त्वम्लकाञ्जिकम् ॥ ५४ ॥
दशमूलकषायेण घृतप्रस्थं विपाचयेत् ।
भक्तेन सह दातव्यं निर्भक्तं वा विचक्षणैः ॥ ५५ ॥
क्रिमिप्लीहोदराजीर्ण-ज्वरकुष्ठप्रवाहिकाम् ।
वातरोगान् कफव्याधीन् हन्याच्छूलमरोचकम् ॥ ५६ ॥

---

मरिचमित्यादि ।—मरिचाद्यघृते विड़सैन्धवचव्येति समाहारद्वन्द्वः. किंवा विड़-सैन्धवयुक्ता चव्येति मध्यपदलोपी समासः । द्विगुणेन चेति च-काराद्दशमूलीक्वाथोऽपि द्विगुणः । अन्ये तु—दशमूलीरसश्चतुर्गुण इत्याहुः ; व्यवहारस्तु पूर्वेणैव ॥ ४८—५२ ॥

सौवर्चलमित्यादि ।—अत्र पञ्चकोलं मिलित्वाऽर्द्धपलं, कल्कस्य षट्पलकल्पत्वात् । हवुषा स्वनामख्याता । कृष्णाजाजी कृष्णजीरकम् । भूतीकं यमानी । सौवर्चलादीनां प्रत्येकमर्द्धपलम् । अत्र वचेति न पाठः ; किं तर्हि ? विड़मित्येव, चन्द्राटादौ

पाण्डुरोगं क्षयं कासं दौर्बल्यं ग्रहणीगदम्।
महाषट्पलकं नाम वृत्रमिन्द्राशनिर्यथा ॥ ५७ ॥

स्वल्पचुक्रम्।—

यन्मस्त्वादि शुचौ भाण्डे सगुड़क्षौद्रकाञ्जिकम्।
धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते ॥
द्विगुणं गुड़मध्वार-नालमस्तु क्रमादिह ॥ ५८ ॥

बृहच्चुक्रम्।—

प्रस्थं तण्डुलतोयतस्तुषजलात् प्रस्थत्रयञ्चाम्लतः
प्रस्थार्द्धं दधितोऽम्लमूलकपलान्यष्टौ गुड़ान्मानिके।
मान्यौ शोधितशृङ्गवेरशकलात् द्वे सिन्धुजाज्योः पले
द्वे कृष्णोषणयोर्निशापलयुगं निक्षिप्य भाण्डे दृढ़े ॥ ५९ ॥
स्निग्धे धान्ययवादिराशिनिहितं त्रीन् वासरान् स्थापयेत्
ग्रीष्मे तोयधरात्यये च चतुरो वर्षासु पुष्पागमे।
षट् शीतेऽष्ट दिनान्यतः परमिदं विस्राव्य सञ्चूर्णयेत्
चातुर्जातपलेन संहितमिदं शुक्तञ्च चुक्रञ्च तत् ॥ ६० ॥

---

दृष्टत्वात्। आर्द्रकस्वरसादीनां षण्णां द्रवाणां प्रत्येकं स्नेहसमत्वं "पञ्च प्रसृति यव स्युः" इत्युक्तेः ॥ ५३—५७ ॥

स्वल्पचुक्रमाह, यदित्यादि।—मस्त्वादीत्यस्य विशेषणं सगुड़ेत्यादि; आदि-शब्दाद्दधि तक्रञ्च। मस्तुस्थाने यत्, तदपि मस्तुसमं ग्राह्यमिति। अन्ये तु—आदिभूतं मस्तु प्रथमोत्थितं मास्त्वित्याहुः। त्रिरात्रस्थमिति ग्रीष्माभिप्रायेण, वर्षादिषु पुनर्वक्ष्यमाणबृहच्चुक्रवदवस्थापनकालव्यवस्था, अम्लत्वं यावद्वा भवतीति ॥ ५८ ॥

बृहच्चुक्रमाह, प्रस्थमित्यादि।—तुषजलादिति—सतुषयवकृतसन्धानात्, तदभावे काञ्जिकात्। अम्लत इति तुषजलस्य दध्नश्च विशेषणम्। अम्लमूलकं काञ्जिकाधःच्छिन्नमूलकमित्याहुर्वृद्धाः। मानिके इति—मानिकाद्वयं, मानिका पलान्यष्टौ, तेन षोड़शपलमित्यर्थः। शोधितशृङ्गवेरशकलादिति—निस्तुषार्द्रकखण्डात्। द्वे कृष्णोषणयोरिति—ऊषणं मरिचम्। तोयधरात्यये चेति—च-कारादत्रापि त्रीन् वासरान्

हन्याद्वातकफामदोषजनितान् नानाविधानामयान्
दुर्नामानिलगुल्मशूलजठरान् हत्वाऽनलं दीपयेत् ॥ ६१ ॥

तक्रारिष्टम्।—

यमान्यामलकं पथ्या मरिचं त्रिपलांशकम्।
लवणानि पलांशानि पञ्च चैकत्र चूर्णयेत् ॥ ६२ ॥
तक्र-कंसासुतं जातं तक्रारिष्टं पिबेन्नरः।
दीपनं शोथगुल्मार्शः-क्रिमिमेहोदरापहम् ॥ ६३ ॥

आ-यामकाञ्जिकम्।—

वाट्यस्य दद्यात् यवशक्तुकानां पृथक् पृथक् त्वाढ़कसम्मितञ्च।
मध्यप्रमाणानि च मूलकानि दद्याच्चतुःषष्टि सुकल्पितानि ॥ ६४ ॥
द्रोणेऽम्भसः प्लाव्य घटे सुधौते दद्यादिदं भेषजजातयुक्तम्।
चारद्वयं तुम्बुरु वस्तगन्धा धनीयकं स्यादिड़सैन्धवञ्च ॥ ६५ ॥
सौवर्चलं हिङ्गु शिवाटिकाञ्च चव्यञ्च दद्याद्विपलप्रमाणम्।
इमानि चान्यानि पलोन्मितानि विजर्जरीकृत्य घटे क्षिपेच्च ॥ ६६ ॥
कृष्णामजाजीमुपकुञ्चिकाञ्च तथाऽऽसुरीं कारविचित्रकञ्च।
पृच्छाक्षितोऽयं बलवर्णदेह-वयस्करोऽतीव बलप्रदश्च ॥ ६७ ॥

कान् जीवयामीति यतः प्रवृत्त-
स्तत् काञ्जिकेति प्रवदन्ति तज्ज्ञाः।
आ-यामकालाज्जरयेच्च भक्त-
मा-यामकेति प्रवदन्ति चैनम् ॥ ६८ ॥

---

स्थापयेत्। शीते इत्यनेन हेमन्तशिशिरयोरेव ग्रहणम्। विस्राव्येति—वस्त्रपूतं कृत्वा। चातुर्जातपलेन मिलित्वा पलमात्रेण। सञ्चूर्णयेत् अवचूर्णनं कारयेदिति ॥ ५९—६१ ॥

यमानीत्यादि।—तक्रारिष्टे त्रिपलांशकं तथा पलांशानीत्यपि प्रत्येकं ज्ञेयम्। तक्रस्य कंसे आढ़के आसुतं कृतसन्धानम्। जातमिति—अम्लरसतया जातम् ॥ ६२।६३॥

वाट्यस्येत्यादि।—आ-यामकाञ्जिके वाट्यस्येति—निस्तुषदरदलितयवमण्डस्य, तथा यवशक्तुकानाञ्च पृथक् पृथगाढ़कसम्मितमिति—आढ़कप्रमाणम्। सम्मितमिति भावे क्तः। चतुःषष्टीत्याकृतिमानेन। सुकल्पितानीति—खण्डखण्डीकृतानि। प्लाव्येति—आप्लाव्य।

दकोदरं गुल्ममथ प्लीहानं हृद्रोगमानाहमरोचकञ्च।
मन्दाग्नितां कोष्ठगतञ्च शूलमर्शोविकारान् सभगन्दरांश्च ॥६९॥
वातामयानाशु निहन्ति सर्वान् संसेव्यमानं विविधान्नराणाम् ॥७०॥

कल्याणगुडः।—

प्रस्थत्रयेणामलकीरसस्य शुद्धस्य दत्त्वाऽर्द्धतुलां गुडस्य।
चूर्णीकृतैर्ग्रन्थिकजीरचव्य-व्योषेभकृष्णाहवुषाजमोदैः ॥७१॥
विडङ्गसिन्धुत्रिफलायमानी-पाठाऽग्निधान्यैश्च पलप्रमाणैः।
दत्त्वा त्रिवृच्चूर्णपलानि चाष्टावष्टौ च तैलस्य पचेत् यथावत् ॥७२॥
तं भक्षयेदक्षफलप्रमाणं यथेष्टचेष्टं त्रिसुगन्धियुक्तम्।
अनेन सर्वे ग्रहणीविकाराः सश्वासकासस्वरभेदशोथाः ॥७३॥
शाम्यन्ति चायं चिरमन्यराग्नेर्हतस्य पुंस्त्वस्य च वृद्धिहेतुः।
स्त्रीणाञ्च वन्ध्यामयनाशनोऽयं कल्याणको नाम गुडः प्रदिष्टः ॥७४॥

तैले मनाग् भर्जयन्ति त्रिवृदत्र चिकित्सकाः।
अत्रोक्तमानसाधर्म्यात् त्रिसुगन्धि पलं पृथक् ॥ ७५ ॥

कुष्माण्डगुडकल्याणकः।—

कुष्माण्डकानां रूढ़ानां सुस्विन्नं निष्कुलत्वचाम्।

---

तुम्बुरु वणिग्द्रव्यम। वत्सगन्धा फौकान्ची। शिवाटिका वंशपत्री ( छिङ्कुपत्री )। कृष्णा पिप्पली। उपकुञ्चिका स्थूलकृष्णजीरकः। आसुरी राजिका। कारविः सुगन्धि सूक्ष्मकृष्णजीरकम्। आ-यामकालादिति—यामः प्रहररूपः कालः तमवधीकृत्य ॥६४—७०॥

प्रस्थत्रयेणेत्यादि।—अयं योगः सुश्रुते कासप्रतिषेधे पठितः। अत्र ग्रन्थिकं पिप्पलीमूलम्। अजमोदा यमानी, अन्तःपरिमार्जनत्वात्, अतो यमान्या भागद्वयम्। अग्निश्चित्रकः। पलप्रमाणैरिति प्रत्येकम्। त्रिवृच्चूर्णं तैले मनाग्भर्जनीयं, भर्जनेन च तस्य मन्दवीर्य्यत्वादतिविरेचकत्वं न भवति। अक्षफलप्रमाणं कर्षम्; व्यवहारस्तु चतुःपञ्चमाषकैरिति। त्रिसुगन्धि त्वगेलापत्रकम्। त्रिवृच्चूर्णसहिते एव तैले गुडमामलकीरसमोलितं प्रदाय पाकः, सिद्धे च लेहे ग्रन्थिकादिचूर्णप्रक्षेप इति व्यवहारो वैद्यानाम्। अत्रोक्तमानसाधर्म्यादिति—ग्रन्थिकादिचूर्णांस्य प्रत्येकं पलमानमुक्तं, तत्साहचर्य्यादित्यर्थः॥ ७१—७५ ॥

कुष्माण्डकानामित्यादि।—रूढ़ानामिति—सम्यक्पक्वानाम्; सम्यक्पाकश्च संवत्

सर्पिःप्रस्थे पलशतं ताम्रभाण्डे शनैः पचेत् ॥ ७६ ॥
पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली ।
धान्यकानि विडङ्गानि यमानी मरिचानि च ॥ ७७ ॥
त्रिफला चाजमोदा च कलिङ्गाजाजिसैन्धवम् ।
एकैकस्य पलञ्चैव त्रिवृदष्टपलं भवेत् ॥ ७८ ॥
तैलस्य च पलान्यष्टौ गुडपञ्चाशदेव तु ।
प्रस्थैस्त्रिभिः समेतन्तु रसेनामलकस्य तु ॥ ७९ ॥
यदा दर्वीप्रलेपस्तु तदैनमवतारयेत् ।
यथाशक्ति गुडान् कुर्य्यात् कर्षकर्षार्द्धमानकान् ॥ ८० ॥
अनेन विधिना चैव प्रयुक्तस्तु जयेदिमान् ।
प्रसह्य ग्रहणीरोगान् कुष्ठान्यर्शोभगन्दरान् ॥ ८१ ॥
ज्वरमानाहहृद्रोग-गुल्मोदरविसूचिकाः ।
कामलापाण्डुरोगांश्च प्रमेहांश्चैव विंशतिम् ॥ ८२ ॥
वातशोणितवीसर्पान् दद्रुचर्म्मदलोमकान् ।
कफपित्तानिलान् सर्वान् प्ररूढांश्च व्यपोहति ॥ ८३ ॥
व्याधिक्षीणा वयःक्षीणाः स्त्रीषु क्षीणाश्च ये नराः ।
तेषां वृष्यश्च बल्यश्च वयःस्थापन एव च ॥
गुड़कल्याणको नाम वन्ध्यानां गर्भदः परः ॥ ८४ ॥

रसपर्पटिका ।—

याऽम्लपित्ते विधातव्या गुड़िका च क्षुधावती ।
तत्र प्रोक्तविधा शुद्धौ समानौ रसगन्धकौ ॥ ८५ ॥

---

शरातीतत्वेनैव भवतीति ; लाट्टशस्य कुष्माण्डस्य खण्डखण्डीकृतस्य त्यक्तबीजमज्जरी-वल्कलस्य त्वचा कृतावरणस्य किञ्चित् पानीयं दत्त्वा उत्स्विन्नस्य निष्पीड्य गालितरसस्य पिष्टस्यातपे किञ्चिच्छुष्कस्य पलशतं ग्राह्यं, ततस्तस्य घृतशरावचतुष्टये तैलस्य चाष्टपले सन्तलनं कार्य्यम ; तत आमलकस्वरसस्य द्वादशशरावेण पञ्चाशद्गुडपलान्यालोड्य. ततः पूत्वा सन्तलितकुष्माण्डादिकमेकीकृत्य पक्तव्यम ; ततो गुडपाकविधया अवतारिते पिप्पल्यादिचूर्णस्य प्रक्षेप इत्यर्थः। अक्षपरिमाणा च प्रायः कर्षार्द्धेनेत्याहुः ॥ ७६—८४ ॥

सिद्धफलां रसपर्पटीमाह, याऽम्लेत्यादि ।—तत्रेति—तत्र क्षुधावत्यां या विधा यो

सम्मर्द्य कज्जलाभन्तु कुर्य्यात् पात्रे दृढ़ाश्रये ।
ततो बादरवह्निस्थ-लोहपात्रे द्रवीकृतम् ॥ ८६ ॥
गोमयोपरि विन्यस्त-कदलीपत्रपातनात् ।
कुर्य्यात् पर्पटिकाकारमस्य रक्तिद्वयं क्रमात् ॥ ८७ ॥
द्वादशरक्तिकां यावत् प्रयोगः प्रहरार्द्धतः ।
तदूर्द्धं बहुपूगस्य भक्षणं दिवसे पुनः ॥ ८८ ॥
तृतीय एव मांसाज्य-दुग्धाद्यत्र विधीयते ।
वर्ज्यं विदाहि-स्त्री-रम्भा-मूलं तैलञ्च सार्षपम् ॥ ८९ ॥
क्षुद्रमत्स्याम्बुजखगांस्त्यक्त्वोन्निद्रः पयः पिबेत् ।
ग्रहणीक्षयकुष्ठार्शः-शोषाजीर्णविनाशिनी ॥
रसपर्पटिका ख्याता निबद्धा चक्रपाणिना ॥ ९० ॥

ताम्रयोगः ।—

स्थाल्यां सम्मर्द्य दातव्यौ माषिकौ रसगन्धकौ ।
नखक्षुण्णं तदुपरि तण्डुलीयं द्विमाषिकम् ॥ ९१ ॥
ततो नैपालताम्रादि विधाय सुकरालितम् ।

रसगन्धकशुद्धिप्रकारो वक्तव्यः, तथा शुद्धावित्यर्थः । ततः सगन्धकं रसं दृढ़ाश्रये खल्लशिलायां सम्मर्द्य कज्जलाभं चूर्णं कुर्य्यात् । बादरवह्निस्थेति—बदरदारुसन्धुक्षिताग्निस्थ इत्यर्थः । शुद्धपारदकर्षं १, शुद्धगन्धककर्षं १, एतद्द्वयं खल्ले तावत् घर्षणीयं लोहदण्डेन पाषाणदण्डेन वा, यावत् कज्जलाभं भवति, ततो लोहदार्विकायामितच्चूर्णं दत्त्वा बदराङ्गारोपरि विन्यस्य लोहदण्डेन सञ्चाल्य यदा द्रवीभूतं भवति, तदा आर्द्रगोमयपिण्डोपरि स्थापितकोमलकदलीपत्रे ढालनीयम्, अपरकदलीपत्रान्तरेण आर्द्रगोमयपिण्डेन पर्पटिकाकृतिः कार्य्या । रक्तिद्वयं क्रमादिति—प्रथमं गुञ्जायुगलं, प्रतिदिनमेकैकवृद्धितो भक्ष्यमिति क्रमादित्यस्यार्थः । पर्णं कृत्वा सम्भक्ष्य द्विगुञ्जामेकां जीरकगुञ्जाद्वयञ्च भक्षणीयम् । ततः चर्वणं त्यक्त्वा दन्तादिलग्नं प्रक्षाल्य जलचुलुकं पातव्यमित्युपदेशः । प्रहरार्द्धत इति—प्रहरार्द्धाभ्यन्तरे । तदूर्द्धमिति—प्रहरार्द्धादूर्द्धम् । तृतीये दिवसे इति सम्बन्धः ॥ ८५—९० ॥

ताम्रयोगमाह, स्थाल्यामित्यादि ।—अत्रापि रसगन्धकौ क्षुधावतीगुड़िकोक्तविधया शोधितौ ग्राह्यौ । सुकरालितमिति—पिष्टभक्ताढिकपक्केन नीरन्ध्रलेपित-

पांशुना पूरयेदूर्द्ध्वं सर्वां स्थालीं ततोऽनलः ॥ ८२ ॥
स्थाल्यधो नालिकां यावद्देयस्तेन मृतस्य च ।
ताम्रीताम्रस्य रक्त्येका त्रिफलाचूर्णरक्तिका ॥ ८३ ॥
त्र्यषणस्य च रक्त्येका विडङ्गस्य च तन्मधु ।
घृतेनालोड्य लेढ़व्यं प्रथमे दिवसे ततः ॥ ८४ ॥
रक्तिवृद्धिः प्रतिदिनं कार्य्या ताम्रादिषु त्रिषु ।
स्थिरा विड़ङ्गरक्तिस्तु यदा भेदो विवक्षितः ॥ ८५ ॥
तदा विड़ङ्गस्याधिकं दद्याद्रक्तिद्वयं पुनः ।
द्वादशाहं योगवृद्धिस्ततो ह्रासक्रमोऽप्ययम् ॥ ८६ ॥
ग्रहणीमम्लपित्तञ्च क्षयं शूलञ्च सर्वदा ।
ताम्रयोगो जयत्येष बलवर्णाग्निवर्द्धनः ॥ ८७ ॥

इति ग्रहणी-चिकित्सा ।

---

मित्यर्थः। पांशुना वालुकया। नालिकां घटीमेकां यावदनलज्वाला स्थाल्यधो देयेत्यर्थः। त्रिफलाया मिलित्वा चूर्णरक्तिका; एवं त्रिकटोरपि। सर्वमिदं चूर्णं विड़ङ्गान्तं मधुघृताभ्यामालोड्य लेह्यः। विड़ङ्गरक्तिका पुनः स्थिरा न न्यूनाधिकभावा इत्यर्थः; यदा पुनः कोष्ठविबन्धाध्मानादिषु विरेकोऽपेक्षितो भवति, तदैव परं विड़ङ्गस्य रक्तिद्वयं ग्राह्यमित्यर्थः। अस्य च पद्धती यथा—शोधितरसगन्धकः प्रमा १, एतद्द्वयं कज्जलीकृत्य दृढ़नूतनपातिलिकायां स्थाप्यं, तदुपरि तण्डुलीयकशाकमूलचूर्णस्य माषकद्वयमङ्गुलीद्वयेन गृहीत्वा देयम्, अनन्तरमेतत् सर्वं कराटकवेधयोग्येन नैपालताम्रपञ्चदशमाषकेण कृतताम्र्या अम्लरीतिरसभावितया ढक्कनीयं, ढक्कित्वा पिष्टभक्तसिकथकेन ताम्रिकाया रन्ध्रलेपनं कार्य्यम्; ततः स्थालीमध्यस्थितायास्ताम्रिकाया उपरि तां स्थालीं वालुकया पूरयित्वा, तदधो घटिकां यावत् ज्वाला देया, एवं कृतताम्रात्रक्ति १, मिलितत्रिफलाचूर्णरक्ति १, तथा मिलितत्रिकटुचूर्णरक्ति १, विड़ङ्गचूर्णरक्ति १, एतत् सर्वं घृतमधुभ्यामालोड्य लेह्यं, शीतलजलमनुपेयं प्रथमदिने; एवं द्वादशदिनपर्य्यन्तं रक्तिमेकां कृत्वा वृद्धिः; वृद्धिवत् ह्रासक्रमोऽपि एवमेव ज्ञेयः। रसगन्धकलक्षणञ्च योगरत्नाकरे यथा—"मुक्ताफलसमं स्निग्धं घनं निष्पटलं गुरु। चपलं चपलं शस्तं वदन्ति भिषजां

# अथार्शश्चिकित्सा ।

चतुर्विधोपक्रमः ।—

दुर्नाम्नां साधनोपायश्चतुर्धा परिकीर्त्तितः ।
भेषजक्षारशस्त्राग्नि-साध्यत्वादाद्य उच्यते ॥ १ ॥

सामान्यचिकित्सा ।—

यद्वायोरानुलोम्याय यदग्निबलवृद्धये ।
अन्नपानौषधद्रव्यं तत् सेव्यं नित्यमर्शसैः ॥ २ ॥

शुष्कस्राविणोः चिकित्साविशेषः ।—

शुष्कार्शसां प्रलेपादि-क्रिया तीक्ष्णा विधीयते ।
स्राविणां रक्तमालोक्य क्रिया कार्य्याऽस्रपैत्तिकी ॥ ३ ॥

स्नुक्क्षीरादिप्रलेपद्वयम् ।—

स्नुक्क्षीरं रजनीयुक्तं लेपात् दुर्नामनाशनम् ।
कोषातकीरजोघर्षान्निपतन्ति गुदोद्भवाः ॥ ४ ॥

अर्कक्षीरादिप्रलेपः ।—

अर्कक्षीरं सुधाक्षीरं तिक्ततुम्ब्याश्च पल्लवाः ।
करञ्जो वस्तमूत्रञ्च लेपनं श्रेष्ठमर्शसाम् ॥ ५ ॥

---

वराः ॥" चपलमिति—रनम् । द्वितीयं चपलमिति—चञ्चलम् । "शुकपिच्छसमच्छायो नवनीतसमप्रभः । मसृणः कठिनः स्निग्धः श्रेष्ठो गन्धश्च उच्यते ॥" घृतमांसरसादीनाञ्चावाहाराविधर्वीर्य्यः ॥ ६१—६७ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां ग्रहणीचिकित्साविवृतिः ।

———

पूर्वोक्तसङ्गत्यैव ग्रहण्यनन्तरमर्शश्चिकित्सितमुच्यते, दुर्नाम्नामित्यादि ।—आद्य इति—भेषजोपायः ॥ १ ॥

विस्तरेण वक्ष्यमाणां चिकित्सां सारोद्धारेणाह, यद्वायोरित्यादि चरकस्य ।—अर्शसैरिति—अर्शोरोगयुक्तैः ॥ २ ॥

शुष्कार्शसामित्यादि ।—आदिशब्दात् स्वेदादीनां ग्रहणम् ॥ ३ ॥

लेपादीनाह, स्नुक्क्षीरमित्यादि ।—स्नुहीक्षीरेण हरिद्राचूर्णमार्द्रं कृत्वा लेपः ; उक्तं हि वाग्भटे—"स्नुक्क्षीरार्द्रनिशालेपः" ( चि० ८ ग० ) इति । कोषातकी घोषकः ॥४॥

अर्केत्यादि ।—अत्र करञ्जस्य त्वक् । सुधाक्षीरमित्यत्र सुधाकाण्डस्वरके वाग्भटे च दृश्यते ॥ ५ ॥

घोषावर्त्तिः ज्योत्स्निकाकल्कश्च।—

अर्शोघ्नो गुदगा वर्त्तिर्गुड़घोषाफलोद्भवा।
ज्योत्स्निकामूलकल्केन लेपो रक्तार्शसां हितः॥ ६॥

तुम्बीबीजादिगुटी।—

तुम्बीबीजं सोद्भिदन्तु काञ्जीपिष्टं गुड़ीकृतम्।
अर्शोहरं गुदस्थं स्याद्दधि माहिषमश्नतः॥ ७॥

लिङ्गवर्त्त्यां पथ्यादि लेपः।—

महाबोधिप्रदेशस्य पथ्या कोषातकीरजः।
कफेन लेपतो हन्ति लिङ्गवर्त्तिमसंशयम्॥ ८॥

लिङ्गवर्त्त्याम् अपामार्गक्षारादिलेपः।—

अपामार्गोद्भवः क्षारो हरितालेन संयुतः।
लेपनं लिङ्गसम्भूतमर्शो नाशयति ध्रुवम्॥ ९॥

भिन्नवर्चोगाढ़वर्चसाः चिकित्साविधिः।—

वातातीसारवद्भिन्नवर्चांस्यर्शांस्युपाचरेत्।
उदावर्त्तविधानेन गाढ़विट्कानि चासकृत्॥ १०॥

अवस्थाविशेषे तक्रप्रयोगविधिः।—

विड्विबन्धे हितं तक्रं यमानीविड़संयुतम्।
वातश्लेष्मार्शसां तक्रात् परं नास्तीह भेषजम्॥ ११॥
तत् प्रयोज्यं यथादोषं सस्नेहं रूक्षमेव वा।
न विरोहन्ति गुदजाः पुनस्तक्रसमाहताः॥ १२॥

---

अर्शोघ्नोत्यादि।—वर्त्तिः फलवर्त्तिः। गुड़ं जलेन द्रवीकृत्य घोषकफलचूर्णं प्रक्षिप्य पक्वा वर्त्तिः कार्य्या। ज्योत्स्निका घोषकः॥ ६॥

तुम्बीबीजमित्यादि।—उद्भिदमुत्कारिकालवणं शाम्बरिलवणं वा॥ ७॥

महाबोधिप्रदेशस्येत्यादि।—महाबोधिर्मगधे प्रसिद्धः। पथ्या हरीतकी। कफेन श्लेष्मणा; समुद्रफेनेनेत्यन्ये, उदधि-कफत्वादिति भावः। मुष्टियोगतया पूर्वव्याख्या साध्वी। लिङ्गवर्त्तिर्लिङ्गार्शः॥ ८॥

अपामार्गेत्यादि।—स्पष्टम्॥ ९॥

वातातीसारेत्यादि।—वातातीसारवदिति—वातातीसारचिकित्सया॥ १०॥

विड्विबन्धे इत्यादि।—स्पष्टम्। वातश्लेष्मार्शसामित्यादि चरकस्य॥ ११।१२॥

तक्रसन्धानं दधिसन्धानं वा।—

त्वचं चित्रकमूलस्य पिष्ट्वा कुम्भं प्रलेपयेत्।
तक्रं वा दधि वा तत्र जातमर्शोहरं पिबेत्॥ १३॥

गुडहरीतकी।—

पित्तश्लेष्मप्रशमनी कच्छूकण्डूरुजापहा।
गुदजान् नाशयत्याशु योजिता सगुडाऽभया॥ १४॥

अभयाप्रयोगः।—

सगुडां पिप्पलीयुक्तामभयां घृतभर्जिताम्।
त्रिवृद्दन्तियुतां वाऽपि भक्षयेदानुलोमिकीम्॥ १५॥

तिलभल्लातकप्रयोगः।—

तिलारुष्कसंयोगं भक्षयेदग्निवर्द्धनम्।
कुष्ठरोगहरं श्रेष्ठमर्शसां नाशनं परम्॥ १६॥

तिलादियोगः।—

तिलभल्लातकं पथ्या गुडश्चेति समांशिकम्।
दुर्नामकासश्वासघ्नं प्लीहपाण्डुज्वरापहम्॥ १७॥

गुडहरीतकी तक्रप्रयोगश्च।—

गोमूत्रव्युषितां दद्यात् सगुडां वा हरीतकीम्।
पञ्चकोलकयुक्तं वा तक्रमस्मै प्रदापयेत्॥ १८॥

---

त्वचमित्यादि तस्यैव।—चित्रकमूलत्वचं पिष्ट्वा तिलोत्सेधमात्रः कुम्भगर्भे लेपो देयः॥१३॥

पित्तश्लेष्मप्रशमनीत्यादि।—गुदजानित्यत्र मांसाङ्कुरानिति शेषः, तेन पुंलिङ्गता उपपन्ना॥ १४॥

सगुडामित्यादि।—स्पष्टम्॥ १५॥

तिलारुष्केत्यादि।—संयुज्यते प्रयुज्यतेऽयमिति संयोगः प्रयोग एव। अन्ये तु—तिलारुष्करयोः संयोगो यत्रेत्याहुः॥ १६।१७॥

गोमूत्रव्युषितामित्यादि चरकस्य।—रात्रौ गोमूत्रस्थितामिति चक्रः। सगुडामित्यन्त एको योगः। वा-शब्दः पूर्वयोगापेक्षया; चरके हि—"सगुडामभयां वाऽथ प्राशयेत् पौवंभक्तिकीम्" (चि० अर्श०) इत्यभिधाय तदनन्तरमयं योग उक्तः, अतो भिन्नयोगत्वेन न पौनरुक्त्यं स्यादिति। एतेन गोमूत्रव्युषितामिति प्रयोगानुरोधात्

शूरणपुटपाकः ।—

मृल्लिप्तं शौरणं कन्दं पक्त्वाऽग्नौ पुटपाकवत् ।
अद्यात् सतैललवणं दुर्नामविनिवृत्तये ॥ १९ ॥

वार्त्ताकुप्रयोगः ।—

स्विन्नं वार्त्ताकुफलं घोषायाः क्षारजेन सलिलेन ।
तत् घृतभृष्टं युक्तं गुड़ेन आ तृप्तितो योऽत्ति ॥ २० ॥
पिबति च तक्रं नूनं तस्याश्वेवातिवृद्धगुदजानि ।
यान्ति विनाशं पुंसां सहजान्यपि सप्तरात्रेण ॥ २१ ॥

तिलप्रयोगः ।—

असितानां तिलानां प्राक् प्रकुञ्चं शीतवार्य्यनु ।
खादतोऽर्शांसि नश्यन्ति द्विजदार्ढ्याङ्गपुष्टिदम् ॥ २२ ॥

दन्त्यरिष्टम् ।—

दन्तीचित्रकमूलानामुभयोः पञ्चमूलयोः ।
भागान् पलांशानापोथ्य जलद्रोणे विपाचयेत् ॥ २३ ॥
त्रिपलं त्रिफलायाश्च दलानां तत्र दापयेत् ।
रसे चतुर्थशेषे तु पूतशीते प्रदापयेत् ॥ २४ ॥

---

पुनरपि तन्त्रान्तरीयगुड़हरीतक्यभिहितेति निश्चलेनोक्तमसङ्गतं, योगद्वयस्यैव चरकोक्तत्वात् इति । पञ्चकोलकयुक्तमिति—पञ्चकोलचूर्णयुक्तम् ॥ १८ ॥

मृल्लिप्तमित्यादि वाग्भटस्य ।—शौरणं कन्दमिति—वन्यशूरणमूलम् ; एवं सर्वार्शांसि, तदभावे ग्राम्यशूरणोऽपीष्यते ॥ १९ ॥

स्विन्नमित्यादि ।—घोषकक्षारोदकेन षड्गुणेनैकविंशतिवारपरिस्रुतेन उत्स्विद्य घृते भृष्टा अनुरूपगुड़ेन संयोज्य भक्षयेदिति ॥ २०।२१ ॥

असितानामित्यादि ।—तिलानां प्रकुञ्चं पलं, प्राक् खादतः अनु पश्चाच्छीतवारि खादत इति योज्यम् । द्विजदार्ढ्यं दन्तदार्ढ्यम् ॥ २२ ॥

दन्तीत्यादि चरकस्य ।—अत्र उभयोरिति वचनबलात् पञ्चमूलयोः प्रत्येकं भागा ग्राह्याः । त्रिपल त्रिफलायाः इत्यत्र तु निर्देशस्य मानप्रधानत्वात् मिलितत्रिफलाया एव पलत्रयं ग्राह्यम् । मासार्द्धमिति—तन्त्रान्तरे तु मासमित्युक्तम् ;

तुलां गुड़स्य तत् तिष्ठेन्मासार्द्धं घृतभाजने।
तन्मात्रया पिबेन्नित्यमर्शोभ्यो विप्रमुच्यते॥ २५॥
ग्रहणीपाण्डुरोगघ्नं वातवर्चोऽनुलोमनम्।
दीपनञ्चारुचिघ्नञ्च दन्त्यरिष्टमिदं विदुः॥
पात्रेऽरिष्टादिसन्धानं धातकीलोध्रलेपिते॥ २६॥

नागरादिमोदकः।—

सनागरारुष्करवृद्धदारकं गुड़ेन यो मोदकमत्त्युदारकम्।
अशेषदुर्नामकरोगदारकं करोति वृद्धं सहसैव दारकम्॥२७॥

चूर्णमोदकयोः गुड़दानपरिभाषा।—

चूर्णे चूर्णसमो ज्ञेयो मोदके द्विगुणो गुड़ः॥ २८॥

प्राणदा-गुड़िका।—

त्रिपलं शृङ्गवेरस्य चतुर्थं मरिचस्य च।
पिप्पल्याः कुड़वार्द्धञ्च चव्यायाः पलमेव च॥ २९॥
तालीशपत्रस्य पलं पलार्द्धं केशरस्य च।
द्वे पले पिप्पलीमूलादर्द्धकर्षञ्च पत्रकात्॥ ३०॥
सूक्ष्मैलाकर्षमेकन्तु कर्षं त्वगमृणालयोः।

---

यथा—"त्रिफलादशमूलाग्नि-निकुम्भानां पलं पलम्। वारिद्रोणे शृतः पाद-शेषे गुड़तुलायुतः॥ आज्यभाण्डे स्थितो मासं दन्त्यरिष्टो निषेवितः॥" इति; उभयमपि प्रमाणं स्मृतिद्वैधवत्॥ २३—२६॥

सनागरेत्यादि।—अरुष्करं भल्लातकम्। उदारकमिति—महाफलम्। वृद्धमित्यत्र आत्मानमिति शेषः। अस्य योगस्य चतुःसमसंज्ञामाह भव्यदत्तः; तन्मते समेनैव गुड़ेन किञ्चिज्जलं दत्त्वा अग्नौ विपक्केन मोदकविधानम्। चक्रस्तु मोदकत्वात् गुड़स्य द्वैगुण्यमाह। अन्ये तु—"मोदके द्विगुणो गुड़ः" इति कस्यचित् अभियुक्तस्य वाक्यमनार्षमिति कृत्वा नाद्रियन्ते, उक्तरीत्या समेनापि गुड़ेन मोदकत्वोपपत्तेरिति॥ २७।२८॥

त्रिपलमित्यादि।—चतुर्थं मरिचस्येति—पलमेकमित्यर्थः। केशरस्य नागकेशरस्य।

गुड़ात् पलानि तु त्रिंशच्चूर्णमेकत्र कारयेत् ॥ ३१ ॥
अक्षप्रमाणा गुड़िका प्राणदेति च सा स्मृता ।
पूर्वं भक्ष्या तु पश्चाच्च भोजनस्य यथाबलम् ॥ ३२ ॥
मद्यं मांसरसं यूषं क्षीरं तोयं पिबेत् तथा ।
हन्यादर्शांसि सर्वाणि सहजान्यस्रजानि च ॥ ३३ ॥
वातपित्तकफोत्थानि सन्निपातोद्भवानि च ।
पानात्यये मूत्रकृच्छ्रे वातरोगे गलग्रहे ॥ ३४ ॥
विषमज्वरे च मन्देऽग्नौ पाण्डुरोगे तथैव च ।
क्रिमिहृद्रोगिणाञ्चैव गुल्मशूलार्त्तिनां तथा ॥ ३५ ॥
श्वासकासपरीतानामेषा स्यादमृतोपमा ।
शुण्ठ्याः स्थानेऽभया देया विड्ग्रहे पित्तपायुजे ॥ ३६ ॥
प्राणदेयं सितां दत्त्वा चूर्णमानाच्चतुर्गुणाम् ।
अम्लपित्ताग्निमान्द्यादौ प्रयोज्या गुदजातुरे ॥ ३७ ॥

---

त्वगम्बुणालयोरिति—त्वक् गुड़त्वक्, अम्बुणालमुशीरम, अनयोर्मिलित्वा कर्षः। पूर्वं भक्ष्या तु पश्चाच्च भोजनस्येति—भोजनस्य पूर्वं भोजनाव्यवहितपूर्वकाले गुड़िका भक्ष्या, पश्चाच्च मद्यादिकं पिबेदिति योज्यम ; न तु मण्डूरादिवत् भोजनस्य पूर्वपश्चाद्भागेन भक्षेति कल्पनीयम्, अर्शसि क्वचिदप्यस्य विधेरदृष्टत्वात्। मद्यं वातकफेऽनुपेयं, मांसरसो वाते, पित्ते क्षीरं, मुद्गयूषः कफे, तोयमुष्णं वातकफे, एवमन्यत्राप्यनुपानभेदो दोषभेदेन कल्पनीयः। वाग्भटे पुनरयं योगो ग्रहणीचिकित्सिते पठ्यते, तत्र चातुर्जातमुशीरञ्च प्रत्येकं कर्षमानमुक्तम ; यथा—"तालीशपत्र-मरिच-नागरान्तु पलं पलम्। कृष्णा-तन्मूलयोर्द्वे द्वे पले शुण्ठीपलत्रयम् ॥ चातुर्जातमुशीरञ्च कर्षांशं श्लक्ष्णचूर्णितम्। गुड़ेन वटकान् कृत्वा त्रिगुणेन सदा भजेत् ॥ मद्ययूषरसारिष्ट-मस्तुपेयापयोऽनुपः। वातश्लेष्मोल्वणां छर्दि-ग्रहणीपार्श्वहृद्रुजाम ॥ ज्वरश्वयथुपाण्डुत्व-गुल्मपानात्ययार्शसाम्। प्रसेकपीनसश्वास-कासानाञ्च निवृत्तये ॥ अभयां नागरस्थाने दद्यादत्रैव विड्ग्रहे। छर्द्यादिषु च पैत्तेषु चतुर्गुणसितान्विता ॥ पक्वेन गुड़िका कार्य्या गुड़ेन सितयाऽपि वा। परं हि वह्निसम्पर्काल्लघिमानं भजन्ति ताः ॥" (चि० १० अ०) इति। शुण्ठ्याः स्थाने इत्यादौ चूर्णमानादिति—

दोषभेदेन अनुपानस्य मात्रा ।—

अनुपानं प्रयोक्तव्यं व्याधौ श्लेष्मभवे पलम् ।
पलद्वयन्त्वनिलजे पित्तजे तु पलत्रयम् ॥ ३८ ॥

काङ्कायनो मोदकः ।—

पथ्या पञ्चपलान्येकमजाज्या मरिचस्य च ।
पिप्पलीपिप्पलीमूल-चव्यचित्रकनागराः ॥ ३९ ॥
पलाभिवृद्धाः क्रमशो यवक्षारपलद्वयम् ।
भल्लातकपलान्यष्टौ कन्दस्तु द्विगुणो मतः ॥ ४० ॥
द्विगुणेन गुडेनैषां वटकानक्षसम्मितान् ।
कृत्वैनं भक्षयेत् प्रातस्तक्रमम्भोऽनु वा पिबेत् ॥
मन्दाग्निं दीपयत्येष ग्रहणीपाण्डुरोगनुत् ॥ ४१ ॥
काङ्कायनेन शिष्येभ्यः शस्त्रक्षाराग्निभिर्विना ।
भिषग्जितमिति प्रोक्तं श्रेष्ठमर्शोविकारिणाम् ॥ ४२ ॥

माणिभद्रो मोदकः ।—

विडङ्गसारामलकाभयानां पलं पलं स्यात् त्रिवृतात्रयञ्च ।
गुडस्य षड् द्वादशभागयुक्ता मासेन त्रिंशद्गुडिका विधेयाः ॥४३॥
निवारणे यक्षवरेण सृष्टः स माणिभद्रः किल शाक्यभिक्षवे ।

---

समुदितचूर्णमानात् । केचित्तु गुडमानाच्चतुर्गुणमिति पठन्ति, तन्न, वाग्भटविरोधात्, प्रभूतशर्कराप्रसङ्गाच्च ॥ २९—३७ ॥

अथ दोषभेदेनानुपानमात्राभेदमाह—अनुपानमित्यादि ॥ ३८ ॥

पथ्येत्यादि ।—मरिचस्येत्यत्राप्येकमिति सम्बध्यते, तेन मरिचस्य पलमेकमित्यर्थः । पलाभिवृद्धाः क्रमश इति—यथाक्रमं पलेन वृद्धाः । कन्दस्तु द्विगुण इति—षोड़शपलः । द्विगुणेन गुड़ेनेति समुदितचूर्णापेक्षया । अक्षसम्मितानिति—कर्षसम्मितान्, व्यवहारस्तु षड़ष्टमाषकैरिति ॥ ३९—४२ ॥

विडङ्गसारेत्यादि ।—त्रिवृतात्रयमिति—त्रिवृतायाः पलत्रयम् । गुड़स्य च षट् पलानि । द्वादशभागयुक्ता इति—द्वादशपलरूपविभागेन युक्ताः कृताः । मासेनेति—मासेन, उपयोक्तव्यमिति शेषः । अयमर्थः,—द्वादश पलानि विभज्य मासेनोपयोज्यम् । त्रिंशद्गुड़िकाः समभागेन कुर्य्यात् इति—तेन एकैकगुड़िका षड्रत्तिकाधिक-नवमाष-

अयं हि कासक्षयकुष्ठनाशनो भगन्दरप्लीहजलोदरार्शसाम् ॥४४॥
यथेष्टचेष्टान्नविहारसेवी अनेन वृद्धस्तरुणो भवेच्च ॥ ४५ ॥

स्वल्पशूरणमोदकः।—

मरिचमहौषधचित्रकशूरणभागा यथोत्तरं द्विगुणाः।
सर्वसमो गुड़भागः सेव्योऽयं मोदकः प्रसिद्धफलः ॥ ४६ ॥
ज्वलनं ज्वलयति जाठरमुन्मूलयति शूलगुल्मगदान्।
निःशेषयति श्लीपदमर्शांसि नाशयत्याशु ॥ ४७ ॥

वृहच्छूरणमोदकः।—

शूरणषोड़शभागा वह्नेरष्टौ महौषधस्यातः।
अर्द्धेन भागयुक्तिर्मरिचस्य च ततोऽपि चार्द्धेन ॥ ४८ ॥
त्रिफलाकणासमूलातालीशारुष्करक्रिमिघ्नानाम्।
भागा महौषधसमा दहनांशा तालमूली च ॥ ४९ ॥
भागः शूरणतुल्यो दातव्यो वृद्धदारकस्यापि।
भृङ्गैले मरिचांशे सर्वाण्येकत्र सञ्चूर्ण्य ॥ ५० ॥
द्विगुणेन गुड़ेन युतः सेव्योऽयं मोदकः प्रकामघनैः।
गुरुवृष्यभोज्यरहितैष्वितरेषूपद्रवं कुर्य्यात् ॥ ५१ ॥
भस्मकमनेन जनितं पूर्वमगस्त्यस्य योगराजेन।
भीमस्य मारुतेरपि येन तौ महाशनौ जातौ ॥ ५२ ॥
अग्निबलवृद्धिहेतुर्न केवलं शूरणो महावीर्य्यः।
प्रभवति शस्त्रक्षाराग्निभिर्विनाऽप्यर्शसामेषः ॥ ५३ ॥

---

कार्षिकषमाना भवति ; कर्ष १, माष ९, रति ६। व्यवहारस्तु दशभिरष्टाभिर्वा माषकैरिति। निवारणे इत्यत्र गुदजानामिति शिवः। देशे इत्यन्ये ॥ ४३—४५ ॥

मरिचेत्यादि।—स्वल्पशूरणमोदकः स्पष्टः ॥ ४६ ४७ ॥

शूरणषोड़शभागा इत्यादि।—त्रिफलाकणासमूलातालीशारुष्करक्रिमिघ्नानां भागा महौषधसमा इति—त्रिफलादीनां प्रत्येकं महौषधसमा भागाः, त्रिफलायाश्च प्रत्येकम्। कणा समूला इति—पिप्पल्याः फलं मूलञ्चेत्यर्थः। समूला इत्यत्र "स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्" इत्यादिना पुंवद्भावो नोद्भावनीयः, तस्योत्तरपदे स्त्रीप्रत्ययान्ते परतो विधानात्; विशेषणत्वादस्य पूर्वनिपातोऽपि नोद्भावनीयः,

श्वयथुश्लीपदजित् ग्रहणीमपि कफवातसम्भूताम्।
नाशयति वलीपलितं मेधां कुरुते वृषत्वञ्च ॥ ५४ ॥
हिक्काश्वासकासं सराजयक्ष्मप्रमेहांश्च।
प्लीहानञ्चाथोग्रं हन्ति च रसायनं पुंसाम् ॥ ५५ ॥

शूरणपिण्डी।—

चूर्णीकृताः षोड़श शूरणस्य भागास्ततोऽर्द्धेन च चित्रकस्य।
महौषधाद्द्वौ मरिचस्य चैको गुड़ेन दुर्नामजयाय पिण्डी ॥ ५६ ॥
पिण्ड्यां गुड़ो मोदकवत् पिण्डत्वापत्तिकारकः ॥ ५७ ॥

व्योषाद्यं चूर्णम्।—

व्योषाग्न्यरुष्करविडङ्गतिलाभयानां
चूर्णं गुड़ेन सहितन्तु सदोपयोज्यम्।
दुर्नामकुष्ठगरशोथशकृद्विबन्धा-
नग्नेर्जयत्यबलतां क्रिमिपाण्डुताञ्च ॥ ५८ ॥

समशर्करं चूर्णम्।—

शुण्ठीकणामरिचनागदलत्वगेलं
चूर्णीकृतं क्रमविवर्द्धितमूर्द्धमन्त्यात्।
खादेदिदं समसितं गुदजाग्निमान्द्य-
कासारुचिश्वसनकण्ठहृदामयेषु ॥ ५९ ॥

---

विवक्षावशादस्यैव विशिष्यत्वात्। दहनश्चित्रकः। भल्लैले मरिचांशे प्रत्येकं, भल्लं गुड़त्वक्। गुरुव्यभोज्यरहितेष्वितरेष्विति—प्रकामधनप्रतियोगितया दरिद्रेषु। उपद्रवानिति—व्यापत्तिम् ॥ ४८—५५ ॥

चूर्णीकृता इत्यादि वाग्भटस्य।—मोदकवदिति—द्विगुण इत्यर्थः ॥ ५६ ५७ ॥

व्योषाग्नीत्यादि।—अत्र गुड़स्यैकभागत्वं चूर्णयोगत्वात् इति; किन्त्वयं योगी बिभीतकामलकयोगात् गुड़िकाऽपि क्रियते; यदाह वाग्भटः,—"गुडव्योषवराविल्ल-तिलारुष्करचित्रकैः। अर्शांसि हन्ति गुड़िका त्वग्विकारञ्च शीलिता ॥" (चि० ८ अ०) इति ॥ ५८ ॥

शुण्ठीत्यादि।—नागं नागकेशरचूर्णम्। दलं तेजपत्रम्। क्रमविवर्द्धितमूर्द्ध-

लवणोत्तमाद्यं चूर्णम्।—

लवणोत्तमवह्निकलिङ्गयवांश्चिरविल्वमहापिचुमर्दयुतान्।
पिब सप्तदिनं मथितालुलितान् यदि मर्दितुमिच्छसि पायुरुहान्॥ ६०॥

नागार्जुनयोगः।—

त्रिफला पञ्चलवणं कुष्ठं कटुकरोहिणी।
देवदारु विडङ्गानि पिचुमर्दफलानि च॥ ६१॥
बला चातिबला चैव हरिद्रे द्वे सुवर्चला।
एतत् सम्भृतसम्भारं करञ्जत्वग्रसेन च॥ ६२॥
पिष्ट्वा च गुड़िकां कृत्वा बदरास्थिसमां बुधः।
एकैकां तां समुद्धृत्य रोगे रोगे पृथक् पृथक्॥ ६३॥
उष्णेन वारिणा पीता शान्तमग्निं प्रदीपयेत्।
अर्शांसि हन्ति तक्रेण गुल्ममम्लेन निर्हरेत्॥ ६४॥
जन्तुदष्टन्तु तोयेन त्वग्दोषं खदिराम्बुना।
मूत्रकृच्छ्रन्तु तोयेन हृद्रोगं तैलसंयुता॥ ६५॥
इन्द्रस्वरससंयुक्ता सर्वज्वरविनाशिनी।

---

अन्त्यादिति—अन्त्यस्थितद्रव्यादारभ्य तदुपरितनद्रव्यमेकद्विव्यादिक्रमेण वर्द्धयेदित्यर्थः। समसितमिति—मिलितसर्वचूर्णसमशर्करम्। श्वसनमिति—श्वासः॥ ५९॥

लवणोत्तमेत्यादि वाग्भटस्य।—लवणोत्तमं सैन्धवम्। वह्निश्चित्रकः। कलिङ्गयव इन्द्रयवः। चिरविल्वः करञ्जः तस्य मूलम्; यत् पुनरस्य सुश्रुते फलग्रहणमुक्तं तच्छोधने ज्ञेयम्। महापिचुमर्दः पर्वतनिम्बः निम्बसदृशबृहत्पत्रो वृक्षः, बाकायनीति लोके ख्यातः। ग्रामनिम्ब एव पर्वतभवत्वेन पर्वतनिम्ब इत्याहुरन्ये, अस्य त्वक् ग्राह्या। मथितालुलितानिति—तक्रेणालोड़ितान्॥ ६०॥

त्रिफलेत्यादि।—अतिबला श्वेतबला। सुवर्चला सूर्य्यावर्त्तः। सम्भृतसम्भारमिति पाठः। "सम्भृत्य सम्भारम्" इति पाठेऽपि—सम्भारं त्रिफलाद्यौषधजातं सम्भृत्य मेलयित्वा करञ्जत्वग्रसेन पिष्टेति योज्यम्। पृथक् पृथक् इत्यस्य पानाशनप्रयोगतः इत्यनेन वक्ष्यमाणेन सम्बन्धः; तेन रोगे रोगे पृथक् पृथक् पानाशनप्रयोगतः, उपयुञ्जीतेति शेषः। गुल्मम्लेनेति—काञ्जिकेन। जन्तुर्वृश्चिकादिः। इन्द्रस्वरस भाकाशजलम्।

मातुलुङ्गरसेनाथ सद्यः शूलहरी स्मृता ॥ ६६ ॥
कपित्थतिन्दुकानान्तु रसेन सह मिश्रिता ।
विषाणि हन्ति सर्वाणि पानाशनप्रयोगतः ॥ ६७ ॥
गोशकृद्रससंयुक्ता हन्यात् कुष्ठानि सर्वशः ।
श्यामाकषायसहिता जलोदरविनाशिनी ॥ ६८ ॥
भक्तच्छन्दं जनयति भुक्तस्योपरि भक्षिता ।
अक्षिरोगेषु सर्वेषु मधुना घृष्य चाञ्जयेत् ॥
लेहमात्रेण नारीणां सद्यः प्रदरनाशिनी ॥ ६९ ॥
व्यवहारे तथा द्यूते सङ्ग्रामे मृगयादिषु ।
समालभ्य नरो ह्येनां क्षिप्रं विजयमाप्नुयात् ॥ ७० ॥

विजयचूर्णम् ।—

त्रिकत्रयवचाहिङ्गु-पाठाक्षारनिशाद्वयम् ।
चव्यतिक्ताकलिङ्गाग्नि-शताह्वालवणानि च ॥ ७१ ॥
ग्रन्थिबिल्वाजमोदा च गणोऽष्टाविंशतिर्मतः ।
एतानि समभागानि श्लक्ष्णचूर्णानि कारयेत् ॥ ७२ ॥
ततो बिड़ालपदकं पिबेदुष्णेन वारिणा ।
एरण्डतैलयुक्तान्तु सदा लिह्यात् ततो नरः ॥ ७३ ॥
श्वासं हन्यात तथा शोथमर्शांसि च भगन्दरम् ।
हृच्छूलं पार्श्वशूलञ्च वातगुल्मं तथोदरम् ॥ ७४ ॥
हिक्काश्वासप्रमेहांश्च कामलां पाण्डुरोगताम् ।

---

श्यामाकषायश्छिन्नताक्काथः। भक्तच्छन्दं भक्ताकाङ्क्षाम्। व्यवहारे इति—वाग्व्यवहाररूपे वादे। समालभ्येति—आलिप्य ॥ ६१—७० ॥

त्रिकत्रयेत्यादि।—त्रिकटु त्रिफला त्रिजातं त्रिकत्रयम्; ये तु त्रिजातस्थाने मुस्तविड़ङ्गचित्रकरूपं त्रिमदमाहुः, तन्मते चव्यतिक्ताकलिङ्गाग्नीत्यत्राग्निशब्देन भल्लातकं ग्रेयम्। लवणानीति—पञ्च लवणानि, अन्यथा अष्टाविंशतिसङ्ख्या नोपपद्यते। ग्रन्थिः पिप्पलीमूलम्। अजमोदा यमानी। बिड़ालपदकमिति—कर्षम्। श्वासमिति—केवलं श्वासम्। हिक्काश्वासेति—हिक्कासहितः श्वास इत्यर्थः; अतो न

आमान्वयमुदावर्त्तमन्त्रवृद्धिं गुदे क्रिमीन् ॥ ७५ ॥
अन्ये च ग्रहणीदोषा ये मया परिकीर्त्तिताः ।
महाज्वरोपसृष्टानां भूतोपहतचेतसाम् ॥ ७६ ॥
अप्रजानान्तु नारीणां प्रजावर्द्धनमेव च ।
विजयो नाम चूर्णोऽयं कृष्णात्रेयेण पूजितः ॥ ७७ ॥

श्रीबाहुशाली गुड़ः ।—

त्रिवृत् तेजोवती दन्ती श्वदंष्ट्रा चित्रकं शटी ।
गवाक्षीमुस्तविश्वाह्व-विड़ङ्गानि हरीतकी ॥ ७८ ॥
पलोन्मितानि चैतानि पलान्यष्टावरुष्करात् ।
षट्पलं वृद्धदारस्य शूरणस्य तु षोड़श ॥ ७९ ॥
जलद्रोणद्वये क्वाथ्यं चतुर्भागावशेषितम् ।
पूतन्तु तं रसं भूयः क्वाथ्येभ्यस्त्रिगुणो गुड़ः ॥ ८० ॥
लेहं पचेत् तु तं तावत् यावद्दर्वीप्रलेपनम् ।
अवतार्य्य ततः पश्चाच्चूर्णानीमानि दापयेत् ॥ ८१ ॥
त्रिवृत्तेजोवतीकन्द-चित्रकान् द्विपलांशिकान् ।
एलात्वङ्मरिचञ्चापि गजाह्वाञ्चापि षट्पलाम् ॥ ८२ ॥
द्वात्रिंशतं पलान्येवं चूर्णं दत्त्वा निधापयेत् ।
ततो मात्रां प्रयुञ्जीत जीर्णे क्षीररसाशनः ॥ ८३ ॥

---

पौनरुक्त्यम् । अन्ये तु—श्वासमित्यत्र कासमिति पठन्ति । रोगान् जयतीति कृत्वा विजयसंज्ञा ॥ ७१—७७ ॥

त्रिवृत् तेजोवतीत्यादि कस्यचित् तन्त्रस्य ।—तेजोवती चवी ; एवं सर्व्वत्र ; यत्र पुनश्चवी तेजोवती चास्ति तत्र परं तेजोवत्या ज्योतिष्मती गृह्यते, यथा गुग्गुल-पञ्चतिक्तके घृते । गवाक्षी गोरक्षकर्कटी, तस्या मूलम् ; एवं सर्व्वत्र ; न तु गवाक्षी श्वेतापराजिता, क्वापि टीकाकृद्भिरव्याख्यातत्वात् । क्वाथ्येभ्यस्त्रिगुणो गुड़ इति—एकचत्वारिंशत्-पलक्वाथ्यापेक्षया त्रैगुण्येन गुड़स्य त्रयोविंशतिपलाधिकशतपलं भवति । कन्दः शूरणः । त्रिवृदादीनां द्विपलत्वम्, एलादीनाञ्च षट्पलत्वं यद्यपि निर्द्देशस्य

पञ्च गुल्मान् प्रमेहांश्च पाण्डुरोगं हलीमकम्।
जयेदर्शांसि सर्वाणि तथा सर्वोदराणि च ॥ ८४ ॥
दीपयेत् ग्रहणीं मन्दां यक्ष्माणञ्चापकर्षति।
अपीनसं प्रतिश्यायमाढ्यवातं तथैव च ॥ ८५ ॥
अयं सर्वगदेष्वेव कल्याणो लेह उत्तमः।
दुर्नामारिरयञ्चाशु दृष्टो वारसहस्रशः ॥ ८६ ॥
भवन्त्येनं प्रयुञ्जानाः शतवर्षं निरामयाः।
आयुषो दैर्घ्यजननो वलीपलितनाशनः ॥ ८७ ॥
रसायनवरश्चैष मेधाजनन उत्तमः।
गुडः श्रीबाहुशालोऽयं दुर्नामारिः प्रकीर्त्तितः ॥ ८८ ॥

गुडपाकलक्षणम्।—

तोयपूर्णे यदा पात्रे क्षिप्तो न प्लवते गुडः।
क्षिप्तश्च निश्चलस्तिष्ठेत् पतितस्तु न शीर्य्यते ॥ ८९ ॥
यदा दर्वीप्रलेपः स्यात् यावद्वा तन्तुलीभवेत्।
एष पाको गुडादीनां सर्वेषां परिकीर्त्तितः ॥ ९० ॥
सुखमर्दः सुखस्पर्शो गुडः पाकमुपागतः।

---

द्रव्यप्रधानत्वादेव प्रत्येकं सिध्यति, तथाऽपि द्वाविंशतं पलानीति यदुक्तं तत् क्वचित् द्रव्यप्रधाननिर्देशेऽपि प्रत्येकता नास्तीति सूचनार्थम्; तेन कैशोरकगुग्गुलौ त्रिकटोश्चूर्णं षड़ङ्गपरिमाणमित्यत्र मिलित्वैव त्रिकटुचूर्णषड़ङ्गपरिमितता वृद्धव्यवहारसिद्धेति बोध्यम्। द्वाविंशतं पलान्येवं पाठः, अन्यथा छन्दोभङ्गः स्यात्। क्वचित्तु "द्वाविंशञ्च पलान्येवम्" इति पाठः। अपीनसमिति—प्रतिश्यायभेदः। "पीनसे च प्रतिश्याये" इति पाठेऽपि स एवार्थः। अत्र अनुपानमनुक्तमपि वातकफे कोष्णाम्बु, पित्ते क्षीरादिकं ज्ञेयम्। न चात्र भल्लातकप्रवेशादुष्णजलम् अयुक्तमिति शङ्कनीयम्; यतो भल्लातकस्नेहे एव उष्णजलनिषेधो न भल्लातकयोगमात्रे; तथा चोक्तम्—"उष्णोदकानुपानन्तु स्नेहानामथ शस्यते। ऋते भल्लातकस्नेहात् तत्र तोयन्तु शीतलम् ॥" इति; वृद्धास्तु शीततोयेन व्यवहरन्ति ॥ ७८—८८ ॥

तोयपूर्णे इत्यादि।—तोयपूर्णे यदा पात्रे इत्यादि गुडपाकलक्षणम्।

पीड़ितो भजते मुद्रां गन्धवर्णरसान्वितः ॥ ९१ ॥

गुडभल्लातकः।—

भल्लातकसहस्रे द्वे जलद्रोणे विपाचयेत्।
पादशेषे रसे तस्मिन् पचेद्गुड़तुलां भिषक् ॥ ९२ ॥
भल्लातकसहस्रार्द्धं छित्त्वा तत्रैव दापयेत्।
सिद्धेऽस्मिंस्त्रिफलाव्योष-यमानीमुस्तसैन्धवम् ॥ ९३ ॥
कर्षांशसम्मितं दद्यात् त्वगेलापत्रकेशरम्।
खादेदग्निबलापेक्षी प्रातरुत्थाय मानवः ॥ ९४ ॥
कुष्ठार्शःकामलामेह-ग्रहणीगुल्मपाण्डुताः।
हन्यात् प्लीहोदरं कास-क्रिमिरोगभगन्दरान् ॥
गुड़भल्लातको ह्येष श्रेष्ठश्चार्शोविकारिणाम् ॥ ९५ ॥

अपरो गुडभल्लातकः।—

दशमूल्यमृता भार्गी श्वदंष्ट्रा चित्रकं शटी।
भल्लातकसहस्रञ्च पलांशं क्वाथयेत् बुधः ॥ ९६ ॥
पादशेषे जलद्रोणे रसे तस्मिन् विपाचयेत्।
दत्त्वा गुड़तुलामेकां लेहीभूतं समुद्धरेत् ॥ ९७ ॥
माक्षिकं पिप्पलीं तैलमौरुवूकञ्च दापयेत्।

---

वृद्धास्तु तोयपूर्णपात्रोपरि कोमलकदलीपत्रं दत्त्वा गुड़स्य मुद्रापाकं निरूपयन्ति। न प्लवते न तरति। पतितः पात्राधोगतोऽपि न शीर्य्यते न विस्तीर्णतां याति ॥८९—९१॥

भल्लातकेत्यादि।—गुड़भल्लातके भल्लातकसहस्रे द्वे इति—भल्लातकानां सहस्रद्वयम्, एवं सर्वत्र पलादिमानविरहे; यथा सैन्धवाद्यतैले भल्लातकास्थीनि विंशतिरिति; यत्र तु पलादिश्रुतिस्तत्र तथैव व्यवहर्त्तव्यम्; यथा बाहुशालगुड़े—"पलान्यष्टावरुष्करात्" इति; एवं हरीतक्यादावपि ज्ञेयम्। भल्लातकसहस्रार्द्धं छित्त्वेति—द्विधा कृत्वा गुड़सहितक्वाथे एव पक्तव्यं हरीतकीवत्। त्रिफलादीनाञ्च प्रत्येकमेव कर्षमानम् ॥ ९२—९५ ॥

दशमूलीत्यादि।—द्वितीयगुड़भल्लातके पलांशमिति दशमूल्यादिभिः सम्बध्यते। भल्लातकसहस्रञ्च पूर्ववदाकृतिमानात्। क्वाथयेदिति पूर्वोक्तभल्लातकगुड़संवादात् पलापि

कुड़वं कुड़वञ्चात्र त्वगेला मरिचं तथा ॥ ९८ ॥
अर्शः कासमुदावर्त्तं पाण्डुत्वं शोथमेव च ।
नाशयेदग्निसादञ्च गुड़भल्लातकः स्मृतः ॥ ९९ ॥

चव्याद्यं घृतम् ।—

चव्यं त्रिकटुकं पाठां क्षारं कुस्तुम्बुरूणि च ।
यमानीं पिप्पलीमूलमुभे च विड़सैन्धवे ॥ १०० ॥
चित्रकं विल्वमभयां पिष्ट्वा सर्पिर्विपाचयेत् ।
शकृद्वातानुलोम्यार्थं जाते दध्नि चतुर्गुणे ॥ १०१ ॥
प्रवाहिकां गुदभ्रंशं मूत्रकृच्छ्रं परिस्रवम् ।
गुदवङ्क्षणशूलञ्च घृतमेतद्व्यपोहति ॥ १०२ ॥

व्योषाद्यं घृतम् ।—

व्योषगर्भं पलाशस्य त्रिगुणे भस्मवारिणि ।
साधितं पिवतः सर्पिः पतन्त्यर्शांस्यसंशयम् ॥ १०३ ॥

उदकषट्पलं घृतम् ।—

सक्षारैः पञ्चकोलैस्तु पलिकैस्त्रिगुणोदके ।

---

जलद्रोणे किंवा क्वाथ्यद्रव्येभ्योऽष्टगुणे जले । माक्षिकं मधु । श्रौरुवूकस्य तैलमेरण्ड-तैलम्, एतच्च प्रथमतः क्षिप्तैव गुड़ः पक्तव्यः, सिद्धे मधु पिप्पलीचूर्णादि प्रक्षेप्यम् । एकः कुड़वशब्दो माक्षिकादिभिः सम्बध्यते, अपरश्च त्वगेलादिभिः । माक्षिकैरण्ड-तैलयोश्च द्रवत्वात् प्रत्येकमष्टौ पलानि । त्वगेलामरिचादीनान्तु कुड़वं मिलित्वेति केचित्, प्रत्येकमित्यन्ये ; एतदेव युक्तं द्रव्यप्रधानत्वात् निर्देशस्य ; आयुर्वेदसारेऽप्युक्तं— "भल्लातकसहस्रं हि शटीदहनगोक्षुरान् । दशमूल्यमराभार्गीः पलांशाः संविपाच्य च ॥ दत्त्वा गुड़तुलां तत्र लेहवत् साधु साधयेत् । पिप्पल्या मधुनः सिद्धे तैलस्योरुवूकस्य च ॥ प्रत्येकं कुड़वं दत्त्वा त्वगेलामरिचस्य च । मिश्रितं भक्षयेन्नित्यमर्शःकासोदराप-हम् ॥" इति ; अत एव आयुर्वेदसारसंवादात् "कुड़वाईच्च त्वगेलामरिचम्" इति पाठान्तरमपि प्रतिक्षेपणीयम् ॥ ९६—९९ ॥

चव्यमित्यादि चरकस्य ।—कुस्तुम्बुरु धनीयकम् । जाते दध्नीति—सुजाते । अत्र केचित्—"स्वरसक्षीरमाङ्गल्यैः पाको यत्रेरितः क्वचित् । चतुर्गुणं जलं तत्र वीर्य्या-धानार्थमावपेत् ॥" इत्याहुः । परिस्रवमिति—गुदपरिस्रावम् ॥ १००—१०२ ॥

व्योषेत्यादि ।—व्योषाद्यं घृतं सष्टम् ॥ १०३ ॥

समक्षीरं घृतप्रस्थं ज्वरार्शःप्लीहकासनुत् ॥ १०४ ॥

सिद्धामृतं घृतम्।—

पचेद्वारिचतुर्द्रोणे कण्टकार्य्यमृताशतम्।
तत्राग्नित्रिफलाव्योष-पूतिकत्वक्कलिङ्गकैः ॥ १०५ ॥
सकाश्मर्य्यविडङ्गैस्तु सिद्धं दुर्नामनिहनुत्।
घृतं सिद्धामृतं नाम बोधिसत्त्वेन भाषितम् ॥ १०६ ॥

पिप्पल्याद्यं तैलम्।—

पिप्पलीं मधुकं विल्वं शताह्वां मदनं वचाम्।
कुष्ठं शटीं पुष्कराख्यं चित्रकं देवदारु च ॥ १०७ ॥
पिष्ट्वा तैलं विपक्तव्यं द्विगुणक्षीरसंयुतम्।
अर्शसां मूढ़वातानां तच्छ्रेष्ठमनुवासनम् ॥ १०८ ॥
गुदनिःसरणं शूलं मूत्रकृच्छ्रं प्रवाहिकाम्।
कट्यूरुपृष्ठदौर्ब्बल्यमानाहं वङ्क्षणाश्रयम् ॥ १०९ ॥
पिच्छास्रावं गुदे शोथं वातवर्च्चोविनिग्रहम्।
उत्थानं बहुशो यच्च जयेच्चैवानुवासनात् ॥ ११० ॥

---

सक्षीरैरित्यादि।—उदकषट्पलं घृतं स्पष्टम् ॥ १०४ ॥

पचेदित्यादि।—अत्र कण्टकारीगुड़ूच्योर्मिलित्वा शतं, निर्देशस्य मानप्रधानत्वात्। अन्ये तु—द्रवभूयस्त्वदर्शनात् प्रत्येकमेव शतमाहुः। चतुर्द्रोणे द्रोणावशेषः, अतोऽत्र घृताढ़कं बोध्यं, चतुर्गुणेन पाकस्योत्सर्गसिद्धत्वात्। प्रस्थपक्षे तु षोडशगुणत्वमेव पाकस्य। अग्निरत्र चित्रकः। पूतीकस्य करञ्जस्य त्वक्। काश्मर्य्यं गाम्भारीफलम्। कल्कस्य तु स्नेहापेक्षया पादिकत्वमेव। बोधिसत्त्वेनेति—योगिविशेषेण; अन्ये तु लोकनाथेनेत्याहुः ॥ १०५।१०६ ॥

पिप्पलीमित्यादि।—पिप्पल्याद्यतैले विल्वं विल्वशलाटुः। पुष्कराख्यमिति—पुष्कर-मूलं, तदभावे कुष्ठमेव द्विगुणं ग्राह्यम्। अत्र द्रवान्तरस्यानिर्दिष्टत्वात् द्विगुण एव पाक इति केचित्। अन्ये तु—चतुर्गुणपाकस्य उत्सर्गसिद्धत्वात् जलमप्यत्र द्विगुणमिच्छन्ति। अपरे तु—"क्षीरदध्यारनालैस्तु पाको यत्रेरितः क्वचित्। जलं चतुर्गुणं तत्र वीर्य्या-धानार्थमावपेत् ॥" इति वचनात् जलमपि चतुर्गुणमाचक्षते; युक्तञ्चैतत्, यदाह वृद्धसुश्रुतः,—"शटीपुष्करकृष्णाह्वा-मदनामरदारुभिः। शताह्वाकुष्ठयष्ट्याह्वा-वचाविल्व-

## रक्तार्शश्चिकित्सा।

आदौ रक्तस्तम्भनस्य अपकारिता।—

रक्तार्शसामुपेक्षेत रक्तमादौ स्रवद्भिषक्।
दुष्टास्रे निगृहीते तु शूलानाहासृगामयाः ॥ १११ ॥

रक्तस्तम्भने पेयाद्वयम्।—

लाजैः पेया पीता चुक्रिकाकेशरोत्पलैः सिद्धा।
सा हन्त्यस्रस्रावं तथा बलापृश्निपर्णीभ्याम् ॥ ११२ ॥

शक्रक्वाथविल्वशलाटुक्वाथौ ज्योत्स्निकालेपश्च।—

शक्रक्वाथः सविश्वो वा किंवा विल्वशलाटवः।
योज्या रक्तार्शसैस्तद्वज्ज्योत्स्निकामूललेपनम् ॥ ११३ ॥

नवनीततिलादियोगत्रयम्।—

नवनीततिलाभ्यासात् केशरनवनीतशर्कराभ्यासात्।
दधिसरमथिताभ्यासात् गुदजाः शाम्यन्ति रक्तवहाः ॥११४॥

---

हुताशनैः॥ सुपिष्टं द्विगुणं क्षीरं तैलं तोयचतुर्गुणम्। पक्वा बस्तौ निधातव्यं मूढवातानुलोमनम्॥" इति ॥ १०७—११० ॥

रक्तार्शसां चिकित्सामाह, रक्तार्शसामित्यादि।—उपेक्षेत न तु स्तम्भयेत्। निगृहीते इति—स्तम्भिते। असृग्गदा इति—वीसर्पादयः ॥ १११ ॥

लाजैः पेयेत्यादि।—चुक्रिका चाङ्गेरी। केशरं नागकेशरम्। तथा बलापृश्निपर्णीभ्यामिति द्वितीयो योगः; तथेत्यनेन लाजैः पेयेत्यनुवर्त्तते ॥ ११२ ॥

शक्रक्वाथ इत्यादि।—शक्रः कुटजः; उक्तं हि रत्नकोषे—"वृत्सकः शक्रपर्य्यायो वत्सको गिरिमल्लिका" इति; तद्वल्कलक्वाथः; उक्तं हि चरके—"कुटजत्वङ्निर्य्यूहः सनागरः स्निग्धो रक्तसङ्ग्रहणः" (चि० अर्श०) इति। वाग्भटेऽप्युक्तं—"सकफेऽस्रे पिबेत् पाक्यं शुण्ठीकुटजवल्कलम्" (चि० ८ अ०) इति। निश्चलस्तु इन्द्रयवक्वाथ इत्याह। सनागर इत्यन्नागरः, स च प्रक्षेपविधिनेति केचित्। अन्ये तु—उक्तवाग्भटवचनसंवादात् शुण्ठीकुटजवल्कलयोः क्वाथ इत्याहुः। विल्वशलाटवः इत्यत्रापि सनागर इति योज्यम्। अन्ये तु—केवलं विल्वं पिष्ट्वा पेयमित्याहुः। ज्योत्स्निका कोषातकी घोषकभेदः ॥ ११३ ॥

नवनीततिलाभ्यासादित्यादि।—योगत्रयमेतत्। अत्र केशरं पद्मकेशरं, रक्तस्तम्भनत्वात्; यदाह वाग्भटः,—"शर्कराम्भोजकिञ्जल्क-सहितं सद्य वा तिलैः। अभ्यस्त

समङ्गादिकल्कः ।—

समङ्गोत्पलमोचाह्व-तिरीटतिलचन्दनैः ।
छागक्षीरं प्रयोक्तव्यं गुदजे शोणितापहम् ॥ ११५ ॥

कुटजलेहः ।—

कुटजत्वक्पलशतं जलद्रोणे विपाचयेत् ।
अष्टभागावशिष्टन्तु कषायमवतारयेत् ॥ ११६ ॥
वस्त्रपूतं पुनः क्वाथं पचेल्लेहत्वमागतम् ।
भल्लातकं विडङ्गानि त्रिकटु त्रिफलां तथा ॥ ११७ ॥
रसाञ्जनं चित्रकञ्च कुटजस्य फलानि च ।
वचामतिविषां विल्वं प्रत्येकञ्च पलं पलम् ॥ ११८ ॥
त्रिंशत्पलानि गुड़स्य चर्णीकृत्य निधापयेत् ।
मधुनः कुड़वं दद्यात् घृतस्य कुड़वं तथा ॥ ११९ ॥
एष लेहः शमयति चार्शो रक्तसमुद्भवम् ।
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ॥ १२० ॥
ये च दुर्नामजा रोगास्तान् सर्वान् नाशयत्यपि ।
अम्लपित्तमतीसारं पाण्डुरोगमरोचकम् ॥ १२१ ॥
ग्रहणीमार्दवं कार्श्यं श्वयथुं कामलामपि ।

---

रक्तगुदजाम् नवनीतं नियच्छति ॥" (चि० ८ अ०) इति; आधुनिकास्तु नागकेशरेण व्यवहरन्ति। दधिसरस्य मथितं तक्रं दधिसरमथितम्; उक्तं हि जतूकर्णे—"नवनीतं तिलैर्युक्तं शर्करा-केशरेण वा। नवनीतं घृतं वाऽऽजं दध्नो वा खजितः सरः ॥" इति ॥ ११४ ॥

समङ्गेत्यादि।—समङ्गा वराहक्रान्ता। उत्पलं नीलोत्पलम्। मोचाह्वः शाल्मलीवेष्टकम्। तिरीटं पट्टिकालोध्रम्। एषां कल्कश्छागक्षीरेणालोड्य पेयः; उक्तं हि वाग्भटे—"लोध्रं तिलं मोचरसं समङ्गां चन्दनोत्पलम्। पाययित्वाऽऽजदुग्धेन शालीँस्तेनैव भोजयेत् ॥" (चि० ८ अ०) इति। अन्ये तु—क्षीरपरिभाषया छागक्षीरे पक्वा पेयमित्याहुः ॥ ११५ ॥

कुटजत्वगित्यादि।—कुटजत्वक्पलशतमित्यत्र केचित् पलस्थाने फलमिति पठन्ति, तन्मते—कुटजत्वक्फलयोर्मिलितैव पलशतम्। चन्द्राटेऽष्टभागावशिष्टमित्यत्र

अनुपानं घृतं दद्यान्मधु तक्रं जलं पयः ॥
रोगानीकविनाशाय कौटजो लेह उच्यते ॥ १२२ ॥

कुटजरसक्रिया ।—

कुटजत्वचो विपाच्यं पलशतमार्द्रं महेन्द्रसलिलेन ।
यावत् स्यादरसं तत् द्रव्यं स रसस्ततो ग्राह्यः ॥ १२३ ॥
मोचरसः समङ्गः फलिनी पलांशिभिस्त्रिभिस्तैश्च ।
वत्सकबीजं तुल्यं चूर्णीकृतमत्र दातव्यम् ॥ १२४ ॥
पूतोत्क्वथितः सान्द्रः स रसो दर्वीप्रलेपनो ग्राह्यः ।
मात्राकालोपहिता रसक्रियैषा जयत्यसृक्स्रावम् ॥१२५॥
छागलीपयसा युक्ता पेया मण्डेन वा यथाऽग्निबलम् ।
जीर्णौषधश्च शालीन् पयसा च्छागेन भुञ्जीत ॥ १२६ ॥
रक्तार्शांस्यतीसारं शूलं सासृग्रुजो निहन्त्याशु ।
बलवच्च रक्तपित्तं रसक्रियैषा ह्युभयभागम् ॥ १२७ ॥

---

"चतुर्भागावशिष्टम्" इति पठ्यते। अत्र घृतकुडवं प्रथमं दत्त्वा लेहः पक्तव्यः, सिद्धे तस्मिन् भल्लातकादिचूर्णप्रक्षेपः। मधुनः कुडवोऽष्टौ पलानि, घृतकुडवोऽप्येवम्; कुडवद्वैगुण्यन्तु पूर्वमेव स्थापितमिति ॥ ११९—१२२ ॥

कुटजत्वच इत्यादि।—अत्र पलशतं तुला; तेन "तुलाद्रव्ये जलद्रोणः" इति वचनात् द्रोणमात्रं जलं ग्राह्यम्; तच्च यावत् स्यादरसम् इति वचनाच्चतुर्भागावशिष्टं कार्य्यम्; उक्तं हि—"चतुर्भागजले प्रायो द्रव्यं गतरसं भवेत्" इति। अन्ये तु तन्त्रान्तरीययोगान्तरे "द्रोणेऽम्भसः पलशतं विपाच्य कुटजत्वचोऽष्टभागस्थ" इत्यष्टभागावशिष्टदर्शनात् अत्राप्यष्टभागावशेषः क्वाथो ग्राह्य इत्याहुः। व्यवहारस्तु पूर्ववदेव। महेन्द्रसलिलमान्तरीक्षजलं, तदभावे भूमिस्थजलं तदनुकारि ग्राह्यम्; यदुक्तं—"किञ्चित्तुवरानुरसं तनु लघु शीतं सुगन्धि सुरसञ्च। अनभिष्यन्दि च यत् तत् क्षितिस्थमैन्द्रवज्ज्ञेयम् ॥" फलिनी प्रियङ्गुः। दर्वीप्रलेपनो ग्राह्यः इति—दर्वीप्रलेपावस्थायामवतारणीय इत्यर्थः; तेन रसक्रिया लेहरूपैव; वाग्भटेऽप्युक्तं—"पक्त्वाऽवलेहं लीढ्वा च तं यथाऽग्निबलं पिबेत्" (चि० ८ अ०) इत्यादि। उभयभागमिति—यद्यपि युगपदूर्द्ध्वाधःप्रवृत्तरक्तपित्तस्यासाध्यत्वं, तथाऽप्युभयभागं हन्तीत्यस्य क्रमेणोर्द्ध्वगमधोगञ्च हन्तीत्यर्थः; तत्राप्यधोगस्य याप्यत्वात् तत्प्रतियापनमेव

कुटजाद्यं घृतम्।—

कुटजफलवल्ककेशर-नीलोत्पललोध्रधातकीकल्कैः।
सिद्धं घृतं विधेयं शूलरक्तार्शसां भिषजा ॥ १२८ ॥

सुनिषण्णक-चाङ्गेरी घृतम्।—

अवाक्पुष्पी बला दार्वी पृश्निपर्णी त्रिकण्टकम्।
न्यग्रोधोडुम्बराश्वत्थ-शुङ्गाश्च द्विपलोन्मिताः ॥ १२९ ॥
कषाय एष पेष्यास्तु जीवन्ती कटुरोहिणी।
पिप्पली पिप्पलीमूलं मरिचं देवदारु च ॥ १३० ॥
कलिङ्गं शाल्मलीपुष्पं वीरा चन्दनमञ्जनम्।
कट्फलं चित्रकं मुस्तं प्रियङ्ग्वतिविषे स्थिरा ॥ १३१ ॥
पद्मोत्पलानां किञ्जल्कः समङ्गा सनिदिग्धिका।
विल्व मोचरसः पाठा भागाः स्युः कार्षिकाः पृथक् ॥ १३२॥
चतुःप्रस्थशृतं प्रस्थं कषायमवतारयेत्।
त्रिंशत् पलानि तु प्रस्थो विज्ञेयो द्विपलाधिकः ॥ १३३ ॥
सुनिषण्णक-चाङ्गेर्योः प्रस्थौ द्वौ स्वरसस्य च।

---

निहन्यादित्यस्यार्थो ज्ञेयः। अन्ये तु—योगशक्तेरचिन्त्यत्वादसाध्यमपि हन्तीत्यर्थमाहुः ॥ १२३—१२७ ॥

कुटजेत्यादि।—कुटजाद्यघृते कुटजस्य फलं वल्कञ्च; वल्कशब्दो वल्कलवचनः; क्वचित्तु वल्कलमिति पाठः। अत्र जलं चतुर्गुणमर्थवशात् ॥ १२८ ॥

अवाक्पुष्पीत्यादि।—अवाक्पुष्पी हेठवल्ली। एषामष्टानां प्रत्येकं पलद्वयमिति मिलित्वा षोडशपलं क्वाथ्यं भवति; तथा सुनिषण्णक-चाङ्गेर्योर्मिलित्वा प्रस्थद्वयं, मानप्रधानत्वान्निर्देशस्य। वीरा अत्र क्षीरकाकोली। चतुःप्रस्थशृतं प्रस्थमित्यादि—यद्यपि षोडशपले क्वाथ्ये चतुःप्रस्थं जलमुत्सर्गसिद्धमेव, तथा शेषोऽपि चतुर्थो भागः प्रस्थ एव भवति, तथाऽपि यदेतच्चतुःप्रस्थशृतमित्यादि वचनं तत् "क्वाथ्याच्चतुर्गुणं वारि" इत्यादिपरिभाषायाः सूचकं ज्ञेयम्। तथा—त्रिंशत्पलानि तु प्रस्थो विज्ञेयो द्विपलाधिकः इत्यपि वचनं द्रवद्वैगुण्यपरिभाषासूचकत्वेनैव ज्ञेयम्। एतदेव दृष्ट्वा दृढबलसंस्कारेऽपि द्रवद्वैगुण्यमुक्तम्। किंवा परिभाषासिद्धमपि द्रवद्वैगुण्यं यदिह निर्दिशति, तत् द्रवद्वैगुण्यपरिभाषा क्वचित् बाधिताऽपि भवतीति सूचयति; तेन

सर्वैरेतैर्यथोद्दिष्टैर्घृतप्रस्थं विपाचयेत् ॥ १३४ ॥
एतदर्शःस्वतीसारे त्रिदोषे रुधिरस्रुतौ।
प्रवाहणे गुदभ्रंशे पिच्छासु विविधासु च ॥ १३५ ॥
उत्थाने चातिबहुशः शोथशूलगुदामये।
मूत्रग्रहे मूढवाते मन्दाग्नावरुचावपि ॥ १३६ ॥
प्रयोज्यं विधिवत् सर्पिर्बलवर्णाग्निवर्द्धनम्।
विविधेष्वन्नपानेषु केवलं वा निरत्ययम् ॥ १३७ ॥

प्रतिसारणीयः क्षारः।—

प्रशस्तेऽहनि नक्षत्रे कृतमङ्गलपूर्वकम्।
कालमुष्ककमाहृत्य दग्ध्वा भस्म समाहरेत् ॥ १३८ ॥
आढकन्त्वेकमादाय जलद्रोणे पचेद्भिषक्।
चतुर्भागावशिष्टेन वस्त्रपूतेन वारिणा ॥ १३९ ॥
शङ्खचूर्णस्य कुडवं प्रक्षिप्य विपचेत् पुनः।
शनैः शनैर्मृद्वग्नौ तु यावत् सान्द्रतनुर्भवेत् ॥ १४० ॥
सर्जिकायावशूकाभ्यां शुक्तौ मरिचपिप्पली।
वचा चातिविषा चैव हिङ्गुचित्रकयोस्तथा ॥ १४१ ॥

---

कुडवप्रस्थादिकं गृहीत्वैव द्वैगुण्यं, न कुडवादर्वाक् इत्यर्थः सिद्धो भवति। अन्ये तु—दार्व्यार्थे संशयितशिष्यबुद्धिदृढार्थमेतद्वचनमित्याहुः। विंशत्पलविशेषणतया यद्यपि द्विपलाधिकानीति निर्देशो युज्यते, तथाऽपि प्रस्थविशेषणतया पुंलिङ्गस्य एकवचनस्य च निर्देशः समर्थनीयः। उत्थाने चातिबहुश इति—स्तोकस्तोकातिसरणे ॥१२९—१३७॥

इदानीं क्षारपाकविधिमाह, प्रशस्ते इत्यादि।—कालमुष्कक: कृष्णपुष्पो घण्टापारुलिः, स एव श्रेष्ठगुणः; यदाह विश्वामित्रः,—"श्वेतपुष्पः कृष्णपुष्पो रक्तपुष्पस्तथैव च। पीतोऽन्योऽपि वरस्तेषु कृष्णपुष्पः प्रकीर्त्तितः॥" इति, तस्य च काष्ठं तिलनालैर्दग्ध्वा भस्म कर्त्तव्यम्, इत्यमेव सुश्रुताभिधानम्। आढकमिति—भस्मनः चतुःषष्टिपलानि। जलद्रोणे इति—द्वैगुण्याच्चतुःषष्टिशरावे। अन्ये तु—अत्र द्वैगुण्यं नेच्छन्ति। शङ्खचूर्णस्य कुडवश्चतुःपलं, षोडशांशेनाकृतद्वैगुण्यात परिस्रावितआढ्कावशिष्टक्षारोदकाढ्कादिति चन्द्रिका; आगमप्रामाण्यसिद्धद्वैगुण्यपक्षे तु द्वात्रिं-

एषां चूर्णानि निक्षिप्य पृथक्त्वेनाष्टमाषकम् ।
दर्व्या सङ्घट्टितञ्चापि स्थापयेदायसे घटे ॥
एष वह्निसमः क्षारः कीर्त्तितः काश्यपादिभिः ॥ १४२ ॥

प्रतिसारणीयः क्षारः ।—

तोये कालकमुष्ककस्य विपचेत् भस्माढ़कं षड्गुणे
पात्रे लौहमये दृढ़े विपुलधीर्दर्व्या शनैर्घट्टयन् ।
दग्ध्वाऽग्नौ बहुशङ्खनाभिशकलान् पूतावशेषे क्षिपेत्
यद्येरण्डजनालमेष दहति क्षारो वरो वाक्शतात् ॥१४३॥
प्रायस्त्रिभागशिष्टेऽस्मिन्नच्छपैच्छिल्यरक्तता ।
सञ्जायते तदाऽऽस्राव्य क्षाराम्भो ग्राह्यमिष्यते ॥ १४४ ॥

---

शांशेनेति बोध्यम् । आयसे इति—लौहमये ; एतच्च पात्रविशेषकथनं गुणोत्कर्षार्थं, "यथा कुर्वन्ति स उपायः" ( सु० सू० ४१ अ० ) इत्युक्तेः । क्षार इति—प्रतिसारणीयः क्षार इत्यर्थः, प्रतिसारणीयश्च मक्षणीय इत्यर्थः ॥ १३८—१४२ ॥

तोये कालकमुष्ककस्येति ।—षड्गुणे इति—षडाढ़के व्यवहारादकृतद्विगुणे ; अत एव वृन्देनोक्तं—"द्वैगुण्यं नाढ़केऽप्यत्र भागमात्रोपलक्षणात" इति । एतच्चान्ये दूषयन्ति, आढ़कादिश्रुत्या द्रवे यत् द्वैगुण्यं सर्वागमसिद्धं तत कथं बाधनीयम् ? न च क्वचित् तन्त्रे भागमात्रमुक्तं, येन भागमात्रोपलक्षणमिति वाच्यम, अत एव चक्रेणाम्बरसादिव द्वैगुण्यार्थं न किमपि लिखितम् । दग्ध्वाऽग्नौ बहुशङ्खनाभिशकलान् पूतावशेषे क्षिपेदिति—त्रिभागशेषेणाच्छपैच्छिल्यादिलक्षणोदये कल्कमपनीय स्रावयित्वा क्षाराम्बु ग्राह्यं, ततः पुनः पचेत्, पश्चादासन्नपाके बहुशङ्खनाभिशकलानग्नौ दग्ध्वा तस्य चूर्णं तुर्य्यंणेत्यादिवक्ष्यमाणानुसारेण क्षिपेत् । अन्ये तु—त्रिभागशेषे चतुर्भागावशेषे वा क्षारोदके वस्त्रपूते शङ्खचूर्णं दत्त्वा पुनः पक्तव्यं, यथा नातिसान्द्रं नातितरलञ्च स्यादित्याहुः । पूतावशेषे इत्यत्र "पूताङ्घ्रिशेषे" इति केचित् पठन्ति, तन्मते च चतुर्थांशावशेषे क्षारोदके इत्यर्थः । सम्यक् सिद्धक्षारलक्षणमाह, यद्येरण्डजनालमित्यादि ।—एष इति—पक्वः शीतः क्षारो यदि निस्त्वचमेरण्डनालं लेपेन वाक्शताच्छोटिकाशतात् दहति, तदा वरः श्रेष्ठ इत्यर्थः । पूतावशेषे इत्युक्तं, तच्च कियदवशिष्ट स्राव्यम् ? इत्याह—प्रायस्त्रिभागेत्यादि । आस्राव्येति—वस्त्रेण गालयित्वा ।

तुर्य्येणाष्टमकेन षोड़शभवेनांशेन संव्यूहिमो।
मध्यः श्रेष्ठ इति क्रमेण विहितः क्षारोदकाच्छङ्खकः ॥१४५॥
नातिसान्द्रो नातितनुः क्षारपाक उदाहृतः।
दुर्नामकादौ निर्दिष्टः क्षारोऽयं प्रतिसारणः ॥ १४६ ॥

पानीयक्षारविधिः।—

पानीयो यस्तु गुल्मादौ तं वारानेकविंशतिम्।
स्रावयेत् षड़्गुणे तोये केचिदाहुश्चतुर्गुणे ॥ १४७ ॥

क्षारसूत्रम्।—

भावितं रजनीचूर्णैः स्नुहीक्षीरे पुनः पुनः।
बन्धनात् सुदृढ़ं सूत्रं छिनत्त्यर्शो भगन्दरम् ॥ १४८ ॥

---

इदानीं प्रक्षेप्यशङ्खचूर्णस्य मानभेदेन प्रतिसारणीयक्षारस्य मृद्वादिभेदमाह, तुर्य्येणेत्यादि।—क्षारोदकात् इति—विभागावशिष्टक्षारोदकमपेक्ष्य शङ्खकः शङ्खचूर्णं यदि तुर्य्येण चतुर्थांशेन विहितः प्रयुक्तो भवति, तदा संव्यूहिम इति—मृदु-क्षारो भवति; संव्यूहिम इति मृदुक्षारसंज्ञा; अष्टमकेनाष्टमांशेन यदि शङ्खचूर्णं दीयते, तदा मध्यः क्षारः; षोड़शभवेनांशेन यदि शङ्खचूर्णं दीयते, तदा श्रेष्ठः क्षार इत्यर्थः। यद्यपि संव्यूहिमे क्षारोदकाच्चतुर्थांशेन दीयमानं शङ्खचूर्णं मध्यश्रेष्ठक्षारे दीयमानशङ्खचूर्णापेक्षया प्रभूतमेव, तथाऽपि क्षारस्य मृदुत्वमेव भूयसा शङ्खचूर्णेन क्षारोदकस्य तीक्ष्णताया अभिभूतत्वात्। पानीयक्षारे तु न शङ्खचूर्णयोग इति तस्य नैते भेदाः। प्रतिसारणीयक्षारपाकलक्षणं तथा तद्विषयञ्चाह, नातिसान्द्र इत्यादि।—प्रति-सारण इति—लक्षणप्रयोजनकः ॥ १४३—१४६ ॥

पातव्यक्षारोदकस्य विधानं विषयञ्चाह, पानीय इत्यादि।—पानीय इति—पातव्यो यः क्षारः, तं क्षारं षड्गुणे चतुर्गुणे वा जले पाकं विनैव एकविंशतिवारान् प्रतिस्राव्य क्षारोदकं ग्राह्यम्। अन्ये तु—चतुर्गुणे जले पक्त्वा अर्द्धावशिष्टं कृत्वा कल्कमपसार्य्य क्षारोदकम् एकविंशतिवारान् परिस्रावयेदेव; न प्रतीसारणीयक्षारवत् अस्य पुनःपाक इति तात्पर्य्यार्थं इत्याहुः; विश्वामित्रोऽप्याह,—"पानाय भावना-याथ परिस्राव्य चतुर्गुणे। जले चार्द्धावशिष्टे च क्षाराम्भो ग्राह्यमिष्यते ॥" इति, पानाय यत् भावनं क्षारोदकविधानं तदर्थमित्यर्थः। पानीयक्षारमात्रा च पल-त्रिकर्षार्द्धपलरूपा क्रमादुत्तममध्यमाधमबलानलविषया ज्ञेया ॥ १४७ ॥

क्षारसूत्रमाह, भावितमित्यादि।—पुनः पुनरिति—सप्तकृत्व इत्यर्थः ॥ १४८ ॥

दोषभेदेन क्षाराग्निभ्यां दाहविधिः ।—

प्राक् दक्षिणं ततो वामं पृष्ठजञ्चाग्रजं क्रमात् ।
पञ्चतिक्तेन संस्नेह्य दहेत् क्षारेण वह्निना ॥ १४९ ॥
वातजं श्लेष्मजञ्चाग्नेः क्षारेणास्रज-पित्तजे ।
महान्ति तनुमूलानि छित्त्वैव बलिनो दहेत् ॥ १५० ॥

चर्मकीलदाहविधिः ।—

चर्मकीलं तथा छित्त्वा दहेदन्यतरेण वा ॥ १५१ ॥

क्षारदग्धस्य प्रशस्तलक्षणम् ।—

पक्वजम्बूपमो वर्णः क्षारदग्धः प्रशस्यते ॥ १५२ ॥

क्षारेण दाहविधिः ।—

गोजीशेफालिकापत्रैरर्शः संलिख्य लेपयेत् ।
क्षारेण वाक्शतं तिष्ठेत् यन्त्रद्वारं पिधाय च ॥ १५३ ॥
तच्चापनीय वीक्षेत पक्वजम्बूफलोपमम् ।
यदि च स्यात् ततो भद्रं नो चेल्लिम्पेत् तथा पुनः ॥

---

प्राक् दक्षिणमित्यादि ।—एतच्च क्रमोपदर्शनं मङ्गलार्थमस्मद्विशिष्टपुरुषगम्यं वा । एष च क्रमो यस्य चतुर्ष्वेव पार्श्वेष्वर्शांसि सन्ति तं प्रत्येव बोध्यः, यस्य पुनरेकतम-पार्श्वे, तस्य तदेव दहनीयम् । एष च क्रमः क्षारे क्षारसूत्रेऽग्नौ च । अग्रजमिति—अण्डकोषसमीपस्थम् ; अस्य च दाहो हृद्वैर्येन क्रियते षाण्ड्यभयात् । पञ्चतिक्तेनेति—पञ्चतिक्तघृतेन पानादिना स्नेहयित्वेत्यर्थः । क्षारेण वह्निना च उभयमेव श्लेष्मजं वातजञ्च दहेत् । रक्तजे पित्तजे पुनः क्षारेणैव दहेत् । क्षारो हि सर्वत्रैवोचितः ; यदाह सुश्रुतः,—"क्षारस्तु सर्वत्रैवाप्रतिषिद्धो न त्वग्निः" इति ॥ १४९।१५० ॥

चर्मकीलमित्यादि ।—अन्यतरेणेति—क्षारेण वह्निना वा ॥ १५१ ॥

क्षारेण सम्यक् दग्धस्य लक्षणमाह, पक्वेत्यादि ।—पक्वजम्बूसमः स्निग्धकृष्णवर्ण इत्यर्थः ॥ १५२ ॥

प्रतिसारणीयक्षारो यथोपयुज्यस्तदाह, गोजीत्यादि ।—गोजी शाखोटकः । क्षारेण लेपयेदित्यन्वयः । लघ्वक्षरोच्चारणकालो वाक्, तस्याः शतं, छोटीशतं वा । यन्त्रद्वारं गुदस्थितयन्त्रस्य द्वारं पिधाय कर्पटादिना ढक्कयित्वा । पक्वजम्बूफलोपमं सम्यक् दग्धे ; हीनदग्धे तु लोहितं भवति ; यदाह वाग्भटः,—"पक्वजम्बूनिभं शस्तं सम्यक् दग्धं

तत् तुषाम्बुप्लुतं साज्यं यष्टीकल्केन लेपयेत् ॥ १५४ ॥

वह्निदग्धस्य प्रशस्तलक्षणम् ।—

न निम्नं तालवर्णाभं वह्निदग्धं स्थितासृजम् ॥ १५५ ॥

दाहानन्तरं कर्त्तव्यम् ।—

निर्वाप्य मधुसर्पिर्भ्यां वह्निसञ्जातवेदनाम् ।
सम्यक् दग्धे तुगाक्षीरी-प्लक्षचन्दनगैरिकैः ॥ १५६ ॥
सामृतैः सर्पिषा युक्तैरालेपं कारयेद्भिषक् ।
मुहूर्त्तमुपवेश्यासौ तोयपूर्णेऽथ भाजने ॥ १५७ ॥
क्षारमुष्णाम्बुना पाय्यं विबन्धे मूत्रवर्चसोः ।
दाहे वस्त्यादिजे लेपः शतधौतेन सर्पिषा ॥ १५८ ॥
नवान्नं माषतक्रादि सेव्यं पाकाय जानता ।
पिबेत् व्रणविशुद्ध्यर्थं वराक्वाथं सगुग्गुलुम् ॥
जीर्णे शाल्यन्नमुद्गादि पथ्यं तिक्ताज्यसैन्धवम् ॥ १५९ ॥

---

विपर्य्ययात् । ताम्राभं तोदकण्ड्वाढ्यं दुर्गन्धं तत् पुनर्दहेत ॥ अतिदग्धे स्रवेद्रक्तं मूर्च्छा-दाहज्वरादयः । गुदे विशेषाद्विण्मूत्र-संरोधो वाऽतिवर्त्तनम ॥ वातपित्तप्रशमनी शीता तत्र क्रिया हिता ॥" ( चि० ८ अ० ) इति । तुषाम्बु काञ्जिकम् ॥ १५३।१५४ ॥

नेत्यादि ।—न निम्नमित्यादिना सम्यक् वह्निदग्धलक्षणम् । वह्निदग्धमिति—वह्निना सम्यक् दग्धं न निम्नमित्यादिलक्षणयुक्तं भवतीत्यर्थः । तालवर्णाभमिति—पक्वतालसमवर्णम् । तालवृन्ताभमिति पाठे—पक्वतालवृन्तसमवर्णमित्यर्थः । स्थितासृजमिति—स्थितरक्तम्, एतच्च यदा अर्शश्छित्त्वा दह्यते तदा ज्ञेयम्; दाहस्य शिरासङ्कोचेन रक्तस्तम्भक इति ॥ १५५ ॥

दाहानन्तरं यत् विधेयं तदाह, निर्वाप्येत्यादि ।—सम्यक् दग्धे, अर्शसीति शेषः । तुगाक्षीरी वंशलोचना, तदभावे तालक्षीरी । प्लक्षः पर्कटिः, तस्य वल्कलम् । अमृता गुडूची; यद्यपि गुडूची पाकादुष्णवीर्य्या तथाऽपि स्पर्शाच्छीतैव, यथा काञ्जिकमम्लमपि भक्षणात् पित्तकरं स्पर्शेन शीतमिति कृत्वा पित्तहरं भवति; एतेन "गुडूच्या निर्वापणत्वं चिन्त्यम्" इति यत् केनचिदुक्तं, तदप्यपास्तम्; किं वा उष्णवीर्य्याया अपि गुडूच्या द्रव्यान्तरसंयोगमहिम्नैवात्र दाहप्रशमकत्वं ज्ञेयम् । तोयपूर्णे इति—

क्षारदानान्तरं वस्तिविधिः।—

रूढ़सर्वव्रणं वैद्यः क्षारं दत्त्वाऽनुवासयेत्।
पिप्पल्याद्येन तैलेन सेवेद्दीपनपाचनम् ॥ १६० ॥

अग्निमुखं लौहम्।—

त्रिवृच्चित्रकनिर्गुण्डी-स्नुहीमुण्डतिकाऽज्जटाः।
प्रत्येकशोऽष्टपलिका जलद्रोणे विपाचयेत् ॥ १६१ ॥
पलत्रयं विड़ङ्गस्य व्योषात् कर्षत्रयं पृथक्।
त्रिफलायाः पञ्चपलं शिलाजतुपलं न्यसेत् ॥ १६२ ॥
दिव्यौषधिहतस्यापि वैकङ्कतहतस्य वा।
पलद्वादशकं देयं रुक्मलौहस्य चूर्णितम् ॥ १६३ ॥
पलैश्चतुर्विंशतिभिर्मधुशर्करयोर्युतम्।
घनीभूते सुशीते च दापयेदवतारिते ॥ १६४ ॥

---

कोष्णतोयपूर्णं इत्याहुः। क्षारमुष्णाम्बुनेति—क्षारं यवक्षारम्। वराक्वाथमिति—वरा त्रिफला। तिक्ताज्यं पञ्चतिक्तघृतम् ॥ १५६—१५९ ॥

रूढ़ेत्यादि।—क्षारं दत्त्वेति—क्षारवस्तिं दत्त्वा, क्षारवस्तिदानानन्तरं पिप्पल्याद्येन तैलेनानुवासयेदित्यर्थः ॥ १६० ॥

प्रसिद्धफलमग्निमुखलौहमाह, त्रिवृच्चित्रकेत्यादि।—अत्र मुण्डतिका मुण्डिरी। अज्जटा भूम्यामलकी। अस्याः स्थाने जटेति पाठे—त्रिवृदादीनां मूलमित्यर्थः। एषाञ्च जलद्रोणे क्वाथश्चतुर्भागावशिष्टः षोड़शशरावरूपोऽर्थवशादेव सिद्धः। पृथगित्यनेन व्योषस्य प्रत्येकं त्रिकर्षमानत्वम्। त्रिफलायाश्च मिलित्वा पञ्च पलानि। एषाञ्च विड़ङ्गादिशिलाजत्वन्तचूर्णानां पाकावतारसमये प्रक्षेपः। दिव्यौषधिः स्वर्णमाक्षिकं, मनःशिला वा, शालिकोकनी वा (?)। अन्यत्र तु "मनःशिलाहतस्य" इति पाठान्तरदर्शनात् मनःशिलेति युक्तम्; लौहमारकत्वात् तु सर्वाण्येवाविरुद्धानि। वैकङ्कतहतस्य वेति—राढ़ायां "वहिञ्ची" इति ख्यातं, वरेन्द्रादिषु "वयोकङ्कोलिः" इति ख्यातम्। किन्तु स्वर्णमाक्षिकादिकं विना सम्यक् लौहमारणं न सिध्यति, अतः अवश्यं तत्साधनद्वयसमुच्चयेनापि कर्त्तव्यम्। रुक्मलौहं कान्तव्यतिरिक्तं वज्रपाण्ड्वादिकृष्णलौहम्; तदुक्तं निघण्टौ—"तीक्ष्णमयसमुत्तरापथपिण्डं रुक्म रुक्मकुष्टिः कृष्णलौहनामानि"। अत्रानुक्तस्यापि गव्यघृतस्य चतुर्विंशतिपलानि पाकारम्भसमये एव

एतदग्निमुखं नाम दुर्नामान्तकरं परम् ।
सममग्निं करोत्याशु कालाग्निसमतेजसम् ॥ १६५ ॥
पर्वता अपि जीर्य्यन्ति प्राशनादस्य देहिनः ।
गुरुवृष्यान्नपानानि पयो मांसरसो हितः ॥ १६६ ॥
दुर्नामपाण्डुश्वयथु-कुष्ठप्लीहोदरापहम् ।
अकालपलितञ्चैतदामवातगुदामयम् ॥
न स रोगोऽस्ति यश्चापि न निहन्यादिदं क्षणात् ॥१६७॥
करीरकाञ्जिकादीनि ककारादीनि वर्जयेत् ।
स्रवत्यतोऽन्यथा लौहं देहात् किट्टञ्च दुर्जरम् ॥ १६८ ॥

भल्लातकलौहम् ।—

चित्रकं त्रिफला मुस्तं ग्रन्थिकं चविकाऽमृता ।
हस्तिपिप्पल्यपामार्ग-दण्डोत्पलकुठेरकाः ॥ १६९ ॥
एषां चतुष्पलान् भागान् जलद्रोणे विपाचयेत् ।
भल्लातकसहस्रे द्वे छित्त्वा तत्रैव दापयेत् ॥ १७० ॥
तेन पादावशेषेण लौहपात्रे पचेद्भिषक् ।
तुलाऽर्द्धं तीक्ष्णलौहस्य घृतस्य कुडवद्वयम् ॥ १७१ ॥
त्र्यूषणं त्रिफला वह्निः सैन्धवं विड़मौद्भिदम् ।
सौवर्चलविड़ङ्गानि पलिकांशानि कल्पयेत् ॥ १७२ ॥
कुड़वं वृद्धदारस्य तालमूल्यास्तथैव च ।

---

वृद्धवैद्यैर्दीयन्ते, घृतं विना क्वचिदपि लौहस्य पाकादर्शनात्, अत एव "क्वचित् पलैश्चतुर्विंशत्याज्यशर्करयोरपि" इति पाठान्तरं केचित् पठन्ति। मधुशर्करयोश्चतुर्विंशतिपलानि मिलित्वा; शर्कराघृताभ्यां पाके रात्रिपर्य्युषिते शीते मधुनः प्रक्षेपः, तेन शर्कराया द्वादश पलानि, मधुनो द्वादश पलानि, घृतस्य च चतुर्विंशति पलानीति। अवशिष्टविधिरमृतसारलौहवत् ॥ १६१—१६८ ॥

चित्रकमित्यादि।—भल्लातकलौहे कुठेरकः पर्णाशः। भल्लातकसहस्रे द्वे इत्यागतिमानात्। तत्रैवेति—जलद्रोणे। तीक्ष्णलौहस्येति—वज्रपाण्ड्वादिलौहस्य।

शूरणस्य पलान्यष्टौ चूर्णं कृत्वा विनिक्षिपेत् ॥ १७३ ॥
सिद्धे शीते प्रदातव्यं मधुनः कुड़वद्वयम्।
प्रातर्भोजनकाले च ततः खादेत् यथाबलम् ॥ १७४ ॥
अर्शांसि ग्रहणीदोषं पाण्डुरोगमरोचकम्।
क्रिमिगुल्माश्मरीमेहान् शूलञ्चाशु व्यपोहति ॥ १७५ ॥
करोति शुक्रोपचयं बलीपलितनाशनम्।
रसायनमिदं श्रेष्ठं सर्वरोगहरं परम् ॥ १७६ ॥

रसगुड़िका।—

रसस्तु पादिकस्तुल्या विड़ङ्गमरिचाभ्रकाः।
गङ्गापालङ्कजरसे खल्लयित्वा पुनः पुनः ॥
रक्तिमात्रा गुदार्शोघ्नी वह्नेरत्यर्थदीपनी ॥ १७७ ॥

अपथ्यानि।—

वेगावरोधस्त्रीपृष्ठ-यानमुत्कटुकासनम्।
यथास्वं दोषलञ्चान्नमर्शसः परिवर्जयेत् ॥ १७८ ॥

इति अर्शश्चिकित्सा।

---

गव्यघृतस्य कुड़वद्वयमिति—द्वैगुण्यात् षोड़श पलानि; एवं मधुनोऽपि। सिद्धे च शूरणादीनां प्रक्षेपः। सर्वमपरमन्नृतसारवत्। अत्रामृतसारोक्तविधिना पुटितं यथाव्याधि प्रत्यनीकद्रव्यपुटितञ्च लौहं ग्राह्यं, भक्षणादिविधिरपि तथैव ॥ १६९—१७६ ॥

रस इत्यादि।—रसस्तु पादिक इति विड़ङ्गादीनामेकतमभागापेक्षया; तेन विड़ङ्गमरिचाभ्रकाणां प्रत्येकं त्रयो भागाः, पारदस्यैको भाग इत्यर्थः। शोधितपारद २ माषा, मारिताभ्रचूर्णं विड़ङ्ग मरिच प्रं ६ माषा। ग्रन्थान्तरेऽपि रसभागापेक्षया विड़ङ्गमरिचाभ्रकाणां प्रत्येकं भागत्रयमुक्तम्। :: गङ्गापालङ्केति—पालङ्कसदृशपत्रं गङ्गापालङ्कं, "गाङ्गराड़" इति ख्यातम्। पुनः पुनरिति—सप्ताहमात्रं कृतं नियम इत्यर्थः। रसाभ्रकशोधनञ्च सुधावत्युक्तविधयैव विधेयम् ॥ १७७ ॥

वेगावरोधेत्यादि।—पृष्ठयानं हस्त्यश्वादिपृष्ठे गमनम् ॥ १७८ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायाम् अर्शश्चिकित्साविवृतिः।

# अथाग्निमान्द्यादि-चिकित्सा ।

चिकित्साविधिः ।—

समस्य रक्षणं कार्य्यं विषमे वातनिग्रहः ।
तीक्ष्णे पित्तप्रतीकारो मन्दे श्लेष्मविशोधनम् ॥ १ ॥

हिङ्ग्वष्टकं चूर्णम् ।—

त्रिकटुकमजमोदा सैन्धवं जीरके द्वे
समधरणधृतानामष्टमो हिङ्गुभागः ।
प्रथमकवलभुक्तं सर्पिषा चूर्णमेतत्
जनयति जठराग्निं वातरोगांश्च हन्यात् ॥ २ ॥

यावशूकादि-सुखोष्णयोगौ ।—

समयावशूकमहौषधचूर्णं लीढं घृतेन गोसर्गे ।
कुरुते क्षुधां सुखोदकपीतं विश्वौषधं वैकम् ॥ ३ ॥

अन्नमण्डः ।—

अन्नमण्डं पिबेदुष्णं हिङ्गुसौवर्चलान्वितम् ।
विषमोऽपि समस्तेन मन्दो दीप्येत पावकः ॥ ४ ॥

---

अर्शःकार्य्यत्वात् तदनन्तरमग्निमान्द्यादिचिकित्सामाह, समस्येत्यादि ।—रक्षणमिति—पालनम् । वातनिग्रहः वातस्य प्रशमनमित्यर्थः ॥ १ ॥

त्रिकटुकमित्यादि ।—वाग्भटेनायं योगो गुल्माधिकारे पठितः । अजमोदा यमानी, एवं सर्वत्रान्तःपरिमार्जने ; बहिःसम्मार्जने पुनरजमोदैव ; उक्तं हि—"अन्तःसम्मार्जने प्रायोऽजमोदा च यमानिका । बहिःसम्मार्जने ज्ञेया चाजमोदाऽजमोदिका ॥" इति । समधरणधृतानामिति—धरणं तुला, तया समं यथा स्यात् तथा धृतानाम् । अन्ये तु पलदशमांशो धरणं, समाश्च ते धरणधृताश्चेति विग्रहः । अष्टमो हिङ्गुभाग इति—त्रिकट्वादीनां सप्त भागाः तदेकभागसमो हिङ्गुभाग इत्यर्थः । वातरोगांश्च हन्यादित्यत्र वाग्भटे "वातगुल्मं निहन्ति" ( चि० १४ अ० ) इति पाठः ॥२॥

समेत्यादि ।—यावशूको यवक्षारः । गोसर्गे गोः सूर्य्यकिरणस्य सर्गे मोक्षे प्रातरित्यर्थः । सुखोदकपीतम्—उष्णोदकेन पीतम् । विश्वौषधं वैकमिति वा-शब्दः पूर्वयोगापेक्षया, इवार्थे वा-शब्दो वा ॥ ३ ॥

अन्नमण्डमित्यादि ।—अन्नस्य मण्डः अन्नमण्ड इति केचित् । अन्ये तु—चतुर्दश-

अन्नमण्डगुणाः।—

चुद्बोधनो वस्तिविशोधनश्च प्राणप्रदः शोणितवर्द्धनश्च।
ज्वरापहारी कफपित्तहन्ता वायुं जयेदष्टगुणो हि मण्डः॥ ५॥

तीक्ष्णाग्निचिकित्सा।—

नारीक्षीरेण संयुक्तां पिबेदौडुम्बरीं त्वचम्।
आभ्यां वा पायसं सिद्धं पिबेदत्यग्निशान्तये॥ ६॥
यत् किञ्चित् गुरु मेध्यञ्च श्लेष्मकारि च भेषजम्।
सर्वं तदत्यग्निहितं भुक्त्वा प्रस्वपनं दिवा॥ ७॥
मुहुर्मुहुरजीर्णेऽपि भोज्यमस्योपकल्पयेत्।
निरिन्धनोऽन्तरं लब्ध्वा यथैनं न निपातयेत्॥ ८॥

मन्दाग्नौ विश्वादिः।—

विश्वाभयागुडूचीनां कषायेण षडूषणम्।
पिबेत् श्लेष्मणि मन्देऽग्नौ त्वक्पत्रसुरभीकृतम्॥ ९॥

---

गुणान्वसाधित एव मण्डोऽन्नमण्डशब्देनोच्यते, अन्नपदञ्च सुरामण्डादिनिरासार्थमित्याहुः॥ ४॥

चुद्बोधन इत्यादि।—अष्टगुणो हि मण्ड इति, यद्यपि माधवकरेण द्रव्यगुणे—"मृतण्डुलानां प्रसृतद्वयञ्च तदर्द्धमुद्गैः कटकञ्च तक्रम। कुस्तुम्बुरी सैन्धवहिङ्गुतैलम् एभिश्च सर्वैः क्रियते हि मण्डः॥" इत्यादिवचनानन्तरं चुद्बोधन इत्यादि पद्यं पठितं, तथाऽप्यन्नमण्डस्यापि मण्डत्वसामान्यादेतत् गुणाष्टकं ज्ञेयम। कुस्तुम्बुरी धन्याकं, तच्च मनाक भृष्टं ग्राह्यम्। विधिः पुनरस्य—यथोक्तमानौ तण्डुलमुद्गौ तक्रजले युक्त्या दत्त्वा विपाच्य मण्डो ग्राह्यः, पश्चात् त्रिकटुकादिभिर्यथार्हं संस्कार इति॥ ५॥

अत्यग्निचिकित्सामाह, नारीक्षीरेणेत्यादि।—उडुम्बरत्वचः कर्षः; पायसपक्षे तु—उडुम्बरत्वचः पलं, तण्डुलं नारीक्षीरञ्चानुरूपं दत्त्वा पायसः कार्य्यः। यत्किञ्चिदित्यादि—महिषीदुग्धादि। मुहुर्मुहुरित्यादि—तथा अजीर्णेऽपि मुहुर्मुहुर्भोज्यमस्योपकल्पयेत्, यथा निरिन्धनोऽग्निः अन्तरमिति—अवकाशं लब्ध्वा एनमातुरं न निपातयेत न मारयेत्, धातुपाकादिति भावः; उक्तं हि—"आहारमग्निः पचति दोषानाहारवर्जितः। धातून् क्षीणेषु दोषेषु न क्षीवेद्धातुसङ्क्षये॥" इति॥ ६—८॥

विश्वाभयेत्यादि।—त्वक् गुडत्वक्; त्वक्पत्रे सुरभिभावत्वकारके द्रव्ये॥ ९॥

षड़्षणम् ।—

पञ्चकोलं समरिचं षड़्षणमुदाहृतम् ॥ १० ॥

मन्दाग्नौ हरीतकीप्रयोगः ।—

हरीतकी भक्ष्यमाणा नागरेण गुड़ेन वा ।
सैन्धवोपहिता वाऽपि सातत्येनाग्निदीपनी ॥ ११ ॥

मन्दाग्नौ सैन्धवादि चूर्णम् ।—

सिन्धूत्थपथ्यमगधोद्भववह्निचूर्ण-
मुष्णाम्बुना पिबति यः खलु नष्टवह्निः ।
तस्यामिषेण सघृतेन वरं नवान्नं
भस्मीभवत्यशितमात्रमिह क्षणेन ॥ १२ ॥

मन्दाग्नौ सैन्धवादि गुड़िका ।—

सिन्धूत्थहिङ्गुत्रिफलायमानी-
व्योषैर्गुड़ांशैर्गुड़िकां प्रकुर्य्यात् ।
तैर्भक्षितैस्तृप्तिमवाप्नुवन् ना
भुञ्जीत मन्दाग्निरपि प्रभूतम् ॥ १३ ॥

---

पञ्चकोलमित्यादि ।—पञ्चकोलं समरिचं षड़्षणमिति, तदुक्तं—"मरिचं पिप्पली शुण्ठी त्र्यूषणं समुदाहृतम् । पिप्पलीमूलसंयुक्तं चतुरूषणमुच्यते ॥ साग्नि पञ्चोषणञ्चैव सचव्यञ्च षड़्षणम् ॥" इति । एतच्च षड़्षणं प्रक्षेपविषये ज्ञेयम् ॥ १० ॥

हरीतकीत्यादि सुश्रुतस्य ।—योगत्रयमेतत् शुण्ठ्या कफे, गुड़ेन वाते, सैन्धवेन दोषत्रयेऽपि, विशेषाद्वातकफे ॥ ११ ॥

सिन्धूत्थेत्यादि ।—पथ्या हरीतकी; ह्रस्वत्वमिह छान्दसत्वात् । मगधोद्भवा पिप्पली, अत्रापि पूर्ववत् ह्रस्वत्वम् । वरं प्रकृष्टमिति यावत्, मांसघृताभ्यामधिकमपीत्यर्थः । केचिदिह सैन्धवादीनां मानभेदार्थं नातिप्रसिद्धं हरिचन्द्रमतं वर्णयन्ति, तद्यथा—"हरीतकी हरिहरतुल्यषड्गुणा चतुर्गुणा चतुरविलासपिप्पली । हिचित्रकं वरवदनैकसैन्धवं रसायनं कुरु नृप ! वह्निदीपनम् ॥" इति । व्यवहारस्तु समभागेनेति ॥ १२ ॥

सिन्धूत्थेत्यादि ।—गुड़ांशैरिति एकद्रव्यसमोऽत्र गुड़भागः, प्रायेण हि श्लेष्माधिकेऽग्निसादे श्लेष्मणि च गुड़ो बहुतरो न युक्त इत्याहुरेके । अन्ये तु—सर्वचूर्ण-

मन्दाग्नौ विड़ङ्गादिलेह:।—

विड़ङ्गभल्लातकचित्रकामृता:
सनागरास्तुल्यगुड़ेन सर्पिषा।
लिहन्ति ये मन्दहुताशना नरा
भवन्ति ते वाड़वतुल्यवह्नय:॥ १४॥

आमाजीर्णादिषु गुड़शुण्ठ्यादियोगचतुष्टयम्।—

गुड़ेन शुण्ठीमथवोपकुल्यां
पथ्यातृतीयामथ दाड़िमं वा।
आमेष्वजीर्णेषु गुदामयेषु
वर्चोविबन्धेषु च नित्यमद्यात्॥ १५॥

---

पेक्षया द्विगुणो गुड़:, तस्मात् गुड़ादर्द्धं समुदितचूर्णं, तेन गुड़ांशमिति "मोदके द्विगुणो गुड:" इति वचनमनुगृहीतं भवतीत्याहु:। तृप्तिमवाप्नुवन्निति—मन्दाग्निरपि तावत् प्रभूतं भुङ्क्ते यावत् तृप्तिमवाप्नोति। अनाप्नुवन्निति पाठे पुन:,—अल्पाग्नित्वात् प्रभूतभोजनेऽपि न तृप्तिमाप्नोतीत्यर्थ:॥ १३॥

विड़ङ्गेत्यादि।—तुल्यगुड़ेनेत्यत्र युक्ता इत्यध्याहार्य्यं, तेनैकभागसमो गुड़:, केवल-घृतेनैव लिहन्तीति व्याख्यानयन्ति केचित्। अन्ये तु—तुल्यगुड़ेनेति पदं सर्पिर्विशेषणं वर्णयित्वा समुदितचूर्णापेक्षया द्विगुणेन मिलित्वा गुड़सर्पिषा लेह इति व्याचक्षते; युक्तञ्चैतत्, नागार्जुनोक्तवचनसंवादात्; तथा हि—"सञ्चूर्णिता गुड़ूचीविड़ङ्गभल्ला-तकनागरहुताशा:। ज्वलयन्ति जठराग्निं समेन गुड़सर्पिषा लीढ़ा:॥" इति॥ १४॥

गुड़ेन शुण्ठीमित्यादि।—पथ्यातृतीयामिति समस्तमसमस्तञ्च, तत्र समस्तपक्षे गुड़ेनेति पदं तथा पथ्यातृतीयामिति पदञ्च शुण्ठ्यादिषु प्रत्येकं योज्यं, तेन गुड़ेन पथ्यातृतीयां शुण्ठीमित्येको योग:, तथा गुड़ेन पथ्यातृतीयामुपकुल्यामिति द्वितीय:, तथा गुड़ेन पथ्यातृतीयं दाड़िममिति लिङ्गविपरिणामेन योज्यमिति। योगत्रयं यथा-सङ्ख्यमामाजीर्णादिषु रोगेषु योज्यम्। यत्तु गुड़शुण्ठीभक्षणं गुड़पिप्पलीभक्षणं वा, तदस्मिन् व्याख्याने प्रयोगान्तरमेव। यदा तु पथ्यां तृतीयामित्यसमस्तपाठस्तदा गुड़ेनेति पदं शुण्ठ्यादिषु चतुर्षु प्रत्येकं योज्य, तेन चत्वारो योगा यथाक्रममामादिषु चतुर्षु योज्या:; अस्मिन् पक्षे तृतीयामिति पदं योगव्यवच्छेदार्थं ज्ञेयम्॥ १५॥

मन्दाग्नौ लवणार्द्रकम्।—

भोजनाग्रे सदा पथ्यं जिह्वाकण्ठविशोधनम्।
अग्निसन्दीपनं हृद्यं लवणार्द्रकभक्षणम्॥ १६॥

कपित्थादि खड़ः।—

कपित्थतक्रचाङ्गेरी-मरिचाजाजिचित्रकैः।
कफवातहरो ग्राही खड़ो दीपनपाचनः॥ १७॥

शार्दूलकाञ्जिकः।—

पिप्पली शृङ्गबेरञ्च देवदारु सचित्रकम्।
चविकां विल्वपेशीञ्चाजमोदाञ्च हरीतकीम्॥ १८॥
महौषधं यमानीञ्च धान्यकं मरिचं तथा।
जीरकञ्चापि हिङ्गुञ्च काञ्जिकं साधयेद्भिषक्॥ १९॥
एष शार्दूलको नाम काञ्जिकोऽग्निबलप्रदः।
सिद्धार्थतैलसम्भृष्टो दश रोगान् व्यपोहति॥ २०॥
कासं श्वासमतीसारं पाण्डुरोगं सकामलम्।
आमञ्च गुल्मशूलञ्च वातगुल्मं सवेदनम्॥
अर्शांसि श्वयथुञ्चैव भुक्ते पीते च सात्म्यतः॥ २१॥

काञ्जिकपाकविधिः।—

क्षीरपाकविधानेन काञ्जिकस्यापि साधनम्॥ २२॥

---

भोजनाग्रे इत्यादि।—स्पष्टम्। इमन्तु योगं सर्वेऽप्याद्रियन्ते प्रत्यक्षफलत्वात् सहजलभ्यत्वाच्च॥ १६॥

कपित्थेत्यादि।—अत्र कफवातहर इत्येव पाठः, न तु कफपित्तहर इति, द्रव्यगुणपर्य्यालोचनया कपित्थादीनां वातकफहन्तृत्वात्। खड़ इति यूषविशेषस्य पारिभाषिकी संज्ञा, अस्य विधानञ्चातीसाराधिकारे एवोक्तम्॥ १७॥

पिप्पलीत्यादि।—शृङ्गबेरम् आर्द्रकम्। विल्वपेशी विल्वशलाटुः। पाकात् विभागशेषे काञ्जिके कटुतैलेन सन्तलनं, हिङ्गुजीरकयोश्च प्रक्षेप इत्युपदिशन्ति वृद्धाः। सात्म्यतोऽभ्यासादित्यर्थः॥ १८—२१॥

क्षीरेत्यादि।—क्षीरपाकविधानेनेति—"द्रव्यादष्टगुणं क्षीरम्" इत्यादिपरिभाषया; अत एवोक्तमन्यत्र—"क्षीरमस्तारनालानां नास्ति पाकोऽम्भसा विना। सम्यक् पाकं न गच्छेत्तु तस्मात् तोयं चतुर्गुणम्॥" इति॥ २२॥

अग्निमुखं चूर्णम्।—

हिङ्गुभागो भवेदेको वचा च द्विगुणा भवेत्।
पिप्पली त्रिगुणा चैव शृङ्गवेरं चतुर्गुणम्॥ २३॥
यमानिका पञ्चगुणा षड्गुणा च हरीतकी।
चित्रकं सप्तगुणितं कुष्ठञ्चाष्टगुणं भवेत्॥ २४॥
एतत् वातहरं चूर्णं पीतमात्रं प्रसन्नया।
पिबेत् दध्ना मस्तुना वा सुरया कोष्णवारिणा॥ २५॥
सोदावर्त्तमजीर्णञ्च प्लीहानमुदरं तथा।
अङ्गानि यस्य शीर्य्यन्ते विषं वा येन भक्षितम्॥ २६॥
अर्शोहरं दीपनञ्च श्लेष्मघ्नं गुल्मनाशनम्।
कासं श्वासं निहन्त्याशु तथैव यक्ष्मनाशनम्॥
चूर्णमग्निमुखं नाम न क्वचित् प्रतिहन्यते॥ २७॥

पानीयभक्तगुड़िका।—

रसोऽर्द्धभागिकस्तुल्या विड़ङ्गमरिचाभ्रकाः।
भक्तोदकेन सम्मर्द्य कुर्य्यात् गुञ्जानिभान् गुड़ीन्॥ २८॥
भक्तोदकानुपानैका सेव्या वह्निप्रदीपनी।
वार्य्यन्नभोजनञ्चात्र प्रयोगे सात्म्यमिष्यते॥ २९॥

बृहदग्निमुखं चूर्णम्।—

द्वौ क्षारौ चित्रकं पाठा-करञ्जलवणानि च।

---

हिङ्गुभाग इत्यादि।—अत्र द्विगुणेत्याद्यभागापेक्षया, एवं त्रिगुणेति। प्रसन्नयेति सविबन्धवाते, दध्नेति शुद्धवाते, मस्तुनेति अल्पकफवाते, सुरया कफवाते, उष्णवारिणा सामवाते कफे च॥ २३—२७॥

रस इत्यादि।—पानीयभक्तगुड़िकायां रसोऽर्द्धभागिक इत्येकभागापेक्षया। केचिदत्र कज्जलिकार्थं रसस्यार्द्धं गन्धकं क्षिपन्ति। विड़ङ्गादीनां प्रत्येकं रसापेक्षया द्विगुणो भागः। अर्शोऽधिकारोक्तरसगुड़िकायान्तु विड़ङ्गादीनां रसापेक्षया प्रत्येकं त्रिगुणो भाग इति भेदः। भक्तोदकेनेति—अम्लभक्तपानीयेन॥ २८।२९॥

द्वौ क्षारावित्यादि।—बृहदग्निमुखे करञ्जं करञ्जमूलस्य त्वक्; यत्तु एतस्य सुश्रुतेन

सूक्ष्मैला पत्रकं भार्गी क्रिमिघ्नं हिङ्गु पौष्करम् ॥ २० ॥
शटी दार्वी त्रिवृन्मुस्तं वचा सेन्द्रयवा तथा ।
धात्रीजीरकवृक्षाम्लं श्रेयसी चोपकुञ्चिका ॥ २१ ॥
अम्लवेतसमम्लीका यमानी सुरदारु च ।
अभयाऽतिविषा श्यामा हवुषाऽऽरग्वधं समम् ॥ २२ ॥
तिलमुष्ककशिग्रूणां कोकिलाक्षपलाशयोः ।
क्षाराणि लौहकिट्टञ्च तप्तं गोमूत्रसेचितम् ॥ २३ ॥
सर्वाणि समभागानि सूक्ष्मचूर्णानि कारयेत् ।
मातुलुङ्गरसेनैव भावयेच्च दिनत्रयम् ॥ २४ ॥
दिनत्रयञ्च शुक्तेन चार्द्रकस्वरसेन च ।
अत्यग्निकारकं चूर्णं प्रदीप्ताग्निसमप्रभम् ॥ २५ ॥
उपयुक्तं विधानेन नाशयत्यचिराद्गदान् ।
अजीर्णकमथो गुल्मं प्लीहानं गुदजानि च ॥ २६ ॥
उदराण्यन्त्रवृद्धिञ्च अष्ठीलां वातशोणितम् ।
प्रणुदत्युल्वणान् रोगान् नष्टमग्निञ्च दीपयेत् ॥ २७ ॥
समस्तव्यञ्जनोपेतं भक्तं दत्त्वा सुभाजने ।
दापयेदस्य चूर्णस्य विडालपदमात्रकम् ॥
गोदोहमात्रात् तत् सर्वं द्रवीभवति सोष्मकम् ॥ २८ ॥

---

"कोविदारपूर्वाणां फलम्" ( सू० ३९ अ० ) इत्यनेन फलग्रहणमुपदिष्टं, तत शोधन-विषयं ज्ञेयम्। लवणानि पञ्च लवणानि। वृक्षाम्लं महार्द्रकम्। श्रेयसी गजपिप्पली, एवं सर्वत्राग्निदीपनयोगे, वाते परं श्रेयस्यां रास्ना गृह्यते। उपकुञ्चिका स्वल्पकृष्ण-जीरकम्। अम्लीका तिन्तिड़ी, एवं सर्वत्राग्निदीपनयोगे, पुरीषसङ्ग्रहादौ पुनरम्लीकया चाङ्गेरी गृह्यते। श्यामा वृद्धदारकः। आरग्वधः शोणालुफलम्। तिलशब्देनात्र तिलनालग्रहणं, क्षारार्थत्वात्। मुष्ककः घण्टापाटली। लौहकिट्टं मण्डूरं, तच्च पुराणं ग्राह्यम्। जेज्जड़स्तु किट्टं पृथगेव पार्थिवद्रव्यं मण्डूरादिति। तप्तं गोमूत्रसेचित-मिति—अग्निवर्णं कृत्वा सप्तधा गोमूत्रनिर्वापितमित्यर्थः ; एवं सर्वत्र मण्डूरशोधनं

भास्करलवणम्।—

पिप्पली पिप्पलीमूलं धन्याकं कृष्णजीरकम्।
सैन्धवञ्च विडञ्चैव पत्रं तालीशकेशरम्॥ ३९॥
एषां द्विपलिकान् भागान् पञ्च सौवर्चलस्य च।
मरिचाजाजिशुण्ठीनामेकैकस्य पलं पलम्॥ ४०॥
त्वगेले चार्द्धभागे च सामुद्रात् कुड़वद्वयम्।
दाड़िमात् कुड़वञ्चैव द्वे पले चाम्लवेतसात्॥ ४१॥
एतच्चूर्णीकृतं श्लक्ष्णं गन्धाढ्यममृतोपमम्।
लवणं भास्करं नाम भास्करेण विनिर्मितम्॥ ४२॥
जगतस्तु हितार्थाय वातश्लेष्मामयापहम्।
वातगुल्मं निहन्त्येतत् वातशूलानि यानि च॥ ४३॥
तक्रमस्तुसुरासीधु-शुक्तकाञ्जिकयोजितम्।
जाङ्गलानान्तु मांसेन रसेषु विविधेषु च॥ ४४॥
मन्दाग्नेरश्नतः शक्तो भवेदाश्वेव पावकः।
अर्शांसि ग्रहणीदोषं कुष्ठामयभगन्दरान्॥ ४५॥
हृद्रोगमामदोषांश्च विविधानुदरस्थितान्।
प्लीहानमश्मरीञ्चैव श्वासकासोदरक्रिमीन्॥ ४६॥
विशेषतः शर्करादीन् रोगान् नानाविधांस्तथा।
पाण्डुरोगांश्च विविधान् नाशयत्यशनिर्यथा॥ ४७॥

अग्निघृतम्।—

पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली।

---

ज्ञेयम्। शुक्तेनेति—ग्रहण्युक्तमन्धानविशेषेण, तदभावे काञ्जिकेन, एवमन्यत्रापि बोध्यम्। गोदोहमात्रात गोदोहनमात्रकालात्॥ ३०—३८॥

पिप्पल्यादि।—भास्करलवणे केशरं नागकेशरपुष्पम्। पञ्च सौवर्चलस्येति—पञ्च पलानि सौवर्चलस्येत्यर्थः। त्वगेले चार्द्धभागे च इति—पलापेक्षया, तेन त्वगेलयोः प्रत्येकमर्द्धपलमित्यर्थः। गन्धाढ्यमिति पत्रतालीशादिद्रव्ययोगादेव, न पुनरपरचातुर्जातप्रक्षेपेण॥ ३९—४७॥

हिङ्गु चव्याजमोदा च पञ्चैव लवणानि च ॥ ४८ ॥
द्वौ क्षारौ हवुषा चैव दद्यादर्द्धपलोन्मितान्।
दधिकाञ्जिकशुक्तानि स्नेहमात्रासमानि च ॥ ४९ ॥
आर्द्रकस्वरसप्रस्थं घृतप्रस्थं विपाचयेत्।
एतदग्निघृतं नाम मन्दाग्नीनां प्रशस्यते ॥ ५० ॥
अर्शसां नाशनं श्रेष्ठं तथा गुल्मोदरापहम्।
ग्रन्थ्यर्बुदापचीकास-कफमेदोऽनिलानपि ॥
नाशयेत् ग्रहणीदोषं श्वयथुं सभगन्दरम् ॥ ५१ ॥
ये च वस्तिगता रोगा ये च कुक्षिसमाश्रिताः।
सर्वांस्तान् नाशयत्याशु सूर्य्यस्तम इवोदितः ॥ ५२ ॥

मस्तुषट्पलकं घृतम्।—

पलिकैः पञ्चकोलैस्तु घृतं मस्तुचतुर्गुणम्।
सक्षारैः सिद्धमल्पाग्निं कफगुल्मं विनाशयेत् ॥ ५३ ॥

बड़वामुखचूर्णम्।—

पथ्यानागरकृष्णाकरञ्जविल्वाग्निभिः सितातुल्यैः।
बड़वामुखं विजयते गुरुतरमपि भोजनं चूर्णम् ॥ ५४ ॥

बृहदग्निघृतम्।—

भल्लातकसहस्रार्द्धं जलद्रोणे विपाचयेत्।
अष्टभागावशेषञ्च कषायमवतारयेत् ॥ ५५ ॥
घृतप्रस्थं समादाय कल्कानीमानि दापयेत्।
त्र्यूषणं पिप्पलीमूलं चित्रकी हस्तिपिप्पली ॥ ५६ ॥
हिङ्गु चव्याजमोदा च पञ्चैव लवणानि च।
द्वौ क्षारौ हवुषा चैव दद्यादर्द्धपलोन्मितान् ॥ ५७ ॥

---

पिप्पल्यादि।—स्वल्पाग्निघृते हस्तिपिप्पली गजपिप्पली। अजमोदा वस्तगन्धा "वनयमानी"। द्वौ क्षारौ यवक्षारः सर्जिकाक्षारश्च ॥ ४८—५२ ॥

पलिकैरित्यादि।—मस्तुषट्पलके घृतस्य प्रस्थः,—"अनिर्दिष्टप्रमाणानां स्नेहानां प्रस्थ इष्यते" इत्युक्तेः। पलिकैः प्रत्येकशः, "कल्कस्तु स्नेहपादिकः" इत्युक्तेः ॥ ५३।५४ ॥

दधिकाञ्जिकशुक्तानि स्नेहमात्रासमानि च।
आर्द्रकस्वरसञ्चैव शोभाञ्जनरसं तथा ॥ ५८ ॥
तत् सर्वमेकतः कृत्वा शनैर्मृद्वग्निना पचेत्।
एतद्दग्निघृतं नाम मन्दाग्नीनां प्रशस्यते ॥ ५९ ॥
अर्शसां नाशनं श्रेष्ठं मूढ़वातानुलोमनम्।
कफवातोद्भवे गुल्मे श्लीपदे च दकोदरे ॥ ६० ॥
शोथं पाण्डामयं कासं ग्रहणीं श्वासमेव च।
एतान् विनाशयत्याशु तमः सूर्य्य इवोदितः ॥ ६१ ॥

क्षारगुडः।—

द्वे पञ्चमूले त्रिफलामर्कमूलं शतावरीम्।
दन्तीं चित्रकमास्फोतां रास्नां पाठां सुधां शटीम् ॥ ६२ ॥
पृथक् दशपलान् भागान् दग्ध्वा भस्म समावपेत्।
त्रिःसप्तकृत्वस्तत् भस्म जलद्रोणे च गालयेत् ॥ ६३ ॥
तं रसं साधयेदग्नौ चतुर्भागावशेषितम्।
ततो गुड़तुलां दत्त्वा साधयेन्मृदुनाऽग्निना ॥ ६४ ॥
सिद्धं गुड़न्तु विज्ञाय चूर्णानीमानि दापयेत्।
वृश्चिकालीं द्विकाकोल्यौ यवक्षारं समावपेत् ॥ ६५ ॥
एते पञ्च पला भागाः पृथक् पञ्च पलानि च।
हरीतकीं त्रिकटुकं सर्जिकां चित्रकं वचाम् ॥ ६६ ॥
हिङ्गुम्लवेतसाभ्याञ्च द्वे पले तत्र दापयेत्।
अक्षप्रमाणां गुड़िकां कृत्वा खादेत् यथाबलम् ॥ ६७ ॥

---

भल्लातकेत्यादि।—वृहदग्निघृते भल्लातकसहस्रार्द्धमित्याकृतिमानात्। शोभाञ्जनरसः शोभाञ्जनस्य मूलत्वचः स्वरसः ॥ ५५—६१ ॥

द्वे इत्यादि।—क्षारगुड़े आस्फोता नवमल्लिका "हाफरमालि" इति ख्याता। सुधा स्नुही, तस्या मूलम्। त्रिःसप्तकृत्व इति—एकविंशतिवारान्; वाराभिधेये कृत्वसुच्-प्रत्ययः। वृश्चिकाली वृश्चिकरवी। काकोल्यौ काकोली-क्षीरकाकोल्यौ।

अजीर्णं जरयत्येष जीर्णं सन्दीपयत्यपि ।
भुक्तं भुक्तञ्च जीर्य्येत पाण्डुत्वमपकर्षति ॥ ६८ ॥
प्लीहार्शःश्वयथूंश्चैव श्लेष्मकाममरोचकम् ।
मन्दाग्निविषमाग्नीनां कफे कण्ठोरसि स्थिते ॥ ६९ ॥
कुष्ठानि च प्रमेहांश्च गुल्मश्चाशु व्यपोहति ।
ख्यातः क्षारगुड़ो ह्येष रोगयुक्ते प्रयोजयेत् ॥ ७० ॥

चित्रकगुड़ः ।—

नासारोगे विधातव्या या चित्रकहरीतकी ।
विना धात्रीरसं सोऽस्मिन् प्रोक्तश्चित्रगुड़ोऽग्निदः ॥ ७१ ॥

आमाजीर्ण-चिकित्सा ।—

वचालवणतोयेन वान्तिरामे प्रशस्यते ॥ ७२ ॥

विदग्धाजीर्ण चिकित्सा ।—

अन्नं विदग्धं हि नरस्य शीघ्रं शीताम्बुना वै परिपाकमेति ।
तद्ध्यस्य शैत्येन निहन्ति पित्तमाक्लेदिभावाच्च नयत्यधस्तात् ॥ ७३ ॥

हृदयादिदाहे अभयालेहः ।—

विदह्यते यस्य च भुक्तमात्रं दह्येत हृत्कोष्ठगलञ्च यस्य ।

---

एते पञ्च पला भागाः पृथगिति छेदः । पञ्च पलानीत्यत्र एषामिति शेषः ; तेन हरीतक्यादीनां वचान्तानां मिलित्वा पञ्च पलानीत्यर्थः । हिङ्गुत्वचेतसर्वैरपि मिलित्वैव द्वे पले । रोगयुक्ते इति न तु स्वस्थे, सौम्यधातुक्षयभयात् ॥ ६२—७० ॥

नासारोगे इत्यादि ।—स्पष्टम् ॥ ७१ ॥

अग्निमान्द्याजीर्णयोः परस्परकारणत्वादग्निमान्द्यप्रकरणे एवाजीर्णचिकित्सामाह, वचेत्यादि ।—वचाकल्कलवणयुक्तेनोष्णोदकेन किंवा वचया अर्द्धशृतेनोदकेन सलवणेन वमनम् ॥ ७२ ॥

विदग्धाजीर्णचिकित्सामाह, अन्नमित्यादि सुश्रुतस्य ।—शीताम्बुना परिपाकमेतीति यदुक्तं तदेवोपपादयति, तद्ध्यस्येत्यादि—हि-शब्दो हेतौ, तदिति—शीताम्बु, अस्याजीर्णिनः, पित्तं निहन्तीत्यन्वयः । आक्लेदिभावादिति—द्रवत्वात् ॥ ७३ ॥

विदह्यते इत्यादि सुश्रुतस्य ।—भुक्तमात्रमिति—मात्रशब्दः कार्त्स्न्ये, यावत् भुक्तमित्यर्थः, भुक्तसाकल्ये मात्रशब्दो वर्त्तते ; किंवा भुक्तमात्रमिति—भोजनानन्तरं तत्कालमेवेत्यर्थः । "अन्नं विदग्धं हि नरस्य शीघ्रम्" इत्यादि वाक्यं, तथा "विदह्यते यस्य तु

द्राक्षासितामाक्षिकसम्प्रयुक्तां लीढ्वाऽभयां वै स सुखं लभेत ॥७४॥

धूमोद्गारादौ हरीतकीप्रयोग:।—

हरीतकी धान्यतुषोदसिद्धा सपिप्पली सैन्धवहिङ्गुयुक्ता।
सोद्गारधूमं भृशमप्यजीर्णं विजित्य सद्यो जनयेत् क्षुधाञ्च ॥७५॥

विष्टब्धाजीर्णचिकित्सा।—

विष्टब्धे स्वेदनं पथ्यं पेयञ्च लवणोदकम् ॥ ७६ ॥

रसशेषाजीर्णचिकित्सा।—

रसशेषे दिवास्वप्नो लङ्घनं वातवर्जनम् ॥ ७७ ॥

दिवानिद्रार्हा:।—

व्यायामप्रमदाध्ववाहनरतक्लान्तानतीसारिण:
शूलश्वासवतस्तृषापरिगतान् हिक्कामरुत्पीड़ितान्।

---

भुक्तमात्रम्" इत्यादि वाक्यं. तथा—"अविदजीर्णे प्रति यस्य शङ्का" इत्यादि वक्ष्यमाणन्तु सौश्रुतवचनमनार्षमिति, अजीर्णे भेषजनिषेधस्य स्वयमेव सुश्रुतेनोक्तत्वात्, लङ्घनाद्युपदेशाच्च; तत्र तच्च केनाप्यश्ववैद्येन मस्करवैद्येन प्रकल्पितं योगत्रयमिदमित्याह जेज्जड़:। अपरे तु प्रचारात् भूरिपाठदर्शनाच्च योगत्रयमेतदनुमन्यन्ते एव, किन्तु स्वल्पाजीर्णे बोध्यमेतत्, प्रभूताजीर्णे तु भेषजसम्बन्धं न कुर्य्यात्, अल्पाजीर्णे तु औषधं सेव्यमिति ॥७४॥

हरीतकीत्यादि।—धान्यतुषोद: सन्धानविशेष:, तदभावे काञ्जिकं, तेन सिद्धा उत्स्विन्ना ॥ ७५ ॥

विष्टब्धाजीर्णचिकित्सामाह, विष्टब्धे इत्यादि।—लवणोदकं सैन्धवयुक्तमुष्णोदकमित्यर्थ: ॥ ७६ ॥

रसशेषे इत्यादि।—दिवास्वप्न इत्यल्पदोषापेक्षया, महति च लङ्घनमुचितम्। लङ्घनमिति—उपवास:। अन्ये तु—लङ्घनशब्देनात्र लाघवकरी विधिरिष्यते, तेन लघ्वन्नं तथा करणार्थं कालप्रतीक्षणं पाचनौषधं तथा स्वेदश्च प्राप्यते, न पुनर्लङ्घनमुपवास:, दोषस्याल्पत्वादित्याहु:। वातवर्जनमिति—वातस्यासेवनम् ॥ ७७ ॥

व्यायामेत्यादि।—रतेति भावे क्त:, रतमनुरक्तिरासक्तिरिति यावत्, तेन व्यायामादौ अतिरतत्वेन ये क्लान्तास्तानित्यर्थ:; न तु रतं सुरतं, तस्य प्रमदाग्रहणेनैव लब्धत्वात्। वाहनञ्च हस्त्यादियानम्। व्यायामादिक्लान्तानाञ्च धातुपुष्ट्यर्थम्; यदुक्तं—"स्वप्नप्रसङ्गाच्च नरो वराह इव पुष्यति" (च० सू० अष्टौ निन्दितौ०)

क्षीणान् क्षीणकफान् शिशून् मदहतान् वृद्धान् रसाजीर्णिनो
रात्रौ जागरितान्नरान्निरशनान् कामं दिवा स्वापयेत् ॥ ७८ ॥

सर्वाजीर्णे हिङ्ग्वादिलेपः।—

आलिप्य जठरं प्राज्ञो हिङ्गुत्र्यूषणसैन्धवैः।
दिवास्वप्नं प्रकुर्वीत सर्वाजीर्णप्रणाशनम् ॥ ७९ ॥

आमाजीर्णादौ धान्यनागरक्वाथः।—

धान्यनागरसिद्धन्तु तोयं दद्याद्विचक्षणः।

इति। अतीसारे दिवास्वापः कफवर्द्धकतया स्रोतःसंरोधकतया प्रभावाद्वा हितः, स च सर्वातीसारे कफवर्ज्जे ज्ञेयः। शूलश्वासतृष्णादिषु वातशान्त्या प्रभावाद्वा हितः। क्षीणानिति—धातुक्षीणान्; तेन सुश्रुतोक्तरसादिधातुक्षयेऽपि दिवास्वापः प्राप्यते। क्षीणकफानिति स्वतन्त्रम्; किंवा व्यायामादिष्वपि योज्यं, तेन व्यायामादिक्लान्तान् क्षीणकफानेव दिवा स्वापयेत्। शिशूनाञ्च निद्रासात्म्यत्वात् दिवानिद्रा। मदहतानिति—प्रमत्तान्, तेषाञ्च मदजरणार्थं दिवास्वापः। वृद्धान् इति धातुपुष्ट्यर्थम्। रसाजीर्णिनो रसशेषपाकार्थं दिवानिद्रा, रात्रावपि निद्रयैवाहारपाकस्य दृष्टत्वात्; किञ्च निद्रायाः स्रोतःसङ्कोचादनिर्गच्छन् देहोष्मा जठरानलमुद्दीपयति, तेन शीघ्रमजीर्णस्य पाकः; न च, दिवास्वप्नात् कफपित्तयोः प्रकोपो भवति; तदुक्तं चरके—"दिवास्वप्नात् श्लेष्मपित्ते प्रकुप्यतः" ( सू० अष्टौ निन्दितौ० ) इति, तत्प्रकोपाच्चाग्न्युपघात एव कथं न स्यात्? इति वाच्यम्; यतः स्रोतःसङ्कोचादुपजातजठराग्निर्जठराजीर्णपाचक एव, न तदा कफपित्तयोः प्रकोपः, प्रतिनियतशक्तिकत्वात् भेषजानामिति; अस्तु वा कफपित्तप्रकोपः, तथाऽपि नाग्निमान्द्यं तथाविधदोषदूष्यसंयोगाभावात्, न चायं नियमः यत्, कफप्रकोपेऽवश्यमग्न्युपघात इति, कफपित्तप्रकोपजन्यतिमिरादौ सत्यपि कफपित्तप्रकोपे अग्न्युपघाताद्दृष्टत्वादिति। रात्रौ जागरितानां जागरणजनितवातक्षोभप्रशमनार्थमेव दिवास्वप्नः, स च रात्रिजागरणकालादर्द्धः कार्यः; यदाह वाग्भटः,—"असात्म्याज्जागरादर्द्धं प्रातः सुप्यादभुक्तवान्" ( सू० ७ अ० ) इति। निरशनानिति—अत एव हारीते—"भुक्त्वा स्वप्नं न सेवेत स्थौल्योऽप्यशुचितो भवेत्" इति ॥ ७८ ॥

आलिप्येत्यादि।—स्पष्टम् ॥ ७९ ॥

धान्यनागरेत्यादि।—"कर्षार्द्धं वा कणाशुण्ठ्योः" इत्यादिवचनेन तोयद्रव्यस्याल्पमानलमुक्तं, तेनेहापि तीक्ष्णातीक्ष्णयोर्धान्यनागरयोस्समभागायां पले गृह्यमाणे धान्यं

आमाजीर्णप्रशमनं दीपनं वस्तिशोधनम् ॥ ८० ॥

अजीर्णादौ पथ्यादिकम् ।—

पथ्यापिप्पलिसंयुक्तं चूर्णं सौवर्चलं पिबेत् ।
मस्तुनोष्णोदकेनाथ बुद्ध्वा दोषगतिं भिषक् ॥ ८१ ॥
चतुर्विधमजीर्णञ्च मन्दानलमथारुचिम् ।
आध्मानं वातगुल्मञ्च शूलञ्चाशु नियच्छति ॥ ८२ ॥

अजीर्णाशङ्कायां कर्त्तव्यम् ।—

भवेदजीर्णं प्रति यस्य शङ्का
स्निग्धस्य जन्तोर्बलिनोऽन्नकाले ।
पूर्वं सशुण्ठीमभयामशङ्कः
सम्प्राश्य भुञ्जीत हितं हिताशी ॥ ८३ ॥

आमजमन्दाग्नौ अभयादिः ।—

किञ्चिदामेन मन्दाग्निरभयागुड़नागरम् ।
जग्ध्वा तक्रेण भुञ्जीत युक्तेनान्नं षड़ूषणैः ॥ ८४ ॥

---

सार्द्धविकर्षमानं नागरन्तु कर्षार्द्धमानं ग्राह्यम् । यत्तु धान्यशुण्ठ्युपयोगे "शुण्ठ्यर्द्धं धान्यतस्त्रयम्" इति केनचिदुक्तं, तदनार्षत्वान्नाद्रियते ; प्रचारस्तु शुण्ठ्याः षण्माषकाः, धान्यस्य दश, एवं कर्षेणेति ॥ ८० ॥

पथ्येत्यादि ।—पथ्यादीनां त्रयाणां समो भागः, तच्च मिलित्वा कर्षप्रमाणं ग्राह्यम् ; "कर्षश्चूर्णस्य कल्कस्य" इत्यादिवचनात् ॥ ८१ ८२ ॥

भवेदजीर्णमित्यादि सुश्रुतस्य ।—रसशेषाजीर्णविषयकमिदं वाक्यं, भोजनोपदेशात्, रसशेषे हि स्वल्पदोषः, तेन तदौषधपूर्वकं भोजनं सम्भवतीति । पूर्वमिति—प्रातःकाले यस्य पुरुषस्याजीर्णं प्रति शङ्का भवेत, सः अन्नकाले यस्य पुरुषस्य यः भोजनकालः तस्मिन् सशुण्ठीं शुण्ठीसहिताम् अभयां सम्प्राश्य भुञ्जीतेति योजना, न तु पूर्वं सम्प्राश्य भुञ्जीतेति योज्यं, सम्प्राश्येत्यनेनैव पूर्वकालस्य लब्धत्वादिति ॥ ८३ ॥

किञ्चिदित्यादि ।—यद्यपि गुड़ेन शुण्ठीमित्यादि वचनं पूर्वमुक्तं तथाऽपि तक्रषड़ूषणसम्बन्धात् योगान्तरमेवैतत् बोध्यम् ॥ ८४ ॥

## विसूचिका-चिकित्सा।

चिकित्साक्रमः।—

विसूचिकायां वमितं विरिक्तं सुलङ्घितं वा मनुजं विदित्वा।
पेयादिभिर्दीपनपाचनैश्च सम्यक् क्षुधार्त्तं समुपक्रमेच्च ॥ ८५ ॥

खल्लीशूले कुष्ठादितैलम्।—

कुष्ठसैन्धवयोः कल्कं चुक्रतैलसमन्वितम्।
विसूच्यां मर्दनं कोष्णं खल्लीशूलनिवारणम् ॥ ८६ ॥

करञ्जादिक्वाथः।—

करञ्जनिम्बशिखरि-गुडूच्यर्जकवत्सकैः।
पीतः कषायो वमनात् घोरां हन्ति विसूचिकाम् ॥८७॥

व्योषादिगुडिकाञ्जनम्।—

व्योषं करञ्जस्य फलं हरिद्रां
मूलं समावाप्य च मातुलुङ्ग्याः।
छायाविशुष्का गुडिकाः कृतास्ता
हन्युर्विसूचीं नयनाञ्जनेन ॥ ८८ ॥

---

विसूचिकाचिकित्सामाह, विसूचिकायामित्यादि सुश्रुतस्य।—पेयादीनाञ्च दीपन-पाचनत्वं, दीपन-पाचन धान्यपञ्चकादि-संस्कारात् ॥ ८५ ॥

कुष्ठेत्यादि।—आतुरस्य तात्कालिकी पीड़ा महती, तदहे च तैलं पक्तुमशक्यम्, अतः किञ्चिच्चुक्रं तैलञ्च दत्त्वा कुष्ठसैन्धवयोः कल्केन कदुष्णेन मर्दनं कार्य्य-मित्याहुर्वृद्धाः। तैलपाकपक्षे तु—कुष्ठसैन्धवयोः कल्कः पादिकः, चुक्रञ्च चतु-र्गुणम्। खल्ली हस्तादौ शिरामोटनरूपा वेदना ॥ ८६ ॥

करञ्जेत्यादि।—करञ्जस्य फलम्। शिखरि अपामार्गस्य बीजम्। अर्जकः श्वेतपर्णास इति डल्लनः; तथा वृन्दटीकायां चन्द्राटेऽप्यर्जक इति पठ्यते, तस्मात् अर्जकस्थाने अर्जुनेति प्रमादपाठः। वत्सकः कुटजः। पीतः कषायो वमनादिति—वमनार्थञ्च कषायः,—"काथ्यद्रव्यस्य कुड़वं श्रपयित्वा जलाढ़के। अर्द्धभागावशेषञ्च वमनेष्ववचारयेत् ॥" इति परिभाषया अर्द्धशृतः कार्य्यः। अर्द्धभागावशेषमित्यत्र "चतुर्भागावशेषम्" इति पाठो दृश्यते, तच्च निश्चलो नानुमन्यते। वमनञ्चातीच्चां, साक्षात्कवमिकारकाजीर्णनिरासार्थम् ॥ ८७ ॥

गुड़पुष्पादिगुड़िकाऽञ्जनम्।—

**गुड़पुष्पसारशिखरितण्डुलगिरिकर्णिकाहरिद्राभिः।**
**अञ्जनगुड़िका विलयति विसूचिकां त्रिकटुसनाथा॥ ८९॥**

खल्ल्यादौ त्वक्पत्राद्युद्वर्त्तनं तैलञ्च।—

**त्वक्पत्ररास्नाऽगुरुशिग्रुकुष्ठैरम्लेन पिष्टैः सवचाशताह्वैः।**
**उद्वर्त्तनं खल्लिविसूचिकाघ्नं तैलं विपक्वञ्च तदर्थकारि॥ ९०॥**

पिपासायां लवङ्गक्वाथादि योगत्रयम्।—

**पिपासायामनुत्क्लेशे लवङ्गस्याम्बु शस्यते।**
**जातीफलस्य वा शीतं शृतं भद्रघनस्य वा॥ ९१॥**

---

व्योषमित्यादि सुश्रुतस्य।—मातुलुङ्गी मधुकुक्कुटी। विसूचीशब्देनात्र विसूची-जनितमूर्च्छा प्रमीलक-शिरोरोगादयो गृह्यन्ते, कारणे कार्य्योपचारात्। किं वा अञ्जनेन प्रभावादेव विसूची हन्यते इति सुश्रुतटीकाकृतो व्याचक्षते॥ ८८॥

गुड़पुष्पेत्यादि।—गुड़पुष्पा मधूकवृक्षः, तस्य सारो ग्राह्यः। शिखरितण्डुला अपामार्गबीजानि। गिरिकर्णिका श्वेतापराजिता, तस्या मूलं ग्राह्यम्। विलयति शमयति। त्रिकटुकान्त एको योगः॥ ८९॥

त्वक्पत्रेत्यादि।—त्वक् गुड़त्वक्। पत्रं तेजपत्रम्। अम्लेन पिष्टैरिति—काञ्जिकेन पिष्टैः। शताह्वा "शलुफा" इति ख्यातम्। शताह्वैरित्यत्र "जटाह्वैः" इत्यन्ये पठन्ति; यथा—"रास्नापत्रागुरुमांसी-कुष्ठशिग्रुत्वचो वचा। पिष्टमम्लेन तच्छ्रेष्ठं विसूच्या-मङ्गमर्दनम्॥" सुश्रुते तु शतपुष्पा जटामांसी चेति द्वयमपि न दृश्यते; यथा,—"कुष्ठञ्चागुरुपत्रञ्च रास्नाशिग्रुत्वचो वचा। पिष्टमम्लेन तच्छ्रेष्ठं विसूच्यामङ्गमर्दनम्॥" (उ० ५६ अ०) इति। तैलं विपक्वञ्च तदर्थकारीति—त्वक्पत्रादिभिः कल्कीकृतैः काञ्जिकेन द्रवेण चतुर्गुणेन तैलं पक्वं खल्लीविसूचिकाघ्नं भवतीत्यर्थः॥ ९०॥

पिपासायामित्यादि।—अनुत्क्लेश इति—उत्कासिका, "ठिक्री" इति लोके ख्यातम् इति निश्चलः; अन्ये त्वनुत्क्लेश इति—ईषदुत्क्लिष्टदोष इत्याहुः। लवङ्गाम्बु षडङ्गशृतशीतम्, एवं जातिफलाम्बु भद्रघनाम्बु च ज्ञेयम्। भद्रघनं भद्रमुस्तकम्। अन्यत्र तन्त्रान्तरे योगान्तरं दृष्टफलमत्र वाच्यम्—"आघ्राय तद्विशेषज्ञो मातुलुङ्गफलत्वचम्। पीत्वा भद्रघनक्वाथमनुत्क्लेशाद्विमुच्यते॥" इति॥ ९१॥

प्रबलविसूचिकायां पार्ष्णिदाहः ।—

विसूच्यामतिवृद्धायां पार्ष्णोर्दाहः प्रशस्यते ॥ ९२ ॥

## अलसक-चिकित्सा ।

चिकित्साक्रमः ।—

वमनन्त्वलसे पूर्वं लवणेनोष्णवारिणा ।
स्वेदो वर्त्तिर्लङ्घनञ्च क्रमश्चातोऽग्निवर्द्धनः ॥ ९३ ॥

सरुगानाहे दार्व्वादिलेपः ।—

सरुक् चानद्धमुदरमम्लपिष्टैः प्रलेपयेत् ।
दारुहैमवतीकुष्ठ-शताह्वाहिङ्गुसैन्धवैः ॥ ९४ ॥

उदररुजायां यवचूर्णादिलेपः ।—

तक्रेण युक्तं यवचूर्णमुष्णं सक्षारमार्त्तिं जठरे निहन्यात् ॥ ९५ ॥

उदररुजायां घटादिस्वेदः ।—

स्वेदो घटैर्वा बहुवाष्पपूर्णैरुष्णैस्तथाऽन्यैरपि पाणितापैः ॥ ९६ ॥

तीव्रशूलाजीर्णे शूलघ्नौषधस्य अनुपयोगिता ।—

तीव्रार्त्तिरपि नाजीर्णी पिबेच्छूलघ्नमौषधम् ।
आमसन्नोऽनलो नालं पक्तुं दोषौषधाशनम् ॥ ९७ ॥

इत्यग्निमान्द्यादि-चिकित्सा ।

---

विसूच्यामित्यादि ।—पार्ष्णोर्दाह इति—पादपार्ष्णियुगदाहस्तु मूर्च्छाशान्त्यर्थम्; मूर्च्छेतरासाध्यलक्षणाभावेऽपि सति तप्तशरादिशलाकया पाददाहः, स च प्रभावात् पाददेश एव कृतो हितो भवतीति वचनादुन्नीयते; सुश्रुतेऽप्युक्तं—"साध्यासु पार्ष्णोर्दहनं प्रशस्तम्" ( उ० ५६ अ० ) इति । चन्द्रटेऽप्युक्तं—"वृद्धायां विसूच्यां पार्ष्णिदेशे च दाहः" इति; अतः पार्ष्णिदेशे इत्यत्र "पार्श्वदेशे" इति ये पठन्ति ते भ्रान्ताः, पार्ष्णिदाहस्य सर्वतन्त्रविहितत्वात् ॥ ९२ ॥

अलसकचिकित्सामाह, वमनमित्यादि ।—लवणेन सैन्धवेन । वर्त्तिरिति—फलवर्त्तिः, सा चोदावर्त्ते वक्ष्यमाणा । अत इति—अत ऊर्द्ध्वमित्यर्थः ॥ ९३ ॥

सरुगित्यादि ।—सरुगिति—सशूलम् । हैमवती वचा ॥ ९४ ॥

तक्रेणेत्यादि चरकस्य ।—सक्षारमिति—सहयवक्षारम्, एतत् सर्वं घटे प्रक्षिप्य उदरे स्वेद इत्याह कश्चित्; तन्न, चरकेऽस्य योगस्य प्रदेहप्रकरणे पठितत्वात्; तस्मात् यवचूर्ण-यवक्षारौ तक्रेण पिष्ट्वा किञ्चिदुष्णं कृत्वा उदरे लेपः कार्य्यः ॥ ९५ ॥

स्वेद इत्यादि ।—स्वेदो घटैर्वा बहुवाष्पपूर्णैरिति—तप्तकाञ्जिकादिवाष्पपूर्णैर्घटैः; तथाऽन्यैरुष्णैर्वस्त्रपुटकादिभिस्तथा हस्ततापैरपि स्वेद इति योज्यम् ॥ ९६ ॥

# अथ क्रिमि-चिकित्सा।

यमानिकायोगः।—

पारसीय-यमानिका पीता पर्य्युषितवारिणा प्रातः।
गुड़पूर्वा क्रिमिजातं कोष्ठगतं पातयत्याशु ॥ १ ॥

स्वरसत्रयम्।—

पारिभद्रकपत्रोत्थं रसं चौद्रयुतं पिबेत्।
केवुकस्य रसं वाऽपि पत्तूरस्याथवा रसम् ॥ २ ॥

विडङ्गलेहः।—

लिह्यात् चौद्रेण वैड़ङ्गं चूर्णं क्रिमिविनाशनम् ॥ ३ ॥

मुस्तादिक्काथः।—

मुस्ताखुपर्णीफलशिग्रुदारु-क्वाथः सकृष्णाक्रिमिशत्रुकल्कः।
मार्गद्वयेनापि चिरप्रवृत्तान् क्रिमीन् निहन्ति क्रिमिजांश्च रोगान्
॥ ४ ॥

---

तीव्रार्त्तिरित्यादि वाग्भटस्य।—अजीर्णी तीव्रशूलोऽपि सन् शूलहरमौषधं न पिबेत्, यतः आमेन सन्नो मन्दीभूतोऽग्निः दोषौषधाशनं पक्तुं न समर्थः ॥ ९७ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायामग्निमान्द्यादिचिकित्साविवृतिः।

---

अजीर्णात् क्रिमिसम्भव इत्यजीर्णानन्तरं क्रिमिचिकित्सामाह, पारसीयेत्यादि।— पारसीय-यमानी "खोरासनी यमानी" इति ख्यातम्। गुडपूर्वेति—गुडः पूर्वो यस्या इति गुड़ं भक्षयित्वा मनाक् विलम्बं कृत्वा सा पातव्येत्यर्थः; पेषणमपि पर्य्युषितवारिणेति ॥ १ ॥

पारिभद्रकेत्यादि।—पारिभद्रकः मन्दारविशेषः। केवुकस्येति—केवुकस्य "केउ-ताड़ा" इति ख्यातस्य, तस्य मूलस्वरसः ग्राह्यः; एवं पत्तूरस्य, पत्तूरः शालिञ्चः। चौद्रयुतमिति पदं केवुकरसे पत्तूररसेऽपि योज्यम् ॥ २ ॥

लिह्यादित्यादि।—स्पष्टम ॥ ३ ॥

मुस्तेत्यादि।—आखुपर्णी मूषिकपर्णी, दन्तीभेदो वा। फलशब्देनात्र त्रिफला ग्राह्या, रविगुप्तसंवादात्। क्रिमिशत्रुर्विड़ङ्गसारः ॥ ४ ॥

आखुपर्णादि पूपिका ।—

आखुपर्णीदलैः पिष्टैः पिष्टकेन च पूपिकाम् ।
जग्ध्वा सौवीरकञ्चानु पिबेत् क्रिमिहरं परम् ॥ ५ ॥

पलाशबीजप्रयोगः ।—

पलाशबीजस्वरसं पिबेत् वा क्षौद्रसंयुतम् ।
पिबेत् तद्बीजकल्कं वा तक्रेण क्रिमिनाशनम् ॥ ६ ॥

सुरसादिगणः ।—

सुरसादिगणं वाऽपि सर्वथैवोपयोजयेत् ॥ ७ ॥

विड़ङ्गादिकल्कः ।—

विड़ङ्गसैन्धवक्षार-काम्पिल्लकहरीतकीः ।
पिबेत् तक्रेण सम्पिष्य सर्वक्रिमिनिवृत्तये ॥ ८ ॥

विड़ङ्गादिसिद्धा यवागूः ।—

विड़ङ्गपिप्पलीमूल-शिग्रुभिर्मरिचेन च ।
तक्रसिद्धा यवागूः स्यात् क्रिमिघ्नी ससुवर्चिका ॥ ९ ॥

---

आखुपर्णीदलैरित्यादि ।—आखुपर्णी द्रवन्ती मूषिकपर्णी दन्तीभेदा वा, मण्डूकपर्णीत्यन्ये। दलं कोमलदलम् ; यदाह वाग्भटः,—"आखुपर्णीकिसलयैः सुपिष्टैः पिष्टमिश्रितैः। पक्त्वा पूपलिकां खादेत् धान्याम्लञ्च पिबेदनु ॥" ( चि० २० अ० ) इति। पिष्टकेनेति—यवपिष्टकेन, क्रिमिहरत्वादिति सुश्रुतटीकाकृतः। शालितण्डुलपिष्टकेनेति निश्चलः। आखुपर्णीपत्रस्य भागद्वयं पिष्टकस्य त्वेको भाग इत्याहुः। सौवीरं काञ्जिकम्। यद्यपि सुश्रुते ( उ० ५४ अ० ) वाग्भटे च ( चि० २० अ० ) "क्षीराणि मांसानि" इत्यादिनाऽम्लमात्रस्यैव वर्जनमुक्तं, तथाऽपि विशेषवचनादत्र काञ्जिकानुपानमिति न विरोधमावहति ॥ ५ ॥

पलाशबीजमित्यादि ।—पलाशबीजस्य स्वरसः तद्बीजकल्को वा। तक्रेणेति, तण्डुलाम्बुनाऽप्ययं योगो ज्ञेयः ; तदुक्तं सुश्रुते—"पलाशबीजस्वरसं कल्कं वा तण्डुलाम्बुना" ( उ० ५४ अ० ) इति ॥ ६ ॥

सुरसादीत्यादि।—सुरसादिगणः सौश्रुतः। सर्वथैवेति—कल्ककषायकल्पनया ॥ ७ ॥

विड़ङ्गसैन्धवेत्यादि।—काम्पिल्लको गुण्डारोचनी, "कमलागुँड़ी" इति ख्यातम् ॥ ८ ॥

विड़ङ्गेत्यादि चरकस्य।—तक्रसिद्धेति—तक्रमर्द्धोदकं ग्राह्यम्, अन्यथा अत्यम्लता स्यादित्याहुः। सुवर्चिका सर्जिकाक्षारः, तां दत्त्वा भक्षयेत् ॥ ९ ॥

विम्बीघृतम।—

पीतं विम्बीघृतं हन्ति पक्वामाशयगान् क्रिमीन्॥ १०॥

त्रिफला घृतम।—

त्रिफला त्रिवृता दन्ती वचा काम्पिल्लकं तथा।
सिद्धमेभिर्गवां मूत्रे सर्पिः क्रिमिविनाशनम्॥ ११॥

विडङ्ग घृतम।—

त्रिफलायास्त्रयः प्रस्था विड़ङ्गप्रस्थ एव च।
द्विपलं दशमूलञ्च लाभतः समुपाचरेत्॥ १२॥
पादशेषे जलद्रोणे शृते सर्पिर्विपाचयेत्।
प्रस्थोन्मितं सिन्धुयुतं तत् परं क्रिमिनाशनम्॥ १३॥
विड़ङ्गघृतमेतच्च लेह्यं शर्करया सह।
सर्वान् क्रिमीन् प्रणुदति वज्रं मुक्तमिवासुरान्॥ १४॥

यूकनाशने रसेन्द्रप्रयोगः।—

रसेन्द्रेण समायुक्तो रसो धुस्तूरपत्रजः।
ताम्बूलपत्रजो वाऽपि लेपो यूकविनाशनः॥ १५॥

यूकलिख्यानाशने विड़ङ्गतैलम्।—

सविड़ङ्गगन्धकाशिलासिद्धं सुरभीजलेन कटुतैलम्।

---

पीतमित्यादि।—विम्बीघृते विपक्वविम्बीफलस्य कल्कश्चतुर्गुणं जलम्॥ १०॥

त्रिफलेत्यादि।—त्रिफलाघृते दन्ती नागदन्ती, सा च स्थूलमूलेत्याहुः; तदुक्तं—"त्रिवृत्कम्पिल्लकवचा-नागदन्तीफलत्रयैः। गोमूत्रसाधितं सर्पिः पानतः क्रिमिनाशनम॥" इति॥ ११॥

त्रिफलाया इत्यादि।—स्पष्टम्। विड़ङ्गघृतं क्वचित् पुस्तके तथा वृन्दे च, तच्च टीकाकृद्भिर्न धृतम् इत्यधिकमेवेति ज्ञेयम्॥ १२—१४॥

रसेन्द्रेणेत्यादि।—रसेन्द्रः पारदः। ताम्बूलपत्रं पर्णम्। "लेपनं यौकनाशनम्" इति पाठे—यौकं यूकवृन्दम्॥ १५॥

आजन्म नयति नाशं लिख्यासहितास्तु यूकाश्च ॥ १६ ॥
इति क्रिमिचिकित्सा ।

---

# अथ पाण्डुरोगादि-चिकित्सा ।

चिकित्साक्रमः ।—

साध्यन्तु पाण्डामयिनं समीक्ष्य स्निग्धं घृतेनोर्द्ध्वमधश्च शुद्धम् ।
सम्पादयेत् चौद्रघृतप्रगाढ़ैर्हरीतकीचूर्णमयैः प्रयोगैः ॥ १ ॥

---

सविडङ्गेत्यादि ।—शिला मनःशिलेति केचिदाहुः ; अन्ये तु गन्धकशिला गन्धकपाषाणमेवेति वदन्ति । सुरभीजलं गामूत्रं, तच्च चतुर्गुणं ग्राह्यम् ॥ १६ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां क्रिमिचिकित्साविवृतिः ।

---

पुरीषक्रिमितः पाण्डुरोगस्य प्रादुर्भावात् क्रिम्यनन्तरं पाण्डुरोगचिकित्सामाह, साध्यमित्यादि सुश्रुतस्य ।—समीक्ष्येति—अनुबन्ध्यानुबन्धरूपं तद्दोषविशेषं सम्यगुपलभ्य । स्निग्धमेव, न स्विन्नं पाण्डुरोगे स्वेदनिषेधात् ; उक्तं हि सुश्रुते—"पाण्डुर्मेही रक्तपित्ती तृषार्त्तः क्षतक्षीणो दुर्बलोऽजीर्णभुक्तः । दकोदरी गर्भिणी पीतमद्यो नैते स्वेद्याः यश्च मर्त्त्योऽतिसारी ॥" (चि० ३२ अ०) इति । घृतेनेति न तु तैलादिना, सर्वपाण्डुरोगाणां पित्तप्रधानत्वात् रक्तदूष्यत्वाच्च ; उक्तं हि सुश्रुते—"व्यायाममम्लं लवणानि मद्यं मृदं दिवास्वप्नमतीव तीक्ष्णम् । निषेवमाणस्य प्रदूष्य रक्तं दोषास्त्वचं पाण्डुरतां नयन्ति ॥" ( उ० ४४ अ० ) इति पित्ते घृतस्यैव प्रधानत्वात् घृतेनैव स्नेहनं युक्तम् ; घृतञ्च भेषजसंस्कृतमेव देयं बहुगुणत्वात् ; उक्तं हि चरके—"कल्याणकं पञ्चगव्यं महातिक्तमथापि वा । स्नेहनार्थं घृतं दद्यात् कामलापाण्डुरोगिणे ॥" ( चि० पाण्डु० ) इति । सुश्रुते च केवलेनैव घृतेनेत्याहुः । ऊर्द्ध्वमिति—वमनेन । अध इति—विरेचनेन । यद्यपि पाण्डुरोगे वमनं निषिद्धं, यदुक्तं—"न वामयेत् तैमिरिकं न गुल्मिनं न चापि पाण्डूदररोगपीड़ितम्" इति, तथाऽपि पीड़ितमिति वचनेन प्रवृद्धपाण्डुरोगविषयं तद्वचनं ज्ञेयम्, उपक्रमे तु कालर्त्तुदोषाद्यपेक्षया कफोद्रेकावस्थायां मृदुवमनं ज्ञेयम् ; तथा च हारीतः,—"कालर्त्तुदोषप्रकृतिं शरीरं समीक्ष्य दद्याद्वमनं विधिज्ञः" इति । सुश्रुतेऽप्युक्तम्—"एतेऽप्यजीर्णव्यथिता वाम्या ये च विषातुराः । अतीव

घृतप्रयोगोपदेशः।—

पिबेत् घृतं वा रजनीविपक्वं यत् त्रैफलं तैल्वकमेव वाऽपि।
विरेचनद्रव्यकृतं पिबेद्वा योगांश्च वैरेचनिकान् घृतेन॥ २॥

हेतुप्रत्यनीकचिकित्सा।—

विधिः स्निग्धस्तु वातोत्थे तिक्तशीतस्तु पैत्तिके।
श्लैष्मिके कटुरूक्षोष्णः कार्य्यो मिश्रस्तु मिश्रके॥ ३॥

पित्तजे त्रिवृत-प्रयोगः।—

द्विशर्करं त्रिवृच्चूर्णं पलार्द्धं पैत्तिके पिबेत्॥ ४॥

कफजे हरीतकीप्रयोगः।—

कफपाण्डौ च गोमूत्रक्लिन्नयुक्तां हरीतकीम्॥ ५॥

---

चोल्लणकफास्ते च समधुकाब्दना॥" (चि० ३३ अ०) इति। विरेचनन्तु तीक्ष्णमेव; यदुक्तं—"वान्तस्य तीक्ष्णान्यनुलोमनानि कल्पोपदिष्टानि भिषक् विदध्यात्" इति॥ इदानीं संशोधनानन्तरं कृतसंसर्जनकस्य दोषविशेषशमनार्थमाह, सम्पादयेदित्यादि।—हरीतकीचूर्णसयैः प्रयोगैर्वक्ष्यमाणैर्वाशसादिभिर्हरीतकीचूर्णबहुलैरित्यर्थः। "हरीतकीचूर्णयुतैः" इति पाठान्तरम्॥ १॥

पिबेदित्यादि।—रजनीविपक्वमिति—हरिद्राकल्कक्वाथाभ्यां सिद्धमिति गयदासः; तन्न, कल्कक्वाथकरणस्य गणविषयत्वात्; तस्मात् हरिद्राकल्कसिद्धमित्यन्ये। अन्ये तु वक्ष्यमाणहरिद्राघृतमित्याहुः; तन्न, तस्य चरककृतत्वात्, इदं वाक्यं सौश्रुतमिति॥ त्रैफलमिति—त्रिफलाक्वाथकल्कसिद्धं, त्रिफलापटोलपिचुमर्देत्यादि कुष्ठोक्तं, वातरोगोक्तं वा ज्ञेयम्। तैल्वकमिति वातव्याध्युक्तम्। विरेचनद्रव्यकृतमिति—त्रिवृदादिद्रव्यसंस्कृतं घृतम्। योगांश्च वैरेचनिकानिति—सौश्रुतविरेचनाध्यायोक्तान् घृतेन पिबेदिति। इदमपि वाक्यं सौश्रुतम्॥ २॥

हेतुप्रत्यनीकचिकित्सामाह, विधिरित्यादि।—मिश्रके इति—द्वन्द्वजे॥ ३॥

द्विशर्करमित्यादि।—त्रिवृच्चूर्णमेव द्विगुणशर्करं सत् पलार्द्धमानं पिबेत्, तेन शर्करा कर्ष १ मा ५ रत्ति ४। त्रिवृच्चूर्णं माषा १० रत्ति ८ एवं मिलित्वा पलार्द्धमित्यर्थः; न तु त्रिवृच्चूर्णं पलार्द्धं सत् द्विशर्करं पलमेकम्, एवं मिलित्वा सार्द्धपलमेकं, प्रत्यहोपयोगेऽस्या मात्राया अनर्हत्वात्॥ ४॥

कफेत्यादि।—गोमूत्रक्लिन्नयुक्तामिति—गोमूत्रेण क्लिन्नां पिष्टां, तदनु गोमूत्रेणैव युक्तामालोड़ितां पिबेदित्यर्थः। वृद्धवाग्भटेऽप्युक्तं—"गोमूत्रेण वा हरीतकीः

कफजे शुण्ठ्यादि योगचतुष्टयम्।—

नागरं लौहचूर्णं वा कृष्णां पथ्यां तथाऽश्मजम्।
गुग्गुलुं वाऽथ मूत्रेण कफपाण्ड्वामयी पिबेत्॥ ६॥

लौहप्रयोगः।—

सप्तरात्रं गवां मूत्रे भावितं वाऽप्ययोरजः।
पाण्डुरोगप्रशान्त्यर्थं पयसा प्रपिबेन्नरः॥ ७॥

फलत्रिकादिः।—

फलत्रिकामृतावासा-तिक्ताभूनिम्बनिम्बजः।
क्वाथः क्षौद्रयुतो हन्यात् पाण्डुरोगं सकामलम्॥ ८॥

अयस्तिलादि मोदकः।—

अयस्तिलत्र्यूषणकोलभागैः सर्वैः समं माक्षिकधातुचूर्णम्।
तैर्मोदकः क्षौद्रयुतोऽनुतक्रः पाण्ड्वामये दूरगतेऽपि शस्तः॥ ९॥

---

कल्किताः" इत्यादि। अन्ये तु गोमूत्रेण क्लिन्नामुत्स्वेदितामित्याहुः। अन्ये तु चरके एतदनन्तरं वक्ष्यमाणयोगे "आरग्वधं रसेन" इत्यत्र "आरग्वधरसेन" इति पठित्वा आरग्वधरसेन हरीतकीं पिबेदिति पूर्वेण योजयन्ति; किन्तु वाग्भटसंवादात् पूर्वपाठ एव साधुः॥ ५॥

नागरमित्यादि।—नागरलौहचूर्णाभ्यामेको योगः। कृष्णापथ्याभ्यां द्वितीयः। अश्मजं शिलाजतु, अयं योगस्तृतीयः। गुग्गुलुमिति चतुर्थः; गोमूत्रेणेति सम्बध्यते सर्वत्रैव। लौहचूर्णन्तु मारितं पुटितञ्च ग्राह्यं, तदभावे लौहपत्रिका ग्राह्या, सा च शालिञ्चरसत्रिफलाक्वाथैः पुटपाकेन संशोधनीया, एवं सर्वत्र; तच्च माषकमेकं, शुण्ठीचूर्णञ्च माषकचतुष्टयमित्याहुः। एवंगुणं पिप्पलीहरीतकीचूर्णम्; तथा शुद्धशिलाजतु माषा २, घृतपेषितगुग्गुलु माषा ८, सर्वत्रैव गोमूत्रेण पानम्॥ ६॥

सप्तरात्रमित्यादि।—स्पष्टम्॥ ७॥

फलत्रिकेत्यादि।—अमृता गुडूची। तिक्ता कटुकी। भूनिम्बश्चिरता॥ ८॥

अयस्तिलेत्यादि।—तिलः कृष्णः। कोलं शुष्कबदरं, न तु कर्षार्द्धम्; यदाह सुषेणः,—"अयःकोलतिलत्र्योषैः समैर्माक्षिकधातुना। मधुना वटकान् कृत्वा भक्षयित्वा तक्रं पिबेदनु॥" इति। माक्षिकधातुः स्वर्णमाक्षिकं, तदपि शुद्धं ग्राह्यं, तच्छोधनञ्च लौहप्रदीपादौ बोध्यम्। अनुतक्र इति—तक्रानुपानः॥ ९॥

मण्डूरप्रयोगः।—

अयोमलन्तु सन्तप्तं भूयो गोमूत्रसेचितम्।
मधुसर्पिर्युतं चूर्णं सह भक्तेन योजयेत्॥
दीपनञ्चाग्निजननं शोथपाण्ड्वामयापहम्॥ १०॥

नवायसं चूर्णम्।—

त्र्यूषणं त्रिफलामुस्त-विड़ङ्गचित्रकाः समाः।
नवायोरजसो भागास्तच्चूर्णं मधुसर्पिषा॥ ११॥
भक्षयेत् पाण्डुहृद्रोग-कुष्ठार्शःकामलापहम्।
नवायसमिदं चूर्णं कृष्णात्रेयेण भाषितम्॥ १२॥

योगराजः।—

त्रिफलायास्त्रयो भागास्त्रयस्त्रिकटुकस्य च।
भागाश्चित्रकमूलस्य विड़ङ्गानां तथैव च॥ १३॥
पञ्चाश्मजतुनो भागाः पञ्च रूप्यमलस्य च।
माक्षिकस्य च शुद्धस्य लौहस्य रजसस्तथा॥ १४॥

---

अयोमलमित्यादि।—अयोमलं पुराणमण्डूरम्। भूयो गोमूत्रसेचितमिति—सप्त वारान्। ईदृशस्य मण्डूरचूर्णस्य माषकद्वयं द्विधा विभज्य भोजनादिमध्यान्तेषु मधुसर्पिर्भ्यां लिह्य, पश्चादभ्यासक्रमेण माषकं वर्द्धयेत्; अनुपानमिह तक्रं दुग्धं वा॥ १०॥

त्र्यूषणमित्यादि।—एकभागापेक्षया नवगुणं मण्डूरचूर्णम्। आदौ रक्तिद्वयं घृतमधुभ्यां लौहपात्रे लौहमुषलिकया विमर्द्य लिह्यात्, रक्तिद्वयं कृत्वा वृद्धिः कार्य्या माषकद्वयं यावदिति व्यवहारः। वाग्भटे तु तक्राद्यनुपानञ्चोक्तं, यथा—"व्योषाग्नित्रिफलाविल्ल-मुस्तैस्तुल्यमयोरजः। चूर्णितं तक्रमध्वाज्य-कोष्णाम्भोभिः प्रयोजितम्॥" (चि० १६ अ०) इति। एतदेव नवायसं सुश्रुते प्रमेहचिकित्सायां पठितम्॥ ११।१२॥

त्रिफलाया इत्यादि चरकस्य।—त्रिफलायास्त्रयो भागा इति मिलित्वा त्रयो भागाः, एवं त्रिकटुकस्यापि, निर्देशस्य मानप्रधानत्वात्। चित्रक-विड़ङ्गयोरपि प्रत्येकं पलम्। शिलाजत्वादिलौहचूर्णान्तानां प्रत्येकं दश पलानि। शर्करायाश्चाष्टौ पलानि। शिलाजतु च शिवागुड़िकोक्तविधिना ग्राह्यम्। रूप्यमलस्य चेति—रूप्यस्यावध्मायमानस्य यत् किट्टं निर्गच्छति तत् रूप्यमलम्। माक्षिकस्येति—मारणपुटनादिना शुद्धस्य

अष्टौ भागाः सितायाश्च तत् सर्वं श्लक्ष्णचूर्णितम्।
माक्षिकेणाप्लुतं स्थाप्यमायसे भाजने शुभे ॥ १५ ॥
उडुम्बरसमां मात्रां ततः खादेत् यथाऽग्नि ना।
दिने दिने प्रयुञ्जीत जीर्णे भोज्यं यथेप्सितम् ॥ १६ ॥
वर्जयित्वा कुलत्थांश्च काकमाचीं कपोतकान्।
योगराज इति ख्यातो योगोऽयममृतोपमः ॥ १७ ॥
रसायनमिदं श्रेष्ठं सर्वरोगहरं परम्।
पाण्डुरोगं विषं कासं यक्ष्माणं विषमज्वरम् ॥ १८ ॥
कुष्ठान्यजरकं मेहं श्वासं हिक्कामरोचकम्।
विशेषाद्धन्त्यपस्मारं कामलां गुदजानि च ॥ १९ ॥

विशालादि चूर्णम्।—

विशालाकटुकामुस्त-कुष्ठदारुकलिङ्गकाः।
कर्षांशा द्विपिचुर्मूर्वा कर्षार्द्धांशा घुणप्रिया ॥ २० ॥

---

स्वर्णमाक्षिकस्य। अन्ये तु "पञ्च रूप्यमलस्य च" इत्यत्र "तथा रूप्यमलस्य च" इति पठन्ति; तेन रूप्यमलस्येति शिलाजतुविशेषणं, ततश्च रसायनाधिकारे "राजतं कटुकं श्वेतम्" इत्यादिना यच्छिलाजतु रूप्यमलत्वेनोक्तं तदिह गृह्यते इत्याहुः; एतत्तु न व्यवहरन्ति वृद्धाः। वाग्भटे तु—लौहस्थाने रूप्यं पठितम्; यथा—"ताप्याद्रिजतु-रूप्यायो-मलाः पञ्च पलाः पृथक्। चित्रकत्रिफलाव्योषविडङ्गैः पलिकैः सह ॥ शर्कराऽष्टपलोन्मिश्राश्चूर्णिता मधुना द्रुताः ॥" (चि० १६ अ०) इति तदत्र प्रयोगभेदादविरोधः; उक्तं हि,—"सुवर्णमथवा रूप्यं योगे यत्र न लभ्यते। तत्र लौहेन कर्माणि भिषक् कुर्याद्विचक्षणः॥" इति। पूर्वोक्तव्यवस्थाऽपि शिलाजतु-लौहमल-स्वर्णमाक्षिक-लौहरजोभिश्चतुर्भिरेव दृश्यते, तेन तन्त्रकारवचनयोर्न विरोध इति। उडुम्बरः कर्षः। अजरकम् अजीर्णम्। यथाऽग्नि नेत्यत्र ना पुरुषः ॥१३—१९॥

विशालेत्यादि।—विशाला गोरक्षकर्कटी। "कर्षांशा च घुणप्रिया" इत्यपपाठः, किन्तु "कर्षार्द्धांशा" इति; उक्तं हि चरके—"विशालात्रिफलामुस्त-कुष्ठदारु-कलिङ्गकान्। कर्षोन्मितानतिविषां कर्षार्द्धांश्च प्रदापयेत्॥ कर्षौ मधुरसाया द्वौ सर्वमेतत् सुखाम्बुना। मर्दितं तं रसं पूतं पीत्वा लिह्याच्च मध्वनु॥" (चि० पाण्डु०)

पीत्वा तच्चूर्णमम्भोभिः सुखैर्लिह्यात् ततो मधु।
पाण्डुरोगं ज्वरं दाहं कासं श्वासमरोचकम्॥
गुल्मानाहामवातांश्च रक्तपित्तञ्च तज्जयेत्॥ २१॥

पाण्डविशेषे पक्वदुग्धस्य उपकारिता।—

लौहपात्रे शृतं क्षीरं सप्ताहं पथ्यभोजनः।
पिबेत् पाण्ड्वामयी शोथी ग्रहणीदोषपीड़ितः॥ २२॥

स्नेहनार्थं घृतनिर्देशः।—

कल्याणकं पञ्चगव्यं महातिक्तमथापि वा।
स्नेहनार्थं घृतं दद्यात् कामलापाण्डुरोगिणे॥ २३॥

कामलायां चिकित्साक्रमः।—

रेचनं कामलार्त्तस्य स्निग्धस्यादौ प्रयोजयेत्।
ततः प्रशमनी कार्य्या क्रिया वैद्येन जानता॥ २४॥

कामलायां त्रिफलादियोगचतुष्टयम्।—

त्रिफलाया गुडूच्या वा दार्व्या निम्बस्य वा रसः।
प्रातर्माक्षिकसंयुक्तः शीलितः कामलापहः॥ २५॥

कामलायाम अञ्जनद्वयम्।—

अञ्जनं कामलार्त्तानां द्रोणपुष्पीरसः स्मृतः।
निशागैरिकधात्रीणां चूर्णं वा सम्प्रकल्पयेत्॥ २६॥

---

इति; अत एव एतद्वचनबलात् फाण्टकषायविधानमप्यत्र योगे बोध्यम्; तेन तच्चूर्णं सुखैः कदुष्णैरम्भोभिश्चूर्णापेक्षया चतुर्गुणैर्मृदित्वा वस्त्रपूतं कृत्वा पिबेत्, अनन्तरञ्च मधु लिह्यादित्यर्थः॥ २०।२१॥

लौहपात्रे इत्यादि।—अत्र जलं चतुर्गुणं बोध्यं, पाकानुपपत्तेः॥ २२॥

कल्याणकमित्यादि।—कल्याणघृतं पञ्चगव्यघृतञ्च उन्मादे वक्ष्यति, महातिक्तञ्च कुष्ठे॥ २३॥

रेचनमित्यादि।— रेचनञ्च पित्तहरत्वेन॥ २४॥

त्रिफलाया इत्यादि।—स्पष्टम्॥ २५॥

अञ्जनमित्यादि।—अञ्जनं नेत्राञ्जनम्। द्रोणपुष्पी "दण्डकलस" इति केचित्।

कामलायां नस्यद्वयम् ।—

नस्यं कर्कोटमूलं वा घ्रेयं वा जालिनीफलम् ॥ २७ ॥

कामलायां योगपञ्चकम् ।—

अयोरजोव्योषविडङ्गचूर्णं
लिह्याद्धरिद्रां त्रिफलान्वितां वा ।
सशर्करा कामलिनां त्रिभण्डी
हिता गवाक्षी सगुड़ा च शुण्ठी ॥ २८ ॥

दार्व्यादि चूर्णम् ।—

दार्वीं सत्रिफला व्योष-विड़ङ्गान्ययसो रजः ।
मधुसर्पिर्युतं लिह्यात् कामलापाण्डुरोगवान् ॥ २९ ॥

कामलायाम् अयश्चूर्णादियोगद्वयम् ।—

तुल्या अयोरजःपथ्या-हरिद्राः क्षौद्रसर्पिषा ।
चूर्णिताः कामली लिह्यात् गुड़क्षौद्रेण वाऽभयाम् ॥ ३० ॥

कामलायां धाव्यादिचूर्णम् ।—

धात्रीलौहरजोव्योष-निशाक्षौद्राज्यशर्कराः ।
लीढ़ा निवारयत्याशु कामलामुद्धतामपि ॥ ३१ ॥

---

निशादिभिश्चूर्णाञ्जनं कार्य्यम् ; तदुक्तं तन्त्रान्तरे,—"निशागैरिकधात्रीणां चूर्णैर्वाञ्जनं मतम् ।" एतच्च मध्वक्तशलाकया कार्य्यमित्याहुः ॥ २६ ॥

नस्यमित्यादि ।—कर्कोटमूलमिति—कर्कोटमूलरस इत्यर्थः । जालिनी पीतघोषकः ॥ २७ ॥

अयोरज इत्यादि सशर्करेत्यादि च सुश्रुतस्य ।—त्रिभण्डी त्रिवृता, रेचनार्थमयं योगः । गवाक्षी गोरक्षकर्कटी, श्वेतापराजिता इत्यन्ये ; अत्रापि सशर्करेति योज्यमित्याह निश्चलः । कार्त्तिकस्तु सगुड़ा च शुण्ठीत्यत्र चकारं भिन्नक्रमं योजयित्वा शुण्ठी सगुड़ेति व्याख्याय गवाक्षीमपि सगुड़ामाह । एवं सुश्रुतटीकायां डल्लनोऽपि व्याख्यातवान् ॥ २८ ॥

दार्व्वीत्यादि चरकस्य ।—दार्व्वीत्वक् ॥ २९ ॥

तुल्या इत्यादि ।—स्पष्टम् ॥ ३० ॥

धात्रीत्यादि ।—स्पष्टम् ॥ ३१ ॥

कुम्भकामलायां मण्डूरप्रयोगः।—

दग्ध्वाऽक्षकाष्ठैर्मलमायसन्तु
गोमूत्रनिर्वापितमष्टवारान्।
विचूर्ण्य लीढ़ं मधुनाऽचिरेण
कुम्भाह्वयं पाण्डुगदं निहन्ति॥ ३२॥

हलीमकचिकित्साविधिः।—

पाण्डुरोगक्रियां सर्वां योजयेच्च हलीमके।
कामलायाञ्च या दृष्टा साऽपि कार्य्या भिषग्वरैः॥ ३३॥

विडङ्गाद्यं लौहम्।—

विड़ङ्गमुस्तात्रिफला-देवदारुषड़ूषणैः।
तुल्यमात्रमयश्चूर्णं गोमूत्रेऽष्टगुणे पचेत्॥ ३४॥
तैरक्षमात्रां गुड़िकां कृत्वा खादेत् दिने दिने।
कामलापाण्डुरोगार्त्तः सुखमाप्स्यतेऽचिरात्॥ ३५॥

त्र्यूषणाद्यं मण्डूरम्।—

त्र्यूषणं त्रिफला मुस्तं विड़ङ्गं चव्यचित्रकौ।
दार्वीत्वङ्माक्षिको धातुर्ग्रन्थिकं देवदारु च॥ ३६॥

---

दग्ध्वेत्यादि सुश्रुतस्य।—अक्षत्वचो बिभीतकत्वचः। सुश्रुते बहुपुस्तकेषु चन्द्राटादिषु—"गोमूत्रनिर्वापितसप्तवारम्" इत्येव पाठो दृश्यते, अन्ये तु—"गोमूत्रनिर्वापितमष्टवारम्" इत्येव पठन्ति॥ ३२॥

पाण्डुरोगकामलाचिकित्सां हलीमकेऽप्यतिदिशति, पाण्डुरोगक्रियामित्यादि।—क्रिया विरेचनादिरूपा॥ ३३॥

विड़ङ्गेत्यादि।—विड़ङ्गलौहे तुल्यमात्रमयश्चूर्णमिति—मिलितविड़ङ्गचूर्णादिसर्व-चूर्णसममयश्चूर्णमित्यर्थः। अत्र लौहस्य प्राधान्यात् तदपेक्षयैवाष्टगुणगोमूत्रेण लौहचूर्णं पक्त्वाऽवतारिते च विड़ङ्गादिचूर्णस्य प्रक्षेप इति केचित्। अन्ये तु—विड़ङ्गादिचूर्णसहितस्यैव लौहचूर्णस्य पाकः, गोमूत्रस्याष्टगुणत्वं सर्वचूर्णापेक्षयैव। अत्र द्रवद्वैगुण्यं न व्यवहरन्ति वृद्धाः। पाकश्चात्र मुद्रापाकेनेत्याहुः। अक्षमात्रां गुड़िकां कुर्य्यात्, न तु तत्प्रमाणं खादेत्, मात्रा देहादिबलापेक्षया, अत एव बुद्धा विभज्य कर्त्तव्या॥ ३४।३५॥

त्र्यूषणमित्यादि चरकस्य।—दार्वीत्वगिति षष्ठीसमासः, न तु दार्वी त्वक् चेति;

एषां द्विपलिकान् भागांश्चूर्णं कृत्वा पृथक् पृथक्।
मण्डूरं द्विगुणं चूर्णाच्छुद्धमञ्जनसन्निभम् ॥ ३७ ॥
मूत्रे चाष्टगुणे पक्त्वा तस्मिंस्तु प्रक्षिपेत् ततः।
उडुम्बरसमान् कुर्य्यात् वटकांस्तान् यथाबलम् ॥ ३८ ॥
उपयुञ्जीत तक्रेण सात्म्यं जीर्णे च भोजनम्।
मण्डूरवटका ह्येते प्राणदाः पाण्डुरोगिणाम् ॥ ३९ ॥
कुष्ठान्यजरकं शोथमूरुस्तम्भं कफामयान्।
अर्शांसि कामलां मेहान् प्लीहानं शमयन्ति च ॥ ४० ॥
निर्वाप्य बहुशो मूत्रे मण्डूरं ग्राह्यमिष्यते।
ग्राहयन्त्यष्टगुणितं मूत्रं मण्डूरचूर्णतः ॥ ४१ ॥

---

"ताप्यं दार्व्यास्त्वचं चव्यम्" (चि० १६ अ०) इति वाग्भटवचनात्। ग्रन्थिकं पिप्पलीमूलम्। एभिश्चतुर्दशद्रव्यैः पृथग्द्विपलैरष्टाविंशतिपलानि भवन्ति, मण्डूरञ्च समुदितचूर्णाद्द्विगुणं सत् षट्पञ्चाशत्पलमानं भवति, गोमूत्रञ्च मिलितचूर्णापेक्षयाऽष्टगुणम्; पलोल्लेखागतत्वेन द्वैगुण्यमपि नास्ति। अन्ये तु—मूत्रमष्टगुणं प्रत्यासत्त्या मण्डूरापेक्षयैव वदन्ति; चक्रेणाप्यनुमतोऽयं पक्षः, अतो दीपिकायाम् "अयमेव पक्षः प्रतिभाति" इत्युक्तम्, एतच्च न युक्तम्; यदाह वाग्भटः,—"ताप्यं दार्व्यास्त्वचं चव्यं ग्रन्थिकं देवदारु च। व्योषादिनवकञ्चैतत् चूर्णयेद्द्विगुणं ततः॥ मण्डूरञ्चाञ्जननिभं सर्व्वतोऽष्टगुणे पचेत्। पृथग्विपक्के गोमूत्रे वटकीकरणक्षमे॥ प्रक्षिप्य वटकान् कुर्य्यात् तान् खादेत् तक्रभोजनः॥" (चि० १६ अ०) इति। वाग्भटटीकायाञ्च—"सर्व्वत इति—मण्डूरसहितचूर्णादष्टगुणं गोमूत्रम्" इति व्याख्यातम्। वृद्धवाग्भटेऽपि—"मूत्रं सर्व्वतोऽष्टगुणम्" इत्युक्तम्। पृथक् पृथगिति—एकपृथक्शब्दो द्विपलिकानित्यनेन सम्बध्यते, द्वितीयपृथक्शब्दाच्च मण्डूरचूर्णमेव पृथक् कृत्वा पक्तव्यम्; तस्मिन्नासन्नपाके त्र्यूषणादिचूर्णप्रक्षेपः, चूर्णबहुलत्वात्; एवं सर्व्वत्र बहुचूर्णप्रक्षेपविषये आसन्नपाके एव प्रक्षेपः। स्वल्पचूर्णस्य तु प्रक्षेपः सम्यक् पाके सत्येव; अत एवोक्तं—"प्रायो न पाकश्चूर्णानां भूरिचूर्णस्य तेन हि। आसन्नपाके प्रक्षेपः स्वल्पस्य पाकमागते॥" पाकमागते इति—सम्यक्पाके इत्यर्थः। पाकलक्षणञ्च—"रसो गन्धः शुभः पाके वर्त्तिः स्यात् गाढमर्दनात्" इति। उडुम्बरसमानिति—कर्षमानान्।

पुनर्नवामण्डूरम् ।—

पुनर्नवात्रिवृत्शुण्ठी-पिप्पलीमरिचानि च ।
विड़ङ्गं देवकाष्ठञ्च चित्रकं पुष्कराह्वयम् ॥ ४२ ॥
त्रिफलां द्वे हरिद्रे च दन्तीञ्च चविकं तथा ।
कुटजस्य फलं तिक्तां पिप्पलीमूलमुस्तकम् ॥ ४३ ॥
एतानि समभागानि मण्डूरं द्विगुणं ततः ।
गोमूत्रेऽष्टगुणे पक्त्वा स्थापयेत् स्निग्धभाजने ॥
पाण्डुशोथोदरानाह-शूलार्शःक्रिमिगुल्मनुत् ॥ ४४ ॥

मण्डूरवज्रवटकः ।—

पञ्चकोलं समरिचं देवदारु फलत्रिकम् ।
विड़ङ्गमुस्तयुक्ताश्च भागास्त्रिपलसम्मिताः ॥ ४५ ॥
यावन्त्येतानि चूर्णानि मण्डूरं द्विगुणं ततः ।
पक्त्वा चाष्टगुणे मूत्रे घनीभूते तदुद्धरेत् ॥ ४६ ॥
ततोऽक्षमात्रान् वटकान् पिबेत् तक्रेण तक्रभुक् ।
पाण्डुरोगं जयत्येष मन्दाग्नित्वमरोचकम् ॥ ४७ ॥
अर्शांसि ग्रहणीरोगमूरुस्तम्भमथापि वा ।
क्रिमिं प्लीहानमुदरं गलरोगञ्च नाशयेत् ॥
मण्डूरवज्रनामायं रोगानीकविनाशनः ॥ ४८ ॥

---

पञ्चषट्माषकेण प्रायेण प्रचारः । अजरकमजीर्णम् । बहुश इति—सप्त वारान् । चक्रेण तु—ग्राहयन्त्यष्टगुणितं मूत्रं मण्डूरचूर्णत इत्येव पाठो लिखितः, यतो "दीपिकायां मण्डूरापेक्षयैवाष्टगुणत्वं, तेन अयमेव पाठः प्रतिभाति" इति वदता स्वीकृतम् । "गोमूत्रं सर्वचूर्णतः" इति तु केनापि प्रतिसंस्कृत्य लिखितम् ॥ ३६—४१ ॥

पुनर्नवेत्यादि ।—पुनर्नवामण्डूरे गोमूत्रस्याष्टगुणत्वं मण्डूरापेक्षयैव, सन्निहितत्वात् व्यवहाराच्च । अत्रापि द्वैगुण्यं न व्यवहरन्ति ॥ ४२—४४ ॥

पञ्चकोलमित्यादि ।—मण्डूरवज्रवटके विड़ङ्गमुस्तयुक्ताश्च भागास्त्रिपलसम्मिताः इति—पञ्चकोलादिभागा विड़ङ्गमुस्तसहितास्त्रिपलसम्मिता इत्यर्थः । अत्रापि मण्डूरापेक्षयैवाष्टगुणत्वं मूत्रस्य ; अद्वैगुण्यञ्च पूर्ववत् ॥ ४५—४८ ॥

धात्र्यरिष्टम्।—

धात्रीफलसहस्रे द्वे पीड़यित्वा रसं भिषक्।
चौद्राष्टभागं पिप्पल्याश्चूर्णार्द्धकुड़वान्वितम्॥ ४९॥
शर्कराऽर्द्धतुलोन्मिश्रं पक्वं स्निग्धघटे स्थितम्।
प्रपिबेत् पाण्डुरोगार्त्तो जीर्णे हितमिताशनः॥ ५०॥
कामलापाण्डुहृद्रोग-वातासृग्विषमज्वरान्।
कासहिक्काऽरुचिश्वासांश्चैषोऽरिष्टः प्रणाशयेत्॥ ५१॥

द्राक्षाघृतम्।—

पुराणसर्पिषः प्रस्थो द्राक्षाऽर्द्धप्रस्थसाधितः।
कामलागुल्मपाण्ड्वर्त्ति-ज्वरमेहोदरापहः॥ ५२॥

हरिद्राघृतम्।—

हरिद्रात्रिफलानिम्ब-बलामधुकसाधितम्।
सक्षीरं माहिषं सर्पिः कामलाहरमुत्तमम्॥ ५३॥

मूर्वाद्यं घृतम्।—

मूर्वातिक्तानिशायास-कृष्णाचन्दनपर्पटैः।
त्रायन्तीवत्सभूनिम्ब-पटोलाम्बुददारुभिः॥ ५४॥
अक्षमात्रैर्घृतप्रस्थं सिद्धं क्षीरं चतुर्गुणम्।
पाण्डुताज्वरविस्फोट-शोथार्शोरक्तपित्तनुत्॥ ५५॥

व्योषाद्यं घृतम्।—

व्योषं विल्वं द्विरजनी त्रिफला द्विपुनर्नवम्।

---

धात्रीफलेत्यादि चरकस्य।—क्षौद्राष्टभागमिति—क्षौद्रस्याष्टमो भागः, तेन आमलकस्वरसस्य सप्त भागा इति सिध्यति। शर्कराऽर्द्धतुला पञ्चाशत् पलानि। "अर्द्धपला" इति लेखकदोषात् प्रमादपाठः॥ ४९—५१॥

पुराणसर्पिष इति।—पुराणं दशवर्षस्थितं सर्पिः। जलमत्र चतुर्गुणमर्थात्। अन्ये तु—"पिष्ट्वा गोस्तनिकायास्तु पलान्यष्टौ समावपेत्। पुराणसर्पिषः प्रस्थं पचेत् क्षीरचतुर्गुणम्॥" इति हारीतदर्शनात् क्षीरमत्र चतुर्गुणमाहुः॥ ५२॥

हरिद्रेत्यादि।—अत्र क्षीरं चतुर्गुणम्॥ ५३॥

मूर्वेत्यादि।—मूर्वाघृते वत्सेन वत्सकफलं ग्राह्यम्॥ ५४।५५॥

मुस्तान्ययोरजः पाठा विड़ङ्गं देवदारु च ॥ ५६ ॥
वृश्चिकाली च भार्गी च सक्षीरैस्तैः शृतं घृतम्।
सर्वान् प्रशमयत्येतद्विकारान् मृत्तिकाकृतान् ॥ ५७ ॥

इति पाण्डुरोगादिचिकित्सा।

---

## रक्तपित्त-चिकित्सा।

आदौ रक्तस्तम्भने दोषः।—

नोद्रिक्तमादौ सङ्ग्राह्यं बलिनोऽप्यश्नतश्च यत्।
हृत्पाण्डुग्रहणीरोग-प्लीहगुल्मज्वरादिकृत् ॥ १ ॥

लङ्घनीयनिर्देशः।—

ऊर्द्धं प्रवृत्तदोषस्य पूर्वं लोहितपित्तिनः।
अक्षीणबलमांसाग्नेः कर्त्तव्यमपतर्पणम् ॥ २ ॥

---

व्योषमित्यादि वाग्भटस्य।—विल्लं विल्लशलाटुः। अयोरजोऽत्र पुटादिशोधितं ग्राह्यम्। वृश्चिकाली "बिछाती"इति ख्यातम्। क्षीरमत्र चतुर्गुणं बोध्यम्। अरुणस्तु—क्षीरं घृतसमं, जलन्तु चतुर्गुणमित्याह ॥ ५६।५७ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां पाण्डुरोगादिचिकित्साविवृतिः।

---

पाण्डुरोगवत् रक्तपित्तस्यापि पित्तरक्तकारणत्वाव्यभिचारात् पाण्डुरोगानन्तरं रक्तपित्तमाह, नोद्रिक्तमित्यादि।—नोद्रिक्तमित्यादिना शोधनक्रियामाह। उद्रिक्तमतिशयेन प्रवृत्त्युन्मुखम्। अश्नत इत्यनेन सन्तर्पणोत्थितत्वं दर्शयति। आदौ सङ्ग्रहणे दोषमाह, हृदित्यादि।—रोगशब्दस्य हृदादिभिः प्रत्येकं सम्बन्धः ॥ १ ॥

ऊर्द्धं प्रवृत्तदोषस्येत्यादि सुश्रुतस्य।—"अतिप्रवृत्तदोषस्य"इति पाठान्तरम्। अपतर्पणं लङ्घनम्; चरके रक्तपित्ते लङ्घनकारणोपपत्तिर्दर्शिता, यथा—"प्रायेण हि समुत्क्लिष्टमानदोषाच्छरीरिणाम्। वृद्धिं प्रयाति पित्तासृक् तस्माल्लङ्घनमादितः॥" (चि० रक्तपि०) इति ॥ २ ॥

रक्तपित्तद्वये प्रथमकर्त्तव्यनिर्देशः।—

ऊर्द्ध्वगे तर्पणं पूर्वं कर्त्तव्यञ्च विरेचनम्।
प्रागधोगमने पेया वमनञ्च यथाबलम्॥ ३॥

तर्पणम्।—

तर्पणं सघृतक्षौद्र-लाजचूर्णैः प्रदापयेत्।
ऊर्द्ध्वगं रक्तपित्तं तत् पीतं काले व्यपोहति॥ ४॥

तर्पणौषद्रवः।—

जलं खर्जूरमृद्वीका-मधुकैः सपरूषकैः।
शृतशीतं प्रयोक्तव्यं तर्पणार्थं सशर्करम्॥ ५॥

ऊर्द्ध्वगे त्रिवृतामोदकः।—

त्रिवृता त्रिफला श्यामा पिप्पली शर्करा मधु।
मोदकः सन्निपातोर्द्ध-रक्तपित्तज्वरापहः॥ ६॥

---

दोषनिदानापेक्षया यत् कर्त्तव्यं तदाह ऊर्द्ध्वगे इत्यादि।—यदाह चरकः,—"मार्गौ दोषानुबन्धञ्च निदानं प्रसमीक्ष्य च। लङ्घनं रक्तपित्तादौ तर्पणं वा प्रयोजयेत्॥" (चि० रक्तपि०) इति। अस्यार्थः,—यदि ऊर्द्ध्वो मार्गः, सामं पित्तं कफश्च दोषः, स्निग्धोष्णञ्च निदानं, तदा लङ्घनम्, अन्यथा तर्पणम्। तर्पयतीति तर्पणमशनं, तेन यवागूस्तर्पणञ्च ग्राह्यम्। ये तु शक्तुतर्पणं तर्पणमिति, तन्मते यवागूदानपक्षो न सङ्गृहीतः स्यादित्याह, प्रागधोगमने इति—अधोगे रक्तपित्ते प्राक् पूर्वं पेयादिक-मित्यर्थः॥ ३॥

तर्पणमित्यादि चरकस्य।—स्पष्टम्॥ ४॥

येन द्रवेण शक्तूनामालोड़नं कार्य्यं तदाह, जलमित्यादि।—अत्र खर्जूरादिना जलं षडङ्गविधानेन कार्य्यम्, एतच्च जलमत्यर्थं मधुरमप्यूर्द्ध्वगे कफसम्बन्धेऽपि रक्तपित्त-व्याधिप्रत्यनीकतया यौगिकं ज्ञेयम्॥ ५॥

विरेचनमाह, त्रिवृतेत्यादि।—त्रिवृतेति—अरुणमूला। श्यामेति—श्याममूला त्रिवृत, न तु श्यामालता वृद्धदारको वा; चरके श्यामात्रिवृत्कल्पस्थाने पठितत्वात्। अत्र "मोदके द्विगुणो गुड़ः" इति वचनात् शर्करायाश्चूर्णाद्द्विगुणत्वमिच्छन्ति, मधु पुनरेकद्रव्यवत्। किंवा मधुशर्करे मिलित्वा चूर्णाद्द्विगुणम्, उभयोरपि मोदकार्हत्वात्। अयं योगः सुश्रुतेऽपि पठ्यते, तट्टीकाकारस्तु त्रिफलायाः प्रत्येकं भागः, शर्करा-माक्षिकन्तु मोदकयोग्यमाह॥ ६॥

अधोगे पेयादिनिर्देशः।—

शालपर्ण्यादिना सिद्धा पेया पूर्वमधोगते।

वमनं मदनोन्मिश्रो मन्थः सक्षौद्रशर्करः॥ ७॥

भोजनार्थं तण्डुलनिर्देशः।—

शालिषष्टिकनीवार-कोरदूषप्रशातिकाः।

श्यामाकश्च प्रियङ्गुश्च भोजनं रक्तपित्तिनाम्॥ ८॥

सूपयूषार्थं द्विदलनिर्देशः।—

मसूरमुद्गचणकाः समकुष्टाढ़कीफलाः।

प्रशस्ताः सूपयूषार्थं कल्पिता रक्तपित्तिनाम्॥ ९॥

व्यञ्जनार्थं शाकमांसनिर्देशः।—

शाकं पटोलवेत्राग्र-तण्डुलीयादिकं हितम्।

मांसं लावकपोतादि-शशैणहरिणादिजम्॥ १०॥

षडङ्गपानीयम्।—

विना शुण्ठीं षडङ्गेन सिद्धं तोयञ्च दापयेत्॥ ११॥

स्तम्भनीयाः।—

क्षीणमांसबलं बालं वृद्धं शोषानुबन्धिनम्।

अवश्यमविरेच्यञ्च स्तम्भनैः समुपाचरेत्॥ १२॥

---

शालपर्ण्यादिना सिद्धेति।—शालपर्ण्यादि स्वल्पपञ्चमूलं तथाऽतिसारे उक्तौ द्वौ च स्वल्पमहद्भेदात्, एवं शालपर्ण्यादिद्वयमेव दोषाद्यपेक्षया देयमित्याहुः। व्यवहारस्तु प्रायः स्वल्पपञ्चमूलेनेति। वमनमिति।—मन्थो द्रवद्रव्यालोड़िताः शक्तवः॥७॥

शालीत्यादि।—नीवारः "उड़िया" इति ख्यातम्। कोरदूषः कोद्रवः, स चेह पुरातनो ग्राह्यः, तेन कोरदूषस्य यत् रक्तपित्तहेतुत्वं चरके निदानस्थाने प्रोक्तं, तदभिनवाभिप्रायेणेति केचित्। अन्ये तु निष्पावमाषपूपादियुक्तस्यैव कोरदूषस्य संयोगमहिम्ना रक्तपित्तहेतुत्वं निदाने प्रोक्तं, केवलस्य तु कषायमधुरलघुत्वात् रक्तपित्तहन्तृत्वमेवाहुः। प्रशातिका रक्तशूका, "रक्त उड़िया" इति ख्यातं, सा जलमध्ये प्रायो भवति। प्रियङ्गुः कङ्गुः, "काओनी" इति लोके॥ ८॥

मसूरेत्यादि।—आढ़की तुवरी॥ ९।१०॥

विना शुण्ठीमित्यादि।—स्पष्टम्॥ ११॥

निषिद्धवमनविरेचनमाह, क्षीणेत्यादि।—शोषानुबन्धिनं यक्ष्मानुबन्धयुतम्॥१२॥

वासास्वरसः।—

वृषपत्राणि निष्पीड्य रसं समधुशर्करम्।
पिबेत् तेन शमं याति रक्तपित्तं सुदारुणम्॥ १३॥

प्रियङ्ग्वादिचूर्णम्।—

अटरूषकनिर्य्यूहे प्रियङ्गुं मृत्तिकाऽञ्जने।
विनीय लोध्रं सक्षौद्रं रक्तपित्तहरं पिबेत्॥ १४॥

उत्पलादिचूर्णम्।—

वासाकषायोत्पलमृत्प्रियङ्गु-
लोध्राञ्जनाम्भोरुहकेशराणि।
पीत्वा सिताक्षौद्रयुतानि हन्यात्
पित्तासृजो वेगमुदीर्णमाशु॥ १५॥

स्वरसयोगानाह, वृषेत्यादि।—वृषस्य पत्राणि पुटपाकविधिना उत्स्विद्य ततो रसो ग्राह्यः, अन्यथा तत्पत्रस्वरसो दुर्ग्रहो भवति। अयञ्च योग ऊहंगे बोध्य इत्याहुः। योगोऽयं मधुशर्कराव्यतिरेकेण तत्कृतकषायेणापि बोध्यः; यदाह वाग्भटः,—"पित्तासृक् शमयेत् पीतो निर्य्यासो वाऽटरूषकः। शर्करामधुसंयुक्तः केवलो वा शृतोऽपि वा॥" (चि० २ अ०) इति॥ १३॥

अटरूषकनिर्य्यूहे इत्यादि।—अटरूषको वासकः। मृत्तिका सौराष्ट्री मृत, तदभावे पङ्कपर्पटी। अञ्जनं रसाञ्जनम्। क्षौद्रान्तोऽयं योगः; उक्तञ्च वाग्भटे—"वासारसेन फलिनी-मृद्रसाञ्जनमाक्षिकम्। पित्तासृक् शमयेत् पीतम्" (चि० २ अ०) इति। विनीय कल्कीकृत्य प्रक्षिप्येति वा। प्रियङ्ग्वादीनां मिलितानां कर्षं क्षौद्रस्य च कर्षं प्रक्षिप्य पिबेत्, परिभाषाबलात्; उक्तं ह्यग्निवेशेन,—"कर्षश्चूर्णस्य कल्कस्य" इत्यादि. तथा "मात्रा क्षौद्रघृतादीनाम्" इति। अन्ये त्वाहुः,—चूर्णादीनां कर्षमानत्वं स्वतन्त्रप्रयोगे एव भवति, यदि पुनरत्रोक्तपरिभाषानुसारेण प्रियङ्ग्वादीनां प्रत्येकं गृह्यते तदा भेषजभूयस्त्वं स्यात्, प्रियङ्ग्वादीनामल्पत्वं युक्तं भवति; व्यवहारस्तु प्रियङ्ग्वादिकल्कक्षौद्रयोः प्रत्येकं चतुःपञ्चमाषकं प्रक्षेप इति॥ १४॥

वासाकषायेत्यादि सुश्रुतस्य।—उत्पलादीनां क्षौद्रान्तानां प्रक्षेपः। निश्चलस्तु सितामधुनोः प्रत्येकं शाणः, उत्पलादीनां मिलित्वा शाण इत्याह॥ १५॥

तालीशचूर्णम्।—

तालीशचूर्णसहितः पेयः क्षौद्रेण वासकस्वरसः।

कफपित्ततमकश्वास-स्वरभेदशोणितपित्तहरः॥ १६॥

वासादिक्वाथः।—

अटरूषकमृद्वीका-पथ्याक्वाथः सशर्करः।

क्षौद्राढ्यः कसनश्वास-रक्तपित्तनिबर्हणः॥ १७॥

वासाप्रशस्तिः।—

वासायां विद्यमानायामाशायां जीवितस्य च।

रक्तपित्ती क्षयी कासी किमर्थमवसीदति?॥ १८॥

उडुम्बरस्वरसः।—

समाक्षिकः फल्गुफलोद्भवो वा

पीतो रसः शोणितमाशु हन्ति॥ १९॥

वनमल्लिकामूलक्वाथः।—

मदयन्त्यङ्घ्रिजः क्वाथस्तद्वत् समधुशर्करः॥ २०॥

अतसीकुसुमादियोगः।—

अतसीकुसुमसमङ्गा-वटावरोहत्वगम्भसा पीता।

प्रशमयति रक्तपित्तं यदि भुङ्क्ते मुद्गयूषेण॥ २१॥

---

तालीशेत्यादि।—अत्र वासकस्वरसस्य पलं, तालीशचूर्णस्य माषकद्वयं, मधु माषचतुष्टयमिति व्यवहरन्ति॥ १६॥

अटरूषकेत्यादि।—चरकस्यायं योगोऽनार्ष इति जेज्जड़ः, दृश्यते त्वयं चन्द्राटादिषु बहुसङ्ग्रहेष्वपीति॥ १७॥

वासायामित्यादि।—स्पष्टम्॥ १८॥

समाक्षिक इत्यादि।—फल्गुफलं काकोडुम्बरिकाफलम्। अयं योगोऽधोगे भवति॥ १९॥

मदयन्त्यङ्घ्रिज इत्यादि।—मदयन्ती मल्लिकाभेदः, तस्या मूलम्॥ २०॥

अतसीत्यादि।—वटावरोहत्वगिति—वटावरोहस्य त्वक्। एतत् सर्वं पिष्ट्वा अम्भसा पेयम्॥ २१॥

क्षीरप्रयोगार्हकालः।—

कषाययोगैर्विविधैर्दीप्तेऽग्नौ निर्जिते कफे।

रक्तपित्तं न चेच्छाम्येत् तत्र वातोल्बणे पयः॥ २२॥

क्षीरप्रयोगविधिः पञ्चमूलीक्षीरञ्च।—

छागं पयोऽथवा गव्यं शृतं पञ्चगुणे जले।

अभ्यस्येत् ससिताक्षौद्रं पञ्चमूलीशृतं पयः॥ २३॥

द्राक्षाक्षीरादि-षड्विधक्षीरम्।—

द्राक्षया पर्णिनीभिर्वा बलया मधुकेन वा।

श्वदंष्ट्रया शतावर्य्या रक्तजित् साधितं पयः॥ २४॥

उडुम्बरादि-पञ्चविधचूर्णम्।—

पक्वोडुम्बरकाश्मर्य्य-पथ्याखर्जूरगोस्तनाः।

मधुना घ्नन्ति संलीढा रक्तपित्तं पृथक् पृथक्॥ २५॥

---

क्षीरपानविषयमाह, कषाययोगैरित्यादि वाग्भटस्य।—कषायाश्चूर्णकल्कादयः॥२२॥

छागमित्यादि।—पञ्चमूली स्वल्पा; क्षीरपाकविधानेन पञ्चमूलीसाधितं पयः, अत्रापि ससिताक्षौद्रमिति योज्यम्; उक्तं हि वाग्भटे—"पञ्चमूलेन लघुना शृतञ्च ससितामधु" (चि० २ अ०) इति॥ २३॥

द्राक्षयेत्यादि।—एते षड्योगाः। पर्णिनीभिरिति—शालपर्णी-पृश्निपर्णी-मुद्गपर्णी-माषपर्णीभिरिति, एवं सर्वत्र बहुवचनान्ते, द्विवचनान्ते त्वाद्ये द्वे। एते योगा विशेषेण मूत्रमार्गगे रक्तपित्ते ज्ञेयाः, तथा घृतस्य शर्करायाश्च प्रक्षेपोऽत्र बोध्यः; यदुक्तं वाग्भटे—"जीवकर्षभकद्राक्षा-बलामधुकगोक्षुरैः। पृथक् पृथक् शृतं क्षीरं सघृतं सितयाऽपि वा॥ गोकण्टकाभीरुशृतं पर्णिनीभिस्तथा पयः। हन्त्याशु सरुजं रक्तं विशेषान्मूत्रमार्गगम्॥" (चि० २ अ०) इति। एवञ्च "सजीवकं सर्षभकम्" (चि० रक्तपि०) इत्यादि चरकेणाप्युक्तम्॥ २४॥

पक्वोडुम्बरेत्यादि।—उडुम्बरादीनां फलानि पक्वानि, ततस्तेषां चूर्णानां मधुना लेहः। काश्मर्य्यं गाम्भारीफलम्। खर्जूरं पिण्डखर्जूरम्। गोस्तना द्राक्षा। मधुनः दैवादप्राप्तौ अनर्हत्वे वा सर्वत्र शार्करं जलं वङ्गसेनरसं कदल्यादिकुसुमसम्भवं वा ग्राह्यमिति। नासाप्रवृत्तरुधिरेऽपि पक्वोडुम्बरफलं मधुना गुडेन च दृश्यते; उक्तं हि विन्दुसारे—"उडुम्बराणि पक्वानि गुडेन मधुनाऽपि वा। उपयुक्तानि निघ्नन्ति नासारक्तं नृणां ध्रुवम्॥" इति॥ २५॥

ऊर्द्धगे शाखोटकप्रयोगः।—

भद्रशाखोटकत्वग्रसविन्दुद्वितययुतो घृतद्विगुणः।
भूनिम्बकल्क ऊर्द्धगपित्तास्रकासश्वासघ्नः॥ २६॥

खादिरपुष्पादि-चतुर्विधचूर्णम्।—

खदिरस्य प्रियङ्गूणां कोविदारस्य शाल्मलेः।
पुष्पचूर्णन्तु मधुना लीढ्वा चारोग्यमश्नुते॥ २७॥

अभयाचूर्णम्।—

अभया मधुसंयुक्ता पाचनी दीपनी मता।
श्लेष्माणं रक्तपित्तञ्च हन्ति शूलातिसारनुत्॥ २८॥

वासाभाविते अभयापिप्पलीचूर्णे।—

वासकस्वरसे पथ्या सप्तधा परिभाविता।
कृष्णा वा मधुना लीढ़ा रक्तपित्तं द्रुतं जयेत्॥
भावनायां द्रवो देयः सम्यगार्द्रत्वकारकः॥ २९॥

एलादिगुडिका।—

एलापत्रत्वचोऽर्द्धाचाः पिप्पल्यर्द्धपलं तथा।

---

भद्रेत्यादि।—भद्रस्तरुणः॥ २६॥

खदिरस्येत्यादि चरकस्य।—चरके तु—"पुष्पचूर्णानि मधुना लिह्याद्वा रक्तपित्तवान्" (चि० रक्तपि०) इति पाठः; टीकाकारोऽपि चूर्णानि इत्यस्य रक्तपित्तवानिति विशेषणं नोपपद्यते इति कृत्वा पुरुषविशेषणत्वमाह। सङ्ग्रहकारैश्च "पुष्पचूर्णानि मधुना लीढ्वा चारोग्यमश्नुते" इति प्रतिसंस्कृत्य लिखितम्। अयञ्च पुष्पचूर्णलेहो व्यस्तः, सर्वत्र विभक्त्यन्तत्वेन निर्देशादिति वृन्दटिप्पनी, किन्तु चरकटीकाकृद्भिर्न व्याख्यातोऽयमर्थः॥ २७॥

अभयेत्यादि।—अयं योगो यद्यपि पक्तोड्स्वरकाश्मर्य्यत्यादियोगमध्ये पठित एव तथाऽपि फलविशेषकथनार्थमिह पुनरुक्तः॥ २८॥

वासकस्वरसे इत्यादि।—कृष्णा च वासकस्वरसे भावितेति योज्यं, भावना च सप्ताहम्; उक्तं हि चन्द्राटे—"दिवा दिवाऽऽतपे शुष्कं रात्रौ रात्रौ च वासयेत्। शुष्कं चूर्णीकृतं द्रव्यं सप्ताहं भावनाविधिः॥ द्रवेण यावता द्रव्यमेकीभूयार्द्रतां व्रजेत्। तावत् प्रमाणं निर्दिष्टं भिषग्भिर्भावनाविधौ॥" इति॥ २९॥

एलेत्यादि चतश्चीणे चरकस्य।—अर्द्धाचा इति—प्रत्येकं कर्षार्द्धमानाः, एवं

सितामधुकखर्जूर-मृद्वीकाश्च पलोन्मिताः ॥ ३० ॥
सञ्चूर्ण्य मधुना युक्त्या गुड़िकाः कारयेद्भिषक्।
अक्षमात्रां ततश्चैकां भक्षयेत्तु दिने दिने ॥ ३१ ॥
कासं श्वासं ज्वरं हिक्कां छर्दिं मूर्च्छां मदं भ्रमम्।
रक्तनिष्ठीवनं तृष्णां पार्श्वशूलमरोचकम् ॥ ३२ ॥
शोथप्लीहाढ्यवातांश्च स्वरभेदं क्षतक्षयम्।
गुड़िका तर्पणी वृष्या रक्तपित्तञ्च नाशयेत् ॥ ३३ ॥

रक्तगन्धिनिश्वासादौ कृष्णजीरकप्रयोगः।—

लोहगन्धिनि निश्वासे चोद्गारे रक्तगन्धिनि।
पृथ्वीकां शाणमात्रान्तु खादेद्द्विगुणशर्कराम् ॥ ३४ ॥

नासास्रुतरक्ते आमलकीप्रलेपः।—

नासाप्रवृत्तरुधिरं घृतभृष्टं सुश्लक्ष्णपिष्टमामलकम्।
सेतुरिव तोयवेगं रुणद्धि मूर्द्ध्नि प्रलेपेन ॥ ३५ ॥

नासास्रुतरक्ते योगपञ्चकम्।—

घ्राणप्रवृत्ते जलमाशु देयं सशर्करं नासिकया पयो वा।
द्राक्षारसं क्षीरघृतं पिबेद्वा सशर्करञ्चेक्षुरसं हितं वा ॥ ३६ ॥

---

सितादयश्च प्रत्येकं पलोन्मिताः। युक्त्या इति—यावता मधुना गुड़िका भवति तावन्मानं मधु देयम्। आढ्यवातं वातरक्तम्, ऊरुस्तम्भमित्यन्ये ॥ ३०—३३ ॥

लोहेत्यादि।—पृथ्वीकां शाणमात्रामिति—पृथ्वीका कृष्णजीरकं, न तु सूक्ष्मैला, टीकाकृद्भिर्व्याख्यातत्वात्। शाणो माषचतुष्टयम्। कृष्णजीरकस्य तीक्ष्णत्वे उष्णत्वेऽपि द्विगुणशर्करायोगात् प्रभावाद्वा पित्तहन्तृत्वम् ॥ ३४ ॥

नासेत्यादि।—आमलकं घृते भृष्टा काञ्जिके पिष्टा शिरसि लेपो देयः ॥ ३५ ॥

घ्राणप्रवृत्ते इत्यादि सुश्रुतस्य।—जलादयः सशर्कराः पञ्च नस्ययोगा इति गयदासः, तथा डल्लनोऽपि। 'घ्राणप्रवृत्ते सशर्करं पानीयं, पयोऽपि सशर्करं, तथा द्राक्षारसमपि सशर्करं नासिकया पिबेत्। तथा क्षीरघृतं क्षीरमथनोद्भूतघृतं, तच्च सशर्करं नासिकया पिबेत्; एवमिक्षुरसमपि नासिकया पिबेत्। वृन्दटिप्पन्यान्तु केवलद्राक्षारसस्य नस्यमिक्षुरसस्य च नस्यमित्युक्तम्, इदमपि युक्तम्; यदाह चरकः,

नासास्रुतरक्ते योगचतुष्कम्।—

नस्यं दाड़िमपुष्पोत्थो रसो दूर्वाभवोऽथवा।
आम्रास्थिजः पलाण्डोर्वा नासिकास्रुतरक्तजित्॥ ३७॥

मेढ्रस्रुतरक्ते उत्तरवस्तिः तृणपञ्चकक्षीरञ्च।—

मेढ्रगेऽतिप्रवृत्ते तु वस्तिरुत्तरसंज्ञितः।
शृतं क्षीरं पिबेद्वाऽपि पञ्चमूल्या तृणाह्वया॥ ३८॥

दूर्वाद्यं घृतम्।—

दूर्वा सोत्पलकिञ्जल्का मञ्जिष्ठा सैलवालुका।
सिता शीतमुशीरञ्च मुस्तं चन्दनपद्मकम्॥ ३९॥
विपचेत् कार्षिकैरेतैः सर्पिराजं सुखाग्निना।
तण्डुलाम्बु त्वजाक्षीरं दत्त्वा चैव चतुर्गुणम्॥ ४०॥
तत्पानं वमतो रक्तं नावनं नासिकागते।
कर्णाभ्यां यस्य गच्छेत्तु तस्य कर्णौ प्रपूरयेत्॥ ४१॥

—"द्राक्षारसस्येक्षुरसस्य नस्यं क्षीरस्य दूर्वास्वरसस्य चैव" (चि० रक्तपि०) इति। चक्रस्तु नासिकया इत्यत्र "नस्तकयोः" इति पठित्वा नासापुटयोरिति विवृतवान्। केचित्तु "मूर्ध्नि प्रलेपेन" इत्यतो मूर्ध्नि इति पदमनुवृत्य अत्र मूर्ध्नि नस्यं देयमित्यर्थमाहुः, तन्न; नासाप्रवृत्तरुधिरमित्यादि चरकवचनं, घ्राणप्रवृत्ते इत्यादि सौश्रुतं, तस्मात् दुरन्वयः। हितं वेत्यत्र "हिमं वा" इति पाठोऽपि ज्ञेयः॥ ३६॥

नस्यमित्यादि चत्वारो योगाः।—चरकेऽप्युक्तं—"द्राक्षारसस्येक्षुरसस्य नस्यं क्षीरस्य दूर्वास्वरसस्य चैव। यवासमूलानि पलाण्डुमूलं नस्यं तथा दाडिमपुष्पतोयैः॥" (चि० रक्तपि०) इति। एवं वाग्भटेऽप्युक्तम्। केचित्तु—"रसो दाड़िमपुष्पस्य दूर्वारससमन्विते" इति तन्त्रान्तरदर्शनादत्रापि दूर्वारस-दाड़िमरसाभ्यामेक एव योग इत्याहुः॥ ३७॥

मेढ्रग इत्यादि।—पञ्चमूल्या तृणाह्वयेति—तृणपञ्चमूल्या; यदुक्तं सुश्रुते—"कुशकाशनलेक्षुदर्भाः" (सू० ३८ अ०) इति। अत्र दर्भः "उलुघासः"। चरके तु—"शरेक्षुकाशदर्भाणां शालीनां मूलमेव च" (चि० अभयामलकी०) इति। उभयमपि प्रमाणम्॥ ३८॥

दूर्वेत्यादि।—दूर्वाघृते शीतं श्वेतचन्दनमिति वृन्दः। अन्ये तु बहुवारलचं रसाञ्जनं

चक्षुःस्राविणि रक्ते तु पूरयेत् तेन चक्षुषी।
मेढ्रपायुप्रवृत्ते तु वस्तिकर्मसु तद्धितम्॥
रोमकूपप्रवृत्ते तु तदभ्यङ्गे प्रयोजयेत्॥ ४२॥

शतावरीघृतम्।—

शतावरी दाड़िमतिन्तिड़ीकं
काकोलिमेदे मधुकं विदारीम्।
पिष्ट्वा च मूलं फलपूरकस्य
घृतं पचेत् क्षीरचतुर्गुणं ज्ञः॥
कासज्वरानाहविबन्धशूलं
तद्रक्तपित्तं घृतमाशु हन्यात्॥ ४३॥

बृहच्छतावरीघृतम्।—

शतावर्य्यास्तु मूलानां रसप्रस्थद्वयं मतम्।
तत्समञ्च भवेत् क्षीरं घृतप्रस्थं विपाचयेत्॥ ४४॥
जीवकर्षभकौ मेदा महामेदा तथैव च।
काकोली क्षीरकाकोली मृद्वीका मधुकं तथा॥ ४५॥
मुद्गपर्णी माषपर्णी विदारी रक्तचन्दनम्।
शर्करामधुसंयुक्तं सिद्धं विस्रावयेद्भिषक्॥ ४६॥
रक्तपित्तविकारेषु वातरक्तगदेषु च।
क्षीणशुक्रेषु दातव्यं वाजीकरणमुत्तमम्॥ ४७॥
अङ्गदाहं शिरोदाहं ज्वरं पित्तसमुद्भवम्।

---

मेत्याहुः; तयाणामेव रत्नमालादौ शीतसंज्ञकत्वेनोक्तत्वात; व्यवहारस्तु प्रायः श्वेतचन्दनेनेति। तण्डुलाम्बु लजाक्षीरञ्च प्रत्येकं चतुर्गुणं,दत्त्वा चेवेति चकारादित्याहुः॥३९—४२॥

शतावरीत्यादि चरकस्य।—केचिदत्र दाड़िमफलम् शौत्तरापथिकमित्याहुः। तिन्तिड़ीकं महार्द्रकम्। काकोलीयुक्ते मेदे काकोलीमेदे, मध्यपदलोपी समासः; किंवा काकोलीशब्दः प्रथमैकवचनान्तस्त्रीलिङ्गशब्दः, मेदे इति मेदाद्वयं,तन्त्रान्तरप्रमाणात्; उक्तं हि—"काकोली मधुकं मेदे तिन्तिड़ीकं सदाड़िमम्। शतावरीं विदारीञ्च बीजपूरजटान्विताम्॥ पिष्ट्वा चतुर्गुणे तोये पक्वमाज्यं ज्वरापहम्॥" इति॥ ४३॥

योनिशूलञ्च दाहञ्च मूत्रकृच्छ्रञ्च पैत्तिकम् ॥ ४८ ॥
एतान् रोगान् निहन्त्याशु छिन्नाभ्राणीव मारुतः।
शतावरीसर्पिरिदं बलवर्णाग्निवर्द्धनम् ॥ ४९ ॥
स्नेहपादः स्मृतः कल्कः कल्कवन्मधुशर्करे।
इति वाक्यबलात् स्नेहे प्रक्षेप्यं पादिकं भवेत् ॥ ५० ॥

वासाद्यं घृतम्।—

वासां सशाखां सपलाशमूलां
कृत्वा कषायं कुसुमानि चास्याः।
प्रदाय कल्कं विपचेत् घृतं तत्
सक्षौद्रमाश्वेव निहन्ति रक्तम् ॥ ५१ ॥

पुष्पकल्कस्य परिमाणनिर्देशः।—

शणस्य कोविदारस्य वृषस्य ककुभस्य च।
कल्काढ्यत्वात् पुष्पकल्कं प्रस्थे पलचतुष्टयम् ॥ ५२ ॥

---

शतावर्य्या इत्यादि।—वृहच्छतावरीघृते शर्करामधुसंयुक्तमिति—सिद्धशीते मधुशर्करयोर्मिलित्वा पादिकः प्रक्षेपः, अत एवाह स्नेहपाद इत्यादि ॥ ४४—५० ॥

वासामित्यादि चरकस्य।—अत्रार्द्राया विधानात् क्वाथविधाने न द्वैगुण्यम्; "नित्यमार्द्रा पयोक्तव्या न तासां द्विगुणो भवेत्" इति वचनात्। अत्राष्टगुणं जलं दत्त्वा अष्टांशशेषः कषायः कार्य्यः; उक्तं हि वाग्भटे—"समूलमस्तकं पिष्टं वृषमष्टगुणेऽम्भसि। पक्त्वाऽष्टांशावशेषेण घृतं तेन विपाचयेत् ॥ पुष्पगर्भञ्च तच्छीतं सक्षौद्रं पित्तशोणितम् ॥" (चि० २ अ०) इत्यादि। अत्र वासापुष्पकल्कः, अतः प्रस्थेऽपि पलचतुष्टयं, "शणस्य कोविदारस्य वृषस्य" इति वक्ष्यमाणपरिभाषाबलात्। अत्रानिर्दिष्टप्रमाणत्वात् स्नेहस्य प्रस्थ एव पक्तव्यः; अत एवोक्तम्—"अनिर्दिष्टप्रमाणानां स्नेहानां प्रस्थ इष्यते" इति। यत् पुनः,—"स्नेहपाकविधौ यत्र प्रमाणं नेरितं क्वचित्। स्नेहस्य कुडवं तत्र पचेत् कल्कपलेन तु ॥" इति परिभाषया स्नेहकुडवपाकाभिधानं, तत्तु नस्यविषयं ज्ञेयम्। सक्षौद्रमिति "कल्कवन्मधुशर्करे" इति वचनेन घृतात् पादिकत्वं ज्ञेयम्। अन्ये तु—"कल्कवन्मधुशर्करे" इत्यतिदेशबलात् कल्कस्यात्र चतुष्पलत्वात् मधुनोऽपि चतुष्पलत्वमाहुः। अत्र केचिच्चरके—"कासं ज्वरं पित्तभवञ्च

कामदेवघृतम्।—

अश्वगन्धापलशतं तदर्द्धं गोक्षुरस्य च।
शतावरी विदारी च शालपर्णी बला तथा॥ ५३॥
अश्वत्थस्य च शुङ्गानि पद्मवीजं पुनर्नवा।
काश्मरीफलमेतत् तु माषवीजं तथैव च॥ ५४॥
पृथग्दश पलान् भागांश्चतुर्द्रोणेऽम्भसः पचेत्।
चतुर्भागावशेषन्तु कषायमवतारयेत्॥ ५५॥
मृद्वीका पद्मकं कुष्ठं पिप्पली रक्तचन्दनम्।
बालकं नागपुष्पञ्च आत्मगुप्ताफलं तथा॥ ५६॥
नीलोत्पलं शारिवे द्वे जीवनीयं विशेषतः।
पृथक् कर्षसमञ्चैव शर्करायाः पलद्वयम्॥ ५७॥
रसस्य पौण्ड्रकेक्षूणामाढ़कं तत्र दापयेत्।
चतुर्गुणेन पयसा घृतप्रस्थं विपाचयेत्॥ ५८॥
रक्तपित्तं क्षतक्षीणं कामलां वातशोणितम्।
हलीमकं तथा शोथं स्वरभेदं बलक्षयम्॥ ५९॥
अरोचकं मूत्रकृच्छ्रं पार्श्वशूलञ्च नाशयेत्।
एतत् राज्ञां प्रयोक्तव्यं बह्वन्तःपुरचारिणाम्॥ ६०॥
स्त्रीणाञ्चैवानपत्यानां दुर्बलानाञ्च देहिनाम्।
क्लीवानामल्पशुक्राणां जीर्णानामल्परेतसाम्॥ ६१॥
श्रेष्ठं बलकरं हृद्यं वृष्यं पेयं रसायनम्।
ओजस्तेजस्करञ्चैव आयुःप्राणविवर्द्धनम्॥ ६२॥

---

शूलं गुल्मं यकृत्प्लीहगदांश्च हन्ति" इति फलग्रहं पठन्ति। वाग्भटेऽप्युक्तं—"पित्त-गुल्मयक्ष्मक्षाम-कासहृद्रोगकामलाः। तिमिरज्वरवीसर्प-स्वरभेदांश्च नाशयेत॥" (चि० २ अ०) इति॥ ५१।५२॥

अश्वगन्धेत्यादि।—तदर्द्धमिति—गोक्षुरस्य पञ्चाशत् पलानि, शतावर्य्यादीनां बलान्तानाञ्च प्रत्येकं पञ्चाशत् पलानीत्यर्थः; अश्वत्थशुङ्गादीनाञ्च पञ्चानां पृथक् दश

संवर्द्धयति शुक्रञ्च पुरुषं दुर्बलेन्द्रियम्।
सर्वरोगविनिर्मुक्तस्तोयसिक्तो यथा द्रुमः॥
कामदेव इति ख्यातः सर्वर्त्तुषु च शस्यते॥ ६३॥

सप्तप्रस्थघृतम्।—

शतावरीपयोद्राक्षा-विदारीक्ष्वामलै रसैः।
सर्पिषा सह संयुक्तैः सप्तप्रस्थं पचेत् घृतम्॥ ६४॥
शर्करापादसंयुक्तं रक्तपित्तहरं पिबेत्।
उरःक्षते पित्तशूले चोष्णवातेऽप्यसृग्दरे॥
बल्यमूर्जस्करं वृष्यं क्षयहृद्रोगनाशनम्॥ ६५॥

खण्डकुष्माण्डकः।—

कुष्माण्डकात् पलशतं सुस्विन्नं निष्कुलीकृतम्।
पचेत् तप्ते घृतप्रस्थे शनैस्ताम्रमये दृढ़े॥ ६६॥
यदा मधुनिभः पाकस्तदा खण्डशतं न्यसेत्।
कुष्माण्डपीड़नात् तोयेनाढ़केन पुनः पचेत्॥ ६७॥
युक्तसर्पिर्यदा पश्येत् तदा सिद्धेऽत्र निक्षिपेत्।
पिप्पलीशृङ्गवेराभ्यां द्वे पले जीरकस्य च॥ ६८॥
त्वगेलापत्रमरिच-धान्यकानां पलार्द्धकम्।

---

पलानि, ततो मिलित्वा पलशतचतुष्टये क्वाथ्ये प्रतिशतं जलद्रोणो देयः, "तुलाद्रव्ये जल-द्रोणः" इत्युक्तेः। नागपुष्पं नागकेशरम्। आत्मगुप्तायाः शूकशिम्ब्याः फलम्। जीवनीय-मिति—जीवनीयदशकम्। शर्करान्तः कल्कः। तेजस्करमुत्साहवर्द्धकम्॥ ५३—६३॥

शतावरीत्यादि।—शतावर्य्यादीनां षण्णां मिलित्वा रसप्रस्थाः षट्, घृतस्यैकः प्रस्थ इति सप्त प्रस्थाः॥ ६४।६५॥

कुष्माण्डकादित्यादि।—निष्कुलीकृतं निस्त्वगस्थीकृतम्। किञ्चित जलं दत्त्वा उत्स्विद्य, क्षौमे निष्पीड्य, आतपे मनाक् संशोष्य, पिष्ट्वा च पलशतं गृहीत्वा पक्तव्यम्। पिप्पलीशृङ्गवेराभ्यां द्वे पले जीरकस्य चेति—कणाशुण्ठ्योः प्रत्येकं पलद्वयं, जीरकस्य च द्वे पले; तन्त्रान्तरसम्मतञ्चैतत्; तद्यथा—"द्विपलांशैः कणाशुण्ठी-जीरकैरव-चूर्णितैः" इति। वैद्यप्रसारकेऽप्येवमेवोक्तम्; व्यवहारोऽपीत्थमेव। अन्ये तु—पलार्द्धक-

न्यस्येत् चूर्णीकृतं तत्र दर्व्या सङ्घट्टयेत् पुनः ॥ ६९ ॥
तत् पक्वं स्थापयेद्भाण्डे दत्त्वा क्षौद्रं घृतार्द्धकम्।
तत् यथाऽग्निबलं खादेत् रक्तपित्ती क्षतक्षयी ॥ ७० ॥
कासश्वासतमश्छर्दि-तृष्णाज्वरनिपीड़ितः।
वृष्यं पुनर्नवकरं बलवर्णप्रसाधनम् ॥ ७१ ॥
उरःसन्धानकरणं बृंहणं स्वरवर्द्धनम्।
अश्विभ्यां निर्मितं सिद्धं कुष्माण्डकरसायनम् ॥ ७२ ॥
खण्डामलकमानानु-सारात् कुष्माण्डकद्रवात्।
पात्रं पाकाय दातव्यं यावान् वाऽत्र रसो भवेत् ॥
अत्रापि मुद्रया पाको निस्त्वचं निष्कुलीकृतम् ॥ ७३ ॥

वासाखण्डकुष्माण्डकः।—

पञ्चाशच्च पलं स्विन्न-कुष्माण्डात् प्रस्थमाज्यतः।

---

मिति परेण सम्बन्धात् जीरकस्य पलार्द्धमित्याहुः; तन्न, तन्त्रान्तरविरोधात्। त्वगेलादीनाञ्च पञ्चानां प्रत्येकं पलार्द्धम्; आयुर्वेदसारेऽप्युक्तं—"कुष्माण्डकानां रूढ़ानां स्विन्नं शतपलं पचेत्। प्रतप्ते हविषः प्रस्थे मधुवर्णेऽत्र वीक्षिते॥ खण्डाच्छतं कणाऽजाज्यो-र्द्विपलं नागरादपि। धान्योषणं त्रिगन्धञ्च पृथगर्द्धपलांशिकम्॥ घृतार्द्धमाक्षिकोपेतं तत् खादेद्रक्तपित्तजित्॥" इति। घृतार्द्धकमिति—प्रस्थार्द्धमानमित्यर्थः। खण्डामलक-मानानुसारादित्यादि—खण्डामलके कुष्माण्डतुलार्द्धे कुष्माण्डरसामलकरसयोः प्रत्येकं प्रस्थ इत्युक्तं, तेन कुष्माण्डशतपले पात्रमिति—द्वैगुण्येन प्रस्थचतुष्टयं दातव्य-मित्यर्थः। पक्षान्तरमाह, यावान् वाऽत्र रसो भवेत् इति—स्विन्नकुष्माण्डस्याति-पीड़नेन यावान् रसो भवति तावतैव पाक इत्यर्थः, व्यवहारोऽप्यनेनैव, युक्तश्चायं पक्षः; उक्तं हि तन्त्रान्तरे—"वृद्धं पुरातनञ्चापि कुष्माण्डं कठिनं दृढ़म्। त्वक्-शिराभ्यां विनिर्मुक्तमन्तर्बीजैर्विवर्जितम्॥ खिन्नं सुपिष्टं दृषदि वस्त्रेणैव प्रपीड़ितम्। विशुष्कमातपे किञ्चित् ग्राह्यं तत् तुलया धृतम्॥ औडुम्बरकटाहे तु पचेत् प्रस्थे च सर्पिषः। कृत्वा क्षौद्रनिभं तस्मिन् क्षिपेत् खण्डशतं भिषक्॥ कुष्माण्डपीड़नात्तोयं यत् तेन विपचेत् पुनः॥" इति। मुद्रया पाक इति—अङ्गुलिपीड़नकार्यं पिण्डं मुद्रा, तया पाको ज्ञेयः; एतच्चोपलक्षणं, तेनान्यदपि पक्वलक्षणं ज्ञेयम् ॥६६—७३॥

पञ्चाशच्च पलमित्यादि।—अत्रापि पूर्ववत् स्विन्नसंस्कृतकुष्माण्डात् पञ्चाशत्

ग्राह्यं पलशतं खण्डं वासाक्वाथाढ़के पचेत् ॥ ७४ ॥
मुस्ताधात्रीशुभाभार्गी-त्रिसुगन्धैश्च कार्षिकैः ।
ऐलेयविश्वधन्याक-मरिचैश्च पलांशिकैः ॥ ७५ ॥
पिप्पलीकुड़वञ्चैव मधुमाणीं प्रदापयेत् ।
एतच्चूर्णीकृतं तत्र दर्व्या सङ्घट्टयेत् पुनः ॥ ७६ ॥
तत् यथाऽग्निबलं खादेत् रक्तपित्ती क्षतक्षयी ।
वृष्यं पुनर्नवकरं बलवर्णकरञ्च तत् ॥ ७७ ॥
कासं श्वासं क्षयं हिक्कां रक्तपित्तं हलीमकम् ।
हृद्रोगमम्लपित्तञ्च पीनसञ्च व्यपोहति ॥ ७८ ॥

वासाखण्डः ।—

तुलामादाय वासायाः पचेदष्टगुणे जले ।
तेन पादावशेषेण पाचयेदाढ़कं भिषक् ॥ ७९ ॥

---

पलम् । न चात्र खण्डकुष्माण्डवत् कुष्माण्डरसो ग्राह्यः, पाकार्थं वासाक्वाथस्यैवोक्तत्वात् । वासायाश्चतुःषष्टिः पलानि, जलस्यापि चतुःषष्टिः शरावाः ; क्वाथ्यन्तु षोड़शशरावरूपमाढ़कम् । शुभा वंशलोचना । ऐलेयम् एलबालुकम् । मधुमाणीति—मधुनोऽष्टौ पलानि । अत्र केचित् माणिकायां द्वैगुण्यमिच्छन्ति, किन्तु—"माणिका कुड़वो वाऽपि या वा सङ्ख्या पलैः कृता । आर्द्रद्रव्ये द्रवे चैव न तत्र द्विगुणं विदुः ॥" इति वचनात्, तथा चारपाणिवचने "माणिकाऽष्टौ पलान्येव" इत्यवधारणादष्टावेव पलानि, न तद्द्वैगुण्यात् षोडश पलानीत्यर्थः । चरकेऽपि "पूर्णं शरावम्" (च० मदन० ) इत्यत्र पूर्णपदेन शरावे द्वैगुण्याभावः सूचितः, तथा हि, पूर्णपदं द्वैगुण्यप्रतिषेधपरम्, अन्यथा पूर्णपदं व्यर्थं स्यात् । चक्रस्तु "माणिका कुडवो वा" इति वचनस्य केनापि क्वचिदप्यलिखितत्वादनार्षत्वमाशङ्क्य माणिकायां द्वैगुण्यमिच्छन् चरकोक्तत्वगुनादिघृते माणिकया षोड़शपलत्वं व्याख्यातवान् ॥ ७४—७८ ॥

तुलामादायेत्यादि ।—अत्रार्द्रा वासा, एवं सर्वत्र, निम्बादिकमपि ; उक्तं हि—"वासानिम्बपटोलकेतकिबलाकुष्माण्डकेन्दीवरी-वर्षाभूकुटजाश्वगन्धसहिते द्वे पूतिगन्धाऽमृते । मांसं नागबलासहाचरपुरा हिङ्गार्द्रके नित्यशो ग्राह्यास्तत्क्षणमेव न

चूर्णानामाभयानाञ्च खण्डाच्छुद्धाच्छतं तथा।
द्वे पले पिप्पलीचूर्णात् सिद्धशीते च माक्षिकात्॥ ८० ॥
कुड़वं पलमानन्तु चातुर्जातं सुचूर्णितम्।
क्षिप्त्वा विलोड़ितं खादेत् रक्तपित्ती क्षतक्षयी॥
श्वासकासपरीतश्च यक्ष्मणा च प्रपीड़ितः॥ ८१ ॥

खण्डकाद्यो लौहः।—

शतावरी च्छिन्नरुहा वृषो मुण्डतिका बला।
तालमूली च गायत्री त्रिफलायास्त्वचस्तथा॥ ८२ ॥
भार्गी पुष्करमूलञ्च पृथक् पञ्च पलानि च।
जलद्रोणे विपक्तव्यमष्टभागावशेषितम्॥ ८३ ॥
दिव्यौषधिहतस्यापि माक्षिकेण हतस्य वा।
पलद्वादशकं देयं रुक्मलौहस्य चूर्णितम्॥ ८४ ॥
खण्डतुल्यं घृतं देयं पलषोड़शिकं बुधैः।

---

द्विगुणिता ये चेच्छुशाता घना:॥" इति। अष्टगुणे जले इति—शरावशते; नात्र द्वैगुण्यम्; "न द्वैगुण्यं तुलामाने पलोल्लेखागते तथा" इत्युक्तेः। पादशेषाश्च पञ्चविंशतिशरावाः। चूर्णानामाभयानामिति—हरीतकीचूर्णानामाढ़कं चतुःषष्टि-पलानीत्यर्थः; "प्रायो न पाकश्चूर्णानाम्" इति प्रायःशब्दात् पाकोऽप्यस्तीति सूचयति, तेन चूर्णानां पाकोऽपि न विरोधः। चातुर्जातं पलमानम् इति—प्रत्येकं पलमानं, निर्देशस्य मानप्रधानत्वात्॥ ७९—८१ ॥

खण्डकाद्यं लौहमाह, शतावरीत्यादि।—छिन्नरुहा गुड़ूची। वृषो वासकः। मुण्डतिका मुण्डीरी। गायत्री खदिरः। त्रिफलायास्त्वच इति—निरस्थित्रिफलाः। दिव्यौषधिर्मनःशिला, कणामूलं वा। माक्षिकं स्वर्णमाक्षिकम्। मनःशिलास्वर्ण-माक्षिकाभ्यां प्रत्येकं लिप्त्वा वा प्रलिप्य दग्ध्वा च लौहं मारणीयम्। खण्डतुल्य-मिति छेदः, तेन खण्डस्यापि द्वादश पलानि। केचित्तु रक्तपित्तहन्तृत्वात् खण्डस्य प्रचुरतरमेवाधिकरोतीति घृतपदेन सह खण्डतुल्यमिति योजयन्ति; तत्तु न सम्यक्, लौहयोगत्वादेव लौहप्राधान्येन तन्मानापकर्षस्यायुक्तत्वात्; रक्तपित्तप्रत्य-नीकत्वन्तु लौहस्य स्वरूपत एव, महाशक्तिकत्वात् विशेषतो रक्तपित्तहरं, तत्तु

पचेत् ताम्रमये पात्रे गुड़पाको यथा मतः ॥ ८५ ॥
प्रस्थार्द्धं मधुनो देयं शुभाऽश्मजतुकत्वचः ।
शृङ्गी विड़ङ्गं कृष्णा च शुण्ठ्यजाजी पलं पलम् ॥ ८६ ॥
त्रिफला धान्यकं पत्रं द्व्यक्षं मरिचकेशरम् ।
चूर्णं दत्त्वा सुमथितं स्निग्धे भाण्डे निधापयेत् ॥ ८७ ॥
यथाकालं प्रयुञ्जीत विड़ालपदकं ततः ।
गव्यक्षीरानुपानञ्च सेव्यं मांसरसं पयः ॥ ८८ ॥
गुरुवृष्यान्नपानानि स्निग्धं मांसादि वृंहणम् ।
रक्तपित्तं क्षयं कासं पक्तिशूलं विशेषतः ॥ ८९ ॥
वातरक्तं प्रमेहञ्च शीतपित्तं वमिं क्रिमीन् ।
श्वयथुं पाण्डुरोगञ्च कुष्ठं प्लीहोदरं तथा ॥ ९० ॥
आनाहं रक्तसंस्रावमम्लपित्तं निहन्ति च ।
आरोग्यं पुत्रदं श्रेष्ठं कामाग्निबलवर्द्धनम् ॥ ९१ ॥
चक्षुष्यं वृंहणं वृष्यं माङ्गल्यं प्रीतिवर्द्धनम् ।
श्रीकरं लाघवकरं खण्डकाद्यं प्रकीर्त्तितम् ॥ ९२ ॥
छागं पारावतं मांसं तित्तिरिः क्रकराः शशाः ।
कुरङ्गाः कृष्णसाराश्च तेषां मांसानि योजयेत् ॥ ९३ ॥
नारिकेलपयःपानं सुनिषण्णकवास्तुकम् ।
शुष्कमूलकजीराख्यं पटोलं वृहतीफलम् ॥ ९४ ॥

---

द्व्यपुटादिभावितत्वेन महावीर्य्यकतयोपपन्नम्; व्यवहारश्च लौहसमतयैव। प्रस्थार्द्धमिति—षोड़श पलानि। शुभा वंशलोचना। अश्मजतुकं शिलाजतु। त्वक् गुड़त्वक्। शुभादीनां जीरकान्तानां प्रत्येकं पलं, त्रिफलादीनां केशरान्तानां प्रत्येकं द्व्यक्षं कर्षद्वयमित्यर्थः। विड़ालपदकं कर्षः। एतच्च पूर्वयुगपुरुषाभिप्रायेण मानमुक्तं, व्यवहारस्तु रक्तित्रिचतुःपञ्चकादारभ्य रक्तिद्वयवृद्ध्या माषचतुष्टयं यावत् वृद्धिः। गव्यक्षीरानुपानमिति—लौहादिवत् चतुःषष्टिगुणं, लौहान्तरे तथा दर्शनात्; उक्तं हि—"अनुपानं चतुःषष्टि-गुणं प्राहुः सदा बुधाः" इति। क्षीराख्य-

फलं वार्त्ताकु पक्वाम्रं खर्जूरं स्वादु दाड़िमम् ।
ककारपूर्वकं यच्च मांसञ्चानूपसम्भवम् ॥ ९५ ॥
वर्जनीयं विशेषेण खण्डकाद्यं प्रकुर्वता ।
लोहान्तरवदत्रापि पुटनादिक्रियेष्यते ॥ ९६ ॥

रक्तपित्ते रोगान्तरचिकित्सातिदेशः ।—

यच्च पित्तज्वरे प्रोक्तं बहिरन्तश्च भेषजम् ।
रक्तपित्ते हितं तच्च क्षीणक्षतहितञ्च यत् ॥ ९७ ॥

इति रक्तपित्त-चिकित्सा ।

---

## अथ यक्ष्म-चिकित्सा ।

पथ्यविधिः ।—

शालिषष्टिकगोधूम-यवमुद्गादयः शुभाः ।

---

मिति—नौराव्यशाकं नाडिशाकारं चम्पकादौ कौरीति ख्यातम् । ककारपूर्वकमिति—विहितान् कक्करकुरङ्गकपिसारान् विहाय यदन्यत् ककारपूर्वकं कपोतकर्कोटादि, तत् परित्याज्यम् । अन्तसारलौहवदत्रापि बालिमन्त्रादि ज्ञेयं मधुघृतसमानादिकञ्च । अत्र केचित् गन्धकाभ्ररसयोगं कुर्वन्ति, एतदनुकूलञ्च वचनं पठन्ति—"न रसेन विना लौहं गन्धकञ्चाभ्रकं विना" इति, तथा—"अपलेन विना लौहं यः करोति पुमानिह । उदरे तस्य किट्टानि जायन्ते नात्र संशयः ॥" इति । एतत्तु न व्यवहारसिद्धम् ; यतः रसाभ्रसहितलौहप्रयोगस्य प्रशस्तताप्रतिपादनार्थं तथा अभ्रकशून्यलौहे क्रिमिकिट्टादिव्यापच्छङ्कानिवृत्त्यर्थमभ्रकस्यावश्यं प्रक्षेपणार्थञ्च फलातिशयप्रतिपादनार्थमपि चतुःसमलौहे वाक्यद्वयमिदं पठितम् । पुमानिहेति, इहशब्दात् वचनद्वयमपि तत्रैव बोध्यं, नान्यत्र, अन्यथा सामान्यत एव परिभाषितमिदं स्यादिति ॥ ८२—९७ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां रक्तपित्त-चिकित्सा-विवृतिः ।

---

यक्ष्मरूपेषु "पित्तास्य चागमः" इति रक्तपित्तानन्तरं राजयक्ष्मचिकित्सितमुच्यते, शालीत्यादि ।—शाल्यादिकं संवत्सरातिक्रान्तम् ; यदाह वाग्भटः,—"शालिषष्टिक-

मद्यानि जाङ्गलाः पक्षि-मृगाः शस्ता विशुष्यताम् ॥१॥
शुष्यतां क्षीणमांसानां कल्पितानि विधानवित्।
दद्यात् क्रव्यादमांसानि बृंहणानि विशेषतः ॥ २ ॥

अवस्थाविशेषे संशोधनोपदेशः।—

दोषाधिकानां वमनं शस्यते सविरेचनम्।
स्नेहस्वेदोपपन्नानां सस्नेहं यन्न कर्षणम् ॥ ३ ॥

संशोधनानन्तरं कर्त्तव्योपदेशः।—

शुद्धकोष्ठस्य युञ्जीत विधिं बृंहणदीपनम् ॥ ४ ॥

मलशुक्रयोः विशेषेण रक्षणोपदेशः।—

शुक्रायत्तं बलं पुंसां मलायत्तं हि जीवितम्।
तस्मात् यत्नेन संरक्षेत् यक्ष्मिणो मलरेतसी ॥ ५ ॥

---

गोधूम-यवमुद्गं समीषितम्" ( चि० ५ अ० ) इति। क्रव्यादमांसानीति—क्रव्यादा व्याघ्रगृध्रादयः, एषाञ्च मांसमतिशयेन मांसकरं भवति; उक्तं हि—"मांसेनोपचिताङ्गानां मांसं मांसकरं परम्" (च० चि० राजयक्ष्म०); एतच्च भक्ष्यच्छागादिमांसव्याजेन देयम्; उक्तं हि—"काकोलूकवृकद्वीपि-गवाश्वनकुलोरगम्। गृध्रभासखरोष्ट्रञ्च हितं छद्मोपसंहितम् ॥" (वा० चि० ५ अ०) इति। सुश्रुतेऽप्युक्तं—"काकानुलूकान् नकुलान् बिड़ालान् गण्डूपदान् व्यालबिलेशयाखून्। गृध्रांश्च दद्याद्विविधैः प्रकारैः ससैन्धवान् सर्षपतैलभृष्टान् ॥ देयानि मांसानि च जाङ्गलानि मुद्गाढ़कीसूपरसाश्च हृद्याः। खरोष्ट्रनागाश्वतराश्वजानि देयानि मांसानि सुकल्पितानि ॥ मांसोपदंशांश्च पिबेदरिष्टान् माध्वीकयुक्ता मदिराश्च सेव्याः ॥" ( उ० ४१ अ० ) इति। सुकल्पितानीति—सूदशास्त्रोक्तविधया उपकल्पितानि ॥ १।२ ॥

दोषाधिकानामित्यादि चरकस्य।—सस्नेहमीषत्स्नेहम्। यन्न कर्षणमित्यनेन वमनविरेचनयोरेव मृदुनोरबलापकर्षणयोः प्रयोगं दर्शयति ॥ ३।४ ॥

शुक्रेत्यादि वाग्भटस्य।—शुक्रस्य सर्वधातुसारत्वात् तदधीनं शक्तिलक्षणं बलम्। मलायत्तं हि जीवितमिति—यद्यपि सर्वेषामेव जीवितं मलाधीनं मलस्य शरीरस्तम्भकत्वात्, तथाऽपि विशेषाद्राजयक्ष्मिणो जीवितं मलाधीनम्; उक्तं हि—"तस्मिन् काले पचत्यग्निर्यदन्नं कोष्ठसंश्रितम्। मलीभवति तत् प्रायः कल्पते

षडङ्गयूषः।—

सपिप्पलीकं सयवं सकुलत्थं सनागरम्।
दाड़िमामलकोपेतं स्निग्धमाजरसं पिबेत्॥ ६॥
तेन षड् विनिवर्त्तन्ते विकाराः पीनसादयः।
रसे द्रव्याम्बु पेयावत् सूदशास्त्रवशादिह॥ ७॥

षडङ्गयूषे मांसस्य परिमाणनिर्देशः।—

पलानि द्वादश प्रस्थे घनेऽथ तनुके तु षट्।
मांसस्य वटकं कुर्य्यात् पलमच्छतरे रसे॥ ८॥

---

किञ्चिदोजसि॥ तस्मात् पुरीषं संरक्ष्यं विशेषाद्राजयक्ष्मिणः। सर्वधातुक्षयार्त्तस्य बलं ह्यस्य हि विड्बलम्॥" (च० चि० राजयक्ष्म०) इति॥ ५॥

सपिप्पलीकमित्यादि।—अत्र केचित् यवकुलत्थावन्यद्रव्यापेक्षया प्रचुरौ देयौ यूषयोनित्वात्; पिप्पली शुण्ठी च तावती देया, यावत्या कटुत्वमात्रं स्यात्; एवमम्लत्वार्थं दाड़िमामलकयोर्दानम्। एतत सर्वं पिप्पल्यादिद्रव्यापेक्षया द्विगुणमांसेन सह एकीकृत्याष्टगुणजले क्वथनीयं, तत् पादस्थं घृतेन संस्कृत्य उपयोज्यमिति। वृद्धवैद्यास्तु—पिप्पलीशुण्ठ्योः प्रत्येकं माषकचतुष्टयं, यवकुलत्थयोस्तु प्रत्येकं कर्षः, दाड़िमामलकयोरपि प्रत्येकं माषकचतुष्टयं ग्राह्यं, समुदितद्रव्यापेक्षया मांसं द्विगुणं ग्राह्यम्; सर्वमेकीकृत्याष्टगुणजले क्वथनीयं, तत् पादस्थं घृतेन संस्कृत्य उपयोज्यमित्याहुः। चक्रस्तु स्वमतमाह, रसे इत्यादि।—षडङ्गपरिभाषया द्रव्यं जलञ्च गृहीत्वा अर्द्धशृतं कार्य्यं, तेनार्द्धशृतक्वाथेन "पलानि द्वादश प्रस्थे" इत्यादि वक्ष्यमाणसूदशास्त्रोक्तपरिभाषानुसारेण परिमितं पिष्टा मांसं वटकीकृत्य पुनरपि पिष्टा पक्त्वा च यूषः कार्य्यः इति। व्यवहारस्तु पूर्वोक्तवृद्धोपदिष्ट एव ज्ञेयः। पीनसादय इत्यादिशब्दात् चरकोक्तानि शिरःशूलश्वासकासस्वरक्षयपार्श्वशूलानि बोध्यानि। रसे द्रव्याम्बु पेयावदित्यादौ पेयावदित्यनेन यथा क्वाथसाध्यपेयायां षडङ्गपरिभाषया द्रव्यजलयोर्व्यवस्था, तथा मांसरसेऽपीत्यर्थः॥६।७॥

मांसन्तु सूदशास्त्रोक्तवचनानुसारेण ग्राह्यमित्याह, पलानीत्यादि।—अस्यार्थः,—सर्वत्रापि पिष्टेति शेषः। प्रस्थे द्रवे यदि घनरसः कर्त्तव्यस्तदा मांसस्य द्वादश पलानि पिष्टा वटकं कुर्य्यात्; तथा प्रस्थे द्रवे यदि तनुकोऽच्छरसः कर्त्तव्यस्तदा मांसस्य षट् पलानि पिष्टा वटकं कुर्य्यात्; एवं प्रस्थे द्रवे यदि अच्छतरो रसः कर्त्तव्यस्तदा

षडङ्गः।—

धन्याकपिप्पलीविश्व-दशमूलीजलं पिबेत्।
पार्श्वशूलज्वरश्वास-पीनसादिनिवृत्तये ॥ ९ ॥

अश्वगन्धादिः।—

अश्वगन्धाऽमृताऽभीरु-दशमूलीबलावृषाः।
पुष्करातिविषे घ्नन्ति क्षयं क्षीररसाशिनः ॥ १० ॥

दशमूलादिः।—

दशमूलबलारास्ना-पुष्करसुरदारुनागरैः क्वथितम्।
पेयं पार्श्वांसशिरोरुक्क्षयकासादिशान्तये सलिलम् ॥ ११ ॥

ककुभादिमोदकः।—

ककुभत्वङ्नागबला-वानरीवीजानि चूर्णितं पयसि।
पक्वं मधुघृतयुक्तं ससितं यक्ष्मादिकासहरम् ॥ १२ ॥

पारावतमांसचूर्णादियोगचतुष्टयम्।—

पारावतकपिच्छाग-कुरङ्गाणां पृथक् पृथक्।
मांसचूर्णमजाक्षीरं पीतं यक्ष्महरं परम् ॥ १३ ॥

---

मांसस्य पलं पिष्ट्वा वटकं कुर्य्यादिति। षडङ्गयूषे पुनः षडङ्गपरिभाषानुसारेण प्रस्थमात्रं जलमर्द्धशृतं सत् प्रस्थार्द्धमेव भवति, तेन तत्र घनरसे मांसस्य षट् पलानि, तनुके पलत्रयम्, अच्छतरेऽर्द्धपलमिति ॥ ८ ॥

धन्याकपिप्पलीत्यादि।—वातकफोत्तरे योगोऽयम् ॥ ९ ॥

अश्वगन्धेत्यादि।—अभीरुः शतमूली। वृषो वासकः। क्वाथेनायं योगः। असमासनिर्देशादिह पुष्करातिविषयोः प्रक्षेप्यत्वमिति वृन्दटिप्पनी ॥ १० ॥

दशमूलबलेत्यादि।—स्पष्टम् ॥ ११ ॥

ककुभेत्यादि।—ककुभत्वक् अर्जुनवल्कलम्। नागबला गोरक्षतण्डुला, अस्या मूलं सर्वत्र बोध्यम्। वानरी शूकशिम्बी। एषां चूर्णं प्रत्येकमेकपलं, शर्करा पल १, दुग्धशराव २, सर्वमिदं पक्त्वा उत्कारिका कार्य्या, परिभर्जनार्थं घृतकर्ष २, सुशीते मधु किञ्चित् दत्त्वा भक्ष्यम् ॥ १२ ॥

पारावतेत्यादि।—स्पष्टम् ॥ १३ ॥

नागबला-काकजङ्घाप्रयोगौ।—

घृतकुसुमरसालीढं क्षयं क्षयं नयति गजबलामूलम्।
दुग्धेन केवलेन तु वायसजङ्घा निपीतेव॥ १४॥

कृष्णादिलेहाश्वगन्धादिलेहौ।—

कृष्णाद्राक्षासितालेहः क्षयहा क्षौद्रतैलवान्।
मधुसर्पिर्युतो वाऽश्व-गन्धाकृष्णासितोद्भवः॥ १५॥

नवनीतप्रयोगः घृतमधुप्रयोगश्च।—

शर्करामधुसंयुक्तं नवनीतं लिहन् क्षयी।
क्षीराशी लभते पुष्टिमतुल्ये चाज्यमाक्षिके॥ १६॥

सितोपलादिलेहः।—

सितोपलातुगाक्षीरी-पिप्पलीबहुलात्वचः।
अन्त्यादूर्ध्वं द्विगुणितं लेहयेत् क्षौद्रसर्पिषा॥ १७॥
चूर्णं वा प्राशयेदेतत् श्वासकासक्षयापहम्।
सुप्तजिह्वारोचकिनमल्पाग्निं पार्श्वशूलिनम्।
हस्तपादांसदाहेषु ज्वरे रक्ते तथोर्ध्वगे॥ १८॥

---

घृतेत्यादि।—कुसुमरसो मधु। गजबला नागबला, गोरक्षतण्डुलेति ख्यातम्। वायसजङ्घा काकजङ्घा॥ १४॥

कृष्णेत्यादि।—सितोद्भव इत्यन्तं योगद्वयं स्पष्टम्॥ १५॥

शर्करेत्यादि।—अतुल्ये चाज्यमाक्षिके इत्यपि योगान्तरम्, अत्रापि "लिहन् क्षयी क्षीराशी लभते पुष्टिम्" इति बोध्यम्॥ १६॥

सितोपलेत्यादि चरकस्य।—सितोपला शर्करा। तुगाक्षीरी वंशलोचना। बहुला एला। त्वक् गुडत्वक्। अन्त्यादूर्ध्वं द्विगुणितमिति—अन्त्यायास्त्वच एको भागः, एलाया द्वौ, पिप्पल्याश्चत्वारः, तुगाक्षीर्य्या अष्टौ, सितोपलायाः षोडशेत्यर्थः। यद्यप्यूर्ध्वशब्दोऽनागतमभिधत्ते, यथा—"अत ऊर्ध्वं प्रवक्ष्यामि यवागूर्विविधौषधाः" (च० सू० अपामार्गतण्डु०), तथाऽप्यत्र विवक्षावशादतीतमप्यभिधत्ते। चूर्णं वा प्राशयेदित्यनेन मधुघृतं विनाऽपि भक्षणं बोधयति॥ १७।१८॥

लवङ्गाद्यं चूर्णम्।—

लवङ्गकक्कोलमुशीरचन्दनं नतं सनीलोत्पलजीरकं समम्।
त्रुटिः सकृष्णाऽगुरुभृङ्गकेशरं कणा सविश्वा नलदं सहाम्बुदम्॥१९॥
अहीन्द्रजातीफलवंशलोचनाः सिताऽष्टभागं समसूक्ष्मचूर्णितम्।
सुरोचनं तर्पणमग्निदीपनं बलप्रदं वृष्यतमं त्रिदोषजित्॥ २०॥
उरोविबन्धं तमकं गलग्रहं सकासहिक्काऽरुचियक्ष्मपीनसम्।
ग्रहण्यतीसारभगन्दरार्बुदं प्रमेहगुल्मांश्च निहन्ति सज्वरान्॥२१॥

तालीशाद्यं चूर्णं मोदकश्च।—

तालीशपत्रं मरिचं नागरं पिप्पली शुभा।
यथोत्तरं भागवृद्ध्या त्वगेले चार्द्धभागिके॥ २२॥
पिप्पल्यष्टगुणा चात्र प्रदेया सितशर्करा।
श्वासकासारुचिहरं तच्चूर्णं दीपनं परम्॥ २३॥
हृत्पाण्डुग्रहणीरोग-प्लीहशोषज्वरापहम्।
छर्द्यतीसारशूलघ्नं मूढवातानुलोमनम्॥ २४॥
कल्पयेत् गुड़िकाञ्चैतच्चूर्णं पक्का सितोपलाम्।
गुड़िका ह्यग्निसंयोगाच्चूर्णाल्लघुतराः स्मृताः॥
पैत्तिके ग्राहयन्त्येके शुभया वंशलोचनाम्॥ २५॥

---

लवङ्गेत्यादि।—नतं तगरपादिका, तदभावे सियलीकीपरः। सनीलोत्पल-पत्रजीरकमिति पाठे—पत्रं तेजपत्रम्। त्रुटिः सूक्ष्मैला। भृङ्गं गुड़त्वक्। नलदं मांसी। सहाम्बुनेति पाठे—अम्बु बालकम्। अहीन्द्रोऽनन्तमूलम्। शर्करायाः एकभागापेक्षया अष्टौ भागाः। अन्ये तु मिलितचूर्णापेक्षयेत्याहुः। व्यवहारस्तु पूर्वेणैव॥ १९—२१॥

तालीशपत्रमित्यादि।—शुभेति पिप्पलीविशेषणं, न तु वंशलोचना, समानतन्त्रे हारीतादावदृष्टत्वात्, किन्तु सङ्ग्रहकाराः प्रबलपित्ते शुभायां वंशलोचना ग्राह्येति लिखन्ति। एतमेवार्थं कश्चिल्लिखति यथा—"तालीश-मरिच नागर-मागधिका-वंश-लोचनाः क्रमशः। वृद्धास्त्वगेलाऽर्द्धं कणायाः सिता भवेदष्टगुणा॥" इति। त्वगेले

शृङ्ग्यर्जुनाद्यचूर्णम्।—

शृङ्ग्यर्जुनाश्वगन्धानागबलापुष्कराभयाच्छिन्नरुहाः।
तालीशादिसमेता लेह्या मधुसर्पिर्भ्यां यक्ष्महराः॥२६॥

ताप्यादिचूर्णम्।—

मधुताप्यविडङ्गाश्म-जतुलौहघृताभयाः।
घ्नन्ति यक्ष्माणमत्युग्रं सेव्यमाना हिताशिना॥ २७॥

विन्ध्यवासियोगः।—

व्योषं शतावरी त्रीणि फलानि द्वे बले तथा।
सर्वामयहरो योगः सोऽयं लौहरजोऽन्वितः॥ २८॥
एष वक्षःक्षतं हन्ति कण्ठजांश्च गदांस्तथा।
राजयक्ष्माणमत्युग्रं बाहुस्तम्भमथार्दितम्॥ २९॥

---

चार्द्धभागिके इति—प्रथमभागापेक्षया लवङ्गलयोः प्रत्येकमर्द्धभागत्वम्। पिप्पल्यष्ट-गुणेति—पिप्पलीभागापेक्षया अष्टगुणा सितशर्करा। गुडिकापक्षे समं कालेन शर्करापाकं कुर्वन्ति वृद्धाः॥ २२—२५॥

शृङ्गीत्यादि।—छिन्नरुहा गुडूची। तालीशादिसमेता इत्यनेन तालीशादि-द्रव्यमात्रमनुकर्षति, न तु तदीक्तभागवृद्धिक्रममपि, यथा वक्ष्यमाणचैतसघृते "कल्याणकस्य चाङ्गेन" इत्युक्तेऽपि कल्याणघृतोक्तकल्कद्रव्यमात्रमिति, तेनात्र शृङ्ग्यादीनां समभागतया तालीशादयोऽपि समभागा एव ग्राह्याः॥ २६॥

मधुताप्येत्यादि।—मधुघृताभ्यां लेहः। लौहमत्रायश्चूर्णं पुटादिशोधितं, न तु लौहमगुरु रसायनत्वात्; "लौहमगुरु" इति वृन्दटिप्पनी। ताप्यं स्वर्णमाक्षिकं, तच्च अमृतसारवक्ष्यमाणविधिना शोधितं ग्राह्यम्। अश्मजतु शिलाजतु, तदपि वक्ष्यमाण-शिवागुडिकाविधिना शोधितं ग्राह्यम्। अयोरजश्चात्र मिलितेतरचूर्णसमम्। लौहचूर्णस्यात्र रसायनतया श्रेष्ठत्वात् महावीर्यत्वाच्च महाव्याधिप्रशमनहेतुत्वं युज्यते इति॥ २७॥

व्योषमित्यादि।—विन्ध्यवासियोगे त्रीणि फलानीति—त्रिफला। द्वे बले इति—नागबलाबले, न तु श्वेतपीतभेदात्। अत्र लौहचूर्णं रसायनतया श्रेष्ठत्वात् यौगिकत्वात् महावीर्यत्वाच्च मिलितव्योषादिचूर्णेन समं ग्राह्यम्, अत एव

रसेन्द्रगुड़िका।—

कर्षं शुद्धरसेन्द्रस्य स्वरसेन जयाऽऽर्द्रयोः।
शिलायां खल्लयेत् तावत् यावत् पिण्डं घनं ततः॥ ३०॥
जलकर्णाकाकमाची-रसाभ्यां भावयेत् पुनः।
सौगन्धिकपलं भृङ्ग-स्वरसेन विभावितम्॥ ३१॥
चूर्णितं रससंयुक्तमजाक्षीरपलद्वये।
खल्लितं घनपिण्डन्तु गुड़ीं स्विन्नकलायवत्॥ ३२॥
कृत्वाऽऽदौ शिवमभ्यर्च्य द्विजातीन् परितोष्य च।
जीर्णान्नो भक्षयेदेकां क्षीरमांसरसाशनः॥ ३३॥
सर्वरूपं क्षयं श्वासं रक्तपित्तमरोचकम्।
अपि वैद्यशतैस्त्यक्तमम्लपित्तं नियच्छति॥ ३४॥

एलादिमन्थः।—

एलाऽजमोदाऽऽमलकाभयाऽक्ष-गायत्रिनिम्बासनशालसारान्।
विड़ङ्गभल्लातकचित्रकांश्च कट्रत्रिकाम्भोदसुराष्ट्रकांश्च॥ ३५॥

---

व्योषादिपाठात् विच्छिद्य लौहरजोऽन्वित इति पठितम्। चूर्णयोग एवायं घृतमधुनोरश्रुतत्वात्। अन्ये तु—लेह एवायं घृतमधुभ्यां कर्त्तव्यः, लेहप्रकरण-विहितत्वादित्याहुः, युक्तञ्चैतत्॥ २८।२९॥

कर्षमित्यादि।—रसेन्द्रः पारदः, तस्य शोधनं वक्ष्यमाणक्षुधावतीगुड़िकायां वक्ष्य-माणविधिना कार्य्यम्; तदनु क्रमेण जयाया जयन्त्याः आर्द्रकस्य च स्वरसेन खल्ल-शिलायां सम्मर्द्य पिण्डाकारं कुर्य्यात्, तदनु जलकर्णा मोरटा तस्याः रसेन काकमाच्याश्च रसेनाप्लाव्य प्रत्येकं सप्तधा भावयेत्; ततः सौगन्धिकं भद्रतरगन्धकं, तदपि क्षुधावत्यां वक्ष्यमाणविधिना शोधितं पलपरिमितं पारदेन सह घर्षणीयं, तदनन्तरमजाक्षीरपलद्वये खल्लशिलास्थिते खल्लितं घनपिण्डतापन्ने तु स्विन्नकलायप्रमाणां गुड़िकां कुर्य्यात्, तदनु प्रत्यहमेकां गुड़िकां जीर्णान्ने भक्षयेत्; अनुपानञ्च दुग्धादिकमेव॥ ३०—३४॥

एलेत्यादि सुश्रुतस्य।—अजमोदा यमानी। अक्षं विभीतकम्। गायत्री खदिरः। असनः पीतशालः। गायत्र्यादीनां शालान्तानां चतुर्णां सारो ग्राह्यः।

पक्त्वा जले तेन पचेत्तु सर्पि-
स्तस्मिन् सुसिद्धे त्ववतारिते च।
त्रिंशत्पलान्यत्र सितोपलाया
दद्यात् तुगाक्षीरिपलानि षट् च ॥ ३६ ॥
प्रस्थे घृतस्य द्विगुणञ्च दद्यात्
क्षौद्रं ततो मन्थहतं निदध्यात्।
पलं पलं प्रातरतो लिहेच्च।
पश्चात् पिबेत् क्षीरमतन्द्रितश्च ॥ ३७ ॥
एतद्धि मेध्यं परमं पवित्रं चक्षुष्यमायुष्यतमं तथैव।
यक्ष्माणमाशु व्यपहन्ति शूलं पाण्ड्वामयञ्चापि भगन्दरञ्च ॥३८॥
न चात्र किञ्चित् परिवर्जनीयं रसायनञ्चैतदुपास्यमानम् ॥३९॥

स पर्गुडः।—

बला विदारी ह्रस्वा च पञ्चमूली पुनर्नवा।
पञ्चानां क्षीरिवृक्षाणां शुङ्गा मुष्ट्यंशिकाः पृथक् ॥ ४० ॥

---

सौराष्ट्रमा सुराष्ट्रजत। एलादीनां सौराष्ट्रान्तानां पृथगष्टौ पलानि गृह्यन्ते; जलं षोडशगुणं दत्त्वा षोड़शांशं स्थापयेत्; तेन क्वाथेन केवलेनैव घृतप्रस्थं पाचयेत्। घृतप्रस्थापेक्षया द्विगुणं मधु। मन्थो मन्थानदण्ड इत्याहुः। अन्ये तूक्तव्याख्यानुवादाय वाग्भटवचनं पठन्ति; यथा—"एलाऽजमोदात्रिफला-सौराष्ट्रीव्योषचित्रकान्। सारानरिष्टगायत्री-शालबीजकसम्भवान् ॥ भल्लातकं विड़ङ्गञ्च पृथगष्टपलोन्मितम्। सलिलैः षोड़शगुणैः षोड़शांशं स्थितं पचेत् ॥ पुनस्तेन घृतप्रस्थं सिद्धे चास्मिन् पलानि षट्। तुगाक्षीर्य्याः क्षिपेत् त्रिंशत् सिताया द्विगुणं मधु ॥ घृतात् त्रिजातात् त्रिपलं ततो लीढं खजाहतम्। पयोऽनुपानं तत् प्राह्णे रसायनमयन्त्रणम् ॥" (चि० ५ अ०) इत्यादि। एतद्दर्शनात् त्रिजातकमपि बोध्यं सौगन्ध्यार्थम्; अत्र तु न पठितं तद्व्यतिरेकेणापि व्याधिहन्तृत्वात्। अन्ये त्वाहुः, सुश्रुतोक्तयोगेऽस्मिन्नौदपाठात् त्रिजाताभावात् योगान्तरमेवेदम्; तथा घृतप्रस्थस्य साध्यत्वादेलादीनां सप्तदशानां मिलित्वा चतुःषष्टिपलानि, जलस्य तु चतुःषष्टिशरावाः, शेषाः षोड़श शरावा इति ॥ ३५—३९ ॥

बलेत्यादि।—अयं योगश्चरके क्षतक्षीणचिकित्सिते उक्तः। क्षीरिवृक्षाः प्लक्ष-

एषां कषाये द्विक्षीरे विदार्य्याजरसांशिके।
जीवनीयैः पचेत् कल्कैरक्षमात्रैर्घृताढ़कम ॥ ४१ ॥
सितापलानि पूते च शीते द्वात्रिंशदावपेत्।
गोधूमपिप्पलीवांशी-चूर्णं शृङ्गाटकस्य च ॥ ४२ ॥
समाक्षिकं कौड़विकं तत् सर्वं खजमूर्च्छितम्।
स्त्यानं सर्पिर्गुड़ान् कृत्वा भूर्जपत्रेण वेष्टयेत् ॥ ४३ ॥
तान् जग्ध्वा पलिकान् क्षीरं मद्यञ्चानुपिवेत् कफे।
शोषे कासे क्षतक्षीणे श्रमस्त्रीभारकर्षिते ॥ ४४ ॥
रक्तनिष्ठीवने तापे पीनसे चोरसि स्थिते।
शस्ताः पार्श्वशिरःशूले भेदे च स्वरवर्णयोः ॥ ४५ ॥
क्वाथ्ये त्रयोदशपले द्रव्यात्पलभयाज्जलम्।

---

वेतसोडुम्बराश्वत्थवटाः। शालाक्ये तु—वेतसस्थाने मधूकं निक्षिप्य पञ्च क्षीरिवृक्षा व्याख्याताः; यथा—"उडुम्बरो वटोऽश्वत्थो मधूकः प्लक्ष एव च। पञ्चैते क्षीरिणो वृक्षा अस्मिंस्तन्त्रे प्रकीर्त्तिताः॥" इति। अस्मिंस्तन्त्रे इति वचनेन शालाक्याधिकारव्यतिरिक्ते स्थाने पूर्ववृक्षा उक्ता युक्ताः। अन्ये तु—वेतसस्थाने कपीतनमाहुः, कपीतनो गर्दभाण्डः। शुङ्गा इति—अविकसितपत्रमुकुलम्। सुस्थांशिकाः पलमानाः। अत्र बलादिक्वाथ्ये त्रयोदशपले जलद्रोणो देयः, तस्य पादावशेषादष्टाविंशत्यधिकशतपलमानम्। द्विक्षीरे इति—द्विप्रकारं क्षीरं यत्रेति; तथा क्षीरद्वयञ्चात्र प्राधान्याद्गार्व्यं गव्यञ्च ग्राह्यम्। आजरसश्छागमांसरसः। एषां चतुर्णामपि द्रवाणां क्वाथसमत्वमेव साहचर्य्यादिति पञ्चगुणपाकः। क्षीरानुपानञ्च पित्ते ज्ञेयम्। उक्तार्थसंवादकतन्त्रान्तरं यथा—"पुनर्नवां बलां कृष्णां पञ्चमूलीं विदारिकाम्। उडुम्बरवटाश्वत्थप्लक्षवेतसशुङ्गकान्॥ पलिकांशान् जलद्रोणे पक्त्वा पादावशेषिते। पादांशैश्छागगोक्षीर-विदार्य्याः स्वरसैः पृथक्॥ कर्षांशैर्जीवनीयैश्च कल्कैराज्याढ़कं पचेत्। कृष्णागोधूमशृङ्गाट-वांशीक्षौद्राञ्जलिं पृथक्॥ सिद्धे प्रस्थौ सितायाश्च दत्त्वा खादेत् खजाहतम्। एतत् गुड़ीकृतं सर्पिर्घटे भूर्जान्विते स्थितम्॥ अनुपानं पिबेत् क्षीरं पित्ते मद्यं कफे हितम्। क्षतक्षयास्रपित्तघ्नं ज्वरशोषप्रणाशनम्॥" इति। अत्र पादांशैरिति—पादस्थक्वाथसमभागैरिति। चक्रस्त्वाह—"क्वाथ्ये त्रयोदशपले द्रव्यात्पलभया-

अष्टगुणं क्वाथसमौ विदार्य्याजरसौ पृथक् ॥
केचित् यथोक्तक्वाथ्ये तु क्वाथं घृतसमं जगुः ॥ ४६ ॥

च्यवनप्राशः ।—

विल्वाग्निमन्थश्योणाक-काश्मर्य्यः पाटला बला ।
पर्ण्यश्चतस्रः पिप्पल्यः श्वदंष्ट्रा बृहतीद्वयम् ॥ ४७ ॥
शृङ्गी तामलकी द्राक्षा जीवन्ती पुष्करागुरु ।
अभया सामृता ऋद्धिर्जीवकर्षभकौ शटी ॥ ४८ ॥

---

ज्जलम । अष्टगुणं क्वाथसमौ विदार्य्याजरसौ पृथक् ॥" इति । केचित् यथोक्तक्वाथ्ये तु क्वाथं घृतसम जगुः इति, अस्यार्थः,—त्रयोदशपले क्वाथ्येऽष्टगुणं जलं त्रयोदश-शरावपरिमितं भवति, तस्य तु पादशेषात् सपादशरावत्रयं क्वाथं वदन्ति, क्वाथसमस्य विदारीरसस्य छागमांसरसस्य, क्षीरञ्च क्वाथापेक्षया द्विगुणमिति सार्द्धषट्शरावाः ; एवं घृताढके पक्तव्ये त्रिंशत्पलाधिकं द्रवपलशतमिह भवति ; एवञ्च सति द्रवाल्पत्वं स्यादिति भयात् केचिदत्र यथोक्ते एव क्वाथ्ये त्रयोदशपलरूपे तथा पानीयं देयं यथा पादशेषात् क्वाथो घृतसमः स्यात् ; तेनात्र त्रयोदशपलेऽपि क्वाथ्ये जलद्रोणं दत्त्वा पादावशिष्टक्वाथस्य घृतसमत्वं कल्पनीयमिति जगुरुक्तवन्तः । अस्मिन् पक्षे—क्षीरं द्विगुणं दत्त्वा विदारीमांसरसौ च मिलित्वा घृतसमाविति चतुर्गुणद्रवेण पाक उत्सर्गसिद्धो भवति, चतुर्गुणद्रवेण तु स्नेहपाकोत्सर्गत्वात् । जतूकर्णेनापि क्वाथ्य-मानमनियतमेवोक्तं, क्वाथस्तु स्नेहसम एव, "पञ्च प्रस्थान् यत्र स्युः" इत्युक्तेः ; तथा च—"इक्षीरं पञ्चमूलञ्च वला विदारीं वटादिशुङ्गांश्च । निःक्वाथ्य द्विक्षीरे छाग-विदारीरसे च समे ॥ जीवनीयगणकल्कैः पक्वा घृताढकम्" इत्यादि । अन्ये तु—"द्रव्यमापोथितं क्वाथ्यं दत्त्वा षोड़शिकं जलम् । पादावशेषः कर्त्तव्य एष क्वाथविधिः स्मृतः ॥" इति क्वाथ्यपरिभाषानुसारेण क्वाथ्ये षोड़शगुणं जलं दीयमानं षड्विंशति-शरावं भवति, पादशेषाच्च सार्द्धषट्शरावक्वाथो भवति । द्विक्षीरे इति क्वाथापेक्षया क्षीरस्य द्वैगुण्यात् त्रयोदश शरावाः ; मिलितौ विदार्य्याजरसावपि कषायापेक्षया द्विगुणाविति ; एवं मिलित्वा सार्द्धद्वात्रिंशच्छरावद्रवैः पाक इति व्याचक्षते । व्यव-हारः पुनः प्रायेणानेनैव । खजो मन्थानदण्डः । भूर्जपत्रे वेष्टनञ्च शक्त्यु-त्कर्षार्थम् ॥ ४०—४६ ॥

विल्वेत्यादि ।—पर्ण्यश्चतस्र इति—शालपर्णी-पृश्निपर्णी मुद्गपर्णी-माषपर्ण्यः । ताम-

मुस्तं पुनर्नवामेदे सूक्ष्मैलोत्पलचन्दने।
विदारी वृषमूलानि काकोली काकनासिका ॥ ४९ ॥
एषां पलोन्मितान् भागान् शतान्यामलकस्य च।
पञ्च दद्यात् तदैकध्यं जलद्रोणे विपाचयेत् ॥ ५० ॥
ज्ञात्वा गतरसान्येतान्यौषधान्यथ तं रसम्।
तच्चामलकमुद्धृत्य निष्कुलं तैलसर्पिषोः ॥ ५१ ॥
पलद्वादशके भृष्ट्वा दत्त्वा चार्द्धतुलां भिषक्।
मत्स्यण्डिकायाः पूतायाः लेहवत् साधु साधयेत् ॥ ५२ ॥
षट्पलं मधुनश्चात्र सिद्धशीते प्रदापयेत्।
चतुष्पलं तुगाक्षीर्य्याः पिप्पल्या द्विपलं तथा ॥ ५३ ॥
पलमेकं निदध्याच्च त्वगेलापत्रकेशरात्।
इत्ययं च्यवनप्राशः परमुक्तो रसायनः ॥ ५४ ॥

लकी भूम्यामलकी। जीवन्ती स्वनामख्याता। पुनर्नवामेदे इति—पुनर्नवा च मेदा च इति द्वन्द्वः, न तु मेदाद्वयं, "पार्थ्यन्यः पिप्पली शृङ्गी मेदा तामलकी वृटिः" ( उ० ३९ अ० ) इति वाग्भटवचनात्। उत्पलं नीलोत्पलं, न तु कुष्ठम्; सर्वस्मिन्नेव तन्त्रान्तरे कुष्ठमिति पाठस्य तट्टीकाकारैरव्याख्यातत्वात्। काकनासिका "कायुयाठुँटी"; जेज्जडस्तु वासाफलमित्याह। शतान्यामलकस्य च पञ्चेति—आकृतिमानत्वात् आमलकीफलस्य पञ्चशतानि; एतानि कर्पटे पोट्टलीं कृत्वा अपरैः क्वाथ्यद्रव्यैः सह क्वथनीयम्। गतरसत्वञ्च द्रव्याणां चतुर्भागावशेषेण क्वाथेनेति स्वयमेव वक्ष्यति; अत एव "पादशेषम्" ( उ० ३९ अ० ) इति वाग्भटेनोक्तम्। अन्ये त्वष्टभागावशेषम् इत्याहुः, तत्तु न व्यवहारसिद्धम्। निष्कुलमिति—शिराऽस्थिरहितं, तच्च चौमादि-घर्षणेन कार्य्यम्। पलद्वादशके इति मिलित्वा, निर्देशस्य मानप्रधानत्वात्; एवं त्वगेलापत्रकेशरादपि मिलित्वैव पलम्। ये तु समासकरणसामर्थ्यात् मिलित-ग्रहणमाहुः, तन्मते—अगस्त्यहरीतक्यादौ दशमूलस्यापि मिलित्वा द्विपलता स्यात्, दशमूलीति समासनिर्देशादिति ज्ञेयम्। अत्र समयोरपि मधुसर्पिषोर्द्रव्यान्तर-संयोगादेव न विरुद्धत्वं ज्ञेयम्; किंवा आमलकभर्जनेन घृतस्योपक्षीणत्वात् समत्वमेव नास्तीति। च्यवनस्य मुनेः प्राश इति घञ्। यौपरुन्ध्यान्न भोजनमिति

कासश्वासहरश्चैव विशेषेणोपदिश्यते।
क्षीणक्षतानां वृद्धानां बालानाञ्चाङ्गवर्द्धनः ॥ ५५ ॥
स्वरक्षयमुरोरोगं हृद्रोगं वातशोणितम्।
पिपासां मूत्रशुक्रस्थान् दोषांश्चैवापकर्षति ॥ ५६ ॥
अस्य मात्रां प्रयुञ्जीत योपरुन्ध्यान्न भोजनम्।
अस्य प्रयोगाच्च्यवनः सुवृद्धोऽभूत् पुनर्युवा ॥ ५७ ॥
मेधां स्मृतिं कान्तिमनामयत्वं वपुःप्रकर्षं बलमिन्द्रियाणाम्।
स्त्रीषु प्रहर्षं परमाग्निवृद्धिं वर्णप्रसादं पवनानुलोम्यम् ॥ ५८ ॥
रसायनस्यास्य नरः प्रयोगात् लभेत जीर्णोऽपि कुटीप्रवेशात्।
जराकृतं पूर्वमपास्य रूपं बिभर्त्ति रूपं नवयौवनस्य ॥ ५९ ॥
सिता मत्स्यण्डिकाऽलाभे धात्र्याश्च मृदु भर्जनम्।
चतुर्भागजले प्रायो द्रव्यं गतरसं भवेत् ॥ ६० ॥

जीवन्त्याद्यं घृतम्।—

जीवन्तीं मधुकं द्राक्षां फलानि कुटजस्य च।
शटीं पुष्करमूलञ्च व्याघ्रीं गोक्षुरकं बलाम् ॥ ६१ ॥
नीलोत्पलं तामलकीं त्रायमाणां दुरालभाम्।
पिप्पलीञ्च समं पिष्ट्वा घृतं वैद्यो विपाचयेत् ॥ ६२ ॥
एतत् व्याधिसमूहस्य रोगेशस्य समुत्थितम्।
रूपमेकादशविधं सर्पिरग्र्यं व्यपोहति ॥ ६३ ॥

---

—या प्रथमान्नभोजनोपयुक्ता जरणेन द्वितीयान्नकाले भोजनोपरोधं न करोतीत्यर्थः; यदुक्तं,—"रुणद्धि नैकमाहारं या सा मात्रा जरां प्रति" इति। कुटीप्रवेशादिति—वातातपपरिहारेणेत्यर्थः। यद्यपि मत्स्यण्डिकापेक्षया शर्करा विमला, तथाऽप्युपात्तत्वादिह सैव प्रशस्ता, तदभावे शर्करा खण्डो वा गृह्यते; चक्रेण तु शर्करैवोक्ता ॥४७—६०॥

जीवन्तीमित्यादि चरकस्य।—अत्र जलमेव चतुर्गुणम्। केचित्तु चरके षट्पलघृतानन्तरमयं योगः उक्तः, अतः प्रत्यासत्त्या पूर्वयोगोक्तं क्षीरमेवात्रापि द्रवमिच्छन्ति; किन्तु वाग्भटादावपि न दुग्धमतो जलमेव युक्तम् ॥ ६१—६३ ॥

पिप्पलीघृतम्।—

पिप्पलीगुड़संसिद्धं छागक्षीरयुतं घृतम्।
एतदग्निप्रवृद्ध्यर्थं सर्पिश्च क्षयकासिनाम्॥ ६४॥

पाराशरघृतम्।—

यष्टीबलागुडूच्यल्प-पञ्चमूलीतुलां पचेत्।
शूर्पेऽपामष्टभागस्थे तत्र पात्रं पचेत् घृतम्॥ ६५॥
धात्रीविदारीक्षुरसे त्रिपात्रे पयसोऽर्मणे।
सुपिष्टैर्जीवनीयैश्च पाराशरमिदं घृतम्॥
ससैन्यं राजयक्ष्माणमुन्मूलयति शीलितम्॥ ६६॥

छागलाद्यं घृतम्।—

छागमांसतुलां गृह्य साधयेल्लवणेऽम्भसि।
पादशेषेण तेनैव सर्पिःप्रस्थं विपाचयेत्॥ ६७॥
ऋद्धिवृद्धी च मेदे द्वे जीवकर्षभकौ तथा।
काकोलीक्षीरकाकोली-कल्कैः पृथक् पलोन्मितैः॥ ६८॥
सम्यक् सिद्धे चावतार्य्य शीते तस्मिन् प्रदापयेत्।
शर्करायाः पलान्यष्टौ मधुनः कुडवं क्षिपेत्॥ ६९॥
पलं पलं पिबेत् प्रातर्यक्ष्माणं हन्ति दुर्जयम्।
क्षतक्षयञ्च कासञ्च पार्श्वशूलमरोचकम्॥ ७०॥
स्वरक्षयमुरोरोगं श्वासं हन्यात् सुदारुणम्।

---

पिप्पलीत्यादि।—पिप्पलीगुडौ कल्कौ, छागक्षीरं चतुर्गुणम्॥ ६४॥

यष्टीत्यादि वाग्भटस्य।—यष्ट्यादीनां मिलित्वा तुला। शूर्पे इति—द्रोणद्वये; उक्तं दृढ़बलेन—"कुम्भो द्रोणद्वयं शूर्पः" इति; चारपाणिनाऽप्युक्तं—"द्रोणद्वयन्तु शूर्पः स्यात् कुम्भ इत्यभिधीयते"। तस्मात् द्रोणपर्य्यायः शूर्पं इति हन्दलिखितमतं नादरणीयम्। यद्यपि तुलाद्रव्ये एक एव जलद्रोण उचिततयाऽपि निर्दिष्टत्वादिह तोयं द्रोणद्वयमेव देयम्; यथा वक्ष्यमाणद्वितीयच्छागलादिघृते छागमांसतुलायां जलद्रोणद्वयमिति। धात्र्यादिरसानां मिलित्वा त्रिपात्रम्; पात्रमाढ़कम्॥ ६५।६६॥

बल्यं मांसकरं वृष्यमग्निसन्दीपनं परम्‌ ॥ ७१ ॥

अपरं छागलाद्यं घृतम्‌।—

तोयद्रोणद्वितये छागलमांसस्य पलशतं पक्त्वा।
जलमष्टांशं सुकृतं तस्मिन्‌ विपचेत्‌ घृतं प्रस्थम्‌ ॥ ७२ ॥
कल्केन जीवनीयानां कुड़वेन तु मांससर्पिरिदम्‌।
पित्तानिलं निहन्यात्‌ तज्जानपि रसकयोजितं पीतम्‌ ॥७३॥
कासश्वासावुग्रौ यक्ष्माणं पार्श्वहृद्रुजां घोराम्‌।
अध्वव्यवायशोषं शमयति चैवापरं किञ्चित्‌ ॥ ७४ ॥

अजापञ्चकं घृतम्‌।—

छागशकृद्रसमूत्रक्षीरैर्दध्ना च साधितं सर्पिः।
सक्षारं यक्ष्महरं कासश्वासोपशान्तये परमम्‌ ॥ ७५ ॥

बलागर्भं घृतम्‌।—

द्विपञ्चमूलस्य पचेत्‌ कषाये प्रस्थद्वये मांसरसस्य चैके।
कल्कं बलायाः सुनियोज्य गर्भं सिद्धं पयःप्रस्थयुतं घृतञ्च ॥
सर्वाभिघातोत्थितयक्ष्मशूल क्षतक्षयोत्कासहरं प्रदिष्टम्‌ ॥७६॥

नागबलाघृतम्‌।—

पादशेषं जलद्रोणे पचेन्नागबलातुलाम्‌।
तेन क्वाथेन तुल्यांशं घृतं क्षीरञ्च साधयेत्‌ ॥ ७७ ॥

---

छागमांसेत्यादि।—छागलाद्ये लक्षणो द्रोणः ॥ ६७—७१ ॥

तोयेत्यादि।—जीवनीयानां दशानां कुड़वेनेति मिलित्वा। तज्जानिति—पित्तानिलजान्‌ व्याधीन्‌। रसकयोजितमिति—मांसरसावचारितमित्यर्थः ॥ ७२—७४ ॥

छागेत्यादि।—अजापञ्चकघृते सर्पिरप्यजाया एव, एवं दधि च। यवक्षारस्यात्र प्रक्षेप्यत्वमाहुः ॥ ७५ ॥

द्विपञ्चमूलस्येत्यादि।—द्विपञ्चमूलस्येति—दशमूलस्य मिलित्वा द्वात्रिंशत्पलानि, जलस्य च द्वात्रिंशच्छरावास्ततः प्रस्थद्वयं शेषः। मांसरसस्य चैके इति—छागमांसरसस्य एकस्मिन्‌ प्रस्थे इत्यर्थः। गर्भमिति—कल्कः ॥ ७६ ॥

पादशेषमित्यादि वाग्भटस्य।—पादशेषमित्येव पाठः, पादशेषं यथा भवति

पलाद्विकैश्चातिबला-बलायष्टिपुनर्नवा-।
प्रपौण्डरीककाश्मर्य्य-पियालकपिकच्छुभिः ॥ ७८ ॥
अश्वगन्धासिताऽभीरु-मेदायुग्मत्रिकण्टकैः।
मृणालबिसशालूक-शृङ्गाटककशेरुकैः ॥ ७९ ॥
एतन्नागबलासर्पी रक्तपित्तं क्षतक्षयम्।
हन्ति दाहं भ्रमं तृष्णां बलपुष्टिकरं परम् ॥ ८० ॥
बल्यमोजस्यमायुष्यं वलीपलितनाशनम्।
उपयुञ्जीत षण्मासान् वृद्धोऽपि तरुणायते ॥ ८१ ॥

निर्गुण्डीघृतम्।—

समूलफलपत्राया निर्गुण्ड्याः स्वरसैर्घृतम्।
सिद्धं पीत्वा क्षतक्षीणो निर्व्याधिर्भाति देववत् ॥ ८२ ॥

बलाद्यं घृतम्।—

बलां श्वदंष्ट्रां बृहतीं कलसीं धावनीं स्थिराम्।
निम्बं पर्पटकं मुस्तं त्रायमाणां दुरालभाम् ॥ ८३ ॥
कृत्वा कषायं पेष्यार्थं दद्यात् तामलकीं शटीम्।
द्राक्षां पुष्करमूलञ्च मेदामामलकानि च ॥ ८४ ॥
घृतं पयश्च तत् सिद्धं सर्पिर्ज्वरहरं परम्।
क्षयकासप्रशमनं शिरःपार्श्वरुजाऽपहम् ॥ ८५ ॥
चरकोदितवासाद्य-घृतानन्तरमुक्तितः।
वदन्तीह घृतात् क्वाथं पयश्च द्विगुणं पृथक् ॥ ८६ ॥

---

तथा पचेदिति। अन्ये तु—पादशेषे इति पठित्वा पादशेषे कर्त्तव्ये इति व्याचक्षते। नागबला गोरक्षतण्डुला। अतिबला गोरक्षतण्डुलैव। मृणालबिसे स्वल्पमहद्भेदात्; मृणालमुशीरं, बिसं पद्ममूलम् इत्यन्ये ॥ ७७—८१ ॥

समूलेत्यादि।—निर्गुण्डीघृतमकल्कम ॥ ८२ ॥

बलामित्यादि।—चरकस्य ज्वरचिकित्सितेऽयं योगः। कलसी पृश्निपर्णी। धावनी कण्टकारिका। स्थिरा शालपर्णी। चरकोदितेत्यादि, चरके हि वासाघृतानन्तरमयं योग उक्तः, तत्र च क्वाथः पयस्च प्रत्येकं घृतात्

चन्दनाद्यं तैलम्।—

चन्दनाम्बु नखं वाप्यं यष्टी शैलेयपद्मकम्।
मञ्जिष्ठा सरलं दारु शट्येलापूतिकेशरम्॥ ८७॥
पत्रं तैलं मुरामांसी कक्कोलं वनिताऽम्बुदम्।
हरिद्रे शारिवे तिक्ता लवङ्गागुरुकुङ्कुमम्॥ ८८॥
त्वग्रेणु नलिका चैभिस्तैलं मस्तुचतुर्गुणम्।
लाक्षारससमं सिद्धं ग्रहघ्नं बलवर्णकृत्॥ ८९॥
अपस्मारज्वरोन्माद-कृत्याऽलक्ष्मीविनाशनम्।
आयुःपुष्टिकरञ्चैव वशीकरणमुत्तमम्॥ ९०॥

यक्ष्मणि छागव्यवहारस्य प्रशस्तता।—

छागं मांसं पयश्छागं छागं सर्पिः सशर्करम्।
छागोपसेवा शयनं छागमध्ये तु यक्ष्मनुत्॥ ९१॥

उरःक्षते लाक्षाप्रयोगः।—

उरो मत्वा क्षतं लाक्षां पयसा मधुसंयुताम्।
सद्य एव पिबेज्जीर्णे पयसाऽद्यात् सशर्करम्॥ ९२॥

उरःक्षते इक्षालिकादिक्षीरम्।—

इक्ष्वालिकाबिसग्रन्थि-पद्मकेशरचन्दनैः।

---

द्विगुणं, तस्मादपथ्यात् इहापि तथैवेति। घृतसमं क्षीरं, क्वाथश्च द्विगुण इत्यन्ये॥ ८३—८६॥

चन्दनेत्यादि।—चन्दनादितैले अम्बु बालकम्। वाप्यं कुष्ठम्। पूतिः खट्टाशी। तैलं शिलारसः। वनिता प्रियङ्गुः। तिक्ता लताकस्तूरी। रेणु रेणुकम्। नलिका नालुका। लाक्षारसो लाक्षाक्वाथः; लाक्षायाः षोडशपलं, पाकार्थंजलं षोडशशरावं, शेषं प्रस्थैकम्॥ ८७—९०॥

छागमित्यादि।—स्पष्टम्॥ ९१॥

उरःक्षतचिकित्सामाह, उर इत्यादि।—उरः क्षतं मत्वा लाक्षां पयसा मधुसंयुतां पिबेदित्यर्थः। जीर्णे पयसा सशर्करमन्नं भुञ्जीतेत्यन्वयः॥ ९२॥

शृतं पयो मधुयुतं सन्धानार्थं पिबेत् क्षती ॥ ९३ ॥

बलादिचूर्णम्।—

बलाऽश्वगन्धाश्रीपर्णी-बहुपुत्रीपुनर्नवाः।
पयसा नित्यमभ्यस्ताः क्षपयन्ति क्षतक्षयम् ॥ ९४ ॥

बलाद्यं घृतम्।—

घृतं बलानागबलाऽर्जुनाम्बु-सिद्धं सयष्टीमधुकल्कपादम्।
हृद्रोगशूलक्षतरक्तपित्त-कासानिलासृक् शमयत्युदीर्णम् ॥ ९५ ॥

इति यक्ष्म-चिकित्सा।

---

## अथ कास-चिकित्सा।

### वातकास-चिकित्सा।

पथ्यशाकादिनिर्देशः।—

वास्तुको वायसीशाकं मूलकं सुनिषण्णकम्।
स्नेहास्तैलादयो भक्ष्याः क्षीरेक्षुरसगौड़िकाः ॥ १ ॥
दध्यारनालाम्लफलं प्रसन्नापानमेव च।
शस्यते वातकासेषु स्वाद्वम्ललवणानि च ॥ २ ॥
ग्राम्यानूपौदकैः शालि-यवगोधूमषष्टिकान्।
रसैर्माषात्मगुप्तानां यूषैर्वा भोजयेद्धितान् ॥ ३ ॥

---

इक्ष्वालिकेत्यादि।—इक्ष्वालिका "वनखागड़ी" इति ख्यातम्। बिसग्रन्थिः मृणालग्रन्थिः। पद्मकेशरं पद्मकिञ्जल्कः। सन्धानार्थमिति—क्षतोरःसन्धानार्थम् ॥ ९३ ॥

बलेत्यादि।—श्रीपर्ण्यां गाम्भार्य्याः फलम्। बहुपुत्री शतावरी। बलादयो व्यस्ताः समस्ता वा बोध्याः ॥ ९४ ॥

घृतमित्यादि।—स्पष्टम् ॥ ९५ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां यक्ष्म-चिकित्साविवृतिः।

---

यक्ष्मरूपेषु कासपाठात् कासोपेक्षया च यक्ष्मसम्भवात् यक्ष्मानन्तरं कासचिकित्सा-माह, वास्तुक इत्यादि।—वायसी काकमाची ॥ १—३ ॥

पञ्चमूलीक्वाथः ।—

पञ्चमूलीकृतः क्वाथः पिप्पलीचूर्णसंयुतः ।
रसान्नमश्नतो नित्यं वातकासमुदस्यति ॥ ४ ॥

अपराजितलेहः ।—

शटीशृङ्गीकणाभार्गी-गुड़वारिदयासकैः ।
सतैलैर्वातकासघ्नो लेहोऽयमपराजितः ॥ ५ ॥

विश्वादिचूर्णम् ।—

चूर्णिता विश्वदुःस्पर्शा-शृङ्गीद्राक्षाशटीसिताः ।
लीढ़ा तैलेन वातोत्थं कासं जयति दारुणम् ॥ ६ ॥

भार्ग्यादिचूर्णम् ।—

भार्गीद्राक्षाशटीशृङ्गी-पिप्पलीविश्वभेषजैः ।
गुड़तैलयुतो लेहो हितो मारुतकासिनाम् ॥ ७ ॥

## पित्तकास-चिकित्सा ।

तनुकफ-घनकफभेदे विरेचनविशेषः ।—

पित्तकासे तनुकफे त्रिवृतां मधुरैर्युताम् ।
दद्याद्घनकफे तिक्तैर्विरेकार्थं युतां भिषक् ॥ ८ ॥

पथ्यविधिः ।—

मधुरैर्जाङ्गलरसैः श्यामाकयवकोद्रवाः ।
मुद्गादियूषैः शाकैश्च तिक्तकैर्मात्रया हिताः ॥ ९ ॥

---

पञ्चमूलीत्यादि ।—पञ्चमूली महती, उष्णवीर्यतया विशेषेण वातप्रत्यनीकत्वात्; अन्ये तु स्वल्पामाहुः । रसान्नं मांसरसोपहितमन्नम् ॥ ४ ॥

शटीत्यादि ।—योगत्रयेऽपि कटुतैलेन लेह इति वृन्दटिप्पनी; किन्तु टीकाकृद्भिर्न व्याख्यातोऽयमर्थः ॥ ५—७ ॥

पित्तकासे इत्यादि चरकस्य ।—तनुकफे इति—अघनकफे; कफस्य तनुत्वं घनत्वञ्च कासरोगिनिःसार्य्यमाणकफस्य दर्शनादेव ज्ञेयम् । मधुरैरिति—मधुरद्रव्यैर्युक्तां त्रिवृतामिति सम्बन्धः । अन्ये तु—मधुरैर्जीवनीयदशकैरित्याहुः ॥ ८ ॥

मधुरैरित्यादि ।—मधुरैर्जाङ्गलरसैरित्यत्र मधुरैः स्वादुभिः, किंवा जीवनीयसंस्कृतैः ॥ ९ ॥

बलादिः।—

बलाद्विबृहतीवासा-द्राक्षाभिः क्वथितं जलम्।
पित्तकासापहं पेयं शर्करामधुयोजितम्॥ १०॥

पञ्चतृणादिक्षीरम।—

शरादिपञ्चमूलस्य पिप्पलीद्राक्षयोस्तथा।
कषायेण शृतं क्षीरं पिबेत् समधुशर्करम्॥ ११॥

मांसरसादिप्रस्तुतार्थं काकोल्यादिः।—

काकोलीबृहतीमेदा-युग्मैः सवृषनागरैः।
पित्तकासे रसक्षीर-यूषांश्चाप्युपकल्पयेत्॥ १२॥

द्राक्षादिलेहः।—

द्राक्षामलकखर्ज्जूरं पिप्पलीमरिचान्वितम्।
पित्तकासापहं ह्येतल्लिह्यान्माक्षिकसर्पिषा॥ १३॥

खर्ज्जूरादिलेहः।—

खर्ज्जूरपिप्पलीद्राक्षा-सितालाजाः समांशिकाः।
मधुसर्पिर्युतो लेहः पित्तकासहरः परः॥ १४॥

शठ्यादिः।—

शटीह्रीबेरबृहती-शर्कराविश्वभेषजम्।
पिष्ट्वा रसं पिबेत् पूतं सघृतं पित्तकासनुत्॥ १५॥

---

बलेत्यादि।—स्पष्टम्॥ १०॥

शरादीत्यादि चरकस्य।—शरादिपञ्चमूलन्तु शरेक्षुदर्भकाशशालयस्तेषां मूलं ज्ञेयम्। अत्र षडङ्गपरिभाषया षडङ्गतकषायेण चतुर्गुणेन दुग्धं साध्यम्॥ ११॥

काकोलीत्यादि।—अत्र युग्मैरिति काकोल्यादिभिः सम्बध्यते इति चक्रः। अन्ये तु—बृहतीमेदाभ्यां युज्यते इति; युक्तञ्चैतत्; यदाह जतूकर्णः,—"वृषकाकोलीशुण्ठी-मेदाबृहतीयुग्मैः" इति॥ १२॥

द्राक्षेत्यादि।—इदं कफानुबन्धे ज्ञेयम्; पित्तोद्रेके तु मरिचस्थाने शर्करा ज्ञेया; यदाह चारपाणिः,—"पिप्पल्यामलकी द्राक्षा खर्ज्जूरं शर्करा मधु। लेहोऽयं सघृतो लीढ़ः पित्तक्षयजकासजित्॥" इति॥ १३॥

खर्ज्जूरेत्यादि।—स्पष्टम्॥ १४॥

शटीत्यादि वाग्भटस्य।—अत्र शट्यादिकं जले पिष्टा तद्रसं वस्त्रपूतं कृत्वा

पञ्चबीजप्रयोगः।—

मधुना पञ्चबीजानां चूर्णं पैत्तिककासनुत् ॥ १६ ॥

## कफकास-चिकित्सा।

शोधनादिकरणोपदेशः।—

बलिनं वमनेनादौ शोधितं कफकासिनम्।
यवान्नैः कटुरूक्षोष्णैः कफघ्नैश्चाप्युपाचरेत् ॥ १७ ॥

यूषरसयोः प्रयोगोपदेशः।—

पिप्पलीक्षारकैर्यूषैः कौलत्थैर्मूलकस्य च।
लघून्यन्नानि भुञ्जीत रसैर्वा कटुकान्वितैः ॥ १८ ॥

पञ्चकोलक्षीरम्।—

पञ्चकोलैः शृतं क्षीरं कफघ्नं लघु शस्यते।
श्वासकासज्वरहरं बलवर्णाग्निवर्द्धनम् ॥ १९ ॥

पौष्करादिः।—

पौष्करं कट्फलं भार्गी-विश्वपिप्पलिसाधितम्।
पिबेत् क्वाथं कफोद्रेके कासे श्वासे च हृद्ग्रहे ॥ २० ॥

आर्द्रकप्रयोगः।—

स्वरसं शृङ्गवेरस्य माक्षिकेण समन्वितम्।
पाययेच्छ्वासकासघ्नं प्रतिश्यायकफापहम् ॥ २१ ॥

नवाङ्गयूषः।—

मुद्गामलाभ्यां यवदाड़िमाभ्यां कर्कन्धुना मूलकशुण्ठकेन।

---

घृतसम्मिश्रं पिबेत्। बृहती चात्र कण्टकारी कासहन्तृत्वात; उक्तं हि चरके—"शर्करानागरोदीच्यं कण्टकारीं शटीं समाम्। पिष्ट्वा रसं पिबेत् पूतं वस्त्रेण घृतमूर्च्छितम् ॥" (चि० कास०) इति १५।१६ ॥

कफचिकित्सामाह, बलिनमित्यादि।—पिप्पलीक्षारकैरिति—पिप्पलीयवक्षारसंस्कृतैरित्यर्थः ॥ १७—१९ ॥

पौष्करमित्यादि।—पौष्करमित्यादि कफापहपर्यन्तं स्पष्टम् ॥ २०।२१ ॥

मुद्गेत्यादि।—नवाङ्गयूषे यवामलकदाड़िमकर्कन्धुमूलकशुण्ठकैः षडङ्गपरिभाषया

शुण्ठीकणाभ्याञ्च कुलत्थकेन यूषो नवाङ्गः कफरोगहन्ता ॥२२॥

दशमूलीप्रयोगावस्थानिर्देशः।—

पार्श्वशूले ज्वरे कासे श्वासे श्लेष्मसमुद्भवे।
पिप्पलीचूर्णसंयुक्तं दशमूलीजलं पिबेत् ॥ २३ ॥

वातकफकासे कट्फलादिः।—

कट्फलं कत्तृणं भार्गी मुस्तं धान्यं वचाऽभया।
शृङ्गी पर्पटकं शुण्ठी सुराह्वा च जले शृतम् ॥ २४ ॥
मधुहिङ्गुयुतं पेयं कासे वातकफात्मके।
कण्ठरोगे क्षये शूले श्वासहिक्काज्वरेषु च ॥ २५ ॥

सर्वकासे कण्टकारीक्वाथः।—

कण्टकारीकृतः क्वाथः सकृष्णः सर्वकासहा ॥ २६ ॥

विभीतकप्रयोगः।—

विभीतकं घृताभ्यक्तं गोशकृत्परिवेष्टितम्।
स्विन्नमग्नौ हरेत् कासं ध्रुवमास्यविधारितम् ॥ २७ ॥

पित्तकफकासे वासकप्रयोगः।—

वासकस्वरसः पेयो मधुयुक्तो हिताशिना।
पित्तश्लेष्मकृते कासे रक्तपित्ते विशेषतः ॥ २८ ॥

मधुकादिः।—

मधुकं पिप्पली द्राक्षा लाक्षा शृङ्गी शतावरी।
द्विगुणा च तुगाक्षीरी सिता सर्वैश्चतुर्गुणा ॥

---

षडङ्गघृतं कृत्वा मुद्गकुलत्थौ युक्त्या प्रचुरौ दत्त्वा यूषः साध्यः, पश्चात् कटुत्वार्थं शुण्ठी-पिप्पलीचूर्णदानम्; किंवा सकलमेव द्रव्यं यथोचितमात्रया गृहीत्वा क्वाथविधानेन पञ्चमुष्टिकवत् यूषः कार्य्य इत्याहुः ॥ २२ ॥

पार्श्वशूले इत्यादि।—स्पष्टम् ॥ २३ ॥

कट्फलमित्यादि।—कत्तृणं गन्धतृणम् ॥ २४।२५ ॥

कण्टकारीत्यादि।—स्पष्टम् ॥ २६ ॥

विभीतकमित्यादि।—स्पष्टम् ॥ २७ ॥

वासकेत्यादि।—स्पष्टम् ॥ २८ ॥

तं लिह्यान्मधुसर्पिर्भ्यां क्षतकासनिवृत्तये ॥ २९ ॥

पिप्पल्यादिलेहः।—

पिप्पली पद्मकं द्राक्षा सम्पक्कं बृहतीफलम्।
घृतक्षौद्रयुतो लेहः श्वासकासनिबर्हणः ॥ ३० ॥

हरीतक्यादिगुड़िका।—

हरीतकीनागरमुस्तचूर्णं गुड़ेन तुल्यं गुड़िका विधेया।
निवारयत्याशुविधारितेयं श्वासं प्रवृद्धं प्रबलञ्च कासम् ॥ ३१ ॥

मरिचाद्यं चूर्णम्।—

कर्षः कर्षार्द्धमथो पलं पलद्वयमथार्द्धकर्षश्च।
मरिचस्य पिप्पलीनां दाड़िमगुड़यावशूकानाम् ॥ ३२ ॥
सर्वौषधैरसाध्या ये कासाः सर्ववैद्यविवर्जिताः।
अपि पूयं छर्दयतां तेषामिदमौषधं पथ्यम् ॥ ३३ ॥

समशर्करं चूर्णम्।—

लवङ्गजातीफलपिप्पलीनां भागान् प्रकल्प्याक्षयुतानमीषाम्।
पलार्द्धमेकं मरिचस्य दद्यात् पलानि चत्वारि महौषधस्य ॥ ३४ ॥
सितासमं चूर्णमिदं प्रसह्य रोगानिमानाशु बलान् निहन्यात्।
कासज्वरारोचकमेहगुल्म-श्वासाग्निमान्द्यग्रहणीप्रदोषान् ॥ ३५ ॥

---

मधुकमित्यादि।—तुगाक्षीरी वंशलोचना एकभागापेक्षया द्विगुणा। सर्वचूर्णापेक्षया चतुर्गुणा सिता ॥ २९ ॥

पिप्पलीत्यादि।—स्पष्टम् ॥ ३० ॥

हरीतकीत्यादि।—अत्र समुदितचूर्णेन तुल्यो गुड़ः ॥ ३१ ॥

कर्ष इत्यादि।—मरिच कर्ष १, पिप्पली तोलक १, अम्लदाड़िमबीज पल १, गुड़ पल २, यवक्षार तोलक १। वाग्भटेऽप्युक्तं—"गुड़क्षारोषणकणा-दाड़िमं श्वासकासजित्। क्रमात् पलवयार्द्धाक्ष-कर्षांक्षार्द्धपलोन्मितम् ॥" (चि० ३ अ०) इति ॥ ३२.३३ ॥

लवङ्गेत्यादि।—पलार्द्धमेकमित्यत्र एकपदं श्लोकपूरणार्थमेवोक्तम्। बलानिति—अर्श आदित्वादच्, बलवतो रोगानित्यर्थः, तेन प्रसह्य इत्यनेन न पौनरुक्त्यम् ॥ ३४।३५ ॥

हरीतक्यादिमोदकः।—

हरीतकीकणाशुण्ठी-मरिचं गुड़संयुतम्।
कासघ्नो मोदकः प्रोक्तस्तृष्णाऽरोचकनाशनः॥ ३६॥

व्योषान्तिका गुडिका।—

तालीशवह्निदीप्यक-चविकाऽम्लवेतसव्योषैः।
तुल्यैस्त्रिसुगन्धियुतैर्गुड़ेन गुड़िका प्रकर्त्तव्या॥ ३७॥
कासश्वासारोचक-पीनसहृत्कण्ठवाङ्निरोधेषु।
ग्रहणीगदोद्भवेषु गुड़िका व्योषान्तिका नाम॥ ३८॥

धूमपानार्थं मनःशिलादिः।—

मनःशिलाऽऽलमधुक-मांसीमुस्तेङ्गुदैः पिबेत्।
धूमं तस्यैव चानु च सगुड़ञ्च पयः पिबेत्॥ ३९॥
एष कासान् पृथग्द्वन्द्व-सर्वदोषसमुद्भवान्।
शतैरपि प्रयोगाणां साधयेदप्रसाधितान्॥ ४०॥

धूमपानार्थं मनःशिलादिः।—

मनःशिलालिप्तदलं वदर्य्याऽऽतपशोषितम्।

---

हरीतकीत्यादि।—मोदकत्वात गुड़ो द्विगुणः॥ ३६॥

तालीशेत्यादि।—वह्निश्चित्रकः। दीप्यकं यमानी। त्रिसुगन्धियुतैरिति—सर्वचूर्णापेक्षया चतुर्थांशेन मिलितं त्रिसुगन्धिचूर्णमित्याहुः। व्योषान्तिकेति—अत्रान्तशब्द उपान्तमाह, व्योषस्यान्तस्थितत्रिसुगन्धात् पूर्वमवस्थितत्वात्, किंवा तालीशादीनां विशेषणपदत्वात् तदपेक्षयैवान्तो ज्ञेयः॥ ३७।३८॥

मनःशिलाऽऽलेत्यादि।—आलं हरितालम्। इङ्गुदं पुत्रञ्जीवफलमध्यं, फलत्वक् इत्यन्ये; युक्तञ्चैतत्—"मनःशिलाऽऽलमधुक-मांसीमुस्तेङ्गुदीत्वचः" (चि० ३ अ०) इति वाग्भटवचनात्। अत्र मनःशिलादीनां पेषणं छागमूत्रेण बोध्यं, "छगलाम्बुपिष्टैः" (उ० ५२ अ०) इति सुश्रुतदर्शनात्। अत्र मधुकस्थाने मरिचं केचित् पठन्ति; तन्न, "शिलाऽऽलेङ्गुदयष्ट्याह्व-मांसीधूपं पिबेत् त्र्यहम्" इति तन्त्रान्तरदर्शनात्। अत्र मनःशिलादिकं कल्कीकृत्य सूक्ष्मवस्त्रखण्डं लिम्पेत्, ततः आतपे शोषयित्वा वर्त्तिं विधाय शरावसम्पुटस्थबदराङ्गारवह्नौ निक्षिप्य यथोक्तनलिकया धूमपानं कार्य्यं, विश्रम्य किञ्चित् सगुड़क्षीरं पेयं, धूमस्य तीक्ष्णत्वेनोपशमःस्यादिति॥ ३९।४०॥

सक्षीरं धूमपानञ्च सर्वकासनिवारणम् ॥ ४१ ॥

धूमपानार्थम् अर्कत्वगादिः।—

अर्कच्छल्लशिले तुल्ये ततोऽर्द्धेन कटुत्रिकम्।
चूर्णितं वह्निनिक्षिप्तं पिबेत् धूमन्तु योगवित् ॥ ४२ ॥
भक्षयेदथ ताम्बूलं पिबेत् दुग्धमथाम्बु वा।
कासाः पञ्चविधा यान्ति शान्तिमाशु न संशयः ॥ ४३ ॥

धूमपानार्थं मरिचादिः।—

मरिचशिलाऽर्कक्षीरैर्वार्त्ताकीं त्वचमाशुभावितां शुष्काम्।
कृत्वा विधिना धूमं पिबतः कासाः शमं यान्ति ॥ ४४ ॥

दशमूलघृतम्।—

दशमूलकषायेण भार्गीकल्कं पचेत् घृतम्।
दक्षतित्तिरिनिर्य्यूहे तत् परं वातकासनुत् ॥ ४५ ॥

दशमूलाद्यं घृतम्।—

दशमूलाढ़के प्रस्थं घृतस्याक्षसमैः पचेत्।
पुष्कराह्वशटीविल्व-सुरसव्योषहिङ्गुभिः ॥ ४६ ॥
पेयाऽनुपानं तत् पेयं कासे वातकफाधिके।
श्वासरोगेषु सर्वेषु कफवातात्मकेषु च ॥ ४७ ॥

---

मनःशिलेत्यादि।—बदर्य्याऽऽतपशोषितामिति—बदर्य्याः मनःशिलालिप्तदलम् आतपे शोषितमिति योजना। बदर्य्याऽऽतपेति असिद्धविधेरनित्यत्वात् सन्धिः ॥ ४१ ॥

अर्कच्छल्लेत्यादि।—अर्कच्छल्लम् अर्कमूलत्वक्। शिला मनःशिला। ततोऽर्द्धेन कटुत्रिकमिति—तत उभयोरर्द्धेन मिलितं त्रिकटुकम् ॥ ४२।४३ ॥

मरिचेत्यादि।—स्पष्टम् ॥ ४४ ॥

दशमूलकषायेणेत्यादि।—दक्षः कुक्कुटः; दक्षतित्तिरिभ्यां मिलित्वैव क्वाथः। दशमूलक्वाथेन दक्षतित्तिरिक्वाथेन च मिलित्वा चातुर्गुण्यम् ॥ ४५ ॥

दशमूलाढ़के इत्यादि वाग्भटस्य।—अत्र दशमूलस्य क्वाथ्यस्याढ़कमानत्वं, तेन "क्वाथः क्वाथ्यसमो मतः" इति वचनात् पादावशिष्टक्वाथोऽप्याढ़कमानो भवति। बिल्व बिल्वमूलम्। सुरसः पर्णासः। पेयाऽनुपानमित्यत्र पयोऽनुपानमिति केचित् पठन्ति, किन्त्वत्र पेयैव वातकफहन्तृत्वात् युक्ता ॥ ४६।४७ ॥

दशमूलषट्पलकं घृतम्।—

दशमूलीचतुःप्रस्थे रसे प्रस्थोन्मितं हविः।
सक्षारैः पञ्चकोलैस्तु कल्कितं साधु साधितम्॥ ४८॥
कासहृत्पार्श्वशूलघ्नं हिक्काश्वासनिवारणम्।
कल्कं षट्पलमेवात्र ग्राहयन्ति भिषग्वराः॥ ४९॥

कण्टकारीघृतम्।—

कण्टकारीगुडूचीभ्यां पृथक् त्रिंशत्पलाद्रसे।
प्रस्थः सिद्धो घृताद्वात-कासनुद्वह्निदीपनः॥ ५०॥

अपरं कण्टकारीघृतम्।—

घृतं रास्नाबलाव्योष-श्वदंष्ट्राकल्कपाचितम्।
कण्टकारीरसे पानात् पञ्चकासनिसूदनम्॥ ५१॥

बृहत्कण्टकारीघृतम्।—

समूलपत्रशाखायाः कण्टकार्य्या रसाढ़के।
घृतप्रस्थं बलाव्योष-विड़ङ्गशटीचित्रकैः॥ ५२॥
सौवर्चलयवक्षार-विल्वामलकपौष्करैः।
वृश्चीरबृहतीपथ्या-यमानीदाड़िमर्द्धिभिः॥ ५३॥
द्राक्षापुनर्नवाचव्य-धन्वयासाम्लवेतसैः।
शृङ्गीतामलकीभार्गी-रास्नागोक्षुरकैः पचेत्॥ ५४॥
कल्कैस्तु सर्वकासेषु हिक्काश्वासे च शस्यते।
कण्टकारीघृतं सिद्धं कफव्याधिविनाशनम्॥ ५५॥

---

दशमूलीत्यादि।—दशमूलषट्पलकं घृतं स्पष्टम्॥ ४८।४९॥

कण्टकारीत्यादि।—कण्टकारीगुड़ूच्योर्मिलित्वा पल ६०, जल शराव ६०, शेष १५। अन्ये तु—जलद्रोणं दत्त्वा शेषं १६ इत्याहुः॥ ५०॥

घृतमित्यादि।—कण्टकारीरसे इति—कण्टकारीस्वरसश्चतुर्गुणः; उक्तञ्च—"निदिग्धिकायाः स्वरसं ग्राहयेत् यन्त्रपीड़ितम्। चतुर्गुणे रसे तस्मिन् घृतप्रस्थं विपाचयेत॥" इत्यादि॥ ५१॥

समूलेत्यादि।—अयं योगश्चरके वाग्भटे च पठ्यते। अत्र श्वेतरक्तभेदात् पुनर्नवाद्वयम्॥ ५२—५५॥

रास्नाद्यं घृतम्।—

द्रोणेऽपां साधयेद्रास्नां दशमूलीं शतावरीम्।
पलिकां माणिकांशांस्त्रीन् कुलत्थान् बदरान् यवान्॥५६॥
तुलाऽर्द्धं छागमांसस्य पादशेषेण तेन च।
घृताढ़कं समक्षीरं जीवनीयैः पलोन्मितैः॥५७॥
सिद्धं तद्दशभिः कल्कैर्नस्यपानानुवासनैः।
समीक्ष्य वातरोगेषु यथाऽवस्थं प्रयोजयेत्॥५८॥
पञ्च कासान् शिरःकम्पं शूलं वङ्क्षणयोनिजम्।
सर्वाङ्गैकाङ्गरोगांश्च सप्लीहोर्द्ध्वानिलान् जयेत्॥५९॥

जीवनीयगणः।—

जीवकर्षभकौ मेदे काकोल्यौ सूप्यपर्णिके।
जीवन्ती मधुकश्चैव दशको जीवको गणः॥६०॥

अगस्त्यहरीतकी।—

दशमूलीं स्वयंगुप्तां शङ्खपुष्पीं शटीं बलाम्।
हस्तिपिप्पल्यपामार्ग-पिप्पलीमूलचित्रकान्॥६१॥
भार्गीपुष्करमूलञ्च द्विपलांशं यवाढ़कम्।
हरीतकीशतञ्चैकं जले पञ्चाढ़के पचेत्॥६२॥
यवैः स्विन्नैः कषायं तं पूतं तच्चाभयाशतम्।
पचेत् गुड़तुलां दत्त्वा कुड़वञ्च पृथक् घृतात्॥६३॥

---

द्रोणेऽपामित्यादि।—अयमपि योगश्चरके वाग्भटे च पठ्यते। पलिकामिति रास्नादिद्वयेण सम्बध्यते। दशमूल्यपि प्रत्येकं पलांशम्। "पलिकान्" इति पाठे—रास्नादिशतावर्य्यन्तानां पलिकान् भागानिति सम्बन्धः। माणिकांशान् अष्टौ पलानि। अत्र रास्नादिच्छागमांसान्तक्काथ्ये द्रोणप्रमाणं जलं, तच्च पादावशेषाढ़कं, क्षीरमप्याढ़कम्, अतो द्विगुणः पाकः॥५६—६०॥

दशमूलीमित्यादि वाग्भटचरकयोः।—अत्र शूकशिम्ब्या बीजं, तदभावे मूलमपि ग्राह्यमाहुः। यवाढ़कमिति, यवहरीतक्यौ पटे बद्धा दातव्यौ। पञ्चाढ़के इति—द्वैगुण्यादशीतिशरावा भवन्ति। दशमूल्यादिहरीतक्यन्ताः क्वाथ्याः एकत्रैव पक्तव्याः। यवैः स्विन्नैरित्युपलक्षणे तृतीया, तेन स्विन्नैर्यवैरुपलक्षितः

तैलात् सपिप्पलीचूर्णात् सिद्धशीते च माक्षिकात्।
लिह्यात् द्वे चाभये नित्यमतः खादेद्रसायनात्॥ ६४॥
तत् वलीपलितं हन्याद्वर्णायुर्बलवर्द्धनम्।
पञ्च कासान् क्षयं श्वासं हिक्कां सविषमज्वरान्॥ ६५॥
हन्यात् तथा ग्रहण्यर्शो-हृद्रोगारुचिपीनसान्।
अगस्त्यविहितं धन्यमिदं श्रेष्ठं रसायनम्॥ ६६॥

व्याघ्रीहरीतकी।—

समूलपुष्पच्छदकण्टकाढ्यांस्तुलां जलद्रोणपरिप्लुताञ्च।
हरीतकीनाञ्च शतं निदध्यादथात्र पक्का चरणावशेषम्॥ ६७॥
गुड़स्य दत्त्वा शतमेतदग्नौ विपक्कमुत्तीर्य्य ततः सुशीते।
कटुत्रिकञ्च द्विपलप्रमाणं पलानि षट् पुष्परसस्य तत्र॥ ६८॥
क्षिपेच्चतुर्जातपलं यथाऽग्नि प्रयुज्यमानो विधिनाऽवलेहः।
वातात्मकं पित्तकफात्मकञ्च द्विदोषकासानपि यांस्त्रिदोषान्॥ ६९॥
क्षयोद्भवञ्च क्षतजञ्च हन्यात् सपीनसश्वाससुरःक्षतञ्च।
यक्ष्माणमेकादशरूपमुग्रं भृगूपदिष्टं हि रसायनं स्यात्॥ ७०॥

इति कास-चिकित्सा।

---

कषायो यदा भवति, तदा तं कषायं पूतं कृत्वा, तत्र हरीतकीशतं गुड़तुलाञ्च दत्त्वा पुनः पचेदिति योज्यम्। यवानाञ्च स्विन्नता चतुर्भागावशिष्टकषाये एव भवतीति कृत्वा चतुर्भागावशिष्टमेव कषायं कुर्वन्ति; अन्ये त्वष्टभागावशिष्ट कषायमेवाहुः; तन्न, सुश्रुतसंवादात्। स्विन्नहरीतकीशतस्य वंशशलाकया कृतच्छिद्रस्य भर्जनार्थं घृत-तैलयोः कुड़वे पृथक् द्वैगुण्याच्च पृथगष्टपलमाने। भर्जनन्तु अवयवदार्ढ्यार्थम्। तन्त्रान्तरे चात्र मधुनश्च पलाष्टकमेवोक्तम्। तुल्यमानत्वेऽपि घृतमधुनोर्द्रव्यान्तरयोगान्न विरुद्धत्वम्। अवतारणसमये पिप्पलीचूर्णकुड़वं प्रक्षेप्यम्। लिह्यादिति—प्रकृतलेहं लिह्यात, द्वे चाभये खादेदिति योज्यम्। अत्र यद्यपि लेहस्य मानं नोक्तं तथाऽपि सुश्रुतसंवादात् कर्षमानं बोध्यम्। धन्यमिति प्रभावात्, किंवा धनार्जनहेतुः, नैरुज्यसाधकत्वात्॥ ६१—६६॥

# अथ हिक्काश्वास-चिकित्सा ।

प्रथमं स्वेदादेः कर्त्तव्यतानिर्देशः ।—

हिक्काश्वासातुरे पूर्वं तैलाक्ते स्वेद इष्यते ।
स्निग्धैर्लवणयोगैश्च मृदु वातानुलोमनम् ॥
ऊर्द्ध्वाधःशोधनं शक्ते दुर्बले शमनं मतम् ॥ १ ॥

कोलमज्जादि षड़वलेहाः ।—

कोलमज्जाऽञ्जनं लाजास्तिक्ता काञ्चनगैरिकम् ।
कृष्णा धात्री सिता शुण्ठी कासीसं दधिनाम च ॥ २ ॥
पाटल्याः सफलं पुष्पं कृष्णा खर्जूरमस्तकम् ।
षड़ेते पादिका लेहा हिक्काघ्ना मधुसंयुताः ॥ ३ ॥

मधुकादिनस्यत्रयम् ।—

मधुकं मधुसंयुक्तं पिप्पली शर्कराऽन्विता ।
नागरं गुड़संयुक्तं हिक्काघ्नं नावनत्रयम् ॥ ४ ॥

मक्षिकाशकृदादिनस्यत्रयम् ।—

स्तन्येन मक्षिकाविष्ठा-नस्यं वाऽलक्तकाम्बुना ।
योज्यं हिक्काभिभूताय स्तन्यं वा चन्दनान्वितम् ॥ ५ ॥

---

समूलेत्यादि ।—व्याघ्रीहरीतक्यां कटुत्रिकं प्रत्येकं पलद्वयम् । चतुर्जातपलमिति मिलित्वा पलम् ॥ ६७—७० ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां कास-चिकित्साविवृतिः ।

———

तुल्यनिदानत्वात् कासानन्तरं हिक्काश्वासचिकित्सामाह, हिक्काश्वासातुरे इत्यादि ।—तैलाक्ते इति—लवणसंयोगैः सह तैलाक्ते इति योज्यं, तेन सैन्धवसंयुक्तेन तैलेनाभ्यक्ते इत्यर्थः । स्निग्धैरिति—स्निग्धैर्द्रव्यैः स्वेद इति योज्यं, वाग्भटसंवादात् । मृदु वातानुलोमनमिति ऊर्द्ध्वाधःशोधनस्य विशेषणं, वाग्भटसंवादात्; किंवा लवणयोगैरुपलक्षितं शोधनमिति योज्यम् ॥ १ ॥

शमनमाह, कोलेत्यादि ।—कोलमज्जा बदरास्थिमज्जा । अञ्जनमत्र सौवीराञ्जनम् । तिक्ता कटुकी । काञ्चनगैरिकमिति—उत्तमलोहितगैरिकम् । कासीसं धातुकासीसम्; कांस्यमाक्षिकमित्यन्ये । दधिनाम कपित्थफलम् ॥ २-३ ॥

मातुलुङ्गप्रयोगः शुण्ठीचीरञ्च।—

मधुसौवर्चलोपेतं मातुलुङ्गरसं पिबेत्।
हिक्कार्त्तश्च पयश्छागं हितं नागरसाधितम्॥ ६॥

कणादिचूर्णम्।—

कणाऽऽमलकशुण्ठीनां चूर्णं मधुसितायुतम्।
मुहुर्मुहुः प्रयोक्तव्यं हिक्काश्वासनिवर्हणम्॥ ७॥

भार्ग्यादिचूर्णं नागरादिचूर्णञ्च।—

हिक्काश्वासी पिबेत् भार्गीं सविश्वामुष्णवारिणा।
नागरं वा सिताभार्गी-सौवर्चलसमन्वितम्॥ ८॥

शृङ्ग्यादिचूर्णम्।—

शृङ्गीकटुत्रिकफलत्रयकण्टकारी-
भार्गी सपुष्करजटा लवणानि पञ्च।
चूर्णं पिबेदशिशिरेण जलेन हिक्का-
श्वासोर्द्ध्ववातकसनारुचिपीनसेषु॥ ९॥

अभयादि-पौष्करादिकल्कद्वयम्।—

अभयानागरकल्कं पौष्करयावशूकमरिचकल्कं वा।
तोयेनोष्णेन पिबेत् श्वासी हिक्की च तच्छान्त्यै॥ १०॥

कासे श्वासे च पञ्चकम्।—

अमृतानागरफञ्जी-व्याघ्रीपर्णासमाधितः क्वाथः।
पीतः सकणाचूर्णः कासश्वासौ निहन्त्याशु॥ ११॥

कासे श्वासे च दशमूलीक्वाथः।—

दशमूलीकषायस्तु पुष्करेणावचूर्णितः।
कासश्वासप्रशमनः पार्श्वहृच्छूलनाशनः॥ १२॥

---

मधुकमित्यादि।—मधुकमित्यादि सौवर्चलान्तं स्पष्टम्॥ ४—८॥

शृङ्गीत्यादि।—पुष्करजटा पुष्करमूलम्॥ ९॥

अभयेत्यादि।—योगद्वयं स्पष्टम्॥ १०॥

अमृतेत्यादि।—फञ्जी ब्रह्मयष्टिः॥ ११॥

कुलत्थादिः।—

कुलत्थनागरव्याघ्री-वासाभिः क्वथितं जलम्।
पीतं पुष्करसंयुक्तं हिक्काश्वासनिवर्हणम् ॥ १३ ॥

श्वासे गुड़तैललेहः।—

गुड़ं कटुकतैलेन मिश्रयित्वा समं लिहेत्।
त्रिसप्ताहप्रयोगेण श्वासं निर्मूलतो जयेत् ॥ १४ ॥

श्वासे शृङ्ग्यादिचूर्णम्।—

शृङ्गीमहौषधकणाघनपुष्कराणां
चूर्णं शटीमरिचशर्करया समेतम्।
क्वाथेन पीतममृताद्वषपञ्चमूल्याः
श्वासं त्र्यहेण शमयेदतिदोषमुग्रम् ॥ १५ ॥

श्वासे हरिद्रादिलेहः।—

हरिद्रां मरिचं द्राक्षां गुड़ं रास्नां कणां शटीम्।
जह्यात् तैलेन विलिहन् श्वासान् प्राणहरानपि ॥ १६ ॥

मयूरपुच्छादिः लेहः।—

हिक्कां हरति प्रबलां प्रबलं श्वासञ्च नाशयत्याशु।
शिखिपुच्छभूतिपिप्पलीचूर्णं मधुमिश्रितं लीढ़म् ॥ १७ ॥

कलिफलावलेहः।—

कर्षं कलिफलचूर्णं लीढ़ञ्चात्यन्तमिश्रितं मधुना।
अचिराद्धरति श्वासं प्रबलामुद्धंसिकाञ्चैव ॥ १८ ॥

---

दशमूलीत्यादि।—दशमूलीकषाय इत्यादि जयेदित्यन्तं स्पष्टम् ॥ १२—१४ ॥

शृङ्गीत्यादि।—शृङ्ग्यादीनां चूर्णं क्वाथ्यात् पादिकं, प्रक्षेप्यत्वात्। अत्र पञ्चमूली महती, वातकफहन्तृत्वादित्याहुः ॥ १५ ॥

हरिद्रामित्यादि सुश्रुतस्य।—स्पष्टमिदम् ॥ १६ ॥

हिक्कामित्यादि।—शिखी मयूरस्तत्पुच्छस्य भूतिर्भस्म, तथा पिप्पलीचूर्णञ्च समं मधुना लेह्यम् ॥ १७ ॥

कर्षमित्यादि।—कलिफलं विभीतकम् ॥ १८ ॥

हिंस्राद्यं घृतम्।—

हिंस्राविड़ङ्गपूतीक-त्रिफलाव्योषचित्रकैः।
हिचोरं सर्पिषः प्रस्थं चतुर्गुणजलान्वितम्॥ १९॥
कोलमात्रैः पचेत् तद्धि श्वासकासौ व्यपोहति।
अर्शांस्यरोचकं गुल्मं शकृद्भेदं क्षयं तथा॥ २०॥

तेजोवत्याद्यं घृतम्।—

तेजोवत्यभया कुष्ठं पिप्पली कटुरोहिणी।
भूतीकं पौष्करं मूलं पलाशश्चित्रकं शटी॥ २१॥
सौवर्चलं तामलकी सैन्धवं विल्वपेशिका।
तालीशपत्रं जीवन्ती वचा तैरक्षसम्मितैः॥ २२॥
हिङ्गुपादैर्घृतप्रस्थं पचेत् तोयचतुर्गुणे।
एतत् यथाबलं पीत्वा हिक्काश्वासौ जयेन्नरः॥
शोथानिलार्शोग्रहणी-हृत्पार्श्वरुज एव च॥ २३॥

भार्गीगुडः।—

शतं सङ्गृह्य भार्ग्यास्तु दशमूल्यास्तथाऽपरम्।
शतं हरीतकीनाञ्च पचेत् तोयचतुर्गुणे॥ २४॥
पादावशेषे तस्मिंस्तु रसे वस्त्रपरिस्रुते।
आलोड्य च तुलां पूतां गुड़स्य त्वभयां ततः॥ २५॥

---

हिंस्रेत्यादि सुश्रुतस्य।—हिंस्रा कालाशोकड़ा। पूतीकं नाटाकरञ्जस्य मूलम्। कोलमात्रैरिति—यद्यपि कोलशब्देन माषकाष्टकं कर्षश्चोच्यते; यदाह चक्रपाणिः,—"शाणकाभ्यान्तु जानीयात् कोलं बटकदङ्क्षणम्। ताभ्यां कर्षः पिचुश्चाक्षं स्वर्णं पाणितलं तथा। विड़ालपदकं कोलं किञ्चिच्च समुदाहृतम॥" इति, तथाऽपि कर्ष एवात्र ग्राह्यः, अन्यथा कल्कस्याल्पीयस्त्वं स्यात्। वृद्धकाश्यपेनाप्येवमुक्तं, तस्मात् साध्वीयं व्याख्येति॥ १९।२०॥

तेजोवतीत्यादि चरकस्य।—तेजोवती चविका। भूतीकं कत्तृणम्। हिङ्गुपादैरित्येकभागमपेक्ष्य, तेन हिङ्गुनश्चत्वारो माषकाः॥ २१—२३॥

शतमित्यादि।—भार्गीगुड़े दशमूल्यपि मिलिता। तोये चतुर्गुणे इति—

पुनः पचेत् मृद्वग्नौ यावल्लेहत्वमागतम् ।
शीते तु मधुनश्चात्र षट् पलानि प्रदापयेत् ॥ २६ ॥
त्रिकटु त्रिसुगन्धञ्च पलिकानि पृथक् पृथक् ।
कर्षद्वयं यवक्षारं सञ्चूर्ण्य प्रक्षिपेत् ततः ॥ २७ ॥
भक्षयेदभयामेकां लेहस्यार्द्धपलं लिहेत् ।
श्वासं सुदारुणं हन्ति कासं पञ्चविधं तथा ॥ २८ ॥
स्वरवर्णप्रदो ह्येष जठराग्नेश्च दीपनः ।
पलोल्लेखागते माने न द्वैगुण्यमिहेष्यते ॥
हरीतकीशतस्यात्र प्रस्थत्वादाढकं जलम् ॥ २९ ॥

कुलत्थगुडः ।—

कुलत्थं दशमूलञ्च तथैव द्विजयष्टिका ।
शतं शतञ्च सङ्गृह्य जलद्रोणे विपाचयेत् ॥ ३० ॥
पादावशेषे तस्मिंस्तु गुडस्यार्द्धतुलां क्षिपेत् ।
शीतीभूते च पक्वे च मधुनोऽष्टौ पलानि च ॥ ३१ ॥
षट् पलानि तुगाक्षीर्य्याः पिप्पल्याश्च पलद्वयम् ।
त्रिसुगन्धिसुगन्धं तं खादेदग्निबलं प्रति ॥ ३२ ॥

---

अकृतद्वैगुण्यात् दशमूलीशतं भार्गीशतञ्च मिलित्वा जलस्य शरावशतं देयमित्याहुः । "हरीतकीशतस्यात्र प्रस्थत्वादाढकं जलम्" इति वक्ष्यति, तेन जलस्य षोडश-शरावाधिकशरावशतमित्यर्थः । वृन्दस्तु—"हरीतकीशतैकस्य वारिप्रस्थमिहाधिकम्" इत्याह । वृद्धास्तु सम्यक् वीर्य्याधानार्थमत्र द्रवस्य द्वैगुण्यमिच्छन्ति, तन्मते जलशराव-शतद्वयम्, अनेनैव हरीतक्या अपि पाकः; व्यवहारस्तु प्रायश्चतुर्गुणजलेना-कृतद्वैगुण्येन ॥ २४—२९ ॥

कुलत्थमित्यादि ।—जलद्रोणे इति प्रतिशतमित्यर्थः, एतत्तु चक्रमतम् । वृन्द-स्त्वाह—"योगसन्दर्शनादत्र वृद्धवैद्योपदेशतः । जलं चतुर्गुणं देयमल्पत्वात् द्रोण-वारिणः ॥ मानसान्निध्यसंवादात् द्विपलं त्रिसुगन्धिनः ॥" इति । योगसन्दर्शनादिति—समानद्रव्यप्रमाणकुलत्थगुडान्तरे चतुर्गुणजलसन्दर्शनादित्यर्थः । इदन्तु न गृह्यते, द्रोणपदस्य साक्षादुपादानात्, तत्र चतुर्गुणत्वकल्पने द्रोणपदस्य वैयर्थ्यं स्यात् ।

श्वासं कासं ज्वरं हिक्कां नाशयेत् तमकं तथा।
प्रतिशतं द्रोणनियमात् ज्ञेयं द्रोणत्रयन्त्विह ॥ ३३ ॥

इति हिक्काश्वास-चिकित्सा।

---

## अथ स्वरभेद-चिकित्सा।

दोषभेदात् कवलत्रयम्।—

वाते सलवणं तैलं पित्ते सर्पिः समाक्षिकम्।
कफे सक्षारकटुकं क्षौद्रं कवड़ इष्यते ॥ १ ॥
गले तालुनि जिह्वायां दन्तमूलेषु चाश्रितः।
तेन निष्कृष्यते श्लेष्मा स्वरश्चास्य प्रसीदति ॥ २ ॥

वातज-पित्तजयोः चिकित्साविशेषः।—

आद्ये कोष्णं जलं पेयं जग्ध्वा घृतगुड़ौदनम्।
क्षीरानुपानं पित्तोत्थे पिबेत् सर्पिरतन्द्रितः ॥ ३ ॥

कफजे पिप्पल्यादिः।—

पिप्पलीं पिप्पलीमूलं मरिचं विश्वभेषजम्।
पिबेन्मूत्रेण मतिमान् कफजे स्वरसङ्क्षये ॥ ४ ॥

---

पिप्पलीपलद्वयसान्निध्यात् विसुगन्धि च मिलित्वा पलद्वयं तथा तन्त्रान्तरसंवादाच्च तथा एतज्जातीयकुलत्थगुड़ान्तरे—"मधुनः कुड़वं दद्यात् त्रिसुगन्धिपलद्वयम्" इति ॥ ३०—३३ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां हिक्काश्वास-चिकित्साविवृतिः।

---

प्राणोदानदुष्टिसाधर्म्यात् हिक्काश्वासानन्तरं स्वरभेदचिकित्सामाह, वाते इत्यादि।—तैलमव कटुष्णं कृत्वा कवलः कार्य्य इत्याहुः। क्षारो यवक्षारः ॥ १।२ ॥

आद्ये इत्यादि।—आद्ये इति—वातस्वरभेदे। पिबेत् सर्पिरिति यद्यपि सामान्येनैवोक्तं, तथाऽपि सुश्रुते श्वासोक्तं वासाघृतं पित्तकासोक्तं वा विदारीगन्धोत्पलश्यारिवेत्यादिनोक्तं ग्राह्यमित्याहुः ॥ ३ ॥

पिप्पलीमित्यादि।—पिप्पल्यादिचूर्णं गोमूत्रेण पेयम्। स्वरसङ्क्षये इति—स्वरभेदे ॥ ४ ॥

मेदोजे क्षयजे त्रिदोषजे च चिकित्साविधिः।—

स्वरोपघाते मेदोजे कफवद्विधिरिष्यते।
क्षयजे सर्वजे चापि प्रत्याख्याय समाचरेत् ॥ ५ ॥

चव्यादं चूर्णम्।—

चव्याम्लवेतसकटुत्रिकतिन्तिड़ीक-
तालीशजीरकतुगादहनैः समांशैः।
चूर्णं गुड़प्रमृदितं त्रिसुगन्धियुक्तं
वैस्वर्य्यपीनसकफारुचिषु प्रशस्तम् ॥ ६ ॥

योगत्रयम्।—

तैलाक्तं स्वरभेदे वा खदिरं धारयेन्मुखे।
पथ्यां वा पिप्पलीयुक्तां संयुक्तां नागरेण वा ॥ ७ ॥

अजमोदादि चूर्णम्।—

अजमोदां निशां धात्रीं क्षारं वह्निं विचूर्ण्य च।
मधुसर्पिर्युतं लीढ्वा स्वरभेदं व्यपोहति ॥ ८ ॥

कलितरुफलादिचूर्णम् आमलकचूर्णञ्च।—

कलितरुफलसिन्धुकणाचूर्णं तक्रेण लीढ़मपहरति।
स्वरभेदं गोपयसा पीतं वाऽऽमलकचूर्णञ्च ॥ ९ ॥

---

स्वरोपघाते इत्यादि सुश्रुतस्य।—कफवदिति—कफजस्वरभेदवत्। क्षयजे सर्वजे चापीत्यपिशब्दबलात् मेदोजकफजयोः परिग्रहः। तन्त्रान्तरे हि अनयोरप्यसाध्यत्वमुक्तम्; यथा—"क्षीणस्य वृद्धस्य कृशस्य वाऽपि चिरोत्थितो यश्च सहोपजातः। मेदस्विनः सर्वसमुद्भवश्च स्वरामयो यो न स सिद्धिमेति ॥" (सु० उ० ५३ अ०) क्रिया चात्र क्षयजे क्षयकासोक्ता, सर्वजे च प्रत्येकदोषोक्तैव मिलिता कार्य्या ॥ ५ ॥

चव्याम्लवेतसेत्यादि।—तिन्तिड़ीकं महार्द्रकम्। तुगा वंशलोचना। दहनः चित्रकः। गुडोऽत्र समुदितचूर्णसमः। त्रिसुगन्धि प्रत्येकमेकभागापेक्षया चतुर्थांशेनेति केचित्, एकभागसमं मिलितमित्यन्ये ॥ ६ ॥

तैलाक्तमित्यादि।—श्लोकद्वयं स्पष्टम् ॥ ७।८ ॥

कलितरुफलेत्यादि।—कलितरुफलं विभीतकफलम्। तक्रेणेत्यत्र चुक्रेणेति पाठान्तरम् ॥ ९ ॥

बदरीपत्रादिलेहः।—

बदरीपत्रकल्कं वा घृतभृष्टं ससैन्धवम्।
स्वरोपघाते कासे च लेहमेनं प्रयोजयेत्॥ १०॥

उच्चभाषणजस्वरभेदे काकोल्यादिक्षीरम्।—

शर्करामधुमिश्राणि शृतानि मधुरैः सह।
पिबेत् पयांसि यस्योच्चैर्वदतोऽभिहतः स्वरः॥ ११॥

कण्टकारी घृतम्।—

व्याघ्रीस्वरसविपक्वं रास्नावाट्यालगोक्षुरव्योषैः।
सर्पिः स्वरोपघातं हन्यात् कासञ्च पञ्चविधम्॥ १२॥

स्वरसाभावे तदनुकल्पः।—

शुष्कद्रव्यमुपादाय स्वरसानामसम्भवे।
वारिण्यष्टगुणे साध्यं ग्राह्यं पादावशेषितम्॥ १३॥

भृङ्गराजाद्यं घृतम्।—

भृङ्गराजामृतावल्लीवासकदशमूलकासमर्दरसैः।

---

बदरीपत्रकल्कं वेत्यादि।—बदरीपत्रं ससैन्धवं बहुघृते भृष्ट्वा तेनैव घृतेनालोड्य लिहेत्॥ १०॥

शर्करेत्यादि सुश्रुतस्य।—मधुरैरिति—काकोल्यादिगणैः। पयःसाधनमिह क्षीरपाकपरिभाषया॥ ११॥

व्याघ्रीत्यादि।—यद्यपि इदं घृतं रास्नेत्यादिना कासेऽप्युक्तं, तथाऽप्यत्र स्वरभेदहन्तृत्वप्रतिपादनार्थं पुनरप्युक्तम्॥ १२॥

स्वरसस्याभावे क्वाथग्रहणमाह, शुष्कद्रव्यमित्यादि।—पादः चतुर्थभागः। अत्र केचित् स्वरसानुकल्पत्वादष्टावशिष्ट एव क्वाथो युक्तो गुरुत्वादिति पादशब्दस्य मूलवचनत्वेनावापि पादशब्दोऽयं मूलीभूतमाद्यभागमाह, तेन यद्भागापेक्षया अष्टगुणत्वं तावानेव भागः स्थापनीय इत्याहुः। अन्ये तु—पादावशेषितमित्यत्र भागावशेषितमिति पठित्वा भागशब्दोऽवाष्टमो भाग इत्याहुः। व्यवहारस्तु चतुर्थभागेनैव॥ १३॥

सर्पिः सपिप्पलीकं सिद्धं स्वरभेदकासजिन्मधुना ॥ १४ ॥

इति स्वरभेद-चिकित्सा।

---

## अथारोचक-चिकित्सा।

दोषादिभेदेन वस्त्याद्युपदेशः।—

वस्तिं समीरणे पित्ते विरेकं वमनं कफे।
कुर्य्यात् हृद्यानुकूलानि हर्षणञ्च मनोघ्नजे ॥ १ ॥

वातजे कृष्णादि चूर्णम्।—

वान्तो वचाऽद्भिरनिले विधिवत् पिबेत्तु
स्नेहोष्णतोयमदिराऽन्यतमेन चूर्णम्।
कृष्णाविडङ्गयवभस्महरेणुभार्गी-
रास्नैलहिङ्गुलवणोत्तमनागराणाम् ॥ २ ॥

पित्तजे सैन्धवादि लेहः।—

पैत्ते गुड़ाम्बुमधुरैर्वमनं प्रशस्तं

---

भृङ्गराजेत्यादि।—भृङ्गराजादीनां क्वाथश्चतुर्गुणः, पिप्पल्याः पादिकः कल्कः, सिद्धशीते तु घृतात् पादिकं मधु प्रक्षेप्यम् ॥ १४ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां स्वरभेद-चिकित्सा-विवृतिः।

---

अरोचकस्याप्यूर्द्ध्वगविकारत्वेन स्वरभेदानन्तरमरोचकमाह, वस्तिमित्यादि।—हर्षणञ्चोपलक्षणं, तेन कामादिजे भयादिकमपि ज्ञेयम्। मनोघ्नजे इति—मनोवेदनाहेतुशोकादिजे ॥ १ ॥

वान्त इत्यादि सुश्रुतस्य।—विधिवत् वान्तः कृतवमनः। अनिले इति—कारणे कार्य्योपचारात् अनिलजे; अनिलजेऽपि वमनमिह कफस्थानगतत्वाद्बोद्धव्यम्। विधिवदित्यनेन सम्यक्पेयादिक्रमञ्च बोधयति, तेन वान्तः सन् पेयादिक्रमेण जातबलः सन् चूर्णं पिबेत् मद्यसेति। स्नेहस्तैलमिह वातहन्तृत्वादिति वृन्दटिप्पनी; तन्न, घृतमेव युक्तं, वक्ष्यमाणवाग्भटवचनात्। यवभस्म इति—यवक्षारः। एलम् एलबालुकमिति कार्त्तिकः; एलेत्यन्ये, युक्तञ्चैतत् वाग्भटसंवादात्। लवणोत्तमं सैन्धवम् ॥ २ ॥

पैत्ते इत्यादि।—गुड़ाम्बुमधुरैरिति—गुड़ाम्बुयोगान्मधुरैर्वमनयोगैः; अत्र मदन-

लेहःससैन्धवसितामधुसर्पिरिष्टः ॥ ३ ॥

कफजे सर्वजे च आरग्वधकाथः आतिदेशिकचिकित्साविधिश्च।—

निम्बाम्बुच्छर्दितवतः कफजे तु पानं

राजद्रुमाम्बु मधुना सह दीप्यकाढ्यम्।

चूर्णं यदुक्तमथवाऽनिलजे तदेव

सर्वैश्च सर्वकृतमेवमुपक्रमेच्च ॥ ४ ॥

अरोचकचतुष्टये कुष्ठादिकवलचतुष्टयम्।—

कुष्ठसौवर्चलाजाजी-शर्करामरिचं विड़म्।

धात्र्येलापद्मकोशीर-पिप्पलीचन्दनोत्पलम् ॥ ५ ॥

लोध्रं तेजोवती पथ्या त्र्यूषणं सयवाग्रजम्।

आर्द्रदाड़िमनिर्य्यासश्चाजाजीशर्करायुतः ॥ ६ ॥

सतैलमाक्षिकाश्चैते चत्वारः कवड़ग्रहाः।

चतुरोऽरोचकान् हन्युर्वाताद्येकजसर्वजान् ॥ ७ ॥

मुखशोधनार्थं त्वगादियोगपञ्चकम्।—

त्वङ्मुस्तमेलाधान्यानि मुस्तमामलकानि च।

---

फलयोगोऽपि ज्ञेयः, केवलगुडोदकेन वमनस्यासम्भवात्। अन्ये तु—मधुरशब्देनाष्टवर्गमाहुः। अपरे तु—मधुरैरित्यत्र मधुकैरिति पठन्ति ॥ ३ ॥

निम्बेत्यादि।—निम्बाम्बुच्छर्दितवत इति—“आगमशासनमनित्यम” इति नुगागमाभावादत्र केवलम्छकारः, तेन न छन्दोभङ्गः। चन्द्रटस्तु “निम्बाम्बुवामितवतः” इति पठति। राजद्रुमाम्बु मधुनेति—राजद्रुम आरग्वधस्तस्य फलक्वाथो मधुना सहित इत्यर्थः; कार्त्तिकस्तु राजद्रुमशब्देन आरग्वधादिगणमाह, कफाधिक्यऽस्यैवोचितत्वादिति, किन्तु वाग्भटे एवं नोक्तं, तेन आरग्वधादिगणग्रहणं न प्रमाणमिति। दीप्यकाढ्यमिति—यमानीचूर्णमत्र प्रक्षेप्यम्। चूर्णं यदुक्तमथवेति—अनिलजे यत् चूर्णमुक्तं कणादिनागरान्तं तदेवेह राजद्रुमाम्बुना पिबेत्। अयञ्च विधिर्वातानुबन्धे सति ज्ञेयः। सर्वैश्च सर्वकृतमिति—प्रत्येकदोषोक्तं मेलयित्वा सर्वदोषजमरोचकमुपाचरेदित्यर्थः ॥ ४ ॥

कुष्ठेत्यादि चरकस्य।—चत्वारो योगाः स्पष्टाः ॥ ५—७ ॥

त्वक् च दार्वी यमान्यश्च पिप्पल्यस्तेजोवत्यपि ॥ ८ ॥
यमानी तिन्तिड़ीकञ्च पञ्चैते मुखशोधनाः।
श्लोकपादैरभिहिताः सर्वारोचकनाशनाः ॥ ॥ ९ ॥

अम्लीकादिकवलः।—

अम्लीकागुड़तोयञ्च त्वगेलामरिचान्वितम्।
अभक्तच्छन्दरोगेषु शस्तं कवड़धारणम् ॥ १० ॥

कारव्यादिगुड़िका।—

कारव्यजाजीमरिचं द्राक्षावृक्षाम्लदाड़िमम्।
सौवर्चलं गुड़ं क्षौद्रं सर्वारोचकनाशनम् ॥ ११ ॥

मुखधावनार्थं त्र्यूषणादिचूर्णम्।—

त्र्योषणानि त्रिफला रजनीद्वयञ्च
चूर्णीकृतानि यवशूकविमिश्रितानि।
क्षौद्रान्वितानि वितरेन्मुखधावनार्थ-
मन्यानि तिक्तकटुकानि च भेषजानि ॥ १२ ॥

बिट्लवणप्रयोगः।—

बिट्चूर्णमधुसंयुक्तो रसो दाड़िमसम्भवः।
असाध्यमपि संहन्यादरुचिं वक्त्रधारितः ॥ १३ ॥

---

त्वगुक्तमित्यादि।—त्वक् गुडत्वक्। तेजोवती चवी। एषां चूर्णेन जिह्वाघर्षणं कार्य्यमित्याहुः। मुखशोधना इति—मुखगतदोषशोधनाः ॥ ८।९ ॥

अम्लीकेत्यादि।—अम्लीका पक्वतिन्तिड़ीफलम्, एतच्च पुरातनं ग्राह्यमित्याहुः। त्वगेलादीनाञ्च कटुत्वसौगन्ध्यापादकं मानम् ॥ १० ॥

कारवीत्यादि।—कारवी कृष्णजीरकम्। वृक्षाम्लं महार्द्रकम्। गुड़िका पञ्चपणमाषकमाना मुखे धार्य्येत्याहुः ॥ ११ ॥

त्र्योषणेत्यादि सुश्रुतस्य।—मुखधावनार्थमिति—घर्षणेन मुखशोधनार्थम्। अन्यानि तिक्तकटुकानि च भेषजानीति त्वगेलादिसहितानि भवन्ति; यदुक्तं—"त्वगेलासहितं सर्वं कटुतिक्तमरोचकी। लिह्यात् क्षौद्रेण संयुक्तमल्पमल्पं पुनः पुनः॥" इति ॥ १२ ॥

बिट्चूर्णेत्यादि।—स्पष्टम् ॥ १३ ॥

यमानीषाड़वः ।—

यमानी तिन्तिड़ीकञ्च नागरञ्चाम्लवेतसम् ।
दाड़िमं बदरञ्चाम्लं कार्षिकाण्युपकल्पयेत् ॥ १४ ॥
धान्यसौवर्चलाजाजी-वराङ्गञ्चार्द्धकार्षिकम् ।
पिप्पलीनां शतञ्चैकं द्वे शते मरिचस्य च ॥ १५ ॥
शर्करायाश्च चत्वारि पलान्येकत्र चूर्णयेत् ।
जिह्वाविशोधनं हृद्यं तच्चूर्णं भक्तरोचनम् ॥ १६ ॥
हृत्पीड़ापार्श्वशूलघ्नं विबन्धानाहनाशनम् ।
कासश्वासहरं ग्राहि ग्रहण्यर्शोविकारनुत् ॥ १७ ॥

कलहंसम् ।—

अष्टादश शिग्रुफलानि दश मरिचानि विंशतिश्च पिप्पल्यः ।
आर्द्रकपलं गुड़पलं प्रस्थत्रयमारनालस्य ॥ १८ ॥
एतद्धिड़्लवणयुतं खजाहतं सुरभिगन्धाढ्यम् ।
व्यञ्जनसहस्रघाति ज्ञेयं कलहंसकं नाम ॥ १९ ॥

इत्यरोचक-चिकित्सा ।

---

## अथ छर्दि-चिकित्सा ।

दोषविशेषे लङ्घनशोधनाद्युपदेशः ।—

आमाशयोत्क्लेशभवा हि सर्वा-

---

यमानीत्यादि ।—यमानीषाड़वे अम्लमिति बदरविशेषणम् । वराङ्गं गुडत्वक् । पिप्पलीनां शतमित्याकृतिमानात्; एवं मरिचस्यापि शतद्वयम् । एतच्चूर्णं मुखे धृत्वा शनैः शनैर्गलाधःकरणीयमित्युपदिशन्ति । षाड़व इति—मधुराम्लयोगस्य संज्ञा, यमान्योपलक्षितः षाड़वो यमानीषाड़वः ॥ १४—१७ ॥

अष्टादशेत्यादि ।—शिग्रुफलानि शोभाञ्जनबीजानि । सुरभिगन्धाढ्यं चातुर्जातकाढ्यमित्यर्थः । स्वरवहानाड़ीशुद्धिकरणत्वेन कलस्वरजनकत्वेन च कलहंससंज्ञा ॥१८।१९॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायाम् अरोचक-चिकित्साविवृतिः ।

---

अरोचकवत् पञ्चविधत्वात् तथा छर्द्यामयेऽप्यरुचेः सम्भवादरोचकानन्तरं छर्दि-

श्छर्द्यो मता लङ्घनमेव तस्मात् ।
प्राक् कारयेन्मारुतजां विमुच्य
संशोधनं वा कफपित्तहारि ॥ १ ॥

वातजायां योगद्वयम् ।—

हन्यात् क्षीरोदकं पीतं छर्दिं पवनसम्भवाम् ।
ससैन्धवं पिबेत् सर्पिर्वातच्छर्दिनिवारणम् ॥ २ ॥

वातजायां मुद्गादियूषः पञ्चमूलीसिद्धा यवागूश्च ।—

मुद्गामलकयूषं वा ससर्पिष्कं ससैन्धवम् ।
यवागूं मधुमिश्रां वा पञ्चमूलीकृतां पिबेत् ॥ ३ ॥

पित्तजायाम् अवस्थाविशेषे वमनविरेचनोपदेशः ।—

पित्तात्मिकायान्त्वनुलोमनार्थं
द्राक्षाविदारीक्षुरसैस्त्रिवृत् स्यात् ।

---

चिकित्सितमुच्यते, आमाशयेत्यादि चरकस्य।—आमः आमरसः, तस्याशयः आमाशयः, तत्रोत्क्लेशः दोषाणामुदीरणं, तद्धेतुकाश्छर्दयः ; किंवा आमाशयस्था-शयविशेषस्योत्क्लेश इति। हि-शब्दो हेतौ, यस्मादामाशयोत्क्लेशेन एताः छर्दयः, आमाशयसमुत्थे च रोगे लङ्घनमुक्तं, तस्मादित्यर्थः। उत्सर्गमुक्त्वा अपवादमाह, प्राक् कारयेदित्यादिना, यद्यपि वातजायामप्यामाशयसम्बन्धेन कफोऽप्यस्ति लङ्घन-साध्यश्च, तथाऽपि वातस्य महाऽत्ययस्याशुकारिणो लङ्घनशोधनाभ्यां वृद्धिर्महाऽत्ययकरी स्यादिति भावः। अत्र लङ्घनमल्पदोषविषयं, शोधनञ्च बहुदोषविषयमिति। संशोधन-शब्देनात्र वमनविरेचनयोरेव ग्रहणम्; उत्तरत्रापि वमनस्य वक्ष्यमाणत्वात्। अन्ये त्वत्र संशोधनशब्देन प्रतिमार्गहरणतया अत्यर्थहितं विरेचनमेव वर्णयन्ति ॥ १ ॥

हन्यादित्यादि सुश्रुतस्य।—क्षीरोदकमित्यत्र क्षीरघृतमिति डल्लनः पठति, व्याचष्टे च—क्षीरमथनादुद्भूतं घृतं क्षीरयुक्तं वा घृतं क्षीरघृतमिति; किन्तु वाग्भटे—"घृतं तुल्याम्बु वा पयः" (चि० ६ अ०) इत्युक्तं, तेन क्षीरोदकमिति पाठः। ससैन्धवं पिबेत् सर्पिरित्यत्र पक्वं घृतम् ॥ २ ॥

मुद्गेत्यादि।—मुद्गामलकयूषं वा ससर्पिष्कमिति—सर्पिरिह यूषसन्तलनार्थम्। यवागूमित्यादि सुश्रुतस्य।—पञ्चमूली स्वल्पा इति चक्रः, महतीति गयदासः, वातजायामप्यामाशयसमुत्थितत्वेनानुबन्धरूपस्य कफस्य विद्यमानत्वात् ॥ ३ ॥

पित्तेत्यादि चरकस्य।—त्रिवृदिति द्राक्षादिरसैः प्रत्येकमुपयोज्यम् इत्याहुः।

कफाशयस्थन्त्वतिमात्रवृद्धं
पित्तं जयेत् स्वादुभिरूर्द्धमेव ॥ ४ ॥

शोधनानन्तरं संसर्जनविधिः।—

मुद्गस्य काले मधुशर्कराभ्यां
लाजैश्च मन्थं यदि वाऽपि पेयाम्।
प्रदापयेन्मुद्गरसेन वाऽपि
शाल्योदनं जाङ्गलजै रसैर्वा ॥ ५ ॥

चन्दनामलकीयोगः।—

चन्दनेनाक्षमात्रेण संयोज्यामलकीरसम्।
पिबेत् माक्षिकसंयुक्तं छर्दिस्तेन निवर्त्तते ॥ ६ ॥

चन्दनादि चूर्णम्।—

चन्दनञ्चामृणालञ्च बालकं नागरं वृषम्।
सतण्डुलोदकक्षौद्रः पीतः कल्को वमिं जयेत् ॥ ७ ॥

भृष्टमुद्गक्वाथः।—

कषायो भृष्टमुद्गस्य सलाजमधुशर्करः।
छर्द्यतीसारहृद्दाह-ज्वरघ्नः सम्प्रकाशितः ॥ ८ ॥

---

कफाशयस्थमिति—आमाशयोर्द्ध्वभागस्थम्। स्वादुभिरूर्द्ध्वमेवेति—अन्तरोक्तद्राक्षादिभिरेव। ऊर्द्ध्वमिति—वमनेन हरेदित्यर्थः। अत्रानुक्तमपि मदनफलं वमनयोग्यतया ज्ञेयम्; अन्ये तु—केवलमेव द्राक्षादिरसमाकण्ठं पीत्वा वमनं कार्य्यमित्याहुः ॥४॥

मुद्गस्येत्यादि।—काले इति—सम्यक् बुभुक्षाकाले। यदि वाऽपि पेयामिति मन्दाग्निं प्रति पेया ज्ञेया ॥ ५ ॥

चन्दनेनेत्यादि।—चरकसंवादात् श्वेतचन्दनं ज्ञेयम्। चन्दनकल्कापेक्षया आमलकीरसश्चतुर्गुणः, "पातव्यश्च चतुर्द्रवः" इत्युक्तेः ॥ ६ ॥

चन्दनमित्यादि।—अमृणालम् उशीरम् ॥ ७ ॥

कषाय इत्यादि।—मुद्गं भृष्ट्वा क्वाथविधिना कषायः कार्य्यः, ततो लाजचूर्णादिप्रक्षेपः ॥ ८ ॥

हरीतकीलेहः ।—

हरीतकीनां चूर्णन्तु लिह्यान्माक्षिकसंयुतम् ।
अधोभागीकृते दोषे छर्दिः क्षिप्रं निवर्त्तते ॥ ९ ॥

गुडूच्यादिक्वाथः ।—

गुडूचीत्रिफलाऽरिष्ट-पटोलैः क्वथितं पिबेत् ।
क्षौद्रयुक्तं निहन्त्याशु छर्दिं पित्ताम्लसम्भवाम् ॥ १० ॥

पर्पटक्वाथः ।—

क्वाथः पर्पटजः पीतः सक्षौद्रश्छर्दिनाशनः ॥ ११ ॥

कफजे पिप्पल्यादिक्वाथः ।—

कफात्मिकायां वमनं प्रशस्तं
सपिप्पली-सर्षप-निम्बतोयैः ।
पिण्डीतकैः सैन्धवसम्प्रयुक्तै-
श्छर्द्यां कफामाशयशोधनार्थम् ॥ १२ ॥

कफजे विडङ्गादिचूर्णद्वयम् ।—

विडङ्गत्रिफलाविश्व-चूर्णं मधुयुतं जयेत् ।
विडङ्गप्लवशुण्ठीनामथवा श्लेष्मजां वमिम् ॥ १३ ॥

---

हरीतकीनामित्यादि ।—स्पष्टम् ॥ ९ ॥

गुडूचीत्यादि ।—पित्ताम्लसम्भवामिति—अम्लपित्तसम्भवाम् ॥ १० ॥

क्वाथ इत्यादि ।—स्पष्टम् ॥ ११ ॥

कफात्मिकायामित्यादि ।—सपिप्पलीसर्षपनिम्बतोयैरिति—निम्बवल्कलस्याऽष्टते क्वाथे पिप्पल्यादीनां प्रक्षेप इति वृन्दटिप्पनी । अन्ये तु—तोयशब्देनात्र उष्णोदकमुच्यते, तेन पिप्पल्यादिकल्कमुष्णोदकेन पिबेदित्याहुः ; वाग्भटेऽप्युक्तं—"कफजायां वमेन्निम्ब कृष्णापिण्डीतसर्षपैः । युक्तेन कोष्णतोयेन" ( चि० ६ अ० ) इति । तत्रानुक्तमपि वमनयोग्यत्वेन सैन्धवं बोध्यम् । पिण्डीतको मदनफलम् । कफामाशयशोधनार्थमिति—कफपूर्णाशयशोधनार्थम् ; कफस्यामाशयस्य च शोधनार्थमित्यन्ये ॥ १२ ॥

विडङ्गेत्यादि ।—प्लवं कैवर्त्तमुस्तकम् ॥ १३ ॥

कफजे जाम्बवादि चूर्णद्वयम्।—

सजाम्बवं वा बदरस्य चूर्णं मुस्तायुतां कर्कटकस्य शृङ्गीम्।
दुरालभां वा मधुसम्प्रयुक्तां लिह्यात् कफच्छर्दिविनिग्रहार्थम् ॥१४॥

तर्पणम्।—

तर्पणं वा मधुयुतं तिसृणामपि भेषजम् ॥ १५ ॥

गुडूच्याः शीतः।—

कृतं गुडूच्या विधिवत् कषायं हिमसंज्ञितम्।
तिसृष्वपि भवेत् पथ्यं माक्षिकेण समायुतम् ॥ १६ ॥

शीतकषायविधिः।—

द्रव्यादापोथितात् तोये प्रतप्ते निशि संस्थितात्।
कषायो योऽभिनिर्य्याति स शीतः समुदाहृतः ॥ १७ ॥
षड्भिः पलैश्चतुर्भिर्वा सलिलात् शीतफाण्टयोः।
आप्लुतं भेषजपलं रसाख्यायां पलद्वयम् ॥ १८ ॥

---

सजाम्बवमित्यादि।—जाम्बवं जम्बूफलास्थि। बदरस्य चूर्णमित्यत्र "बदराम्ल-चूर्णम्" ( चि० छर्दि० ) इति चरके पठ्यते, तन्मते अम्लबदरस्यैव चूर्णम्। अन्ये तु—बदरस्य चूर्णमिति पठित्वा बदरास्थिमज्जचूर्णमित्याहुः। मुस्तायुतां कर्कटकस्य शृङ्गीमिति द्वितीयो योगः। दुरालभां वेति तृतीयो योगः। योगेऽपि मधु सम्बध्यते ॥ १४ ॥

तर्पणमित्यादि।—तर्पणं तोयविप्लुताः शक्तवः। तिसृणामिति—पृथक् वातादि-जानाम्, अन्यथा बहुवचनानुपपत्तिः। एतेन त्रिदोषजच्छर्दिहरत्वमस्योक्तं भवति, यतः पृथक् वातादिच्छर्दिभेषजमेव युक्तं सान्निपातिकच्छर्दिभेषजं भवति, चरके तथोक्तत्वात् ॥ १५ ॥

कृतमित्यादि सुश्रुतस्य।—हिमसंज्ञितमिति—शीतकषायसंज्ञितम्। अत्रापि तिसृष्वपि इति पूर्ववत् व्याख्येयम् ॥ १६ ॥

तदर्थमेव कषायविधपरिभाषामाह, द्रव्यादित्यादि।—व्यवहारस्तु प्रायेण भेषजार्द्धपलं जलपलद्वयमिति। रसाख्यायां पलद्वयमिति—स्वरसाभावे यत्र भेषजचूर्णमुष्णोदके प्रक्षिप्य स्वरसानुकल्पः क्रियते, तस्मिन् क्वाथे कर्त्तव्ये भेषजस्य पलद्वयं दत्त्वा स्वरसानुकल्पः कार्यः ॥ १७।१८ ॥

श्रीफलादि योगवयम् ।—

श्रीफलस्य गुडूच्या वा कषायो मधुसंयुतः ।
पेयश्छर्दित्रये शीतो मूर्वा वा तण्डुलाम्बुना ॥ १९ ॥

जम्ब्वादिक्काथः दुरालभाचूर्णञ्च ।—

जम्ब्वाम्रपल्लवगवेधुकधान्यसेव्य-
ह्रीवेरवारि मधुना पिबतोऽल्पमल्पम् ।
छर्दिः प्रयाति शमनं त्रिसुगन्धियुक्ता
लीढ़ा निहन्ति मधुनाऽथ दुरालभा वा ॥ २० ॥

जातीकपित्थरसः ।—

जात्या रसः कपित्थस्य पिप्पलीमरिचान्वितः ।
क्षौद्रेण युक्तः शमयेल्लेहोऽयं छर्दिमुल्वणाम् ॥ २१ ॥

आमलक्यादिपानकम् ।—

पिष्ट्वा धात्रीफलं द्राक्षां शर्कराञ्च पलोन्मिताम् ।
दत्त्वा मधुपलञ्चात्र कुड़वं सलिलस्य च ॥
वाससा गालितं पीतं हन्ति छर्दिं त्रिदोषजाम् ॥ २२ ॥

एलादिचूर्णम् ।—

एलालवङ्गगजकेशरकोलमज्ज-
लाजाप्रियङ्गुघनचन्दनपिप्पलीनाम् ।

---

श्रीफलस्येत्यादि ।—श्रीफलो विल्वं तस्य मूलं ग्राह्यं, "विल्वमूलं मरुत्-श्लेष्म-च्छर्दिघ्नं न च पित्तकृत्" इति गुणपाठात् ; एवमन्यत्रापि । गुडूच्या वा कषाय इति—गुडूच्याः क्वाथ एव शीतलः कार्य्यः, न तु शीतकषायः, नागार्जुनसंवादे तस्योक्तत्वात् ; यथा—"छिन्नरुहायाः क्वाथं सुशीतं यो नरः पिबेन्मधुना । छर्दिं स वातपित्तश्लेष्मसमुत्थां निवारयति ॥" इत्यादि ॥ १९ ॥

जम्ब्वाम्रेत्यादि ।—गवेधुको गुलुञ्चः । धान्यं धान्यकम् । सेव्यमुशीरम् । वारि शीतकषाय इत्यर्थः । पुनर्दुरालभेति श्लोकानुरोधादुक्तं, त्रिसुगन्धियोगेन योगान्तरत्वाद्वा न पौनरुक्त्यम् ॥ २० ॥

जात्या इत्यादि ।—जाती आमलकी । कपित्थस्येति—कपित्थफलस्य । एक एवायं योगः ॥ २१ ॥

पिष्ट्वेत्यादि ।—इदन्तु बल्याद्यपेक्षया पेयं, शेषं त्याज्यम् ॥ २२ ॥

चूर्णानि माक्षिकसितासहितानि लीढ्वा
छर्दिं निहन्ति कफमारुतपित्तजाञ्च ॥ २३ ॥

कोलमज्जादिलेहः।—

कोलामलकमज्जानो मक्षिकाविट् सिता मधु।
सकृष्णातण्डुलो लेहश्छर्दिमाशु नियच्छति ॥ २४ ॥

अश्वत्थवल्कलपानीयम्।—

अश्वत्थवल्कलं शुष्कं दग्ध्वा निर्वापितं जले।
तत्तोयपानमात्रेण छर्दिं जयति दुस्तराम् ॥ २५ ॥

रक्तवान्तौ यष्ट्यादिकल्कः।—

यष्ट्याह्वं चन्दनोपेतं सम्यक् क्षीरप्रपेषितम्।
तेनैवालोड्य पातव्यं रुधिरच्छर्दिनाशनम् ॥ २६ ॥

लाजादिलेहत्रयम्।—

लाजाकपित्थमधुमागधिकोषणानां
क्षौद्राभयात्रिकटुधान्यकजीरकाणाम्।
पथ्याऽमृतामरिचमाक्षिकपिप्पलीनां
लेहास्त्रयः सकलवम्यरुचिप्रशान्त्यै ॥ २७ ॥

पद्मकाद्यं घृतम्।—

पद्मकामृतनिम्बानां धान्यचन्दनयोः पचेत्।
कल्के क्वाथे च हविषः प्रस्थं छर्दिनिवारणम् ॥

---

एलेत्यादि।—स्पष्टम् ॥ २३ ॥

कोलेत्यादि।—कोलं बदरं, तदस्थिमज्जा ग्राह्या। कृष्णातण्डुलः पिप्पली-तण्डुलः ॥ २४ ॥

अश्वत्थेत्यादि।—स्पष्टम् ॥ २५ ॥

यष्ट्याह्वमित्यादि।—तेन इति—क्षीरेण ॥ २६ ॥

लाजेत्यादि।—अत्र कपित्थस्य फलम्। ऊषणं मरिचम्। जीरकोऽजाजी ॥२७॥

तृष्णाऽरुचिप्रशमनं दाहज्वरहरं परम् ॥ २८ ॥

इति छर्दि-चिकित्सा ।

---

## अथ तृष्णा-चिकित्सा ।

वातजायां योगद्वयम् ।—

तृष्णायां पवनोत्थायां सगुडं दधि शस्यते ।
रसाश्च बृंहणाः शीता गुडूच्या रस एव च ॥ १ ॥

स्वल्पपञ्चमूलीपानीयम् ।—

पञ्चाङ्गिकाः पञ्च गणा य उक्तास्तेष्वम्बु सिद्धं प्रथमे गणे वा ।
पिबेत् सुखोष्णं मनुजोऽल्पशो वा तृष्णोपरोधं न कदाऽपि कुर्य्यात् ॥ २ ॥

---

पञ्चकेत्यादि ।—पञ्चकाद्युते क्राथः कल्कश्च पञ्चकादिपञ्चकस्य ॥ २८ ॥

इति श्रीशिवदासरोनविरचितायां तत्त्वचन्द्रिकायां छर्दि-चिकित्सा-विवृतिः ।

---

छर्द्यास्तृष्णोपद्रवत्वाच्छर्द्यनन्तरं तृष्णाचिकित्सामाह, तृष्णायामित्यादि वाग्भटस्य ।—सगुड़ दधीति—गुड़ं प्रक्षेप्यम् ॥ १ ॥

पञ्चाङ्गिका इत्यादि सुश्रुतस्य ।—पञ्च अङ्गानि येषाम् एवम्भूता ये पञ्च गणाः स्वल्पबृहत्तृणवल्लीकण्टकीसंज्ञकानि पञ्च पञ्चमूलानि सुश्रुतोक्तानि तेषु, अम्बु सिद्धमिति—अम्बु क्राथोऽर्द्धशृतं वा। एते च पञ्च योगाः, प्रत्येकं क्राथविधानात् । प्रथमो गणो विदारिगन्धादिः सौश्रुतः। अल्पश इति—स्तोकं स्तोकम् । अन्ये तु—अल्पश इति तृष्णाविशेषणं व्याख्याय अल्पशस्तृष्णायां शमनं, महत्यां वमनमित्याहुः। तृष्णोपरोधं न कदाऽपि कुर्य्यादिति—अतोऽल्पाल्पजलदानात् तृष्णाया उपरोधं दुःखं कदाऽपि न कुर्य्यात्; किंवा किमर्थं पुनरिदमल्पाल्पं जलं दीयते इत्याह, तृष्णेत्यादि—यस्मात् तृष्णाया उपरोधे सति प्राणत्यागः स्यात्, अतः पुरुषः कदाऽपि तृष्णोपरोधं न कुर्य्यादित्यर्थः। डल्लनस्तु—"पिबन् सुखोष्णं मनुजोऽचिरेण तृष्णां विमुच्येत हि वातजायाः" (सु० उ० ४८ अ०) इति पठति। कश्चित्तु—"पिबेत् सुखोष्णं मनुजोऽल्पशस्तु जलोष्णदुग्धस्य तथैव पानम्" इति ॥ २ ॥

पित्तजायां पित्तहरद्रव्यकृतपानीयम्।—

पित्तोत्थितां पित्तहरैर्विपक्वं
निहन्ति तोयं पय एव वाऽपि ॥ ३ ॥

काश्मर्य्यादिशीतः।—

काश्मर्य्यशर्करायुक्तं चन्दनोशीरपद्मकम्।
द्राक्षामधुकसंयुक्तं पित्ततर्षे जलं पिबेत् ॥ ४ ॥

पित्तजायाम् उडुम्बररसादि योगत्रयम्।—

पित्तजायान्तु तृष्णायां पक्वोडुम्बरजो रसः।
तत्क्वाथो वा हिमस्तद्वच्छारिवादिगणाम्बु वा ॥ ५ ॥

पित्तजायां जीवनीयघृतं द्राक्षादितोयञ्च।—

स्याज्जीवनीयसिद्धं क्षीरघृतं वातपित्तजे तर्षे।
तद्वत् द्राक्षाचन्दनखर्ज्जूरोशीरमधुयुक्तं तोयम् ॥ ६ ॥

पित्तजायां शारिवाद्यादिकषायपञ्चकम्।—

सशारिवादौ तृणपञ्चमूले तथोत्पलादौ मधुरे गणे वा।

---

पित्तोत्थितामित्यादि सुश्रुतस्य।—पित्तहरैरिति—काकोल्यादिभिः। डल्लनस्तु—"पित्तघ्नवर्गैस्तु कृतः कषायः सशर्करः क्षौद्रयुतः सुशीतः। पीतस्तृषां पित्तकृतां निहन्ति क्षीरं शृतं वाऽप्यथ जीवनीयैः॥" (सु० उ० ४८ अ०) इति पठति, व्याचष्टे च—पित्तघ्नवर्गैरिति—उत्पलादिभिः काकोल्यादिभिश्चेति ॥ ३ ॥

काश्मर्य्येत्यादि।—काश्मर्य्यादिमधुकान्त एको योगः। शीतकषायोऽयम्। अन्ये तु—एषां कल्को जलेन पेय इत्याहुः ॥ ४ ॥

पित्तजायामित्यादि वाग्भटस्य।—पक्वोडुम्बरज इत्येव पाठः, सुश्रुतवचनात्। हिम इति—शीतकषायः। तद्वदिति—हिम इत्यर्थः। शारिवादिगणश्च वाग्भटोक्तः ॥ ५ ॥

स्याज्जीवनीयेत्यादि चरकस्य।—क्षीरघृतमिति—क्षीरोत्थं घृतम्। वातपित्तजे तर्षे इति—वातजे पित्तजे चेत्यर्थः, न तु संसर्गजे, तेषामसूचितत्वात्; किंवा असूचितानामपि द्वन्द्वजानां गुल्मानामभिधाने यो न्यायः स एवात्राप्यनुसरणीय इति। तद्वदित्यादौ तोयं शीतकषायमित्याहुः। चक्रस्तु तद्वदित्यत्र "पेते" इति पठति, व्याचष्टे च—पेते इत्यत्र तर्षे इति सम्बन्ध इति ॥ ६ ॥

सशारिवेत्यादि सुश्रुतस्य।—सप्तमी षष्ठ्यर्थे, तेन शारिवादिगणचतुष्टयस्य कषायं

कुर्य्यात् कषायांश्च तथैव युक्तान् मधूकपुष्पादिषु चापरेषु ॥ ७ ॥

कफजायां विल्वादिक्वाथः निम्बपल्लवक्वाथश्च ।—

विल्वाढ़किधातकिपञ्चकोल-दर्भेषु सिद्धं कफजां निहन्ति ।
हितं भवेच्छर्दनमेव चात्र तप्तेन निम्बप्रसवोदकेन ॥ ८ ॥

मद्यप्रयोगः ।—

सजीरकाण्याद्रकशृङ्गवेर-सौवर्चलान्यर्द्धजलप्लुतानि ।
मद्यानि हृद्यानि च गन्धवन्ति पीतानि सद्यः शमयन्ति तृष्णाम्
॥ ९ ॥

---

कुर्य्यादित्यर्थः । मधुरो गणः काकोल्यादिः । मधुरो गण इत्यत्र "प्रथमो गणः" इति डल्लनः पठित्वा विदारिगन्धादिगण इति व्याचष्टे, तन्न प्रामाणिकं, बहुभिरव्याख्यातत्वात् । अनेन गणचतुष्टयेन चत्वारः कषायाः कार्य्या इति चत्वार एव योगाः । तथैव युक्तानिति—शीतकषायविधिना कृतान्, सुश्रुते शीतकषायविधिप्रस्तावे अस्य वचनस्य पठितत्वात् । डल्लनस्तु—"तथैव युक्तान्" इत्यत्र "यथेरितेन" इति पठित्वा—"यथेरितेनेति—पूर्वोक्तविधानेन, एतेन नीलोत्पलादि दत्त्वा प्रवाते निशि वासयेत् शर्करादिप्रक्षेपश्च लभ्यते" इति व्याचष्टे । मधूकपुष्पादिषु चापरेष्विति, एष्वपि शीतकषायं कुर्य्यादित्यर्थः । मधूकपुष्पादीनि तु मधूक-शोभाञ्जन-कोविदार-प्रियङ्गुपुष्पाणि चत्वारि रक्तपित्तघ्नत्वेनेह पठितानि ; किंवा आदिशब्दः प्रकारवाची, तेन मधूकपुष्पद्राक्षाकाश्मर्य्यखर्जूराणीति चत्वारि ॥ ७ ॥

विल्वाढ़कीत्यादि ।—विल्वस्य मूलम् । आढ़की तुवरी । सिद्धमित्यतः परं जलमिति शेषः ; जलमिति षड़ङ्गविधानेनेति चक्रः ; अन्ये तु—क्वाथमाहुः । अत्र सुश्रुतटीकाकृतो धातकीपञ्चकोलस्थाने "धान्यकपञ्चमूलम्" इति पठन्ति, पञ्चमूलं स्वल्पमित्याहुः, सर्व्वासु तृष्णासु पित्तसद्भावत्वेन पञ्चकोलस्यानुचितत्वादिति । दर्भं उलुकः । निम्बप्रसवोदकेनेति—निम्बत्वगुड्वक्वाथेनेति चक्रः ; निम्बपुष्पक्वाथेनेत्यरुणः ; निम्बपल्लवक्वाथेनेति जेज्जड़ः, युक्तञ्चैतत्, तन्त्रान्तरसंवादात् ॥ ८ ॥

सजीरकाणीत्यादि ।—आर्द्रकशृङ्गवेरसौवर्चलानीति—आर्द्रकशृङ्गवेरसौवर्चलवन्ति, अत्र मत्वर्थीयत्वात् । आर्द्रकशृङ्गवेरम् आर्द्रकमेव । जीरकादिकञ्च सौरभ्यकटुत्वसाधकारकं देयम् ॥ ९ ॥

क्षतज-क्षयजयोः चिकित्साविधिः।—

क्षतोत्थितां रुग्विनिवारणेन जयेद्रसानामसृजश्च पानैः।
क्षयोत्थितां क्षीरजलं निहन्यान्मांसोदकं वाऽथ मधूदकं वा ॥१०॥

गुर्वन्नज-सर्वजयोः चिकित्साविधिः।—

गुर्वन्नजामुल्लिखनैर्जयेत्तु क्षयादृते सर्वकृताञ्च तृष्णाम् ॥ ११ ॥

लाजपानीयम्।—

लाजोदकं मधुयुतं शीतं गुड़विमर्दितम्।

---

क्षतोत्थितामित्यादि सार्द्धश्लोकः सुश्रुतस्य।—रुग्विनिवारणेनेति—व्रणवेदना-निर्वापणेन कारणोच्छेदात् तत्कार्य्यरूपा क्षतजा तृष्णा शाम्यतीत्यर्थः। रसानामिति—मांसरसानाम्। असृजश्च पानैरिति—एणादिरक्तस्य सद्यस्कस्य पानैरित्यर्थः; एतच्चात्यर्थशोणितस्रुतौ सत्यां ज्ञेयम्। क्षयोत्थितामित्यादौ क्षीरजलमिति—क्षीरमिश्रितं जलम्। क्षीरजलमित्यत्र "क्षीरघृतम्" (सु० उ० ४८ अ०) इति डल्लनः पठति, व्याचष्टे च—क्षीरोत्थं घृतं क्षीरसहितं वा घृतमिति। मांसोदक-मिति—मांसरस एव; अन्ये तु—"माषोदकम्" इति पठित्वा माषयूषमिति व्याचक्षते। मधूदकं वेति—मधुमिश्रितमुदकमित्यर्थः; उदकञ्चात्र ऐन्द्रं, तदनुकारि भूमिष्ठमुदकं वा चरकसंवादात्; न च विरोधः, अतुल्योपयोगात्; उक्तं हि सुश्रुते—"मध्वम्बुनी मधुसर्पिषी मानतस्तुल्ये नाश्नीयात्" (सू० २० अ०) इति। ननु क्षयजायां बृंहणमेवोचितं, मधूदकन्तु रूक्षणमिति तत् कथमत्र प्रयुक्तमिति? नैवं, क्षयजाऽपि दोषत्रयेण जन्यते; यदुक्तं—"रसक्षयात् या क्षयसम्भवा सा तां सन्निपाता-दिति केचिदाहुः" (सु० उ० ४८ अ०) इति। तत्र यदि कफो वृद्धः पित्तं वा अधिकं तदा मधूदकं देयम्। डल्लनस्तु—मधूदकमित्यत्र "मधुकोदकं वा" इति पठित्वा व्याचष्टे—यष्टिमधुजलमिति; तन्न युक्तं चरकसंवादात् ॥ १० ॥

गुर्वन्नजामित्यादि।—उल्लिखनैरिति—वमनैः। न केवलं गुर्वन्नजामेव वमनैर्जयेत्, किन्तर्हि? अन्यामपीत्याह, क्षयादृते इत्यादि, क्षयोत्पन्नाऽपि सर्वदोषारब्धा, तस्यां क्षीणधातुत्वात् वमनं न कार्य्यम्। सर्वकृतामिति—सर्वदोषकृतामामजामिति कार्त्तिकः। अन्ये तु—"क्षयादृते सर्वकृतास्तु तृष्णाः" (सु० उ० ४८ अ०) इति पठन्ति; क्षयजां विहाय अन्याः सर्वास्तृष्णा वातपित्तकफामगुर्वन्नैः कृताः तृष्णा वमनैर्जयेदिति व्याख्यानयन्ति; अस्मिन् पक्षे—गुर्वन्नजायाः पृथगभिधानं विशेषार्थम् ॥ ११ ॥

काश्मर्य्यशर्करायुक्तं पिबेत् तृष्णार्दितो नरः ॥ १२ ॥

अतिरूक्षदुर्बलानां तृष्णायां चिकित्साविधिः ।—

अतिरूक्षदुर्बलानां तर्षं शमयेन्नृणामिहाशु पयः ।
छागो वा घृतभृष्टः शीतो मधुरो रसो हृद्यः ॥ १३ ॥

आम्रजम्बूक्काथः ।—

आम्रजम्बूकषायं वा पिबेन्माक्षिकसंयुतम् ।
छर्दिं सर्वां प्रणुदति तृष्णाञ्चैवापकर्षति ॥ १४ ॥

वटशुङ्गादि चूर्णम् ।—

वटशुङ्गसितालोध्र-दाडिमं मधुकं मधु ।
पिबेत् तण्डुलतोयेन छर्दितृष्णानिवारणम् ॥ १५ ॥

द्राक्षारसादि नस्ययोगाः ।—

गोस्तनेक्षुरसक्षीर-यष्टीमधुमधूत्पलैः ।
नियतं नस्यतः पानैस्तृष्णा शाम्यति दारुणा ॥ १६ ॥

क्षीरादिभिः गण्डूषयोगाः ।—

क्षीरेक्षुरसमाध्वीकैः क्षौद्रशीधुगुड़ोदकैः ।
वृक्षाम्लाम्लैश्च गण्डूषास्तालुशोषनिवारणाः ॥ १७ ॥

---

लाजोदकमित्यादि ।—लाजचूर्णभावितमुदकं शीतकषायो वा । काश्मर्य्यं गाम्भारीफलम् ॥ १२ ॥

अतिरुक्षेत्यादि ।—मधुरगणसाधितत्वेनात्र सम्यङ्मधुरता ज्ञेया ॥ १३ ॥

आम्रजम्बूकषायं वेति ।—आम्रजम्ब्वोः फलास्थि उच्यते, पल्लवक्काथोऽपि युज्यते, "जम्ब्वाम्रपल्लवशृतं क्षौद्रं दत्वा सुशीतलम्" इति पठितत्वात् ॥ १४ ॥

वटेत्यादि ।—वटशुङ्गादीनां चूर्णम् ॥ १५ ॥

गोस्तनेत्यादि ।—गोस्तना द्राक्षा । एभिः प्रत्येकं नस्यम् । माहेश्वरे तु—द्राक्षादित्रयं द्राक्षायष्टिमधुनीलोत्पलं कल्कीकृत्य इक्षुरसं क्षीरं मधु च प्रक्षिप्य सर्वमालोड्य नासया पेयमिति ॥ १६ ॥

क्षीरेत्यादि ।—क्षीरादिभिः प्रत्येकं गण्डूषः, गण्डूषाः इति बहुवचननिर्देशात् ॥१७॥

तालुशोषे घृतप्रयोगः।—

तालुशोषे पिबेत् सर्पिर्घृतमण्डमथापि वा ॥ १८ ॥

शीतलजलप्रयोगार्हाः।—

मूर्च्छाच्छर्दितृषादाह-स्त्रीमद्यभृशकर्शिताः।
पिबेयुः शीतलं वारि रक्तपित्ते मदात्यये ॥ १९ ॥

धान्याम्लप्रयोगः।—

धान्याम्लमास्यवैरस्य-मलदौर्गन्ध्यनाशनम्।
तदेवालवणं पीतं मुखशोषहरं परम् ॥ २० ॥

मधुगण्डूषः।—

वैशद्यं जनयत्यास्ये सन्दधाति मुखे व्रणान्।
दाहतृष्णाप्रशमनं मधुगण्डूषधारणम् ॥ २१ ॥

पञ्चाम्लकमुखालेपः।—

कोलदाड़िमवृक्षाम्ल-चुक्रीकाचुक्रिकारसः।
पञ्चाम्लको मुखालेपः सद्यस्तृष्णां नियच्छति ॥ २२ ॥

---

तालुशोषे इत्यादि।—यद्यपि तालुशोषे घृतं निषिद्धम्; यदुक्तं— "तृष्णा-मूर्च्छापरीताश्च गर्भिण्यस्तालुशोषिणः। न पिबेयुर्घृतम्" (च० सू० १३।०) इति, तथाऽपि चरकसंवादादेव बलवतो व्याधियुक्तं घृतपानं बोध्यम्; यथा "बलवांस्तु तालुशोषेऽपि पिबेद्घृतं वृष्यमन्नमभ्यस्येच्च" (च० चि० २३।०) इति, अतो विशिष्टविधित्वान्न विरोधः; किंवा वातोल्बणावस्थायामेतत् घृतपानं बोध्यम्। तालुशोषश्च तृष्णाप्रकार एव, तेनेह सङ्गतमस्याभिधानम्। घृतमण्डमिति— घृतस्योपरिभागः, अत एव घृतस्योपरि स्त्यानो भाग इति कार्श्यचिकित्सिते चक्रेणाप्युक्तः। श्रीकण्ठस्तु घृतस्योपरि क्लिन्नभागः घृतमण्ड इत्याह ॥ १८ ॥

मूर्च्छेत्यादि।—स्पष्टम् ॥ १९ ॥

धान्याम्लमित्यादि।—धान्याम्लं काञ्जिकम् ॥ २० ॥

वैशद्यमित्यादि।—सन्दधाति मुखे व्रणानिति—रोपयतीत्यर्थः ॥ २१ ॥

कोलेत्यादि।—चुक्रीका चाङ्गेरी। चुक्रिकेति—"चुकाइ" इति ख्यातम्। मुखालेप इति—मुखकुहरे लेपः, कपोलादौ लेप इति तु निश्चलः ॥ २२ ॥

मधूदकप्रयोगः।—

वारि शीतं मधुयुतमा-कण्ठाद्वा पिपासितम्।
पाययेद्वामयेच्चापि तेन तृष्णा प्रशाम्यति॥ २३॥

वटशुङ्गादिगुड़िका।—

वटशुङ्गामयक्षौद्र-लाजनीलोत्पलैर्दृढ़ा।
गुड़िका वदनन्यस्ता क्षिप्रं तृष्णां नियच्छति॥ २४॥

पानीयभक्तप्रयोगः।—

ओदनं रक्तशालीनां शीतं माक्षिकसंयुतम्।
भोजयेत् तेन शाम्येत्तु छर्दिस्तृष्णा चिरोत्थिता॥ २५॥

तृष्णार्त्तस्य जलनिरोधे दोषोक्तिः।—

पूर्वामयातुरः सन् दीनस्तृष्णार्दितो जलं याचन्।
न लभेत चेदाश्वेव मरणमाप्नोति दीर्घरोगं वा॥ २६॥
तृषितो मोहमायाति मोहात् प्राणान् विमुञ्चति।
तस्मात् सर्वास्ववस्थासु न क्वचिद्वारि वार्य्यते॥ २७॥

इति तृष्णा-चिकित्सा।

---

वारि शीतमित्यादि।—पित्ततृष्णायामयं योगः। आ-कण्ठतोयपानादनु किञ्चित् मधुपानमित्युपदिशन्ति वृद्धाः॥ २३॥

वटशुङ्गेत्यादि।—वटशुङ्गो वटप्ररोहः। आमयः कुष्ठम्। मधु तु यावता कठिना गुड़िका भवति तावन्मात्रं देयम्॥ २४॥

ओदनमित्यादि।—ओदनं रक्तशालीनां शीतमिति—सद्यस्कपानीयभक्तम॥२५॥

दुःसहतृष्णायां जलस्याप्रदाने दोषमाह, पूर्वामयेत्यादि।—पूर्वामयातुरः सन् ज्वररक्तपित्तादिरोगक्लिष्टः सन्। दीन इति—तृष्णापाड़ितत्वेनैव क्लान्तमनाः। कथं म्रियते? इत्याह—तृषित इत्यादि॥ २६।२७॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां तृष्णा-चिकित्सा-विवृतिः।

# अथ मूर्च्छा-चिकित्सा ।

चिकित्साविधिः ।—

सेकावगाहौ मणयः सहाराः शीताः प्रदेहा व्यजनानिलश्च ।
शीतानि पानानि च गन्धवन्ति सर्वासु मूर्च्छास्वनिवारितानि ॥१॥

क्षीररसादिप्रयोगविधिः ।—

सिद्धानि वर्गे मधुरे पयांसि सदाड़िमा जाङ्गलजा रसाश्च ।
तथा यवा लोहितशालयश्च मूर्च्छासु शस्ताश्च सतीनमुद्गाः ॥२॥

ज्वरोक्तकषायप्रयोगातिदेशः ।—

यथादोषं कषायाणि ज्वरघ्नानि प्रयोजयेत् ॥ ३ ॥

रक्तमद्यविषजासु चिकित्साविधिः ।—

रक्तजायान्तु मूर्च्छायां हितः शीतक्रियाविधिः ।
मद्यजायां वमेन्मद्यं निद्रां सेवेत् यथासुखम् ॥
विषजायां विषघ्नानि भेषजानि प्रयोजयेत् ॥ ४ ॥

कोलमज्जादिचूर्णं पिप्पलीचूर्णञ्च ।—

कोलमज्जोषणोशीर-केशरं शीतवारिणा ।

---

तृष्णायां मोहो भवतीत्यनन्तरं मोहचिकित्सामाह, सेकेत्यादि सुश्रुतस्य ।— मणयो मुक्तास्फटिकप्रभृतयः, ते च सहाराः हारारोपिता इत्यर्थः । पानानि च गन्धवन्तीति—कर्पूरादियोगात् सुरभीणि पानीयानीत्यर्थः । सर्वासु मूर्च्छास्वनिवारितानीत्यनेन वातकफकृतायां मूर्च्छायामपि हेतुप्रत्यनीकचिकित्साकरणे वारणार्हा अपि एते शीतविधयो व्याधिप्रत्यनीकतया पित्तानुबन्धाच्च न वारणीया इति दर्शयति ॥ १ ॥

सिद्धानीत्यादि ।—वर्गे मधुरे इति—काकोल्यादौ । सदाड़िमा इति—दाड़िमाम्लसहिता इत्यर्थः । सतीनो वर्त्तुलकलायः ॥ २ ॥

यथादोषमित्यादि ।—यथादोषं कषायाणि ज्वरघ्नानि प्रयोजयेदिति—वातादिमूर्च्छासु यथाक्रमं वातादिकषायाणि यानि तानि प्रयोजयेदित्यर्थः ॥ ३ ॥

रक्तजायामित्यादि ।—रक्तजायामिति—रक्तदर्शनजायाम् । मद्यजायामिति—मद्यसेवनजायाम् ॥ ४ ॥

पीतं मूर्च्छां जयेत्कोद्वा कृष्णां वा मधुसंयुताम् ॥ ५ ॥

महौषधादिक्वाथः।—

महौषधामृताक्षुद्रा-पौष्करग्रन्थिकोद्भवम्।
पिबेत् कणायुतं क्वाथं मूर्च्छायेषु मदेषु च ॥ ६ ॥

भ्रमे शतावर्य्यादिचीरं बलाबीजप्रयोगश्च।—

शतावरीबलामूल-द्राक्षासिद्धं पयः पिबेत्।
ससितं भ्रमनाशाय बीजं वाट्यालकस्य वा ॥ ७ ॥

भ्रमे दुरालभाक्वाथः।—

पिबेत् दुरालभाक्वाथं सघृतं भ्रमशान्तये ॥ ८ ॥

त्रिफलादिचतुर्विधप्रयोगः।—

त्रिफलायाः प्रयोगो वा प्रयोगः पयसोऽपि वा।
रसायनानां कौम्भस्य सर्पिषो वा प्रशस्यते ॥ ९ ॥

त्रिफलाऽऽर्द्रकप्रयोगः।—

मधुना हन्त्युपयुक्ता त्रिफला रात्रौ गुड़ार्द्रकं प्रातः।
सप्ताहात् पथ्याशी मदमूर्च्छाकासकामलोन्मादान् ॥ १० ॥

संज्ञाजननोपायाः।—

अञ्जनान्यवपीड़ाश्च धूमाः प्रधमनानि च।
सूचीभिस्तोदनं शस्तं दाहः पीड़ा नखान्तरे ॥ ११ ॥

---

कोलेत्यादि।—कोलमज्जादौ ऊषणं मरिचम् ॥ ५ ॥

महौषधेत्यादि।—क्षुद्रा कण्टकारी। ग्रन्थिकं पिप्पलीमूलम् ॥ ६ ॥

शतावरीत्यादि।—भ्रमः स्मृतिभ्रंशो मोहश्चक्रवद्भ्रान्तिश्च ॥ ७।८ ॥

त्रिफलाया इत्यादि।—प्रयोगोऽभ्यासः। कौम्भं सर्पिर्दशवर्षात्मकम्। अन्ये तु—"स्थितं वर्षशतं श्रेष्ठं कौम्भं सर्पिस्तदुच्यते" ॥ ९।१० ॥

अञ्जनानीत्यादि।—अञ्जनानीति—तीक्ष्णाञ्जनानि अपस्मारोक्तानि। अवपीड़ाः नासिकायां निर्गुण्ड्यादिरसा अवपीड्य ये दीयन्ते। धूमाः वैरेचनधूमाः। प्रधमनं

लुञ्चनं केशरोमणाञ्च दन्तैर्दंशनमेव च ।
आत्मगुप्ताऽवघर्षश्च हितास्तस्यावबोधने ॥ १२ ॥

इति मूर्च्छा-चिकित्सा ।

---

## अथ मदात्यय-चिकित्सा ।

खर्जूरादिमन्थः ।—

मन्थः खर्जूरमृद्वीका-वृक्षाम्लाम्लीकदाड़िमैः ।
परूषकैः सामलकैर्युक्तो मद्यविकारनुत् ॥ १ ॥

तर्पणयूषरसकल्पनविधिः ।—

सतीनमुद्गमिश्रान् वा दाड़िमामलकान्वितान् ।
द्राक्षामलकखर्जूर-परूषकरसेन वा ॥
कल्पयेत् तर्पणान् यूषान् रसांश्च विविधात्मकान् ॥ २ ॥

वातजे मद्यप्रयोगविधिः ।—

मद्यं सौवर्चलव्योष-युक्तं किञ्चिज्जलान्वितम् ।
जीर्णमद्याय दातव्यं वातपानात्ययापहम् ॥ ३ ॥

---

घर्षणस्यम् । सूचीभिरित्यादौ पीड़ा नखान्तरे इति—नखमांसयोर्मध्ये पीड़नम् । आत्मगुप्ता शूकशिम्बी ॥ ११।१२ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां मूर्च्छा-चिकित्सा-विवृतिः ।

---

मूर्च्छावन्मदात्ययस्यापि मद्यजन्यत्वात् मूर्च्छानन्तरं मदात्ययचिकित्सामाह, मन्थ इत्यादि ।—मद एवात्ययकारको मदात्ययः; किंवा मदशब्देनेह मदहेतुतया मद्यमुच्यते, तेन कृतोऽत्ययो मदात्ययः । द्रवेणालोड़ितशक्तवो मन्थाः, द्रवश्चेह खर्जूरादीनां ग्राह्यः । अम्लीका तिन्तड़ीफलम्; छन्दोऽनुरोधात् ह्रस्वः ॥ १ ॥

सतीनेत्यादि ।—सतीनो वर्त्तुलकलायः । "सतीनमुद्गमिश्रं वा" इति पाठे—छागरसस्य विशेषणं, चरके हि एतद्वचनात् पूर्वं छागरसमिश्रुतम् ॥ २ ॥

मद्यमित्यादि ।—सौवर्चलव्योषन्तु लवणकटुत्वमात्रकारकं देयम् । किञ्चिज्जलमष्टभागिकमित्याहुः ॥ ३ ॥

पित्तजे यूषरसादिप्रयोगोपदेशः।—

मुद्गयूषः सितायुक्तः स्वादुर्वा पैशितो रसः।
पित्तपानात्यये योज्याः सर्वतश्च क्रिया हिमाः॥ ४॥

कफजे लङ्घनं मद्यप्रयोगविधिश्च।—

पानात्यये कफोद्भूते लङ्घनञ्च यथाबलम्।
दीपनीयौषधोपेतं पिबेन्मद्यं समाहितः॥ ५॥

सर्वजे श्रातिदेशिकचिकित्सोपदेशः।—

सर्वजे सर्वमेवेदं प्रयोक्तव्यं चिकित्सितम्॥ ६॥

क्षीरप्रयोगोपदेशः।—

आभिः क्रियाभिर्मिश्राभिः शान्तिं याति मदात्ययः।
न चेन्मद्यक्रमं मुक्त्वा क्षीरमस्य प्रयोजयेत्॥ ७॥

क्षीरप्रयोगावस्थानिर्देशः।—

लङ्घनाद्यैः कफे क्षीणे जातदौर्बल्यलाघवे।
ओजस्तुल्यगुणं क्षीरं विपरीतञ्च मद्यतः॥ ८॥

क्षीरपरित्यागस्य मद्यप्रयोगस्य च विधिः।—

क्षीरप्रयोगं मद्यं वा क्रमेणाल्पाल्पमाचरेत्॥ ९॥

पुनर्नवाद्यं घृतम्।—

पयःपुनर्नवाक्वाथ-यष्टीकल्कप्रसाधितम्।
घृतं पुष्टिकरं पानान्मद्यपानहृतौजसः॥ १०॥

---

मुद्गयूष इत्यादि।—स्वादुरित्यनेन संस्कारार्थं कटुद्रव्योपयोगोऽत्र न कार्य्य इति दर्शयति॥ ४—७॥

यस्यामवस्थायां क्षीरप्रयोगः कर्त्तव्यस्तामाह, लङ्घनाद्यैरिति।—आद्यशब्दात् शोधनादीनां ग्रहणम्॥ ८॥

क्षीरप्रयोगमित्यादि चरकस्य।—एतद्वचनात् पूर्वं—"पयसा च हृते रोगे बले जाते निवर्त्तयेत्" (च० चि० मदात्य०) इति वचनमस्ति, तेनात्र क्षीरप्रयोगमित्यस्य पूर्वोक्तेन निवर्त्तयेदित्यनेन सम्बन्धात् क्षीरप्रयोगं क्रमेण निवर्त्तयेत्, मद्यञ्च क्रमेणाल्पाल्पमाचरेदित्यर्थः॥ ९॥

पयःपुनर्नवाक्वाथेत्यादि।—अत्र क्षीरं घृतसमं, क्वाथस्तु घृतचतुर्गुणो वेत्याह॥१०॥

षडङ्गलवणम्।—

सौवर्चलमजाज्यश्च वृक्षाम्लं साम्लवेतसम्।

त्वगेलामरिचार्डांशं शर्कराभागयोजितम्॥ ११॥

हितं लवणमष्टाङ्गमग्निसन्दीपनं परम्।

मदात्यये कफप्राये दद्यात् स्रोतोविशोधनम्॥ १२॥

चव्यादिचूर्णम्।—

चव्यं सौवर्चलं हिङ्गु पूरकं विश्वदीप्यकम्।

चूर्णं मद्येन दातव्यं पानात्ययरुजाऽपहम्॥ १३॥

मद्यपाने सततऽभावस्योपायः।—

जलाप्लुतश्चन्दनरूषिताङ्गः

स्रग्वी सभक्तां पिशितोपदंशाम्।

पिबन् सुरां नैव लभेत रोगान्

मनोमतिघ्नञ्च मदं न याति॥ १४॥

पानविभ्रमे द्राक्षादिपानकम्।—

द्राक्षाकपित्थफलदाड़िमपानकं यत्

तत् पानविभ्रमहरं मधुशर्कराढ्यम्॥ १५॥

मदमूर्च्छायां पथ्यादिघृतद्वयम्।—

पथ्याक्वाथेन संसिद्धं घृतं धात्रीरसेन वा।

---

सौवर्चलमित्यादि।—अत्र सौवर्चलादीनां चतुर्णां समभागताः त्वगेला-मरिचानामेकभागापेक्षया प्रत्येकमर्द्धभागिकत्वं, शर्कराभागोऽपि सौवर्चलाद्येक-तमद्रव्यसमः॥ ११।१२॥

चव्यमित्यादि।—पूरकं बीजपूरस्य फलत्वगिति निश्चलः। दीप्यकं यमानी॥१३॥

मद्यं येन प्रकारेण विकारं न जनयेत् तदाह, जलेत्यादि सुश्रुतस्य।—चन्दनेन रूषितं लिप्तमङ्गं यस्य। पिशितं मांसम् उपदंशो भक्ष्यो यस्यां सा तथा। मनो-मतिघ्नमिति विशेषणात् द्वितीयादिमदं न प्राप्नोति, प्रथमन्तु मनोऽनुपघातकं लभते एवेत्यर्थः॥ १४॥

द्राक्षेत्यादि सुश्रुतस्य।—द्राक्षादिभिः पानकं सूदशास्त्रानुसारेण कार्य्यम्॥ १५॥

सर्पिः कल्याणकं वाऽपि मदमूर्च्छाहरं पिबेत् ॥ १६ ॥

पूगभक्षणजमदचिकित्सा ।—

सच्छर्दिमूर्च्छातिसारं मदं पूगफलोद्भवम् ।
सद्यः प्रशमयेत् पीतमा-त्मवारि शीतलम् ॥ १७ ॥

पूगभक्षणजमदचिकित्सा चूर्णदाहचिकित्सा च ।—

वन्यकरीषघ्राणाज्जलपानाल्लवणभक्षणाद्वाऽपि ।
शाम्यति पूगफलमदश्चूर्णरुजा शर्कराकवलात् ॥ १८ ॥

खल्पमदचिकित्सा ।—

शङ्खचूर्णरजोघ्राणात् स्वल्पं मदमपोहति ॥ १९ ॥

मदनकोद्रवधुस्तूरमदचिकित्सा ।—

कुष्माण्डरसः सगुडः शमयति मदमाशु मदनकोद्रवजम् ।
धौस्तूरजञ्च दुग्धं सशर्करं पानयोगेन ॥ २० ॥

इति मदात्यय-चिकित्सा ।

---

पथ्येत्यादि ।—घृतत्रयमकल्कम् ॥ १६ ॥

अत्रैव मदत्वसामान्यात् पूगफलादिजमदानां पृथक् पृथक् चिकित्सामाह, सच्छर्दीत्यादि ।—स्पष्टम् ॥ १७ ॥

वन्येत्यादि ।—वनं जलं तद्भवो वन्यः शङ्ख इत्यर्थ इति केचित् । करीष इति—शुष्कगोमयः । अन्ये तु—वन्यकरीषं वनभवकरीषमाहुः । एते च वन्यकरीषादयः पृथक् प्रयोक्तव्याः । चूर्णरुजेति—अतिमात्रचूर्णभक्षणे यो रसनादिदाहः । एतच्च सम्पूर्णश्लोकानुरोधाल्लिखितम् ॥ १८ ॥

शङ्खचूर्णेत्यादि ।—स्वल्पं मदं पूगभक्षणजमेव ॥ १९ ॥

कुष्माण्डेत्यादि ।—मदनं तृणधान्यविशेषः, "मयनाघास" इति ख्यातम् । धौस्तूरं धुस्तूरफलभक्षणजम् ॥ २० ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां मदात्यय-चिकित्सा विवृतिः ।

# अथ दाह-चिकित्सा।

पित्तज्वरचिकित्साऽतिदेशः।—

यत् पित्तज्वरदाहोक्तं दाहे तत् सर्वमिष्यते ॥ १ ॥

प्रलेपद्वयम्।—

शतधौतघृताभ्यक्तं दिह्याद्वा यवसक्तुभिः।
कोलामलकयुक्तैर्वा धान्याम्लैरपि बुद्धिमान् ॥ २ ॥

काञ्जिकप्रयोगः उशीराद्यनुलेपनञ्च।—

छादयेत् तस्य सर्वाङ्गमारनालार्द्रवाससा।
लामज्जेनाथ शुक्तेन चन्दनेनानुलेपयेत् ॥ ३ ॥

शय्यार्थं पद्मादिपत्रदानोपदेशः।—

चन्दनाम्बुकणास्यन्दि-तालवृन्तोपवीजितः।
सुप्याद्दाहार्दितोऽम्भोज-कदलीदलसंस्तरे ॥ ४ ॥

परिषेकादौ शीतलजलप्रयोगोपदेशः।—

परिषेकावगाहेषु व्यजनानाञ्च सेवने।
शस्यते शिशिरं तोयं तृष्णादाहप्रशान्तये ॥ ५ ॥

अन्तर्दाहे क्षीरादिप्रयोगोपदेशः।—

क्षीरैः क्षीरिकषायैश्च सुशीतैश्चन्दनान्वितैः।
अन्तर्दाहं प्रशमयेदेतैरन्यैश्च शीतलैः ॥ ६ ॥

कुशाद्यं तैलं घृतञ्च।—

कुशादिशालपर्णीभिर्जीवकाद्येन साधितम्।

---

मदात्ययवद्दाहस्यापि मद्यपानजन्यत्वात् मदात्ययाधिकारानन्तरं दाहचिकित्सामाह—यदित्यादि ॥ १ ॥

शतधौतेत्यादि।—कोलेत्यादि द्वितीयो योगः, अत्रापि दिह्यादिति योज्यम् ॥ २ ॥

छादयेदित्यादि।—लामज्जमुशीरम्। शुक्तं सन्धानविशेषः ॥ ३ ॥

चन्दनेत्यादि।—तालवृन्तं तालपत्रनिर्मितव्यजनम् ॥ ४।५ ॥

क्षीरैरित्यादि।—क्षीरिकषायो वटोडुम्बरादिक्वाथः। क्षीरादिकञ्चैतत् पानपरिषेकादौ योज्यम् ॥ ६ ॥

तैलं घृतं वा दाहघ्नं वातपित्तविनाशनम् ॥ ७ ॥

फलिन्यादिलेपः।—

फलिनी लोध्रसेव्याम्बु हेम पत्रं कुटन्नटम्।
कालीयकरसोपेतं दाहे शस्तं प्रलेपनम् ॥ ८ ॥

अवगाहनार्थं क्लीवेरादि।—

ह्रीवेरपद्मकोशीर-चन्दनक्षोदवारिणा।
सम्पूर्णामवगाहेत द्रोणीं दाहार्दितो नरः ॥ ९ ॥

इति दाह-चिकित्सा।

---

कुशादीत्यादि।—कुशादिपञ्चमूलं तृणपञ्चमूलं, तच्च सुश्रुतोक्त कुश-काश-नल-दर्भकाण्डेक्षुमूलरूपम्। अत्र शालपर्णीशब्देन विदारिगन्धादिगणस्य ग्रहणमिति वृन्दटिप्पनी। अन्ये तु—शालपर्ण्यादिपञ्चमूलस्य ग्रहणमित्याहुः। निश्चलस्त्वादिशब्दाभावात् शालपर्णीमात्रस्यैव ग्रहणमित्याह। जीवकाद्येनेति—जीवकाद्यष्टवर्गेण, जीवकाद्यष्टवर्गश्च जीवक-ऋषभक-मेदा-महामेदा-काकोली-क्षीरकाकोली-ऋद्धि-वृद्धयः; एवं सर्वत्र सुश्रुतयोगे जीवनीयाष्टकम्। चरकयोगे पुनरेते एव ऋद्धिवृद्धि-रहिता माषपर्णी-मुद्गपर्णी-जीवन्ती-मधुकसहिता जीवनीयदशकं ज्ञेयम्। अत्र कुशादिशालपर्णीभिः क्वाथः, जीवकाद्येन कल्कः। अन्ये तु—"कल्कक्वाथावनिर्देशे गणात् तस्मात् समावपेत" इति वचनात् सर्वैरेव कल्कक्वाथावित्याहुः ॥ ७ ॥

फलिनीत्यादि।—फलिनी प्रियङ्गुः। सेव्यमुशीरम्। अम्बु बालकम्। हेम नागकेशरम्। पत्रं तेजपत्रम्। कुटन्नटं कैवर्त्तमुस्तकम्। कालीयकं "कालीया" इति ख्यातं पीतकाष्ठं गन्धद्रव्यविशेषः; श्वेतचन्दनमिति केचित्। कालीयकक्वाथश्च पेषणार्थमिति वदन्ति ॥ ८ ॥

ह्रीवेरेत्यादि।—क्षोदं चूर्णम्। एषां चूर्णानि शीतलजलेन मिश्रयित्वा अवगाहनं कार्य्यम् ॥ ९ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां दाह-चिकित्सा-विवृतिः।

# अथोन्माद-चिकित्सा।

दोषभेदेन स्नेहपानाद्युपदेशः।—

उन्मादे वातिके पूर्वं स्नेहपानं विरेचनम्।
पित्तजे कफजे वान्तिः परो वस्त्यादिकः क्रमः॥ १॥

अपस्मारचिकित्साऽतिदेशः।—

यच्चोपदेक्ष्यते किञ्चिदपस्मारचिकित्सिते।
उन्मादे तच्च कर्त्तव्यं सामान्याद्धेतुदूष्ययोः॥ २॥

ब्राह्मीस्वरसादियोगचतुष्टयम्।—

ब्राह्मीकुष्माण्डीषड्ग्रन्था-शङ्खपुष्पिकास्वरसाः।
उन्मादहृतो दृष्टाः पृथगेते कुष्ठमधुमिश्राः॥ ३॥

दशमूलक्वाथस्य विविधप्रयोगः पुराणघृतप्रयोगश्च।—

दशमूलाम्बु सघृतं युक्तं मांसरसेन वा।
ससिद्धार्थकचूर्णं वा पुराणं वैककं घृतम्॥ ४॥

पुराण-प्रपुराणघृतयोर्लक्षणम्।—

उग्रगन्धं पुराणं स्याद्दशवर्षस्थितं घृतम्।
लाक्षारसनिभं शीतं प्रपुराणमतः परम्॥ ५॥

---

यद्यपि मदात्ययस्य उन्मादसदृशत्वेन तथा पूर्वोक्तरीत्या च मदात्ययानन्तरमुन्मादादाववेव वक्तुमुचितौ, तथाऽपि सूचीकटाहन्यायेन दाहमभिधाय उन्मादचिकित्सितमुच्यते, उन्मादे इत्यादि।—परो वस्त्यादिकक्रम इति—पश्चात् स्नेहवस्तिनिरूहण-शिरोविरेचनात्मकः क्रमः कार्य्यः; चरकेऽप्युक्तं—"निरूहणस्नेहवस्ती शिरसश्च विरेचनम्। ततः कुर्य्यात् यथादोषं तेषां भूयस्त्वमाचरेत्॥" (च० चि० उन्माद०) इति॥ १॥

यच्चेत्यादि।—सामान्याद्धेतुदूष्ययोरिति—उन्मादापस्मारयोर्हेतुर्मन-उपघातादिः दूष्यश्च हृदयं समानमित्यर्थः। "सामान्याद्दोषदूष्ययोः" इति केचित् पठन्ति॥ २॥

ब्राह्मीत्यादि।—ब्राह्मीत्यादयश्चत्वारो योगाः। कुष्माण्डीफलमत्र पुराणं ग्राह्यमित्याहुः॥ ३।४॥

पुराणघृतलक्षणमाह, उग्रगन्धमित्यादि चरकस्य।—चरकटीकाकारास्तु केचित्

धुस्तूरमूलसिद्धपायसः ।—

श्वेतोन्मत्तोत्तरदिङ्मूलसिद्धस्तु पायसः ।
गुड़ाज्यसंयुतो हन्ति सर्वोन्मादांस्तु दोषजान् ॥ ६ ॥

तालशाखाजरस सार्षपतैलप्रयोगौ ।—

उन्मादे समधुः पेयः शुद्धो वा तालशाखजः ।
रसो नस्येऽभ्यञ्जने च सार्षपं तैलमिष्यते ॥ ७ ॥

चटकी-सार्षपतैलप्रयोगौ ।—

अपक्वचटकी चीर-पीतोन्मादविनाशिनी ।
बद्धं सार्षपतैलाक्तमुत्तानञ्चातपे न्यसेत् ॥ ८ ॥

सिद्धार्थकादिलेपः घृतञ्च ।—

सिद्धार्थको वचा हिङ्गु करञ्जौ देवदारु च ।
मञ्जिष्ठा त्रिफला श्वेता कटभीत्वक् कटुत्रिकम् ॥ ९ ॥
समांशानि प्रियङ्गुश्च शिरीषो रजनीद्वयम् ।
वस्तमूत्रेण पिष्टोऽयमगदः पानमञ्जनम् ॥ १० ॥
नस्यमालेपनञ्चैव स्नानमुद्वर्त्तनं तथा ।
अपस्मारविषोन्माद-कृत्याऽलक्ष्मीज्वरापहः ॥ ११ ॥

---

इमं शोकमनार्षं वदन्ति, केचिद्दैकवर्षातीतं घृतं पुराणमिति ब्रुवते, तन्त्रान्तर-संवादात् ॥ ५ ॥

श्वेतेत्यादि ।—श्वेतोन्मत्तः श्वेतधुस्तूरस्तस्य उत्तरदिशि स्थितं मूलं ग्राह्यम् । महेश्वरस्तु—उत्तरदिशि स्थितं धवलधुस्तूरमूलं पिष्टा पल १, चुद्रतण्डुल पल ४, दुग्ध शराव ४, पायसं साध्य, तदनुरूपे गुड़घृते दत्त्वा खाद्यमित्याह ॥ ६ ॥

उन्मादे इत्यादि ।—शुद्ध इति—केवलः । तालशाखज इति छान्दसत्वात् ह्रस्वः । रस इति छेदः, तेन कोमलतालशाखाभवो रसः मधुप्रक्षेपेण, शुद्धो वा मधुना विनाऽपि ॥ ७ ॥

अपक्वेत्यादि ।—अपक्वचटकीति—आमचटकीं कल्कीकृत्य । बद्धमित्यादि ।—एतच्च स्रोतोविशुद्ध्यर्थमुद्वेजनार्थञ्च ॥ ८ ॥

सिद्धार्थक इत्यादि ।—अत्र करञ्जद्वयस्य त्वगित्याहुः । श्वेता श्वेतापराजिता ।

भूतेभ्यश्च भयं हन्ति राजद्वारे च शस्यते ।
सर्पिरेतेन सिद्धं वा सगोमूत्रं तदर्थकृत् ॥ १२ ॥

त्र्यूषणाद्या वर्त्तिः ।—

त्र्यूषणं हिङ्गु लवणं वचा कटुकरोहिणी ।
शिरीषनक्तमालानां वीजं श्वेताश्च सर्षपाः ॥ १३ ॥
गोमूत्रपिष्टैरेतैर्वा वर्त्तिर्नेत्राञ्जने हिता ।
चतुर्थकमपस्मारमुन्मादञ्च नियच्छति ॥ १४ ॥

प्रबलोन्मादे द्रव्याद्रव्यभूतौषधनिर्देशः ।—

शुद्धस्याचारविभ्रंशे तीक्ष्णं नावनमञ्जनम् ।
ताड़नञ्च मनोबुद्धि-स्मृतिसंवेजनं हितम् ॥ १५ ॥
तर्जनं त्रासनं दानं सान्त्वनं हर्षणं भयम् ।
विस्मयो विस्मृतेर्हेतोर्नयन्ति प्रकृतिं मनः ॥ १६ ॥

कामादिजोन्मादे तत्प्रत्यनीकविधिः ।—

कामशोकभयक्रोध-हर्षेर्ष्यालोभसम्भवान् ।
परस्परप्रतिद्वन्द्वैरेभिरेव शमं नयेत् ॥ १७ ॥

इष्टविनाशजोन्मादे विधिः ।—

इष्टद्रव्यविनाशात्तु मनो यस्योपहन्यते ।
तस्य तत्सदृशप्राप्तैः सान्त्वाश्वासैश्च तान् जयेत् ॥ १८ ॥

---

कटभी "लताफट्की" इति ख्यातम्; अन्ये तु—"करह" इत्याहुः। शिरीषस्य फलम्। अगद इति—संयोगविषहरः। कृत्या अभिचारः। राजद्वारे च शस्यते इति वशीकरणलात्। एतेनेति—सिद्धार्थकादीनां कल्केन ॥ ९—१२ ॥

त्र्यूषणमित्यादि।—स्पष्टम् ॥ १३।१४ ॥

शुद्धस्येत्यादि चरकस्य।—शुद्धस्येति—वामितस्य। आचारविभ्रंशे अत्युन्मादे। संवेजनमुद्वेजनम्। तर्जनं वचसा। विस्मृतेर्हेतोरिति—उन्मादहेतुभयहर्षादि-विस्मारकतया प्रभावादेव मनः प्रकृतिं स्वभावं नयन्ति ॥ १५।१६ ॥

कामेत्यादि।—परस्परप्रतिद्वन्द्वैरिति—अन्योऽन्यप्रत्यनीकैः ॥ १७ ॥

इष्टेत्यादि।—तस्य तत्सदृशप्राप्तैरिति—भावे क्तः, तत्सदृशप्रापणैरित्यर्थः।

सुप्तायुद्बोधनार्थं प्रदेहादेः कर्त्तव्यतानिर्देशः।—

प्रदेहोत्सादनाभ्यङ्ग-धूमाः पानञ्च सर्पिषः।
प्रयोक्तव्यं मनोबुद्धि-स्मृतिसंज्ञाप्रबोधनम् ॥ १९ ॥

प्रयोज्यघृततैलानां नामानि।—

कल्याणकं महद्वाऽपि दद्याद्वा चैतसं घृतम्।
तैलं नारायणञ्चापि महानारायणं तथा ॥ २० ॥

पानीयकल्याणकं घृतम्।—

विशाला त्रिफला कौन्ती देवदार्वेलवालुकम्।
स्थिरा नतं रजन्यौ द्वे शारिवे द्वे प्रियङ्गुका ॥ २१ ॥
नीलोत्पलैलामञ्जिष्ठा-दन्तीदाड़िमकेशरम्।
तालीशपत्रं बृहती मालत्याः कुसुमं नवम् ॥ २२ ॥
विड़ङ्गं पृश्निपर्णी च कुष्ठं चन्दनपद्मकौ।
अष्टाविंशतिभिः कल्कैरेतैरक्षसमन्वितैः ॥ २३ ॥
चतुर्गुणं जलं दत्त्वा घृतप्रस्थं विपाचयेत्।
अपस्मारे ज्वरे कासे शोषे मन्दानले क्षये ॥ २४ ॥
वातरक्ते प्रतिश्याये तृतीयक-चतुर्थके।
वम्यर्शोमूत्रकृच्छ्रेषु वीसर्पोपहतेषु च ॥ २५ ॥
कण्ड्पाण्ड्वामयोन्मादे विषमेहगरेषु च।

---

सान्त्वाश्वासैरिति—सान्त्व सामप्रयोगः, वशीभूतकरणार्थं उपायविशेष, आश्वासः सन्तोषवचनम् ॥ १८ ॥

प्रदेहेत्यादि।—उत्सादनं चूर्णघर्षणम् ॥ १९ ॥

कल्याणकमित्यादि।—नारायणतैलं महानारायणतैलञ्च वातव्याधौ वक्ष्यति ॥२०॥

विशालेत्यादि।—विशाला गोरक्षकर्कटी। कौन्ती रेणुका। एलवालुकं स्वनामख्यातं सुगन्धि द्रव्यम। स्थिरा शालपर्णी। नतं तगरपादुका, तदभावे शिग्रलीकोपरः। केशरं नागकेशरम्। मालती जाती, तस्याः कुसुमं, नवमिति कुसुमविशेषणम्। अष्टाविंशतित्वं कल्कानां पाठादेव सिद्धं, तत् किमर्थं पुनरष्टाविंशतिभिरिति ? उच्यते—अत्र यद्यपि त्रिफलायाः प्रत्येकमेव भागो गृह्यते उत्सर्गसिद्धत्वात्, तथाऽपि त्रिफलायाः प्रत्येकभागग्रहणदार्ढ्यार्थम् अष्टाविंशतिभिरित्युक्तम्। यद्यपि

भूतोपहतचित्तानां गद्गदानामरेतसाम् ॥ २६ ॥
शस्तं स्त्रीणाञ्च बन्ध्यानामायुर्वर्णबलप्रदम् ।
अलक्ष्मीपापरक्षोघ्नं सर्वग्रहविनाशनम् ॥
कल्याणकमिदं सर्पिः श्रेष्ठं पुंसवनेषु च ॥ २७ ॥

क्षीरकल्याणकं घृतम् ।—

द्विजलं सचतुःक्षीरं क्षीरकल्याणकन्त्विदम् ॥ २८ ॥

महाकल्याणकं घृतम् ।—

एभ्य एव स्थिरादीनि जले पक्त्वैकविंशतिम् ।
रसे तस्मिन् पचेत् सर्पिर्गृष्टिक्षीरं चतुर्गुणम् ॥ २९ ॥
वीराद्विमाषकाकोली-स्वयङ्गुप्तर्षभर्द्धिभिः ।
मेदया च समैः कल्कैस्तत् स्यात् कल्याणकं महत् ॥
बृंहणीयं विशेषेण सन्निपातहरं परम् ॥ ३० ॥

त्रिफलाशब्देन द्राक्षाकाश्मर्य्यपरूषका अपि उच्यन्ते, तथाऽपि हरीतक्यादि त्रिफलाया एवात्र ग्रहणं प्राधान्यादेव ; एवमन्यत्रापि। पुंसवनेष्विति—पुत्रकारकयोगेषु ॥ २१—२७ ॥

द्विजलमित्यादि।—तदेव घृतं यदा जलस्याष्टौ शरावान् क्षीरस्य षोड़श शरावान् दत्त्वा पच्यते, तदा क्षीरकल्याणकं भवति ॥ २८ ॥

एभ्य इत्यादि।—एभ्य एवेति—कल्याणकोक्तविशालादिभ्यः। स्थिरादीनीत्युक्ते विदारिगन्धादेः पञ्चमूलस्यापि ग्रहणं स्यादत आह,एकविंशतिमिति ; तद्गुणसंविज्ञानबहुव्रीहिशङ्कानिरासार्थं वा एकविंशतिमित्युक्तम्। गृष्टिरेकवारप्रसूता धेनुः। अत्र चतुर्गुणक्षीरस्य निर्दिष्टत्वादुत्सर्गसिद्धो द्रव एव देयः, तेनानिर्दिष्टमानक्काथोऽत्र स्नेहसम एवेति पञ्चगुणः पाकः, युक्तश्चैतत्, "पञ्च प्रभृति यत्र स्युः" इत्यादिपरिभाषार्थेनास्यार्थस्य समानन्यायत्वादिति केचित्। अन्ये तु—क्षीरेणैवात्र चतुर्गुणे प्राप्तेऽयं कषायः "स्नेहादपि चातुर्गुण्यम्" इत्यादिपरिभाषाया अविषयत्वेन "स्नेहात् तोयं चतुर्गुणम्" इति द्रवचातुर्गुण्यपरिभाषया क्षीरमानसाहचर्य्याद्वा चतुर्गुणो ज्ञेय इति वदन्ति। वीरा पृश्निपर्णी, क्षीरविदारीत्यन्ये। द्विमाषेत्यनेन राजमाषचैवमाषयोर्ग्रहणमिति केचित् ; अन्ये तु—मुद्गपर्णीमाषपर्ण्योर्ग्रहणमित्याहुः। अपरे तु—द्विशब्दस्य काकोलीत्यनेन सम्बन्धात् क्षीरकाकोल्या अपि ग्रहणमित्याहुः, तन्न,

चैतसं घृतम्।—

पञ्चमूल्यावकाश्मर्य्यौ रास्नैरण्डत्रिवृद्बला।
मूर्वा शतावरी चेति क्वाथ्यैर्द्विपलिकैरिमैः॥ ३१॥
कल्याणकस्य चाङ्गेन तत् घृतं चैतसं स्मृतम्।
सर्वचेतोविकाराणां शमनं परमं मतम्॥ ३२॥
घृतप्रस्थोऽत्र पक्तव्यः क्वाथो द्रोणाम्भसा घृतात्।
चतुर्गुणोऽत्र सम्पाद्यः कल्कः कल्याणकैरितः॥ ३३॥

महापैशाचिकं घृतम्।—

जटिला पूतना केशी चारटी मर्कटी वचा।
त्रायमाणा जया वीरा चोरकः कटुरोहिणी॥ ३४॥
वयःस्था शूकरी छत्रा सातिच्छत्रा पलङ्कषा।
महापुरुषदन्ता च वयःस्था नाकुलीद्वयम्॥ ३५॥

---

वाग्भटसंवादविरोधात्। अन्ये तु—"वीराद्रैमाष" इति पाठान्तरमाहुः, आर्द्रमाषो- ऽशुष्कमाष इति व्याचक्षते च। वीरादीन्य(च?)परिमितग्रहीतानीत्येके; वीरादीनां प्रत्येकमेकपलमिति महेश्वरः॥ २९।३०॥

पञ्चमूल्यावित्यादि।—पञ्चमूल्यावकाश्मर्य्याविति—दशमूली गाम्भारीरहिता। द्विपलिकैरिति—एषां प्रत्येकं द्विपलम्। कल्याणकस्य चाङ्गेनेति—पानीयकल्याण- कोक्तकल्केन यथोक्तमानेनेत्यर्थः; अन्ये तु—तदुक्तमानं परित्यज्य घृतात् पादिकं मानं गृह्णन्ति। यद्यपि "द्रव्यमापोथितं क्वाथ्यं दत्त्वा षोडशिकं जलम्। पादावशिष्टं कर्त्तव्यमेष क्वाथविधिः स्मृतः॥" इति क्वाथविधिपरिभाषया विंशत्पले क्वाथ्ये षष्टिः शरावा भवन्ति जलस्य, तथाऽपि क्वाथस्य घृताच्चातुर्गुण्यार्थं द्रोणाम्भसेति चक्रेणोक्तम्॥ ३१—३३॥

जटिलेत्यादि।—महापैशाचिके जटिला मांसी। पूतना हरीतकी। केशी भूतकेशी। चारटी कुष्माण्ड, पद्मचारिणीमित्यन्ये, ब्रह्मयष्टीत्यपरे। मर्कटी शूकशिम्बी। जया जयन्ती। वीरा क्षीरकाकोली, पृश्निपर्णीत्यपरे। चोरकश्चोरपुष्पी। वयःस्था ब्राह्मी, गुडूचीत्यन्ये, अपरे तु निर्गुण्डीत्याहुः। शूकरी वाराहिका, तदभावे चर्मकारालुकः। छत्रा मधुरिका। अतिच्छत्रा शतपुष्पा। पलङ्कषा गुग्गुलुः। महापुरुषदन्ता शतावरी। वयःस्था शुकानना, ब्राह्मीत्यन्ये। नाकुलीद्वयं

कटम्भरा वृश्चिकाली स्थिरा चैव च तैर्घृतम्।
सिद्धं चतुर्थकोन्माद-ग्रहापस्मारनाशनम्॥ ३६॥
महापैशाचिकं नाम घृतमेतत् यथाऽमृतम्।
मेधाबुद्धिस्मृतिकरं बालानाञ्चाङ्गवर्द्धनम्॥ ३७॥

हिङ्ग्वाद्यं घृतम्।—

हिङ्गुसौवर्चलव्योषैर्द्विपलांशैर्घृताढ़कम्।
चतुर्गुणे गवां मूत्रे सिद्धमुन्मादनाशनम्॥ ३८॥

लशुनाद्यं घृतम्।—

लशुनस्याविनष्टस्य तुलार्द्धं निस्तुषीकृतम्।
तदर्द्धं दशमूल्यास्तु द्व्याढ़केऽपां विपाचयेत्॥ ३९॥
पादशेषे घृतप्रस्थं लशुनस्य रसं तथा।
कोलमूलकवृक्षाम्ल-मातुलुङ्गार्द्रकै रसैः॥ ४०॥
दाड़िमाम्बुसुरामस्तु काञ्जिकाम्लैस्तदर्द्धिकैः।
साधयेत् त्रिफलादारु-लवणव्योषदीप्यकैः॥ ४१॥
यमानीचव्यहिङ्ग्वम्ल-वेतसैश्च पलार्द्धिकैः।
सिद्धमेतत् पिबेच्छूल-गुल्मार्शोजठरापहम्॥ ४२॥
ब्रध्नपाण्ड्वामयप्लीह-योनिदोषक्रिमिज्वरान्।
वातश्लेष्मामयांश्चान्यानुन्मादांश्चापकर्षति॥ ४३॥

---

रास्नाद्वयं, रास्ना गन्धरास्ना च। कटम्भरा कटभी प्रसारणी वा। वृश्चिकाली वृश्चिकपत्री, "बिछाती" इति ख्यातम्। स्थिरा शालपर्णी। स्वल्पपैशाचिकस्या-भावात् महच्छब्दोऽयं महागुणकारकत्वादित्याहुः। अन्ये तु—"जटिला स्थिराऽम्बु-भूकेशी" इत्यादिना स्वल्पपैशाचिकस्यापि तन्त्रान्तरे पठितत्वात् तदपेक्षयाऽस्य महत्त्वमाहुः॥ ३४—३७॥

हिङ्ग्वित्यादि।—अत्र व्योषस्य प्रत्येकं द्विपलांशता॥ ३८॥

लशुनस्येत्यादि।—अविनष्टस्येति—विशुद्धस्य। तुलाऽर्द्धं पञ्चाशत् पलानि। तदर्द्धं दशमूलस्येति—मिलित्वा दशमूलस्य पञ्चविंशतिः पलानि। पादशेषे इति—आढ़के। लशुनस्य रसं तथा इति—प्रस्थमेव। दाड़िमाम्बु दाड़िमरसः। तदर्द्धिकैरिति—अत्र

## आगन्तून्मादचिकित्सा ।

दैवयुक्तिव्यपाश्रयचिकित्साविधिः ।—

सर्पिःपानादिरागन्तोर्मन्त्रादिश्चेष्यते विधिः ।
पूज्याबल्युपहारेष्टि-होममन्त्राञ्जनादिभिः ॥
जयेदागन्तुमुन्मादं यथाविधि शुचिर्भिषक् ॥ ४४ ॥

कृष्णाद्यञ्जनम् ।—

कृष्णामरिचसिन्धूत्थ-मधुगोपित्तनिर्मितम् ।
अञ्जनं सर्वभूतोत्थ-महोन्मादविनाशनम् ॥ ४५ ॥

दार्व्यादि-गुडिकाऽञ्जनम् ।—

दार्वीमधुभ्यां पुष्यायां कृतञ्च गुड़िकाऽञ्जनम् ॥ ४६ ॥

मरिचाञ्जनम् ।—

मरिचं वाऽऽतपे मासं सपित्तं हितमञ्जनम् ।
वैकृतं पश्यतः कार्य्यं दोषभूतहृतस्मृतेः ॥ ४७ ॥

निम्बपत्रादिधूपः ।—

निम्बपत्रवचाहिङ्गु-सर्पनिर्मोकसर्षपैः ।

---

तच्छब्देन प्राधान्यात् प्रत्यासत्त्या च घृतपरिमाणात् कोलादिरसैः प्रत्येकमर्द्धप्रस्थैरित्यर्थः । अन्ये तु—तदर्द्धिकैरित्यत्र तच्छब्देन पादावशिष्टकषायः परामृश्यते, तेन लशुनस्य रसादीनां दशानामेव शरावार्द्धिकत्वेन प्रत्येकं प्रस्थमानमित्याहुः ॥३९—४३॥

आगन्तून्मादचिकित्सामाह, सर्पिरित्यादि ।—सर्पिरिह भूतहरं चैतसादि । पूज्येत्यादौ—बलिः पूजोपकरणम् । उपहार उपढौकनम् ; किंवा पूजाबल्योरुपहारः उपढौकनमेव । अञ्जनादिभिरिति आदिशब्दात् स्वस्त्ययनादिकं बोध्यम् ; यदुक्तं—"भूतानामधिपं देवमीशानं जगतः प्रभुम् । पूजयन् प्रयतो नित्यं जयत्युन्मादजं भयम् ॥" ( च० चि० उन्माद० ) इति ॥ ४४ ॥

कृष्णेत्यादि ।—गोपित्तं गोरोचना ॥ ४५ ॥

दार्वीत्यादि ।—स्पष्टम् ॥ ४६ ॥

मरिचमित्यादि ।—मरिचं गोरोचनया आतपे मासैकं भावितमञ्जनं कर्त्तव्यम् । दोषभूतहृतस्मृतेरिति—दोषेण भूतेन वा हृता स्मृतिर्यस्येत्यर्थः ॥ ४७ ॥

डाकिन्यादिहरो धूपो भूतोन्मादविनाशनः ॥ ४८ ॥

कार्पासबीजादिधूपः।—

कार्पासास्थिमयूरपिच्छबृहतीनिर्माल्यपिण्डीतकै-
स्त्वग्वांशीवृषदंशविट्तुषवचाकेशाहिनिर्मोककैः।
गोशृङ्गद्विपदन्तहिङ्गुमरिचैस्तुल्यैस्तु धूपः कृतः
स्कन्दोन्मादपिशाचराक्षससुरावेशज्वरघ्नः स्मृतः ॥ ४९ ॥

गवाक्षी श्वेतानस्यद्वयम्।—

ब्रह्मराक्षसजिन्नस्यं पक्वैन्द्रीफलमूत्रजम्।
साज्यं भूतहरं नस्यं श्वेताज्येष्ठाम्बुनिर्मितम् ॥ ५० ॥

देवादिग्रहोन्मादे तीक्ष्णाञ्जनादिनिषेधः।—

देवर्षिपितृगन्धर्वैरुन्मत्तस्य च बुद्धिमान्।
वर्जयेदञ्जनादीनि तीक्ष्णानि क्रूरमेव च ॥ ५१ ॥

उन्मादनिवृत्तिलक्षणम्।—

प्रसादश्चेन्द्रियार्थानां बुद्ध्यात्ममनसां तथा।
धातूनां प्रकृतिस्थत्वं विगतोन्मादलक्षणम् ॥ ५२ ॥

इत्युन्माद-चिकित्सा।

---

निम्बेत्यादि।—स्पष्टम् ॥ ४८ ॥

कार्पासास्थीत्यादि।—कार्पासास्थि कार्पासबीजम्। निर्माल्यं शिवनिर्माल्यम्। पिण्डीतकं मदनफलम्। त्वग्वांशीति—त्वगुशीरं, वांशी वंशलोचना; अन्ये तु—त्वग्वांशी वंशस्य त्वगित्याहुः। वृषदंशो विड़ालः, तस्य विट् पुरीषम्। केशो भूतकेशी, बाल इत्यपरे ॥ ४९ ॥

ब्रह्मराक्षसजिदित्यादि।—पक्वैन्द्रीफलं परिणतगोरक्षकर्कटीफलं गोमूत्रेण सह साज्यं नस्यं विधेयम्। श्वेता श्वेतापराजिता। ज्येष्ठाम्बु तण्डुलाम्बु ॥ ५० ॥

देवेत्यादि।—क्रूरमिति—ताड़नबन्धनादिकम्। एतच्च परिवर्जनं वैद्यातुरोपघातपरिहारार्थम्; उक्तञ्च—"वैद्यातुरौ विनिघ्नन्ति ध्रुवं क्रुद्धा महौजसः" (सु० उ० ६० अ०) इति ॥ ५१।५२ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायाम् उन्माद-चिकित्सा-विवृतिः।

# अथापस्मार-चिकित्सा।

वातादिजे वस्त्यादिक्रियोपदेशः।—

वातिकं वस्तिभिः प्रायः पैत्तं प्रायो विरेचनैः।
श्लैष्मिकं वमनप्रायैरपस्मारमुपाचरेत्॥ १॥

सर्वतः सुविशुद्धस्य सम्यगाश्वासितस्य च।
अपस्मारविमोक्षार्थं योगान् संशमनान् शृणु॥ २॥

मनोह्वाद्यञ्जनम्।—

मनोह्वा तार्क्ष्यजञ्चैव शकृत् पारावतस्य च।
अञ्जनं हन्त्यपस्मारमुन्मादञ्च विशेषतः॥ ३॥

यष्ट्यादिनस्याञ्जने।—

यष्टिहिङ्गुवचावक्र-शिरीषलशुनामयैः।
साजामूत्रैरपस्मारे सोन्मादे नावनाञ्जने॥ ४॥

कुक्कुरपित्तस्य अञ्जनं धूपश्च।—

पुष्योद्धृतं शुनः पित्तमपस्मारघ्नमञ्जनम्।
तदेव सर्पिषा युक्तं धूपनं परमं स्मृतम्॥ ५॥

नकुलादितुण्डादिभिः धूपः।—

नकुलोलूकमार्जार-गृध्रकीटाहिकाकजैः।
तुण्डैः पक्षैः पुरीषैश्च धूपनं कारयेद्भिषक्॥ ६॥

---

तुल्यचिकित्सितत्वादुन्मादानन्तरमपस्मारचिकित्सितमुच्यते, वातिकमित्यादि।—वमनप्रायैरिति—वमनप्रधानैः। सर्वत इति—ऊर्द्ध्वमधश्च शुद्धस्य। आश्वासितस्येति—संशोधनानन्तरं संसर्जनक्रमेण सञ्जातबलस्य॥ १।२॥

मनोह्वेत्यादि।—मनोह्वा मनःशिला। तार्क्ष्यजं रसाञ्जनम्॥ ३॥

यष्टीत्यादि।—वक्रं तगरम्। शिरीषं शिरीषस्य फलम्। आमयं कुष्ठम॥४॥

पुष्येत्यादि।—पुष्यनक्षत्रे यदृच्छया मृतकुक्कुरस्य पित्तं ग्राह्यमित्याहुः॥ ५॥

नकुलेत्यादि।—उलूकः पेचकः। कीटः पश्चिमदेशजो वृश्चिकः। एषां तुण्डादिकं यथासम्भवं ग्राह्यम्॥ ६॥

कायस्थादिवर्त्तिः।—

कायस्थां शारदान् मुद्गान् मुस्तोशीरयवांस्तथा।
सव्योषान् वस्तमूत्रेण पिष्ट्वा वर्त्तीः प्रकल्पयेत्॥ ७॥
अपस्मारे तथोन्मादे सर्पदष्टे गरार्दिते।
विषपीते जलमृते चैताः स्युरमृतोपमाः॥ ८॥

तुलस्याद्युत्सादनं मूत्रसेकश्च।—

अपेतराक्षसीकुष्ठ-पूतनाकेशिचोरकैः।
उत्सादनं मूत्रपिष्टैर्मूत्रैरेवावसेचनम्॥ ९॥

चर्मचटकपुरीषादिलेपत्रयम्।—

जतुकाशकृता तद्वद्दग्धैर्वा वस्तरोमभिः।
अपस्मारहरो लेपो मूत्रसिद्धार्थशिग्रुभिः॥ १०॥

वचाचूर्णप्रयोगः।—

यः खादेत् क्षीरभक्ताशी माक्षिकेण वचारजः।
अपस्मारं महाघोरं सुचिरोत्थं जयेत् ध्रुवम्॥ ११॥

उद्बन्धनरज्जुभस्मप्रयोगः।—

उल्लम्बितनरग्रीवा-पाशं दग्ध्वा कृता मसी।

---

कायस्थामित्यादि।—कायस्था निर्गुण्डी। शारदानिति मुद्गविशेषणं ज्येष्ठ-मासोद्भवमुद्गनिरासार्थम्। वर्त्तीरिति—अञ्जनवर्त्तीः। विषपीते इति—पीतविषे। गरं संयोगजं विषम्। जलमृते इति—जलपानेन मृतप्राये, सर्वथा मृते हि भेषजं विफल-मिति। जलमृतलक्षणं यथा—"विष्टब्धपायुमूत्रोऽक्षमाध्मातोदरमेहनम्। विद्याज्जल-मृतं जन्तुं शीतपादकराननम्॥" इति॥ ७।८॥

अपेतराक्षसीत्यादि।—अपेतराक्षसी श्वेततुलसी, तस्याः स्वरस इत्यर्थः। पूतना हरीतकी। केशी भूतकेशी। चोरकश्चोरपुष्पी। चरकोक्तपूर्वयोगे वस्तमूत्रसन्दर्शना-दत्रापि वस्तमूत्रमेवेत्याहुः; किंवा प्रधानकल्पतयाऽत्र गोमूत्रमेव मूत्रशब्दवाच्यम्॥९॥

जतुकेत्यादि।—जतुकाशकृतेति—जतुका चर्मचटकः, तस्याः पुरीषेण तद्वदिति—उत्सादनम्। दग्धैरिति वस्तरोमभिरित्यनेन योज्यम्। अपस्मारेत्यादौ मूत्रं गोमूत्रम्॥ १०॥

यः खादेदित्यादि।—माक्षिकेण मधुना॥ ११॥

शीताम्बुना समं पीता हन्त्यपस्मारमुद्धतम् ॥ १२ ॥

तैलरसोनादिप्रयोगत्रयम्।—

प्रयोज्यं तैल-लशुनं पयसा वा शतावरी।
ब्राह्मीरसश्च मधुना सर्वापस्मारभेषजम् ॥ १३ ॥

छाग्या अमरानाड़ीप्रयोगः।—

निर्दह्य निर्द्रवां कृत्वा छागिकाऽमरनालिकाम्।
तामम्लसाधितां खादन्नपस्मारमुदस्यति ॥ १४ ॥

दशमूलीक्काथ-कल्याणघृतयोः प्रयोगावस्था।—

हृत्कम्पोऽक्षिरुजा यस्य स्वेदो हस्तादिशीतता।
दशमूलीजलं तस्य कल्याणाज्यञ्च योजयेत् ॥ १५ ॥

स्वल्पपञ्चगव्यं घृतम्।—

गोशकृद्रसदध्यम्ल-क्षीरमूत्रैः समैर्घृतम्।
सिद्धं चतुर्थकोन्माद-ग्रहापस्मारनाशनम् ॥ १६ ॥

वृहत् पञ्चगव्यं घृतम्।—

द्वे पञ्चमूले त्रिफलां रजन्यौ कुटजत्वचम्।
सप्तपर्णमपामार्गं नीलिनीं कटुरोहिणीम् ॥ १७ ॥

---

उल्लम्बितेत्यादि।—उल्लम्बित उद्बन्धनमृतो नरः, तस्य ग्रीवापाशं ग्रीवाबन्धनरज्जुम् ॥ १२ ॥

प्रयोज्यमित्यादि।—योगत्रयं स्पष्टम् ॥ १३ ॥

निर्दह्येत्यादि।—अमरनालिका अमराख्यस्थूलनाड़ी। अम्लसाधितामिति—काञ्जिकसाधिताम् ॥ १४ ॥

हृत्कम्प इत्यादि।—स्पष्टम् ॥ १५ ॥

गोशकृदित्यादि।—दध्यम्लं परिणतदधि। समशब्दोऽत्र गोशकृद्रसादिभिः सम्बध्यते ॥ १६ ॥

द्वे पञ्चमूले इत्यादि।—द्वे पञ्चमूली विदारिगन्धादिके। रजन्याविति—हरिद्राद्वयम्; वाग्भटेऽपि—"द्विपञ्चमूलीत्रिफला-हिनिशाकुटजत्वचः" (उ० ७ अ०) इत्युक्तम्। सप्तपर्णं सप्तपर्णस्य त्वक्। अपामार्गम् अपामार्गस्य मूलम्। नीलिनीं

सम्पाकं फल्गु मूलञ्च पौष्करं सदुरालभम्।
द्विपलानि जलद्रोणे पक्त्वा पादावशेषिते ॥ १८ ॥
भार्गीं पाठां त्रिकटुकं त्रिवृतां निचुलानि च।
श्रेयसीमाढ़कीं मूर्वां दन्तीं भूनिम्बचित्रकौ ॥ १९ ॥
द्वे शारिवे रौहिषञ्च भूतीकं मदयन्तिकाम्।
क्षिपेत् पिष्टाऽक्षमात्राणि तैः प्रस्थं सर्पिषः पचेत् ॥ २० ॥
गोशकृद्रसदध्यम्ल-क्षीरमूत्रैश्च तत्समैः।
पञ्चगव्यमिति ख्यातं महत् तदमृतोपमम् ॥ २१ ॥
अपस्मारे ज्वरे कासे श्वयथावुदरेषु च।
गुल्मार्शःपाण्डुरोगेषु कामलायां हलीमके ॥
अलक्ष्मीग्रहरक्षोघ्नं चतुर्थकविनाशनम् ॥ २२ ॥

महाचैतसं घृतम्।—

शणस्त्रिवृत् तथैरण्डो दशमूली शतावरी।
रास्ना मागधिका शिग्रुः क्वाथ्यं द्विपलिकं भवेत् ॥ २३ ॥
विदारी मधुकं मेदे द्वे काकोल्यौ सिता तथा।
एभिः खर्जूरमृद्वीकाऽभीरुमुञ्जातगोक्षुरैः ॥ २४ ॥
चैतसस्य घृतस्याङ्गैः पक्तव्यं घृतमुत्तमम्।
महाचैतससंज्ञन्तु सर्वापस्मारनाशनम् ॥ २५ ॥

---

स्वनामख्यातम। सम्पाकम आरग्वधम्। फल्गु काकोडुम्बरिकाफलं, "डुमुर" इति लोके। पौष्करं मूलमित्यन्वयः। भार्गीं भार्गीमूलम। त्रिवृतां त्रिवृतामूलम्। निचुलानि इज्जलस्य फलानि। श्रेयसीं हस्तिपिप्पलीम। आढ़की तुवरी, तस्या बीजम्। रौहिषं गन्धतृणभेदः। भूतीकं यमानीम्। मदयन्तिकां वनमल्लिकाम्। अत्र पादावशिष्टकषायश्चतुर्गुणः। गोशकृद्रसादयश्च घृतसमाः, तेनाष्टगुणः पाकः ॥ १७—२२ ॥

शण इत्यादि।—महाचैतसे शणस्य मूलं बीजं वा, व्यवहारस्तु बीजेनेति। मागधिका पिप्पली। क्वाथ्यं द्विपलिकं भवेदित्यन्तेन क्वाथः, क्वाथोऽपि पूर्वोक्तचैतसक्वाथवत् द्रोणाम्भसा कार्य्यः। विदारीप्रभृतिभिः कल्कः। मेदे मेदे द्वे।

गरोन्मादप्रतिश्याय-तृतीयकचतुर्थकान्।
पापालक्ष्मी जयेदेतत् सर्वग्रहविनाशनम्॥ २६॥
श्वासकासहरञ्चैव शुक्रार्त्तवविशोधनम्।
घृतमानं क्वाथविधिरिह चैतसवन्मतः॥ २७॥
कल्कश्चैतसकल्कोक्त-द्रव्यैः सार्द्धञ्च पादिकः।
नित्यं मुञ्जातकाप्राप्तौ तालमस्तकमिष्यते॥ ॥ २८॥

कुष्माण्डकघृतम्।—

कुष्माण्डकरसे सर्पिरष्टादशगुणे पचेत्।
यष्ट्याह्वकल्कं तत्पानमपस्मारविनाशनम्॥ २९॥

ब्राह्मीघृतम्।—

ब्राह्मीरसे वचाकुष्ठ-शङ्खपुष्पीभिरेव च।
पुराणं मेध्यमुन्माद-ग्रहापस्मारनुत् घृतम्॥ ३०॥

पलङ्कषाद्यं तैलम्।—

पलङ्कषावचापथ्या-वृश्चिकाल्यर्कसर्षपैः।
जटिलापूतनाकेशी-नाकुलीहिङ्गुचोरकैः॥ ३१॥
लशुनातिरसाचित्रा-कुष्ठैर्विड्भिश्च पक्षिणाम्।

खर्जूरं खर्जूरस्य फलम्। अभीरुः शतावरी। मुञ्जातम औत्तरापथिकः कन्दः, तदभावे तालमस्तकम्। चैतसस्य घृतस्याङ्गैरिति—पूर्वोक्तचैतसघृतकल्कैर्विशाला-त्रिफलादिभिः। चैतसस्येत्यत्र पानीयकल्याणकस्याङ्गैरिति वक्तव्येऽतिदेशातिदेश-करणम् अत्रोक्तकल्कद्रव्येण सह पादिकार्थम्, अन्यथा पानीयकल्याणके तत्राचसम-न्वितैरित्युक्तत्वादत्रापि अत्यनानं प्रसज्येत, अतो विशालात्रिफलेत्यादिना कल्केन सह विदारीमधुकाद्यैः कल्कस्य मिलित्वा घृतात् पादिकत्वं ज्ञेयम्; अत एव वक्ष्यति—"कल्कश्चैतसकल्कोक्त-द्रव्यैः सार्द्धञ्च पादिकः" इति॥ २३—२८॥

कुष्माण्डकेत्यादि।—कुष्माण्डकघृतं स्पष्टम्॥ २९॥

ब्राह्मीत्यादि।—ब्राह्मीघृते चतुर्गुणे ब्राह्मीरसे घृतपाकः॥ ३०॥

पलङ्कषेत्यादि।—पलङ्कषा गुग्गुलुः। जटिला मांसी। पूतनाकेशी भूतकेशी इति केचित्; अन्ये तु—पूतना हरीतकीभेदः, केशी भूतकेशीत्याहुः। जतूकर्णे

मांसाग्निनां यथालाभं वस्तमूत्रे चतुर्गुणे ॥
सिद्धमभ्यञ्जने तैलमपस्मारविनाशनम् ॥ ३२ ॥

छागमूत्रपक्वतैलं गोमूत्रपुरीषाभ्यां स्नानोत्सादनञ्च।—

अभ्यङ्गः सार्षपं तैलं वस्तमूत्रे चतुर्गुणे।
सिद्धं स्याद्गोशकृन्मूत्रैः स्नानोत्सादनमेव च ॥ ३३ ॥

इत्यपस्मार-चिकित्सा।

---

## अथ वातव्याधि-चिकित्सा।

सामान्यचिकित्साविधिः।—

स्वाद्वम्ललवणैः स्निग्धैराहारैर्वातरोगिणः।
अभ्यङ्गस्नेहवस्त्याद्यैः सर्वानेवोपपादयेत् ॥ १ ॥

कोष्ठामाशयगतयोः चिकित्साविधिः।—

विशेषतस्तु कोष्ठस्थे वाते क्षारं पिबेन्नरः।

---

गोलोमी पठ्यते, न तु पूतना। नाकुली महापैशाचिके व्याख्याता। अतिरसा जलयष्टिमधु; अन्ये तु—ज्योतिष्मतीत्याहुः। जतूकर्णं मधुकमिति। शिवा दन्ती। मांसाग्निनां पक्षिणामिति—गृध्रादीनाम् ॥ ३१।३२ ॥

अभ्यङ्ग इत्यादि।—अकल्कमिदं तैलम्। गोशकृता उत्सादनमुद्वर्त्तनं, गोमूत्रेण स्नानमिति यथायोग्यतया बोध्यम् ॥ ३३ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायाम् अपस्मार-चिकित्सा-विवृतिः।

---

वातविशेषस्याक्षेपकादेरपस्मारवद्वेगकर्तृत्वात् तथा प्रायस्तुल्यचिकित्सितत्वाच्च अपस्मारानन्तरं वातव्याधिरुच्यते। यद्यपि वातव्याधिरित्युक्तेरविकृते विकृते वा वायाविति एव प्रसङ्गः, तथाऽपि व्याधिपदसामानाधिकरण्याद्विकृतो दुःखकारी वातो वातव्याधिरित्यर्थो ज्ञेयः। ननु वातव्याधिवत् पित्तकफविकारा अपि शोषचोषटङ्कारादयः किमिति पृथक्करणेन नोच्यन्ते? नैवम्; वायोरतिबलत्वेन गरीयस्त्वात् तद्विकाराणामेव तु दुःसाध्यत्वात् आशुबाल्ययकरत्वात् विशिष्टचिकित्सितत्वाच्च पृथक्करणेनाभिधानं युक्तम्; कफपित्तविकाराणान्तु यथाविधि वमनविरेचनादिकफपित्तसामान्य-चिकित्सोक्ता चिकित्सा युक्तेति ज्ञयम्। साधारणचिकित्सामाह—स्वाद्वम्लेत्यादि ॥१॥

आमाशयस्थे शुद्धस्य यथादोषहरी क्रिया ॥ २ ॥

आमाशयगते षड्धरणयोगप्रयोगविधिः।—

आमाशयगते वाते छर्दिताय यथाक्रमम्।
देयः षड्धरणो योगः सप्तरात्रं सुखाम्बुना ॥ ३ ॥

षड्धरणयोगः।—

चित्रकेन्द्रयवाः पाठा कटुकातिविषाऽभया।
महाव्याधिप्रशमनो योगः षड्धरणः स्मृतः ॥ ४ ॥
पलदशमांशो धरणं योगोऽयं सौश्रुतस्ततस्तस्य।
माषेण पञ्चगुञ्जकमानेन प्रत्यहं देयः ॥ ५ ॥

पक्वाशयगते चिकित्साविधिः।—

पक्वाशयगते वाते हितं स्नेहविरेचनम्।
वस्तयः शोधनीयाश्च प्राशाश्च लवणोत्तराः ॥ ६ ॥

---

विशेषत इत्यादि।—चारं यवचारं, किंवा ग्रहण्यध्यायनिर्दिष्टं दीपनचारम्। आमाशयस्थे इत्यादौ शुद्धस्य वमनविरेचनादिना शुद्धस्य ॥ २ ॥

आमाशयगते इत्यादि सुश्रुतस्य।—छर्दिताय यथाक्रममिति—स्नेहस्वेद-पेयादिक्रमानतिक्रमेण, वातस्यापि कफस्थानगतत्वेन; यदुक्तं—"स्थानात् स्थानगतं दोषं स्थानवत् समुपाचरेत्" इति ॥ ३ ॥

चित्रकेत्यादि।—षड्धरणयोगे महाव्याधिप्रशमन इति—सेदःकफावृतव्याधिः महाव्याधिः। षड्धरण इति—षसां चित्रकादीनां प्रत्येकं धरणं पलदशमांशरूपं मानं यत्र स तथा। एतदेवाह पलदशमांशो धरणमिति। ननु पलद्रव्यव्यवस्थाऽपि चरकसुश्रुतमतभेदेन द्विधोक्ता, तदिह चरकस्य पलस्य दशमांशो धरणं, सुश्रुतस्य वा? इत्यत आह, योगोऽयमिति—अयं चित्रकेत्यादियोगः सौश्रुत इति कृत्वा तस्य सुश्रुतस्य पञ्चगुञ्जकमानेन माषेण यत् पलं भवति, तस्यैव पलस्य दशमो भागः प्रत्येकं चित्रकादीनां षसां प्रत्यहं सप्तदिनं यावद्देय इत्यर्थः; एवञ्च पञ्चगुञ्जक-मानानुसारात् पलदशमांशेन रक्तिद्वयाधिकचतुर्माषका भवन्ति, षड्भिर्धरणैश्च मिलित्वा पञ्चरक्तिकमाषानुसारेण सरक्तिद्वयचतुर्माषाधिककर्षद्वयं स्यात्, एतदेव व्यवह्रियमाणेन दशरक्तिकमाषेण सरक्तिद्वयमाषत्रयाधिककर्षमानं भवति, तादृङ्-मानञ्च प्रत्यहमेव सप्तरात्रंयावत् देयम्। उत्सर्गतो हि कर्षचूर्णस्य देयो भवति, अत्र तु सरक्तिद्वयमाषत्रयाधिककर्षग्रहणार्थं विशेषवचनमेवेति ॥ ४।५ ॥

पक्वाशयगते इत्यादि।—वस्तयः शोधनीयाश्च इति—शोधनवस्तयः; यथा—

स्नेहलवणम्।—

स्नुहीलवणवार्त्ताकु-स्नेहांश्छन्ने घटे दहेत्।
गोमयैः स्नेहलवणं तत् परं वातनाशनम्॥ ७॥

वस्तिगते त्वगादिगते च चिकित्साविधिः।—

कार्य्यो वस्तिगते चापि विधिर्वस्तिविशोधनः।
त्वङ्मांसासृक्शिराप्राप्ते कुर्य्याच्चासृग्विमोक्षणम्॥ ८॥

स्नाय्वादिगते चिकित्साविधिः।—

स्नेहोपनाहाग्निकर्म-बन्धनोन्मर्दनानि च।
स्नायुसन्ध्यस्थिसम्प्राप्ते कुर्य्याद्वाते विचक्षणः॥ ९॥

रसरक्तगतयोः चिकित्साविधिः।—

स्वेदाभ्यङ्गावगाहांश्च हृद्यञ्चान्नं त्वगाश्रिते।

"शोधनद्रव्यनिःक्वाथास्तत्कल्कस्नेहसैन्धवैः। युक्ताः खजेन मथिता वस्तयः शोधना मताः॥" इति। प्राशाश्च लवणोत्तरा इति—लवणप्रधाना आहाराः, किंवा लवणोत्तराः प्राशाः स्नेहलवणकल्याणलवणादयः॥ ६॥

तदेव स्नेहलवणमाह, स्नुहीत्यादि।—अत्र लवणानि पञ्च, स्नेहाश्चत्वारः। छन्ने इति—शरावादिपिहिते लिप्तमुखे। स्नुहीपञ्चलवणवार्त्ताकुफलानि तदनुरूपैः घृततैल-वसामज्जभिः स्निग्धीकृत्य घटे कृत्वा मुखमालिप्य गोमयैरिति—गोमयाग्निना दग्धव्यानि, अतः क्वाथं विभज्य उपयोज्यानि॥ ७॥

कार्य्य इत्यादि।—विधिर्वस्तिविशोधन इति—मूत्राघाताश्मरीचिकित्साविधिः। त्वगित्यादि।—अत्र त्वङ्मांसादिगतवाते रक्तमोक्षणरूपमेकमेव चिकित्सितम् आवरकरक्तव्यपगमतया बोध्यम्। अन्ये—"स्नेहाभ्यङ्गोपनाहांश्च मर्दनालेपनानि च" (चि० ४ अ०) इति सुश्रुतवाक्यस्य त्वङ्मांसासृक्शिराप्राप्ते इत्यनेन सह सम्बन्धं विदधति, ततश्च त्वङ्मांसासृग्गतवाते स्नेहाभ्यङ्गादिकं, रक्तगतवाते तु योग्यतया रक्तमोक्षणमेवेत्याहुः॥ ८॥

स्नेहेत्यादि।—स्नेहोपनाहेत्यादिना स्नायु-सन्ध्यस्थिगतवातचिकित्सामाह॥९॥

स्वेदेत्यादि।—स्वेदाभ्यङ्गेत्यादिना रसगतानिलचिकित्सामाह। हृद्यमित्यत्र "स्पृष्टम्" (स्पर्श्यं? त्वच्यं?) इति जेज्जड़ः पठति, किन्त्वत्र तक्शब्देन तक्स्थत्वाद्रस

शीताः प्रदेहा रक्तस्थे विरेको रक्तमोक्षणम् ॥ १० ॥

मांसमेदोऽस्थिमज्जगेषु चिकित्साविधिः।—

विरेको मांसमेदःस्थे निरूहाः शमनानि च।
बाह्याभ्यन्तरतः स्नेहैरस्थिमज्जगतं जयेत् ॥ ११ ॥

शुक्रगते चिकित्साविधिः।—

हर्षोऽन्नपानं शुक्रस्थे बलशुक्रकरं हितम्।
विबद्धमार्गं शुक्रन्तु दृष्ट्वा दद्याद्विरेचनम् ॥ १२ ॥

गर्भशोषे मधुकादिक्षीरम्।—

गर्भे शुष्के तु वातेन बालानाञ्चापि शुष्यताम्।
सितामधुककाश्मर्य्यैर्हितमुत्थापने पयः ॥ १३ ॥

शिरोगते चिकित्साविधिः।—

शिरोगतेऽनिले वात-शिरोरोगहरी क्रिया ॥ १४ ॥

व्यादितास्यहनुग्रहे चिकित्साविधिः।—

व्यादितास्ये हनुं स्विन्नामङ्गुष्ठाभ्यां प्रपीड्य च।
प्रदेशिनीभ्याञ्चोन्नाम्य चिवुकोन्नामनं हितम् ॥ १५ ॥

---

उच्यते, त्वगाश्रयित्वञ्च रसस्य सर्वगत्वाद्भवति, अत एव धातुगतकुष्ठाभिधाने त्वग्गतत्वेनैव रसगतत्वमुक्तमिति कृत्वा रसगतकुष्ठलक्षणं सुश्रुतेनोक्तम, अतो रसस्य विशेषेण हृदयाश्रितत्वात् हृदयमेव पाठो युक्त इत्याहुः। शीताः प्रदेहा इति शीतप्रदेहादिरूपचिकित्साकथनार्थमिह लिखितं, तेन त्वङ्मांसासृगित्यादिसुश्रुतवचनेन पूर्वोक्तेनास्य पौनरुक्त्यं नाशङ्कनीयम् ॥ १० ॥

मांसमेदःस्थानिलचिकित्सामाह—विरेक इत्यादि। अस्थिमज्जगतानिलचिकित्सामाह—बाह्येत्यादि ॥ ११ ॥

शुक्रस्थानिलचिकित्सामाह, हर्ष इत्यादि।—हर्ष इति मनसः ॥ १२ ॥

गर्भे इत्यादि।—मधुक-काश्मर्य्यफलाभ्यां दुग्धं साध्यं, सिता तु प्रक्षेपणीया। केचित् तु सितादिभिर्दुग्धं साध्यमित्याहुः। उत्थापने पुष्टिजनने ॥ १३।१४ ॥

व्यादितास्ये इत्यादि।—व्यादितास्ये विवृतास्ये। प्रदेशिनी अङ्गुष्ठानन्तराङ्गुली। उन्नास्येत्यत्र चिवुकमिति शेषः ॥ १५ ॥

अर्दिते चिकित्साविधिः।—

अर्दिते नवनीतेन खादेन्माषेण्डरीं नरः।
चीरमांसरसैर्भुक्त्वा दशमूलीजलं पिबेत् ॥ १६ ॥
स्नेहाभ्यङ्गशिरोवस्ति-पाननस्यपरायणः।
अर्दितं स जयेत् सर्पिः पिबेदौत्तरभक्तिकम् ॥ १७ ॥

मन्यास्तम्भे चिकित्साविधिः।—

पञ्चमूलीकृतः क्वाथो दशमूलीकृतोऽथवा।
रूक्षः स्वेदस्तथा नस्यं मन्यास्तम्भे प्रशस्यते ॥ १८ ॥

वाग्वाहिशिरादुष्टौ चिकित्साविधिः।—

वातात् वाग्धमनीदुष्टौ स्नेहगण्डूषधारणम् ॥ १९ ॥

कल्याणकलेहः।—

सहरिद्रा वचा कुष्ठं पिप्पली विश्वभेषजम्।
अजाजी चाजमोदा च यष्टीमधुकसैन्धवम् ॥ २० ॥
एतानि समभागानि सूक्ष्माचूर्णानि कारयेत्।
तच्चूर्णं सर्पिषाऽऽलोड्य प्रत्यहं भक्षयेन्नरः ॥ २१ ॥
एकविंशतिरात्रेण भवेच्छ्रुतिधरो नरः।
मेघदुन्दुभिनिर्घोषो मत्तकोकिलनिस्वनः ॥
जड़गद्गदमूकत्वं लेहः कल्याणको जयेत् ॥ २२ ॥

---

अर्दिते इत्यादि।—माषेण्डरी माषपिष्टकविकृतिः। माषेण्डरीभक्षणानन्तरं चीरमांसरसैरन्नं भुक्त्वा ततो दशमूलीजलं पिबेदित्यर्थः। औत्तरभक्तिकमिति—भोजनानन्तरकालीयम् ॥ १६।१७ ॥

पञ्चमूलीत्यादि।—स्पष्टम ॥ १८ ॥

वातादित्यादि।—वाग्धमनी वाग्वाहिनी धमनी ॥ १९ ॥

सहरिद्रेत्यादि।—अजाजी कृष्णजीरकम्। अजमोदा यमानी। यष्टीमधुकशब्देन ब्रह्मयष्टीति श्रीकण्ठदत्तो व्याचष्टे, तत्तु न व्यवहारसिद्धं, नापि टीकान्तरे दृष्टमिति ॥ २०—२२ ॥

वक्षःत्रिकादिगते चिकित्साविधिः।—

वक्षस्त्रिकस्कन्धगतं वायुं मन्यागतं तथा।
वमनं हन्ति नस्यञ्च कुशलेन प्रयोजितम्॥ २३॥

पक्षाघाते माषबलादिः।—

माषबलाशूकशिम्बीकत्तृणरास्नाऽश्वगन्धोरुवूकाणाम्।
क्वाथो नस्यनिपीतो रामठलवणान्वितः कोष्णः॥ २४॥
अपहरति पक्षवातं मन्यास्तम्भं सकर्णनादरुजम्।
दुर्जयमर्दितवातं सप्ताहाज्जयति चावश्यम्॥ २५॥

विश्वच्यवबाहुकयोः दशमूल्यादिः।—

दशमूलीबलामाष-क्वाथं तैलाज्यमिश्रितम्।
सायं भुक्त्वा पिबेन्नस्यं विश्वच्यामवबाहुके॥ २६॥

विश्वच्यवबाहुकयोः बलामूलादिनस्यचतुष्टयम्।—

मूलं बलायास्त्वथ पारिभद्रात् तथाऽऽत्मगुप्तास्वरसं पिबेद्वा।
नस्यन्तु यो मांसरसेन कुर्य्यान्मासादसौ वज्रसमानबाहुः॥२७॥

---

वक्ष इत्यादि सुश्रुतस्य।—त्रिकमिह अंसद्वयान्तरसन्धिः, तद्धि श्लेष्मस्थानं, तद्गते एव वाते वमनं नस्यञ्च यौगिकम्; नस्यमिह शिरोविरेचनमिति। कुशलेन प्रयोजितमिति विशेषणात् प्रतिमर्षं विना चतुर्विधमप्यत्र नस्यमित्येके॥ २३॥

माषबलेत्यादि।—अत्र कत्तृणं गन्धतृणम्। अश्वगन्धाया मूलम्। क्वाथमात्रा चात्र मुखेन पेयक्वाथतुल्या; यस्तु तावन्तं क्वाथं नासिकया पातुं न शक्नोति, तेनासौ शोकल्याज्यः। रामठं हिङ्गु, तस्य रक्तिकाद्वयं, सैन्धवस्य तु माषकद्वयं प्रक्षिपन्ति वृद्धाः। यस्मिन् पार्श्वे पीड़ा तत्पार्श्वनासापुटेन भोजनसमाप्तौ सायंकाले शक्त्यनुरूपं पेयश्चायं क्वाथः॥ २४।२५॥

दशमूलीत्यादि।—तैलाज्यमिश्रितमिति—तैलाज्यं प्रक्षेपणीयम्। भुक्त्वेति—भोजनानन्तरं सायंकाले शक्त्यनुरूपं नासिकया पिबेत्॥ २६॥

मूलमित्यादि।—मूलं बलाया इत्येको योगः। पारिभद्राच्च मूलमिति द्वितीयः; अनयोः स्वरसः क्वाथो वा। आत्मगुप्तास्वरसं पिबेदिति तृतीयः; पानमेषां नासिकया। नस्यन्तु यो मांसरसेनेति चतुर्थः। अत्र तैलसैन्धवे प्रक्षिपन्ति वृद्धाः; अन्ये—

पक्षाघाते माषादिः।—

माषात्मगुप्तकैरण्ड-वाट्यालकशृतं पिबेत्।
हिङ्गुसैन्धवसंयुक्तं पक्षाघातनिवारणम्॥ २८॥

बाहुशोषे महाकल्याणघृतप्रयोगोपदेशः।—

बाहुशोषे पिबेत् सर्पिर्भुक्त्वा कल्याणकं महत्॥ २९॥

हृद्वाते शालपर्णीक्षीरम्।—

हृदि प्रकुपिते वाते चांशुमत्याः पयो हितम्॥ ३०॥

अपतानके हरीतक्यादि।—

हरीतकी वचा रास्ना सैन्धवञ्चाम्लवेतसम्।
घृतमात्रासमायुक्तमपतानकनाशनम्॥ ३१॥

खल्वरसोनपिण्डः।—

पलमर्द्धपलं वाऽपि रसोनस्य सुकुट्टितम्।
हिङ्गुजीरकसिन्धूत्थैः सौवर्चलकटुत्रयैः॥ ३२॥
चूर्णितैर्माषकोन्मानैरवचूर्ण्य विलोड़ितम्।
यथाऽग्नि भक्षितं प्रातः रुबूक्वाथानुपानतः॥ ३३॥
दिने दिने प्रयोक्तव्यं मासमेकं निरन्तरम्।

---

सैन्धवचूर्णमात्रं प्रक्षिपन्ति। नस्यन्तु यो मांसरसेनेत्यत्र "नस्यं तयोर्मांसरसेन" इति पठित्वा तयोः विश्वाचीबाहुकयोरिति व्याख्यानयन्त्येके॥ २७॥

माषेत्यादि।—वचनमिदं स्पष्टम्॥ २८॥

बाहुशोषे इत्यादि।—महत् कल्याणकम् उन्मादाधिकारोक्तम्॥ २९॥

हृदीत्यादि।—अंशुमती शालपर्णी, तया सिद्धं पयः इत्यर्थः॥ ३०॥

हरीतकीत्यादि।—क्वाथेन चूर्णेन वाऽयं योगः। क्वाथपक्षे—सैन्धवघृते प्रक्षिपेत्; चूर्णपक्षे—घृतकर्षद्वयेन चूर्णस्याष्टौ माषकाः पेया इत्यर्थः॥ ३१॥

पलमर्द्धपलमित्यादि।—पलमर्द्धपलं वेति—सार्द्धपलम्; अत्र वा शब्दो पूर्वयोगापेक्षया चार्थे वा-शब्दो वा। "पलमर्द्धपलञ्चैव" इत्यपि पाठः। त्वगादिरहित-पिष्टरसोनस्य किञ्चिदातपेन शुष्कस्य सार्द्धपलमेकम्। माषकाष्टकं माषकदशकं वा प्रतिदिनं सेवनीयम्। अनयैव मात्रया मासमेकं सेवनोपयुक्तं न स्यात्, अतः

वातरोगं निहन्त्याशु अर्दितं सापतन्त्रकम् ॥ २४ ॥
एकाङ्गरोगिणे चैव तथा सर्वाङ्गरोगिणे।
ऊरुस्तम्भे च गृध्रस्यां क्रिमिकोष्ठे विशेषतः ॥
कटीपृष्ठामयं हन्यादुदरञ्च विशेषतः ॥ २५ ॥

अपतानके वचादिचूर्णम्।—

हन्ति प्राग्भोजनात् पीतं दध्यम्लं सवचोषणम्।
अपतानकमन्योऽपि वातव्याधिक्रमो हितः ॥ २६ ॥

कुब्जे भद्रदार्वादि दशमूलीप्रयोगोपदेशः।—

वातघ्नैर्दशमूल्या च नवं कुब्जमुपाचरेत्।
स्नेहैर्मांसरसैर्वाऽपि प्रवृद्धं तं विवर्जयेत् ॥ २७ ॥

तूणीप्रतितूण्योः पिप्पल्यादिगणादीनां प्रयोगोपदेशः।—

पिप्पल्यादिरजस्तूणी प्रतितूण्योः सुखाम्बुना।
पिबेद्वा स्नेहलवणं सघृतं क्षारहिङ्गु वा ॥ २८ ॥

आध्माने लङ्घनाद्युपदेशः।—

आध्माने लङ्घनं पाणि-तापश्च फलवर्त्तयः।
दीपनं पाचनञ्चैव वस्तिश्चाप्यत्र शोधनः ॥ २९ ॥

पुनरपि रसोनापिण्डः करणीयः। न च वाच्यं यावत्या मात्रया मासोपयोगो भवति, तावत्येव मात्रा किमिति न दर्शिता? इति, यतस्तथा सति वीर्य्यहानिः स्यादित्याहुः ॥ ३२—३५ ॥

हन्तीत्यादि।—सवचोषणमिति—वचामरिचचूर्णसहितमित्यर्थः ॥ ३६ ॥

वातघ्नैरित्यादि।—वातघ्नैरिति—भद्रदार्वादिगणैः। दशमूली च विख्यातैव गणत्वात्; एतैः क्वाथस्नेहोपनाहादिकं कुर्य्यात्। नवत्वन्तु कुब्जस्य यावत् सरुजा वृद्धिरिति ॥ ३७ ॥

पिप्पल्यादीत्यादि।—पिप्पल्यादिगणः सौश्रुतः। रजश्चूर्णम्। स्नेहलवणञ्च स्नुहीलवणवार्त्ताकुस्नेहानित्यादिना पूर्वमुक्तम्, इदमपि सुखाम्बुनैव पिबेदिति। सघृतं क्षारहिङ्गु वेति—घृतेनैव यवक्षारहिङ्गुनोश्च पानम्; घृतस्य कर्षैकं, यवक्षारस्य चतुर्माषकं, हिङ्गुनः षड्रक्तिकमिति ॥ ३८ ॥

आध्माने इत्यादि।—दीपनं पाचनञ्चेति—लङ्घनानन्तरं दोषशेषशमनार्थं दीपनं पाचनञ्च भेषजं देयम् ॥ ३९ ॥

प्रत्याध्माने वमनाद्युपदेशः।—

प्रत्याध्माने तु वमनं लङ्घनं दीपनं तथा॥ ४०॥

अष्ठीलाप्रत्यष्ठीलयोः अन्तर्विद्रधिगुल्मचिकित्सोपदेशः।—

प्रत्यष्ठीलाऽष्ठीलिकयोरन्तर्विद्रधिगुल्मवत्॥ ४१॥

गृध्रस्यादौ दशमूल्यादिः।—

दशमूलीबलारास्ना-गुडूचीविश्वभेषजम्।

पिबेदेरण्डतैलेन गृध्रसीखञ्जपङ्गुषु॥ ४२॥

गृध्रस्यां शेफालीक्वाथः।—

शेफालिकादलैः क्वाथो मृद्वग्निपरिसाधितः।

दुर्वारं गृध्रसीरोगं पीतमात्रं समुद्धरेत्॥ ४३॥

गृध्रस्यादौ पञ्चमूलीक्वाथादिप्रयोगोपदेशः।—

पञ्चमूलीकषायस्तु रुवुतैलं त्रिवृद्‌घृतम्।

त्रिवृतैर्वाऽथवा युक्तं गृध्रसीगुल्मशूलनुत्॥ ४४॥

गृध्रस्यादौ आर्द्रकरसादियोगः।—

तैलं घृतं वाऽऽर्द्रकमातुलुङ्ग्यो रसं सचुक्रं सगुड़ं पिबेद्वा।

कट्यूरुपृष्ठत्रिकगुल्मशूल-गृध्रस्युदावर्त्तहरः प्रदिष्टः॥४५॥

गृध्रस्यादौ एरण्डतैलप्रयोगविधिः।—

तैलमेरण्डजं वाऽपि गोमूत्रेण पिबेन्नरः।

---

प्रत्याध्माने इत्यादि।—प्रत्याध्माने तु वमनमिति प्रत्याध्मानस्यामाशय-समुत्थत्वात्॥४०।४१॥

दशमूलीत्यादि।—दशमूल्यादीनां क्वाथे एरण्डतैलं प्रक्षेप्यम्॥ ४२॥

शेफालिकेत्यादि।—वचनमिदं स्पष्टम्॥ ४३॥

पञ्चमूलीत्यादि।—पञ्चमूली महती॥ ४४॥

तैलं घृतं वेत्यादि।—अत्र आर्द्रकरस-मातुलुङ्गफलरस-चुक्र-गुड़ानां तुल्यो भागः, तं तैलं घृतं वा दत्त्वा पिबेदिति। पिबेद्वेति वा-शब्दः पूर्वयोगापेक्षया; किंवा तैल-मेव सचुक्रगुड़मित्येको योगः, तथा घृतमपि सचुक्रगुड़मिति द्वितीयः, तथा मिलि-तार्द्रकरसमातुलुङ्गीरसोऽपि सचुक्रगुड़ इति तृतीयो योगः। मातुलुङ्गी मधुकुक्कुटी॥४५॥

मासमेकं प्रयोगोऽयं गृध्रस्यूरुग्रहापहः ॥ ४६ ॥

गृध्रस्यां पिप्पलीप्रयोगः।—

गोमूत्रैरण्डतैलाभ्यां कृष्णा पीता सुचूर्णिता।
दीर्घकालोत्थितां हन्ति गृध्रसीं कफवातजाम् ॥ ४७ ॥

गृध्रस्यां वार्त्ताकुप्रयोगः।—

अश्नाति यो नरः सिद्धामेरण्डतैलसाधिताम्।
वार्त्ताकुं गृध्रसीक्षीणः पूर्वामाप्नोत्यसौ गतिम् ॥ ४८ ॥

गृध्रस्यादौ एरण्डफलादिपायसद्वयम्।—

पिष्टैरण्डफलं क्षीरे सविश्वं वा फलं रुवोः।
पायसो भक्षितः सिद्धो गृध्रसीकटिशूलनुत् ॥ ४९ ॥

गृध्रस्यां रास्नागुग्गुलुः।—

रास्नायास्तु पलञ्चैकं कर्षान् पञ्च च गुग्गुलोः।
सर्पिषा गुडिकां कृत्वा खादेद्वा गृध्रसीहराम् ॥ ५० ॥

गृध्रस्यां वस्तिविधिः।—

गृध्रस्यार्त्तं नरं सम्यक् पाचनाद्यैर्विशोधितम्।

---

तैलमेरण्डजमित्यादि।—योगोऽयं विरेचकत्वेनाल्पमात्रया प्रत्यहं मासं यावदुपयोज्यः, भूरिमात्रोपयोगे तु बलहानिः स्यात्, तेन गोमूत्रस्य पलं किञ्चिन्न्यूनं वा, तथा एरण्डतैलमपि माषकाष्टकं किञ्चिन्न्यूनं वा कोष्ठाद्यपेक्षया प्रत्यहं मासं यावदुपयोज्यम् ॥ ४६ ॥

गोमूत्रैरण्डतैलाभ्यामित्यादि।—गोमूत्रैरण्डतैलयोर्मिलित्वा कर्षद्वयं पिप्पलीचूर्णस्य माषकचतुष्टयमिति व्यवहरन्ति वृद्धाः ॥ ४७ ॥

अश्नातीत्यादि।—एरण्डतैलसाधितां सम्बलितामित्यर्थः ॥ ४८ ॥

पिष्टेत्यादि।—त्वग्रहितमेरण्डबीजं कर्षं किञ्चित्तण्डुलान् दत्त्वा क्षीरेण विरेचनार्थं पायसः साध्यः। सविश्वं वेति पूर्वयोगापेक्षया वा-शब्दः, अत्रापि किञ्चित् तण्डुलान् दत्त्वा शुण्ठ्येरण्डफलाभ्यां पिष्टाभ्यां "कर्षार्द्धं वा कणाशुण्ठ्योः" इत्यादिपरिभाषया क्षीरेण पायसः साध्यः ॥ ४९ ॥

रास्नाया इत्यादि।—खादेत्तु माषकाष्टकं, तप्तजलमनुपानम् ॥ ५० ॥

ज्ञात्वा नरं प्रदीप्ताग्निं वस्तिभिः समुपाचरेत् ॥ ५१ ॥
नादौ वस्तिविधिं कुर्य्यात् यावदूर्द्ध्वं न शुध्यति।
स्नेहो निरर्थकस्तस्य भस्मन्येवाहुतिर्यथा ॥ ५२ ॥

गृध्रस्यां शस्त्राग्निप्रयोगविधिः।—

गृध्रस्यार्त्तस्य जङ्घायाः स्नेहस्वेदे कृते भृशम्।
पद्भ्यां निर्म्मर्दितायाश्च सूक्ष्ममार्गेण गृध्रसीम् ॥ ५३ ॥
अवतार्य्याङ्गुलौ सम्यक् कनिष्ठायां शनैः शनैः।
ज्ञात्वा समुन्नतं ग्रन्थिं कण्डरायां व्यवस्थितम् ॥ ५४ ॥
तं शस्त्रेण विदार्य्याशु प्रबालाङ्कुरसन्निभम्।
समुद्धृत्याग्निना दग्ध्वा लिम्पेत् यष्ट्याह्वचन्दनैः ॥ ५५ ॥

गृध्रस्यां शिराव्यधदाहविधिः।—

विध्येत् शिरामिन्द्रवस्तेरधस्ताच्चतुरङ्गुले।
यदि नोपशमं गच्छेद्दहेत् पादकनिष्ठिकाम् ॥ ५६ ॥

वङ्क्षणवायौ तगरप्रयोगः।—

तगरस्य शिफां सार्द्रां पिष्ट्वा तक्रेण यः पिबेत्।
वङ्क्षणानिलरोगार्त्तः स क्षणादेव मुच्यते ॥ ५७ ॥

कटीशूले एरण्डतैलप्रयोगविधिः।—

दशमूलीकषायेण पिबेत् वा नागराम्भसा।
कटीशूलेषु सर्व्वेषु तैलमेरण्डसम्भवम् ॥ ५८ ॥

---

गृध्रस्यार्त्तमित्यादि।—नादौ वस्तिविधिं कुर्य्यादित्यादौ यावदूर्द्ध्वं न शुध्यतीति ऊर्द्ध्वमित्यत्र पक्वाशयादिति शेषः, तेन यावद्विरेकवमनाभ्याम् आमाशयो न शुध्यतीत्यर्थः ॥ ५१।५२ ॥

गृध्रसीत्यादि।—जङ्घायाः सकाशात् गृध्रसीं कनिष्ठायामङ्गुलौ अवतार्य्येति योजना। कण्डरा कनिष्ठाङ्गुलिसंबद्धा स्थूलशिरा ॥ ५३—५५ ॥

विध्येदित्यादि।—इन्द्रवस्तिरिह गुल्फजङ्घयोर्मध्यदेशः ॥ ५६ ॥

तगरस्येत्यादि।—तगरः पिण्डतगरः ॥ ५७ ॥

दशमूलीत्यादि।—दशमूलीक्काथ-नागरक्काथौ एरण्डतैलं प्रक्षिप्य पिबेत्। नागराम्भ इति अत्यन्तसामतायां बोध्यम् ॥ ५८ ॥

विश्वच्यादौ शिरावेधोपदेशः।—

विश्वच्यां खञ्जपङ्ग्वोश्च दाहे हर्षे च पादयोः।
क्रोष्टुशीर्षविकारे च विकारे वातकण्टके॥
शिरां यथोक्तां निर्विध्य चिकित्सा वातरोगनुत्॥ ५९॥

पाददाहे शिरावेधाद्युपदेशः।—

शिराव्यधः पाददाहे वातकण्टकवत् क्रिया॥ ६०॥

पाददाहे नागकेशरप्रलेपः दशमूलीपरिषेकश्च।—

शतधौतघृतोन्मिश्रैर्नागकेशरकण्टकैः।
पिष्टैः प्रलेपः सेकश्च दशमूल्यम्बुनेष्यते॥ ६१॥

हस्तादिदाहे स्वेदविधिः।—

आलिप्य नवनीतेन स्वेदो हस्तादिदाहहा॥ ६२॥

पादहर्षे स्वेदविधिः।—

अग्नितप्तेष्टकाखण्डं काञ्जिकैः परिषिच्य तु।
तद्वाष्पस्वेदनं कार्य्यं पादहर्षविनाशनम्॥ ६३॥

भिनभिनिवाते दशमूलक्वाथः।—

दशमूलस्य निर्य्यूहो हिङ्गुपुष्करसंयुतः।
शमयेत् परिपीतस्तु वातं भिनभिनिसंज्ञितम्॥ ६४॥

क्रोष्टुशीर्षे गुग्गुलुप्रयोगादियोगत्रयम्।—

गुग्गुलुं क्रोष्टुशीर्षे च गुडूचीत्रिफलाऽम्भसा।
क्षीरेणैरण्डतैलं वा पिबेद्वा वृद्धदारकम्॥ ६५॥

वातकण्टके रक्तमोक्षणाद्युपदेशः।—

रक्तावसेचनं कुर्य्यादभीक्ष्णं वातकण्टके।

---

विश्वच्यामित्यादि।—शिरां यथोक्तामिति शिराव्यधविध्यनतिक्रमेण वातकोपभयादल्पमल्पञ्च रक्तं स्राव्यम्। खञ्जपङ्ग्वादौ देशो नोक्तस्तेन खञ्जादिष्वपि रक्तावृतवातवेदनायां जङ्घादिसन्धिगतैव शिरा व्यध्या भवतीति भानुमती॥ ५९—६४॥

गुग्गुलुमित्यादि.—एरण्डक्वाथेन त्रिफलाक्वाथेन वा शोधयित्वा गुग्गुलुर्ग्राह्यः।

पिबेदेरण्डतैलं वा दहेत् सूचीभिरेव वा ॥ ६६ ॥

खल्लयां कुष्ठादितैलम्।—

कुष्ठसैन्धवयोः कल्कश्चुक्रतैलसमन्वितः।
सुखोष्णो मर्दने योज्यः खल्लीशूलनिवारणः ॥ ६७ ॥

खल्लयां स्वेदाद्युपदेशः।—

खल्लयां स्निग्धाम्ललवणैः स्वेदमर्दोपनाहनम् ॥ ६८ ॥

आदित्यपाकगुग्गुलुवटकः।—

पृथक् पलांशा त्रिफला पिप्पली चेति चूर्णितम्।
दशमूलाम्बुना भाव्यं त्वगेलार्द्धपलान्वितम् ॥ ६९ ॥
दत्त्वा पलानि पञ्चैव गुग्गुलोर्वटकीकृतः।
एष मांसरसाभ्यासाद्वातरोगान् विशेषतः ॥
हन्ति सन्ध्यस्थिमज्जस्थान् वृत्रामिन्द्राशनिर्यथा ॥ ७० ॥

भावनार्थं क्वाथविधिः।—

भाव्यद्रव्यसमं क्वाथ्यं क्वाथोऽष्टांशस्तु तेन च।
आर्द्रं यावद्दिनं भाव्यं सप्ताहं भावनाविधिः ॥ ७१ ॥

---

अत्र एरण्डतैलेन पिष्टा गुग्गुलुः प्रक्षेप्यः। क्षीरेणेति—चतुर्गुणेन दुग्धेन एरण्डतैलं पेयम्; "बहुदोषो विरेकार्थं जीर्णे क्षीरौदनाशनः" (चि० २२ अ०) इति वाग्भटदर्शनात्। पिबेद्वा भद्रदारकमिति अत्रापि क्षीरेणेति योज्यम् ॥ ६५—६७ ॥

खल्लयामित्यादि।—अम्लमिति—काञ्जिकम् ॥ ६८ ॥

पृथगित्यादि।—अत्र त्वगेलयोर्मिलित्वाऽर्द्धपलं बोध्यम्। त्रिफलादि-गुग्गुल्वन्तं सर्वमेकीकृत्य भाव्यम् ॥ ६९।७० ॥

भाव्येत्यादि।—भाव्येत्यादिना क्वाथविधिः। तेनेति—अष्टांशशेषक्वाथेनार्द्रं कृत्वा दिनैकं यावद्भाव्यं, भावनाविधिसमाप्तिस्तु सप्ताहादिति। इयञ्च परिभाषा वाग्भटमतानुसारिणी, तेनास्या अमूलकत्वं नाशङ्कनीयम्। वृन्दस्तु—"लिह्यवद्दाहगुणेनायसालोड्यालोड्य आतपे। दशमूलाम्बुना शोध्यः सप्तवारांस्तु गुग्गुलुः॥" इत्युक्तवान्, तत् पुनरनार्षमिति निश्चलः ॥ ७१ ॥

त्रयोदशाङ्गगुग्गुलुः।—

आभाश्वगन्धा हवुषा गुडूची
शतावरी गोक्षुरवृद्धदारम्।
रास्ना शताह्वा सशटी यमानी
सनागरा चेति समैश्च चूर्णम्॥ ७२॥
तुल्यं भवेत् कौशिकमत्र मध्ये
देयं तथा सर्पिरतोऽर्द्धभागम्।
अर्द्धाक्षमात्रन्त्वथ तत्प्रयोगात्
कृत्वाऽनुपानं सुरयाऽथ यूषैः॥ ७३॥
मद्येन वा कोष्णजलेन वाऽथ
क्षीरेण वा मांसरसेन वाऽपि।
कटीग्रहे गृध्रसि-बाहुपृष्ठे
हनुग्रहे जानुनि पादयुग्मे॥ ७४॥
सन्धिस्थिते चास्थिगते च वाते
मज्जाश्रिते स्नायुगते च कोष्ठे।
रोगान् जयेद्वातकफानुविद्धान्
वातेरितान् हृद्ग्रहयोनिदोषान्॥
भग्नास्थिविद्धेषु च खञ्जवाते
त्रयोदशाङ्गं प्रवदन्ति तज्ज्ञाः॥ ७५॥

दोषावृतावृतवातयोः चिकित्साविधिः।—

जित्वाऽऽवरकमग्रे तु वाते वातहरं हितम्।

---

आभेत्यादि।—त्रयोदशाङ्गगुग्गुलौ आभमिति—स्वनामख्यातं वणिग्द्रव्यम्। हवुषा स्वनामख्याता। समैरिति—समैर्भागैरुपलक्षितम्। तुल्यं भवेत् कौशिकमिति—समुदितसर्वचूर्णसमो गुग्गुलुरित्यर्थः। अतोऽर्द्धभागमिति—कौशिकार्द्धभागम्। भिषजस्तु यावता घृतेन गुग्गुलोः पेषणं भवति, तावदेव घृतं गृह्णन्ति। सुराद्यनुपानभेदो दोषभेदापेक्षया॥ ७२—७५॥

अन्नावृते तदुल्लेखो दीपनं पाचनं लघु ॥ ७६ ॥

सुप्तिवाते रक्तमोक्षणाद्युपदेशः।—

सुप्तिवाते त्वसृङ्मोक्षं कारयेद्बहुशो बुधः।

दिह्याच्च लवणागार-धूमैस्तैलविमर्दितैः ॥ ७७ ॥

चिकित्सासूत्रम्।—

सर्पिस्तैलवसामज्ज-पानाभ्यञ्जनवस्तयः।

स्वेदाः स्निग्धा निवातञ्च स्थानं प्रावरणानि च ॥ ७८ ॥

रसाः पयांसि भोज्यानि स्वाद्वम्ललवणानि च।

बृंहणं यत्तु तत् सर्वं कर्त्तव्यं वातरोगिणाम् ॥ ७९ ॥

पटोलवाव्यालकयूषौ।—

पटोलफलकैर्यूषो वृष्यो वातहरो लघुः।

वाव्यालककृतो यूषः परं वातविनाशनः ॥ ८० ॥

बलादिसाधनकयसिद्धछागादिमांसरसाः।—

बलायाः पञ्चमूलस्य दशमूलस्य वा रसे।

अजाशीर्षाम्बुजानूप-क्रव्यादपिशितैः पृथक् ॥ ८१ ॥

साधयित्वा रसान् स्निग्धान् दध्यम्लव्योषसंस्कृतान्।

भोजयेद्वातरोगार्त्तं तैर्व्यक्तलवणैर्नरम् ॥ ८२ ॥
भागा वरुणा-मेषभ ... इन्द

सङ्केतादावृतवातचिकित्सामाह, जित्वेत्यादि।ह। गणिका धुस—धार्थोर्वतो:... र्थो दोषस्तम्। तदुल्लेख इति—अन्नस्य वमनम् ॥ भद्रदार्वादिरित्येष ...

सर्पिरित्यादि।—क्रियासूत्रं चरकस्य ॥ ७...।७९॥ ...मादि-भ...

पटोलेत्यादि।—पटोलफलकैरि... तुल्... तथा वाव्यालककृतो यूष इत्यादौ यूष-योनित्वान्मुद्गादयोऽपि बोद्धव्याः। दिवयं तु—केवलयोरेव पटोलफलवाव्यालकयोर्यूषावित्याहुः ॥८०॥ ... संस्क... कार्य्यः, सं...

...ग्धत्वलवणत्वमात्रं स्यादिति ...भिस्त्रिभिः साधनद्रव्यैरजाशीर्षादयस्तु चत्वारः पतत्पयन्तु संस्कार्य्यम्; रसा भवन्ति। बलादिभिरङ्गुष्ठतं कृत्वा तेन मांसरसः तुल्यभागमिति। अन्ये तु—प्रास्थिकेऽम्भसि कर्षमानं बल... प्रस्थात् ... पल अजाशीर्ष-स्यादित्यर्थं पाचनीयं, परिशिष्टे पलचतुष्टये सति वस्त्रेण ...रक-तुप... परिमर्जनीयं, बल

पञ्चमूल्यादिक्षीरम् ।—

पञ्चमूलीबलासिद्धं क्षीरं वातामये हितम् ॥ ८३ ॥

वाजिगन्धादिगणः ।—

वाजिगन्धा बलास्तिस्रो दशमूली महौषधम् ।
द्वे श्वदंष्ट्रे रास्ना च गणो मारुतनाशनः ॥ ८४ ॥

कोलादिलेपः ।—

कोलं कुलत्थं सुरदारु रास्ना माषातसीतैलफलानि कुष्ठम् ।
वचाशताह्वे यवचूर्णमम्लमुष्णानि वातामयिनां प्रदेहः ॥ ८५ ॥

वेशवारप्रलेपोपदेशः ।—

आनूपवेशवारोष्ण-प्रदेहो वातनाशनः ॥ ८६ ॥

वेशवारस्वरूपम् ।—

निरस्थि पिशितं पिष्टं स्विन्नं गुड़घृतान्वितम् ।
कृष्णामरिचसंयुक्तं वेशवार इति स्मृतः ॥ ८७ ॥

शाल्वनस्वेदः ।—

काकोल्यादिः सवातघ्नः सर्वाम्लद्रव्यसंयुतः ।
सानूपमांसः सुस्विन्नः सर्वस्नेहसमन्वितः ॥ ८८ ॥

---

तदनु सैन्धवाम्लदधिविकटून्यनुरूपाणि दत्त्वा संस्कार्य्यमित्याहुः । एवं बृहत्पञ्च-
मूलेन च साधनम् । अजाशीर्षवत् कूर्मकर्कटाद्यम्बुजानां मांसेन, तथा सहिषवराहा-
दीन　　नां मांसेन ।तिरितान् ह्ृ　मांसेन रससाधनं कुर्य्यादिति ॥ ८१।८२ ॥
　　त्यादि ।　　ी ॥ ८३ ॥
भग्नास्थिविद्धेषु
वाजिगन्धेत्यादि　　—बला अतिबला नागबला चेति व्याताः ।
दशाङ्ग
अत्र बला पीतपुष्पा, अति　　श्वेतपुष्पा, नागबला गोरचततण्डुला । श्वदंष्ट्राद्वयं
श्वेतरक्तपुष्पभेदात् । गणत्वादनेन सर्वाः क्वाथ　विधि　　ला: कार्य्याः ॥ ८४ ॥
कोलमित्यादि ।—कोलं बदरफलम् । अतसी　नहवं हित　भाषा । तैलफलं तैल-
विशिष्टफलम् । एतानि समभागचूर्णानि काञ्जिके　—स्वनामख्यातं　　　पी देयः ॥ ८५ ॥
आनूपेत्यादि ।—आनूपवेशवार इति—वराहादि　तुल्यं भवेत्　कौशिक
संज्ञामाह—निरस्थीत्यादि ॥ ८६।८७ ॥　　मिति—कौशिकाङ्ग-
शाल्वनस्तु यावता काकोल्यादिरित्यादि ।—काकोल्यादि　　र घ्नन्ति ।
गणः । वातघ्न इत्यभेदापि　　र्वादिगणस्य संज्ञा । सर्वाम्लद्रव्यं—काञ्जिक सु

सुक्षीण: स्पष्टलवण: शाल्वन: परिकीर्त्तित: ।
तेनोपनाहं कुर्व्वीत सर्व्वदा वातरोगिणाम् ॥ ८९ ॥
वातघ्नो भद्रदार्व्वादि: काकोल्यादिस्तु सौश्रुत: ।
मांसेनाथौषधं तुल्यं यावताऽम्लेन चाम्लता ॥ ९० ॥
पट्वी स्यात् स्वेदनार्थञ्च काञ्जिकाद्यम्लमिष्यते ।
चतु:स्नेहोऽत्र तावान् स्यात् सुस्निग्धत्वं यतो भवेत् ॥९१॥

गणोक्तौ यथालाभद्रव्यग्रहणोपदेश: ।—

समस्तं वर्गमर्द्धं वा यथालाभमथापि वा ।
प्रयुञ्जीतेति वचनं सर्व्वत्र गणकर्म्मणि ॥ ९२ ॥

तुषोदकादि । आनूपमांस इति—आनूपाश्च शूकरादय: । सर्व्वस्नेहा: सर्पिस्तैल-वसामज्जान: । उपनाहमिति—उष्णवन्धप्रलेपम् । उक्तमेव शाल्वनस्वेदं विवृणोति, वातघ्न इत्यादि । सौश्रुत इति विशेषणेन सुश्रुतोक्तकाकोल्यादिगणो ग्राह्य:, न पुनरष्टवर्गसंज्ञित इति । वृद्धसुश्रुते तु काकोल्यादिर्यथा—"काकोल्यौ मधुका मेदे जीवकर्षभकौ सहे । ऋद्धिर्वृद्धिस्तुगाक्षीरी पुण्डरीकं सपद्मकम् ॥ जीवन्ती शाश्वता शृङ्गी मृद्वीका चेति कुत्रचित् । काकोल्यादिरयं पित्त-शोणितानिलनाशन: ॥" इति । भद्रदार्व्वादिर्यथा—"भद्रदारु निशे भार्गी वरुणो मेषशृङ्गिका । वृन्दमण्टी चार्त्तगलो वरा गोरक्षतण्डुला ॥ अर्क्कौ श्वदंष्ट्रा गणिका धुस्तूरश्वाश्मभेदतः । वरौ स्थिरा पटोलाह्वक् वर्षाभूर्वसुको यव: ॥ भद्रदार्व्वादिरित्येष गणो वातविनाशन: ॥" इति । मांसेनाथौषधं तुल्यमिति—काकोल्यादि-भद्रदार्व्वादिगणद्वयमौषधं मांसेन तुल्यं ग्राह्यं, यथालाभपक्षेऽपि मांसं तुल्यं देयं, तेन उपनाह: । वृन्दस्त्वाह—"अम्ला-दिभिश्च संस्कार्य्यं काकोल्यादिवयं त्रिभि:" इति । अस्यार्थ:,—अम्लादिभि: अम्ल-स्नेहलवणरसै: संस्कार: कार्य्य:, संस्कारकत्वादेतत् त्रयं तावन्मात्रं देयं, यावता अम्लत्व-स्निग्धत्वलवणत्वमात्रं स्यादिति । काकोल्यादिस्तथा भद्रदार्व्वादिस्तथा आनूपमांसम् एतत्त्रयन्तु संस्कार्य्यम् ; संस्कार्य्यत्वादस्य प्राधान्यं तेन त्रयमेतत् मेलयित्वाहृत प्रत्येकं तुल्यभागमिति । यावताऽम्लेन चाम्लता पट्वी स्यादिति—पटुशब्दात् ङीप्-प्रत्यय:, व्यक्ता: स्यादित्यर्थ: । काञ्जिकादीत्यत्र आदिशब्दात् सुरा-सौवीरक-तुषोदक-धान्याम्ल-दधि-मस्तु-शुक्तकाकोलादीनां ग्रहणम् ॥ ८८—९२ ॥

अश्वगन्धाद्यं घृतम्।—

अश्वगन्धाकषाये च कल्के क्षीरचतुर्गुणम्।
घृतं पक्वन्तु वातघ्नं वृष्यं मांसविवर्द्धनम्॥ ९३॥

दशमूलाद्यं घृतम्।—

दशमूलस्य निर्य्यूहे जीवनीयैः पलोन्मितैः।
क्षीरेण च घृतं पक्वं तर्पणं पवनार्त्तिजित्॥
क्वाथोऽत्र त्रिगुणः सर्पिः-प्रस्थः साध्यः पयः समम्॥ ९४॥

छागलाद्यं घृतम्।—

आजं चर्म्मविनिर्म्मुक्तं त्यक्तशृङ्गखुरादिकम्।
पञ्चमूलीद्वयञ्चैव जलद्रोणे विपाचयेत्॥ ९५॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत्।
जीवनीयैः सयष्ट्याह्वैः क्षीरञ्चैव शतावरीम्॥ ९६॥
छागलाद्यमिदं नाम्ना सर्ववातविकारनुत्।
अर्दिते कर्णशूले च बाधिर्य्ये मूकमिन्मिने॥ ९७॥

---

अश्वगन्धेत्यादि।—अश्वगन्धाघृते चतुर्गुणक्षीरस्नेहचर्य्यादश्वगन्धाक्वाथोऽपि चतुर्गुणः। कल्कोऽपि अश्वगन्धाया एव॥ ९३॥

[illegible]स्येत्यादि।—दशमूलघृते दशमूलक्वाथः त्रिगुणः, क्षीरन्तु स्नेहसममिति चक्रः। जै[illegible]ड़मते तु—स्नेहाच्चतुर्गुणः क्वाथः क्षीरं स्नेहसमम् इति। अस्मन्मते परिभाषा—"एकद्वित्रिद्रवद्रव्यैः कुर्य्यात् स्नेहचतुर्गुणम्। क्षीरं स्नेहसमं दद्याच्चतुर्भिश्च चतुर्गुणम्॥" इति। अस्यार्थः,—यत्रैको द्रवः, तत्र तेनैव चातुर्गुण्यं, यत्र तु द्वौ, तत्र द्वाभ्यां, यत्र त्रयः, तत्र त्रिभिरिति चातुर्गुण्यं मिलित्वा, क्षीरन्तु स्नेहसमं, चतुर्भिरपि मिलित्वैव चातुर्गुण्यम्; एवं सर्वत्र व्याख्येयम्। जीवनीयैरित्यत्र जीवनीयदशकैः, अनुक्तसङ्ख्यत्वात्; एवं सर्वत्र; अनेनैव कल्कः॥ ९४॥

आजं चर्म्मविनिर्म्मुक्तमित्यादि।—चर्म्मादिहीनं तरुणच्छागगुडकमेकं मयूराद्यघृते मयूरगुडक[illegible]ञ्च। दशमूलञ्च द्वाविंशत्पलमानं जलद्रोणे पक्तव्यमिति वृद्धवैद्यानां व्यवहारः इत्याह वृन्दः। चक्रस्त्वाह—त्यक्तशृङ्गखुरादिकमिति ग्रहणयोग्यताप्रदर्शनार्थं न पुनराकृतिमानग्रहणार्थमिति; अतः पञ्चाशत्पलानि मांसस्य दशमूलस्य च; अत एव वक्ष्यति—द्रोणे इति; एवं मयूराद्यादिषु घृतेष्वपि। वृद्धवैद्यव्यवहारस्त्वाकृतिमानेन।

जड़गद्गदपङ्गूनां खञ्जे गृध्रसि-कुब्जयोः ।
अपतानेऽपतन्त्रे च सर्पिरेतत् प्रशस्यते ॥ ९८ ॥
द्रोणे द्रव्यतुलाश्रुत्या स्याच्छागदशमूलयोः ।
पृथक् तुलाऽर्द्धं यष्ट्याह्व-द्वयं देयं द्विधोक्तितः ॥ ९९ ॥

एलादितैलम् ।—

एलामुरासरलशैलजदारुकौन्ती-,
चण्डाशटीनलदचम्पकहेमपुष्पम् ।
स्थौणेयगन्धरसपूतिदलामृणाल-
श्रीवासकुन्दुरुनखाम्बुवराङ्गकुष्ठम् ॥ १०० ॥
कालीयकं जलदकर्कटचन्दनश्री-
जात्याः फलं सविकसं सहकुङ्कुमञ्च ।
पृक्कातुरुष्कलघु लाभतया विनीय
तैलं बलाक्वथनदुग्धयुतञ्च दध्ना ॥

---

केचित्तु शतावर्य्याः कल्कमाहुः, रसस्यानुक्तेः, तदयुक्तम्; यतः कल्कद्रव्यमध्ये नोक्तः; अतः क्षीरसाहचर्य्येण रसो ग्राह्यः। क्षीर-शतावरीरसौ प्रत्येकं स्नेहसमौ। यष्ट्याह्व-द्वयं देयं द्विधोक्तित इति—स्थलज जलजभेदेन यष्टिमधुद्वयं ग्राह्यमित्यर्थः। वृन्दस्तु—"घृते तैले च योगे च यद्द्रव्यं पुनरुच्यते। तज्ज्ञातव्यमिहाचार्य्यैर्भागतो द्विगुणं भवेत् ॥" इति वचनात् यष्टिमधुनो भागद्वयं ग्राह्यमित्याह। व्यवहारस्तु वृन्दोक्तमतेनैव ॥ ९५—९९ ॥

एलेत्यादि।—कौन्ती रेणुका। चण्डा चोरपुष्पी। नलदं मांसी। चम्पकं चम्पकपुष्पम्। हेमपुष्पं नागकेशरपुष्पम्। स्थौणेयं ग्रन्थिपर्णम्। गन्धरसः स्वनामख्यातः। पूतिः खट्टाशी। दलं तेजपत्रम्। अमृणालम् उशीरम्। श्रीवासो नवनीतखोटिः। कुन्दुरुः कुन्दुरुखोटिः। नखं नखी। अम्बु बालकम्। वराङ्गं गुड़त्वक्। कर्कटः समुद्रकर्कटकः। चन्दनश्रीः श्वेतचन्दनम्। अन्ये तु—श्रीः काष्ठखोटिरित्याहुः। जात्याः फलं जातिफलम्। सविकसमिति—विकसा मञ्जिष्ठा। पृक्का पिड़िङ्पुष्पम्। तुरुष्कः सिह्लकः। लघु अगुरु। लाभतयेति—यथालाभं द्रव्यं मानञ्च ग्राह्यम्; लभ्यते इति लाभः, कर्मणि घञ्, नेह भावप्रत्ययः। विनीय कल्कीकृत्य। तैल-

साद्धं पचेत्तु हितमेतदुदाहरन्ति
वातामयेषु बलवर्णवयःप्रकारि ॥ १०१ ॥

बलाशैरीयतैले ।—

बलानिःक्वाथकल्काभ्यां तैलं पक्वं पयोऽन्वितम् ।
सर्ववातविकारघ्नमेवं शैरीयसाधितम् ॥ १०२ ॥

महाबलातैलम् ।—

बलामूलकषायस्य दशमूलीकृतस्य च ।
यवकोलकुलत्थानां क्वाथस्य पयसस्तथा ॥ १०३ ॥
अष्टावष्टौ शुभा भागास्तैलादेकस्तदेकतः ।
पचेदावाप्य मधुरं गणं सैन्धवसंयुतम् ॥ १०४ ॥

---

मुत्सर्गेत: प्रस्थपरिमितम् । बलाक्वथनं बलाक्वाथः, तस्य च प्रस्थद्वयम् । दुग्धं दधि च प्रत्येकं स्नेहसमम् ; एवं मिलित्वा चतुर्गुणः पाकः । अन्ये तु—क्वाथश्चतुर्गुणः, दधि दुग्धञ्च प्रत्येकं स्नेहसममित्याहुः ; व्यवहारः पुनरनेनैव । इदमेव तैलम् अन्ये पाकभेदेन पठन्ति, यथा—तिलतैल श: ४, उपेक्षार्थ-तिलतैल पल ४, पाकार्थं दधि श: ४, दुग्ध श: ४, कल्कार्थं मञ्जिष्ठा कर्ष १२, इति प्रथमः पाकः । क्वाथार्थं वाडियालामूल पल ३२, पानीय श: ३२, शेष श: ८, कल्कार्थं रेणुका चोरहुली गन्धरस गुड़त्वक् शटी तेजपत्र उशीर कुड मुथा पृक्का सरल शैलज वाला एषां प्रत्येकं कर्ष १, इति द्वितीयः पाकः । तृतीयपाके तु—कल्कार्थम् एलाचि मुरा चम्पककलिका आढ़की नागेश्वर गाठियाला खट्टाशी नवनीतखोटी कुन्दुरु नखी श्वेतचन्दन शोधितसमुद्रकर्कट कालीयक जातीफल कुङ्कुम सिह्लक अगुरु मांसी कुड़, एतत् सर्वं प्रत्येकं कर्षपरिमितं चूर्णीकृत्य गन्धोदकेन तैलसमेन तृतीयः पाकः ॥ १००।१०१ ॥

बलेत्यादि ।—बलातैले बलाक्वाथस्त्रिगुणः, क्षीरन्तु स्नेहसमम् । अन्ये तु—बलाक्वाथश्चतुर्गुणः, दुग्धन्तु तैलसममित्याहुः । एवं शैरीयतैलम् । शैरीयो झिण्टी, अस्या मूलम् ॥ १०२ ॥

बलामूलकषायस्येत्यादि सुश्रुतस्य ।—अत्र दशमूलस्य मिलित्वैव एकः क्वाथः, यवकोलकुलत्थानाञ्च मिलित्वा अपरक्वाथः, एवं बलाक्वाथेन सह त्रयः क्वाथास्तथा

तथाऽगुरु सर्जरसं सरलं देवदारु च ।
मञ्जिष्ठां चन्दनं कुष्ठमेलां कालानुशारिवाम् ॥ १०५ ॥
मांसीं शैलेयकं पत्रं तगरं शारिवां वचाम् ।
शतावरीमश्वगन्धां शतपुष्पां पुनर्नवाम् ॥ १०६ ॥
तत् साधु सिद्धं सौवर्णे राजते मृन्मयेऽपि वा ।
प्रक्षिप्य कलसे सम्यक् सुनिगुप्तं निधापयेत् ॥ १०७ ॥
बलातैलमिदं नाम्ना सर्ववातविकारनुत् ।
यथाबलमतो मात्रां सूतिकायै प्रदापयेत् ॥ १०८ ॥
या च गर्भार्थिनी नारी क्षीणशुक्रश्च यः पुमान् ।
क्षीणवाते मर्म्महतेऽभिहते मथितेऽपि वा ॥ १०९ ॥
भग्ने श्रमाभिपन्ने च सर्वथैवोपयोजयेत् ।
सर्वानाक्षेपकादींश्च वातव्याधीन् व्यपोहति ॥ ११० ॥
हिक्कां कासमधीमन्थं गुल्मं श्वासं सुदारुणम् ।
षण्मासानुपयुज्यैतदन्त्रवृद्धिमपोहति ॥ १११ ॥
प्रत्यग्रधातुः पुरुषो भवेच्च स्थिरयौवनः ।
राज्ञामेतद्धि कर्त्तव्यं राजमात्राश्च ये नराः ॥
सुखिनः सुकुमाराश्च बलिनश्चैव ये नराः ॥ ११२ ॥

विष्णुतैलम् ।—

शालपर्णी पृश्निपर्णी बला च बहुपुत्रिका ।

---

पयश्चेति द्रवचतुष्टयम्; एषां चतुर्णां द्रवाणां प्रत्येकं तैलप्रस्थापेक्षयाऽष्टगुणो भागः, एवञ्च मिलित्वा तैलात् द्वात्रिंशद्गुणो द्रवो भवति। तैलञ्च मानविशेषानिर्देशात् प्रस्थपरिमितमेव ग्राह्यम्। एकत इति—एकीकृत्य। आवाप्य मधुरं गणमिति—काकोल्यादिगणं कल्कीकृत्य। सैन्धवसंयुतमिति—सैन्धवमगुर्वादि च कल्कीकृत्य प्रताव्यम्। कालानुशारिवा तगरपादिका, तदभावे शियलीक्षीपड़ः। तगरं पिण्डीतगरमूलम्। सारिवा श्यामालता। पुनर्नवान्तः कल्कः। सुनिगुप्तमिति—वाता-
तपादिपरिहारेण सुष्ठु रक्षितम्। तैलमिदं सुश्रुते मूढगर्भे पठितं, तेन "सूतिकायै प्रदापयेत्" इति विशेषेणोक्तम्। अन्त्रवृद्धिमपोहतीति—अप्राप्तफलकोषामन्त्रवृद्धिं

एरण्डस्य च मूलानि बृहत्योः पूतिकस्य च ॥ ११३ ॥
गवेधुकस्य मूलानि तथा सहचरस्य च ।
एषान्तु पलिकैः कल्कैस्तैलप्रस्थं विपाचयेत् ॥ ११४ ॥
आजं वा यदि वा गव्यं क्षीरं दद्याच्चतुर्गुणम् ।
अस्य तैलस्य पक्वस्य शृणु वीर्य्यमतः परम् ॥ ११५ ॥
अश्वानां वातभग्नानां कुञ्जराणां तथा नृणाम् ।
तैलमेतत् प्रयोक्तव्यं सर्वव्याधिनिवारणम् ॥ ११६ ॥
आयुष्मांश्च नरः पीत्वा निश्चयेन दृढ़ो भवेत् ।
गर्भमश्वतरी विन्द्यात् न च मृत्युवशं व्रजेत् ॥ ११७ ॥
हृच्छूलं पार्श्वशूलञ्च तथैवार्द्धावभेदकम् ।
कामला-पाण्डुरोगघ्नं शर्कराऽश्मरिनाशनम् ॥ ११८ ॥
क्षीणेन्द्रिया नष्टशुक्रा जरया जर्जरीकृताः ।
येषाञ्चैव क्षयो व्याधिरन्त्रवृद्धिश्च दारुणा ॥ ११९ ॥
अर्दितं गलगण्डञ्च वातशोणितमेव च ।
स्त्रियो या न प्रसूयन्ते तासाञ्चैव प्रयोजयेत् ॥
एतदङ्ग ! वरं तैलं विष्णुना परिकीर्त्तितम् ॥ १२० ॥

नारायणतैलम् ।—

विल्वोऽग्निमन्थः श्योणाकः पाटला पारिभद्रकः ।
प्रसारण्यश्वगन्धा च वृहती कण्टकारिका ॥ १२१ ॥
बला चातिबला चैव श्वदंष्ट्रा सपुनर्नवा ।
एषां दश पलान् भागांश्चतुर्द्रोणेऽम्भसः पचेत् ॥ १२२ ॥
पादशेषं परिस्राव्य तैलपात्रं प्रदापयेत् ।
शतपुष्पा देवदारु मांसी शैलेयकं वचा ॥ १२३ ॥

---

व्यपोहति, शातफलकीशायाः पुनरसाध्यत्वात् । राजमाला इति—राज्ञ इव माला परिच्छदो येषां ते तथा ॥ १०३—१२० ॥

विल इत्यादि ।—नारायणतैले पारिभद्रकः "पालितामादार" इति प्रसिद्धम् ।

चन्दनं तगरं कुष्ठमेला पर्णीचतुष्टयम्।
रास्ना तुरगगन्धा च सैन्धवं सपुनर्नवम् ॥ १२४ ॥
एषां द्विपलिकान् भागान् पेषयित्वा विनिक्षिपेत् ।
शतावरीरसञ्चैव तैलतुल्यं प्रदापयेत् ॥ १२५ ॥
आजं वा यदि वा गव्यं क्षीरं दत्त्वा चतुर्गुणम्।
पाने वस्तौ तथाऽभ्यङ्गे भोज्ये चैव प्रशस्यते ॥ १२६ ॥
अश्वो वा वातसम्भग्नो गजो वा यदि वा नरः।
पङ्गुलः पीठसर्पी च तैलेनानेन सिध्यति ॥ १२७ ॥
अधोभागे च ये वाताः शिरोमध्यगताश्च ये।
दन्तशूले हनुस्तम्भे मन्यास्तम्भे गलग्रहे ॥ १२८ ॥
यस्य शुष्यति चैकाङ्गं गतिर्यस्य च विह्वला।
क्षीणेन्द्रिया नष्टशुक्रा ज्वरक्षीणाश्च ये नराः ॥ १२९ ॥
बधिरा लल्लजिह्वाश्च मन्दमेधस एव च।
अल्पप्रजा च या नारी या च गर्भं न विन्दति ॥ १३० ॥
वातार्त्तौ वृषणौ येषामन्त्रवृद्धिश्च दारुणा।
एतत् तैलवरं तेषां नाम्ना नारायणं स्मृतम् ॥
तगरं नतमत्र स्यादभावे शिह्लीजटा ॥ १३१ ॥

महानारायणतैलम्।—

शतावरी चांशुमती पृश्निपर्णी शटी बला।
एरण्डस्य च मूलानि वृहत्योः पूतिकस्य च ॥ १३२ ॥

---

प्रसारणी "गन्धभादालिया" इति ख्यातम्। अतिबला गोरक्षतण्डुला। तगरं तगरपादिका, तदभावे शियलीकोपड़ः, पिण्डतगरमूलमित्यन्ये। आजं वा यदि वा गव्यमिति—यद्यपि गव्याजपयसोः प्रायो गुणसाम्यं, तथाऽपि छागक्षीरेण पक्वं तैलमिदमनभिष्यन्दि त्रिदोषहरञ्च भवतीति प्रत्येतव्यम्; अन्ये त्वाहुः,—क्षीरान्तर-निवृत्त्यर्थं विशेषव्यापकमिति। नारायणसंज्ञा चास्य विष्णुनिर्मितत्वात्, शतावरी-रससाधितत्वाद्वा। नारायणीति शतावरीपर्य्यायः ॥ १२१—१३१ ॥

शतावरीत्यादि।—महानारायणतैले अंशुमती शालपर्णी। पूतिकश्च

गवेधुकस्य मूलानि तथा सहचरस्य च ।
एषां दशपलान् भागान् जलद्रोणे विपाचयेत् ॥ १३३ ॥
पादावशेषे पूते च गर्भञ्चैनं समावपेत् ।
पुनर्नवा वचा दारु शताह्वा चन्दनागुरू ॥ १३४ ॥
शैलेयं तगरं कुष्ठमेला मांसी स्थिरा बला ।
अश्वाह्वा सैन्धवं रास्ना पलार्द्धानि च पेषयेत् ॥ १३५ ॥
गव्याजपयसोः प्रस्थौ द्वौ द्वावत्र प्रदापयेत् ।
शतावरीरसप्रस्थं तैलप्रस्थं विपाचयेत् ॥ १३६ ॥
अस्य तैलस्य सिद्धस्य शृणु वीर्य्यमतः परम् ।
अश्वानां वातभग्नानां कुञ्जराणां नृणां तथा ॥ १३७ ॥
तैलमेतत् प्रदातव्यं सर्ववातनिवारणम् ।
आयुष्मांश्च नरः पीत्वा निश्चयेन दृढो भवेत् ॥ १३८ ॥
गर्भमश्वतरी विन्द्यात् किं पुनर्मानुषी तथा ।
हृच्छूलं पार्श्वशूलञ्च तथैवार्द्धावभेदकम् ॥ १३९ ॥
अपचीं गण्डमालाञ्च वातरक्तं हनुग्रहम् ।
कामलां पाण्डुरोगञ्च अश्मरीञ्चापि नाशयेत् ॥ १४० ॥
तैलमेतत् भगवता विष्णुना परिकीर्त्तितम् ।
नारायणमिति ख्यातं वातान्तकरणं परम् ॥ १४१ ॥

अश्वगन्धातैलम् ।—

शतं पक्वाऽश्वगन्धाया जलद्रोणेऽंशशेषितम् ।

---

"नाटाकरञ्ज" इति ख्यातस्य मूलं ग्राह्यम् । गवेधुकः गोरच्चतण्डुला । सहचरो झिण्टी । शताह्वा "शलुफा" इति ख्यातम् । चन्दनं रक्तचन्दनम् । शैलेयं शैलजम् । तगरं तगरपादिका । स्थिरा शालपर्णी । अश्वाह्वा अश्वगन्धा । एषां कल्कानां प्रत्येकं पलार्द्धम् । प्रस्थौ द्वौ द्वाविति—पृथक् द्वौ द्वौ प्रस्थौ । अश्वतरी वेसरी, सा चाश्वायां गर्दभाज्जाता ॥ १३२—१४१ ॥

विस्राव्य विपचेत् तैलं क्षीरं दत्त्वा चतुर्गुणम् ॥ १४२ ॥
कल्कैर्मृणालशालूक-बिसकिञ्जल्कमालती- ।
पुष्पैर्क्षीरविदारीमधुक-शारिवापद्मकेशरैः ॥ १४३ ॥
मेदापुनर्नवाद्राक्षा-मञ्जिष्ठाबृहतीद्वयैः ।
एलैलबालुत्रिफला-मुस्तचन्दनपद्मकैः ॥ १४४ ॥
पक्वं रक्ताश्रयं वातं रक्तपित्तमसृग्दरम् ।
हन्यात् पुष्टिबलं कुर्य्यात् कृशानां मांसवर्द्धनम् ॥ १४५ ॥
रेतोयोनिविकारघ्नं व्रणदोषापकर्षणम् ।
षण्ढानपि वृषान् कुर्य्यात् पानाभ्यङ्गानुवासनैः ॥ १४६ ॥

मूलकाद्यं तैलम् ।—

मूलकस्वरसं तैलं क्षीरदध्यम्लकाञ्जिकम् ।
तुल्यं विपाचयेत् कल्कैर्बलाचित्रकसैन्धवैः ॥ १४७ ॥
पिप्पल्यतिविषारास्ना-चविकाऽगुरुचित्रकैः ।
भल्लातकवचाकुष्ठ-श्वदंष्ट्राविश्वभेषजैः ॥ १४८ ॥
पुष्कराह्वशटीबिल्व-शताह्वानतदारुभिः ।
तत् सिद्धं पीतमत्युग्रान् हन्ति वातात्मकान् गदान् ॥ १४९ ॥

रसोनतैलम् ।—

रसोनकल्कस्वरसेन पक्वं तैलं पिबेत् यस्त्वनिलामयार्त्तः ।

---

शतमित्यादि ।—अश्वगन्धातैले अंशशेषितमिति—पादशेषितम् । मृणालं स्थूलमृणालं बिसन्तु स्वल्पमृणालं, बिसशब्देन मृणालनिर्गतः प्रतानः । किञ्जल्कः पद्मवराटः, पद्मकेशरस्य उक्तत्वात् ; अन्ये तु—उत्पलकिञ्जल्कमित्याहुः । मेदास्थाने महेति पाठे—महा महासहा, माषपर्णीत्यर्थः ॥ १४२—१४६ ॥

मूलकेत्यादि चरकस्य ।—मूलकस्वरसादीनि चत्वारि द्रव्याणि तैलसमानि । बलाचित्रकसैन्धवैरित्यत्र "बलाग्निगुरुसैन्धवैः" इत्येव पाठश्चरकेषु दृश्यते । अन्ये तु—उभयत्र चित्रकदर्शनात् एकत्र चित्रकशब्देनैरण्डमूलं व्याचक्षते, तन्तु टीकाकृद्भिर्न व्याख्यातमिति ॥ १४७—१४९ ॥

रसोनेत्यादि ।—रसोनकल्कस्वरसेन पक्वमिति—रसोनस्वरसकल्काभ्यां पक्वमित्यर्थः ।

तस्याशु नश्यन्ति च वातरोगा ग्रन्था विशाला इव दुर्गृहीताः ॥ १५० ॥

केतक्याद्यं तैलम् ।—

केतकिनागबलाऽतिबलानां यत् बहलेन रसेन विपक्वम् ।
तैलमनल्पतुषोदकसिद्धं मारुतमस्थिगतं विनिहन्ति ॥ १५१ ॥
अनल्पवचनादत्र तुल्ये क्वाथतुषोदके ।
अकल्कोऽपि भवेत् स्नेहो यः साध्यः केवले द्रवे ॥ १५२ ॥

सैन्धवाद्यं तैलम् ।—

द्वे पले सैन्धवात् पञ्च शुण्ठ्या ग्रन्थिक-चित्रकात् ।
द्वे द्वे भल्लातकास्थीनि विंशतिर्द्वे तथाऽऽढके ॥ १५३ ॥
आरनालात् पचेत् प्रस्थं तैलमेतैरपत्यदम् ।
गृध्रस्यूरुग्रहाशोऽर्त्ति-सर्ववातविकारनुत् ॥ १५४ ॥

स्वल्पमाषतैलम् ।—

तैलं सङ्कुचितेऽभ्यङ्गो माषसैन्धवसाधितम् ।
बाहुशीर्षगते नस्यं पानञ्चोत्तरभक्तिकम् ॥
क्वाथोऽत्र माषनिष्पाद्यः सैन्धवं कल्कमेव च ॥ १५५ ॥

---

अत्र स्वरसः चतुर्गुणः ; अन्ये तु—स्वरसः स्नेहसमः, तोयं त्रिगुणमिति । तथा वातरोगाः नश्यन्ति यथा दुर्गृहीताः अनधिगतवाक्यार्थाः असंस्कृता वा विशाला ग्रन्थाः शास्त्राणि ॥ १५० ॥

केतकीत्यादि वाग्भटस्य ।—केतक्यादीनामतिबलान्तानां मिलितानां क्वाथः । बहलेनेति—घनेन ; बहलेनेति वचनात् अष्टभागावशिष्टत्वं क्वाथस्य, स च स्नेहात् चतुर्गुणः । अनल्पेति वचनात् काञ्जिकमपि चतुर्गुणमिति चक्रः ; अतोऽष्टगुणः पाक इत्यर्थः ॥ १५१।१५२ ॥

द्वे पले इत्यादि ।—सैन्धवाद्ये भल्लातकास्थीनि विंशतिरित्याकृतिगणनातः ॥ १५३।१५४ ॥

तैलमित्यादि ।—स्वल्पमाषतैले माषसैन्धवसाधितमिति—माषस्य क्वाथः, सैन्धवस्य तु कल्क इति चक्रः । अन्ये तु—केवलसैन्धवस्य क्वापि कल्कत्वादर्शनान्माषसैन्धवयोः कल्कः, अनुक्तद्रवत्वाज्जलं चतुर्गुणमित्याहुः ॥ १५५ ॥

माषादिसप्ताङ्गं माषतैलम् ।—

माषात्मगुप्ताऽतिरसोरुबूक-रास्नाशताह्वालवणैः प्रपिष्टैः ।
चतुर्गुणे माषबलाकषाये तैलं कृतं हन्ति च पक्षवातम् ॥ १५६ ॥

जीवकाद्यष्टादशाङ्गं माषतैलम् ।—

माषप्रस्थं समाबाप्य पचेत् सम्यक् जलाढके ।
पादशेषे रसे तस्मिन् क्षीरं दद्याच्चतुर्गुणम् ॥ १५७ ॥
प्रस्थञ्च तिलतैलस्य कल्कं दत्त्वाऽक्षसम्मितम् ।
जीवनीयानि यान्यष्टौ शतपुष्पां ससैन्धवाम् ॥ १५८ ॥
रास्नाऽऽत्मगुप्ता मधुकं बला व्योषं त्रिकण्टकम् ।
पक्षाघातेऽर्दिते वाते कर्णशूले सुदारुणे ॥ १५९ ॥
मन्दश्रुतौ चाश्रवणे तिमिरे च त्रिदोषजे ।
हस्तकम्पे शिरःकम्पे विश्वच्यामवबाहुके ॥ १६० ॥
शस्तं कलायखञ्जे च पानाभ्यञ्जनवस्तिभिः ।
माषतैलमिदं श्रेष्ठमूर्द्ध्वजत्रुगदापहम् ॥ १६१ ॥

शुण्ठ्यादिदशाङ्गं माषतैलम् ।—

माषातसीयवकुरुण्टककण्टकारी-
गोकण्टटुण्टुकजटाकपिकच्छुतोयैः ।
कार्पासकास्थिशणबीजकुलत्थकोल-
क्वाथेन वस्तपिशितस्य रसेन चापि ॥ १६२ ॥

---

माषात्मगुप्तेत्यादि ।—अतिरसा मूर्वेति निश्चलः, यष्टिमध्वित्यन्ये । माषबलयोश्च मिलित्वा चतुर्गुणः क्वाथः ॥ १५६ ॥

माषप्रस्थमित्यादि ।—जीवनीयानि यान्यष्टाविति—अष्टवर्गः ॥ १५७—१६१ ॥

माषातसीत्यादि ।—अतसी वर्त्तुलकलायः, कश्चिदतिविषेत्याह । कुरुण्टकी झिण्टी । गोकण्टकी गोक्षुरः । टुण्टुकजटा श्योणाकमूलम् । कपिकच्छुः शूकशिम्बी । माषादिना कपिकच्छ्वन्तेनैकः क्वाथः ; कार्पासकास्थिप्रभृतिना कोलान्तेनापरः क्वाथः ; कोलञ्च शुष्कबदरम् । तथा वस्तपिशितस्य छागमांसस्य रसः क्वाथस्तृतीयः । एवं

शुण्ठ्या समागधिकया शतपुष्पया च
सैरण्डमूलसपुनर्नवया सरण्या।
रास्नाबलाऽमृतलताकटुकैर्विपक्वं
माषाख्यमेतदवबाहुहरञ्च तैलम्॥ १६३॥
अर्द्धाङ्गशोषमपतानकमाढ्यवात-
माक्षेपकं सभुजकम्पशिरःप्रकम्पम्।
नस्येन वस्तिविधिना परिषेचनेन
हन्यात् कटीजघनजानुरुजश्च सर्वाः॥ १६४॥

महामाषतैलम्।—

माषस्यार्द्धाढ़कं दत्त्वा तुलाऽर्द्धं दशमूलतः।
पलानि छागमांसस्य त्रिंशद्द्रोणेऽम्भसः पचेत्॥ १६५॥
पूते शीते कषाये च चतुर्थांशावतारिते।
प्रस्थञ्च तिलतैलस्य पयो दत्त्वा चतुर्गुणम्॥ १६६॥
आत्मगुप्तोरुबूकश्च शताह्वा लवणत्रयम्।
जीवनीयानि मञ्जिष्ठा चव्यचित्रककट्फलम्॥ १६७॥
सव्योषपिप्पलीमूलं रास्ना मधुकसैन्धवम्।
देवदार्वमृता कुष्ठं वाजिगन्धा वचा शटी॥ १६८॥
एतैरक्षसमैः कल्कैः साधयेन्मृदुनाऽग्निना।
पक्षाघातेऽर्दिते वाते बाधिर्य्ये हनुसङ्ग्रहे॥ १६९॥
कर्णनादे शिरःशूले तिमिरे च त्रिदोषजे।
पाणिपादशिरोग्रीवा-भ्रमणे मन्दचङ्क्रमे॥ १७०॥

---

त्रिभिर्द्रवैर्मिलित्वा चातुर्गुण्यम् "एकादिविद्रवद्रव्यैः कुर्य्यात् स्नेहात् चतुर्गुणम्" इति वचनात्। सरणी प्रसारणी। अमृतलता गुडूची। कटुकं मरिचं, न तु लताकस्तूरी॥ १६३—१६४॥

माषस्यार्द्धाढ़कमित्यादि।—अर्द्धाढ़कं द्वात्रिंशत् पलानि। लवणत्रयमिति—चरकोक्तमानदेशसामर्थ्यात् सौवर्चलं सैन्धवं विड़ञ्च। पुनः सैन्धवमिति वचनात्।

कलायखञ्जे पाङ्गुल्ये गृध्रस्यामववाहुके।
पाने वस्तौ तथाऽभ्यङ्गे नस्ये कर्णाक्षिपूरणे॥
तैलमेतत् प्रशंसन्ति सर्ववातरुजाऽपहम्॥ १७१॥

निरामिष-महामाषतैलम्।—

द्विपञ्चमूलीं निःक्वाथ्य तैलात् षोड़शभिर्गुणैः।
माषाढ़कं साधयित्वा तं निर्य्यूहं चतुर्गुणम्॥ १७२॥
ग्राहयित्वा तु विपचेत् तैलप्रस्थं पयःसमम्।
कल्कार्थञ्च समावाप्य भिषक् द्रव्याणि बुद्धिमान्॥१७३॥
अश्वगन्धां शटीं दारु बलां रास्नां प्रसारणीम्।
कुष्ठं परूषकं भार्गीं द्वे विदार्य्यौ पुनर्नवाम्॥ १७४॥
मातुलुङ्गफलाजाज्यौ रामठं शतपुष्पिकाम्।
शतावरीं गोक्षुरकं पिप्पलीमूलचित्रकौ॥ १७५॥
जीवनीयगणं सर्वं संहृत्यैव ससैन्धवम्।

---

सैन्धवस्य भागद्वयम्। जीवनीयानि इति—जीवनीयदशकम्। अत्रापि पूर्ववत् यष्टिमधुकस्य भागद्वयम्। पाणिपादांशिरोग्रीवाभ्रमणे इति—पाणिपादादिकम्पे इत्यर्थः॥ १६५—१७१॥

द्विपञ्चमूलीमित्यादि।—अत्र माषस्य क्वाथ्यस्याढ़कमानत्वमुक्तं, तस्मादत्र्याद्दश-मूलस्यापि क्वथ्यस्याढ़कं ज्ञेयम्। तैलात् षोड़शभिर्गुणैरिति—तैलप्रस्थापेक्षया षोड़शगुणजलैरित्यर्थः, प्रस्थश्च षोड़शगुणः सन् द्रोणो भवति, तेन जलद्रोणेनेत्यर्थः। माषाढ़कञ्च तैलात् षोड़शगुणैर्जलैः साधयित्वेति योज्यम्। तं निर्य्यूहं दशमूलक्वाथं तथा माषक्वाथञ्च तैलाच्चतुर्गुणं यथा स्यात् तथा ग्राहयित्वा तैलप्रस्थं विपचेदिति योज्यम्। पयःसममिति—दुग्धं तुल्यं, तेन नवगुणः पाक इति चक्रः; अत एव वक्ष्यति—"दशमूलाढ़कं द्रोणे" इत्यादि। अन्ये तु—द्विपञ्चमूलीं माषाढ़कञ्चैकीकृत्य जलद्रोणमात्रेण साधयेदित्याहुः; तन्मते पञ्चगुणः पाकः। अपरे तु—दशमूल-कषायेण तैलात षोड़शगुणेन माषाढ़कं साधयित्वा तेन पादावशेषेण तैलप्रस्थपाक इत्याहुः; अत्र पक्षे मिलितदशमूल पल २५६, जलशराव २५६, शेषशराव ६४; किन्तु अयं पक्षो वृद्धैर्नाद्रियते, कुत्रापि एवंविधकल्पनाया अदृष्टत्वात् इति। के

तत् साधु सिद्धं विज्ञाय माषतैलमिदं महत् ॥ १७६ ॥
वस्त्यभ्यञ्जनपानेषु नावने च प्रयोजयेत् ।
पक्षाघाते हनुस्तम्भे ऽर्दिते सापतन्त्रके ॥ १७७ ॥
अवबाहुकविश्वाच्योः खञ्जपङ्ग्वयोरपि ।
हनुमन्याग्रहे चैव अधिमन्थे च वातिके ॥ १७८ ॥
शुक्रक्षये कर्णनादे कर्णशूले च दारुणे ।
कलायखञ्जशमने भैषज्यमिदमादिशेत् ॥ १७९ ॥
दशमूलाढकं द्रोणे निःक्वाथ्य पादिको भवेत् ।
क्वाथश्चतुर्गुणस्तैलान्माषक्वाथेऽप्ययं विधिः ॥ १८० ॥

सप्तप्रस्थ माषतैलम् ।—

माषक्वाथे बलाक्वाथे रास्नाया दशमूलजे ।
यवकोलकुलत्थानां छागमांसरसे पृथक् ॥ १८१ ॥
प्रस्थे च तिलतैलस्य क्षीरं दत्त्वा चतुर्गुणम् ।
रास्नाऽऽत्मगुप्तासिन्धूत्थ-शताह्वैरण्डमुस्तकैः ॥ १८२ ॥
जीवनीयबलाव्योषैः पचेदक्षसमैर्भिषक् ।
हस्तकम्पे शिरःकम्पे बाहुशोषेऽवबाहुके ॥ १८३ ॥
बाधिर्य्ये कर्णशूले च कर्णनादे च दारुणे ।
विश्वाच्यामर्दिते कुब्जे गृध्रस्यामपतानके ॥ १८४ ॥
वस्त्यभ्यञ्जनपानेषु नावनेषु च दापयेत् ।
माषतैलमिदं श्रेष्ठमूर्द्ध्वजत्रुगदापहम् ॥
क्वाथप्रस्थाः षडेवात्र विभक्त्यन्तेन भाषिताः ॥ १८५ ॥

---

विदार्य्यौ विदारीकन्दः क्षीरविदारी च । मातुलुङ्गफलं मातुलुङ्गस्य फलम् । जीवनीयगणमिति—जीवनीयदशकम् ॥ १७२—१८० ॥

माषक्वाथे इत्यादि ।—सप्तप्रस्थमाषतैले क्वाथस्य प्रस्थस्याप्युक्तत्वात् माषादीनां प्रत्येकं प्रस्थो ग्राह्यः । मिलितदशमूलप्रस्थः, तथा यवकोलकुलत्थानां मिलित्वैव प्रस्थः । सर्वत्रैव चतुर्गुणं जलं देयं, चतुर्भागोऽवशेष्यः ; अत एवाह—"क्वाथप्रस्थाः षडेवात्र" इत्यादि । जीवनीयैरिति—जीवनीयदशकैः ॥ १८१—१८५ ॥

मज्जस्नेहः।—

ग्राम्यानूपौदकानान्तु भित्त्वाऽस्थीनि पचेज्जले।
तं स्नेहं दशमूलस्य कषायेण पुनः पचेत्॥ १८६॥
जीवकर्षभकास्फोता-विदारीकपिकच्छुभिः।
वातघ्नैर्जीवनीयैश्च कल्कैर्द्विक्षीरभागिकम्॥ १८७॥
तत् सिद्धं नावनाभ्यङ्गात् तथा पानानुवासनात्।
शिरापर्वास्थिकोष्ठस्थं प्रणुदत्याशु मारुतम्॥ १८८॥
ये स्युः प्रक्षीणमज्जानः क्षीणशुक्रौजसश्च ये।
बलपुष्टिकरं तेषामेतत् स्यादमृतोपमम्॥ १८९॥

चतुःस्नेहः।—

प्रस्थः स्यात् त्रिफलायास्तु कुलत्थकुड़वद्वयम्।
कृष्णगन्धात्वगाढ़क्योः पृथक् पञ्चपलं भवेत्॥ १९०॥
रास्नाचित्रकयोर्द्वे द्वे दशमूलं पलोन्मितम्।
जलद्रोणे पचेत् पाद-शेषं प्रस्थोन्मितं पृथक्॥ १९१॥
सुराऽऽरनालदध्यम्ल-सौवीरकतुषोदकम्।
कोलदाड़िमवृक्षाम्ल-रसं तैलं घृतं वसाम्॥ १९२॥
मज्जानञ्च पयश्चैव जीवनीयपलानि षट्।
कल्कं दत्त्वा महास्नेहं सम्यगेनं विपाचयेत्॥ १९३॥

---

ग्राम्यानूपौदकानामित्यादि।—अत्र द्विगुणक्षीरसाहचर्य्याद्दशमूलीक्वाथोऽपि द्विगुण एव ग्राह्यः, अन्ये तु चतुर्गुण इत्याहुः। वातघ्नैरिति—भद्रदार्वादिगणैः मधुराम्ल-लवणस्कन्धोक्तैर्वातहरद्रव्यैश्च। जीवनीयगणप्रविष्टयोः जीवकर्षभकयोः पुनः पाठो भागद्वयग्रहणार्थम्। आस्फोता "हाफरमालि" इति ख्यातम्॥ १८६—१८९॥

प्रस्थः स्यादित्यादि।—अत्र त्रिफलाया मिलित्वा प्रस्थः। कृष्णगन्धा शोभाञ्जनम्, अस्यास्त्वक् मूलत्वक्; अन्ये तु—कृष्णगन्धा शमीत्याहुः; तन्न, जतूकर्णे—"त्रिफलाप्रस्थः कुलत्थाढ़कं शिग्रुत्वगाढ़की" इत्यादि पाठात्। दशमूलं पलोन्मितमिति—प्रत्येकम्। प्रस्थोन्मितं पृथगिति—सुरादीनां पयोऽन्तानां प्रत्येकं प्रस्थ इत्यर्थः।

शिरामज्जास्थिगे वाते सर्वाङ्गैकाङ्गरोगिषु।
वेपनाक्षेपशूलेषु तमभ्यङ्गं प्रदापयेत्॥ १९४॥

कुब्जप्रसारणीतैलम्।—

प्रसारणीशतं क्षुसं पचेत् तोयार्मणे शुभे।
पादशेषे समं तैलं दधि दद्यात् सकाञ्जिकम्॥ १९५॥
द्विगुणञ्च पयो दत्त्वा कल्कान् द्विपलिकांस्तथा।
चित्रकं पिप्पलीमूलं मधुकं सैन्धवं वचाम्॥ १९६॥
शतपुष्पां देवदारु रास्नां वारणपिप्पलीम्।
प्रसारण्याश्च मूलानि मांसीं भल्लातकानि च॥ १९७॥
पचेन्मृद्वग्निना तैलं वातश्लेष्मामयान् जयेत्।
अशीतिं नरनारीस्थान् वातरोगान् व्यपोहति॥ १९८॥
कुब्जं स्तिमितपङ्गुत्वं गृध्रसीं खुड़कार्दितम्।
हनुपृष्ठशिरोग्रीवा-स्तम्भञ्चाशु नियच्छति॥ १९९॥

पाठान्तरीय-विंशतीप्रसारणीतैलम्।—

समूलपत्रशाखाञ्च जातसारां प्रसारणीम्।
कुट्टयित्वा पलशतं दशमूलशतं तथा॥ २००॥
अश्वगन्धापलशतं कटाहे समधिक्षिपेत्।
वारिद्रोणे पृथक् पक्का पादशेषावतारितम्॥ २०१॥
कषायसममात्रन्तु तैलमत्र प्रदापयेत्।
दध्नस्तथाऽऽढ़कं दत्त्वा द्विगुणञ्चापि काञ्जिकम्॥२०२॥
चतुर्द्रोणेन पयसा जीवनीयैः पलोन्मितैः।

---

दध्यम्लम् अम्लदधि। तुषोदकं काञ्जिकम्। कोलं वदरम्। दाड़िमः अम्लदाड़िमः। वृक्षाम्लं महार्द्रकं, "महादा" इति ख्यातम्। जीवनीयपञ्चानि षड़िति मिलित्वा। महास्नेहमिति चतुःस्नेहस्य संज्ञा॥ १९०—१९४॥

प्रसारणीत्यादि।—कुब्जप्रसारणीतैले समंमिति—पादावशिष्टक्काथसमम्, आढ़कमित्यर्थः। दधि दद्यात् सकाञ्जिकमिति—दधिकाञ्जिके तैलसमे; तेन तैलदधिकाञ्जिकानां प्रत्येकमाढ़कम्। द्विगुणञ्च पय इति—आढ़कद्वयमित्यर्थः। अन्ये तु—

शृङ्गवेरपलात् पञ्च त्रिंशद्भल्लातकानि च ॥ २०३ ॥
द्वे पले पिप्पलीमूलाच्चित्रकाच्च पलद्वयम् ।
यवक्षारपले द्वे च सैन्धवस्य पलद्वयम् ॥ २०४ ॥
सौवर्चलपले द्वे च मञ्जिष्ठायाः पलद्वयम् ।
प्रसारणीपले द्वे च मधुकस्य पलद्वयम् ॥ २०५ ॥
सर्वाण्येतानि संहृत्य शनैर्मृद्वग्निना पचेत् ।
एतदभ्यञ्जने श्रेष्ठं वस्तिकर्मनिरूहणे ॥ २०६ ॥
पाने नस्ये च दातव्यं न क्वचित् प्रतिहन्यते ।
अशीतिं वातजान् रोगांश्चत्वारिंशच्च पैत्तिकान् ॥२०७॥
विंशतिं श्लैष्मिकांश्चैव सर्वानेतान् व्यपोहति ।
गृध्रसीमस्थिभङ्गञ्च मन्दाग्नित्वमरोचकम् ॥ २०८ ॥
अपस्मारमथोन्मादं विभ्रमं मन्दगामिताम् ।
त्वग्गताश्चैव ये वाताः शिरःसन्धिगताश्च ये ॥ २०९ ॥
जानुसन्धिगताश्चैव पादपृष्ठगतास्तथा ।
अश्वो वा वातसम्भग्नो गजो वा यदि वा नरः ॥ २१० ॥
प्रसारयति यस्माद्धि तस्मादेषा प्रसारणी ।
इन्द्रियाणां प्रजननी वृद्धानाञ्च रसायनी ॥ २११ ॥
एतेनाश्वतरीणां कृतं पुंसवनं महत् ।
प्रसारणीतैलमिदं बलवर्णाग्निवर्द्धनम् ॥ २१२ ॥
अपनयति वलीपलितमुत्पाटयति पक्षाघातम् ।
वातस्तम्भं सर्वाङ्गगतं वातगुल्मञ्च नाशयति ॥
एतदुपसेव्यमानः प्रसन्नवर्णेन्द्रियो भवति ॥ २१३ ॥

त्रिशतीप्रसारणीतैलम् ।—

प्रसारण्यास्तुलामश्व-गन्धाया दशमूलतः ।

---

सकाञ्जिकमिति पयोविशेषणं कृत्वा काञ्जिकस्यापि द्वैगुण्यमिच्छन्ति; व्यवहारस्तु पूर्ववदेव । खुड्को ग्रन्थिवातः; अन्ये तु—वातकण्टक इत्याहुः ॥ १९५—२१३ ॥

तुलां तुलां पृथग्वारि-द्रोणे पादावशेषिते ॥ २१४ ॥
तैलाढ़कं चतुःचीरं दधि तुल्यं द्विकाञ्जिकम् ।
द्विपलैर्ग्रन्थिकक्षार-प्रसारण्युत्तसैन्धवैः ॥ २१५ ॥
समञ्जिष्ठाग्नियष्ट्याह्वैः पलिकैर्जीवनीयकैः ।
शुण्ठ्याः पञ्चपलं दत्त्वा त्रिंशद्भल्लातकानि च ॥ २१६ ॥
पचेदस्त्यादिना वातं हन्ति सन्धिशिराऽस्थिगम् ।
पुंस्त्वोत्साहस्मृतिप्रज्ञा-बलवर्णाग्निवृद्धये ॥
प्रसारणीयं त्रिशतो क्तं सौवर्चलान्विह ॥ २१७ ॥

सप्तशतिकं प्रसारणीतैलम् ।—

समूलपत्रामुत्पाट्य शरत्काले प्रसारणीम् ।
शतं ग्राह्यं सहचरात् शतावर्य्याः शतं तथा ॥ २१८ ॥
बलाऽऽत्मगुप्ताऽश्वगन्धा-केतकीनां शतं शतम् ।
पचेच्चतुर्गुणे तोये द्रवैस्तैलाढ़कं भिषक् ॥ २१९ ॥
मस्तु मांसरसं चुक्रं पयश्चाढ़कमाढ़कम् ।
द्व्याढ़कसमायुक्तं पाचयेन्मृदुनाऽग्निना ॥ २२० ॥
द्रव्याणान्तु प्रदातव्या मात्रा चार्द्धपलांशिका ।
तगरं मदनं कुष्ठं केशरं मुस्तकं त्वचम् ॥ २२१ ॥

---

प्रसारण्यास्तुलामित्यादि ।—अत्र दशमूलस्य मिलित्वा तुला। पृथक् वारिद्रोणे इति—तिसृषु तुलासु प्रत्येकं जलद्रोणदानमित्यर्थः। सैन्धवसान्निध्यादत्र सौवर्चलं गृह्णन्ति वृद्धाः। ग्रन्थिकादीनां यष्ट्याह्वान्तानां प्रत्येकं द्विपलं, जीवनीयदशकन्तु प्रत्येकं पलिकम्। त्रिंशत् भल्लातकानीत्याकृतिमानात् ॥ २१४—२१७ ॥

समूलपत्रामित्यादि ।—शतं ग्राह्यमिति प्रसारण्या इत्यर्थः। तथा-शब्दात् सहचराच्च शतमित्यन्वयः। केतकी "केया" इति ख्यातम्। पचेच्चतुर्गुणे तोये इत्यत्र पलोल्लेखागतमानत्वाच्चतुर्गुणतोयस्य न द्वैगुण्यम्। अन्ये तु—सम्यग्वीर्य्याधानार्थं द्वैगुण्यात् चतुर्गुणमष्टगुणं गृह्णन्ति, इदन्तु न व्यवहारसिद्धं न वा शास्त्रसिद्धमिति। द्रवैरिति—प्रसारण्यादीनां केतक्यन्तानां पादावशिष्टक्वाथैः। चुक्रं शुक्ताधिकारोक्त-विधिना कार्य्यमित्येके; अन्ये तु—महाराजप्रसारण्यां वक्ष्यमाणेन विधिनेत्याहुः।

रास्ना सैन्धवपिप्पल्यौ मांसी मञ्जिष्ठयष्टिका।
तथा मेदा महामेदा जीवकर्षभकौ तथा॥ २२२॥
शतपुष्पा व्याघ्रनखं शुण्ठी देवाह्वमेव च।
काकोली क्षीरकाकोली वचा भल्लातकं तथा॥ २२३॥
पेषयित्वा समानेतान् साधनीया प्रसारणी।
नातिपक्वं न हीनञ्च सिद्धं पूतं निधापयेत्॥ २२४॥
यत्र यत्र प्रदातव्या तन्मे निगदतः शृणु।
कुब्जानामथ पङ्गूनां वामनानां तथैव च॥ २२५॥
यस्य शुष्यति चैकाङ्गं ये च भग्नास्थिसन्धयः।
वातशोणितदुष्टानां वातोपहतचेतसाम्॥ २२६॥
स्त्रीमद्यक्षीणशुक्राणां वाजीकरणमुत्तमम्।
वस्तौ पाने तथाऽभ्यङ्गे नस्ये चैव प्रदापयेत्॥
प्रयुक्तं शमयत्याशु वातजान् विविधान् गदान्॥ २२७॥

एकादशशतिकं प्रसारणीतैलम्।—

शाखामूलदलैः प्रसारणितुलास्तिस्रः कुरुण्टात् तुले
क्षिन्नायाश्च तुले तुले रुवुकतो रास्नाशिरीषात् तुलाम्।
देवाह्वाच्च सकेतकात् घटशते निःक्वाथ्य कुम्भांशिके
तोये तैलघटं तुषाम्बुकलसौ दत्त्वाऽऽढकं मस्तुनः॥ २२८॥

---

द्रव्याणामिति—कल्कद्रव्याणाम्। अर्द्धपलांशिका इति—अर्द्धपलमाना। तगरं पूर्ववद्ग्राह्यमेव। केशरं नागकेशरम्। मञ्जिष्ठयष्टिका इति—मञ्जिष्ठायाश्छान्दसत्वात् ह्रस्वः. यष्टिका यष्टिमधु। व्याघ्रनखं नखी। देवाह्वं देवदारु। भल्लातकासहत्वे रक्तचन्दनं देयम्॥ २१८—२२७॥

शाखामूलदलैरित्यादि।—अत्र तृतीया सहार्थे विशेषणे वा। कुरुण्टः नील-झिण्टी। रास्नाशिरीषयोर्मिलित्वा एका तुला। देवदारुकेतकयोरपि मिलित्वैव तुला। घटशते इति—द्रोणशते। कुम्भांशिके इति—द्रोणद्वयशेषे; यदुक्तं—"द्रोणद्वयन्तु सूर्पः स्याज्ज्ञेयः कुम्भः स एव च"। अन्ये तु—कुम्भो द्रोण इत्याहुः; "नल्वणार्मणो-

शुक्ताच्छागरसादथेक्षुरसतः क्षीराच्च दत्त्वाऽऽढकं
पृक्कानकर्कटजीवकाद्यविकसाकाकोलिकाकच्छुरा-।
सूक्ष्मैलाघनसारकुन्दुसरलाकाश्मीरमांसीनखैः
कालीयोत्पलपद्मकाह्वयनिशाकक्कोलकग्रन्थिकैः ॥ २२९ ॥
चाम्पेयाभयचोचपूगकटुकाजातीफलाभीरुभिः
श्रीवासामरदारुचन्दनवचाशैलेयसिन्धूद्भवैः।
तैलाम्भोदकटुम्भराङ्घ्रिनलिकावृश्चीरकच्चोरकैः
कस्तूरीदशमूलकेतकनतध्यामाश्वगन्धाऽम्बुभिः ॥ २३० ॥
कौन्तीतार्क्ष्यजशल्लकीफललघुश्यामाशताह्वाऽऽमयैः
भल्लातत्रिफलाऽब्जकेशरमहाश्यामालवङ्गान्वितैः।
स्याद्यैस्त्रिपलैर्महौषधि पचेन्मन्देन पात्रेऽग्निना
पानाभ्यञ्जनवस्तिनस्यविधिना तन्मारुतं नाशयेत् ॥२३१॥

मानघटकुम्भकलशाः पर्य्यायाः” इति वृद्धवाग्भटवचनात् कुम्भशब्दोऽत्र द्रोण-पर्य्यायः, तेन कुम्भांशिके इत्यस्य द्रोणशेषे इत्यर्थः; किन्तु व्यवहारः पूर्वेणैव। अत्र द्रव्यशब्दयोः बहुलत्वादेकस्मिन् पात्रे क्वाथो दुष्करः, तेन द्रव्यं विभज्य जलं तदनुसारेण दत्त्वा क्वथनीयम्। तैलघटं तैलद्रोणम्। तुषाम्बुकलशाविति—काञ्जिकस्य द्रोणद्वयम्। शुक्तादीनाञ्च क्षीरान्तानां प्रत्येकमाढकम्। जीवकाद्यं जीवनीयदशकमष्टवर्गो वा। काकोल्या भागद्वयं, जीवनीयगणेऽप्यस्याः पठितत्वात्। विकसा मञ्जिष्ठा। कच्छुरा शूकशिम्बी, दुरालभेत्यन्ये। घनसारः कर्पूरम्। कुन्दुः कुन्दुरुसंज्ञकं सुगन्धिद्रव्यम्; कुन्दुरुखोटिरिति ख्यातम्। सरला सरलकाष्ठं, न तु त्रिवृता, सुगन्धिद्रव्यान्तःपठितत्वात्। एवं ग्रन्थिकमपि ग्रन्थिपर्णी, न तु पिप्पलीमूलम्। उत्पलमप्युत्पलपुष्पं, न तु कुष्ठं, तस्य वक्ष्यमाणत्वात्। चाम्पेयं चम्पककलिका, नागकेशरो वा। अभयमुशीरम्। चोचं गुडत्वक्। पूगं पूगफलं, पूगवल्कलमित्यन्ये। कटुका लताकस्तूरी। अभीरुः शतमूली। श्रीवासो नवनीतखोटिः। चन्दनं श्वेतचन्दनम्। तैलं सिह्लकः। कटुम्भरा प्रसारणी वृश्चिकपत्री वा, तस्या अङ्घ्रिर्मूलम्। वृश्चीरः श्वेतपुनर्नवा। कच्चोरको गन्धशटी। ध्यामं गन्धतृणम्। कौन्ती रेणुका। तार्क्ष्यजं रसाञ्जनम्। फलं कट्फलं मदनफलं वा। लघु अगुरु। श्यामा प्रियङ्गुः।

सर्वार्द्धाङ्गगतं तथाऽवयवगं सन्ध्यस्थिमज्जाश्रितं
श्लेष्मोत्थानथ पैत्तिकांश्च शमयेन्नानाविधानामयान्।
धातून् बृंहयति स्थिरञ्च कुरुते पुंसां नवं यौवनं
वृद्धस्यापि बलं करोति सुमहत् बन्ध्यासु गर्भप्रदम् ॥२३२॥
पीत्वा तैलमिदं जरत्यपि सुतं सूतेऽमुना भूरुहाः
सिक्ताः शोषमुपागताश्च फलिनः स्निग्धा भवन्ति स्थिराः
भग्नाङ्गाः सुदृढ़ीभवन्ति मनुजा गावो हयाः कुञ्जराः ॥२३३॥

अष्टादशशतिकं प्रसारणीतैलम्।—

समूलदलशाखायाः प्रसारण्याः शतत्रयम्।
शतमेकं शतावर्य्या अश्वगन्धाशतं तथा ॥ २३४ ॥
केतकीनां शतञ्चैकं दशमूलाच्छतं शतम्।
शतं वाट्यालकस्यापि शतं सहचरस्य च ॥ २३५ ॥
जलद्रोणशतं दत्त्वा शतभागावशेषितम्।
ततस्तेन कषायेण कषायद्विगुणेन च ॥ २३६ ॥
सुव्यक्तेनारनालेन दधिमण्डाढ़केन च।
क्षीरशुक्तेक्षुनिर्य्यास-च्छागमांसरसाढ़कैः ॥ २३७ ॥
तैलात् द्रोणं समायुक्तं दृढ़े पात्रे निधापयेत्।
द्रव्याणि यानि पेष्याणि तानि वक्ष्याम्यतः परम् ॥२३८॥

---

महाश्यामा श्यामालता। एषां प्रत्येकं त्रिपलं, व्योषस्य मिलित्वा त्रिपलं ग्राह्यम्। अत्र कल्कभूयस्त्वादेलादितैलवदधमैः सुगन्धिद्रव्यैः प्रथमः पाकः, मध्यमैस्तु द्वितीयः, उत्तमैस्तु तृतीय इति। अत्र गन्धवृद्ध्यर्थं कर्पूर-कस्तूरीभ्यां पत्रकल्कः कार्य्यः; पत्रकल्कलक्षणमग्रे वाच्यम्। पत्रकल्कस्य तु मानमत्र तैलानुरूपतः, सुगन्धि-तैलान्तरोक्तमानानुसाराद्वा ज्ञेयम् ॥ २२८—२३३ ॥

समूलदलशाखाया इत्यादि।—दशमूलाच्छतं शतमिति—बिल्वादीनां दशानां प्रत्येकं शतमित्यर्थः। वृद्धा अत्र क्वाथ्यमध्ये रास्नादेवदारुणोरपि प्रत्येकं पञ्चाशत् पलानि प्रक्षिपन्ति, अत एव चक्रोऽपि "क्वाथे तुलाऽर्द्धम्" इत्यादि वक्ष्यति। जलन्तु यथोक्तमेव देयं, न त्वधिकम्। कषायद्विगुणेनारनालेनेति—द्रोणद्वयेनेत्यर्थः। क्षीरादीनां प्रत्येक-

भल्लातकं नतं शुण्ठी पिप्पली चित्रकं शटी।
वचा पृक्का प्रसारण्याः पिप्पल्या मूलमेव च ॥ २३९ ॥
देवदारु शताह्वा च सूक्ष्मैला त्वचबालकम्।
कुङ्कुमं मदमञ्जिष्ठा तुरुष्कं नखिकागुरु ॥ २४० ॥
कर्पूरकुन्दुरुनिशा-लवङ्गध्यामचन्दनम्।
कक्कोलं नलिका मुस्तं कालीयोत्पलपत्रकम् ॥ २४१ ॥
शटीहरेणुशैलेय-श्रीवासञ्च सकेतकम्।
त्रिफलाकच्चुराऽभीरु-सरलापद्मकेशरम् ॥ २४२ ॥
प्रियङ्गुशोरनलदं जीवकाद्यं पुनर्नवा।
दशमूल्यश्वगन्धा च नागपुष्पं रसाञ्जनम् ॥ २४३ ॥
कटुकाजातिपूगानां फलानि शल्लकीरसः।
भागांस्त्रिपलिकान् दत्त्वा शनैर्मृद्वग्निना पचेत् ॥ २४४ ॥
विस्तीर्णे सुदृढ़े पात्रे पाक्येषा तु प्रसारणी।
प्रयोगः षड्विधश्चात्र रोगार्त्तानां विधीयते ॥ २४५ ॥

---

माढ़कम्। समायुक्तानिति पदं कषायेणेत्यादिभिस्तृतीयान्तैर्योज्यम्। प्रसारण्या अपि मूलमित्यन्वयः। त्वचं गुड़त्वक्। मदः कस्तूरी। तुरुष्कं सिह्लकः। गयदासस्तु अत्र—"तुरुष्क नखचारकम्" इति पठित्वा अगुरुस्थाने चोरपुष्पं लिखति। ध्यामं गन्धतृणम्। उत्पलम् उत्पलपुष्पम्। पत्रं तेजपत्रम्। शटी गन्धशटी। श्रीवासः नवनीतखोटिः। सकेतकमित्यत्र "सैड़गजम्" इति पठित्वा एड़गजबीजमाह गयदासः। कच्चुरा शूकशिम्बीमूलम्। सरला सरलकाष्ठम्। पद्मकेशरं पद्मकिञ्जल्कः। नलदं मांसी। जीवकाद्यं जीवनीयदशकम्। नागपुष्प नागकेशरपुष्पचूर्णम्। कटुका लताकस्तूरी। फलानीति कटुकादिभिस्त्रिभिः सम्बध्यते। शल्लकी स्वनामख्याता। रसो गन्धरसः। अत्र त्रिफलाया मिलित्वा पलत्रयम्, एवं जीवनीयदशक-दशमूलयोरपि; प्रत्येकशस्तु त्रिपलग्रहणे कल्कस्यातिबाहुल्य स्यादिति। अत्रापि कल्कभूयस्त्वात् पूर्ववत् अधमैः सुगन्धिद्रव्यैः प्रथमः पाकः, मध्यमैः द्वितीयः, उत्तमैस्तु तृतीय इति। अत्रापि तृतीयः पाको गन्धोदकेन; केचित्तु द्वितीयं पाकमपि गन्धोदकेनेच्छन्ति।

अभ्यङ्गात् त्वग्गतं हन्ति पानात् कोष्ठगतं तथा ।
भोजनात् सूक्ष्मनाड़ीस्थान् नस्यादूर्द्ध्वगतं तथा ॥ २४६ ॥
पक्वाशयगतं वस्तिर्निरूहः सार्वकायिके ।
एतद्धि बड़वाश्वानां किशोराणां यथाऽमृतम् ॥ २४७ ॥
एतदेव मनुष्याणां कुञ्जराणां गवामपि ।
अनेनैव च तैलेन शुष्यमाणा महाद्रुमाः ॥ २४८ ॥
सिक्ताः पुनः प्ररोहन्ति भवन्ति फलशालिनः ।
वृद्धोऽप्यनेन तैलेन पुनश्च तरुणायते ॥ २४९ ॥
न प्रसूते च या नारी साऽपि पीत्वा प्रसूयते ।
अप्रजाः पुरुषो यस्तु सोऽपि पीत्वा सुतं लभेत् ॥ २५० ॥
अशीतिं वातजान् रोगान् श्लैष्मिकान् पित्तजानपि ।
सन्निपातसमुत्थांश्च नाशयेत् क्षिप्रमेव तु ॥ २५१ ॥
एतेनान्धकवृष्णीनां कृतं पुंसवनं महत् ।
कृत्वा विष्णोर्बलिञ्चापि तैलमेतत् प्रयोजयेत् ॥ २५२ ॥
क्वाथे तुलाऽर्द्धं रास्नायाः किन्तिमस्य च दीयते ।
भल्लातकासहत्वे तु तत्स्थाने रक्तचन्दनम् ॥ २५३ ॥
त्वक्पत्रपत्रमधुरी-कुष्ठचम्पकचोरिकाः ।
ग्रन्थिकोषौ मरुवकमाधिकत्वेन दीयते ॥ २५४ ॥
कर्पूरमददानञ्च शुक्लागन्धोदकाङ्क्षया ।
द्रव्यशुद्धिः पाकविधिर्भाविप्रसारणीसमः ॥ २५५ ॥

महाराजप्रसारणीतैलम् ।—

शतत्रयं प्रसारण्या द्वे च पीतसहाचरात् ।
अश्वगन्धेरण्डबला वरी रास्ना पुनर्नवा ॥ २५६ ॥

---

अत्रोपदेशादनुक्तमप्यधिकं त्वक्पत्रादिकं गन्धद्रव्यं देयमित्याह, त्वक्पत्रेत्यादि।—त्वक्पत्रं तेजपत्रम्। पत्रन्तु तेजपत्रसदृशमेव सुगन्धिपत्रम्। ग्रन्थिर्ग्रन्थिपर्णम्। कोषो जातिकोषः। अनागतावेक्षणतन्त्रयुक्त्या कर्पूरादिदानविधिमाह—कर्पूरेत्यादि ॥ २३४—२५५ ॥

केतकी दशमूलञ्च पृथक् त्वक् पारिभद्रतः ।
प्रत्येकमेषान्तु तुला तुलाऽर्द्धं किलिमात् तथा ॥ २५७ ॥
तुलाऽर्द्धं स्याच्छिरीषाच्च लाक्षायाः पञ्चविंशतिः ।
पलानि लोध्राच्च तथा सर्वमेकत्र साधयेत् ॥ २५८ ॥
जलपञ्चाढ़कशते सपादे तत्र शेषयेत् ।
द्रोणद्वयं काञ्जिकञ्च षड्विंशत्याढ़कोन्मितम् ॥ २५९ ॥
क्षीरदध्नोः पृथक् प्रस्थान् दश मस्त्वाढ़कं तथा ।
इक्षुरसाढ़कौ चैव छागमांसतुलात्रये ॥ २६० ॥
जलपञ्चचत्वारिंशत्-प्रस्थान् पक्के तु शेषयेत् ।
सप्तदशरसप्रस्थान् मञ्जिष्ठाक्वाथ एव च ॥ २६१ ॥
कुड़वोनाढ़कोन्मानो द्रवैरेतैस्तु साधयेत् ।
सुशुद्धतिलतैलस्य द्रोणं प्रस्थेन संयुतम् ॥ २६२ ॥
काञ्जिकं मानतो द्रोणं शुक्तेनात्र विधीयते ।
आद्य एभिर्द्रवैः पाकः कल्को भल्लातकं कणा ॥ २६३ ॥
नागरं मरिचञ्चैव प्रत्येकं षट्पलोन्मितम् ।
भल्लातकासहत्वे तु रक्तचन्दनमिष्यते ॥ २६४ ॥
पथ्याऽक्षधात्र्यः सरलं शताह्वा कर्कटो वचा ।

---

शतत्रयमित्यादि ।—दशमूलं पृथक् तुलेत्यन्वयः, तेन दशमूलस्य प्रत्येकं शतपलं ग्राह्यम् । किलिमं देवदारु । लोध्राच्च तथेति—पञ्चविंशतिः पलानीत्यर्थः । जलपञ्चाढ़कशते सपादे इति—आढ़कशतस्य पादः पञ्चविंशत्याढ़काः, तेन जलस्य पञ्चविंशत्याढ़काधिकं पञ्चशताढ़कमित्यर्थः । तत्र शेषयेत् द्रोणद्वयमिति—तेषु द्रोणद्वयं स्थाप्यमित्यर्थः । यद्यपि काञ्जिकस्य षड्विंशत्याढ़कास्तथाऽपि काञ्जिकद्रोणमात्रेण व्यवहारः, अन्यथा काञ्जिकस्यैव गन्धः स्यादिति ; अत एव वक्ष्यति—"काञ्जिकं मानतो द्रोणम्" इति । मञ्जिष्ठाक्वाथः कुड़वोनाढ़कोन्मान इति—पञ्चदशशरावपरिमितः । एभिर्द्रवैरिति—क्वाथकाञ्जिकादिभिः सर्वैः । नागरं शुण्ठी । अत्र भल्लातकासहत्वे तु रक्तचन्दनं देयम् ; अत एव वक्ष्यति—भल्लातकेत्यादि । पथ्याऽक्षधात्र्य इति—अत्र त्रिफलायाश्च प्रत्येकमेव पलत्रयं ग्राह्यं, समुदितमितिपदाभावात् ।

चोरपुष्पी शटी मुस्त-द्वयं पद्मञ्च सोत्पलम्॥ २६५॥
पिप्पलीमूलमञ्जिष्ठा साश्वगन्धा पुनर्नवा।
दशमूलं समुदितं चक्रमर्दो रसाञ्जनम्॥ २६६॥
गन्धतृणं हरिद्रा च जीवनीयगणस्तथा।
एषां त्रिपालिकैर्भागैराद्यः पाको विधीयते॥ २६७॥
देवपुष्पीवोलपत्रं शल्लकीरसशैलजे।
प्रियङ्गुशीरमधुरी-मांसीदारुबलाचलाः॥ २६८॥
श्रीवासो नलिका खोटिः सूक्ष्मैला कुन्दुरुर्मुरा।
नखीत्रयञ्च त्वक्पत्री पमरा पूतिचम्पकम्॥ २६९॥
मदनं रेणुका पृक्का मरुवञ्च पलत्रयम्।
प्रत्येकं गन्धतोयेन द्वितीयः पाक इष्यते॥ २७०॥
गन्धोदकन्तु त्वक्पत्री पत्रकोशीरमुस्तकम्।
प्रत्येकं सबलामूलं पलानि पञ्चविंशतिः॥ २७१॥

---

अक्षं विभीतकम्। पद्मं पद्मपुष्पम्। उत्पलं नीलोत्पलम्। दशमूलं समुदितमिति—तेन दशमूलस्य मिलित्वा पलत्रयमित्यर्थः। चक्रमर्दं एड़गजबीजम्। जीवनीयो गण इति—जीवनीयदशकम्। द्वितीयपाकमाह, देवपुष्पीत्यादि।—देवपुष्प्यादीनां कल्कः। देवपुष्पा देवदुग्धी। बोलो गन्धरसः। शल्लकीरसः शल्लक्या रसः; अन्ये तु—शल्लकीरसशब्देन कुन्दुरुमाहुः; यदुक्तं शब्दार्णवे—"कुन्दुरुस्तीक्ष्णगन्धः स्यात् भीषणः शल्लकीरसः" इति; तन्मते भागद्वयं कुन्दुरोः। बला वाट्यालकम्। चला शिह्लकः। खोटिः काष्ठखोटिः। नखीत्रयमिति—यद्यपि पञ्च नख्यो भवन्ति; यदुक्तं—"नखी पञ्चविधा प्रोक्ता गन्धाढ्या गन्धतत्परैः। काचिद्बदरपत्राभा तथोत्पलदलोपमा॥ काचिदश्वखुराकारा गजकर्णसमाऽपरा। वराहकर्णसङ्काशा पञ्चमी परिकीर्त्तिता॥" इति, तथाऽप्यत्राद्यासु चतसृषु मध्ये नखीत्रयं ग्राह्यं, वराहकर्णिकाया निषिद्धत्वात्; यथा—"करिकर्णं तुरगखुरं नखं प्रयुञ्जीत गन्धयोगेषु। धूपेषु बदरोत्पलपत्रं न वराहकर्णमुभयत्रापि॥" त्वक्पत्री तेजपत्रम्। पूतिः खट्टाशी। चम्पकं चम्पककलिका। प्रत्येकं पलत्रयमित्यन्वयः। गन्धोदके त्वक्पत्री तेजपत्रम्। पत्रन्तु सुगन्धिपत्रान्तरं तेजपत्रसदृश वाटियापत्रमिति ख्यातम्। बलामूलं वाट्यालकस्य

कुष्ठार्द्धभागोऽत्र जल प्रस्थास्तु पञ्चविंशतिः ।
अर्द्धावशिष्टाः कर्त्तव्याः पाके गन्धाम्बुकर्म्मणि ॥ २७२ ॥
गन्धाम्बु-चन्दनाम्बुभ्यां तृतीयः पाक इष्यते ।
कल्कोऽत्र केशरं कुष्ठं त्वक् कालीयककुङ्कुमम् ॥ २७३ ॥
भद्रश्रियं ग्रन्थिपर्णं लताकस्तूरिका तथा ।
लवङ्गागुरुकक्कोल-जातीकोषफलानि च ॥ २७४ ॥
एला लवङ्गकुल्लौ च प्रत्येकं त्रिपलोन्मितम् ।
कस्तूरी षट्पला चन्द्रात् पलं सार्द्धञ्च गृह्यते ॥ २७५ ॥
वेधार्थञ्च पुनश्चन्द्र-मदौ देयौ तथोन्मितौ ।
महाप्रसारणी सेयं राजयोग्या प्रकीर्त्तिता ॥ २७६ ॥

---

सूत्रम । कुष्ठार्द्धभाग इति—कुष्ठस्य सार्द्धद्वादशपलमित्यर्थः । गन्धाम्बु-चन्दनाम्बुभ्यामिति—गन्धाम्बु गन्धोदकं, तच्चोक्तमेव ; चन्दनाम्बु चन्दनमात्रेणार्द्ध-शृतम । अन्ये तु—सुपिष्टश्वेतरक्तचन्दनमिश्रं वारिमात्रं वदन्ति । भद्रश्रियं श्वेत-चन्दनम । जातीकोषफलानीति—जातीकोषो जयत्रामः, तथा जातीफलञ्चेत्यर्थः । लवङ्गकुल्लौ लवङ्गवल्कलम । चन्द्रः कर्पूरम । वेधार्थं पक्वकल्कार्थम । अस्य तैलस्य परिभाषा लिख्यते—कपातिलतैल श: ६८, क्वाथार्थे—गन्धभादालिया पल ३००, पौत-झिण्टीमूल पल २००, अश्वगन्धा पल १००, एरण्डमूल पल १००, वाड्यिालामूल पल १००, शतमूली पल १००, रास्ना पल १००, पुनर्नवा पल १००, केतकीमूल पल १००, दशमूल प्रत्येकं पल १००, पालिधामादारुछाल पल १००, देवदारु पल ५०, शिरीषमूल पल ५०, लाक्षा पल २५, लोध पल २५, पाकार्थं प्रतिशतं जल शराव २४३ ; समुदायेन तु जल शराव ८४००, द्रोणमानेन तु द्रोण १३१, श १६ ; सेर-मानेन तु २२४०० । प्रतिशत शेष श: ५, पल १, तो ६ ; समुदाय शेष शराव १२८, शुक्त शराव ६४, दुग्ध शराव ४०, दधि शराव ४०, दधिमस्तु शराव १६, इक्षुरस शराव ३२, छागमांस पल ३००, पाकार्थं जल शराव १८०, शेष शराव ६८, मञ्जिष्ठा पल ६०, पाकार्थं जल शराव ६०, शेष श: १५ । कल्कार्थे—रक्तचन्दन त्रिकटु एषां चतुर्णां प्रति पल ६, हरीतकी, बहेड़ा, आमलकी, सरल, शलुफा, समुद्रककंट, काँकड़ाशृङ्गी, यष्टि, बच, चोरहुली, शटी, नागरमुथा, केउटामुथा, पद्मपुष्प,

गुणान् प्रसारणीनान्तु वहत्येषा बलोत्तमान्।
काञ्जिकं मानतो द्रोणः शुक्तेनात्र विधीयते ॥ २७७ ॥

शुक्तविधिः।—

अत्र शुक्तविधिर्मण्ड-प्रस्थः पश्चाढ़कोन्मितम्।
काञ्जिकं कुड़वौ दध्नो गुड़प्रस्थाऽम्लमूलकात् ॥ २७८ ॥

---

नीलोत्पल, पिप्पलीमूल, मञ्जिष्ठा, अश्वगन्धा, पुनर्नवा, एड़ाञ्ची, रसाञ्जन, गन्धतृण, हरिद्रा, जीवक, ऋषभक, मेदा, महामेदा, काकोली, क्षीरकाकोली, मुगानी, माषाणी, जीवन्ती, यष्टिमधु एषां प्रत्येकं पल ३, दशमूल मिलित्वा पल ३, इति प्रथमः पाकः। द्वितीयपाके कल्कार्थं—देवहुली, गन्धरस, तेजपत्र, शल्लकीरस, शैलज, प्रियङ्गु, वीरणमूल, महुरी, जटामांसी, देवदारु, बलामूल, सिह्लक, नवनीतखोटि, नालुका, काष्ठखोटि, सूक्ष्मेला, कुन्दुरु, मुरा, बदरपत्र-नखी, अश्व-खुर-नखी, उत्पलपत्र नखी, तेजपत्र, पत्रा, खट्टाशी, चम्पककलिका, मदनक, रेणुका, पिड़िङ्गमूल, मरुआ ( स्वल्पपत्रतुलसी ) एषां प्रत्येकं पल ३। गन्धोदकार्थं—तेजपत्र, वाटियापत्र, वीरणमूल, मुथा, वेड़ेलामूल एषां प्रति पल २५, कुड़ पल १२ तोला ४, पाकार्थं जल शराव १००, शेष शराव ५०। अनेन गन्धोदकेन द्वितीयः पाकः। तृतीयपाके कल्कार्थं—नागकेशर, कुड़, गुड़त्वक्, कालीयकाष्ठ, कुङ्कुम, श्वेतचन्दन, गाठियाला, लताकस्तूरी, लवङ्ग, अगुरु, कक्कोल, रसवास, जातीफल, एलाची, लवङ्गवाकल, एषां प्रत्येकं पल ३, कस्तूरी पल ६, कर्पूर तोला १२। चन्दनोदकार्थं—श्वेतचन्दन पल ५०, पाकार्थं जल शराव ५०, शेष शराव २५। अथवा सुपिष्टचन्दनं जलेन गोलयित्वा चन्दनोदकं कार्य्यम्। द्वितीयपाकोक्त-गन्धोदक शराव २५, ततस्तृतीयपाकः। वेधार्थं कर्पूर तोला १२, कस्तूरी पल ६, एवं सिद्धे तैले कर्पूरादि पिष्ट्वा तच्चूर्णमल्पतैलञ्च भाजने कृत्वा मिश्रणीयं, तदनु सिद्धौषधकलतैलेन तेनैव सम्यक् मिश्रयित्वा शरावेण पिधाय स्थापनीयमिति वेधन-विधिः। गुणान् प्रसारणीनामिति—पूर्वोक्तप्रसारणीतैलानां ये गुणास्तानेव बलोत्तमा-नित्यधिकत्वेन वहतीत्यर्थः ॥ २५६—२७७ ॥

काञ्जिकशब्देनात्र शुक्तं ग्राह्यमित्युक्तम्, अतो यथा शुक्तं कर्त्तव्यं तदाह, अत्रेत्यादि। —मण्डस्य भक्तमण्डस्य प्रस्थः। कुड़वौ दध्न इति—द्रवद्वैगुण्याच्छरावद्वयम्। गुड़स्य प्रस्थ इति—षोड़श पलानि। अम्लमूलकं काञ्जिकाम्लःस्थितमत्कान्तिभाग इति

पलान्यष्टौ शोधितार्द्रात् पलषोड़शकं तथा ।
कणाजीरकसिन्धूत्थ-हरिद्रामरिचं पृथक् ॥ २७९ ॥
द्विपलं भाविते भाण्डे घृतेनाष्टदिनं स्थितम् ।
सिद्धं भवति तच्छुक्तं यदाऽवताय्य गृह्यते ॥
तदा देयं चतुर्जातं पृथक् कर्षत्रयोन्मितम् ॥ २८० ॥

गन्धद्रव्यशुद्धिः ।—

पञ्चपल्लवतोयेन गन्धानां क्षालनं तथा ।
शोधनस्यापि संस्कारो विशेषस्यात्र वक्ष्यते ॥ २८१ ॥
आम्रजम्बुकपित्थानां वीजपूरकविल्वयोः ।
गन्धकर्मणि सर्वत्र पत्राणि पञ्चपल्लवम् ॥ २८२ ॥

नखीशुद्धिः ।—

चण्डीगोमयतोयेन यदि वा तिन्तिड़ीजलैः ।
नखं संक्षालयेदेभिरभावे मृन्मयेन तु ॥ २८३ ॥
पुनरुद्धृत्य प्रक्षाल्य भर्जयित्वा निषेचयेत् ।
गुड़पथ्याऽम्बुना ह्येवं शुध्यते नात्र संशयः ॥ २८४ ॥

---

व्यवहरन्ति ; अन्ये तु—काञ्जिकाख्यं मूलककन्दमाहुः । शोधितार्द्रादिति—त्वग्रहिताद्रार्द्रकात् । भाविते भाण्डे घृतेनेति—घृतेन भाविते भाण्डे इत्यन्वयः । इदं सर्वं भाण्डमध्ये अष्टदिनं यावत् स्थितं सत् शुक्तं सिद्धं भवति, अष्टदिनानन्तरं यदा तैले उपयुज्यते तदा चातुर्जातं दत्त्वा तैले देयम् । अन्ये तु—"प्रस्थं तण्डुलतोयत." इत्यादिनैव शुक्तं कुर्वन्ति ॥ २७८—२८० ॥

अत्रान्तरे गन्धद्रव्यशुद्ध्यर्थं प्रकरणमाह—पञ्चपल्लवतोयेनेत्यादि ॥ २८१।२८२ ॥

नखीशुद्धिमाह, चण्डीत्यादि ।—चण्डी महिषी, उक्तं हि—"महिषी प्रोच्यते चण्डी सैरिभी च निगद्यते" इति ; तस्या गोमयं मलमित्यर्थः ; महिषीमलं सलिलेनालोड्य तत्र उत्स्वेदनं कार्य्यमित्यर्थः, किन्तु गोमयेनाप्युत्स्वेद उक्तः ; यदाह—"गोविट्काञ्जिकांचश्चाम्लमुस्विन्ना" इति । तिन्तिड़ीजलैरिति—तिन्तिड़ीफलसलिलैरित्यर्थः । अभावे मृन्मयेनेति—कृष्णमृत्तिकाभिश्रितजलेनेत्यर्थः ; उक्तं हि—"क्वाथयेत् करजं कृष्ण-मृत्तिकाभिश्रिते जले" इति । समुद्रकर्कटशुद्धिप्रकारोऽप्येवम्, अत एवोक्तम्—"अनेनैव प्रकारेण शुद्धिमायाति कर्कटः" इति ॥ २८३ २८४ ॥

वचाया हरिद्रायाश्च शुद्धिः।—

गोमूत्रे चालम्बुषके पक्वा पञ्चदलोदके।
पुनः सुरभितोयेन वाष्पस्वेदेन स्वेदयेत् ॥
गन्धोग्रा शुध्यति ह्येवं रजनी च विशेषतः ॥ २८५ ॥

मुस्तकशुद्धिः।—

मुस्तकन्तु मनाक्क्षुण्णं काञ्जिके त्रिदिनोषितम्।
पञ्चपल्लवपानीय-स्विन्नमातपशोषितम् ॥ २८६ ॥
गुडाम्बुना सिच्यमानं भर्जयेच्चूर्णयेत् ततः।
आजशोभाञ्जनजलैर्भावयेच्चेति शुध्यति ॥ २८७ ॥

शैलजशुद्धिः।—

काञ्जिके क्वथितं शैलं भृष्टा पथ्यागुडाम्बुना।
सिञ्चेदेवं पुनः पुष्पैर्विविधैरधिवासयेत् ॥ २८८ ॥

खट्टाशीशुद्धिः।—

यथालाभमपामार्ग-स्नुह्यादिक्षारलेपितम्।
वाष्पस्वेदेन संस्विद्य पूतिं निर्लोमतां नयेत् ॥ २८९ ॥
दोलापाकं पचेत् पश्चात् पञ्चपल्लववारिणि।

---

वचाशुद्धिमाह, गोमूत्रे इत्यादि।—अलम्बुषके इति—अलम्बुषाक्वथितोदके, "अलम्बुषा च मुण्डिरी" इति पर्य्यायमुक्तावली। सुरभितोयं गन्धोदकम्, अनेन वाष्पस्वेदश्च कार्य्यः। गन्धोदकं स्थाल्यां निक्षिप्य तदुपरि सच्छिद्रं स्थाल्यन्तरं दत्त्वा मृदा स्थालीद्वयस्य कण्ठमालिप्य सच्छिद्रस्थालीमध्ये वचां निक्षिप्य ततः शरावेण पिधाय अधो ज्वाला देया इति वाष्पस्वेदविधिः। गन्धोग्रा वचा। रजनी च विशेषतः इति—अनेन हरिद्राशुद्धिमपि वचाशुद्धिविधयैव कुर्य्यादिति बोधयति ॥ २८५ ॥

मुस्तकशुद्धिमाह, मुस्तकमित्यादि।—मनाक्क्षुण्णमिति—ईषद्दलितं किञ्चित् पेषितम्। अजस्य जलं मूत्रम् ॥ २८६ २८७ ॥

शैलजशुद्धिमाह, काञ्जिके इत्यादि।—शैलमिति—शैलजं काञ्जिके विपाच्य पञ्चपल्लवतोयेन क्षालनमित्युपदेशः ॥ २८८ ॥

खट्टाशीशुद्धिमाह, यथालाभमित्यादि।—दोलापाकमिति—खट्टाशीगुडकं वस्त्रेण पोट्टलीं बद्धा पञ्चपल्लवक्वाथमध्ये दोलावल्लम्बमानं पचेत्, तत आकृष्य निष्पीड्य,

खल्लः साधुमिवोत्पीड्य ततो निःस्नेहतां नयेत् ॥ २९० ॥
आजशोभाञ्जनजलैर्भावयेच्च पुनः पुनः।
शिग्रुमूले च केतक्याः पुष्पपत्रपुटे च तम् ॥
पचेदेवं विशुद्धः सन् मृगनाभिसमा भवेत् ॥ २९१ ॥

सिह्लक-कुङ्कुमागुरु-ग्रन्थिपर्ण-मधुरिका-पत्रकाणां शुद्धिः।—

तुरुष्कं मधुना भाव्यं काश्मीरञ्चापि सर्पिषा।
रुधिरेणायसं प्राज्ञैर्गोमूत्रैर्ग्रन्थिपर्णकम् ॥
मधूदकेन मधुरीं पत्रकं तण्डुलाम्बुना ॥ २९२ ॥

विशुद्धकस्तूर्य्या लक्षणम्।—

ईषत्क्षारानुगन्धा तु दग्धा याति न भस्मताम्।
पीता केतकगन्धाढ्या लघ्वी स्निग्धा मृगोत्तमा ॥ २९३ ॥

विशुद्धापक्वकर्पूरस्य लक्षणम्।—

पक्वात् कर्पूरतः प्राहुरपक्वं गुणवत्तरम्।
तत्रापि स्यात् यदक्षुद्रं स्फटिकाभं तदुत्तमम् ॥ २९४ ॥

विशुद्धपक्वकर्पूरस्य लक्षणम्।—

पक्वञ्च सदलं स्निग्धं हरितद्युति चोत्तमम्।
भङ्गे मनागपि न चेन्निपतन्ति ततः कणाः ॥ २९५ ॥

विशुद्धकुष्ठचन्दनागुरूणां लक्षणम्।—

मृगशृङ्गोपमं कुष्ठं चन्दनं रक्तपीतकम्।
काकतुण्डाकृतिः स्निग्धो गुरुश्चैवोत्तमोऽगुरुः ॥ २९६ ॥

---

निःस्नेहतां स्नेहहीनतां नयेत्, तदनु शोभाञ्जनादिक्वाथे बहुधा भावयेत्; तदनु पिष्टशोभाञ्जनमूलकृते पिण्डे तन्निधाय केतकीपुष्पदलैर्वेष्टयित्वा कुशेन बद्ध्वा पङ्केनालिप्य पुटपाकेन पचेत्, ततश्च जात्यादिकुसुमैरधिवासयेदित्युपदेशः ॥ २८९—२९१ ॥

सिह्लकादिशुद्धिमाह, तुरुष्कमित्यादि।—तुरुष्कं सिह्लकम्। रुधिरेणेति—कुङ्कुमेन। आयसमिति—अगुरु। भाव्यमिति सर्वत्र योज्यम् ॥ २९२ ॥

इदानीं गन्धद्रव्याणां प्रशस्तानां लक्षणमाह, ईषदित्यादि।—ईषत्क्षारगन्धेनानु-

विशुद्धकुङ्कुम खट्टाशी-मुरा-जटामांसीनां लक्षणम्।—

स्निग्धाल्पकेशरन्त्वस्रं शालिजो वृत्तमांसलः।

मुरा पीता वरा प्रोक्ता मांसी पिङ्गजटाकृतिः॥ २९७॥

विशुद्धरेणुक-मृगक-जातीफलानां लक्षणम्।—

रेणुका मुद्गसंस्थाना शस्तमानूपजं घनम्।

जातीफलं सशब्दञ्च स्निग्धं गुरु च शस्यते॥ २९८॥

विशुद्धैला-प्रियङ्गु-नखीनां लक्षणम्।—

एला सूक्ष्मफला श्रेष्ठा प्रियङ्गुः श्यामपाण्डुरा।

नखमश्वखुरं हस्ति-कर्णञ्चैव प्रशस्यते॥

एतेषामपरेषाञ्च नवता प्रवरो गुणः॥ २९९॥

महासुगन्धि-लक्ष्मीविलासतैले।—

जिङ्गीचोरकदेवदारुसरलव्याघ्रीवचाचेलक-
त्वक्पत्रैः सहगन्धपत्रकशटीपथ्याऽन्नधात्रीघनैः।
एतैः शोधितसंस्कृतैः पलयुगेत्याख्यातया सङ्ख्यया
तैलप्रस्थमवस्थितैः स्थिरमतिः कल्कैः पचेद्गान्धिकैः॥ ३००॥

मांसीमुरामदनचम्पकसुन्दरीत्वग्-
ग्रन्थ्यम्बुकुङ्कुमरुवकैर्द्विपलैः सपृक्कैः।
श्रीवासकुन्दुरुनखीनलिकामिषीणां
प्रत्येकतः पलमुपार्ज्य पुनः पचेत्तु॥ ३०१॥

---

नतगन्धा। मृगोत्तमा मृगमदः। रक्तपीतकमिति—किञ्चिद्रक्तपीतसारम्। वस्त्रमिति—कुङ्कुमम्। शालिजः खट्टाशी॥ २९३—२९९॥

जिङ्गीत्यादि।—जिङ्गी मञ्जिष्ठा। व्याघ्री विहनेति ख्यातं सुगन्धि द्रव्यम्; नखी इत्यन्ये। चेलकत्वक् गुवाकवृक्षस्य त्वक्। पत्रं तेजपत्रम्। गन्धपत्रं वाटियापत्रम्। पलयुगन्तु प्रत्येकम्। गान्धिकैरिति—गन्धविद्भिरित्यर्थः। एतैः कल्कैः प्रथमः पाकः। द्वितीयपाकार्थं कल्कमाह, मांसीत्यादि।—सुन्दरी प्रियङ्गुः। त्वक् गुडत्वक्। ग्रन्थिः ग्रन्थिपर्णम्। अम्बु बालकम्। कुङ्कुमम्। नलिका नालुका। मिषिः मधुरी, "गुयामोहरी" "मौरी" इति लोके। एतैः कल्कैः द्वितीयः पाकः। तृतीयपाकार्थं

एलालवङ्गचलचन्दनजातिपूति-
कक्कोलकागुरुलताघुसृणैः पलार्द्धैः ।
कस्तूरिकाऽक्षमहितामलदीप्तियुक्तैः
पक्वा तु मन्दशिखिनैव महासुगन्धम् ॥ ३०२ ॥
पञ्चांशिकेन वाऽर्द्धेन मदात् कर्पूरमिष्यते ।
कर्पूरमदयोरर्द्धं पत्रकल्कादिहेष्यते ॥ ३०३ ॥
पक्वपूतेऽप्यषा एव सम्यक् पेषणवर्त्तितम् ।
दीयते गन्धवृद्ध्यर्थं पत्रकल्कं तदुच्यते ॥ ३०४ ॥
प्रागुक्तौ शुद्धिसंस्कारौ गन्धानामिह तैः पुनः ।
द्विगुणैर्लक्ष्मीविलासः स्यादयं तैलमुत्तमः ॥ ३०५ ॥
पञ्चपत्राम्बुना चाद्यो द्वितीयो गन्धवारिणा ।
तृतीयोऽपि च तेनैव पाको वा धूपिताम्बुना ॥ ३०६ ॥

---

कल्कमाह, एलेत्यादि।—चलः सिह्लकः। चन्दनं श्वेतचन्दनम्। जातिः जातिफलम्। पूतिः खट्टाशी। लता लताकस्तूरी। घुसृणं कुङ्कुमम्। अक्षमहिता कर्षपरिमितेत्यर्थः। अमलदीप्तिः चन्द्रः, तन्नामत्वात् कर्पूरमित्यर्थः। एभिस्तृतीयः पाकः। कर्पूरं कियन्मानं ग्राह्यमित्यत आह, पञ्चेत्यादि।—मदात् निर्दिष्टकस्तूरिकाकर्षात् पञ्चधा विभक्तात् तत्रैको भागो रक्तिकाद्वयाधिकत्रिमाषको भवति, तथामानेन कर्पूरस्य द्वौ भागौ ग्राह्यावित्यर्थः, अतः कर्पूरस्य रक्तिकाचतुष्टयाधिकमाषकषट्कमिति पिण्डार्थः। पक्षान्तरमाह, अर्द्धेन वेति—कस्तूरीकर्षापेक्षया चार्द्धेन, तेन कर्पूरस्याष्टौ माषका इत्यर्थः। ननु पत्रकल्के कियन्मानौ कर्पूरमदौ देयावित्यत आह, कर्पूरमदयोरित्यादि।—पत्रकल्कात् पत्रकल्कमानमपेक्ष्य कर्पूरमदयोरर्द्धमिह तैले कल्कत्वेन इष्यते, तेन तैलकल्करूपतया यावन्मानौ कर्पूरमदावुक्तौ पत्रकल्के तु तदपेक्षया द्विगुणौ कर्पूरमदौ देयाविति पत्रकल्कमानमपि भङ्ग्या कथितं भवति, तेन पत्रकल्के कस्तूर्याः कर्षद्वयं, कर्पूरस्य तु अष्टरक्तिकाधिका द्वादश माषकाः किंवा कर्ष इति। पत्रकल्कशब्दस्यार्थमाह—पक्वपूते इत्यादि। पूर्वोक्तौ गन्धानां शुद्धिसंस्कारावत्रापि कार्य्यौ, तथा तैः पूर्वोक्तमहासुगन्धितैलसाधनद्रव्यैः त्रिंशादाभिर्द्विगुणैर्यदि तैलमेतत् साध्यते, तदा इदमेव

तैलयुग्ममिदं तूर्णं विकारान् वातसम्भवान्।
क्षपयेज्जनयेत् पुष्टिं कान्तिं मेधां धृतिं धियम्॥२०७॥

इति वातव्याधि-चिकित्सा।

---

## अथ वातरक्त-चिकित्सा।

क्रियासूत्रम्।—

वाह्यं लेपाभ्यङ्गसेकोपनाहैर्वातशोणितम्।
विरेकास्थापनस्नेह-पानैर्गम्भीरमाचरेत्॥ १॥

रक्तमोक्षणोपदेशः।—

द्वयोर्मुञ्चेदसृक् शृङ्ग-सूच्यलाबुजलौकसा।
देशाद्देशं व्रजेत् स्राव्यं शिराभिः प्रच्छनेन वा॥ २॥

अवस्थाविशेषे रक्तमोक्षणनिषेधः।—

अङ्गग्लानौ च न स्राव्यं रूक्षे वातोत्तरे च यत्॥ ३॥

---

तैलं लक्ष्मीविलाससंज्ञकञ्च भवतीत्याह—प्रागुक्ताविन्यादि। पाकार्थमुभयोरपि तैलयोः क्रमात् द्रवद्रव्यमाह, पञ्चपत्राम्बुनेत्यादि।—आम्रपत्रं, जम्बूपत्रं, कपित्थपत्रं, बिल्वपत्रं, बीजपूरकपत्रम्, एतत् सर्वमष्टगुणजले पक्का चाद्धावशेषं कुर्य्यात्। गन्धवारिणा गन्धोदकेन, तच्चोक्तमेव। धूपिताम्बुनेति—अगुर्वादिधूपितजलेनेत्यर्थः॥ १००—२०७॥

इति श्रीशिवदासमेनविरचितायां तत्त्वचन्द्रिकायां वातव्याधि-चिकित्सा-विवृतिः।

---

वातव्याधिविशेषत्वाद्वातरक्तचिकित्सामाह, वाह्यमित्यादि।—वाह्यमिति—उत्तानं, त्वङ्मांसाश्रयमित्यर्थः। गम्भीरन्तु मेदःप्रभृतिधात्वाश्रयम्; तथा चोक्तं—"त्वङ्मांसाश्रयमुत्तानं गम्भीरन्त्वन्तराश्रयम्" (च० चि० वातरक्त०) इति॥ १॥

द्वयोरित्यादि।—द्वयोरिति—उत्तानगम्भीरयोः। देशाद्देशं व्रजेदिति स्थानान्तरप्रसरणशीलम्॥ २॥

अङ्गग्लानावित्यादि।—अङ्गग्लानौ कार्श्ये॥ ३॥

विकार्षिकः ।—

अमृतानागरधन्याक-कर्षत्रयेण पाचनं सिद्धम् ।
जयति सरक्तं वातं सामं कुष्ठान्यशेषाणि ॥ ४ ॥

गुडूचीप्रयोगः ।—

वत्सादन्युद्भवः क्वाथः पीतो गुग्गुलुसंयुतः ।
समीरणसमायुक्तं शोणितं सम्प्रसाधयेत् ॥ ५ ॥

वासादिः ।—

वासागुडूचीचतुरङ्गुलानामेरण्डतैलेन पिबेत् कषायम् ।
क्रमेण सर्वाङ्गजमप्यशेषं जयेदसृग्वातभवं विकारम् ॥ ६ ॥

मुण्डितिकाप्रयोगः ।—

लीढ्वा मुण्डितिकाचूर्णं मधुसर्पिःसमायुतम् ।
छिन्नाक्वाथं पिबन् हन्ति वातरक्तं सुदुस्तरम् ॥ ७ ॥

पथ्याप्रयोगः ।—

तिस्रोऽथवा पञ्च गुडेन पथ्या
जग्ध्वा पिबेच्छिन्नरुहाकषायम् ।
तत् वातरक्तं शमयत्युदीर्ण-
माजानुसम्भिन्नमपि ह्यवश्यम् ॥ ८ ॥

गुडूच्याः षड्विधप्रयोगः ।—

घृतेन वातं सगुडा विबन्धं
पित्तं सिताढ्या मधुना कफञ्च ।

---

अमृतेत्यादि ।—प्रत्येकमेकं कर्षं गृहीत्वा कर्षत्रयमित्यर्थः ॥ ४ ॥

वत्सादनीत्यादि ।—पीतो गुग्गुलुसंयुत इति—शोधनार्थं प्रायेण गुग्गुलोः कर्षः, कर्षार्द्धं वा ; संशमनार्थन्तु माषकचतुष्टयमिति । एवं सर्वत्र ॥ ५ ॥

वासेत्यादि ।—चतुरङ्गुलोऽत्र शोणालुफलम् । अत्र तन्त्रान्तरसंवादादेकक्वाथापेक्षया द्विगुणमेवैरण्डतैलं प्रक्षेप्यमित्याहुः ॥ ६ ॥

लीढ्वेत्यादि ।—मुण्डितिका मुण्डिरीति ख्यातम् ॥ ७ ॥

तिस्रोऽथवेत्यादि ।—पुरुषमपेक्ष्य आकृतिमानात् तिस्रः पञ्च वा पथ्याः पिष्ट्वा समगुडेन खादेत्, तदनु गुडूच्याः कषायोऽनुपेयः ॥ ८ ॥

वाताढ्यगुग्रं रुबुतैलमिश्रा
शुण्ठ्याऽऽमवातं शमयेत् गुड़ूची ॥ ९ ॥

गुड़ूच्याः चतुर्विधप्रयोगः।—

गुड़ूच्याः स्वरसं कल्कं चूर्णं वा क्काथमेव वा।
प्रभूतकालमासेव्य मुच्यते वातशोणितात् ॥ १० ॥

परिषेकद्वयम्।—

दशमूलीशृतं क्षीरं सद्यः शूलनिवारणम्।
परिषेकोऽनिलप्राये तद्वत् कोष्णेन सर्पिषा ॥ ११ ॥

पटोलादिः।—

पटोलकटुकाऽभीरु-त्रिफलाऽमृतसाधितम्।
क्काथं पीत्वा जयेज्जन्तुः सदाहं वातशोणितम् ॥ १२ ॥

लेपद्वयं परिषेकश्च।—

गोधूमचूर्णाऽऽजपयो घृतञ्च सच्छागदुग्धो रुबुवीजकल्कः।
लेपे विधेयं शतधौतसर्पिः सेके पयश्चाविकमेव शस्तम् ॥ १३ ॥

भृष्टतिलप्रलेपः।—

लेपः पिष्टास्तिलास्तद्वत् भृष्टाः पयसि निर्वृताः ॥ १४ ॥

---

घृतेनेत्यादि।—षड्योगाः ॥ ९ ॥

गुड़ूच्याः इत्यादि।—स्वरसेन क्काथेन चूर्णेन वा (?) ॥ १० ॥

दशमूलीत्यादि।—दशमूलीशृतं क्षीरं परिषेक इति योज्यं, न तु पेयम्। शूलं वातरक्तप्रदेशे व्यथा। तद्वदिति—परिषेकः ॥ ११ ॥

पटोलेत्यादि।—कटुका कटुरोहिणी। अभीरुः शतावरी। अमृता गुड़ूची, छान्दसत्वात् ह्रस्वः। अयं योगः पित्तोत्तरे ॥ १२ ॥

गोधूमेत्यादि।—गोधूमचूर्णं छागदुग्धघृताभ्यां सन्धाय कोष्णं कृत्वा वातोत्तरे लेपः, शीतं रक्तोत्तरे। वृन्दे तु अस्मिन् योगे घृतं न पठ्यते, तेन घृतं विनाऽप्ययं योगः। सघृतः पुनरयं चरके पठ्यते, यथा—"वाते सरक्ते सघृतः प्रदेहो गोधूमचूर्णं छागलीपयश्च" ( चि० वातरक्त० ) इति। उभयमपि प्रमाणं स्मृतिद्वैधवत् ॥ १३ ॥

लेप इत्यादि।—तिलान् दुग्धेन पिष्ट्वा ततो भृष्ट्वा पुनर्दुग्धे निर्वापयेदित्यर्थः, वृद्धवाग्भटसंवादात्; किन्तु खोलकभृष्टतिलान् दुग्धे निर्वापितान् तेनैव दुग्धेन पिष्ट्वा लेप इति व्यवहरन्ति वृद्धाः। तद्वदित्यनेन पूर्वोक्तयोगफलमतिदिश्यते ॥ १४ ॥

कट्वादि ।—

कटुकाऽमृतयष्ट्याह्व-शुण्ठीकल्कं समाक्षिकम् ।
गोमूत्रपीतं जयति सकफं वातशोणितम् ॥ १५ ॥

धात्र्यादि: ।—

धात्रीहरिद्रामुस्तानां कषायं वा कफाधिके ॥ १६ ॥

कोकिलाक्षादि: ।—

कोकिलाक्षामृताक्वाथे पिबेत् कृष्णां कफाधिके ।
पथ्यभोजी त्रिसप्ताहान्मुच्यते वातशोणितात् ॥ १७ ॥

गुडघृतप्रयोग: ।—

कफरक्तप्रशमनं कच्छुवीसर्पनाशनम् ।
वातरक्तप्रशमनं हृद्यं गुडघृतं स्मृतम् ॥ १८ ॥

द्वन्द्वजे चिकित्साविधि: ।—

संसर्गेषु यथोद्रेकं मिश्रं वा प्रतिकारयेत् ॥ १९ ॥

पथ्यादिप्रयोगत्रयम् ।—

सर्वेषु सगुडां पथ्यां गुडूचीक्वाथमेव वा ।
पिप्पलीवर्द्धमानं वा शीलयेत् सुसमाहित: ॥ २० ॥

गुडूचीतैलम् ।—

गुडूचीक्वाथकल्काभ्यां पचेत् तैलं तिलस्य च ।
पयसा च समं पक्वा भिषक् मन्देन वह्निना ॥ २१ ॥
हन्ति वातं तथा रक्तं कुष्ठं जयति दुस्तरम् ।
त्वग्दोषं व्रणवीसर्प-कण्डूदद्रुविनाशनम् ॥ २२ ॥

---

कटुकेत्यादि ।—कटुका कटुरोहिणी । एषां चतुर्णां प्रत्येकं द्विमाषकं कल्कीकृत्य चतुर्माषकेण मधुना गोमूत्रपलार्द्धेन च पेयम् ॥ १५।१६ ॥

कोकिलाक्षेत्यादि ।—अत्र कोकिलाक्षमूलं ग्राह्यम् ॥ १७ ॥

कफरक्तेत्यादि ।—हृद्यं गुडघृतमिति आहारं विहाय गुडघृतेनैव समभागेन सौहित्यं कर्त्तव्यमित्याहु: । कच्छ्वां दृष्टफलमेतत् ॥ १८ ॥

संसर्गेष्वित्यादि ।—संसर्गेषु द्वन्द्वजेषु । यथोद्रेकमिति एकदोषोल्वणे । मिश्रमिति समकुपिते ॥ १९—२२ ॥

नवकार्षिकः।—

त्रिफलानिम्बमञ्जिष्ठा वचा कटुकरोहिणी।
वत्सादनी दारुनिशा कषायो नवकार्षिकः॥ २३॥
वातरक्तं तथा कुष्ठं पामानं रक्तमण्डलम्।
कुष्ठं कापालिकाकुष्ठं पानादेवापकर्षति॥ २४॥
पञ्चरक्तिकमाषेण कार्य्योऽयं नवकार्षिकः।
किन्त्वेवं साधिते क्वाथे योग्या मात्राऽत्र दीयते॥ २५॥

गुडूचीघृतम्।—

गुडूचीक्वाथकल्काभ्यां सपयस्कं शृतं घृतम्।
हन्ति वातं तथा रक्तं कुष्ठं जयति दुस्तरम्॥ २६॥

शतावरीघृतम्।—

शतावरीकल्कगर्भं रसे तस्याश्चतुर्गुणे।
क्षीरतुल्यं घृतं पक्वं वातशोणितनाशनम्॥ २७॥

अमृताद्यं घृतम्।—

अमृता मधुकं द्राक्षा त्रिफला नागरं बला।
वासाऽऽरग्वधवृश्चीर-देवदारुत्रिकण्टकम्॥ २८॥
कटुका स्वरी कृष्णा काश्मर्य्यस्य फलानि च।
रास्नाक्षुरकगन्धर्व्व-वृद्धदारघनोत्पलैः॥ २९॥
कल्कैरेभिः समैः कृत्वा सर्पिःप्रस्थं विपाचयेत्।
धात्रीरसं समं दत्त्वा वारित्रिगुणसंयुतम्॥ ३०॥

---

त्रिफलेत्यादि।—नवकार्षिके दारुनिशा दारुहरिद्रा। पञ्चरक्तिकमाषेण मानेन त्रिफलादीनां नव कर्षान् गृहीत्वा अष्टगुणजलेन क्वाथः, किंवा व्यवहारिभिरेव नवकर्षैः क्वाथः कार्य्यः, परन्तु अत्र योग्यमात्रापेक्षया अधिकं यद्भवति तत् त्याज्यम्; एतदेवाह—पञ्चरक्तिकमाषेणेत्यादि। अष्टगुणजलदानार्थं वृन्देनात्र "कर्षादौ तु पलं यावत्" इत्यादि परिभाषा लिखिता॥ २३—२५॥

गुडूचीत्यादि।—गुडूचीघृते क्वाथश्चतुर्गुणः, क्षीरन्तु स्नेहसममिति व्यवहरन्ति॥२६॥

शतावरीत्यादि।—एवं शतावरीघृतम्॥ २७॥

सम्यक्सिद्धन्तु विज्ञाय भोज्ये पाने च शस्यते ।
बहुदोषान्वितं वातं रक्तेन सह मूर्च्छितम् ॥ ३१ ॥
उत्तानञ्चापि गम्भीरं त्रिकजङ्घोरुजानुजम् ।
क्रोष्टुशीर्षे महाशूले चामवाते सुदारुणे ॥ ३२ ॥
वातरोगोपसृष्टस्य वेदनाञ्चातिदुस्तराम् ।
मूत्रकृच्छ्रमुदावर्त्तं प्रमेहं विषमज्वरम् ॥ ३३ ॥
एतान् सर्वान् निहन्त्याशु वातपित्तकफोद्भवान् ।
सर्वकालोपयोगेन वर्णायुर्बलवर्द्धनम् ॥
अश्विभ्यां निर्मितं श्रेष्ठं घृतमेतदनुत्तमम् ॥ ३४ ॥

दशपाकबलातैलम् ।—

बलाकषायकल्काभ्यां तैलं क्षीरचतुर्गुणम् ।
दशपाकं भवेदेतद्वातासृग्वातपित्तजित् ॥ ३५ ॥

---

अमृतेत्यादि ।—वरी शतावरी, तया सह वर्त्तमानेति सवरी । गन्धर्वः एरण्डः । उत्पलं नीलोत्पलम् ॥ २८—३४ ॥

बलेत्यादि ।—दशपाकबलातैले बलाक्काथः चतुर्गुणः, चतुर्गुणक्षीरसाहचर्य्यात् । तैलमिदं यथोक्तमानेन द्रवेण कल्केन च दश वारान् पक्तव्यं वीर्य्योत्कर्षार्थम् । अनेन पाकेन स्नेहक्षयोऽप्यत्र नास्ति, क्षीरगतस्नेहेन न्यूनभागपूरणात् । अयञ्च बहुपाकोपदेशः प्रकृतिसमसमवेतव्याध्यभिप्रायेण ज्ञेयः, तेनान्यत्रापि प्रकृतिसमसमवेते व्याधौ तैलादिष्वनुक्तोऽपि बहुधा पाको वीर्य्योत्कर्षार्थं युज्यते एव; विकृतिविषमसमवेते तु यथोद्दिष्टमेव कार्य्यं, संयोगशक्तेरचिन्त्यत्वात्; तस्मात् विकृतिविषमसमवेते व्याधिमहिम्ना व्याधिहरमेव भेषजं दीयते इति कृत्वा यथोद्दिष्टमेव कार्य्यम्; प्रकृतिसमसमवेते तु दोषक्षयादेव व्याधिक्षय इति दोषहरमेव भेषजं दीयते इति दोषप्रत्यनीकतया अनुक्तमपि क्रियते एव; न च दोषहरमेव व्याधिहरमिति वाच्यं, वातकारिणाऽपि खदिरेण वातिककुष्ठानुपशमप्रसङ्गात्; खदिरं हि वातजनकमपि प्रभावात् वातिकमपि कुष्ठमुपशमयति, न तु वातम् । किञ्च, यदि दोषहरमेव व्याधिहरमिति स्वीक्रियते, तदा प्रतिव्याधौ बहुप्रयोगकथनमपि मुनीनां व्यर्थं स्यात्, तत्तद्दोषप्रत्यनीकभेषजगणकथनेनैवान्यथासिद्धेः; तस्मात् व्याधिहरे

धन्यं पुंसवनञ्चैव नराणां शुक्रवर्द्धनम्।
रेतोयोनिविकारघ्नमेतद्वातविकारनुत्॥ ३६॥

गुडूच्यादीनि तैलानि।—

गुडूचीक्वाथदुग्धाभ्यां तैलं द्राक्षारसेन वा।
सिद्धं मधुककाश्मर्य्य-रसैर्वा वातरक्तनुत्॥ ३७॥

खुड्डाकपद्मकतैलम्।—

पद्मकोशीरयष्ट्याह्व-रजनीक्वाथसाधितम्।
स्यात् पिष्टैः सर्जमञ्जिष्ठा-वीराकाकोलिचन्दनैः॥
खुड्डाकपद्मकमिदं तैलं वातास्रदाहनुत्॥ ३८॥

नागबलातैलम्।—

शुद्धां पचेन्नागबलातुलान्तु विस्राव्य तैलाढ़कमत्र दद्यात्।
अजापयस्तुल्यविमिश्रितन्तु नतस्य यष्टीमधुकस्य कल्कम्॥ ३९॥
पृथक् पचेत् पञ्चपलं विपक्वं तत् वातरक्तं शमयत्युदीर्णम्।
वस्तिप्रदानादिह सप्तरात्रात् पीतं दशाहात् प्रकरोत्यरोगम्॥४०॥
तुलाद्रव्ये जलद्रोणो द्रोणे द्रव्यतुला मता॥ ४१॥

पिण्डतैलम्।—

समधूच्छिष्टमञ्जिष्ठं ससर्जरससारिवम्।
पिण्डतैलं तदभ्यङ्गाद्वातरक्तरुजापहम्॥ ४२॥

---

संयोगप्रधानत्वात् यथोक्तविध्यनुसरणमेव शरणम्; दोषहरे तु वीर्य्योत्कर्षार्थमुक्तो-ऽनुक्तो वा बहुधा पाकोऽपि दोषप्रत्यनीकतया युक्त एवेत्याहुः; किन्तु बहुवित्त-व्ययायाससाध्यत्वात् वैद्यैर्नायमनुगम्यते पन्थाः इति॥ ३५।३६॥

गुडूचीत्यादि।—तैलत्रयमकल्कम्॥ ३७॥

पद्मकेत्यादि।—खुड्डाकपद्मकतैले वीरा क्षीरकाकोली। खुड्डाकपद्मकमिति—स्वल्पपद्मकसंज्ञा वैद्यव्यवहारार्था॥३८॥

शुद्धामित्यादि।—नागबलातैले नागबला "गोरक्षचाकुलिया" इति ख्यातम्। अजापयस्तैलतुल्यम्। नतं तगरपादिका॥ ३९—४१॥

समधूच्छिष्टेत्यादि।—मधूच्छिष्टं मधुसिक्थकम्। सर्जरसो धूनकः। शारिवा अनन्तमूलम्। जलञ्चात्र चतुर्गुणम्। पिण्डतैलभाषया चात्र वस्त्रापूतमेवैतत् तैलं

महापिण्डतैलम्।—

शारिवासर्जमञ्जिष्ठा-यष्टिसिक्थैः पयोऽन्वितैः।
तैलं पक्वं विमञ्जिष्ठै-रुबोर्वा वातरक्तनुत्॥ ४३॥

कैशोरको गुग्गुलुः।—

वरमहिषलोचनोदर-सन्निभवर्णस्य गुग्गुलोः प्रस्थम्।
प्रक्षिप्य तोयराशौ त्रिफलाञ्च यथोक्तपरिमाणाम्॥ ४४॥
द्वात्रिंशच्छिन्नरुहापलानि देयानि यत्नेन।
विपचेत् तदप्रमत्तो दर्व्या सङ्घट्टयन् मुहुर्यावत्॥ ४५॥

---

कर्त्तव्यमित्याहुः। वैद्यास्तु पूर्वेव व्यवहरन्ति; किन्तु चरके समधूच्छिष्टेत्यादेः पूर्वम् "आरनालाढके तैलं पादसर्जरसं शृतम्। प्रभूते खजितं तोये ज्वरदाहार्त्तिनुत् परम्॥" (चि० वातरक्त०) इत्युक्तं, तेन आरनालाढके साध्यं तैलमेव सर्जरसस्थाने मधूच्छिष्टादीनां प्रक्षेपादपि पिण्डतैलमुच्यते इति चक्रः। जतूकर्णोऽप्युक्तं—"काञ्जिक-सर्जरसशृतं खजितं बहुना जलेन दाहहितम्। सिक्थकाऽनन्तासिक्थक-सर्जरसैर्युक्तं मथितं वा॥" इति॥ ४२॥

अपरपिण्डतैलद्वयमाह, शारिवेत्यादि।—यष्टिर्यष्टिमधुकम्। पयश्चतुर्गुणम्, इह द्रवान्तराभावात्। विमञ्जिष्ठैरित्यादि तु तृतीयं पिण्डतैलम्। विमञ्जिष्ठैः मञ्जिष्ठा-रहितैः शारिवादिभिः कल्कैः रुबोरेरण्डस्य तैलं चतुर्गुणेन पयसा सह पक्वं सत् अपरं पिण्डतैलं भवतीत्यर्थः। "विमञ्जिष्ठम्" इति पाठे—क्रियाविशेषणम्॥ ४३॥

वरेत्यादि।—कैशोरगुग्गुलौ वरमहिषलोचनोदरसन्निभवर्णस्येति—लोहितवर्णस्येत्यर्थः, न तु कृष्णस्य, मत्तमहिषलोचनोदरवर्णो हि लोहित एव भवतीति। त्रिफलाञ्च यथोक्तपरिमाणामिति—प्रत्येकं प्रस्थमानाम्। छिन्नरुहा गुडूची, तस्या द्वात्रिंशत् पलानि, एवं मिलित्वा षण्णवतिपलानि क्वाथ्यानि। अत्र हि द्रवद्वैगुण्यात् उत्सर्गसिद्धं जलं दीयमानं षण्णवतिशरावपरिमितं भवति, षण्णवतिशरावैश्च षडाढका भवन्ति। एतत् सर्वमभिधाय वक्ष्यति—"प्रत्येकं त्रिफलाप्रस्थः" इत्यादि। अन्ये त्वाहुः,—त्रिफलाञ्च यथोक्तपरिमाणामिति—मिलित्वा प्रस्थमानां, समुदायप्रधानत्वान्निर्देशस्य, तेन गुग्गुलुप्रभृतीनि द्रव्याणि मिलित्वा चतुःषष्टिपलानि भवन्ति, तत्र चोत्सर्गसिद्धं जलं चतुःषष्टिशरावमेव, चतुःषष्टिशरावैश्च द्रोणो भवति, तेन तोयराशिशब्देनात्र द्रोण एव बोध्य इति। अत्र गुग्गुलुः पुटके बद्धा अपरैः क्वाथ्यैः सह तोयराशौ क्वथनीयः,

अर्द्धक्षयितं तोयं जातं ज्वलनस्य सम्पर्कात्।
अवतार्य्य वस्त्रपूतं पुनरपि सम्पादयेत् पात्रे ॥ ४६ ॥
सान्द्रीभूते तस्मिन्नवतार्य्य हिमोपलप्रख्ये।
त्रिफलाचूर्णार्द्धपलं त्रिकटोश्चूर्णं षड़क्षपरिमाणम् ॥ ४७ ॥
क्रिमिरिपुचूर्णार्द्धपलं कर्षं कर्षं त्रिवृद्दन्त्योः।
पलमेकञ्च गुड़ूच्या दत्त्वा सम्मूर्च्छ्य यत्नेन ॥ ४८ ॥
उपयुज्य चानुपानं यूषं तोयं सुगन्धि सलिलेन।
इच्छाहारविहारी भेषजमुपयुज्य सर्व्वकालमिदम् ॥ ४९ ॥
तनुरोधि वातशोणितमेकजमथ द्वन्द्वजं चिरोत्थञ्च।
जयति स्रुतं परिशुष्कं स्फुटितञ्चाजानुजञ्चापि ॥ ५० ॥
व्रणकासकुष्ठगुल्मं श्वयथूदरपाण्डुमेहांश्च।
मन्दाग्निञ्च विबन्धं प्रमेहपिड़काश्च नाशयत्याशु ॥ ५१ ॥
सततं निषेव्यमाणः कालवशाद्धन्ति सर्व्वगदान्।
अभिभूय जरादोषं याति हि कैशोरकं रूपम् ॥ ५२ ॥
प्रत्येकं त्रिफलाप्रस्थो जलं तत्र षड़ाढ़कम्।
गुड़वत् गुग्गुलोः पाकः सबन्धस्तु विशेषतः ॥ ५३ ॥

अमृतागुग्गुलुः।—

प्रस्थमेकं गुड़ूच्यास्तु अर्द्धप्रस्थञ्च गुग्गुलोः।

पश्चात् गुग्गुलुं विहाय क्वाथ्यं त्यक्त्वा सिद्धे तदुष्णक्वाथे पुनस्तं गुग्गुलुं सम्मिश्य पाचनीयं यावत् घनीभवति, दर्व्वीप्रलेपेऽवतार्य्य त्रिफलादिचूर्णं प्रक्षिपेदिति। यत्तु गुग्गुलुं विहाय क्वाथं कृत्वा पश्चात् सिद्धे कदुष्णक्वाथे गुग्गुलुं गोलयन्ति, तन्न युक्तं, गुग्गुलोः क्वाथ्यत्वेनोक्तत्वात्, एवं वक्ष्यमाणामृताख्यगुग्गुलावपि द्रष्टव्यम्। हिमोपलप्रख्ये इति—हिमशिलावत् शीते। अत्र चेत्यमेव शक्त्युत्कर्षः वचनादुन्नीयते; अन्यत्र तु कोष्णे एव चूर्णानां दानं दृश्यते। अत्र त्रिफलाचूर्णार्द्धपलं मिलित्वैव युज्यते, मानप्रधानत्वात् निर्द्देशस्य, प्रत्येकन्तु व्यवहरन्ति। त्रिकटोश्चूर्णं षड़क्षपरिमाणमिति मिलित्वा। क्रिमिरिपुर्विड़ङ्गः। यूषं तोयमित्यादौ वा-शब्दो बोध्यः। कैशोरकं रूपमिति—किशोरो यौवनोन्मुखोऽवस्थावकः ॥ ४४—५३ ॥

प्रत्येकं त्रिफलायाश्च तत्प्रमाणं विनिर्दिशेत् ॥ ५४ ॥
सर्वमेकत्र सङ्क्षुद्य साधयेत् त्वम्भसेऽम्भसि ।
पादशेषं परिस्राव्य पुनरग्नावधिश्रयेत् ॥ ५५ ॥
तावत् पचेत् कषायं तं यावत् सान्द्रत्वमागतम् ।
दन्तीव्योषविड़ङ्गानि गुड़ूचीत्रिफलात्वचः ॥ ५६ ॥
ततश्चार्द्धपलं पूतं गृह्णीयाच्च प्रति प्रति ।
कर्षन्तु त्रिवृतायास्तु सर्वमेकत्र कारयेत् ॥ ५७ ॥
तस्मिन् सुसिद्धं विज्ञाय कवोष्णे प्रक्षिपेत् बुधः ।
ततश्चाग्निबलं ज्ञात्वा तस्य मात्रां प्रदापयेत् ॥ ५८ ॥
वातरक्तं तथा कुष्ठं गुदजान्यग्निसादनम् ।
दुष्टव्रणप्रमेहांश्च सामवातं भगन्दरम् ॥ ५९ ॥
नाड्याढ्यवातश्वयथून् सर्वानेतान् व्यपोहति ।
अश्विभ्यां निर्मितः पूर्वममृताख्यो हि गुग्गुलुः ॥
अर्द्धप्रस्थं त्रिफलायाः प्रत्येकमिह गृह्यते ॥ ६० ॥

पुनर्नवागुग्गुलुः ।—

अमृतायाश्च द्विप्रस्थं प्रस्थमेकञ्च गुग्गुलोः ।
प्रत्येकं त्रिफलाप्रस्थं वर्षाभूप्रस्थमेव च ॥ ६१ ॥
सर्वमेतच्च सङ्क्षुद्य क्वाथयेन्नल्वणेऽम्भसि ।
पुनः पचेत् पादशेषं यावत् सान्द्रत्वमागतम् ॥ ६२ ॥
दन्तीचित्रकमूलानां कणाविश्वफलात्रिकम् ।
गुड़ूचीत्वग्विड़ङ्गानां प्रत्येकार्द्धपलोन्मितम् ॥ ६३ ॥
त्रिवृताकर्षमेकन्तु सर्वमेकत्र चूर्णयेत् ।

---

प्रस्थमित्यादि ।—अमृताख्यगुग्गुलौ तत्प्रमाणमिति—प्रस्थार्द्धम् । व्योषस्यार्द्धपलमिति प्रत्येकम् । त्रिफलात्वच इति—निरस्थित्रिफलायाः प्रत्येकमर्द्धपलम् । तत्प्रमाणमिति पदस्यार्थमाह—"अर्द्धप्रस्थं त्रिफलायाः" इत्यादि ॥ ५४—६० ॥

सिद्धे चोष्णे क्षिपेत् तत्र अमृतागुग्गुलोः परम् ॥ ६४ ॥
यथावह्निबलं खादेदम्लपित्ती विशेषतः ।
वातरक्तं तथा कुष्ठं गुदजान्यग्निसादनम् ॥ ६५ ॥
दुष्टव्रणप्रमेहांश्च सामवातं भगन्दरम् ।
नाड्याढ्यवातं श्वयथून् हन्यात् सर्वामयानयम् ॥
अश्विभ्यां निर्मितो ह्येषोऽमृताख्यो गुग्गुलुः पुरा ॥ ६६ ॥

योगसारामृतः ।—

शतावरी नागबला वृद्धदारकमुञ्चटा ।
पुनर्नवाऽमृता कृष्णा वाजिगन्धा त्रिकण्टकम् ॥ ६७ ॥
पृथक् दशपलान्येषां सूक्ष्मचूर्णानि कारयेत् ।
तदर्द्धशर्करायुक्तं चूर्णं सम्मर्दयेत् बुधः ॥ ६८ ॥
स्थापयेत् सुदृढे भाण्डे मध्वर्द्धाढकसंयुतम् ।
घृतप्रस्थेन चालोड्य त्रिसुगन्धिपलेन तु ॥ ६९ ॥
तं खादेदिष्टचेष्टान्नो यथावह्निबलं नरः ।
वातरक्तं क्षयं कुष्ठं कार्श्यं पित्तास्रसम्भवम् ॥ ७० ॥
वातपित्तकफोत्थांश्च रोगानन्यांश्च तद्विधान् ।
हत्वा करोति पुरुषं वलीपलितवर्जितम् ॥
योगसारामृतो नाम लक्ष्मीकान्तिविवर्द्धनः ॥ ७१ ॥

अपथ्यनिर्देशः ।—

दिवास्वप्नाग्निसन्तापं व्यायामं मैथुनं तथा ।
कटूष्णागुर्वभिष्यन्दि-लवणाम्लानि वर्जयेत् ॥ ७२ ॥

---

अमृतायाश्चेत्यादि ।—पुनर्नवागुग्गुलौ त्वक् गुडत्वक् । अमृतागुग्गुलोः परमिति—अनन्तरं, मात्रामिति शेषः, तेन परमित्यनन्तरममृतागुग्गुलोर्मात्रां यथावह्निबलं खादेदित्यर्थः । अमृताख्यो गुग्गुलुः पुरेति—अमृतानिर्मितत्वादमृताख्यः । यद्यप्यय-ममृतायोगादमृताख्यगुग्गुलुस्तथाऽपि पुनर्नवायोगात् पुनर्नवागुग्गुलुरिति नामान्तरं, पूर्वोक्तामृताख्यगुग्गुलोर्व्यवच्छेदार्थं वा ॥ ६१—६६ ॥

बृहद्गुडूचीतैलम्।—

तुलां पचेज्जलद्रोणे गुडूच्याः पादशेषितम्।
क्षीरद्रोणञ्च ताभ्यान्तु पचेत् तैलाढ़कं शनैः॥ ७३॥
कल्कैर्मधुकमञ्जिष्ठा-जीवनीयगणैस्तथा।
कुष्ठैलाऽगुरुमृद्वीका मांसी व्याघ्रनखं नखी॥ ७४॥
हरेणु सारिवणी व्योषं शताह्वा भृङ्गशारिवे।
त्वक्पत्रे वचविक्रान्ता स्थिरा चामलकी तथा॥ ७५॥
नतं केशरह्रीवेर-पद्मकोत्पलचन्दनैः।
सिद्धं कर्षसमैर्भागैः पानाभ्यङ्गानुवासने॥ ७६॥
परं वातास्रजान् हन्ति सर्वजानन्तरस्थितान्।
धन्यं पुंसवनं स्त्रीणां गर्भदं वातपित्तनुत्॥ ७७॥
स्वेदकण्डूरुजापामा-शिरःकम्पार्दितामयान्।
हन्यात् व्रणकृतान् दोषान् गुडूचीतैलमुत्तमम्॥ ७८॥

इति वातरक्त चिकित्सा।

---

## अथोरुस्तम्भ-चिकित्सा।

सामान्यचिकित्साविधिः।—

श्लेष्मणः क्षपणं यत् स्यान्न च मारुतकोपनम्।
तत् सर्वं सर्वदा कार्य्यमूरुस्तम्भस्य भेषजम्॥ १॥
न तस्य स्नेहनं कार्य्यं न वस्तिर्न विरेचनम्।

---

शतावरीत्यादि।—योगसारामृते तदर्द्धशर्करायुक्तमिति—समुदितचूर्णार्द्धमाना शर्करा। त्रिसुगन्धिपत्रेणेति प्रत्येकम्॥ ६७—७८॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां वातरक्त-चिकित्सा-विवृतिः।

---

आवृतवातजन्यत्वसामान्याद्वातरक्तानन्तरमूरुस्तम्भचिकित्सामाह, श्लेष्मण इत्यादि।—एवंविधञ्च भेषजमरिष्टादि। ऊरुस्तम्भे स्नेहनादिनिषेधमाह, न तस्येत्यादि।—

सर्वो रूक्षः क्रमः कार्य्यस्तत्रादौ कफनाशनः॥
पश्चाद्वातविनाशाय कृत्स्नः कार्य्यः क्रियाक्रमः॥ २॥

शिलाजत्वादियोगचतुष्टयम्।—

शिलाजतु गुग्गुलुं वा पिप्पलीमथ नागरम्।
ऊरुस्तम्भे पिबेन्मूत्रैर्दशमूलीरसेन वा॥ ३॥

भल्लातकादिः।—

भल्लातकामृताशुण्ठी-दारुपथ्यापुनर्नवाः।
पञ्चमूलीद्वयोन्मिश्रा ऊरुस्तम्भनिवर्हणाः॥ ४॥

पिप्पल्यादिः।—

पिप्पलीपिप्पलीमूल-भल्लातक्काथ एव वा।
कल्को वा समधुर्देय ऊरुस्तम्भनिवर्हणः॥ ५॥

त्रिफलादिचूर्णं गुग्गुलुप्रयोगश्च।—

त्रिफलाचव्यकटुकं ग्रन्थिकं मधुना लिहेत्।
ऊरुस्तम्भविनाशाय पुरं मूत्रेण वा पिबेत्॥ ६॥

त्रिफलादिचूर्णं षड्धरणचूर्णप्रयोगोपदेशश्च।—

लिह्याद्वा त्रिफलाचूर्णं क्षौद्रेण कटुकायुतम्।

---

स्नेहनमिति पानाभ्यङ्गाभ्याम्; किंवा स्नेहनमिति वस्तिकर्मविशेषणं, तेनानुवासनमित्यर्थः। विरेचनशब्देनात्र वमनमपि बोध्यम्, ऊरुस्तम्भे वमनस्यापि निषिद्धत्वात्॥ १।२॥

शिलाजत्वित्यादि।—शिलाजतु शोधितमेवोपयोज्यम्। प्रत्येकं शिलाजत्वादीनां गोमूत्रेण दशमूलीक्काथेन वा पानम्॥ ३॥

भल्लातकेत्यादि।—भल्लातकादिभिर्दशमूलान्तैर्मिलिता क्काथ इत्याहुः॥ ४॥

पिप्पलीत्यादि।—पिप्पल्यादीनां त्रयाणां क्काथो वा देयः, कल्क इति—चूर्णं वा मधुसहितम् अवलेहरूपतया देयं, किंवा पानयोग्यं मधु दत्त्वा पेयम्॥ ५॥

त्रिफेत्यादि।—कटुकं त्रिकटुकम्। पुरं मूत्रेण वा पिबेदिति, यद्यप्ययं योगः "शिलाजतु गुग्गुलुं वा" इत्यादिना पूर्वमेवोक्तस्तथाऽपि सम्पूर्णश्लोकानुरोधात् पुनरप्यत्र लिखितः॥ ६॥

सुखाम्बुना पिबेद्वाऽपि चूर्णं षड्धरणं नरः॥ ७॥

पिप्पलीवर्द्धमानगम्भीरारिष्टप्रयोगोपदेशः।—

पिप्पलीवर्द्धमानं वा माक्षिकेण गुड़ेन वा।

ऊरुस्तम्भे प्रशंसन्ति गम्भीरारिष्टमेव वा॥ ८॥

चव्यादिचूर्णं करञ्जादिलेपश्च।—

चव्याभयाऽग्निदारूणां समधुः स्यादुरुग्रहे।

कल्को दिहेच्च मूलाद्यैः करञ्जफलसर्षपैः॥ ९॥

क्षौद्राद्युद्वर्त्तनम्।—

क्षौद्रसर्षपवल्मीक मृत्तिकासंयुतं भिषक्।

गाढ़मुत्सादनं कुर्य्यादूरुस्तम्भे प्रलेपनम्॥ १०॥

व्यायामस्य कर्त्तव्यतानिर्देशः।—

कफक्षयार्थं व्यायामेष्वेनं शक्येषु योजयेत्।

स्थानान्याक्रामयेत् कल्यं प्रतिस्रोतो नदीं तरेत्॥ ११॥

---

लिह्यादित्यादि।—कटुकायुतमिति—त्रिकटुयुतं कटुरोहिणीयुतं वा। षड्धरणं वातव्याधावुक्तम्। यद्यपि षड्धरणं पिबेदित्येतावतैव सुखाम्बुना इति लभ्यते, उष्णोदकेनैव षड्धरणपानस्य पूर्वमुक्तत्वात्, तथाऽप्यनन्तरोक्तक्षौद्रेण पानाशङ्कानिरासार्थमेतदुक्तं भवति॥ ७॥

पिप्पलीवर्द्धमानं वेति।—पिप्पलीवर्द्धमाननियमक्रमेण पिप्पलीं गृहीत्वा चूर्णयित्वा मधुना गुड़ेन वा सहोपयुञ्जीत। गम्भीरारिष्टमेव वेति—गम्भीरः शमठः, स तु स्थलजो ग्राह्यः, तीक्ष्णत्वात्, तस्यारिष्टं सन्धानम्। तच्च गम्भीरपलशतं जलद्रोणेन पक्त्वा पादावशेषे तस्मिन् गुड़तुलामावाप्य धातकीलोध्रलिप्ते कुम्भे सन्धानीयम्, ईषदम्लं यदा भवति तदोपयोज्यम्। किंवा अरिष्टो निम्बः, शमठनिम्बयोश्चूर्णमनन्तरोक्तेन मधुना गुड़ेन वा सहोपयोज्यम्॥ ८॥

चव्येत्यादि।—समधुः कल्कः "पेयः" इति योज्यम्। दिहेदित्यादि सर्षपैरित्यन्त एको योगः॥ ९॥

क्षौद्रेत्यादि।—उत्सादनमुद्वर्त्तनम्॥ १०॥

कफक्षयार्थमित्यादि।—स्थानानीति—उच्चप्रदेशान्। "स्थलानि" इति पाठे—स एवार्थः। कल्यमिति—प्रातः, नीरुजमित्यन्ये॥ ११॥

अष्टकट्वरं तैलम्।—

पलाभ्यां पिप्पलीमूल-नागराद्दष्टकट्वरम्।
तैलप्रस्थः समो दध्ना गृध्रस्यूरुग्रहापहः॥
अष्टकट्वरतैलेऽस्मिंस्तैलं सार्षपमिष्यते॥ १२॥

कुष्ठाद्यं तैलम्।—

कुष्ठश्रीवेष्टकोदीच्यं सरलं दारु केशरम्।
अजगन्धाऽश्वगन्धा च तैलं तैः सार्षपं पचेत्॥
सक्षौद्रं मात्रया तस्मादूरुस्तम्भार्दितः पिबेत्॥ १३॥

अधिकारान्तरोक्तौषधप्रयोगोपदेशः।—

सैन्धवाद्यं हितं तैलं वर्षाभ्वमृतगुग्गुलू॥ १४॥

इत्यूरुस्तम्भ-चिकित्सा।

---

## अथामवात-चिकित्सा।

क्रियासूत्रम्।—

लङ्घनं स्वेदनं तिक्तं दीपनानि कटूनि च।

---

पलाभ्यामित्यादि।—अष्टकट्वरतैले पलाभ्यां पिप्पलीमूलनागरादिति—पिप्पलीमूलनागरयोः मिलिता पलद्वयं, मानप्रधानत्वात् निर्देशस्य। चक्रोऽपि पिप्पल्यादिसमुदायात् पलाभ्यामित्याह। वृन्दटिप्पन्यामपि पिप्पलीमूलनागरयोः प्रत्येकमेकपलमित्युक्तम्। निश्चलस्तु प्रत्येकं पलद्वयम्, अन्यथा कल्कस्यात्यन्तमल्पीयस्त्वं स्यादित्याह। अष्टकट्वरमिति—अष्टगुणं कट्वरं समारदधितक्रं यत॥ १२॥

कुष्ठेत्यादि।—श्रीवेष्टकः नवनीतखोटिः। अजगन्धा वेतवमाली। चतुर्गुणजलेन पाकः। सक्षौद्रमिति प्रक्षेपविधया। अयञ्च स्नेहविधिरवस्थाविशेषे बोध्यः; उक्तं हि चरके—"रूक्षाणां वातकोपश्चेन्निद्रानाशार्त्तिपूर्वकः। स्नेहस्वेदक्रमस्तत्र कार्य्यो वातामयापहः॥" (चि० ऊरुस्त०) इति॥ १३॥

सैन्धवाद्यमित्यादि।—सैन्धवाद्यं तैलं वातव्याधावुक्तम्। पुनर्नवागुग्गुलुरमृतागुग्गुलुश्च वातरक्ते चोक्तः॥ १४॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायाम् ऊरुस्तम्भ-चिकित्सा-विवृतिः।

---

आमवातजन्यत्वसामान्यादूरुस्तम्भानन्तरमामवातचिकित्सामाह, लङ्घनमित्यादि।—

विरेचनं स्नेहपानं वस्तयश्चाममारुते ॥
सैन्धवाद्येनानुवास्य क्षारवस्तिः प्रशस्यते ॥ १ ॥

अन्नादौ पञ्चकोलप्रयोगस्य बालुकास्वेदस्य चोपदेशः।—

आमवाते पञ्चकोल-सिद्धं पानान्नमिष्यते।
रूक्षः स्वेदः प्रकर्त्तव्यो बालुकापुटकैस्तथा ॥ २ ॥

शट्यादिः।—

शटी शुण्ठ्यभया चोग्रा देवाह्वाऽतिविषाऽमृता।
कषायमामवातस्य पाचनं रूक्षभोजनम् ॥ ३ ॥

शट्यादिकल्कः।—

शटीविश्वौषधीकल्कं वर्षाभूक्वाथसंयुतम्।
सप्तरात्रं पिवेज्जन्तुरामवातविनाशनम् ॥ ४ ॥

रास्नादशमूलकम्।—

दशमूलामृतैरण्ड-रास्नानागरदारुभिः।
क्वाथो रुवूकतैलेन सामं हन्त्यनिलं गुरुम् ॥ ५ ॥

दशमूलीशुण्ठीक्वाथौ।—

दशमूलीकषायेण पिबेद्वा नागराम्भसा।
कुक्षिवस्तिकटीशूले तैलमेरण्डसम्भवम् ॥ ६ ॥

---

विरेचनन्तु महेश्वरपत्रिकायां विशेषेणोक्तम्; उक्तं हि—"बिल्वसैन्धवशुण्ठीनामारनालेन चूर्णितम्। पीत्वा विरेचयेज्जन्तुरामवातहरं परम् ॥ सप्ताहञ्च बिल्वचूर्णं बिल्वक्वाथेन भावितम्। काञ्जिकेन तु तत् पीतं रेचनञ्चामवातिनाम् ॥" इति, तत् सर्वमत्र बोध्यम्। स्नेहपानमिति लङ्घनादिभिरामक्षये जाते तदनन्तरं रूक्षस्य वायोः प्रशमनार्थं स्नेहपानं, किंवा स्नेहशब्देनात्र विरेचकतया एरण्डतैलं बोध्यम्। वस्तय इति—शोधनवस्तयः ॥ १ ॥

आमवाते इत्यादि।—रूक्षः स्वेद इति रूक्षस्वेदः तन्त्रान्तरोक्तः, यथा—"कार्पासास्थिकुलत्थिकातिलयवैरेरण्डमूलातसी--वर्षाभूशणबीजशिग्रुकाञ्जिकयुतैरेकीकृतैर्वा पृथक्। स्वेदः स्यादथ कूर्परोदरशिरःस्फिक्पाणिपादाङ्गुलि-ग्रीवाजान्वकटीरुजो विजयते सामाः समस्ता रुजः ॥" इति ॥ २ ॥

शट्यादि।—उग्रा वचा ॥ ३।४ ॥

दशमूलेत्यादि।—रुवूकतैलेनेति—शोधनार्थम् एरण्डतैलस्य कर्षः समधिको वा; शमनार्थं पुनः षड्ष्टौ माषका इति ॥ ५।६ ॥

रास्नापञ्चकम्।—

रास्नां गुडूचीमेरण्डं देवदारु महौषधम्।

पिबेत् सार्वाङ्गिके वाते सामे सन्ध्यस्थिमज्जगे ॥ ७ ॥

रास्नासप्तकम्।—

रास्नाऽमृताऽऽरग्वधदेवदारु-त्रिकण्टकैरण्डपुनर्नवानाम्।

क्वाथं पिबेन्नागरचूर्णमिश्रं जङ्घोरुपृष्ठत्रिकपार्श्वशूली ॥८॥

शुण्ठ्यादिः।—

शुण्ठीगोक्षुरकक्वाथः प्रातः प्रातर्निषेवितः।

सामवाते कटीशूले पाचनो रुक्प्रणाशनः ॥ ९ ॥

दशमूलीक्वाथः अभयादिचूर्णं गुडूचीक्वाथश्च।—

आमवाते कणायुक्तं दशमूलीजलं पिबेत्।

खादेद्वाऽप्यभयाविश्वं गुडूचीं नागरेण वा ॥ १० ॥

हरीतकीप्रयोगः।—

एरण्डतैलयुक्तां हरीतकीं भक्षयेन्नरो विधिवत्।

आमानिलार्त्तियुक्तो गृध्रसिवृद्ध्यर्दितो नित्यम् ॥ ११ ॥

शुण्ठीप्रयोगः।—

कर्षं नागरचूर्णस्य काञ्जिकेन पिबेत् सदा।

---

रास्नामित्यादि।—रास्नापञ्चके पिबेदिति क्वाथरूपतया। अत्र योगे तथा वक्ष्यमाणरास्नासप्तकेऽपि यदि विरेकश्चिकीर्षितो भवति, तदा एरण्डतैलं प्रक्षेप्यमिति वदन्ति ॥ ७ ॥

रास्नासप्तके रास्नेत्यादि।—स्पष्टम् ॥ ८ ॥

शुण्ठीगोक्षुरकक्वाथ इत्यादि।—अत्र शुण्ठ्या भागमेकं, गोक्षुरस्य भागद्वयं गृह्णन्ति, कोष्ठभेदे कर्त्तव्ये यवक्षारमप्यत्र प्रक्षिपन्ति ॥ ९ ॥

आमवाते इत्यादि।—अभयाविश्वमिति—हरीतकीचूर्णं मा २, शुण्ठीचूर्णं मा २, पिष्टा खाद्यं, तप्तजलमनुपेयम्। गुडूचीं नागरेण वा इति क्वाथेन व्यवहारः। केचित्तु पिष्टा उष्णोदकेन भक्षयन्ति ॥ १० ॥

एरण्डेत्यादि।—हरीतकीचूर्णस्यैरण्डतैलेनावलेहः ॥ ११ ॥

आमवातप्रशमनं कफवातहरं परम् ॥ १२ ॥

पञ्चकोलप्रयोगः ।—

पञ्चकोलकचूर्णञ्च पिबेदुष्णेन वारिणा ।
मन्दाग्निशूलगुल्माम-कफारोचकनाशनम् ॥ १३ ॥

अमृतादिचूर्णम् ।—

अमृतानागरगोक्षुरमुण्डितिकावरुणकैः कृतं चूर्णम् ।
मस्त्वारनालपीतञ्चामानिलनाशनं ख्यातम् ॥ १४ ॥

वैश्वानरं चूर्णम् ।—

माणिमन्थस्य द्वौ भागौ यमान्यास्तद्वदेव तु ।
भागास्त्रयोऽजमोदाया नागराद्भागपञ्चकम् ॥ १५ ॥
दश द्वौ च हरीतक्याः श्लक्ष्णचूर्णीकृताः शुभाः ।
मस्त्वारनालतक्रेण सर्पिषोष्णोदकेन वा ॥ १६ ॥
पीतं जयत्यामवातं गुल्मं हृद्वस्तिजान् गदान् ।
प्लीहानं ग्रन्थिशूलादीनानाहार्शांसि पीनसम् ॥ १७ ॥
विबन्धं जाठरान् रोगांस्तथा वै हस्तपादजान् ।
वातानुलोमनमिदं चूर्णं वैश्वानरं स्मृतम् ॥ १८ ॥

अलम्बुषाद्यं चूर्णम् ।—

अलम्बुषां गोक्षुरकं गुडूचीं वृद्धदारकम् ।
पिप्पलीं त्रिवृतां मुस्तं वरुणं सपुनर्नवम् ॥ १९ ॥

---

कर्षं नागरचूर्णस्येत्यादि ।—शुण्ठीचूर्णलवणयुक्तस्य काञ्जिकस्य भक्तेन सह प्रयोगः प्रचरति ॥ १२ ॥

पञ्चकोलकेत्यादि ।—समभागपञ्चकोलकचूर्णं माषकाष्टकमुष्णजलेन पेयम् ॥ १३ ॥

अमृतेत्यादि ।—वरुणं वरुणमूलम् ॥ १४ ॥

वैश्वानरचूर्णमाह, माणिमन्थस्येत्यादि ।—माणिमन्थं सैन्धवम् । यमान्यास्तद्वदिति—भागद्वयम् । भागास्त्रयोऽजमोदाया इति—अजमोदा यमानी, तेन पञ्च भागा यमान्या एव । एके यमानीस्थाने यवक्षारं पठन्ति । केचिद्वनयमानीं क्षुपस्य यमान्या भागद्वयं प्रयच्छन्ति (?) ; अन्ये त्वजमोदायां वनयमानीं गृह्णन्ति, किन्त्वन्तःपरिमार्जने यमान्येव युक्ता । दश द्वौ चेति—द्वादश भागा इत्यर्थः ॥ १५—१८ ॥

त्रिफलां नागरञ्चैव श्लक्ष्णचूर्णानि कारयेत्।
मस्त्वारनालतक्रेण पयोमांसरसेन वा॥
आमवातं निहन्त्याशु श्वयथुं सन्धिसंस्थितम्॥ २०॥

भागोत्तरम् अलम्बुषाद्यं चूर्णम्।—

अलम्बुषागोक्षुरक-त्रिफलानागरामृता:।
यथोत्तरं भागवृद्धया श्यामाचूर्णञ्च तत्समम्॥ २१॥
पिबेन्मस्तुसुरातक्र-काञ्जिकोष्णोदकेन वा।
पीतं जयत्यामवातं सशोथं वातशोणितम्॥ २२॥
त्रिकजानूरुसन्धिस्थं ज्वरारोचकनाशनम्।
पथ्याऽक्षधात्र्यास्त्रिफला भागवृद्धावयं क्रम:॥ २३॥

पथ्यादिचूर्णम्।—

पथ्याविश्वयमानीभिस्तुल्याभिश्चूर्णितं पिबेत्।
तक्रेणोष्णोदकेनापि अथवा काञ्जिकेन च॥
आमवातं निहन्त्याशु शोथं मन्दाग्नितामपि॥ २४॥

शतपुष्पाद्यं चूर्णम्।—

शतपुष्पा विडङ्गञ्च सैन्धवं मरिचं समम्।
चूर्णमुष्णाम्बुना पीतमग्निसन्दीपनं परम्॥ २५॥

भागोत्तरं हिङ्ग्वाद्यं चूर्णम्।—

हिङ्गु चव्यं विड़ं शुण्ठी कृष्णाजाजी सपौष्करम्।

---

अलम्बुषामित्यादि।—अलम्बुषा मुण्डितिका। वृद्धदारकं वृद्धदारकमूलम्। वरुणं वरुणमूलम्॥ १९।२०॥

अलम्बुषेत्यादि।—अलम्बुषाद्यचूर्णं यथोत्तरं भागवृद्धेति—यत् यत् परं तत्तदेक-भागवर्द्धितमित्यर्थ:। श्यामा वृद्धदारक:। तत्सममिति—मिलितचूर्णसमम्। त्रिफलाया येन क्रमेण भागवृद्धिं कुर्य्यात् तं क्रममाह, पथ्याऽक्षधात्र्य इत्यादि। अयमेव क्रमो वृद्धवैद्यव्यवहारसिद्धो वृन्देनापि लिखित:॥ २१—२३॥

पथ्येत्यादि।—चूर्णितमिति भावे क्त:, तेन पथ्यादिभि: कृतं चूर्णं पिबेदित्यर्थ:॥ २४॥

शतपुष्पेत्यादि।—स्पष्टम्॥ २५॥

हिङ्गु चव्यमित्यादि।—कृष्णा पिप्पली। अजाजी सितजीरकमिति निश्चल:,

भागोत्तरमिदं चूर्णं पीतं वातामजिद्भवेत् ॥ २६ ॥

योगराजगुग्गुलुः।—

चित्रकं पिप्पलीमूलं यमानी कारवी तथा।
विडङ्गान्यजमोदा च जीरकं सुरदारु च ॥ २७ ॥
चव्यैला सैन्धवं कुष्ठं रास्नागोक्षुरधान्यकम्।
त्रिफलां मुस्तकं व्योषं त्वगुशीरं यवाग्रजम् ॥ २८ ॥
तालीशपत्रं पत्रञ्च श्लक्ष्णचूर्णानि कारयेत्।
यावन्त्येतानि चूर्णानि तावन्मात्रन्तु गुग्गुलुम् ॥ २९ ॥
सम्मर्द्य सर्पिषा गाढं स्निग्धे भाण्डे निधापयेत्।
ततो मात्रां प्रयुञ्जीत यथेष्टाहारवानपि ॥ ३० ॥
योगराज इति ख्यातो योगोऽयममृतोपमः।
आमवाताढ्यवातादीन् क्रिमिदुष्टव्रणानपि ॥ ३१ ॥
प्लीहगुल्मोदरानाह-दुर्नामानि विनाशयेत्।
अग्निञ्च कुरुते दीप्तं तेजोवृद्धिं बलं तथा ॥
वातरोगान् जयत्येष सन्धिमज्जगतानपि ॥ ३२ ॥

सिंहनादगुग्गुलुः।—

पलत्रयं कषायस्य त्रिफलायाः सुचूर्णितम्।
सौगन्धिकपलञ्चैकं कौशिकस्य पलं तथा ॥ ३३ ॥

---

कृष्णाजाजी कृष्णजीरकमिति वृन्दटिप्पनी। भागोत्तरमिति—यथोत्तरम् एकभाग-परिवृद्धम्। पीतमिति उष्णाम्बुना ॥ २६ ॥

चित्रकमित्यादि।—योगराजगुग्गुलौ कारवी कृष्णजीरकम्। अजमोदा यमानी, अल्पपरिमार्जनत्वात्, एवमन्यत्रापि। सम्मर्द्य सर्पिषा गाढमिति—प्रथमं तावत् घृतं दत्त्वा केवलो गुग्गुलुः पेषणीयः, पश्चादल्पमल्पं चूर्णं दत्त्वा पेषणीयः, सम्यक् चूर्णमिलने तु स्निग्धभाण्डे निधेयः। मर्दनार्थं घृतमानञ्चात्र यावता चूर्णं मिलितं भवति; अन्ये तु—गुग्गुलोरर्द्धमानमित्याहुः। ततो मात्रां प्रयुञ्जीत इति—अष्टमाषकरूपाम्। उष्णाम्बुकाञ्जिकाद्यनुपेयमित्याहुः ॥ २७—३२ ॥

पलत्रयमित्यादि।—त्रिफलायाः क्वाथस्य पलत्रयं प्रत्येकम्। सुचूर्णितमिति

कुड़वं चित्रतैलस्य सर्वमादाय यत्नतः।
पाचयेत् पाकविद्वैद्यः पात्रे लौहमये दृढ़े ॥ ३४ ॥
हन्ति वातं तथा पित्तं श्लेष्माणं खञ्जपङ्गुताम्।
श्वासं सुदुर्जयं हन्ति कासं पञ्चविधं तथा ॥ ३५ ॥
कुष्ठानि वातरक्तानि गुल्मशूलोदराणि च।
आमवातं जयेदेतदपि वैद्यविवर्जितम् ॥ ३६ ॥
एतदभ्यासयोगेन जरापलितनाशनम्।
सर्पिस्तैलरसोपेतमश्नीयाच्छालिषष्टिकम् ॥ ३७ ॥
सिंहनाद इति ख्यातो रोगवारणदर्पहा।
वह्निवृद्धिकरः पुंसां भाषितो दण्डपाणिना ॥ ३८ ॥

बृहत् सिंहनादगुग्गुलुः।—

पिष्टितां गुग्गुलोर्माणीं कटुतैलपलाष्टके।
प्रत्येकं त्रिफलाप्रस्थो सार्द्धद्रोणे जले पचेत् ॥ ३९ ॥
पादशेषे च पूतञ्च पुनरग्नावधिश्रयेत्।
त्रिकटु त्रिफला मुस्तं विड़ङ्गामरदारु च ॥ ४० ॥
गुड़ूच्यग्नित्रिवृद्दन्ती-चवीशूरणमानकम्।
पारदं गन्धकञ्चैव प्रत्येकं शुक्तिसम्मितम् ॥ ४१ ॥
सहस्रं कानकफलं सिद्धे सञ्चूर्ण्य निक्षिपेत्।

---

सौगन्धिकपलमित्यनेन सम्बध्यते। सौगन्धिकमिति—गन्धकं, तच्च शोधितं ग्राह्यम्। कौशिकस्येति—गुग्गुलोः। चित्रतैलमिति—एरण्डतैलम्। कुड़वमिति—अष्टौ पलानि। अन्ये तु—तैलस्य बहुलत्वेन पाको दुर्ग्रहः स्यात् इति मत्वा चक्रतवैगुण्यमेवात्र कुड़वं गृह्णन्ति। त्रिफला प्रत्येकं पल १, कर्ष २; क्वाथार्थं जल शराव ४, पल ४; शेष श १, पल १; शोधितगन्धकचूर्णं पल १, गुग्गुलु पल १, एरण्डतैल पल ८, एरण्डतैलं दत्त्वा गन्धकचूर्णेन सह गुग्गुलुः पेषणीयः, तदनु त्रिफलारसेनालोड्य लौहपात्रे पक्तव्यं, मनाक् तैलनिःसरणे सति सम्यक् पाको ज्ञेयः। प्रथमतो माषकम्, अष्टौ माषकान् यावत् योज्यम् ॥ ३३—३८ ॥

पिष्टितामित्यादि।—कटुतैलेन गुग्गुलुं पिष्टयित्वा क्वाथजलेन सह पक्वा

ततो माषद्वयं जग्ध्वा पिबेत् तप्तजलादिकम् ॥ ४२ ॥
अग्निञ्च कुरुते दीप्तं वड़वानलसन्निभम्।
धातुवृद्धिं वयोवृद्धिं बलं सुविपुलं तथा ॥ ४३ ॥
आमवातं शिरोवातं सन्धिवातं सुदारुणम्।
जानुजङ्घाश्रितं वातं सकटीग्रहमेव च ॥ ४४ ॥
अश्मरीं मूत्रकृच्छ्रञ्च भग्नञ्च तिमिरोदरे।
अम्लपित्तं तथा कुष्ठं प्रमेहं गुदनिर्गमम् ॥ ४५ ॥
कासं पञ्चविधं श्वासं क्षयञ्च विषमज्वरम्।
प्लीहानं श्लीपदं गुल्मं पाण्डुरोगं सकामलम् ॥ ४६ ॥
शोथान्त्रवृद्धिशूलानि गुदजानि विनाशयेत्।
मेदःकफामसङ्घातं व्याधिवारणदर्पहा ॥
सिंहनाद इति ख्यातो योगोऽयममृतोपमः ॥ ४७ ॥

वृहत् सैन्धवाद्यं तैलम्।—

सैन्धवं त्रिफला रास्ना पिप्पली गजपिप्पली।
सर्जिका मरिचं कुष्ठं शुण्ठी सौवर्चलं विड़म् ॥ ४८ ॥
यमान्यौ पुष्कराजाजी मधुकं शतपुष्पिका।
पलार्द्धिकैः पचेदेतैः प्रस्थमेरण्डतैलतः ॥ ४९ ॥
प्रस्थाम्बु शतपुष्पायाः प्रत्येकं मस्तुकाञ्जिके।
दद्यात् द्विगुणिते पान-वस्त्यभ्यङ्गप्रयोजितम् ॥ ५० ॥
आमवातहरं श्रेष्ठं सर्ववातघ्नमग्निदम्।
कटीजानूरुसन्धिस्थे पार्श्वहृद्वङ्क्षणाश्रये।
शस्तं वातान्त्रवृद्धौ च सैन्धवाद्यमिदं महत् ॥ ५१ ॥

अजमोदाद्यवटकः।—

अजमोदामरिचपिप्पलिविड़ङ्गसुरदारुचित्रकशताह्वाः।
सैन्धवपिप्पलिमूलं भागा नवकस्य पलिकाः स्युः ॥ ५२ ॥

---

आसन्नपाके प्रक्षेपार्थं त्रिकट्वादीनां चूर्णं तोलक ४, शोधितजयपालबीज गोटा १०००, रसगन्धकौ कज्जलीकृत्य शीतीभूते दातव्यौ इति वृद्धाः ॥ ३९—५१ ॥

शुण्ठी दशपलिका स्यात् पलानि तावन्ति वृद्धदारस्य।
पथ्या पञ्च पलानि सर्वमेकत्र कारयेच्चूर्णम् ॥ ५३ ॥
समगुड़वटकान् खादतश्चूर्णं वाऽप्युष्णवारिणा पिबतः।
नश्यन्त्यामानिलजाः सर्वरोगाः सुकष्टास्तु ॥ ५४ ॥
विश्वचिकाप्रतितूणीतूणीहृद्रोगाश्च गृध्रसी चोग्रा।
कटिवस्तिगुदस्फुटनञ्चैवास्थिजङ्घयोस्तीव्रम् ॥ ५५ ॥
श्वयथुस्तथाऽङ्गसन्धिषु ये चान्येऽप्यामवातसम्भूताः।
सर्वे प्रयान्ति नाशं तम इव सूर्य्यांशुविध्वस्तम् ॥ ५६ ॥

शुण्ठीघृतम्।—

नागरक्वाथकल्काभ्यां घृतप्रस्थं विपाचयेत्।
चतुर्गुणेन तेनाथ केवलेनोदकेन वा ॥ ५७ ॥
वातश्लेष्मप्रशमनमग्निसन्दीपनं परम्।
नागरं घृतमित्युक्तं कट्यामशूलनाशनम् ॥ ५८ ॥

सौवीरकसिद्धं शुण्ठीघृतम्।—

सर्पिर्नागरकल्केन सौवीरकचतुर्गुणम्।
सिद्धमग्निकरं श्रेष्ठमामवातहरं परम् ॥ ५९ ॥

गुड़ूचीघृतम्।—

अमृतायाः कषायेण कल्केन च महौषधात्।
मृद्वग्निना घृतं सिद्धं वातरक्तहरं परम् ॥ ६० ॥

---

अजमोदेत्यादि।—अजमोदाद्यवटके अजमोदा यमानी। नवकस्येति—उक्ताजमोदादि-नवकस्य प्रत्येकं पलिका भागा इत्यर्थः। पलानि तावन्तीति—दश पलानीत्यर्थः। समगुड़वटकानिति—समेनैव गुड़ेन किञ्चिज्जलं दत्त्वा वह्निसम्बन्धात् द्रवीकृतेन वटकाः कार्य्याः, अन्यथा वटकभावोऽस्य दुष्करः। चूर्णं वेति गुड़योगं विना ॥ ५२—५६ ॥

नागरेत्यादि।—शुण्ठीघृते चतुर्गुणेन तेनेति—नागरक्वाथेन। केवलेनोदकेन वेति—क्वाथस्थाने चतुर्गुणं जलं दत्त्वेत्यर्थः ॥ ५७ ५८ ॥

सर्पिरित्यादि।—शुण्ठीघृतं स्पष्टम् ॥ ५९ ॥

आमवाताढ्यवातादीन् क्रिमिदुष्टव्रणानपि।
अर्शांसि गुल्मांश्च तथा नाशयत्याशु योजितम्॥ ६१॥

काञ्जिकषट्पलकं घृतम्।—

हिङ्गु त्रिकटुकं चव्यं माणिमन्थं तथैव च।
कल्कान् कृत्वा च पलिकान् घृतप्रस्थं विपाचयेत्॥ ६२॥
आरनालाढकं दत्त्वा तत् सर्पिर्जठरापहम्।
शूलं विबन्धमानाहमामवातं कटीग्रहम्॥ ६३॥
नाशयेत् ग्रहणीदोषं मन्दाग्नेर्दीपनं परम्।
पुष्ट्यर्थं पयसा साध्यं दध्ना विण्मूत्रसङ्ग्रहे॥
दीपनार्थं मतिमता मस्तुना च प्रकीर्त्तितम्॥ ६४॥

रसोनपिण्डः।—

रसोनस्य पलशतं तिलस्य कुड़वं तथा।
हिङ्गु त्रिकटुकं क्षारौ द्वौ पञ्च लवणानि च॥ ६५॥
शतपुष्पा तथा कुष्ठं पिप्पलीमूलचित्रकौ।
अजमोदा यमानी च धन्याकञ्चापि बुद्धिमान्॥ ६६॥
प्रत्येकन्तु पलञ्चैषां श्लक्ष्णचूर्णानि कारयेत्।
घृतभाण्डे दृढ़े चैतत् स्थापयेत् दिनषोड़शम्॥ ६७॥
प्रक्षिप्य तैलमाणीञ्च प्रस्थार्द्धं काञ्जिकस्य च।
खादेत् कर्षप्रमाणन्तु तोयं मद्यं पिबेदनु॥ ६८॥

---

अमृताया इत्यादि।—कल्केन च इति पदं महौषधादित्यनेन सम्बध्यते। आढ्यवातः ऊरुस्तम्भः॥ ६०।६१॥

हिङ्ग्वित्यादि।—काञ्जिकषट्पलके त्रिकटुकं प्रत्येकं पलिकम्। माणिमन्थं सैन्धवम्। पुष्ट्यर्थमित्यादि—उक्तमेव काञ्जिकषट्पलकं यदि पुष्ट्यर्थं क्रियते तदा काञ्जिकस्थाने पयो दत्त्वा साध्यम्। विण्मूत्रसङ्ग्रहे कार्य्यं दध्ना साध्यम्। दीपनार्थं यदि तदा मस्तुना साध्यमित्यर्थः॥ ६२—६४॥

रसोनस्येत्यादि।—रसोनपिण्डे निस्त्वचो रसोनस्य पिष्टस्य, एवं तिलस्यापि।

आमवाते तथा वाते सर्वाङ्गैकाङ्गसंश्रिते।
अपस्मारेऽनले मन्दे कासे श्वासे गरेषु च॥
सोन्मादवातभग्ने च शूले जन्तुषु शस्यते॥ ६९॥

प्रसारणीसन्धानम्।—

प्रसारण्याढ़कक्काथे प्रस्थो गुड़रसोनयोः।
पक्वः पञ्चोषणरजः-पादः स्यादामवातहा॥ ७०॥

रसोनसुरा।—

वल्कलायाः सुरायास्तु सुपक्वायाः शतं घटे।
ततोऽर्द्धेन रसोनन्तु संशुद्धं कुट्टितं क्षिपेत्॥ ७१॥
पिप्पली पिप्पलीमूलमजाजी कुष्ठचित्रकम्।
नागरं मरिचं चव्यं चूर्णितञ्चाक्षसम्मितम्॥ ७२॥
सप्ताहात् परतः पेया वातरोगामनाशिनी।
क्रिमिकुष्ठक्षयानाह-गुल्मार्शःप्लीहमेहनुत्॥
अग्निसन्दीपनी चैव पाण्डुरोगविनाशिनी॥ ७३॥

शिण्डाकी।—

सिद्धार्थकखलीप्रस्थं सुधौतं निस्तुषं जले।

---

तैलमात्रीमिति—अनेनाष्टौ पलानि, द्वैगुण्याभावात्। प्रस्थार्द्धमिति—षोड़श पलानि। जन्तुष्विति—क्रिमिषु॥ ६५—६९॥

प्रसारण्याढ़केत्यादि।—प्रसारण्याः क्वाथे आढ़के षोड़शशरावपरिमिते इत्यर्थः। गुड़रसोनयोश्च मिलित्वा प्रस्थः। पक्व इति—कालवशात् परिणतः, सञ्जातरस इत्यर्थः, कालश्च सप्ताह एव, वक्ष्यमाणप्रयोगदर्शनात्। पञ्चोषणरज इति—मिलितपञ्चकोल-चूर्णं प्रस्थमपेक्ष्य पादिकं चतुष्पलमित्यर्थः। गन्धभादालिया पल ६४, पाकार्थं पानीय शराव ६४, शेष शराव १६; गुड़ पल ८, रसोन पल ८, सन्धानवशात् परिणते सति प्रक्षेपः मिलितपञ्चकोलचूर्ण पल ४। प्रसारणीसन्धानमेतत्॥ ७०॥

वल्कलाया इत्यादि।—वल्कलायाः सुराया इति—वल्कलीति ख्यातायाः सुरायाः। शतमिति—पलशतं घटे घटमध्ये क्षिपेदित्यन्वयः। ततोऽर्द्धेन रसोनमिति—पञ्चाशत् पलमित्यर्थः। संशुद्धमिति—त्वक्शिरारहितम्॥ ७१—७३॥

सिद्धार्थकखलीप्रस्थमित्यादि।—सर्षपखलीं चूर्णीकृत्य जलेनालोड्य छानयित्वा

मण्डप्रस्थं विनिक्षिप्य स्थापयेद्दिवसत्रयम् ॥ ७४ ॥
धान्यराशौ ततो दद्यात् सञ्चूर्ण्य पलिकानि च ।
अलम्बुषा गोक्षुरकं शतपुष्पापुनर्नवे ॥ ७५ ॥
प्रसारणी वरुणत्वक् शुण्ठी मदनमेव च ।
सम्यक् पाकन्तु विज्ञाय सिद्धा तण्डुलमिश्रिता ॥ ७६ ॥
भृष्टा सर्षपतैलेन हिङ्गुसैन्धवसंयुता ।
भक्षिता लवणोपेता जयेदामं महारुजम् ॥ ७७ ॥
एकजं द्वन्द्वजं साध्यं सान्निपातिकमेव च ।
कट्यूरुवातमानाहं जानुजं त्रिकमागतम् ॥
उदावर्त्तहरी पेया बलवर्णाग्निकारिणी ॥ ७८ ॥

लिपाला ।—

त्वगादिहीनाः संशुष्काः प्रत्यग्राः शकुलादयः ।
श्लक्ष्णचूर्णीकृतं तेषां शीते पलशतत्रयम् ॥ ७९ ॥
शतेन कटुतैलस्य व्योषरामठधान्यकैः ।
कृमिघ्नदीप्यकनिशा-चविकाग्रन्थिकार्द्रकैः ॥ ८० ॥
जीरकद्वयवृक्षाम्ल-सुरसार्जकशिग्रुकैः ।
दशमूलात्मगुप्ताभ्यां सार्कैर्लवणैस्त्रिभिः ॥ ८१ ॥

---

निस्तुषीकृत्य आतपे संशोष्य याह्यं पल १६, मण्ड शराव ४ मिश्रयित्वा धान्यराशौ दिनत्रयं स्थाप्यम्। तत इति—धान्यराशेराकृष्यालम्बुषादिचूर्णं प्रत्येकं पलिकं दद्यात्। ततोऽम्लत्वेन सम्यक् पाकं सम्यक् परिणतामिति विज्ञाय स्थापनीयम्। ततः प्रत्यहं याह्यं कर्ष २, तण्डुलचूर्णं पल १, पाकार्थं जल पल ९, "यवागूः षड्गुणेऽम्भसि" इत्युक्तेः; भर्जनार्थं सर्षपतैल कर्ष १, हिङ्गु रति ५, सैन्धव माषा २; ततः पुनरपि किञ्चिल्लवणं दत्त्वा भक्षणीयेति परिपाटी कथिता। सिद्धा तण्डुलमिश्रितेति—एषा शिण्डाकी तण्डुलमिश्रिता सती सिद्धा कार्य्या पेया कार्य्येत्यर्थः। अन्ये तु—पिष्टतण्डुलमिश्रणेन वटकः कार्य्य इत्याहुः। शिण्डाकीति सन्धानविशेषस्य संज्ञा तीरभुक्तिप्रसिद्धा ॥ ७४—७८ ॥

त्वगादीत्यादि।—लिपालायां शीते इति—शीतकाले। सुरसः पर्णाश

चूर्णितैः पलिकैः सार्द्धमारनालपरिप्लुतैः ।
विन्यसेत् स्नेहपात्रे तु धान्यराशौ पुनर्न्यसेत् ॥ ८२ ॥
सप्तरात्रात् समुद्धृत्य पानभक्षणभोजनैः ।
सिद्धलेयं प्रयोक्तव्या सामे वायौ विशेषतः ॥ ८३ ॥
भग्नरुग्णास्रुतहताः कम्पिनः पीठसर्पिणः ।
गृध्रसीमग्निमाद्यञ्च शूलगुल्मोदराणि च ॥
वलीपलितखालित्यं हत्वा स्युरमलेन्द्रियाः ॥ ८४ ॥

अपथ्यानि ।—

दधिमत्स्यगुड़क्षीर-पोथकीमाषपिष्टकम् ।
वर्जयेदामवातार्त्तो गुर्वभिष्यन्दकारि यत् ॥ ८५ ॥

इत्यामवात-चिकित्सा ।

---

## अथ शूल-चिकित्सा ।

क्रियासूत्रम् ।—

वमनं लङ्घनं स्वेदः पाचनं फलवर्त्तयः ।
क्षारश्चूर्णानि गुड़िकाः शस्यन्ते शूलशान्तये ॥ १ ॥

---

पर्णाश्वभेदः । आरनालपरिप्लुतैरिति—तावन्मात्रमारनालं यावता परिप्लवः सम्यक् भवति । स्नेहपात्रम् इह कटुतैलपात्रमेव यौगिकम् । भक्षणमिति—चर्व्वभोजनं भोजनमन्नादिभोजनम् ॥ ७९—८४ ॥

दध्यौत्यादि ।—माषपिष्टकमिति—माषकृतं पिष्टकं, किंवा माषकं पिष्टकञ्च । अभिष्यन्दकारि दोषधातुमलक्लेदकारि ॥ ८५ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायाम् आमवात-चिकित्सा-विवृतिः ।

---

आमवातवत् शूलस्याप्यामजन्यत्वेन तदनन्तरं शूलचिकित्सामाह, वमनमित्यादि सुश्रुतस्य ।—वमनमुत्क्लिष्टकफे । लङ्घनमामपाचनार्थम् । स्वेदः पित्तजं विहाय । क्षार इति—क्षारवस्तिः क्षारप्रयोगो वा । चूर्णगुड़िके इहैव वक्ष्यमाणे ॥१॥

मण्डप्रस्थं विनिक्षिप्य स्थापयेद्दिवसत्रयम् ॥ ७४ ॥
धान्यराशौ ततो दद्यात् सञ्चूर्ण्य पलिकानि च ।
अलम्बुषा गोक्षुरकं शतपुष्पापुनर्नवे ॥ ७५ ॥
प्रसारणी वरुणत्वक् शुण्ठी मदनमेव च ।
सम्यक् पाकन्तु विज्ञाय सिद्धा तण्डुलमिश्रिता ॥ ७६ ॥
भृष्टा सर्षपतैलेन हिङ्गुसैन्धवसंयुता ।
भक्षिता लवणोपेता जयेदामं महारुजम् ॥ ७७ ॥
एकजं द्वन्द्वजं साध्यं सान्निपातिकमेव च ।
कट्यूरुवातमानाहं जानुजं त्रिकमागतम् ॥
उदावर्त्तहरी पेया बलवर्णाग्निकारिणी ॥ ७८ ॥

सिध्मला ।—

त्वगादिहीनाः संशुष्काः प्रत्यग्राः शकुलादयः ।
श्लक्ष्णचूर्णीकृतं तेषां शीते पलशतत्रयम् ॥ ७९ ॥
शतेन कटुतैलस्य व्योषरामठधान्यकैः ।
कृमिघ्नदीप्यकनिशा-चविकाग्रन्थिकार्द्रकैः ॥ ८० ॥
जीरकद्वयहृवेर-सुरसार्जकशिग्रुकैः ।
दशमूलात्मगुप्ताभ्यां मार्कवैर्लवणैस्त्रिभिः ॥ ८१ ॥

---

निस्तुषीकृत्य आतपे संशोष्य ग्राह्यं पल १६, मण्ड शराव ४ मिश्रयित्वा धान्यराशौ दिनत्रयं स्थाप्यम्। तत इति—धान्यराशेराकृष्यालम्बुषादिचूर्णं प्रत्येकं पलिकं दद्यात्। ततोऽम्लत्वेन सम्यक् पाकं सम्यक् परिणतमिति विज्ञाय स्थापनीयम्। ततः प्रत्यहं ग्राह्यं कर्षं २, तण्डुलचूर्णं पल १, पाकार्थं जल पल ९, "यवागूः षड्गुणेऽम्भसि" इत्युक्तेः ; भर्जनार्थं सर्षपतैल कर्षं १, हिङ्गु रति ५, सैन्धव माषा २ ; ततः पुनरपि किञ्चिल्लवणं दत्त्वा भक्षणीयेति परिपाटी कथिता। सिद्धा तण्डुलमिश्रितेति—एषा शिण्डाकी तण्डुलमिश्रिता सती सिद्धा कार्य्या पेया कार्य्येत्यर्थः। अन्ये तु—पिष्टतण्डुलमिश्रणेन वटकः कार्य्य इत्याहुः। शिण्डाकीति सन्धानविशेषस्य संज्ञा तीरभुक्तिप्रसिद्धा ॥ ७४—७८ ॥

त्वगादीत्यादि।—सिध्मलायां शीते इति—शीतकाले। सुरसः अर्जकश्च

चूर्णितैः पलिकैः साकमारनालपरिप्लुतैः ।
विन्यसेत् स्नेहपात्रे तु धान्यराशौ पुनर्न्यसेत् ॥ ८२ ॥
सप्तरात्रात् समुद्धृत्य पानभक्षणभोजनैः ।
सिद्धलेयं प्रयोक्तव्या सामे वायौ विशेषतः ॥ ८३ ॥
भग्नरुग्णाश्मरीहताः कम्पिनः पीठसर्पिणः ।
गृध्रसीमग्निसादञ्च शूलगुल्मोदराणि च ॥
वलीपलितखालित्यं हत्वा स्युरमलेन्द्रियाः ॥ ८४ ॥

अपथ्यानि ।—

दधिमत्स्यगुड़क्षीर-पोथकीमाषपिष्टकम् ।
वर्जयेदामवातार्त्तो गुर्वभिष्यन्दकारि यत् ॥ ८५ ॥

इत्यामवात-चिकित्सा ।

---

## अथ शूल-चिकित्सा ।

क्रियासूत्रम् ।—

वमनं लङ्घनं स्वेदः पाचनं फलवर्त्तयः ।
क्षारश्चूर्णानि गुड़िकाः शस्यन्ते शूलशान्तये ॥ १ ॥

---

पलांशभेदः। आरनालपरिप्लुतैरिति—तावन्मात्रमारनालं यावता परिप्लवः सम्यक् भवति। स्नेहपात्रम् इह कटुतैलपात्रमेव यौगिकम्। भक्षणमिति—चर्व्यभोजनं भोजनमन्नादिभोजनम् ॥ ७९—८४ ॥

दधीत्यादि।—माषपिष्टकमिति—माषकृतं पिष्टकं, किंवा माषकं पिष्टकञ्च। अभिष्यन्दकारि दोषधातुमलक्लेदकारि ॥ ८५ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायाम् आमवात-चिकित्सा-विवृतिः ।

---

आमवातवत् शूलस्याप्यामजन्यत्वेन तदनन्तरं शूलचिकित्सामाह, वमनमित्यादि सुश्रुतस्य।—वमनमुत्क्लिष्टकफे। लङ्घनमामपाचनार्थम्। स्वेदः पित्तजं विहाय। क्षार इति—क्षारवर्त्तिः क्षारप्रयोगो वा। चूर्णगुड़िके इहैव वक्ष्यमाणे ॥१॥

स्वेदस्य अवश्यकर्त्तव्यतोपदेशः।—

पुंसः शूलाभिपन्नस्य स्वेद एव सुखावहः।
पायसैः कृशरापिण्डैः स्निग्धैर्वा पिशितोत्करैः॥ २॥

## वातशूल-चिकित्सा।

नवाङ्गयूषः।—

वातात्मकं हन्त्यचिरेण शूलं स्नेहेन युक्तस्तु कुलत्थयूषः।
ससैन्धवो व्योषयुतः सलावः सहिङ्गुसौवर्च्चलदाडिमाढ्यः॥ ३॥

बलादिः।—

बलापुनर्नवैरण्ड-बृहतीद्वयगोक्षुरैः।
सहिङ्गुलवणं पीतं सद्यो वातरुजाऽपहम्॥ ४॥

हिङ्ग्वादिचूर्णम्।—

शूली निरन्नकोष्ठोऽङ्किरुष्णाभिश्चूर्णिताः पिबेत्।
हिङ्गुप्रतिविषाव्योष-वचासौवर्च्चलाभयाः॥ ५॥

तुम्बुर्वादि चूर्णम।—

तुम्बुरूण्यभया हिङ्गु पौष्करं लवणत्रयम्।

---

पुंस इत्यादि।—पुंस इत्यत्र "तस्य" इति पाठान्तरम्। कृशरा तिलतण्डुलमाष-कृता यवागूः। पायसादिभिः पिण्डादिसम्बन्धात् स्वेदो बोध्यः। पिशितोत्करैरिति—भेकादिमांसैः॥ २॥

वातात्मकमित्यादि।—यूष इति—कुलत्थलावमांसयोर्मिलित्वा पलं, जलं षोडश पल, पलचतुष्टयस्थिते विमर्द्य वस्त्रेण छानयित्वा हिङ्गुसहितेन घृतेन भर्जनीयं, तदनन्तरं सैन्धवादीनां चूर्णं मिलित्वा कर्षः प्रक्षेपः, पश्चाद्दाडिमबीजरसो योज्यः। कुलत्थकर्षः २, लावमांसकर्षः २, पाकार्थं पानीय शः २, शेष पल ४, एतच्च विमर्द्य वस्त्रेण छानयित्वा घृते भर्जनीयम्। सैन्धवव्योषादिभिः यथायोग्यं संस्कारः॥ ३॥

बलेत्यादि।—योगोऽयं क्वाथविधिना। हिङ्गु लवणञ्च प्रक्षेप्यम्। लवणमत्र सौवर्चलं, वातशूलहन्तृत्वादित्याहुः॥ ४॥

शूलीत्यादि।—निरन्नकोष्ठ इति—अभुक्त इत्यर्थः। अन्ये तु—अन्नम् अजीर्णाङ्ग तच्छून्यकोष्ठ इत्याहुः। प्रतिविषा अतिविषा॥ ५॥

पिबेत् यवाम्बुना वात-शूलगुल्मापतन्त्रकी ॥ ६ ॥

श्यामादिकल्क:।—

श्यामा विडं शिग्रुफलानि पथ्या विडङ्गकम्पिल्लकमश्वमूत्री।
कल्कं समं मद्ययुतञ्च पीत्वा शूलं निहन्यादनिलात्मकन्तु ॥७॥

यमान्यादिचूर्णम्।—

यमानीहिङ्गुसिन्धूत्थ-क्षारसौवर्च्चलाभया:।
सुरामण्डेन पातव्या वातशूलनिसूदना: ॥ ८ ॥

विश्वादि:।—

विश्वमेरण्डजं मूलं क्वाथयित्वा जलं पिबेत्।
हिङ्गुसौवर्च्चलोपेतं सद्य: शूलनिवारणम् ॥ ९ ॥

विश्वैरण्डादि:।—

हिङ्गुपुष्करमूलाभ्यां हिङ्गुसौवर्च्चलेन वा।
विश्वैरण्डयवक्वाथ: सद्य: शूलनिवारण: ॥ १० ॥

एरण्डादि:।—

तद्वद्रुवूयवक्वाथो हिङ्गुसौवर्च्चलान्वित: ॥ ११ ॥

हिङ्ग्वम्लादिचूर्णम्।—

हिङ्ग्वम्लकृष्णालवणं यमानी क्षाराभयासैन्धवतुल्यभागम्।

---

तुम्बुरुणीत्यादि।—तुम्बुरु स्वनामख्यातम्। यवाम्बुनेति—यवक्वाथेन। "यवैरण्डाम्बुना पेयम्" इति तु पाठान्तरं, तेन ताभ्यामेव क्वाथ: ॥ ६ ॥

श्यामेत्यादि।—श्यामा वृद्धदारक:। कम्पिल्लको गुण्डारोचनी। अश्वमूत्री शल्लकी ॥ ७ ॥

यमानीत्यादि।—क्षारी यवक्षार:। सुरामण्डेनेति—सुराया उपरितनस्वच्छद्रवभागेन। एवमन्यत्रापि ॥ ८ ॥

विश्वमित्यादि।—एरण्डमूलस्य भागद्वयं, शुण्ठ्याश्चैको भाग इत्यर्थ: ॥ ९ ॥

हिङ्गुपुष्करेत्यादि।—हिङ्गुपुष्करमूलाभ्यां हिङ्गुसौवर्च्चलेन वा इति उभयत्र सहार्थे तृतीया ॥ १० ॥

तद्वदित्यादि।—तद्वदिति—सद्य: शूलहर इत्यर्थ: ॥ ११ ॥

हिङ्ग्वम्लेत्यादि।—अम्लोऽम्लवेतस:। कृष्णा पिप्पली। लवणमिह सौवर्चलं,

चूर्णं पिबेद्दाडिमखण्डमिश्रं शूले प्रवृद्धेऽनिलजे शिवाय ॥१२॥

वयोदयाङ्गं नारिकेलखण्डम्।—

सुपक्वनारिकेलस्य शस्यं पलचतुष्टयम्।
पिष्टा घृतपले भृष्टा क्षिपेत् खण्डचतुःपलम् ॥ १३ ॥
नारिकेलस्य च प्रस्थे किञ्चिच्छस्यवती जले।
धन्याकं पिप्पलीं मुस्तं द्विजीरं वंशलोचनाम् ॥ १४ ॥
शाणमानं चतुर्जातं चूर्णं शीते क्षिपेत् बुधः।
हन्त्यम्लपित्तमरुचिं रक्तपित्तं क्षयं वमिम् ॥ १५ ॥
शूलञ्च पृष्ठशूलञ्च पित्तरुग्घ्नं रसायनम्।
विशेषाद्बलकृत् वृष्यं पुष्टिकौजस्करं स्मृतम् ॥ १६ ॥

सौवर्चलादिगुडिका।—

सौवर्चलाम्लिकाऽजाजी-मरिचैर्द्विगुणोत्तरैः।
मातुलुङ्गरसैः पिष्टा गुडिकाऽनिलशूलनुत् ॥ १७ ॥

हिङ्ग्वादिगुडिका।—

हिङ्ग्वम्लवेतसव्योष-यमानीलवणत्रिकैः।
बीजपूररसोपेतैर्गुडिका वातशूलनुत् ॥ १८ ॥

बीजपूरप्रयोगः।—

बीजपूरकमूलञ्च घृतेन सह पाययेत्।
जयेत् वातभवं शूलं कर्षमिकं प्रमाणतः ॥ १९ ॥

---

विशेषतः शूलहन्तृत्वात्। क्वचित् "कणामलकम्" इति पाठः, स च निश्चलस्याऽसम्मतः; निश्चलस्तु—"कणामलकम्" इत्यत्र "कणालवणम्" इति पठति, हारीतसंवादात्। छन्दोभङ्गोऽपि नाशङ्क्यः, चलत्वात् पञ्चमाक्षरस्येति व्याचष्टे ॥१२—१६॥

सौवर्चलेत्यादि।—अम्लिका तिन्तिडी। द्विगुणोत्तरैरिति—यथोत्तरं द्विगुणैरित्यर्थः। एषा गुडिका चतुर्माषकमिता उष्णोदकानुपानेन भक्षणीया; एवं वक्ष्यमाणा गुडिकाऽपि ॥ १७।१८ ॥

बीजपूरकेत्यादि।—योगोऽयं केवलवातजे ॥ १९ ॥

विल्वमूलादिगुड़िका ।—

विल्वमूलतिलैरण्डं पिष्ट्वा चाम्लतुषाम्भसा ।
गुड़िकां भ्रामयेदुष्णां वातशूलविनाशिनीम् ॥ २० ॥

तिलगुड़िका ।—

तिलैश्च गुड़िकां कृत्वा भ्रामयेज्जठरोपरि ।
गुड़िका शमयत्येषा शूलञ्चैवातिदुःसहम् ॥ २१ ॥

मदनकल्कः जीवन्तीकल्कश्च ।—

नाभीलेपाज्जयेच्छूलं मदनः काञ्जिकान्वितः ।
जीवन्तीमूलकल्को वा सतैलः पार्श्वशूलनुत् ॥ २२ ॥

## पित्तशूल-चिकित्सा ।

क्रियासूत्रम् ।—

गुड़ः शालिर्यवाः क्षीरं सर्पिःपानं विरेचनम् ।
जाङ्गलानि च मांसानि भेषजं पित्तशूलिनाम् ॥ २३ ॥

वमनीपकरणानि शीतोपचाराश्च ।—

पैत्ते तु शूले वमनं पयोऽम्बु-रसैस्तथेक्षोः सपटोलनिम्बैः ।
शीतावगाहाः पुलिनाः सवाताः कांस्यादिपात्राणि जलप्लुतानि ॥ २४ ॥

विरेचन-मांसरसादिप्रयोगोपदेशः ।—

विरेचनं पित्तहरञ्च शस्तं रसाश्च शस्ताः शशलावकानाम् ।
सन्तर्पणं लाजमधूपपन्नं योगाः सुशीता मधुसम्प्रयुक्ताः ॥ २५ ॥

---

विल्वमूलेत्यादि ।—अम्लतुषाम्भः अम्लकाञ्जिकम् ॥ २० ॥

तिलैरित्यादि ।—तिलैरिति पिष्टैः । गुड़िकेयं कोष्णा उदरे भ्रामयितव्या ॥२१॥

नाभिलेपादित्यादि —जीवन्तीमूलकल्केनापि लेपः ॥ २२ ॥

सम्प्रति पित्तशूलचिकित्सामाह, गुड़ इत्यादि ।—गुड़ोऽत्र पुरातनः उपहतमलश्च ज्ञेयः, तस्य वातपित्तहरत्वेन यौगिकत्वात्; उक्तं हि सुश्रुते—"पित्तघ्नो मधुरः शुद्धो वातघ्नोऽसृक्प्रसादनः । पुराणश्चाधिकगुणः स्मृतः पथ्यतमो गुड़ः ॥" ( सू० ४५ अ० ) इति ॥ २३ ॥

पैत्ते तु शूले वमनमित्यादि ।—पित्तजेऽपि वमनमामाशयस्थपित्तहरणार्थम् । सपटोलनिम्बैरिति—पटोलनिम्बकल्कयुतैः । मदनफलयोगमप्यत्र केचिदिच्छन्ति ॥२४॥

विरेचनमित्यादि ।—पित्तहरमिति—पित्तहरमधुरगणोपेतम् । सन्तर्पणं लाज-

यवपेया ।—

कुर्य्यां ज्वरे पित्तभवेऽपि शूले
घोरे विदाहे त्वतितर्षिते च ।
यवस्य पेयां मधुना विमिश्रां
पिबेत् सुशीतां मनुजः सुखार्थी ॥ २६ ॥

धात्रीरसादियोगत्रयम् ।—

धात्र्या रसं विदार्य्या वा त्रायन्ती-गोस्तनाम्बु वा ।
पिबेत् सशर्करं सद्यः पित्तशूलनिसूदनम् ॥ २७ ॥

शतमूलीप्रयोगः ।—

शतावरीरसं क्षौद्र-युतं प्रातः पिबेन्नरः ।
दाहशूलोपशान्त्यर्थं सर्वपित्तामयापहम् ॥ २८ ॥

बृहत्यादिः ।—

बृहत्यौ गोक्षुरैरण्ड-कुशकाशेक्षुवालिकाः ।
पीताः पित्तभवं शूलं सद्यो हन्युः सुदारुणम् ॥ २९ ॥

शतावर्य्यादिः ।—

शतावरीसयष्ट्याह्व-वाट्यालकुशगोक्षुरैः ।
शृतशीतं पिबेत् तोयं सक्षौद्रगुडशर्करम् ॥
पित्तासृग्दाहशूलघ्नं सद्यो दाहज्वरापहम् ॥ ३० ॥

---

मधूपपन्नमिति—लाजशक्तुमधुभ्यां निर्मितं सन्तर्पणम् । यवस्य पेयामिति—यवस्य यवागूम ॥ २५।२६ ॥

धात्र्या रसमित्यादि ।—योगत्रयम् । धात्र्याः स्वरसः, विदार्य्या अपि स्वरसः, त्रायन्तीगोस्तन्योः क्वाथः ; शर्करा च सर्वत्र प्रक्षेप्या बोध्या ॥ २७ ॥

शतावरीरसमित्यादि ।—स्पष्टम ॥ २८ ॥

बृहत्यावित्यादि ।—इक्षुवालिका खागरभिदा ॥ २९ ॥

शतावरीत्यादि ।—शृतशीतमिति—शृतं शीतमेव व्यजनादिभिः, न तु शीत-कषायम् ॥ ३० ॥

त्रिफलानिम्बादिः।—

त्रिफलानिम्बयष्ट्याह्व-कटुकारग्वधैः शृतम्।
पाययेन्मधुसम्मिश्रं दाहशूलोपशान्तये ॥ ३१ ॥

एरण्डतैलप्रयोगः।—

तैलमेरण्डजं वाऽपि मधुकक्काथसंयुतम्।
शूलं पित्तोद्भवं हन्यात् गुल्मं पैत्तिकमेव च ॥ ३२ ॥

त्रिफलादिः।—

त्रिफलाऽऽरग्वधक्काथं सक्षौद्रं शर्कराऽन्वितम्।
पाययेद्रक्तपित्तघ्नं दाहशूलनिवारणम् ॥ ३३ ॥

धात्रीचूर्णम्।—

प्रलिह्यात् पित्तशूलघ्नं धात्रीचूर्णं समाक्षिकम् ॥ ३४ ॥

अष्टादशाङ्गं नारिकेलखण्डम्।—

नारिकेलपलान्यष्टौ शर्कराप्रस्थसंयुतम्।
तज्जलं पात्रमेकन्तु सर्पिःपञ्चपलानि च ॥ ३५ ॥
शुण्ठाचूर्णस्य कुड़वं प्रस्थार्द्धं क्षीरमेव च।
सर्वमेकीकृतं पात्रे शनैर्मृद्वग्निना पचेत् ॥ ३६ ॥
तुगा त्रिकटुकं मुस्तं चातुर्जातं सधान्यकम्।
द्विक्षणी जीरकञ्चैव कर्षयुग्मं पृथक् पृथक् ॥ ३७ ॥
सूक्ष्मचूर्णं विनिक्षिप्य स्थापयेद्भाजने दृढ़ः।
खादेत् प्रतिदिनं प्राणं यथेष्टाहारवानपि ॥ ३८ ॥
सर्वदोषभवं शूलमामवातं विनाशयेत्।
परिणामभवं शूलमम्लपित्तञ्च नाशयेत् ॥ ३९ ॥
बलपुष्टिकरञ्चैव वाजीकरणमुत्तमम्।
रक्तपित्तहरं श्रेष्ठं छर्दिहृद्रोगनाशनम् ॥

---

त्रिफलेत्यादि।—यष्ट्याह्वः यष्टिमधुकः। कटुका कटुरोहिणी ॥ ३१ ॥

तैलमेरण्डजमित्यादि।—तैलं प्रलेप्यम्। अन्ये तु—योगद्वयमाहुः, तन्मते—एरण्डजं तैलमित्येकं, मधुकक्काथसंयुतमेरण्डतैलमिति द्वितीयः ॥ ३२ ॥

अग्निसन्दीपनकरं सर्वरोगनिवर्हणम् ॥ ४० ॥

## कफशूल-चिकित्सा ।

क्रियासूत्रम् ।—

श्लेष्माधिके छर्दनलङ्घनानि शिरोविरेकं मधुशीधुपानम् ।
मधूनि गोधूमयवानरिष्टान् सेवेत रूक्षान् कटुकांश्च सर्वान् ॥ ४१ ॥

पञ्चकोलसिद्धा यवागूः ।—

पिप्पलीपिप्पलीमूल-चव्यचित्रकनागरैः ।
यवागूर्दीपनीया स्याच्छूलघ्नी चोपसाधिता ॥ ४२ ॥

लवणत्रयादिचूर्णम् ।—

लवणत्रयसंयुक्तं पञ्चकोलं सरामठम् ।
सुखोष्णेनाम्बुना पीतं कफशूलविनाशनम् ॥ ४३ ॥

विल्वमूलादिः ।—

विल्वमूलमथैरण्डं चित्रकं विश्वभेषजम् ।
हिङ्गुसैन्धवसंयुक्तं सद्यः शूलनिवारणम् ॥ ४४ ॥

मुस्तादिकल्कः ।—

मुस्तं वचां तिक्तकरोहिणीञ्च तथाऽभयां निर्दहनीञ्च तुल्याम् ।
पिबेत्त गोमूत्रयुतां कफोत्थे शूले तथाऽऽमस्य च पाचनार्थम् ॥ ४५ ॥

वचादिचूर्णं विल्वादिश्च ।—

वचाब्दाग्न्यभयातिक्ता-चूर्णं गोमूत्रसंयुतम् ।

---

त्रिफलाऽऽरग्वधक्वाथमित्यादि ।—स्पष्टम् ॥ ३३—४० ॥

श्लेष्माधिके इत्यादि ।—मधुना कृतः शीधुर्मधुशीधुः । अरिष्टानिति ।—सन्धान-विशेषान् ॥ ४१ ॥

पिप्पलीत्यादि ।—स्पष्टम् ॥ ४२ ॥

लवणत्रयसंयुक्तमित्यादि ।—लवणत्रयं सौवर्चलसैन्धवविड़म् । समभागचूर्णादष्ट-माषकमुष्णोदकपलेनालोड्य पेयम् । चूर्णविषये योगोऽयम् ॥ ४३ ॥

विल्वमूलमित्यादि ।—विल्वमूलादिर्विश्वभेषजान्तः अयं योगः क्वाथविधिना ॥ ४४ ॥

मुस्तमित्यादि ।—निर्दहनी मूर्वा : मुस्तादि-निर्दहन्यन्त एको योगः । मुस्तकादिकं पिष्टा गोमूत्रेण पेयम् ॥ ४५ ॥

सक्षारं वा पिबेत् क्वाथं विल्वादेः कफशूलवान् ॥ ४६ ॥

मातुलुङ्गरस-शिग्रुक्वाथौ।—

मातुलुङ्गरसो वाऽपि शिग्रुक्वाथस्तथाऽपरः।
सक्षारो मधुना पीतः पार्श्वहृद्वस्तिशूलनुत् ॥ ४७ ॥

आमशूलचिकित्सा।

क्रियासूत्रम्।—

आमशूले क्रिया कार्य्या कफशूलविनाशिनी।
सेव्यमामहरं सर्वं यदग्निबलवर्द्धनम् ॥ ४८ ॥

सर्वशूलचिकित्सा।

हिङ्ग्वादिचूर्णम्।—

सहिङ्गुतुम्बुरुत्र्योष-यमानीचित्रकाभयाः।
सक्षारलवणाश्चूर्णं पिबेत् प्रातः सुखाम्बुना।
विण्मूत्रानिलशूलघ्नं पाचनं वह्निदीपनम् ॥ ४९ ॥

धात्रीलौहम्।—

षट्पलं शुद्धमण्डूरं यवस्य कुड़वं तथा।
पाकाय नीरप्रस्थाद्धं दद्यात् पादावशेषितम् ॥ ५० ॥
शतमूलीरसस्याष्टावामलक्या रसस्तथा।
तथा दधिपयोभूमि-कुष्माण्डस्य चतुष्पलम् ॥ ५१ ॥
चतुष्पलं सर्पिरिक्षु रसं दद्यात् विचक्षणः।
प्रक्षिपेज्जीरकं धान्यं त्रिजातं करिपिप्पलीम् ॥ ५२ ॥

---

वचेत्यादि।—अग्निशिवकः। सक्षारमित्यादिस्तु द्वितीयो योगः। विल्वादेर्दशमूलस्य क्वाथं पिबेदिति ॥ ४६ ॥

मातुलुङ्गेत्यादि।—मातुलुङ्गरस इति—मातुलुङ्गमूलक्वाथः। योगद्वयेऽपि मधुयवक्षारौ प्रक्षेप्यौ ॥ ४७ ॥

आमशूले इत्यादि।—यत् आमहरं भूत्वा यदग्निवृद्धिकरं भवति पञ्चकोलादि, तत् सेव्यं, न तु घृतादि ॥ ४८ ॥

मुस्तं हरीतकीञ्चैव अभ्रं लौहं कटुत्रयम्।
रेणुकं त्रिफलाञ्चैव तालीशं नागकेशरम्॥ ५३॥
प्रत्येकं कार्षिकं चूर्णं पेषयित्वा विनिक्षिपेत्।
भोजनादौ तथा मध्ये चान्ते चैव समाहितः॥ ५४॥
तोलैकं भक्षयेच्चानु पेयं नित्यं पयस्तथा।
शूलमष्टविधं हन्ति साध्यासाध्यमथापि वा॥ ५५॥
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम्।
परिणामसमुत्थांश्च अन्नद्रवसमुद्भवान्॥ ५६॥
द्वन्द्वजान् पक्तिशूलांश्च अम्लपित्तं सुदारुणम्।
सर्वशूलहरं श्रेष्ठं धात्रीलौहमिदं स्मृतम्॥ ५७॥

चित्रकादिः।—

चित्रकग्रन्थिकैरण्ड-शुण्ठीधान्यं जलैः शृतम्।
शूलानाहविबन्धेषु सहिङ्गुविड्सैन्धवम्॥ ५८॥

चतुःसमम्।—

दीप्यकं सैन्धवं पथ्या नागरञ्च चतुःसमम्।
भृशं शूलं जयत्याशु मन्दस्याग्नेश्च दीपनम्॥ ५९॥

द्वन्द्वजशूलचिकित्सा।

वातपित्तशूले बृहत्यादिः।—

समाक्षिकं बृहत्यादिं पिबेत् पित्तानिलात्मके।
व्यामिश्रं वा विधिं कुर्य्याच्छूले पित्तानिलात्मके॥ ६०॥

पित्तश्लेष्मशूले प्रकृतिसमसमवायचिकित्सा।—

पित्तजे कफजे चापि या क्रिया कथिता पृथक्।

---

सहिङ्ग्वित्यादि।—तुम्बुरु वणिग्द्रव्यविशेषः॥ ४९—५७॥

चित्रकेत्यादि।—ग्रन्थिकं पिप्पलीमूलम्। सहिङ्गुविड्सैन्धवमित्यत्र "सहिङ्गु-विड्दाडिमम्" इति केचित् पठन्ति॥ ५८॥

दीप्यकमित्यादि।—दीप्यकं यमानी। मन्दस्यातिमन्दस्य॥ ५९॥

द्वन्द्वजशूलचिकित्सामाह, समाक्षिकमित्यादि।—बृहत्यादिमिति—"बृहत्यौ

एकीकृत्य प्रयुञ्जीत तां क्रियां कफपित्तजे ॥ ६१ ॥

पित्तश्लेष्मशूले पटोलादिः।—

पटोलत्रिफलारिष्ट-क्वाथं मधुयुतं पिबेत्।
पित्तश्लेष्मज्वरच्छर्दिर्दाहशूलोपशान्तये ॥ ६२ ॥

वातश्लेष्मशूले रसोनप्रयोगः।—

रसोनं मद्यसम्मिश्रं पिबेत् प्रातः प्रकाङ्क्षितः।
वातश्लेष्मभवं शूलं निहन्तुं वह्निदीपनम् ॥ ६३ ॥

## सर्वशूलचिकित्सा।

हिङ्ग्वादिः।—

विश्वोरुवूकदशमूलयवाम्भसा तु
हिङ्ग्वादिहिङ्गुलवणत्रयपुष्कराणाम्।
चूर्णं पिबेत् हृदयपार्श्वकटीग्रहाम-
पक्वाशयांसभृशरुग्ज्वरगुल्मशूली ॥ ६४ ॥

क्वाथेन चूर्णपानं यत् तत्र क्वाथप्रधानता।
प्रवर्त्तते न तेनात्र चूर्णपिष्टौ चतुर्द्रवः ॥ ६५ ॥

---

गोक्षुरैरण्ड" इत्यादिना पूर्वमुक्तम्; अन्ये तु—सन्निपातज्वरोक्तं इत्यादिकमाहुः, व्यवहारस्तु पूर्वेणैव। व्यामिश्रमित्यादि स्पष्टम् ॥ ६०।६१ ॥

पटोलेत्यादि।—अरिष्टो निम्बः ॥ ६२ ॥

रसोनमित्यादि।—निस्तुषपिष्टरसोन माषा ६, मद्य पल १ ॥ ६३ ॥

विश्वोरुवूकेत्यादि।—अम्भसेति—क्वाथेन। अत्र हिङ्गुसौवर्चलमित्यादि-वक्ष्य-माणयोगे समुदितदशमूलयवयोर्द्वयोः प्रत्येकं तुल्यभागेन वृद्धानां व्यवहारदर्शनादत्रापि तथैव मानमाह श्रीकण्ठः; तेन विश्वोरुवूकदशमूलानां मिलितानामेको भागः, यवस्य चापरो भाग इति; व्यवहारोऽपि इत्थमेव। हिङ्ग्वादयस्तु प्रक्षेपविषये प्रयोज्याः, न तु "पातव्यश्च चतुर्द्रवः" इति परिभाषया; एवं वक्ष्यमाणेष्वपि। एतदेवाह, क्वाथेन चूर्णपानं यदित्यादि।—अस्यार्थस्तु ज्वरातीसारचिकित्साया-मेवोक्तः इति ॥ ६४।६५ ॥

रुचकादिः।—

चूर्णं समं रुचकहिङ्गुमहौषधानां
शुण्ठ्यम्बुना कफसमीरणसम्भवासु।
हृत्पार्श्वपृष्ठजठरार्त्तिविसूचिकासु
पेयं तथा यवरसेन तु विड्विबन्धे ॥ ६६ ॥

समं शुण्ठ्यम्बुनेत्येवं योजना क्रियते बुधैः।
तेनाल्पमानमेवात्र हिङ्गु सम्परिदीयते ॥ ६७ ॥

हिङ्गुसौवर्चलादिचूर्णम्।—

हिङ्गु सौवर्चलं पथ्याविड़सैन्धवतुम्बुरु।
पौष्करञ्च पिबेच्चूर्णं दशमूलयवाम्भसा ॥ ६८ ॥
पार्श्वहृत्कटिपृष्ठांस-शूले तन्द्राऽपतानके।
शोथे श्लेष्मप्रसेके च कर्णरोगे च शस्यते ॥ ६९ ॥

एरण्डसप्तकम्।—

एरण्डबिल्वबृहतीद्वयमातुलुङ्ग-
पाषाणभित्त्रिकटमूलकृतः कषायः।
सक्षारहिङ्गुलवणो रुबुतैलमिश्रः
श्रोण्यसमेढ्रहृदयस्तनरुक्षु पेयः ॥ ७० ॥

---

चूर्णं समामित्यादि।—रुचकं सौवर्चलम्। तीक्ष्णत्वेन शुण्ठ्याः कर्षार्द्धस्याल्पस्य वा क्वाथः। प्रक्षेपः सौवर्चल माषा १, शुण्ठीचूर्णं माषा २, हिङ्गु रति ६। एवं यवरसेनेति—यवक्वाथेन। समं शुण्ठ्यम्बुनेति—समशब्दस्य तुल्यार्थत्वे हिङ्गुनोऽपि रुचकमहौषधसमानत्वेन बहुमानता स्यादतः समामिति पदं सहार्थे एवेत्यर्थः ॥ ६६। ६७ ॥

हिङ्गु सौवर्चलमित्यादि।—दशमूलयवाम्भसेति—दशमूलयवयोर्द्वयोः क्वाथः; तत्र प्रत्येकं दशमूल १ माषा ७ रति, यवतण्डुल १ कर्ष, पाकार्थं जल शराव १, शेष पल २। भेदे विवचिते हिङ्ग्वादीनां प्रक्षेपः ॥ ६८ ६९ ॥

एरण्डेत्यादि।—मातुलुङ्गं मातुलुङ्गस्य मूलम्। पाषाणभित् पाषाणभेदी। त्रिकटो गोक्षुरकस्य मूलम्। लवणमत्र सैन्धवं, न तु सौवर्चलं, "सैन्धवक्षारसंयुक्तस्तैल-

हिङ्गुत्रिकटुकादिचूर्णम्।—

हिङ्गु त्रिकटुकं कुष्ठं यवक्षारोऽथ सैन्धवम्।
मातुलुङ्गरसोपेतं प्लीहशूलापहं रजः॥ ७१॥

मृगशृङ्गप्रयोगः।—

दग्धमनिर्गतधूमं मृगशृङ्गं गोघृतेन सह पीतम्।
हृदयनितम्बजशूलं हरति शिखी दारुनिवहमिव॥ ७२॥

विडङ्गप्रयोगः।—

क्रिमिरिपुचूर्णं लीढं सहितं स्वरसेन वङ्गसेनस्य।
क्षपयत्यचिरान्नियतं लीढाजीर्णोद्भवं शूलम्॥ ७३॥

विदार्य्यादिस्वरसः।—

विदारीदाड़िमरसः सव्योषलवणान्वितः।
क्षौद्रयुक्तो जयत्याशु शूलं दोषत्रयोद्भवम्॥ ७४॥

एरण्डद्वादशकम्।—

एरण्डफलमूलानि वृहतीद्वयगोक्षुरम्।
पर्ण्यिन्यः सहदेवा च सिंहपुच्छीक्षुवालिका॥ ७५॥
तुल्यैरेतैः शृतं तोयं यवक्षारयुतं पिबेत्।

---

नैरण्डकस्य च" इति नागार्जुनसंवादात्। अयं योग आमवाते चन्द्राटेन लिखितः, अतस्तत्रापि युज्यते॥ ७०॥

हिङ्गु त्रिकटुकमित्यादि।—मातुलुङ्गरसो मातुलुङ्गमूलक्वाथः। अन्ये तु—मातुलुङ्गफलरसमित्याहुः॥ ७१॥

दग्धमित्यादि।—मृगशृङ्गं हरिणशृङ्गं, तच्च चूर्णीकृत्यान्तर्धूमं यथा स्यात् तथा दग्धव्यमित्यर्थः॥ ७२॥

क्रिमिरिपुचूर्णमित्यादि।—वङ्गसेनस्य स्वरसेनेति—वकपत्रस्य स्वरसेनेत्यर्थः॥७३॥

विदारीत्यादि।—विदारी-पक्वदाड़िमफलयोः स्वरसः, भूमिकुष्माण्डरसः पक्वदाड़िमफलरसः प्रत्येकं कर्षं २, त्रिकटु सैन्धव प्रत्येक माषा १, मधु माषा ४॥ ७४॥

एरण्डेत्यादि।—एरण्डद्वादशके एरण्डस्य फलं मूलञ्च। पर्ण्यिन्यश्चतस्रः शालपर्णी-पृश्निपर्णी-मुद्गपर्णी-माषपर्णीभेदात्। सहदेवा दण्डोत्पलभेदः। सिंहपुच्छी पृश्निपर्णीभेदः, सा च कलम्बूपवसदृशदीर्घपत्रा काटवालिङ्हपुच्छीति ख्याता। इक्षुवालिका

पृथग्दोषभवं शूलं हन्यात् सर्वभवं तथा ॥ ७६ ॥

त्रिफलामण्डूरम् ।—

गोमूत्रशुद्धमण्डूरं त्रिफलाचूर्णसंयुतम् ।
विलिहन् मधुसर्पिर्भ्यां शूलं हन्ति त्रिदोषजम् ॥ ७७ ॥

शङ्खादिचूर्णम् ।—

शङ्खचूर्णं सलवणं सहिङ्गु व्योषसंयुतम् ।
उष्णोदकेन तत् पीतं शूलं हन्ति त्रिदोषजम् ॥ ७८ ॥

त्रिफलालौहम् ।—

तीक्ष्णायश्चूर्णसंयुक्तं त्रिफलाचूर्णमुत्तमम् ।
प्रयोज्यं मधुसर्पिर्भ्यां सर्वशूलनिवारणम् ॥ ७९ ॥

अभयालौहम् ।—

मूत्रान्तःपाचितां शुष्कां लौहचूर्णसमन्विताम् ।
सगुडामभयामद्यात् सर्वशूलप्रशान्तये ॥ ८० ॥

---

लटा वा नड़ इति नाम्ना ख्याता खगड़ो। डल्लनस्तु इक्षुबालिकास्थाने "इक्षुरकं" पठति। एवं सुश्रुतमतानुवादी चन्द्रटोऽपि ॥ ७५।७६ ॥

गोमूत्रशुद्धेत्यादि।—गोमूत्रे सप्तधा निर्वापणेन शुद्धं मण्डूरं मिलितत्रिफलाचूर्णसमं पञ्च-षट्-सप्तमाषकाणामन्यतममानेनोपयोज्यम् ॥ ७७ ॥

शङ्खचूर्णमित्यादि।—मनाक् दग्धस्य शङ्खस्य चूर्णं गृह्णन्ति। अस्य माषकमेकं किञ्चिदधिकं वा, लवणव्योषयोश्च मिलित्वा माषद्वयं, हिङ्गुनो रक्तिद्वयं त्रयं वा पिबेदित्यर्थः। अन्ये तु—भागानुक्तेः सर्वमेव सममिति वदन्ति। श्रेष्ठोत्तरोऽयं योगः ॥ ७८ ॥

तीक्ष्णायश्च इत्यादि।—मारितपुटितवज्रलौहचूर्णं कर्षं १ माषा ८, त्रिफलाचूर्णं प्रत्येकं माषा ८, मिलितचूर्णाच्च ग्राह्यं रति ४, घृतमधुनी दत्त्वा लौहमुद्गरेण सम्मर्द्य भक्षणीयम्। मात्रादिविधिश्च लौहान्तरवत्। अन्ये तु—त्रिफलाया एकभाग-समं लौहचूर्णमिति वदन्ति। त्रिफलाक्वाथभावितलौहपत्रिकया अयं योगो यदि क्रियते, तदा द्वि-त्रि-चतुर्माषकोपयोगः ॥ ७९ ॥

मूत्रान्तरित्यादि।—मूत्रान्तःपाचितामिति—गोमूत्रेणोत्स्विन्नाम्; लौहचूर्णेन सहैव मूत्रे पाचितामित्यन्ये। शुष्कामित्यातपयोगात्। लौहचूर्णसमन्वितामिति—

दाधिकं घृतम्।—

पिप्पली नागरं विल्वं कारवी चव्यचित्रकम्।
हिङ्गुदाड़िमवृक्षाम्ल-वचाक्षाराम्लवेतसम्॥ ८१॥
वर्षाभूकृष्णलवणमजाजी वीजपूरकम्।
दधि त्रिगुणितं सर्पिस्तत् सिद्धं दाधिकं घृतम्॥ ८२॥
गुल्मार्शःप्लीहहृत्पार्श्व-शूलयोनिरुजाऽपहम्।
दोषसंशमनं श्रेष्ठं दाधिकं परमं स्मृतम्॥ ८३॥

प्राणायामधूपौ।—

कम्बलावृतगात्रस्य प्राणायामं प्रकुर्वतः।
कटुतैलाक्तशक्तूनां धूपः शूलहरः परः॥ ८४॥

अपथ्यानि।—

व्यायामं मैथुनं मद्यं लवणं कटु वैदलम्।
वेगरोधं शुचं क्रोधं वर्जयेच्छूलवान् नरः॥ ८५॥

इति शूल-चिकित्सा।

---

लौहचूर्णञ्च हरीतकीचूर्णसमम्। सगुडामिति—चूर्णद्वयसमगुड़ाम्; अन्ये तु—लौहचूर्णगुडहरीतकीनां प्रत्येकं समानत्वमित्याहुः॥ ८०॥

पिप्पलीत्यादि।—दाधिकघृते विल्वं विल्वस्य मूलम्। कृष्णलवणन्तु सौवर्चलभेदः; उक्तं हि—"न काललवणे गन्धः सौवर्चलगुणो हि सः" इति। वृक्षाम्लं महार्द्रकम्। वीजपूरकं वीजपूरकमूलम्। दध्ना त्रिगुणेनैव पाकः। "स्वरसक्षीरमाङ्गल्यैः" इत्यादि परिभाषावचनन्तु चतुर्गुणजलदानार्थमुक्तं, किन्तु प्रायो न समाद्रियते॥ ८१—८३॥

कम्बलेत्यादि।—प्राणायाममिति—उच्छ्वासावरोधनम्॥ ८४॥

व्यायाममित्यादि।—कटु वैदलमित्यत्र "शूलि वैदलम्" इति पाठे—शूलं जन्यत्वेन इह अस्तीति शूलि, वैदलविशेषणम्॥ ८५॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां शूल-चिकित्सा-विवृतिः।

# अथ परिणाम-शूल-चिकित्सा ।

वमनादीनां कर्त्तव्यतोपदेशः ।—

वमनं तिक्तमधुरैर्विरेकश्चापि शस्यते ।
वस्तयश्च हिताः शूले परिणामसमुद्भवे ॥ १ ॥

विड़ङ्गादि मोदकः ।—

विड़ङ्गतण्डुलव्योष-त्रिवृद्दन्ति सचित्रकम् ।
सर्वाण्येतानि संहृत्य श्लक्ष्णचूर्णानि कारयेत् ॥ २ ॥
गुड़ेन मोदकं कृत्वा भक्षयेत् प्रातरुत्थितः ।
उष्णोदकानुपानन्तु दद्यादग्निविवर्द्धनम् ॥
जयेत् त्रिदोषजं शूलं परिणामसमुद्भवम् ॥ ३ ॥

नागराद्युत्कारिका ।—

नागरगुड़तिलकल्कं पयसा संसाध्य यः पुमानद्यात् ।
उग्रं परिणतिशूलं तस्यापैति सप्तरात्रेण ॥ ४ ॥

शम्बूकभस्मप्रयोगः ।—

शम्बूकजं भस्म पीतं जलेनोष्णेन तत्क्षणात् ।
पक्तिजं विनिहन्त्येतच्छूलं विष्णुरिवासुरान् ॥ ५ ॥

---

शूलविशेषत्वात् परिणामशूलमाह, वमनमित्यादि ।—चकाराल्लङ्घनमपि बोध्यं, तथा वस्तयोऽपि माधुतैलिकादयोऽत्र ज्ञेयाः ; उक्तं हि—"लङ्घनं वमनं शस्तं विरेकश्चानुवासनम् । निरूहो वाग्निगन्धादिर्माधुतैलिकवस्तयः ॥" इति । माधुतैलिकवस्तयश्च मधुतैलप्रधानाः सुश्रुतोक्ताः ; उक्तं हि—"यस्मान्मधु च तैलञ्च प्राधान्येन प्रदीयते । माधुतैलिक इत्येवं भिषग्भिर्वस्तिरुच्यते ॥" ( चि० ३८ अ० ) तत्रामाशयस्थे दोषे लङ्घनवमने, पच्यमानाशयस्थे तु विरेकनिरूहौ, पक्वाशयस्थे चानुवासनमिति विषयविवेकः ॥ १ ॥

विड़ङ्गेत्यादि ।—विड़ङ्गतण्डुलं विड़ङ्गस्य निस्तुषसारभागः । मोदकत्वादत्र द्विगुणो गुड़ः ॥ २।३ ॥

नागरेत्यादि ।—नागरादिकल्कमुत्कारिकावत् यवागूवत् वा क्षीरेण साधयित्वा भक्षयेत् । शुण्ठीचूर्णं कर्षं १, पुरातनगुड़ कर्षं १, तिलचूर्णं पल १, गव्य-दुग्ध शराव २ ॥ ४ ॥

त्रिफलादिचूर्णम्।—

अक्षधात्र्यभयाकृष्णा-चूर्णं मधुयुतं लिहेत् ॥ ६ ॥

सतीनयवशक्तुप्रयोगः।—

दध्नाऽलूनसरेणाद्यात् सतीनयवशक्तुकान्।

अचिरान्मुच्यते शूलान्नरोऽन्नपरिवर्त्तजात् ॥ ७ ॥

तिलादिगुडिका।—

तिलनागरपथ्यानां भागं शम्बूकभस्मनाम्।

द्विभागगुडसंयुक्तां गुडीं कृत्वाऽक्षभागिकाम् ॥ ८ ॥

शीताम्बुपानं पूर्वाह्णे भक्षयेत् क्षीरभोजनः।

सायाह्ने रसकं पीत्वा नरो मुच्येत दुर्जयात् ॥

परिणामसमुत्थाच्च शूलाच्चिरभवादपि ॥ ९ ॥

शम्बूकादिगुडिका।—

शम्बूकं त्र्यूषणञ्चैव पञ्चैव लवणानि च।

समांशां गुडिकां कृत्वा कलम्बूकरसेन वा ॥ १० ॥

प्रातर्भोजनकाले वा भक्षयेत् तु यथाबलम्।

शूलाद्विमुच्यते जन्तुः सहसा परिणामजात् ॥ ११ ॥

---

शम्बूकजमित्यादि।—निर्मांसं स्वल्पशम्बूकमेकं द्वयं वा भस्मीकृत्य उष्णाम्बुना गोलयित्वा घृताभ्यक्तमुखकुहरेण पेयम्। अयं योगः कफे ॥ ५ ॥

अक्षेत्यादि।—स्पष्टम् ॥ ६ ॥

दध्नेत्यादि।—अलूनसरेण अखण्डितस्नेहभागेनेत्यर्थः। "अनूनसरेण" इति पाठेऽपि—स एवार्थः। सतीनो वर्त्तुलकलायः। अन्नपरिवर्त्तोऽन्नपरिणामः ॥ ७ ॥

तिलेत्यादि।—तिलादीनां शम्बूकभस्मान्तानां समभागः। मिलितचूर्णापेक्षया च गुडस्य भागद्वयम्। रसकमिति—मांसरसम् ॥ ८।९ ॥

शम्बूकमित्यादि।—कलम्बूकरसेन वेति वा-शब्दः पूर्वयोगापेक्षया। शम्बूकादि-चूर्णं कलम्बूकरसेन सम्मर्द्य चतुर्माषिका गुडिका कार्य्या। अत्र केचिच्छम्बूकशब्देन शम्बूकभस्म गृह्णन्ति, युक्तञ्चैतत् तन्त्रान्तरसंवादात्; तथा च—"सपञ्चलवणं व्योष-चूर्णं शम्बूकभस्मभिः। गुडिका पक्तिशूलघ्नी कलम्बीस्वरसैः कृता ॥" इति ॥ १०।११ ॥

यवशक्तुप्रयोगः ।—

यः पिबति सततमालं शक्तूनेकान् कलाययूषेण ।
स जयति परिणामरुजं चिरजामपि किमुत नूतनजाम् ? ॥१२॥

त्रिफलालौहः त्रिफलामण्डूरश्च ।—

लौहचूर्णं वरायुक्तं विलीढं मधुसर्पिषा ।
परिणामशूलं शमयेत् तन्मलं वा प्रयोजितम् ॥ १३ ॥

पिप्पल्यादिलौहः ।—

कृष्णाऽभयालौहचूर्णं गुड़ेन सह भक्षयेत् ।
पक्तिशूलं निहन्त्येतज्जठराग्निमन्दताम् ॥
आमवातविकारांश्च स्थौल्यञ्चैवापकर्षति ॥ १४ ॥

पथ्यादिलौहः ।—

पथ्यालौहरजःशुण्ठी-चूर्णं माक्षिकसर्पिषा ।
परिणामरुजं हन्ति वातपित्तकफात्मिकाम् ॥ १५ ॥

---

य इत्यादि ।—शक्तूनिति—यवशक्तून् । एकानिति—केवलान् । कलाययूषः वर्तुलकलाययूषः । अयं योगः पित्तकफशूले युक्तः ॥ १२ ॥

लौहचूर्णमित्यादि ।—वरा त्रिफला । लौहचूर्णस्यैको भागः, त्रिफलायाश्च प्रत्येकं लौहचूर्णसमभागत्वम् । तन्मलं वेति—लौहमलं, तदपि वरायुक्तमिति बोध्यम्; लौहमलस्य तु मिलितत्रिफलातुल्यभागः । मारितपुटितलौहचूर्णं माषा ८, त्रिफलाचूर्णं प्रत्येकं माषा ८। अन्ये तु लौहचूर्णस्य महावीर्यत्वात् व्याधिप्रत्यनीकत्वाच्च प्राधान्यमिति कृत्वा मिलितत्रिफलाचूर्णसमत्वमित्याहुः; तन्मते—लौहचूर्णं कर्षं १ तोला १, त्रिफलाचूर्णं प्रत्येकं तोला १, मिलितचूर्णात् प्रथमतो रक्तिचतुष्टयं गृहीत्वा घृतमधुभ्यां सम्मर्द्य लेह्यम् । लौहान्तरवत् क्षीरं षष्टिगुणं चतुःषष्टिगुणं वाऽनुपेयम् । दिनत्रयानन्तरं रक्तिद्वयेन वृद्धिर्माषकद्वयं यावत्; सर्वमपरं लौहान्तरवत् । तथा शोधितमण्डूर पल १, मिलितत्रिफलाचूर्णं पल १, ततो मिलितचूर्णात् ८ माषा मधुघृताभ्यां लेह्यम् ॥ १३ ॥

कृष्णेत्यादि ।—प्रत्येकं समो भाग इति निश्चलः । अन्ये तु—मिलितसर्वचूर्णसमं लौहचूर्णमित्याहुः ॥ १४ ॥

पथ्येत्यादि ।—अत्रापि हरीतकीशुण्ठीमिलितचूर्णेन समं लौहचूर्णं ग्राह्यं,

सामुद्राद्यं चूर्णम्।—

सामुद्रं सैन्धवं चारो रुचकं रौमकं विड़म्।
दन्ती लौहरजः किट्टं त्रिवृच्छूरणकं समम्॥ १६॥
दधिगोमूत्रपयसा मन्दपावकपाचितम्।
तत् यथाऽग्निबलं चूर्णं पिबेदुष्णेन वारिणा॥ १७॥
जीर्णेऽजीर्णे तु भुञ्जीत मांसादि घृतसाधितम्।
नाभिशूलं यकृच्छूलं गुल्मप्लीहकृतञ्च यत्॥ १८॥
विद्रध्यष्ठीलिकां हन्ति कफवातोद्भवं तथा।
शूलानामपि सर्वेषामौषधं नास्ति तत्परम्॥
परिणामसमुत्थस्य विशेषेणान्तकृन्मतम्॥ १९॥

नारिकेललवणम्।—

नारिकेलं सतोयञ्च लवणेन प्रपूरितम्।
विपक्वमग्निना सम्यक् परिणामजशूलनुत्॥
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम्॥ २०॥

सप्तामृतं लौहम्।—

मधुकं त्रिफलाचूर्णमयोरजः समं लिहन्।
मधुसर्पिर्युतं सम्यक् गव्यं चीरं पिबेदनु॥ २१॥
छर्दिं सतिमिरां शूलमम्लपित्तं ज्वरं क्लमम्।

---

प्रयोगस्य नवायसादिवदित्याहुः। निश्चलस्तु पथ्यादीनां त्रयाणां प्रत्येकं समसामलतामाह॥ १५॥

सामुद्रमित्यादि।—सामुद्रं "करकच" इति ख्यातम्। रुचकं सौवर्चलम्। रौमकं रुमानदीभवं, तदभावे शाम्भरिलवणम्। लौहरजश्च मारितपुटितं लौहचूर्णम्। किट्टञ्च गोमूत्रशोधितमण्डूरचूर्णम्। दधिगोमूत्रपयसेति—दध्यादित्रयं मिलित्वा चतुर्गुणं मिलितचूर्णसमं वा दत्त्वा सर्वमेव चूर्णमेकीकृत्य पक्तव्यम् आ-चूर्णीभावात्। व्यवहारस्तु दध्यादिना चतुर्गुणेनैव॥ १६—१९॥

नारिकेलमित्यादि।—नारिकेलमिह सुपक्वम्॥ २०॥

आनाहं मूत्रसङ्गञ्च शोथञ्चैव निहन्ति सः॥ २२॥

गुड़पिप्पलीघृतम्।—

सपिप्पलीगुड़ं सर्पिः पचेत् क्षीरचतुर्गुणे।
विनिहन्त्यम्लपित्तञ्च शूलञ्च परिणामजम्॥ ॥ २३॥

पिप्पलीघृतम्।—

क्वाथेन कल्केन च पिप्पलीनां
सिद्धं घृतं माक्षिकसम्प्रयुक्तम्।
क्षीरानुपानस्य निहन्त्यवश्यं
शूलं प्रवृद्धं परिणामसंज्ञम्॥ २४॥

कोलादिमण्डूरम्।—

कोलाग्रन्थिकशृङ्गवेरचपलाक्षारैः समं चूर्णितं
मण्डूरं सुरभीजलेऽष्टगुणिते पक्वाऽथ सान्द्रीकृतम्।
तं खादेदशनादिमध्यविरतौ प्रायेण दुग्धान्नभुक्
जेतुं वातकफामयान् परिणतौ शूलञ्च शूलानि च॥२५॥

भीमवटकमण्डूरम्।—

कोलाग्रन्थिकसहितैर्विश्वौषधमागधीयवक्षारैः।
अयसमयोमलरजसां पलिकांशैश्चूर्णितैर्मिश्रैः॥ २६॥

---

मधुकमित्यादि।—अयोरजः समनिति—मिलितसर्वचूर्णसमं लौहरजः। अन्ये त्वेकभागसमं लौहरजश्चाहुः। व्यवहारस्तु पूर्वेणैव॥ २१।२२॥

सपिप्पलीत्यादि।—सपिप्पलीगुड़मिति—पिप्पलीगुड़ौ कल्कौ॥ २३॥

क्वाथेनेत्यादि।—माक्षिकसम्प्रयुक्तमिति—सिद्धशीते मधु पादिकं प्रक्षेप्यम्॥२४॥

कोलेत्यादि।—कोला चवी। चपला पिप्पली। क्षारो यवक्षारः। समं चूर्णितं मण्डूरमिति—सर्वचूर्णसमं मण्डूरम्। सुरभीजले गोमूत्रे। अष्टगुणिते इति मण्डूरापेक्षया। आसन्नपाके कोलादिचूर्णं प्रक्षेप्यम्। समुदितचूर्णापेक्षयाऽष्टगुणं गोमूत्रमित्याहुरन्ये। शूलमिति सान्निपातिकम्। शूलानि चेति वातजादीनि॥ २५॥

अष्टगुणमूत्रयुक्तं क्रमपाकात् पिण्डतां नयेत् सर्वम्।
कोलप्रमाणवटिकास्तिस्रो भोजनादिमध्यविरतौ च॥२७॥
रससर्पिर्यूषपयोमांसैरश्नन् नरो निवारयति।
अन्नविवर्त्तनशूलं गुल्मं प्लीहाग्निसादांश्च॥ २८॥

क्षीरमण्डूरम्।—

लौहकिट्टपलान्यष्टौ गोमूत्रार्द्धाढ़के पचेत्।
क्षीरप्रस्थेन तत् सिद्धं पक्तिशूलहरं नृणाम्॥ २९॥

चविकादिमण्डूरम्।—

लौहकिट्टपलान्यष्टौ गोमूत्रेऽष्टगुणे पचेत्।
चविकानागरक्षार-पिप्पलीमूलपिप्पलीः॥ ३०॥
सञ्चूर्ण्य निक्षिपेत् तस्मिन् पलांशाः सान्द्रतां गते।
गुड़िकाः कल्पयेत् तेन पक्तिशूलनिवारिणीः॥ ३१॥

मण्डूरप्रयोगः लौहप्रयोगश्च।—

मण्डूरं शोधितं पथ्यं लौहजां वा गुड़ेन तु।
भक्षयेन्मुच्यते शूलात् परिणामसमुद्भवात्॥ ३२॥

शतावरीमण्डूरम्।—

संशोध्य चूर्णितं कृत्वा मण्डूरस्य पलाष्टकम्।
शतावरीरसस्याष्टौ दध्नस्तु पयसस्तथा॥ ३३॥

---

कोलाग्रन्थिकेत्यादि।—भीमवटकमण्डूरे कोलप्रमाणा इति—लिखित्वा अष्टमाषक-मानाः, तेनाष्टमाषकैरेव तिस्रो वटिकाः कार्य्याः; व्यवहारस्तु द्वि-त्रि-चतुर्माषकैरिति। अत्रापि मूत्रस्याष्टगुणत्वं पूर्ववत्। अन्नविवर्त्तनशूलं परिणामशूलम्॥ २६—२८॥

लौहेत्यादि।—क्षीरमण्डूरं स्पष्टम्॥ २९॥

लौहकिट्टेत्यादि।—अत्र चविकास्थाने "चपला" पाठेऽपि चविकैवार्थः, हस्तिपिप्पली इत्यन्ये॥ ३०।३१॥

मण्डूरमित्यादि।—लौहजा पथ्यी वज्रपाण्ड्वादिजा सामान्यलौहजा वा पथ्यी पुटादिशोधिता ग्राह्या॥ ३२॥

पलान्यादाय चत्वारि तथा गव्यस्य सर्पिषः।
विपचेत् सर्वमेकध्यं यावत् पिण्डत्वमागतम् ॥ ३४ ॥
सिद्धन्तु भक्षयेन्मध्ये भोजनस्याग्रतोऽपि वा।
वातात्मकं पित्तभवं शूलञ्च परिणामजम् ॥
निहन्त्येव हि योगोऽयं मण्डूरस्य न संशयः ॥ ३५ ॥

तारामण्डूरगुड़ः।—

विड़ङ्गं चित्रकं चव्यं त्रिफला त्र्यूषणानि च।
नवभागानि चैतानि लौहकिट्टसमानि च ॥ ३६ ॥
गोमूत्रं द्विगुणं दत्त्वा मूत्रार्द्धिकगुड़ान्वितम्।
शनैर्मृद्वग्निना पक्वा सुसिद्धं पिण्डतां गतम् ॥ ३७ ॥
स्निग्धे भाण्डे विनिक्षिप्य भक्षयेत् कोलमात्रया।
प्राङ्मध्यान्तक्रमेणैव भोजनस्य प्रयोजितः ॥ ३८ ॥
योगोऽयं शमयत्याशु पक्तिशूलं सुदारुणम्।
कामलां पाण्डुरोगञ्च शोथं मन्दाग्नितामपि ॥ ३९ ॥
अर्शांसि ग्रहणीदोषं क्रिमिगुल्मोदराणि च।
नाशयेदम्लपित्तञ्च स्थौल्यञ्चैवापकर्षति ॥ ४० ॥
वर्जयेच्छुष्कशाकानि विदाह्यम्लकटूनि च।
पक्तिशूलान्तको ह्येष गुड़ो मण्डूरसंज्ञकः ॥
शूलार्त्तानां कृपाहेतोस्तारया परिकीर्त्तितः ॥ ४१ ॥

---

संशोध्येत्यादि।—शतावरीमण्डूरे अग्रतोऽपि वेति वा-शब्दः समुच्चये, तेन भोजनान्ते भोजनमध्ये भोजनस्याग्रतश्च भक्षयेत् इत्यर्थः ॥ ३३—३५ ॥

विडङ्गमित्यादि।—तारामण्डूरे नवभागानि चैतानीति—विड़ङ्गादीनां प्रत्येकमेकभागतया नव भागा ग्राह्याः, वृद्धव्यवहारात्; ते चासन्नपाके प्रक्षेप्याः। लौहकिट्टसमानि चेति—लौहकिट्टस्यापि नवभागत्वम्। गोमूत्रं द्विगुणमिति मिलितचूर्णात्। अत्र पलोल्लेखागतमानत्वात् तथैव व्यवहाराच्च द्वैगुण्यम्। मूत्रार्द्धिकगुड़ान्वितमिति—सर्वचूर्णसमो गुड़ इत्यर्थः। कोलमात्रयेति—अष्टमाषकमानेन ॥ ३६—४१ ॥

रामण्डूरम्।—

वशिरं श्वेतवाट्यालं मधुपर्णी मयूरकम्।
तण्डुलीयञ्च कर्षांशं दत्त्वाऽधश्चोर्द्धमेव च ॥ ४२ ॥
पाक्यं सुजीर्णमण्डूरं गोमूत्रेण दिनद्वयम्।
अन्तर्वाष्पमदग्धञ्च तथा स्थाप्यं दिनत्रयम् ॥ ४३ ॥
विचूर्ण्य द्विगुणेनैव गुड़ेन सुविमर्दितम्।
भोजनस्यादिमध्यान्ते भक्ष्यं कर्षं त्रिभागतः ॥ ४४ ॥
तक्रानुपानं वर्ज्यञ्च वाद्यमम्लकमत्र तु।
अम्लपित्ते च शूले च हितमेतत् यथाऽमृतम् ॥ ४५ ॥

बृहच्छतावरीमण्डूरम्।—

शतावरीरसप्रस्थे प्रस्थे च सुरभीजले।
अजायाः पयसः प्रस्थे प्रस्थे धात्रीरसस्य च ॥ ४६ ॥
लौहकिट्टपलान्यष्टौ शर्करायाश्च षोड़श।
गन्धाश्मकुड़वञ्चैव पचेन्मृद्वग्निना शनैः ॥ ४७ ॥
सिद्धशीते घटे नीते चूर्णानीमानि दापयेत्।
विड़ङ्गत्रिफलाव्योष-यमानीगजपिप्पली- ॥ ४८ ॥
हिजीरकघनानाञ्च श्लक्ष्णान्यक्षसमानि च।
खादेदग्निबलापेक्षी भोजनादौ विचक्षणः ॥ ४९ ॥
निहन्ति पक्तिशूलञ्च अम्लपित्तं सुदारुणम्।
रक्तपित्तञ्च शूलञ्च पाण्डुरोगं हलीमकम् ॥ ५० ॥

---

वशिरमित्यादि।—वशिरं सूर्य्यावर्त्तः। मधुपर्णी गुड़ूची। मयूरकम् अपामार्गः। पाक्यं सुजीर्णमण्डूरं गोमूत्रेण दिनद्वयम् इति—गोमूत्रमल्पमल्पं दत्त्वा दिनद्वयं पक्तव्यं, यथा मण्डूरं न दह्यते, गोमूत्रन्तु एकदैव बहुतरं न देयं, तथा सत्युत्तानवारणं कर्त्तुमशक्यमिति। अवतार्य्य शरावेण पिधाय दिनत्रयं स्थाप्यं, तदनु प्रक्षाल्य शोधयित्वा ग्राह्यम्। भक्ष्यं कर्षं त्रिभागत इति—कर्षमेव भागत्रयं कृत्वा खाद्यम्; व्यवहारस्तु माषकचतुष्टयेन। वाद्यमम्लकमिति—बदरीतिन्तिड़ीफलादिकम्। रामकृतत्वाद्रामण्डूरमेतत् ॥ ४२—५० ॥

रसमण्डूरम् ।—

कुडवं पथ्याचूर्णं द्विपलं गन्धाश्म लौहकिट्टञ्च ।
गुडरसस्यार्द्धपलं भृङ्गस्य रसञ्च केशराजस्य ॥ ५१ ॥
प्रस्थोन्मितञ्च दत्त्वा लौहे पात्रेऽथ दण्डसङ्घट्टम् ।
शुष्कं घृतमधुयुक्तं मृदितं स्थाप्यञ्च भाजने स्निग्धे ॥ ५२ ॥
उपयुक्तमेतदचिरान्निहन्ति कफपित्तजान् रोगान् ।
शूलं तथाऽम्लपित्तं ग्रहणीञ्च कामलामुग्राम् ॥ ५३ ॥

त्रिफलालौहः ।—

अक्षामलकशिवानां स्वरसैश्च पक्वं सुलौहजचूर्णम् ।
सगुडं यद्युपभुङ्क्ते मुञ्चति शूली त्रिदोषजं शूलम् ॥ ५४ ॥

लौहगुडिका ।—

लौहस्य रजसो भागस्त्रिफलायास्त्रयस्तथा ।
गुडस्याष्टौ तथा भागा गुडान्मूत्रं चतुर्गुणम् ॥ ५५ ॥
एतत् सर्वञ्च विपचेत् गुडपाकविधानवित् ।
लिह्याच्च तत् यथाशक्ति क्षये शूले च पाकजे ॥ ५६ ॥

---

कुडवमित्यादि ।—गन्धाश्म शोधितगन्धकचूर्णं द्विपलं, तथा शोधितलौह-मलञ्च द्विपलमित्यर्थः । रसगन्धकौ कज्जलीकृत्य हरीतकीमण्डूरचूर्णाभ्यां सह मिश्रीकृत्य भृङ्गराजस्वरसं केशराजस्वरसञ्च प्रत्येकं प्रस्थमानं दत्त्वा लौहपात्रे लौह-दण्डेनैव तावद्घर्षणीयं यावच्चूर्णप्रायं भवति । अतः प्रथमतः रक्तिचतुष्टयं गृहीत्वा घृतमधुभ्यां सम्मर्द्य लेह्यं, क्षीरादिकमनुपेयम् ; वारान्तरं रक्तिद्वयं कृत्वा वृद्धिर्माषकद्वयं यावत् ॥ ५१—५३ ॥

अक्षामलकेत्यादि ।—स्वरसैरिति मिलित्वा चतुर्गुणैः ; प्रत्येकमित्यन्ये ; व्यव-हारस्तु पूर्वेणैव, स्वरसाभावे क्वाथः । सगुडमिति—लौहरजःसमगुडम् । पाकश्चास्य मुद्रया ; तदुक्तं—"गुडादि प्रविशेत् यत्र तत्र पाकश्च मुद्रया" । लौहान्तर-वद्विधिरत्र ॥ ५४ ॥

लौहस्येत्यादि ।—भाग इति—एको भागः । त्रिफलायास्त्रय इति मिलित्वा । लिह्याच्च रक्तिचतुष्टयादिक्रमेणेत्याहुः ॥ ५५।५६ ॥

धात्रीलौहम्।—

धात्रीचूर्णस्याष्टौ पलानि चत्वारि लौहचूर्णस्य।
यष्टीमधुकरजश्च द्विपलं दद्यादुपले घृष्टम्॥ ५७॥
अमृताक्वाथेनैतच्चूर्णं भाव्यञ्च सप्ताहम्।
चण्डातपेषु शुष्कं भूयः पिष्ट्वा नवे घटे स्थाप्यम्॥ ५८॥
घृतमधुना सह युक्तं भक्तादौ मध्यतोऽन्ते च।
त्रीनपि वारान् खादेत् पथ्यं दोषानुबन्धेन॥ ५९॥
भक्तस्यादौ नाशयति व्याधीन् पित्तानिलोद्भवान्।
मध्येऽन्नविष्टम्भं जयति नृणां विदह्यते नान्नम्॥ ६०॥
पानान्नकृतान् दोषान् भुक्त्यन्ते शीलितं जयति।
एवं जीर्य्यति चान्ने शूलं नृणां सुकष्टमपि॥ ६१॥
हरति सहसा युक्तो योगश्चायं जरत्पित्तम्।
चक्षुष्यः पलितघ्नः कफपित्तसमुद्भवान् जयेद्रोगान्॥
प्रसादयत्यपि रक्तं पाण्डुत्वं कामलां जयति॥ ६२॥

लौहामृतम्।—

तनूनि लौहपत्राणि तिलोत्सेधसमानि च।
कशिकामूलकल्केन संलिप्य सर्षपेण वा॥ ६३॥
विशोष्य सूर्य्यकिरणैः पुनरेवावलेपयेत्।
त्रिफलाया जले ध्मातं निर्वाप्य च पुनः पुनः॥ ६४॥
ततः सञ्चूर्णितं कृत्वा कर्पटेन तु छानयेत्।
भक्षयेन्मधुसर्पिर्भ्यां यथाऽग्नेरतत् प्रयोजयेत्॥ ६५॥
माषकं त्रिगुणं वाऽथ चतुर्गुणमथापि वा।

---

धात्रीत्यादि।—अमृताक्वाथेन आमलकीक्वाथेन। अन्ये त्वमृतां गुडूचीमाहुः; व्यवहारस्तु पूर्वस्यैव। जरत्पित्तम् अम्लपित्तम्॥ ५७—६२॥

तनूनीत्यादि।—कशिकामूलकल्केन श्वेतार्कमूलकल्केन श्वेतसर्षपकल्केन वा पुनः पुनः परिलिप्य पुनः पुनरातपे संशोष्य ततः पुनः पुनः दग्ध्वा त्रिफलाक्वाथे निर्वापणं

छागस्य पयसः कुर्य्यादनुपानमभावतः ॥ ६६ ॥
गवां घृतेन दुग्धेन चतुःषष्टिगुणेन च।
पक्तिशूलं निहन्त्येतन्मासेनैकेन निश्चितम् ॥
लौहामृतमिदं श्रेष्ठं ब्रह्मणा निर्मितं पुरा ॥ ६७ ॥
ककारपूर्वकं यच्च यच्चाम्लं परिकीर्त्तितम्।
सेव्यं तन्न भवेदत्र मांसञ्चानूपसम्भवम् ॥ ६८ ॥

खण्डामलकी।—

स्विन्नपीड़ितकुष्माण्डात् तुलाऽर्द्धं भृष्टमाज्यतः।
प्रस्थार्द्धे खण्डतुल्यन्तु पचेदामलकीरसात् ॥ ६९ ॥
प्रस्थे सुस्विन्नकुष्माण्ड-रसप्रस्थे विघट्टयन्।
दर्व्या पाकं गते तस्मिंश्चूर्णीकृत्य विनिक्षिपेत् ॥ ७० ॥
द्वे द्वे पले कणाऽजाजी-शुण्ठीनां मरिचस्य च।
पलं तालीशधन्याक-चातुर्जातकमुस्तकम् ॥ ७१ ॥
कर्षप्रमाणं प्रत्येकं प्रस्थार्द्धं माक्षिकस्य च।
पक्तिशूलं निहन्त्येतद्दोषत्रयभवञ्च यत् ॥ ७२ ॥
छर्द्यम्लपित्तमूर्च्छांश्च कासश्वासावरोचकम्।
हृच्छूलं रक्तपित्तञ्च पृष्ठशूलञ्च नाशयेत् ॥
रसायनमिदं श्रेष्ठं खण्डामलकसंज्ञितम् ॥ ७३ ॥

त्रयोदशाङ्ग-नारिकेलखण्डः।—

कुड़वमितमिह स्यान्नारिकेलं सुपिष्टं
पलपरिमितसर्पिः-पाचितं खण्डतुल्यम्।

---

तावत् कार्य्यं यावत् सर्वलौहस्य मारणं भवेत्, ततः प्रक्षाल्य संशोष्य चूर्णीकृतस्य रक्तिचतुष्टयादिक्रमेण नवायसादिवदस्योपयोगः। कश्चित्तु—"कासिकामूलकल्केन" इत्यत्र "श्वेतसर्षपकल्केन परिलिप्य पुनः पुनः" इति पाठान्तरम् ॥ ६३—६८ ॥

स्विन्नेत्यादि।—खण्डामलक्यां खण्डतुल्यमिति—खण्डस्य पञ्चाशत्पलानि। मरिचस्य च पलमित्यन्वयः। तालीशादिकञ्च प्रत्येकं कर्षमानमित्यर्थः ॥ ६९—७३ ॥

कुड़वमित्यादि—अत्र केचिन्नारिकेलस्यार्द्रत्वेन द्विगुण्यमिच्छन्ति, अत एवोक्तम्—

निजपयसि तदेतत् प्रस्थमात्रे विपक्वं
गुड़वदथ सुशीते शाणभागान् क्षिपेच्च ॥ ७४ ॥
धन्याकपिप्पलिपयोदतुगाद्विजीरान्
शाणं त्रिजातमिभकेशरवह्निचूर्णं ।
हन्त्यम्लपित्तमरुचिं क्षयमस्रपित्तं
शूलं वमिं सकलपौरुषकारि हारि ॥ ७५ ॥

कलायगुड़िका ।—

कलायचूर्णभागौ द्वौ लौहचूर्णस्य चापरः ।
कारवेल्लपलाशानां रसेनैव विमर्दितः ॥ ७६ ॥
कर्षमात्रां ततश्चैकां गुड़िकां भक्षयेन्नरः ।
मण्डानुपानाज्जयति जरत्पित्तं सुदुर्जयम् ॥ ७७ ॥

त्रिफलादिचूर्णद्वयम् ।—

लिह्याद्वा त्रैफलं चूर्णमयश्चूर्णसमन्वितम् ।

---

"अष्टौ पलानि कुड़वो नारिकेले तथैव च" इति। ये च द्वैगुण्यं नेच्छन्ति तेषामयमभिप्रायः, नारिकेलस्याष्टपलत्वे खण्डस्याप्यष्टपलत्वं, खण्डतुल्यमिति वचनात्, अतश्चात्र नारिकेलोदकप्रस्थस्य द्रवत्वेनोपादानात् पाकस्य द्वैगुण्यं प्रसज्येत, चतुर्गुणत्वमार्गसिद्धः; किञ्च तन्त्रान्तरे चातुर्गुण्यमुक्तं यथा—"कुड़वं नारिकेलस्य श्लक्ष्णं दृषदि पेषितम्। गुड़खण्डस्य कुड़वं सर्वमेतच्चतुर्गुणे ॥ आलोड्य नारिकेलस्य जले मृद्वग्निना पचेत् ॥" इति। अस्मिन् वचने शर्करायाः अपि कुड़वमुक्तं, तत्र च न द्वैगुण्यं "ग्राह्यास्तत्समानमेव न द्विगुणिता ये चेत्तु जाता घनाः" इत्युक्तेः, अत्र च खण्डतुल्यमिति पठ्यते; तथा च नारिकेलस्य शस्यकुड़वाद्वैगुण्येन परमनयोर्नारिकेलखण्डयोः समता स्यात्, नान्यथेति; तेन द्वैगुण्याभावपक्ष एव साधीयान्; "नारिकेले तथैव च" इति वाक्यं नादरणीयमार्षत्वे प्रमाणाभावादित्याहुः। तुगा वंशलोचना। नागकेशरसहितं त्रिजातं मिलित्वा शाणमात्रं, पुनः शाणमित्युक्तेः। पौरुषं शुक्रम्। हारि मनोहारि ॥ ७४।७५ ॥

कलायेत्यादि।—कलायो वर्त्तुलकलायः। लौहचूर्णस्य चापर इत्येको भागः। पलाशानामिति—पत्राणाम्। मण्डो यवमण्डः। जरत्पित्तमम्लपित्तम् ॥ ७६।७७ ॥

यष्टिचूर्णेन वा युक्तं लिह्यात् चौद्रेण तद्गदे ॥ ७८ ॥

अन्नद्रवशूलचिकित्सा।—

पित्तान्तं वमनं कृत्वा कफान्तञ्च विरेचनम्।
अन्नद्रवे च तत् कार्य्यं जरत्पित्ते यदीरितम् ॥
आमपक्वाशये शुद्धे गच्छेदन्नद्रवः शमम् ॥ ७९ ॥

माषेण्डरीप्रयोगः।—

माषेण्डरी सतुषिका स्विन्ना सर्पिर्युता हिता ॥ ८० ॥

गोधूमप्रयोगः।—

गोधूममण्डकं तत्र सर्पिषा गुड़संयुतम्।
सांसतं शीतदुग्धेन मृदितं वा हितं मतम् ॥ ८१ ॥

शालि यव-घृतपूरप्रयोगाः।—

शालितण्डुलमण्डं वा कवोष्णं सिक्थवर्जितम्।
वाट्यं चीरेण संसद्धं घृतपूरं सशर्करम् ॥ ८२ ॥

शर्करा-चणकशक्तुप्रयोगौ।—

शर्करां भक्षयित्वा वा चीरमुत्क्वथितं पिबेत्।
पटोलपत्रयूषेण खादेच्चणकशक्तुकान् ॥ ८३ ॥

---

लिह्यादित्यादि।—मिलितत्रिफलाचूर्णस्य लौहचूर्णसमत्वम्। अन्ये तु—त्रिफलायाः प्रत्येकं लौहचूर्णसमोऽंश इत्याहुः। तद्गदे इति—जरत्पित्ते ॥ ७८ ॥

पित्तान्तमित्यादि।—अन्नद्रवे इति—"भुक्ते जीर्य्यत्यजीर्णे वा यच्छूलमुपजायते" (मा० नि० शूल०) इत्यादिनोक्तः शूलविशेषोऽन्नद्रवः ॥ ७९ ॥

माषेण्डरीत्यादि।—माषेण्डरी सतुषिकेति—सतुषमाषकृता माषेण्डरी माषपिष्टकविकृतिर्भक्ष्यविशेषः ॥ ८० ॥

गोधूमेत्यादि।—गोधूममण्डकं गोधूमकृतो भक्ष्यविशेषः पश्चिमदेशे प्रसिद्धः। मृदितं वा हितं मतमिति—मृदितं संयावाकृतिर्लिङ्गः ॥ ८१ ॥

शालीत्यादि।—वाट्य यवमण्डम्। वाट्यमित्यत्र "मण्डम्" इति पाठे—शालितण्डुलकृतमण्ड इत्यर्थः; किन्तु यवस्य सर्वथा शूलघ्नत्वात् वाट्यमिति पाठ एव श्रेयान्। घृतपूरी गोधूमचूर्णकृतः घृतभृष्टो भक्ष्यविशेषः ॥ ८२ ॥

अन्नद्रवशूले अल्पमात्रया आहारोपदेशः ।—

अन्नद्रवे जरत्पित्ते वह्निर्मन्दो भवेत् यतः ।
तस्मादत्रान्नपानानि मात्राहीनानि कल्पयेत् ॥ ८४ ॥

इति परिणाम-शूल-चिकित्सा ।

---

## अथोदावर्त्त-चिकित्सा ।

आहारविधिः ।—

त्रिवृत्सुधापत्रतिलादिशाक-ग्राम्यौदकानूपरसैर्यवान्नम् ।
अन्यैश्च सृष्टानिलमूत्रविड्भिरद्यात् प्रसन्नागुड़शीधुपायी ॥ १ ॥

वातनिरोधजे आस्थापनोपदेशः ।—

आस्थापनं मारुतजे स्निग्धस्विन्नस्य शस्यते ॥ २ ॥

पुरीषनिरोधजे वस्त्युपदेशः ।—

पुरीषजे तु कर्त्तव्यो विधिरानाहिकस्तु यः ।
क्षारवैतरणौ वस्ती युञ्ज्यात् तत्र चिकित्सकः ॥ ३ ॥

---

शर्करामित्यादि ।—पटोलेत्यादौ यषो मुद्गादियोगात् किंवा क्वाथः ॥ ८३।८४ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां परिणाम-शूल-चिकित्सा-विवृतिः ॥

---

पवनाभिनाभाविनधायकत्वात् शूलानन्तरमुदावर्त्तः । उदावर्त्ते हि सर्वत्र शूल-वदवश्यभावी वायुः ; यदुक्तं सुश्रुते,—"सर्वेष्वेतु विधिवदुदावर्त्तेषु कृतस्नशः । वायोः क्रिया विधातव्या स्वमार्गप्रतिपत्तये" ॥ (उ० ५५ अ०) इति । "उद्धतेन वेगविधारणेना-वृतस्य निरुद्धस्य वायोरावर्त्तो वर्त्तनमुदावर्त्तः" इति निरुक्तिरस्य । त्रिवृदित्यादि ।—त्रिवृत्सुधयोः पत्रम् । आदिशब्दात् सतलादिपत्रपरिग्रहः । अन्यैरिति—विषमूत्रानु-लोमनैः क्षीरादिभिः । प्रसन्ना मदिराविशेषः । गुडकृतशीधुर्गुड़शीधुः ॥ १ ॥

आस्थापनमित्यादि सुश्रुतस्य ।—मारुतजे इति—मारुतवेगविघातजे ; एवं पुरीषजे इत्यत्रापि व्याख्येयम् ॥ २ ॥

पुरीषजे इत्यादि ।—विधिरानाहिक इति—फलवर्त्त्यादिः । आस्थापनं विदधीत, क्षारवैतरणाविप्यादिना ॥ ३ ॥

पुरीषनिरोधजे श्यामादिगण: ।—

श्यामा दन्ती द्रवन्तीत्वक् महाश्यामा स्नुही त्रिवृत् ।
सप्तला शङ्खिनी श्वेता राजवृक्ष: सतिल्वक: ॥ ४ ॥
कम्पिल्लक: करञ्जश्च स्वर्णक्षीरीत्ययं गण: ।
सर्पिस्तैलरज:क्वाथ-कल्केष्वन्यतमेन च ॥
उदावर्त्तोदरानाह-विषगुल्मविनाशन: ॥ ५ ॥

पुरीषनिरोधजे त्रिवृदादिगुडिका ।—

त्रिवृत्कृष्णाहरीतक्यो द्विचतु:पञ्चभागिका: ।
गुडिका गुडतुल्यास्ता विड्विबन्धगदापहा: ॥ ६ ॥

पुरीषनिरोधजे हरीतक्यादिचूर्णम् ।—

हरीतकीयवक्षार-पीलुनी त्रिवृता तथा ।
घृतैश्चूर्णमिदं पेयमुदावर्त्तविनाशनम् ॥ ७ ॥

पुरीषनिरोधजे द्विरुत्तरं हिङ्ग्वादि चूर्णम् ।—

हिङ्गुकुष्ठवचासर्जी-विड्ञ्चेति द्विरुत्तरम् ।
पीतं मद्येन तच्चूर्णमुदावर्त्तविनाशनम् ॥ ८ ॥

---

श्यामेत्यादि ।—श्यामा श्याममूला त्रिवृत् । द्रवन्ती मूषिकपर्णी दन्ती, तस्यास्त्वक् । त्वगित्यत्र "स्नुक्" इति पाठे—सीजुभेदो वा ; किन्तु सुश्रुते वाग्भटे च स्नुहीद्वयं न पठ्यते । महाश्यामा वृद्धदारक: । त्रिवृदिति—अरुणमूला त्रिवृत् । सप्तला चर्मकषा, नीलवृक्षेत्येके । शङ्खिनी श्वेतवृक्षा, ढोलकलम्बीत्यन्ये । श्वेता श्वेतापराजिता, कटभी वा । राजवृक्ष: शोणालुफलम् । तिल्वकोऽत्र सावरलोध्र: । कम्पिल्लो गुण्डारोचनी । हेमक्षीरी कङ्कुष्ठम् । अन्यतमेनेति—सर्पिरादिकल्पमध्ये चैकतमेन कल्पेन, प्रयुक्त इति शेष: ॥ ४।५ ॥

त्रिवृदित्यादि ।—अत्र द्विचतु:पञ्चभागिका इति यथाक्रमम् । गुडतुल्या इति—समुदितचूर्णतुल्यो गुडभाग: ॥ ६ ॥

हरीतकीत्यादि ।—पीलुनीति—मूर्वा ; "पीलूनि" इति पाठान्तरे—पीलु क्षीरापथिकफलम् ; इदमेव युक्तं, संसकत्वात् ॥ ७ ॥

हिङ्ग्वित्यादि सुश्रुतस्य ।—सर्जि: सर्जिक्षार: । द्विरुत्तरमिति—यथोत्तरं द्विगुणम् ॥ ८ ॥

पुरीषनिरोधजे नाराचचूर्णम्।—

खण्डपलं त्रिवृता सममुपकुल्याकर्षचूर्णितं श्लक्ष्णम्।
प्राग्भोजने च समधु विड़ालपदकं लिहेत् प्राज्ञः॥ ९॥
एतत् गाढ़पुरीषे पित्ते कफे च विनियोज्यम्।
सुस्वादुर्नृपयोग्योऽयं चूर्णो नाराचको नाम्ना॥ १०॥

पुरीषनिरोधजे रसोनसुरा।—

रसोनं मद्यसम्मिश्रं पिबेत् प्रातः प्रकाङ्क्षितः।
गुल्मोदावर्त्तशूलघ्नं दीपनं बलवर्द्धनम्॥ ११॥

पुरीषनिरोधजे हिङ्ग्वादिवर्त्तिः।—

हिङ्गुमाक्षिकसिन्धूत्थैः पक्त्वा वर्त्तिं सुनिर्मिताम्।
घृताभ्यक्तां गुदे दद्यादुदावर्त्तविनाशिनीम्॥ १२॥

पुरीषनिरोधजे मदनादिफलवर्त्तिः।—

मदनं पिप्पली कुष्ठं वचा गौराश्च सर्षपाः।
गुड़क्षारसमायुक्ता फलवर्त्तिः प्रशस्यते॥ १३॥

पुरीषनिरोधजे आगारधूमादिवर्त्तिः।—

आगारधूमसिन्धूत्थ-तैलयुक्ताम्लमूलकम्।
क्षुसं निर्गुण्डिपत्रं वा स्विन्ने पायौ क्षिपेत् बुधः॥१४॥

---

खण्डपलमित्यादि।—नाराचचूर्णे त्रिवृता समामिति—त्रिवृच्चूर्णस्यापि पलम्। उपकुल्या पिप्पली। प्राग्भोजने इति—भोजनपरिणामे, भोजनसन्निधाने वा॥९।१०॥

रसोनमित्यादि।—यद्यप्ययं योगः शूलाधिकारे पूर्वमुक्त एव, तथाऽप्युदावर्त्तेऽपि विहितत्वात् पुनरप्यत्र लिखितः॥ ११॥

हिङ्गुमाक्षिकेत्यादि।—हिङ्गु माषा ४, सैन्धव कर्ष १, मधु पल १, एवं व्यवहारात् गृहीत्वा पक्त्वा च फलवर्त्तिं कुर्यात्। हिङ्गुसैन्धवे समे, वर्त्तिकरणोचितं मधु देयमित्यन्ये। गुड़पाकवदस्य पाकः, तदवस्थायामेव वर्त्तिः कर्त्तव्या, ततो घृतेनाभ्यज्य गुदे क्षिपेत्॥ १२॥

मदनमित्यादि।—अत्र गुड़ो मिलितचूर्णसमः। गुड़स्य मनाक् जलं दत्त्वा पक्त्वा च वर्त्तिं कुर्यादित्यर्थः॥ १३॥

आगारधूमेत्यादि।—आगारधूमोऽगारधूमः। अम्लमूलकं काञ्जिकमूलकं त्रिकटुक-

मूत्रनिरोधजे मद्यादिप्रयोगः।—

सौवर्चलाढ्यां मदिरां मूत्रे त्वभिहते पिबेत्।
एलां वाऽप्यथ मद्येन क्षीरवारि पिबेच्च सः॥ १५॥

मूत्रनिरोधजे दुरालभास्वरसादियोगत्रयम्।—

दुःस्पर्शास्वरसं वाऽपि कषायं ककुभस्य वा।
एर्वारुबीजं तोयेन पिबेद्वाऽऽलवणीकृतम्॥ १६॥

मूत्रनिरोधजे पञ्चमूलीक्षीर-द्राक्षारसौ।—

पञ्चमूलीशृतं क्षीरं द्राक्षारसमथापि वा।
सर्वथैवोपयुञ्जीत मूत्रकृच्छ्राश्मरीविधिम्॥ १७॥

जृम्भाऽश्रुनिरोधजयोः चिकित्साविधिः।—

स्नेहस्वेदैरुदावर्त्तं जृम्भजं समुपाचरेत्।
अश्रुमोक्षोऽश्रुजे कार्यः स्वप्नो मद्यं प्रियाः कथाः॥ १८॥

---

मिति। अङ्गुलिनिभं शङ्कुं कृत्वा श्लक्ष्णसैन्धवचूर्णतैले म्रक्षयित्वा स्विन्ने गुदे प्रचेतव्यम्। निर्गुण्डी सिन्धुवारः, तत्पत्रमपि चूर्णीकृत्य आगारधूमादिमिश्रितं स्विन्ने गुदे प्रचेतव्यम्॥ १४॥

सौवर्चलेत्यादि सुश्रुतस्य।—अत्र "सिन्धूत्थगरवाद्यास्तु माषिकाः" इत्यत्राद्य-पदेन सङ्गृहीतत्वात् सौवर्चलस्य माषकचतुष्टयं, मदिरा चाहारद्रव्यत्वात् प्रचुरा ग्राह्या; व्यवहारस्तु मदिरापलद्वयेन। एलां वाऽप्यथ मद्येनेति—एलाचूर्णस्याष्टौ माषकाः, मद्यस्य च पलद्वयमित्याहुः। क्षीरवारीति—समेन क्षीरेण मिश्रितं वारीत्यर्थः॥ १५॥

दुःस्पर्शेत्यादि सुश्रुतस्य।—दुःस्पर्शा दुरालभा; "दुःस्पर्शास्वरसम्" इति पाठे—दुःस्पर्शा कण्टकारीत्यन्ये। ककुभोऽर्जुनः। एर्वारुः क्षीरभवा कर्कटीति डल्लनः। आ-लवणीकृतमिति—सैन्धवयोगादीषल्लवणीकृतमिति, एतच्च एर्वारुबीजमित्यनेनैव सम्बध्यते, न तु पूर्वेण॥ १६॥

पञ्चमूलीत्यादि।—पञ्चमूली स्वल्पा, समानतन्त्रभोजसंवादात्; यथा—"लघुना पञ्चमूलेन शृतं क्षीरं पिबेन्नरः" इति। श्रीकण्ठदत्तस्तु तृणपञ्चमूलीत्याह। सर्वथैव कार्त्स्न्येन, सुश्रुतेऽपि "निरवशेषतः" (उ० ५५ अ०) इत्युक्तम्॥ १७॥

स्नेहेत्यादि।—जृम्भजमिति—जृम्भावेगविघातजम्; एवमुत्तरत्रापि। अश्रुमोक्षोऽश्रुनिःसरणं, तच्च तीक्ष्णाञ्जनादिविधिना॥ १८॥

क्षवनिरोधजे चिकित्साविधिः ।—

क्षवजे क्षवपत्रेण घ्राणस्थेनानयेत् क्षवम् ।
तथोर्द्ध्वजत्रुकोऽभ्यङ्गः स्वेदो धूमः सनावनः ॥
हितं वातघ्नमाद्यञ्च घृतञ्चौत्तरभक्तिकम् ॥ १९ ॥

उद्गारनिरोधजे चिकित्साविधिः ।—

उद्गारजे क्रमोपेतं स्नैहिकं धूममाचरेत् ॥ २० ॥

छर्द्दिनिरोधजे चिकित्साविधिः ।—

छर्द्द्याघातं यथादोषं नस्यस्नेहादिभिर्जयेत् ।
भुक्त्वा प्रच्छर्दनं धूमो लङ्घनं रक्तमोक्षणम् ॥
रूक्षान्नपानं व्यायामो विरेकश्चात्र शस्यते ॥ २१ ॥

शुक्रनिरोधजे चिकित्साविधिः ।—

वस्तिशुद्धिकरावापं चतुर्गुणजलं पयः ।
आ-वारिनाशात् क्वथितं पीतवन्तं प्रकामतः ॥
रमयेयुः प्रिया नार्य्यः शुक्रोदावर्त्तिनं नरम् ॥ २२ ॥
तत्राभ्यङ्गावगाहाश्च मदिराश्चरणायुधाः ।
शालिः पयो निरूहाश्च हितं मैथुनमेव च ॥ २३ ॥

क्षुत्तृष्णानिरोधजयोः चिकित्साविधिः ।—

क्षुद्विघाते हितं स्निग्धमुष्णमल्पञ्च भोजनम् ।

---

क्षवजे इत्यादि ।—क्षवपत्रेणेति—हाचियापत्रेण । ऊर्द्ध्वजत्रुकोऽभ्यङ्ग इति—ऊर्द्ध्वजत्रुदेशेऽभ्यङ्गः कार्य्यः । आद्यं भक्ष्यम् ॥ १९ ॥

उद्गारजे इत्यादि ।—क्रमोपेतमिति—स्नैहिकधूमपानोक्तक्रमयुक्तम् ॥ २० ॥

छर्द्याघातमित्यादि सुश्रुतस्य ।—छर्द्याघातमिति—छर्द्दी वेगविघातजं रोगं कुष्ठ-वीसर्पादिकं, कार्य्यकारणयोरभेदोपचारात् ; एवं क्षुद्विघात इत्यादावपि व्याख्येयम् । यथादोषमिति—यस्तत्रानु दूषको दोषश्छर्द्दिविघातजरोगे जातस्तद्विपरीतैर्नस्यादिभिर्जयेदित्यर्थः ॥ २१ ॥

वस्तिशुद्धिकरावापमित्यादि ।—वस्तिशुद्धिकराणीह तृणपञ्चमूली-वीरतरादीनि, आवाप इति—क्षीरसाधनार्थं कल्कः स यत्र तत्तथा । रमयेयुः मैथुने योजयेयुः ।

तृष्णाऽऽघाते पिबेन्मन्थं यवागूं वाऽपि शीतलाम् ॥ २४ ॥

श्रमश्वास-निद्रानिरोधजयोः चिकित्साविधिः ।—

रसेनाद्यात् सुविश्रान्तः श्रमश्वासातुरो नरः ।
निद्राऽऽघाते पिबेत् क्षीरं स्वप्नः संवाहनानि च ॥ २५ ॥

इत्युदावर्त्त-चिकित्सा ।

---

## अथानाह-चिकित्सा ।

क्रियासूत्रम् ।—

उदावर्त्तक्रियाऽऽनाहे सामे लङ्घनपाचनम् ॥ १ ॥

द्विरुत्तरहिङ्ग्वादिचूर्णम् ।—

द्विरुत्तरा हिङ्गु वचा सकुष्ठा सुवर्चिका चेति विडङ्गचूर्णम् ।
सुखाम्बुनाऽऽनाहविसूचिकाऽऽर्त्ति-हृद्रोगगुल्मोर्द्ध्वसमीरणघ्नम् ॥२॥

वचादिचूर्णम् ।—

वचाभयाचित्रकयावशूकान् सपिप्पलीकातिविषान् सकुष्ठान् ।
उष्णाम्बुनाऽऽनाहविमूढवातान् पीत्वा जयेदाशु हितौदनाशी ॥ ३ ॥

---

अवगाहो वातपित्तहरद्रव्यक्वाथे कोष्णे बोध्यः । चरणायुधाः कुक्कुटाः । निरूहाश्चेति—निरूह उत्तरवस्तिश्चेति चकारात् ॥ २२—२४ ॥

रसेनेत्यादि ।—सुविश्रान्त इति—विरतक्रियः । निद्राघाते इत्यादि ।—क्षीरमिह माहिषं, निद्राकरत्वादित्याहुः ; अन्ये तु—प्रधानकल्पतया गोक्षीरमित्याहुः ; अत एव तन्त्रान्तरं—"निद्राघाते पिबेत् क्षीरं गोः सुप्यादथ मानवः" इति ॥ २५ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायाम् उदावर्त्त-चिकित्सा-विवृतिः ।

---

आनाहचिकित्सामाह—उदावर्त्तेत्यादि ॥ १ ॥

द्विरुत्तरेत्यादि ।—द्विरुत्तरेति—यथोत्तरद्विगुणा इत्यर्थः । सुखाम्बुनेत्यनन्तरं पीतमिति शेषः ॥ २।३ ॥

त्रिवृतादि वटिका।—

त्रिवृद्धरीतकीश्यामाः स्नुहीक्षीरेण भावयेत्।
वटिका मूत्रपीतास्ताः श्रेष्ठाश्चानाहभेदिकाः॥ ४॥

वैरेचनिकलवणम्।—

फलञ्च मूलञ्च विरेचनोक्तं हिङ्ग्वर्कमूलं दशमूलमग्रम्।
स्नुक्चित्रकौ चैव पुनर्नवा च तुल्यानि सर्वैर्लवणानि पञ्च॥ ५॥
स्नेहैः समूत्रैः सह जर्जराणि शरावसन्धौ विपचेत् सुलिप्ते।
पक्वं सुपिष्टं लवणं तदन्नैः पानैस्तथाऽऽनाहरुजाघ्नमग्रम्॥ ६॥

मदनादिवर्त्तिः।—

राठधूमविडव्योष-गुडमूत्रैर्विपाचिता।
गुदेऽङ्गुष्ठसमा वर्त्तिर्विधेयाऽऽनाहशूलनुत्॥ ७॥

त्रिकटुकादिवर्त्तिः।—

वर्त्तिस्त्रिकटुकसैन्धव-सर्षपगृहधूमकुष्ठमदनफलैः।
मधुनि गुडे वा पक्वा पायावीरिता चाङ्गुष्ठपरिमाणा॥ ८॥
वर्त्तिरियं दृष्टफला शनैः शनैः प्रणिहिता घृताभ्यक्ता।
आनाहोदावर्त्तप्रशमनी जठरगुल्मविनाशिनी॥ ९॥

---

त्रिवृदित्यादि।—त्रिवृदिति—अरुणमूला त्रिवृत्। श्यामा श्याममूला त्रिवृत्। वटिकेयं माषकद्वयेन व्यवहृता। योगोऽयमतिक्रूरकोष्ठे॥ ४॥

फलञ्चेत्यादि।—विरेचनोक्तमिति—दीर्घञ्जीवितीयेऽपामार्गतण्डुलीये वा विरेचनकर्मणि यदुक्तम्। हिङ्गुस्थाने "हिंस्रा" इति पाठान्तरम्। शरावसन्धाविति—अन्तःस्थ-भेषजस्यालोशरावसन्धावित्यर्थः। विपचेदिति—दहेत्। पक्वमिति—दग्धम्। अग्र्यमिति—श्रेष्ठम्॥ ५।६॥

राठेत्यादि।—राठो मदनफलम्। धूमो गृहधूमः, झुलन्झूल इति यावत्। यावता गुडेन मूत्रेण च पाकात् वर्त्तिं कर्त्तुं शक्यते तावदुभयं देयमिति॥ ७॥

वर्त्तिरित्यादि।—मिलित्वा त्रिकट्वादीनां कर्ष १, मधु पल १, गुड कर्ष १ इत्येके; युक्त्या त्रिकटुकादिकं गृहीत्वा वर्त्तिः कर्त्तव्येत्यन्ये। गुडे वेति वा-शब्दोऽत्र पूर्वयोगापेक्षया समुच्चये वा द्रष्टव्यः॥ ८,९॥

शुष्कमूलकाद्यं घृतम् ।—

मूलकं शुष्कमार्द्रञ्च वर्षाभूर्मूलपञ्चकम् ।
आरेवतफलञ्चापि पिष्ट्वा तेन पचेत् घृतम् ।
तत् पीयमानं शमयेदुदावर्त्तमसंशयम् ॥ १० ॥

स्थिराद्यं घृतम् ।—

स्थिरादिवर्गस्य पुनर्नवायाः
सम्पाकपूतीककरञ्जयोश्च ।
सिद्धः कषायो द्विपलांशिकानां
प्रस्थो घृतात् स्यात् प्रतिरुद्धवाते ॥ ११ ॥

इत्यानाह-चिकित्सा ।

---

# अथ गुल्म-चिकित्सा ।

क्रियासूत्रम् ।—

लघ्वन्नं दीपनं स्निग्धमुष्णं वातानुलोमनम् ।
बृंहणं यद्भवेत् सर्वं तद्धितं सर्वगुल्मिनाम् ॥ १ ॥
स्निग्धस्य भिषजा स्वेदः कर्त्तव्यो गुल्मशान्तये ।
स्रोतसां मार्द्दवं कृत्वा जित्वा मारुतमुल्वणम् ॥
भित्त्वा विबन्धं स्निग्धस्य स्वेदो गुल्ममपोहति ॥ २ ॥

---

मूलकमित्यादि सुश्रुतस्य ।—शुष्कमिति मूलकविशेषणम् । आर्द्रकमिति—आर्द्रककन्दः । डल्लनस्तु शुष्कमिति मूलकार्द्रयोर्विशेषणमाह । मूलपञ्चकमिति—बिल्वादिपञ्चमूलं, कफवातकृतविबन्धहन्तृत्वादिति जेज्जड़ः ; स्वल्पपञ्चमूलमिति भानुमती । आरेवतफलं स्वर्णालुफलम् । अकल्कमिदं घृतम् ॥ १० ॥

स्थिरादीत्यादि ।—स्थिरादिवर्गस्य शालपर्ण्यादिपञ्चमूलस्य । सम्पाकः शोनालुफलम् । द्विवचनबलात् पूतिकेति करञ्जफलविशेषणं, तेन लाटाकरञ्ज इत्यर्थः ॥ ११ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायाम् आनाह-चिकित्सा विवृतिः ।

---

गुल्मेऽप्यानाहो भवतीत्यानाहानन्तरं गुल्मः । लघ्वन्नमित्यादि ।—अष्टम् ।

कुम्भीपिण्डेष्टकास्वेदान् कारयेत् कुशलो भिषक्।
उपनाहाश्च कर्त्तव्याः सुखोष्णाः शाल्वणादयः॥ ३॥
स्थानावसेको रक्तस्य बाहुमध्ये शिराव्यधः।
स्वेदोऽनुलोमनञ्चैव प्रशस्तं सर्वगुल्मिनाम्॥ ४॥

खाद्यानि।—

पेया वातहरैः सिद्धा कौलत्था धन्वजा रसाः।
खड़ाः सपञ्चमूलाश्च गुल्मिनां भोजने हिताः॥ ५॥

## वातगुल्मचिकित्सा।

मातुलुङ्गरसादियोगः।—

मातुलुङ्गरसो हिङ्गु दाड़िमं विड़सैन्धवम्।
सुरामण्डेन पातव्यं वातगुल्मरुजापहम्॥ ६॥

नागरादियोगः।—

नागरार्द्धपलं पिष्टं द्वे पले लुञ्चितस्य च।

---

कुम्भीत्यादि सुश्रुतस्य।—वातहरक्काथादिभिः पूर्णाभिः अन्तर्वाष्पाभिः कुम्भीभिः कलसीभिः स्वेदनम; तथा उत्स्विन्नमाषादिपिण्डकैर्वस्त्रबद्धैः स्वेदः पिण्डस्वेदः। इष्टकया च तप्तया वातहरक्काथसिक्तया स्वेदः इष्टकास्वेदः। शाल्वणादयः इति 'आदिशब्देन वेशवारादिपरिग्रहः। स्थानावसेको रक्तस्येति—स्थिरगुल्मे गुल्मस्थानाद्रक्तावसेकः। बाहुमध्ये शिराव्यध इति—बाहुमध्ये सन्धेरधस्तात् स्वल्पशिरा वेध्या, न तु मध्या न वा वृहती, तस्या मर्मत्वात्। शिराव्यधश्च यस्मिन् पार्श्वे गुल्मस्तत्पार्श्वस्थबाहौ। अयञ्च विधिर्दीर्घचिकित्सया गुल्मस्याप्रशमने स्वेदादिना च शोणितदुष्टौ सत्यां बोध्यः। स्वेद इत्यादिकञ्चार्द्धं पद्यं सम्पूर्णश्लोकानुरोधादेवोक्तम्॥ १—४॥

आहारविधिमाह, पेयेत्यादि।—वातहरैर्दशमूलादिभिः। पञ्चमूलञ्चेह विल्वादिपञ्चमूलम्, उष्णवीर्य्यतया विशेषेण वातहरत्वात्॥ ५॥

मातुलुङ्गेत्यादि।—मातुलुङ्गरसादिकं प्रक्षिप्य सुरामण्डः पेयः। सुरामण्डश्चाहारद्रव्यतया प्रसृतौ ग्राह्यः, न तु चूर्णाच्चतुर्गुणः; एवमन्यत्रापि सुरया सेवनपाने ज्ञेयम्॥ ६॥

नागरेत्यादि।—लुञ्चितस्येति—निस्तुषीकृतस्य। अत्र च भूरिमानौषधोपयोगो व्याधिमहिम्नैव भवतीति ज्ञेयम्। वाग्भटे पुनरेतदर्द्धमानेनायं योगः पठ्यते;

तिलस्यैकं गुड़पलं क्षीरेणोष्णेन पाययेत् ॥
वातगुल्ममुदावर्त्तं योनिशूलञ्च नाशयेत् ॥ ७ ॥

एरण्डतैलप्रयोगः।—

पिबेदेरण्डतैलं वा वारुणीमण्डमिश्रितम्।
तदेव तैलं पयसा वातगुल्मी पिबेन्नरः ॥ ८ ॥

रसोनक्षीरम्।—

साधयेच्छुद्धशुष्कस्य रसोनस्य चतुःपलम्।
क्षीरोदकेऽष्टगुणिते क्षीरशेषञ्च पाययेत् ॥ ९ ॥
वातगुल्ममुदावर्त्तं गृध्रसीं विषमज्वरम्।
हृद्रोगं विद्रधिं शोषं नाशयत्याशु तत् पयः ॥
एवन्तु साधिते क्षीरे स्तोकमप्यत्र दीयते ॥ १० ॥

---

यथा—"गुण्ठ्याः कर्षं गुड़स्य द्वौ धौतात् कृष्णतिलात् पलम्। खादन्नेकत्र सञ्चूर्ण्य कोष्णक्षीरानुपो जयेत् ॥ वातहृद्रोगगुल्मार्शो-योनिशूलशकृद्ग्रहान्" ॥ (चि० १४ अ०) इति। अन्ये तु—नागरार्द्धपलमिति पुरुषस्य बलाबलं बुद्ध्वा, हीनबलपुरुषे तु तृतीय-भागेन कर्त्तव्यमित्याहुः ॥ ७ ॥

पिबेदित्यादि।—योगद्वयम्। पूर्वयोगः कफानुगे वायौ, द्वितीयस्तु पित्तानुगे; उक्तं हि चरके—"श्लेष्मण्यनुबले पूर्वं हितं पित्तानुगे परम्" (चि० गुल्म०) इति। पूर्वमिति—वारुणीसंयुक्तमेरण्डतैलम्। परमिति—पयःसंयुक्तमेरण्डतैलम् ॥ ८ ॥

साधयेदित्यादि।—निस्तुषतया शुद्धः आपूर्णवीर्य्यतया च शुष्क इत्यर्थः। क्षीरोदकेऽष्टगुणिते इति—क्षीरोदकयोश्च समासकरणान्मिलित्वैवाष्टगुणत्वं ज्ञेयं, भागानुक्तेश्च समभागत्वमिति; तेन रसोनचतुःपलापेक्षया क्षीरनीरयोः प्रत्येकं चातुर्गुण्यान्मिलित्वा द्वात्रिंशत्पलानि स्युः। अनयोश्च द्रवत्वेऽपि न द्वैगुण्यं, रसोनपलोल्लेखेनाष्टगुणत्वविधानात्। जलक्षयादवशिष्टं क्षीरं यद्यपि षोड़शपलत्वेन बहु भवति, तथाऽपि "दीप्ताग्नयो महाकायाः" इत्यादि वचनात् गुल्मस्य बहुमात्राऽभिहित-(बहुमात्रासाध्य) तया षोड़शपलक्षीरपानमपि न दोषावहमिति; किंवा अग्न्युपघात-भयात् स्तोकं पेयम्; अत एवोक्तम् "एवन्तु साधिते" इति; साधनन्तु एतावन्मात्रमेव कार्य्यं, "यथा कुर्वन्ति स उपायः" (सु० सू० ४१ अ०) इति वचनात्। दुग्ध-रसोनयोश्चात्र न योगविरुद्धमाशङ्कनीयं, व्याधिप्रभावान्महर्षिवचनाच्चेति ॥ ९ १० ॥

सर्जिकादियोगः।—

सर्जिकाकुष्ठसहितः क्षारः केतकीजोऽपि वा।
तैलेन पीतः शमयेत् गुल्मं पवनसम्भवम्॥ ११॥

अवस्थाविशेषे वमनोपदेशः।—

वातगुल्मे कफे वृद्धे वान्तिश्चूर्णादिरिष्यते॥ १२॥

## पित्तगुल्म-चिकित्सा।

विरेचन-रक्तमोक्षणोपदेशः।—

पित्ते तु रेचनं स्निग्धं रक्ते रक्तस्य मोक्षणम्॥ १३॥

निदानभेदेन क्रियाभेदः।—

स्निग्धोष्णेनोदिते गुल्मे पैत्तिके स्रंसनं हितम्।
रूक्षोष्णेन तु सम्भूते सर्पिः प्रशमनं परम्॥ १४॥

स्नेहनार्थं घृतनिर्देशः।—

काकोल्यादिमहातिक्त-वासाद्यैः पित्तगुल्मिनम्।
स्नेहितं स्रंसयेत् पश्चात् योजयेद्वस्तिकर्मणा॥ १५॥

---

सर्जिकेत्यादि सुश्रुतस्य।—सर्जिकाया माषकद्वयम्, एवं कुष्ठस्यापि। केतकीजटाक्षारस्य माषकचतुष्टयमिति निश्चलः। वा-शब्दः पूर्वक्षारप्रयोगापेक्षया। डल्लनस्तु क्षारो यवक्षारः। अत्र सर्जिकाकुष्ठसहितयवक्षारस्तैलेनेत्येको योगः। केतकीजोऽपि वा इत्यत्र क्षार इति सम्बध्यते, तेन केतकीजोऽपि क्षारस्तैलेनेति द्वितीयो योगः। गौड़ास्तु सर्जिकाकुष्ठसहितः केतकीजक्षारस्तैलेनेत्येकमेव योगमाहुः। तैलेनेति—तिलतैलेन। अन्ये तु—यौगिकत्वादेरण्डतैलमाहुः॥ ११॥

अवस्थायां क्रियान्तरमाह, वातगुल्मे इत्यादि।—गुल्मे यद्यपि "न वामयेत्" (सु० चि० ३३ अ०) इत्यादिवचनात् वमनं निषिद्धं, तथाऽप्यवस्थाविशेषेऽपवादरूपतया तन्न दूष्यते। चूर्णादिरित्यादिशब्दात् फलवर्त्तिगुड़िकादयः॥ १२॥

पित्ते इत्यादि।—स्निग्धं रेचनमित्येरण्डतैलादिना॥ १३॥

स्निग्धोष्णेनेत्यादि।—रूक्षोष्णेन तु सम्भूते इत्यत्रापि पैत्तिके इति शेषः॥ १४॥

काकोल्यादीत्यादि।—काकोल्यादिमहातिक्तवासाद्यैरित्यनन्तरं घृतैरिति शेषः। काकोल्यादिगणक्वाथकल्कसाधितं घृतं काकोल्यादिघृतम्। महातिक्तघृतञ्च कुष्ठोक्तम्। वासाद्यघृतञ्च रक्तपित्तोक्तम्। स्रंसयेदिति—विरेचयेत्। वस्तिकर्मणेति—अनुवासननिरूहाभ्याम्॥ १५॥

विरेचनद्रव्यनिर्देशः।—

स्निग्धोष्णजे पित्तगुल्मे काम्पिल्लं मधुना लिहेत्।
रेचनार्थी रसं वाऽपि द्राक्षायाः सगुड़ं पिबेत्॥ १६॥

विदह्यमानस्य लक्षणम्।—

दाहशूलानिलक्षोभ-स्वप्ननाशारुचिज्वरैः।
विदह्यमानं जानीयात् गुल्मं तमुपनाहयेत्॥ १७॥

पक्वस्य क्रियाविधिः।—

पक्वे तु व्रणवत् कार्य्यं व्यधशोधनरोपणम्।
स्वयमूर्द्ध्वमधो वाऽपि स चेद्दोषः प्रपद्यते॥ १८॥
द्वादशाहमुपेक्षेत रक्षन्नन्यानुपद्रवान्।

---

स्निग्धोष्णजे इत्यादि।—काम्पिल्लं गुण्डारोचनी॥ १६॥

दाहेत्यादि।—विदह्यमानमिति—पच्यमानम्। उपनाहयेदिति—व्रणशोथोक्तपाचनपिण्डैः प्रलेपयेत्। ननु सुश्रुते गुल्मस्य पाको निषिद्धः, यथा—"स यस्मादात्मनि चयं गच्छत्यप्स्विव बुद्बुदः। अन्तः सरति यस्माच्च न पाकमुपयात्यतः॥" (उ० ४२ अ०) इति। आत्मनीति—स्वावयवे गुल्मारम्भकदोषरूपे, न तु मांसरक्तादौ। चयमिति—वृद्धिम्। अप्स्विवबुद्बुद इति—यथा जलावरुद्धो वायुरेव जले बुद्बुदरूपी भवति, तथा कफपित्ताभ्यामवरुद्धो वायुरेव कुण्डलीभूतो गुल्म इत्यर्थः। अन्तः सरति यस्माच्च इत्यनेनापि रक्तादिरहितकोष्ठविवरमात्राश्रयत्वमस्य दर्शितम्, एतेन दोषमात्राश्रयिणि गुल्मे मांसशोणितयोः पाकाश्रययोरभावादपाकित्वमुक्तम्? तत्राहुः—गुल्मो यद्यपि दोषमात्राश्रय एव, तथाऽपि यदा कारणवशादाश्रयं मांसादिकमासाद्य कृतवास्तुपरिग्रहो भवति, वातोपशमनार्थं कृतस्वेदादिभिर्वा दुष्टं रक्तं सहकारि लभते, तदा गुल्मस्यापि पाकः कथं प्रत्याख्येयः? केवलं चरके गुल्म इत्युच्यते; सुश्रुते तु—विद्रधिसंज्ञयेति संज्ञामात्रे विवादः। अकृतवास्तुपरिग्रहस्तु दोषमात्राश्रयत्वान्न पच्यते, चरकेणाप्यनुमन्यत एवेति। अन्ये तु—अपाकार्थमुक्तहेतुद्वयस्य वातिक एव संभवित्वाद्वातिक एव गुल्मो न पच्यते, अस्थिरत्वाद्वातस्वभावाच्च; अन्ये तु पठन्ति—भेदः पुनरयं विद्रधिगुल्मयोः, विद्रधिरचिरपाकश्चिरपाकस्तु गुल्म इति। अत एव माधवकरोऽप्याह,—"प्रायो न पच्यते गुल्मो वातजस्तु विशेषतः। रक्तपित्तातिवृद्धत्वात् पच्यतेऽन्यो यदृच्छया॥" (मा० नि० गुल्म०) इति॥ १७॥

पक्वे इत्यादि।—स्वयमित्यादि—स्वयमेवात्मभिन्ने सति दोषः पूयरूप ऊर्द्ध्वमधो

परन्तु शोधनं सर्पिः शुद्धे समधु तिक्तकम् ॥ १९ ॥

रोहिण्यादि घृतम् ।—

रोहिणी कटुका निम्बं मधुकं त्रिफलात्वचः ।
कर्षांशास्त्रायमाणा च पटोलत्रिवृतापले ॥ २० ॥
द्विपलञ्च मसूराणां साध्यमष्टगुणे जले ।
घृताच्छेषं घृतसमं सर्पिषश्च चतुःपलम् ॥ २१ ॥
पिबेत् सम्मूर्च्छितं तेन गुल्मः शाम्यति पैत्तिकः ।
ज्वरस्तृष्णा च शूलञ्च भ्रमो मूर्च्छाऽरतिस्तथा ॥ २२ ॥

उत्तममात्रया औषधप्रयोगार्हाः ।—

दीप्ताग्नयो महाकायाः स्नेहसात्म्या महाबलाः ।
गुल्मिनः सर्पदष्टाश्च विसर्पोपहताश्च ये ॥
ज्येष्ठां मात्रां पिबेयुस्ते पलान्यष्टौ विशेषतः ॥ २३ ॥

कफगुल्म-चिकित्सा ।

क्षारादिघृतम् ।—

लङ्घनोल्लेखनस्वेदे कृतेऽग्नौ सम्प्रधुक्षिते ।
घृतं सक्षारकटुकं पातव्यं कफगुल्मिना ॥ २४ ॥

---

वा गच्छति, तदा द्वादशाहमुपेक्षेत न शोधनरोपणादिकं कुर्य्यात् । उपद्रवान् ज्वरादीन्, उपद्रवेभ्यो ज्वरादिभ्यश्चातुरं रक्षन्नित्यर्थः । परन्तु शोधनं सर्पिरिति—द्वादशाहात् परं शोधनद्रव्यसाधितं घृतं पेयम् । शुद्धे समधु तिक्तकमिति—शुद्धे सति तिक्तद्रव्यसाधितं घृतं समधु मधुसहितं देयं, रोपणार्थमिति शेषः ॥ १८।१९ ॥

रोहिणीत्यादि ।—रोहिणी कटुकेति—कटुरोहिणी । त्रिफलात्वच इति—निरस्थित्रिफला । एते त्रायमाणान्ताः प्रत्येकं कर्षांशाः । पटोलत्रिवृतापले इति द्विवचनात् प्रत्येकं पलमितम् । अष्टगुणे इति—घृतादष्टगुणे इति योज्यम् ; घृतं चतुःपलमेवोक्तम् । तेन घृतेन सम्मूर्च्छितमेकीकृतम्, एतेन क्वाथघृताभ्यां मिलित्वाऽष्टौ पलानि । इयञ्च मात्रा व्याधिमहिम्ना न दोषावहेति । एतदेवाह, दीप्ताग्नय इत्यादि ॥ २०—२३ ॥

लङ्घनेत्यादि ।—घृतं सक्षारकटुकमिति —यवक्षारत्रिकटुकल्कसाधितमित्यर्थः ॥२४॥

वमनप्रयोगार्हाः ।—

मन्दोऽग्निर्वेदना मन्दा गुरुस्तिमितकोष्ठता ।
सोत्क्लेशा चारुचिर्यस्य स गुल्मो वमनोपगः ॥ २५ ॥

अवस्थाविशेषे क्रियाविशेषः ।—

मन्देऽग्नावनिले मूढ़े ज्ञात्वा सस्नेहमाशयम् ।
गुड़िकाचूर्णनिर्य्यूहाः प्रयोज्याः कफगुल्मिनाम् ॥
क्षारारिष्टगणश्चापि दाहः शेषे विधीयते ॥ २६ ॥

पञ्चमूलीक्काथादियोगद्वयम् ।—

पञ्चमूलीशृतं तोयं पुराणं वारुणीरसम् ।
कफगुल्मी पिबेत् काले जीर्णं माध्वीकमेव वा ॥ २७ ॥

तिलादिप्रलेपः स्वेदश्च ।—

तिलैरण्डातसीबीज-सर्षपैः परिलिप्य वा ।
श्लेष्मगुल्ममयःपात्रैः सुखोष्णैः स्वेदयेद्भिषक् ॥ २८ ॥

यमानीप्रयोगः ।—

यमानीचूर्णितं तक्रं विड़ेन लवणीकृतम् ।
पिबेत् सन्दीपनं वात-मूत्रवर्चोऽनुलोमनम् ॥ २९ ॥

---

मन्दोऽग्निरित्यादि ।—वमनोपग इति—वमनेनोपगम्यते उपचर्य्यते यः स वमनोपगः । पूर्वं वातिकगुल्मे एवावस्थायां वमनमुक्तम्, इह तु कफगुल्मे इत्येवेति न पौनरुक्त्यम् ॥ २५ ॥

मन्देऽग्नावित्यादि ।—मूढ़े इति—आवृते । गुड़िकादय इहैव हिङ्ग्वादिप्रभृतयो वक्तव्याः । क्षारारिष्टगण इति—प्रतिसारणीयक्षारस्यानुशस्ततया शल्यतन्त्रे एव तदभिधानं ज्ञेयम् । पानीयक्षाराश्चावापि वेदितव्याः, चरकग्रहण्यध्यायोक्ताश्चानुसर्त्तव्याः । अरिष्टाश्चरकग्रहणीशर्शश्चिकित्सितोक्ताः ज्ञेयाः ; उक्तं हि—"य एव ग्रहणीदोषे क्षारास्ते कफगुल्मिनाम् । अरिष्टयोगाः सिद्धाश्च ग्रहण्यर्शश्चिकित्सिते ॥" ( च० चि० गुल्म० ) इति । दाहः शेषे इति दाहस्य दारुणत्वात् क्रियान्तरासिद्धौ शेषे एव कर्त्तव्यता युक्ता ; दाहस्तु शरलोहादिभिः ; उक्तं हि—"तस्य दाहो हृते रक्ते शरलोहादिभिर्हितः" ( च० चि० गुल्म० ) इति ॥ २६ ॥

पञ्चमूलीत्यादि ।—पञ्चमूली महती, कफप्रत्यनीकत्वात् । माध्वीकं मधु ॥ २७ ॥

स्वेदमाह, तिलेत्यादि ।—गुल्ममिति—गुल्मस्थानम् ॥ २८।२९ ॥

द्वन्द्वजे सन्निपातजे च चिकित्साऽतिदेशः ।—

व्यामिश्रदोषे व्यामिश्रः एष एव क्रियाक्रमः ।
सन्निपातोद्भवे गुल्मे त्रिदोषघ्नो विधिर्हितः ॥
यथोक्तेन सदा कुर्य्यात् भिषक् तत्र समाहितः ॥ ३० ॥

वचादिचूर्णम् ।—

वचाविड़भयाशुण्ठी-हिङ्गुकुष्ठाग्निदीप्यकाः ।
द्वित्रिषट्चतुरेकाष्ट-सप्तपञ्चांशिकाः क्रमात् ॥ ३१ ॥
चूर्णं मद्यादिभिः पीतं गुल्मानाहोदरापहम् ।
शूलार्शःश्वासकासघ्नं ग्रहणीदीपनं परम् ॥ ३२ ॥

यमान्यादिचूर्णम् ।—

यमानीहिङ्गुसिन्धूत्थ-क्षारसौवर्चलाभयाः ।
सुरामण्डेन पातव्या गुल्मशूलनिसूदनाः ॥ ३३ ॥

हिङ्ग्वाद्यं चूर्णम् ।—

हिङ्गु त्रिकटुकं पाठां हपुषामभयां शटीम् ।
अजमोदाऽजगन्धे च तिन्तिड़ीकाम्लवेतसौ ॥ ३४ ॥
दाड़िमं पौष्करं धान्यमजाजीं चित्रकं वचाम् ।
द्वौ क्षारौ लवणे द्वे च चव्यञ्चैकत्र चूर्णयेत् ॥ ३५ ॥
चूर्णमेतत् प्रयोक्तव्यमन्नपानेष्वनत्ययम् ।
प्राग्भुक्तमथवा पेयं मद्येनोष्णोदकेन वा ॥ ३६ ॥

---

व्यामिश्रदोषे इत्यादि ।—त्रिदोषघ्नो विधिरिति—वाताद्युक्तयोगा एव एकीकृत्य योज्याः, प्रकृतिसमसमवेतत्वात्, विकृतिविषमसमवेतस्य तु चरकेऽसाध्यतोक्तेः ॥ ३० ॥

वचेत्यादि ।—अभया हरीतकी । अग्निश्चित्रकः । दीप्यकः यमानी । आदि-शब्दादुष्णादकादीनां ग्रहणम् ॥ ३१।३२ ॥

यमानीत्यादि ।—क्षारः यवक्षारः । योगोऽयमुष्णाम्बुना प्रचरति ॥ ३३ ॥

हिङ्ग्वित्यादि ।—हिङ्ग्वादिचूर्णे अजमोदा यमानी । अजगन्धा वनयमानी । तिन्तिड़ीकं महार्द्रकम् । द्वौ क्षारौ यवक्षार-सर्जिकाक्षारौ । लवणे द्वे सैन्धव-सौवर्चले । प्राग्भुक्तमिति—भोजनस्य प्राक् परिणामे, भोजनाव्यवहितपूर्वकाले वा । प्रकारान्तर-

पार्श्वहृद्वस्तिशूलेषु गुल्मे वातकफात्मके ।
आनाहे मूत्रकृच्छ्रे च गुदयोनिरुजासु च ॥ ३७ ॥
ग्रहण्यर्शोविकारे च प्लीहपाण्ड्वामयेऽरुचौ ।
उरोविबन्धे हिक्कायां कासे श्वासे गलग्रहे ॥ ३८ ॥
भावितं मातुलुङ्गस्य चूर्णमेतद्रसेन वा ।
बहुशो गुड़िकाः कार्य्याः कार्मुकाः स्युस्ततोऽधिकम् ॥३९॥

पूतिकादिलवणम् ।—

पूतीकपत्रगजचिर्भिटचव्यवह्नि-
व्योषञ्च संस्तरचितं लवणोपधानम् ।
दग्ध्वा विचूर्ण्य दधिमस्तुयुतं प्रयोज्यं
गुल्मोदरश्वयथुपाण्डुगदोद्भवेषु ॥ ४० ॥

हिङ्गुपुष्करमूलादिचूर्णम् ।—

हिङ्गु पुष्करमूलानि तुम्बुरूणि हरीतकीम् ।
श्यामा विड़ं सैन्धवञ्च यवक्षारं महौषधम् ॥ ४१ ॥
यवक्काथोदकेनैतत् घृतभृष्टन्तु पाययेत् ।

माह, भावितमित्यादि ।—बहुश इति—सप्ताहं "सप्ताहं भावनाविधिः" इत्युक्तत्वात् । मातुलुङ्गरसेन सप्तदिनान्यातपे भाव्यं, तदनु चाष्टमाषकमिता वटिकाः कार्य्याः, एकां खादित्वा तप्तजलाद्यनुपेयमिति । कार्मुकाः कर्मकारकाः ॥ ३४—३९ ॥

पूतीकपत्रेत्यादि वाग्भटस्य ।—पूतीकः नाटाकरञ्जः । गजचिर्भिटो गोरक्ष-कर्कटी । वह्निश्चित्रकः । संस्तरचितमिति—संस्तररूपतया विहितम् । लवणोपधानं सैन्धवगर्भं, सैन्धवञ्च पूतीकपत्रादिसमं ग्राह्यम् ; सौश्रुतपत्रलवणविधौ टीका-कृद्भिरेवं व्याख्यातत्वात् । पूतीकपत्रादिसंस्तरे सैन्धवं दत्त्वा तदुपरि पुनः पूतीक-पत्रादिकं विन्यस्य चान्तर्धूमं दग्धव्यम् ॥ ४० ॥

हिङ्ग्वित्यादि ।—तुम्बुरु स्वनामख्यातम् । श्यामा त्रिवृत् । यवक्काथोदकेनेति—यवक्काथेनोष्णोदकेन वेत्यर्थः । हिङ्गुप्रभृतीनां चूर्णं प्रभूतं कृत्वा स्थाप्यं, ततो योग्यां मात्रां गृहीत्वा यवक्काथेन प्लावयित्वा घृते परिभर्ज्य पाययेदित्यर्थः । अस्मिन् प्रयोगे हि वैद्यप्रसारके उष्णोदकमेरण्डतैलञ्चाधिकं पठितम् ; तद्यथा,—"उष्णोदकेन प्रातव्य-

तेनास्य भिद्यते गुल्मः सशूलः सपरिग्रहः ॥ ४२ ॥

वचाद्यं चूर्णम्।—

वचाहरीतकीहिङ्गु-सैन्धवं साम्लवेतसम्।
यवक्षारं यमानीञ्च पिबेदुष्णेन वारिणा ॥ ४३ ॥
एतद्धि गुल्मनिचयं सशूलं सपरिग्रहम्।
भिनत्ति सप्तरात्रेण वह्नेर्वृद्धिं करोति च ॥ ४४ ॥

पिप्पल्यादिचूर्णम्।—

पिप्पलीपिप्पलीमूल-चित्रकाजाजिसैन्धवैः।
युक्ता पीता सुरा हन्ति गुल्ममाशु सुदुस्तरम् ॥ ४५ ॥

नादेय्यादिपानीयक्षारम्।—

नादेयीकुटजार्कशिग्रुबृहतीस्नुग्बिल्वभल्लातक-
व्याघ्रीकिंशुकपारिभद्रकजटाऽपामार्गनीपाग्निकान्।
वासामुष्ककपाटलाः सलवणा दग्ध्वा जले पाचितं
हिङ्ग्वादिप्रतिवापमेतदुदितं गुल्मोदराष्ठीलिषु ॥ ४६ ॥

---

मेतत् सहवृतैलकम्" इति। अन्ये तु—उदकशब्दोऽयं द्रववचनः, तेन यवक्वाथरूपेण द्रवेणेत्याहुः। "यवक्षारोदकेन" इति पाठान्तरमसङ्गतम्; वृद्धवाग्भटे यवक्वाथस्यैवोक्तत्वात्। भिद्यते विलीयते, न तु पक्वः सन् भेदं गच्छति। सपरिग्रह इति—वास्तुपरिग्रहसहितः, सोपद्रव इति वा ॥ ४१।४२ ॥

वचेत्यादि हारीतस्य।—इमं योगं भोजनादिमध्यावसानेष्वपि कारयन्तीति निश्चलः। तन्न, हारीते हि—"शाम्यते योगराजेन त्रिःप्रयुक्तेन योगतः" ( ३य स्था० १४ अ० ) इत्येवोक्तं, न तु भोजनादिमध्यावसानेष्वपीति ॥ ४३।४४ ॥

पिप्पलीत्यादि।—अयं योगो वातश्लेष्मजे ज्ञेयः ॥ ४५ ॥

नादेयीत्यादि।—नादेयी भूमिजम्बुः। व्याघ्री कण्टकारी। किंशुकः पलाशः। पारिभद्रकजटा पारिभद्रमूलम्। अग्निरग्निकः। सलवणाः ससैन्धवाः, लवणा ज्योतिष्मतीत्येके। नादेयीप्रभृतीन् दग्ध्वा क्षारः कार्यः, अस्याढ़कं पलशतं वा पानीयक्षारविधिना चतुर्गुणेन षड्गुणेन वा उदकेन पक्त्वा चतुर्भागावशेषे कल्कमपनीय एकविंशतिवारान् परिस्राव्य स्थापयेत्। अस्य कर्षमर्द्धपलं वा हिङ्ग्वादिचूर्ण

भागोत्तरं हिङ्ग्वादिचूर्णम् ।—

हिङ्ग्उग्रगन्धाविड्शुण्ठ्यजाजी-हरीतकीपुष्करमूलकुष्ठम् ।
भागोत्तरं चूर्णितमेतदिष्टं गुल्मोदराजीर्णविसूचिकासु ॥ ४७ ॥

त्रिफलादिचूर्णम् ।—

त्रिफलाकाञ्चनक्षीरी-सप्तलानीलिनीवचाः ।
त्रायन्तीहपुषातिक्ता-त्रिवृत्सैन्धवपिप्पलीः ॥ ४८ ॥
पिबेद्विचूर्ण्य मूत्रोष्ण-वारिमांसरसादिभिः ।
सर्वगुल्मोदरप्लीह-कुष्ठार्शःशोथपीड़ितः ॥ ४९ ॥

काङ्कायनगुड़िका ।—

शटीं पुष्करमूलञ्च दन्तीं चित्रकमाढ़कीम् ।
शृङ्गबेरं वचाञ्चैव पलिकानि समाहरेत् ॥ ५० ॥
त्रिवृतायाः पलञ्चैव कुर्य्यात् त्रीणि च हिङ्गुनः ।
यवक्षारपले द्वे च द्वे पले चाम्लवेतसात् ॥ ५१ ॥
यमान्यजाजीमरिचं धान्यकञ्चेति कार्षिकम् ।
उपकुञ्च्यजमोदाभ्यां तथा चाष्टमिकामपि ॥ ५२ ॥
मातुलुङ्गरसेनैव गुड़िकाः कारयेद्भिषक् ।
तासामेकां पिबेत् द्वे वा तिस्रो वाऽपि सुखाम्बुना ॥ ५३ ॥

---

पादिकं दत्त्वा मांसक्षीरघृतादीनामन्यतमेषु प्रक्षिप्य पिबेत्, मांसरसादिभिश्च भोक्तव्यमोजोरक्षणार्थम् । अन्ये त्वाहुः,—एकदा विपाच्य स्थापिते क्षारोदकेऽम्लत्वादि-दोषशङ्का स्यात्, अतः कृतक्षारादग्नेर्बलाद्यपेक्षया पलादिपरिमितं क्षारं गृहीत्वा प्रत्यहमनन्तरोक्ताद्यविधिना क्षारोदकं कार्य्यमिति । हिङ्ग्वादिप्रतिवापमिति—हिङ्ग्वादेः पादिकस्य प्रतिवापः प्रक्षेपो यत्र तत् तथा । एतदिति—क्षारजलम् । यस्य तन्त्रस्यायं प्रयोगस्तत्रोक्तहिङ्ग्वाद्यपरिज्ञानात् वक्ष्यमाणो हिङ्ग्वादिरनन्तरपठितत्वात् सङ्ग्रहकारस्याभिमतो लक्ष्यते ॥ ४६ ॥

हिङ्ग्वित्यादि ।—हिङ्ग्वादौ उग्रगन्धा वचा । भागोत्तरमिति—उत्तरोत्तरमेक-भागवृद्धम् । उष्णाम्बुनाऽस्य पानमुपदिशन्ति ॥ ४७ ॥

त्रिफलेत्यादि ।—काञ्चनक्षीर्य्या अभावे कटुकमाहुः । सप्तला चर्मकषा । नीलिनी नीलवृक्षः । विरेकार्थोऽयं योगः ॥ ४८।४९ ॥

अम्लैश्च मद्यैर्यूषैश्च घृतेन पयसाऽथवा।
एषा काङ्कायनेनोक्ता गुड़िका गुल्मनाशिनी॥ ५४॥
अर्शोहृद्रोगशमनी क्रिमीणाञ्च विनाशिनी।
गोमूत्रयुक्ता शमयेत् कफगुल्मं चिरोत्थितम्॥ ५५॥
क्षीरेण पित्तगुल्मञ्च मद्यैरम्लैश्च वातिकम्।
त्रिफलारसमूत्रैश्च नियच्छेत् सान्निपातिकम्॥
रक्तगुल्मे च नारीणामुष्ट्रीक्षीरेण पाययेत्॥ ५६॥

हवुषाद्यं घृतम्।—

हवुषाव्योषपृथ्वीका-चव्यचित्रकसैन्धवैः।
साजाजीपिप्पलीमूल-दीप्यकैर्विपचेत् घृतम्॥ ५७॥
सकोलमूलकरसं सक्षीरं दधिदाड़िमम्।
तत् परं वातगुल्मघ्नं शूलानाहविबन्धनुत्॥ ५८॥
योन्यर्शोग्रहणीदोष-श्वासकासारुचिज्वरान्।
पार्श्वहृद्बस्तिशूलञ्च घृतमेतदपोहति॥ ५९॥

पञ्चपलकं घृतम्।—

पिप्पल्याः पिचुरध्यर्द्धो दाड़िमात् द्विपलं पलम्।
धान्यात् पञ्च घृताच्छुण्ठ्याः कर्षः क्षीरं चतुर्गुणम्॥ ६०॥
सिद्धमेतैर्घृतं सद्यो वातगुल्मं चिकित्सति।

---

शटीमित्यादि।—यमान्यादीनां प्रत्येकं कर्षः। उपकुञ्ची कृष्णजीरकम्। अजमोदा यमानी। अनयोः प्रत्येकम् अष्टभिकामर्द्धपलमित्यर्थः॥ ५०—५६॥

हवुषेत्यादि।—हवुषा स्वनामख्याता। पृथ्वीका कृष्णजीरकं, हिङ्गुपत्रिकेत्यन्ये। दीप्यकः यमानी। सकोलमूलकरसमिति—कोलं शुष्कबदरं, तस्य क्वाथः, मूलकस्यापि शुष्कस्यैव क्वाथः, न पुनरार्द्रस्य स्वरसः, तस्य तु गुल्मे निषिद्धत्वात्। दाड़िमस्याप्यत्र स्वरसः, द्रवसाहचर्य्यात्, विश्वामित्रेणापि दाड़िमस्वरस एवोक्तः; एवञ्च पञ्चभिर्द्रवैः प्रत्येकं स्नेहसमैः पाकः॥ ५७—५९॥

पिप्पल्या इत्यादि।—पिचुरध्यर्द्ध इति—सार्द्धकर्षः। पलं धान्यादिति योज्यम्।

योनिशूलं शिरःशूलमर्शांसि विषमज्वरान् ॥ ६१ ॥

त्र्यूषणाद्यं घृतम्।—

त्र्यूषणत्रिफलाधान्य-विडङ्गचव्यचित्रकैः।
कल्कीकृतैर्घृतं सिद्धं सक्षीरं वातगुल्मनुत् ॥ ६२ ॥

त्रायमाणाद्यं घृतम्।—

जले दशगुणे साध्यं त्रायमाणाचतुःपलम्।
पञ्चभागस्थितं पूतं कल्कैः संयोज्य कार्षिकैः ॥ ६३ ॥
रोहिणीकटुकामुस्त-त्रायमाणादुरालभाः।
कल्कास्त्वामलकीवीरा-जीवन्तीचन्दनोत्पलैः ॥ ६४ ॥
रसस्यामलकीनाञ्च क्षीरस्य च घृतस्य च।
पलानि पृथगष्टाष्टौ दत्त्वा सम्यग्विपाचयेत् ॥ ६५ ॥
पित्तगुल्मं रक्तपित्तं वीसर्पं पैत्तिकं ज्वरम्।
हृद्रोगं कामलां कुष्ठं हन्यादेतत् घृतोत्तमम् ॥ ६६ ॥
पलोल्लेखागते माने न द्वैगुण्यमिहेष्यते।
चत्वारिंशत् पलं तेन तोयं दशगुणं भवेत् ॥ ६७ ॥

द्राक्षाद्यं घृतम्।—

द्राक्षामधुकखर्जूरं विदारीं सशतावरीम्।
परूषकाणि त्रिफलां साधयेत् पलसम्मिताम् ॥ ६८ ॥

पञ्च घृतादिति—पञ्च पलानीत्यर्थः। क्षीरं चतुर्गुणमिति—घृतपञ्चपलापेक्षया विंशति-पलानि क्षीरस्येत्यर्थः ॥ ६०।६१ ॥

त्र्यूषणेत्यादि।—त्र्यूषणाद्यघृते सक्षीरमिति—चतुर्गुणक्षीरसहितं, द्रवान्तराभावात् ॥ ६२ ॥

जले इत्यादि।—पञ्चभागस्थितमिति—पञ्चभागावशिष्टं, तेन क्वाथस्याष्टौ पलानीत्यर्थः। कल्कैरित्यत्र व्यवहितैरप्यामलक्यादिभिः सम्बध्यते, न केवलमेतैः कल्कैः कटुरोहिण्यादयश्च कल्का इति योजनीयम्; कल्का इति श्लोकपादपूरणार्थमिति हरिचन्द्रः। वीरा क्षीरकाकोली। पलोल्लेखागतमानत्वादिह न द्वैगुण्यमित्याह, पलेत्यादि ॥ ६३—६७ ॥

जलाढ़के पादशेषे रसमामलकस्य च ।
घृतमिक्षुरसं क्षीरमभयाकल्कपादिकम् ॥ ६९ ॥
साधयेत् तत् घृतं सिद्धं शर्कराक्षौद्रपादिकम् ।
प्रयोगात् पित्तगुल्मघ्नं सर्वपित्तविकारनुत् ॥
साहचर्यादिह पृथक् घृतादेः क्वाथतुल्यता ॥ ७० ॥

क्षीरषट्पलकं घृतम् ।—

पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ।
पलिकैः सयवक्षारैः सर्पिःप्रस्थं विपाचयेत् ॥ ७१ ॥
क्षीरप्रस्थेन तत् सर्पिर्हन्ति गुल्मं कफात्मकम् ।
ग्रहणीपाण्डुरोगघ्नं प्लीहकासज्वरापहम् ॥ ७२ ॥

धात्रीषट्पलकं घृतम् ।—

धात्रीफलानां स्वरसैः षडङ्गं विपचेत् घृतम् ।
शर्करासैन्धवोपेतं तद्धितं सर्वगुल्मिनाम् ॥ ७३ ॥

भार्गीषट्पलकं घृतम् ।—

षड्भिः पलैर्मगधजाफलमूलचव्य-
विश्वौषधज्वलनयावककल्कपक्कम् ।

---

द्राक्षेत्यादि ।—मधुकं यष्टिमधु । शर्कराक्षौद्रपादिकमिति मिलित्वा । अत्र क्वाथशेषस्य प्रस्थमानस्य साहचर्यात् घृतादीनामपि प्रस्थमानत्वमित्याह—साहचर्यादित्यादि ॥ ६८—७० ॥

पिप्पलीत्यादि ।—क्षीरषट्पलके घृते क्षीरप्रस्थेनैव केवलेन घृतस्यास्य पाक इति ब्रुवते ; अन्ये तु—त्रिगुणं जलं ददति ; तन्न, सर्वथा द्रवानुक्तौ हि जलं द्रवं भवतीत्याह चक्रः ॥ ७१।७२ ॥

धात्रीत्यादि सुश्रुतस्य ।—धात्रीफलस्वरसश्चतुर्गुणः । षडङ्गमिति—यवक्षार-सहितपञ्चकोलकल्कं प्रत्येकं पलिकम् ; उक्तं हि—"पञ्चकोलैर्घृतं पक्वं सक्षारैः पलिकैः पिबेत् । क्षीरे धात्रीरसे वाऽपि सितासैन्धवयोजितम् ॥ गुल्मार्शःपाण्डुरोगांश्च प्लीहानमरुचिं ज्वरम् ॥" इत्यादि । शर्करासैन्धवोपेतमिति—शर्करासैन्धवयोर्मिलित्वा पादिकयोः प्रक्षेपः, तत्रापि शर्करापादद्वयं सैन्धवस्यैकपाद इति वदन्ति ॥ ७३ ॥

षड्भिः पलैरित्यादि ।—मगधजा पिप्पली, तस्याः फलं, मूलञ्च । ज्वलनः

प्रस्थं घृतस्य दशमूल्युरुवूकभार्गी-
क्वाथेऽप्यथो पयसि दध्नि च षट्पलाख्यम् ॥ ७४ ॥
गुल्मोदरारुचिभगन्दरवह्निसाद-
कासज्वरक्षयशिरोग्रहणीविकारान् ।
सद्यः शमं नयति ये च कफानिलोत्था
भार्ग्याख्यषट्पलमिदं प्रवदन्ति वैद्याः ॥ ७५ ॥

भल्लातकं घृतम्।—

भल्लातकानां द्विपलं पञ्चमूलं पलोन्मितम्।
साध्यं विदारीगन्धाद्यमापोथ्य सलिलाढके ॥ ७६ ॥
पादावशेषे पूते च पिप्पलीं नागरं वचाम्।
विडङ्गं सैन्धवं हिङ्गु यावशूकं विडं शटीम् ॥ ७७ ॥
चित्रकं मधुकं रास्नां पिष्ट्वा कर्षसमान् भिषक्।
प्रस्थञ्च पयसो दत्त्वा घृतप्रस्थं विपाचयेत् ॥ ७८ ॥
एतद्भल्लातकं नाम कफगुल्महरं परम्।
प्लीहपाण्ड्वरुचिश्वास-ग्रहणीकासगुल्मनुत् ॥ ७९ ॥

---

चित्रकः। यावकः यवक्षारः; "यावक" इति पाठेऽपि—स एवार्थः। अत्र क्षीरं स्नेहसमं, "द्रवान्तरेण योगे हि क्षीरं स्नेहसमं भवेत्" इत्युक्तेः। दधिक्वाथौ तु मिलित्वा त्रिगुणौ; अतः चतुर्गुणः पाकः, "एकेनापि चातुर्गुण्यं द्वाभ्यामपि चातुर्गुण्यं, त्रिभिरपि चातुर्गुण्यं, चतुर्भिः समम्" इति वचनात्। अन्ये तु क्वाथो द्विगुणः, क्षीरं दधि च प्रत्येकं स्नेहसममित्याहुः। निश्चलस्तु—"क्वाथश्चतुर्गुणः, दधि च चतुर्गुणं, क्षीरन्तु स्नेहसममिति नवगुणः पाकः" इत्याह। अन्ये तु—"दधिक्वाथौ मिलित्वा चतुर्गुणौ, क्षीरन्तु स्नेहसमम्" इति पञ्चगुणः पाक इत्याहुः ॥ ७४।७५ ॥

भल्लातकानामित्यादि।—भल्लातकघृतं द्विगुणद्रवेणैव पक्तव्यं, "निर्दिष्टे तद्वदेव हि" इति वचनात्। पञ्चमूलं स्वल्पं, तदेव विदारीगन्धाद्यं, प्रत्येकं पलोन्मितम्। भल्लातकं नामेत्यनन्तरं सर्पिरिति शेषः; चरके तु—"एतद्भल्लातकघृतं कफगुल्महरं परम्" (चि० गुल्म०) इत्येव पाठः ॥ ७६—७९ ॥

रसोनाद्यं घृतम् ।—

रसोनस्वरसे सर्पिः पञ्चमूलीरसान्वितम् ।
सुराऽऽरनालदध्यम्ल-मूलकस्वरसैः सह ॥ ८० ॥
व्योषदाड़िमवृक्षाम्ल-यमानीचव्यसैन्धवैः ।
हिङ्ग्वम्लवेतसाजाजी-दीप्यकैश्च पलांशिकैः ॥ ८१ ॥
सिद्धं गुल्मग्रहण्यर्शः-श्वासोन्मादक्षयज्वरान् ।
कासापस्मारमन्दाग्नि-प्लीहशूलानिलान् जयेत् ॥ ८२ ॥

दन्तीहरीतकी ।—

जलद्रोणे विपक्तव्या विंशतिः पञ्च चाभयाः ।
दन्त्याः पलानि तावन्ति चित्रकस्य तथैव च ॥ ८३ ॥
तेनाष्टभागशेषेण पचेद्दन्तीसमं गुड़म् ।
ताश्चाभयास्त्रिवृच्चूर्णात् तैलाच्चापि चतुःपलम् ॥ ८४ ॥
पलमेकं कणाशुण्ठ्योः सिद्धे लेहे च शीतले ।
क्षौद्रं तैलसमं दत्त्वा चातुर्जातपलं तथा ॥ ८५ ॥
ततो लेहपलं लीढ्वा जग्ध्वा चैकां हरीतकीम् ।
सुखं विरिच्यते स्निग्धो दोषप्रस्थमनामयः ॥ ८६ ॥
प्लीहश्वयथुगुल्मार्शो-हृत्पाण्डुग्रहणीगदाः ।
शाम्यन्त्युत्क्लेशविषम-ज्वरकुष्ठान्यरोचकाः ॥ ८७ ॥

---

रसोनेत्यादि ।—पञ्चमूलं महत् पञ्चमूलं, वातकफहरत्वात्, तस्य रसः क्वाथः । रसोनस्वरसादीनां षण्णां स्नेहसमत्वम् । दीप्यकं चेह यमानी ॥ ८०—८२ ॥

जलद्रोणे इत्यादि ।—विंशतिः पञ्च चाभया इत्याकृतिमानात् । एतानि हरीतकीफलानि कर्पटे पोट्टलीं बद्ध्वा अगस्त्यहरीतकीवत् क्वथनीयानि । "तैलार्द्धकुड़वम्" इति पाठेऽपि—पलचतुष्टयमित्यर्थः । तैलमुत्स्विन्नहरीतकीभर्जनार्थं, न तु त्रिवृच्चूर्ण-परिभर्जनार्थम्; भर्जनेन विरेचनशक्त्यपकर्षप्रसङ्गात् । पलमेकं कणाशुण्ठ्योरिति मिलित्वा; एवं चातुर्जातपलमपि । प्रस्थमत्र दोषस्य सार्द्धत्रयोदशपलमानम् । उक्तं हि भोजे—"वमने च विरेके च तथा शोणितमोक्षणे । सार्द्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः ॥" इति ॥ ८३—८७ ॥

वृश्चीराद्यरिष्टः।—

वृश्चीरमुरुबूकञ्च वर्षाभ्वं बृहतीद्वयम्।
चित्रकञ्च जलद्रोणे पचेत् पादावशेषितम्॥ ८८॥
मागधीचित्रकक्षौद्र-लिप्तकुम्भे निधापयेत्।
मधुनः प्रस्थमावाप्य पथ्याचूर्णार्द्धसंयुतम्॥ ८९॥
वुषोषितं दशाहञ्च जीर्णभक्तः पिबेन्नरः।
अरिष्टोऽयं जयेत् गुल्ममविपाकं सुदुस्तरम्॥ ९०॥

## रक्तगुल्म-चिकित्सा।

विरेचनविधिः।—

रौधिरस्य च गुल्मस्य गर्भकालव्यतिक्रमे।
स्निग्धस्विन्नशरीरायै दद्यात् स्निग्धं विरेचनम्॥ ९१॥

शताह्वादिकल्कः।—

शताह्वाचिरबिल्वत्वग्-दारुभार्गीकणोद्भवः।

---

वृश्चीरमित्यादि सुश्रुतस्य।—वृश्चीरः श्वेतपुनर्नवा। वृश्चीरादीनां मिलिता पलशतम्; "द्रोणे द्रवतुला मता" इति वचनात्; अन्ये त्वाढ़कमाहुः। मागधी पिप्पली। मधुनः प्रस्थमिति—शरावचतुष्टयम्। पथ्याचूर्णार्द्धसंयुतमिति—हरीतकी-चूर्णस्य प्रस्थार्द्धमित्यष्टौ पलानि, तेन संयुतम्। वुषोषितं तुच्छधान्यराशिमध्ये स्थितम्। जीर्णभक्तः परिणताहारः, लघुकोष्ठ इत्यर्थः। अस्य पलमर्द्धपलं वा प्रातरुपयोज्यम्॥ ८८—९०॥

रौधिरस्येत्यादि।—गर्भकालव्यतिक्रमे इति—उचितगर्भकालस्य दशमासरूप-कालस्य व्यतिक्रमे; अयञ्च समयनियमो रक्तगुल्मस्यौषधार्हसमयप्रदर्शनार्थमेवोक्तः, ज्वरे सप्तदिवसात् परतः पाचनवत्, न तु गर्भाशङ्कानिरासार्थं, दशमासाति-क्रमेणापि गर्भावस्थानदर्शनात्; उक्तं हि—"तं स्त्री प्रसूते सुचिरेण गर्भं पुष्टो यदा वर्षगणैरपि स्यात्" (च० शा० अतुल्यगोत्री०) इति; तथा पिण्डितस्पन्दनमस्य गर्भलक्षणात् विरुद्धलक्षणमुक्तं, यथा—"यः स्पन्दते पिण्डित एव नाङ्गैः" (च० चि० गुल्म०) इति। एतेन दशममासादर्वागपि शोणितगुल्मावधारणं भवत्येव, तस्मात् व्याधिमहिम्ना अस्य दशममासातिक्रमे सत्येव सुखचिकित्स्यत्वप्रदर्शनार्थमिदमुक्तम्, अर्वाक् चिकित्सायान्तु शोणितातिस्रुतौ गर्भाशयोपघातादिकं स्यादिति॥ ९१॥

शतह्वेत्यादि।—शताह्वादिकल्कानां प्रक्षेपः। चिरबिल्वत्वक् नाटाकरञ्ज-

कल्कः पीतो हरेत् गुल्मं तिलक्वाथेन रक्तजम् ॥ ९२ ॥

व्योषादिचूर्णम्।—

तिलक्वाथो गुड़व्योष-हिङ्गुभार्गीयुतो भवेत्।
पानं रक्तभवे गुल्मे नष्टे पुष्पे च योषिताम् ॥ ९३ ॥

क्षारादिचूर्णं क्षारघृतञ्च।—

सक्षारं त्र्यूषणं मद्यं प्रपिबेदस्त्रगुल्मिनी।
पलाशक्षारतोयेन सिद्धं सर्पिः पिबेच्च सा ॥ ९४ ॥

रक्तस्रावणोपायः योनिविशोधनादिकञ्च।—

उष्णैर्वा भेदयेद्भिन्ने विधिरासृग्दरो हितः।
न प्रभिद्येत यद्येवं दद्यात् योनिविशोधनम् ॥ ९५ ॥
क्षारेण युक्तं पललं सुधाक्षीरेण वा पुनः।
रुधिरेऽतिप्रवृत्ते तु रक्तपित्तहरी क्रिया ॥ ९६ ॥

---

त्वक्। तिलक्वाथेनेति—तिलफलक्वाथेनेत्यर्थः; एवमुत्तरयोगेऽपि तिलफलस्यैव क्वाथः। केचित्तु तिलनालक्षारकृतक्वाथोदकेनापि व्यवहरन्ति। रक्तजमिति—आर्त्तवरक्तजम् ॥ ९२ ॥

तिलक्वाथ इत्यादि।—गुड़ादयः प्रक्षेप्याः। नष्टे पुष्पे इति—नष्टार्त्तवे ॥ ९३ ॥

सक्षारमित्यादि।—क्षारो घण्टापारुल्यादिकृतः, अन्ये तु—यवक्षार इत्याहुः। पलाशक्षारतोयेनेत्यादि।—अकल्कमिदं घृतम्। पलाशभस्माढ़कमुदकाढ़कैः षड्भिः संयोज्याग्नौ साधनीयं, तत्राच्छपैच्छिल्यादिलक्षणोदये तृतीयभागेऽवशिष्टे त्रिःसप्त-वारान् परिस्राव्य क्षारोदकं घृताच्चतुर्गुणं ग्राह्यं, तेन घृतस्य पाक इति चक्रः। अन्ये तु—पानीयक्षारविधिना स्रावितक्षाराम्बुना घृतपाकमुपदिशन्ति। कार्त्तिकः पुनः पलाशक्षारतोयेनेत्यनेन स्नेहपाकोक्तविधिना पलाशक्षारक्वाथकरणमित्याह ॥ ९४ ॥

उष्णैर्वेति।—उष्णैरिति—उष्णवीर्य्यैः सुरासौवीरादिभिः। भिन्ने इति—भृशं स्रवति रक्ते। योनिविशोधनमिति—वर्त्तिरूपतया योनिविरेचनमित्यर्थः। क्षारेणेत्यादि।—पलाशक्षारेण सह पललं तिलचूर्णं किञ्चिज्जलं दत्त्वा वर्त्तिं विधाय योन्यभ्यन्तरे दद्यात्; अथवा पलाशादिक्षारतिलचूर्णं स्नौहक्षीरेण मिश्रणीयं, तेन सूक्ष्मवस्त्रं म्रक्षयित्वा वर्त्तिः कार्य्या, सा च योन्यभ्यन्तरे देया। रुधिरे इत्यादि स्पष्टम् ॥ ९५।९६ ॥

भल्लातकघृतम्।—

भल्लातकात् कल्ककषायपक्वं सर्पिः पिबेच्छर्करया विमिश्रम्।
तत् रक्तगुल्मं विनिहन्ति पीतं बलासगुल्मं मधुना समेतम् ॥९७॥

अपथ्यानि।—

वल्लूरं मूलकं मत्स्यान् शुष्कशाकानि वैदलम्।
न खादेच्चालुकं गुल्मी मधुराणि फलानि च ॥ ९८ ॥

इति गुल्म-चिकित्सा।

---

## अथ हृद्रोग-चिकित्सा।

वातजे वमनार्थं दशमूलक्वाथः।—

वातोपसृष्टे हृदये वामयेत् स्निग्धमातुरम्।
द्विपञ्चमूलीक्वाथेन सस्नेहलवणेन च ॥ १ ॥

---

भल्लातकादित्यादि।—अत्र पादिकशर्कराप्रक्षेपः, एवं मध्वपि, "कल्कवन्मधुशर्करे" इत्युक्तेः। बलासः कफः। कफगुल्मे शर्करास्थाने मधु देयमित्यर्थः॥ ९७॥

वल्लूरमित्यादि सुश्रुतस्य।—वल्लूरं शुष्कमांसम्। मूलकमार्द्रं, शुष्कमूलकस्य वातहरत्वेन पथ्यत्वात्। एतच्च हरितवर्गोपलक्षणं, गुल्मे हरितवर्गस्याप्यहितत्वात्। वैदलं मुद्गादि। आलुकं पिण्डालुकम्। मधुराणि फलानि क्षीरिवृक्षफलानि, चक्रपाणौ न्यग्रोधादिफलवर्जनस्योक्तत्वात्। चकारात् हरीतकीवर्गोपलक्षणं, गुल्मे हरीतकीवर्गस्याप्यहितत्वात् ॥ ९८ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां गुल्म-चिकित्सा-विवृतिः।

---

गुल्मस्य हृदयं स्थानमुक्तम्, अतः स्थानसाम्यात् तदनन्तरं हृद्रोग उच्यते, वातोपसृष्टे इत्यादि सुश्रुतस्य।—अवानुक्तमपि मदनफलादिचूर्णं बोध्यं, वमनयोग्यत्वात्। वातजेऽपि वमनविधानं हृदयस्य कफस्थानत्वात्; उक्तं हि—"अन्यस्थानगतं दोषं स्थानिवत् समुपाचरेत" इति। एवं पित्तजेऽपि वमनं बोध्यम्। चरके हृद्रोगिणो यद्यप्यवस्था उक्तास्तथाऽपि कफोत्क्लेशे बलीयसि सर्वत्रैव वमनं श्रेयम् ॥ १ ॥

पिप्पल्यादि चूर्णम्।—

पिप्पल्येला वचा हिङ्गु यवक्षारोऽथ सैन्धवम्।
सौवर्चलमथो शुण्ठी अजमोदा च चूर्णितम्॥ २॥
फलधान्याम्लकौलत्थ-दधिमद्यासवादिभिः।
पाययेच्छुद्धदेहञ्च स्नेहेनान्यतमेन वा॥ ३॥

नागरक्वाथः।—

नागरं वा पिबेदुष्णं कषायञ्चाग्निवर्द्धनम्।
कासश्वासानिलहरं शूलहृद्रोगनाशनम्॥ ४॥

पित्तजे वमनार्थं श्रीपर्ण्यादिक्वाथः।—

श्रीपर्णीमधुकक्षौद्र-सितागुड़जलैर्वमेत्।
पित्तोपसृष्टे हृदये— ॥ ५॥

मधुरघृतं पित्तज्वरोक्तकषायप्रयोगातिदेशश्च।—

—सेवेत मधुरैः शृतम्।
घृतं कषायांश्चोद्दिष्टान् पित्तज्वरविनाशनान्॥ ६॥

---

पिप्पलीत्यादि।—पिप्पल्याद्यन्यतमेन वेत्यन्तं सुश्रुतस्य। फलाम्लं मातुलुङ्ग-दाडिमफलादि, दृष्टत्वात् तस्य रसो ग्राह्यः, वाते यौगिकत्वात्। धान्याम्लं काञ्जिकम्। कौलत्थः कुलत्थयूषः। स्नेहेनान्यतमेन वेति—घृतादीनामन्यतमेन। फलधान्याम्लादि-बहुद्रवोपदर्शनं सात्म्यापेक्षम्॥ २।३॥

नागरमित्यादि।—नागरं नागरकृतकषायं पिबेत्। वा-शब्दः पूर्वयोगा-पेक्षया॥ ४॥

पैत्तिकचिकित्सामाह, श्रीपर्णीत्यादि सुश्रुतस्य।—श्रीपर्णी गाम्भारी, तस्याः फलमेव देयम्। जलं श्रीपर्णीमधुकयोरेव, तयोरेव योग्यत्वात्; जलमवाङ्गशृतक्वाथः। अत्र क्षौद्रसितागुडान् प्रक्षिप्य पित्तजे वमेत्; किंवा जलस्य श्रीपर्ण्यादिभिः पञ्चभिः सम्बन्धात् पञ्च योगाः अमी। अत्रानुक्तमपि मदनफलादि पूर्ववत् बोध्यम्। डल्हनस्तु सितागुडजलैरित्यत्र "सितोत्पलजलैः" (सु० उ० ४३ अ०) इति पठित्वा उत्पलं कुष्ठमिति व्याचष्टे॥ ५॥

सेवेतेत्यादि।—मधुरैः शृतं घृतमिति—काकोल्यादिगणक्वाथकल्कसाधितं घृतम्॥ ६॥

शीतप्रदेहाद्युपदेशः ।—

शीताः प्रदेहाः परिषेचनानि
तथा विरेको हृदि पित्तदुष्टे ।
द्राक्षासिताक्षौद्रपरूषकैः स्यात्
शुद्धे च पित्तापहमन्नपानम् ॥ ७ ॥

यष्ट्याह्वादिचूर्णम् ।—

पिष्ट्वा पिबेद्वाऽपि सिताजलेन
यष्ट्याह्वयं तिक्तकरोहिणीञ्च ॥ ८ ॥

अर्जुनादिक्षीरचतुष्टयम् ।—

अर्जुनस्य त्वचा सिद्धं क्षीरं योज्यं हृदामये ।
सितया पञ्चमूल्या वा बलया मधुकेन वा ॥ ९ ॥

अर्जुनप्रयोगः ।—

घृतेन दुग्धेन गुडाम्भसा वा पिबन्ति चूर्णं ककुभत्वचो ये ।
हृद्रोगजीर्णज्वररक्तपित्तं हत्वा भवेयुश्चिरजीविनस्ते ॥ १० ॥

कफजे वमनार्थं वचादिक्काथः पिप्पल्यादिचूर्णातिदेशश्च ।—

वचा-निम्बकषायाभ्यां वान्तं हृदि कफोत्थिते ।

---

शीता इत्यादि ।—द्राक्षादिभिर्युक्तमन्नपानमल्पयूषादि वमनविरेचनशुद्धे कार्य्यमित्यर्थः इति केचित् । अन्ये तु—"पित्ते द्राक्षेक्षुनिर्य्यास-सिताक्षौद्रपरूषकैः । युक्तो विरेको हृद्यः स्यात्" ( वा० चि० ६ अ० ) इति तन्त्रान्तरदर्शनात् द्राक्षादिभिर्युक्तो विरेक इत्याहुः ॥ ७ ॥

पिष्ट्वेत्यादि ।—सिताजलेनेति—शर्करामिश्रितजलेनेत्यर्थः । "सितां जलेन" इति पाठोऽपि ज्ञेयः ; उक्तं हि वाग्भटे—"यष्टिमधुककल्कञ्च पिबेत् ससितमम्भसा" ( चि० ६ अ० ) इति ॥ ८ ॥

अर्जुनस्येत्यादि ।—क्षीरपरिभाषया अर्जुनत्वगादिभिः प्रत्येकं साधितं सितया सह पेयमिति चत्वारो योगाः । केचित्तु केवलवारिसाधितक्षीरे सिताप्रक्षेपात् पञ्च योगानाहुः । पञ्चमूली चात्र स्वल्पा । एते च योगा वातपित्ते ज्ञेयाः ॥ ९।१० ॥

वचेत्यादि सुश्रुतस्य ।—वचाकषायेण निम्बकषायेण वा वमनम् ; किंवा वचाकल्को निम्बस्य कषायः, ताभ्यां मिलित्वा वमनम् । हृदीति—हृद्रोगे, तात्स्थ्यात् ;

वातहृद्रोगहृच्चूर्णं पिप्पल्यादि च योजयेत्॥ ११ ॥

त्रिदोषजे लङ्घनाद्युपदेशः।—

त्रिदोषजे लङ्घनमादितः स्यादन्नञ्च सर्वेषु हितं विधेयम्।
हीनाधिमध्यत्वमवेक्ष्य चैव कार्य्यं त्रयाणामपि कर्म शस्तम्॥१२॥

पुष्करप्रयोगः।—

चूर्णं पुष्करजं लिह्यान्माक्षिकेण समायुतम्।
हृच्छूलं श्वासकासघ्नं क्षयहिक्कानिवारणम्॥ १३ ॥

गोधूमाद्युत्कारिका।—

तैलाज्यगुडविपक्कं चूर्णं गोधूमपार्थजं वाऽपि।
पिबति पयोऽनु च यः स भवति जितसकलहृदामयः पुरुषः॥१४॥

गोधूमाद्युत्कारिका।—

गोधूमककुभचूर्णं छागपयो गव्यसर्पिषा विपक्कम्।

---

कफाः क्षीयन्तीति यावत्। वातहृद्रोगहृच्चूर्णं पिप्पल्यादि चेति—अत्रैव वातहृद्रोगे पिप्पल्यादिना यच्चूर्णमुक्तं तत् पाययेदित्यर्थः; वाग्भटेऽप्युक्तं—"कफोद्भवे वमेत् स्विन्नः पिचुमर्दवचाम्भसा। कुलत्थधन्वोत्थरस-तीक्ष्णमद्ययवाशनः॥ पिबेच्चूर्णं वचा-हिङ्गु-लवणद्वयनागरात्। सैलायमानीककणा-यवक्षारात् सुखाम्बुना॥ फलधान्याम्ल-कौलत्थ-यूषमूत्रासवैस्तथा॥" (चि० ६ अ०) इति। वातहृद्रोगहृच्चूर्णं पिप्पल्यादिकं तथा पिप्पल्यादिगणं पाययेदित्याहुरन्ये॥ ११ ॥

त्रिदोषजे इत्यादि।—लङ्घनविधानं हृदयस्य कफस्थानतया तद्गदे त्रिदोषजेऽपि कफ एवादौ लङ्घनेन जेय इति मत्वा कृतम्। त्रिदोषजे उल्बणदोषापेक्षया चिकित्सासूत्रमाह, हीनाधीत्यादि।—अधिशब्दोऽधिकवाची, अधिकत्वमित्यर्थः, दोषाणां हीनत्वादिकं प्रतीत्य यत् कर्म शस्तमधिकदोषहन्तृतया तत् कार्य्यमिति वाक्यार्थः॥ १२ ॥

चूर्णमित्यादि।—स्पष्टम्॥ १३ ॥

तैलाज्येत्यादि।—तैलाज्यगुडान् मिलित्वा पादिकान् दत्त्वा गोधूमपार्थचूर्णं स्तोकमात्रेण तोयेनोत्कारिकावद्विपाच्य भक्ष्यम्। किंवा गोधूमपार्थचूर्णसमो गुडः, तैलाज्ये तु संस्कारार्थं स्तोकमात्रे देये। पार्थोऽर्जुनवृक्षः। वा शब्दः पूर्वयोगापेक्षया॥ १४ ॥

मधुशर्करासमेतं शमयति हृद्रोगमुद्धतं पुंसाम् ॥ १५ ॥

नागबलाऽर्जुनप्रयोगौ ।—

मूलं नागबलायास्तु चूर्णं दुग्धेन पाययेत् ।
हृद्रोगश्वासकासघ्नं ककुभस्य च वल्कलम् ॥ १६ ॥
रसायनं परं बल्यं वातजिन्मासयोजितम् ।
संवत्सरप्रयोगेण जीवेद्वर्षशतं ध्रुवम् ॥ १७ ॥

हिङ्ग्वादिचूर्णम् ।—

हिङ्ग्वगन्धाविड़विश्वकृष्णा-कुष्ठाभयाचित्रकयावशूकम् ।
पिबेच्च सौवर्चलपुष्कराढ्यं यवाम्भसा शूलहृदामयघ्नम् ॥ १८ ॥

दशमूलीक्वाथः ।—

दशमूलीकषायन्तु लवणक्षारसंयुतम् ।
श्वासं कासञ्च हृद्रोगं गुल्मशूलञ्च नाशयेत् ॥ १९ ॥

पाठादिचूर्णम् ।—

पाठां वचां यवक्षारमभयां साम्लवेतसाम् ।
दुरालभां चित्रकञ्च त्र्यूषणञ्च फलत्रयम् ॥ २० ॥
शटीं पुष्करमूलञ्च तिन्तिड़ीकं सदाड़िमम् ।
मातुलुङ्गस्य मूलानि श्लक्ष्णचूर्णानि कारयेत् ॥ २१ ॥
सुखोदकेन मद्यैर्वा चूर्णान्येतानि पाययेत् ।
अर्शः शूलञ्च हृद्रोगं गुल्मञ्चाशु व्यपोहति ॥ २२ ॥

मृगशृङ्गप्रयोगः ।—

पुटदग्धमश्मपिष्टं हरिणविषाणन्तु सर्पिषा पिबतः ।

---

गोधूमेत्यादि ।—ककुभोऽर्जुनः । अत्रापि योगे सर्पिर्मधुशर्कराणां पूर्ववन्मानं रहीला छागचौरेणोत्कारिकावत् पाकः, शीते मधु देयम् ॥ १५ ॥

मूलं नागबलाया इत्यादि ।—मूलं चूर्णमिति—चूर्णरूपं मूलमित्यर्थः । ककुभस्य वल्कलमिति—ककुभस्य त्वक्चूर्णमपि दुग्धेन पेयम् । योगद्वयमेतत् ॥ १६।१७ ॥

हिङ्ग्वित्यादि ।—पुष्करस्याभावात् कुष्ठस्यैव भागद्वयम् । हिङ्ग्वादिपुष्करान्तानां चूर्णं यवक्वाथे प्रक्षिप्य पिबेत् ॥ १८—२२ ॥

हृत्पृष्ठशूलमुपशममुपयात्यचिरेण कष्टमपि ॥ २३ ॥

क्रिमिहृद्रोगचिकित्सा।—

क्रिमिहृद्रोगिणं स्निग्धं भोजयेत् पिशितौदनम्।
दध्ना च पललोपेतं त्र्यहं पश्चाद्विरेचयेत् ॥ २४ ॥
सुगन्धिभिः सलवणैर्योगैः साजाजिशर्करैः।
विड़ङ्गगाढ़ं धान्याम्लं पाययेद्धितमुत्तमम् ॥ २५ ॥
क्रिमिजे च पिबेन्मूत्रं विड़ङ्गामयसंयुतम्।
हृदि स्थिताः पतन्त्येवमधस्तात् क्रिमयो नृणाम् ॥
यवान्नं वितरेच्चास्मै सविड़ङ्गमतः परम् ॥ २६ ॥

बल्लभघृतम्।—

मुख्यं शताईञ्च हरीतकीनां सौवर्च्चलस्यापि पलद्वयञ्च।

---

पुटेत्यादि।—हरिणशृङ्गं कुशेन संवेष्ट्य मृदा प्रलिप्य च गोमयाग्नौ निर्धूमाङ्गारे वा दग्ध्वा शिलापिष्टं घृतेन पेयमित्यर्थः ॥ २३ ॥

क्रिमीत्यादि अतः परमित्यन्तं सुश्रुतस्य।—पिशितप्रधानमोदनं पिशितौदनं, तच्च दध्ना पललेन च संयुक्तं त्र्यहं भोजयेत्। पललं तिलचूर्णम्; एतच्च पिशितौदनभोजनं क्रिमीणामुत्क्लेशार्थम्। पश्चादिति—क्रिम्युत्क्लेशानन्तरं विरेचयेत; कैर्विरेचयेदित्याह, सुगन्धिभिरित्यादि। योगैरिति—विरेचनयोगैः; कीदृशैः? सुगन्धिभिः, चातुर्जातकयोगैरिति शेषः; सौगन्ध्यकरणञ्च वान्तिशङ्कानिरासार्थम्; वमनञ्च क्रिमिहृद्रोगे निषिद्धं, क्रिमिजर्जरितहृदयत्वात्, तथा वमनेन क्रिमिभिः शिरोगतैरिन्द्रियोपघातभयाच्चेति। सलवणैरित्यत्र "सपललैः" इति पठित्वा सभृष्ट-तिलचूर्णैरिति व्याख्यानयन्ति केचित्। पीतविरेकस्यानुपानमाह, विड़ङ्गगाढ़-मित्यादि। विड़ङ्गगाढ़ं विड़ङ्गचूर्णोत्कटम्। धान्याम्लमिति—काञ्जिकम्। विडङ्ग-गाढ़ैरिति पाठे—योगैरित्यस्य विशेषणम्। विरेचनयोगान्तरमाह, क्रिमिजे चेत्यादि।—विड़ङ्गकुष्ठचूर्णं प्रक्षिप्य गोमूत्रं वा विरेकार्थं पिबेत्। यद्यप्ययं योगः सुश्रुते नास्ति, तथाऽपि तन्त्रान्तरीय एवायं विरेचनप्रस्तावे सङ्ग्रहकारेण लिखितः। विरेचनानन्तरमग्निसन्धुक्षणार्थं परिशिष्टक्रिमिविनाशार्थञ्चान्नसंस्कारमाह, यवान्न-मित्यादि।—यवान्नमिति—यवपेयादिकम्। सविड़ङ्गमिति—षड़ङ्गविधिना विड़ङ्ग-कषायसाधितम्। अतः परमिति—विरेकानन्तरमित्यर्थः ॥ २४—२६ ॥

पक्वं घृतं वल्लभकेतिनाम्ना हृत्कासशूलोदरमारुतघ्नम् ॥२७॥

श्वदंष्ट्राद्यं घृतम् ।—

श्वदंष्ट्रोशीरमञ्जिष्ठा-बलाकाश्मर्य्यकत्तृणम् ।
दर्भमूलं पृथक्पर्णी पलाशर्षभकौ स्थिरा ॥ २८ ॥
पलिकान् साधयेत् तेषां रसे चोरे चतुर्गुणे ।
कल्कैः स्वगुप्तर्षभक-मेदाजीवन्तिजीवकैः ॥ २९ ॥
शतावर्य्यृद्धिमृद्वीका-शर्कराश्रावणोविसैः ।
प्रस्थः सिद्धो घृताद्वात-पित्तहृद्रोगशूलनुत् ॥ ३० ॥
मूत्रकृच्छ्रप्रमेहार्शः-श्वासकासक्षयापहः ।
धनुःस्त्रीमद्यभाराध्व-खिन्नानां बलमांसदः ॥ ३१ ॥

बलाद्यं घृतम् ।—

घृतं बलानागबलाऽर्जुनाम्बु-सिद्धं सयष्टीमधुपादकल्कम् ।
हृद्रोगशूलक्षतरक्तपित्त कासानिलासृक् शमयत्युदीर्णम् ॥३२॥

अर्जुनघृतम् ।—

पार्थस्य कल्कस्वरसेन पक्वं शस्तं घृतं सर्वहृदामयेषु ॥ ३३ ॥

इति हृद्रोग-चिकित्सा ।

---

मुख्यनित्यादि ।—वल्लभघृते मुख्यमिति—श्रेष्ठम् । हरीतकी सौवर्चलञ्च कल्कः, घृतस्य प्रस्थः, जलेन च पाकः ॥ २७ ॥

श्वदंष्ट्रेत्यादि ।—पलाशः किंशुकः, तस्य मूलम् । अन्ये तु—पलाशं शटीमाहुः । एतस्मिन्नेकादशपली क्वाथेऽष्टगुणं जलमेकादशशरावं दत्त्वा क्वाथः कार्य्यः, पादशेषञ्च पादोनशरावत्रयं, ततश्चतुर्गुणं चीरमेकादशशरावरूपमिति किञ्चिदूनचतुर्गुणः पाकः । अन्ये तु—एकादशपली क्वाथे एवाढ़कं जलं दत्त्वा पादशेषञ्च प्रस्थ इत्याहुः ; अतश्चतुर्गुणं चीरमाढ़कम्, एवं पञ्चगुणः पाक इति ; व्यवहारोऽप्येवमेव । श्रावणी मुण्डितिका । विसं मृणालम् ॥ २८—३१ ॥

घृतमित्यादि ।—बलाद्यघृते नागबला गोरक्षतण्डुला । अम्बु क्वाथः ॥ ३२ ॥

पार्थस्येत्यादि ।—अर्जुनघृतं स्पष्टम् ॥ ३३ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां हृद्रोग चिकित्सा-विवृतिः ।

# अथ मूत्रकृच्छ्र-चिकित्सा।

## वातमूत्रकृच्छ्रे।

क्रियासूत्रम्।—

अभ्यञ्जनस्नेहनिरूहबस्ति-स्नेहोपनाहोत्तरबस्तिसेकान्।
स्थिरादिभिर्वातहरैश्च सिद्धान् दद्याद्रसांश्चानिलमूत्रकृच्छ्रे ॥१॥

अमृतादिः।—

अमृतानागरं धात्री-वाजिगन्धात्रिकण्टकान्।
प्रपिबेद्वातरोगार्त्तः सशूलो मूत्रकृच्छ्रवान् ॥ २ ॥

## पित्तमूत्रकृच्छ्रे।

क्रियासूत्रम्।—

सेकावगाहाः शिशिराः प्रदेहा
ग्रैष्मो विधिर्वस्तिपयोविकाराः।
द्राक्षाविदारीक्षुरसैर्घृतैश्च
कृच्छ्रेषु पित्तप्रभवेषु कार्य्याः ॥ ३ ॥

तृणपञ्चमूलम्।—

कुशः काशः शरो दर्भ इक्षुश्चेति तृणोद्भवम्।
पित्तकृच्छ्रहरं पञ्च-मूलं वस्तिविशोधनम् ॥ ४ ॥

रक्तमूत्रे पञ्चतृणक्षीरम्।—

एतत्सिद्धं पयः पीतं मेढ्रगं हन्ति शोणितम् ॥ ५ ॥

---

शरीरान्तरे समंशते त्रीणि मर्माणि शिरोहृदयवस्तयः प्रधानानि; ततो हृद्रोगचिकित्सामभिधाय वस्तिरोगचिकित्सामाह, अभ्यञ्जनेत्यादि।—स्थिरादिभिरिति—शालपर्ण्यादिभिः पञ्चमूलैः। वातहरैरिति—वातहरत्वेनोक्तैः ॥ १ ॥

अमृतेत्यादि।—योगोऽयं क्वाथेन ॥ २ ॥

सेकावगाहा इत्यादि।—ग्रैष्मो विधिरिति "शीतं सशर्करं मन्थम्" (सू०) इत्यादिना चरकस्य तस्याशितीयोक्तः। द्राक्षाविदारीक्षुरसैर्घृतैश्चेति सप्तार्थे तृतीया ॥ ३ ॥

कुश इत्यादि।—तृणोद्भवं पञ्चमूलमिति योज्यम्। दर्भः उलुशामूलम् ॥ ४,५ ॥

शतावर्य्यादिः।—

शतावरीकाशकुशश्वदंष्ट्रा-विदारिशालीक्षुकशेरुकाणाम्।
क्वाथं सुसिद्धं मधुशर्कराक्तं पिबन् जयेत् पैत्तिकमूत्रकृच्छ्रम् ॥६॥

हरीतक्यादिः।—

हरीतकीगोक्षुरराजवृक्ष-पाषाणभिद्धन्वयवासकानाम्।
क्वाथं पिबेन्माक्षिकसम्प्रयुक्तं कृच्छ्रे सदाहे सरुजे विबन्धे ॥ ७ ॥

गुडामलकीप्रयोगः।—

गुडेनामलकं वृष्यं श्रमघ्नं तर्पणं परम्।
पित्तासृग्दाहशूलघ्नं मूत्रकृच्छ्रविनाशनम् ॥ ८ ॥

एर्वारुवीजादिचूर्णं दार्वीप्रयोगश्च।—

एर्वारुवीजं मधुकञ्च दार्वीं पैत्ते पिबेत् तण्डुलधावनेन।
दार्वीं तथैवामलकीरसेन समाक्षिकां पैत्तिकमूत्रकृच्छ्रे ॥ ९ ॥

## कफमूत्रकृच्छ्रे।

क्रियासूत्रम्।—

क्षारोष्णतीक्ष्णौषधमन्नपानं स्वेदो यवान्नं वमनं निरूहाः।
तक्रञ्च तिक्तौषधसिद्धतैलान्यभ्यङ्गपानं कफमूत्रकृच्छ्रे ॥ १० ॥

एलाप्रयोगः।—

मूत्रेण सुरया वाऽपि कदलीस्वरसेन वा।
कफकृच्छ्रविनाशाय श्लक्ष्णां पिष्ट्वा त्रुटिं पिबेत् ॥ ११ ॥

---

शतावरीत्यादि।—शालीति—शालिधान्यमूलम् ॥ ६ ॥

हरीतकीत्यादि।—राजवृक्षः शोणालुस्तत्फलम्। धन्वयवासकः दुरालभा ॥ ७ ॥

गुडेनेत्यादि।—गुडामलकफले तुल्यमाने ॥ ८ ॥

एर्वारुवीजमित्यादि।—एर्वारुः कर्कटी। समाक्षिकामित्यस्य दार्वीमित्यनेनैव सम्बन्धः, न तु पूर्वेण ॥ ९ ॥

क्षारेत्यादि कफकृच्छ्रभेषजम्।—क्षारादिभिर्युक्तमन्नपानम्। ऊषणं त्रिकटुक-मिति चक्रः, अत एव औषधमिति पाठोऽशुद्ध एव; वाग्भटेऽपि—"कफजे वमनस्वेदौ तीक्ष्णोष्णकटुभोजनम्" (चि० ११ अ०) इत्युक्तत्वात् ॥ १० ॥

मूत्रेणेत्यादि।—कदलीस्वरसेनेति—कदलीमूलस्वरसेन। त्रुटिः सूक्ष्मैला; उक्तं हि

शालिञ्च-प्रवालप्रयोगौ ।—

तक्रेण युक्तं शितिमारकस्य बीजं पिबेत् कृच्छ्रविघातहेतोः ।
पिबेत् तथा तण्डुलधावनेन प्रवालचूर्णं कफमूत्रकृच्छ्रे ॥ १२ ॥

श्वदंष्ट्रादिः ।—

श्वदंष्ट्राविश्वतोयं वा कफकृच्छ्रविनाशनम् ॥ १३ ॥

## त्रिदोषजमूत्रकृच्छ्रे ।

क्रियासूत्रम् ।—

सर्वं त्रिदोषप्रभवे तु वायोः
स्थानानुपूर्व्या प्रसमीक्ष्य कार्य्यम् ।
त्रिभ्योऽधिके प्राक् वमनं कफे स्यात्
पित्ते विरेकः पवने तु वस्तिः ॥ १४ ॥

बृहत्यादिः ।—

बृहतीधावनीपाठा-यष्टीमधुकलिङ्गकाः ।
पाचनीयो बृहत्यादिः कृच्छ्रदोषत्रयापहः ॥ १५ ॥

---

वाग्भटे—"पिबेन्मद्येन सूक्ष्मैलां धात्रीफलरसेन वा" (चि० ११ अ०) इति । अन्ये तु—एलामात्रमाहुः ॥ ११ ॥

तक्रेणेत्यादि ।—शितिमारः शालिञ्चः । प्रवालः विद्रुमः ॥ १२।१३ ॥

समकुपितदोषत्रयारब्धमूत्रकृच्छ्रचिकित्सामाह, सर्वमित्यादि ।—वातजादिमूत्रकृच्छ्रनिर्दिष्टं भेषजं सर्वं समत्रिदोषजे मूत्रकृच्छ्रे मिलितं कार्य्यम्; तच्च वायोः स्थानानुपूर्व्या कर्त्तव्यं, न तु त्रिदोषजज्वर इव कफस्थानानुपूर्व्या, समत्रिदोषारब्धमूत्रकृच्छ्रस्य वातस्थानभवत्वेन वायोरेव प्रथमं चिकित्स्यत्वादिति भावः । विषमसन्निपातमूत्रकृच्छ्रचिकित्सामाह, त्रिभ्य इत्यादि ।—त्रिभ्योऽधिके इति वाक्यं कफे पित्ते वाते इत्येतैः क्रमेण सम्बध्यते । अत्र मूत्रकृच्छ्रारम्भकमाशयान्तरस्थकफमपेक्ष्य मूत्रकृच्छ्रारम्भककफभागस्याधिक्यमस्तीति कृत्वा त्रिभ्योऽधिके इत्युक्तम् । एवं पित्तपवनयोरपि पित्तपवनान्तरापेक्षया आधिक्यं व्याख्येयम् । अन्ये—त्रिभ्य इति छान्दसत्वात् षष्ठ्यर्थे पञ्चमीत्याहुः, तेन त्रयाणां मध्ये इत्यर्थः ॥ १४ ॥

बृहत्यादि ।—धावनी कण्टकारी । कृच्छ्रदोषत्रयापह इति—कृच्छ्रजनकदोषत्रयापह इत्यर्थः ॥ १५ ॥

अभिघातजमूत्रकृच्छ्रचिकित्सा ।—

तथाऽभिघातजे कुर्य्यात् सद्योव्रणचिकित्सितम् ।
मूत्रकृच्छ्रे सदा चास्य कार्य्या वातहरी क्रिया ॥ १६ ॥

पुरीषजमूत्रकृच्छ्रे स्वेदादिः ।—

स्वेदचूर्णक्रियाऽभ्यङ्ग-वस्तयः स्युः पुरीषजे ॥ १७ ॥

पुरीषजमूत्रकृच्छ्रे गोक्षुरप्रयोगः ।—

क्वाथं गोक्षुरबीजस्य यवक्षारयुतं पिबेत् ।
मूत्रकृच्छ्रं शकृज्जञ्च पीतः शीघ्रं विनाशयेत् ॥ १८ ॥

अश्मरीशर्कराजमूत्रकृच्छ्रे चिकित्साऽतिदेशः ।—

क्रिया हिता त्वश्मरिशर्करायां
या मूत्रकृच्छ्रे कफमारुतोत्थे ॥ १९ ॥

शुक्रनिरोधजमूत्रकृच्छ्रे शिलाजतुप्रयोगः ।—

लेह्यं शुक्रविबन्धोत्थे शिलाजतु समाक्षिकम् ।
वृष्यैर्बृंहितधातोश्च विधेयाः प्रमदोत्तमाः ॥ २० ॥

शुक्रनिरोधजमूत्रकृच्छ्रे एलादिचूर्णम् ।—

एलाहिङ्गुयुतं क्षीरं सर्पिर्मिश्रं पिबेन्नरः ।
मूत्रदोषविशुद्ध्यर्थं शुक्रदोषहरञ्च तत् ॥ २१ ॥

रक्तमूत्रकृच्छ्रे चिकित्साऽतिदेशः ।—

यन्मूत्रकृच्छ्रे विहितन्तु पैत्ते तत् कारयेच्छोणितमूत्रकृच्छ्रे ॥२२॥

---

तथेत्यादि ।—वातहरी क्रियेति पानाद्यायुक्ता, वातस्थानभवत्वादिति भावः ॥१६॥

स्वेदेत्यादि ।—चूर्णक्रियेति—फलवर्त्तिः, किंवा विरेचनद्रव्यचूर्णं दत्त्वा गुदे नलिकया फुत्करणम् ॥ १७।१८ ॥

अश्मरीशर्कराजमूत्रकृच्छ्रचिकित्सामाह, क्रिया हितेत्यादि ।—"अश्मरी-शर्कराभ्याम्" ( चि० विमर्षो० ) इति चरके पाठः । एकोनविंशतिस्थानाद्यन्तःपातिनि क्रियेत्यादि सन्दर्भे इत्थमेव व्याख्या विधेया, कफमारुतोत्थे इति—प्रत्येकं कफोत्थे मारुतोत्थे च मूत्रकृच्छ्रे या क्रिया विहिता, सा मिलितैव अश्मर्य्यां शर्करायाञ्च कर्त्तव्येत्यर्थः, शर्कराश्मरीचिकित्सितस्यैव तत्कृच्छ्रचिकित्सितत्वादिति भावः ; उक्तं हि—"शर्कराश्मरिकृच्छ्रे तु शर्कराश्मरिवारणम्" इति । वार्य्यते निवार्य्यते अनेनेति वारणं चिकित्सितम् इति ॥ १९।२० ॥

एलेत्यादि ।—एलाहिङ्गुनी प्रक्षिप्य ससर्पिः क्षीरं पिबेदित्यर्थः ॥ २१।२२ ॥

त्रिकण्टकादिः ।—

त्रिकण्टकारग्वधदर्भकाश-दुरालभापर्वतभेदपथ्याः ।
निघ्नन्ति पीता मधुनाऽश्मरीञ्च सम्प्राप्तमृत्योरपि मूत्रकृच्छ्रम् ॥ २३ ॥

अतिबलाप्रयोगः ।—

कषायोऽतिबलामूल-साधितः सर्वकृच्छ्रजित् ॥ २४ ॥

एलादिचूर्णं लेहश्च ।—

एलाऽश्मभेदकशिलाजतुपिप्पलीनां
चूर्णानि तण्डुलजलैर्लुलितानि पीत्वा ।
यद्वा गुडेन सहितान्यवलिह्य सम्यक्
आसन्नमृत्युरपि जीवति मूत्रकृच्छ्री ॥ २५ ॥

लौहप्रयोगः ।—

अयोरजः श्लक्ष्णपिष्टं मधुना सह योजितम् ।
मूत्रकृच्छ्रं निहन्त्याशु त्रिभिर्लेहैर्न संशयः ॥ २६ ॥

यवक्षार-कण्टकारीप्रयोगौ ।—

सितातुल्यो यवक्षारः सर्वकृच्छ्रविनाशनः ।
निदिग्धिकारसो वाऽपि सक्षौद्रः कृच्छ्रनाशनः ॥ २७ ॥

शतावर्यादिघृतक्षीरे ।—

शतावरीकाशकुशश्वदंष्ट्रा-विदारिकेक्ष्वामलकेषु सिद्धम् ।

---

त्रिकण्टकेत्यादि ।—पर्वतभेदः पाषाणभेदः । एषां कषाये मधु प्रक्षेप्यम् ॥२३॥

कषाय इत्यादि ।—अतिबला श्वेतबला ॥ २४ ॥

एलेत्यादि ।—एलादिचूर्णानि तण्डुलजलेन पातव्यानि, किंवा गुडेन लेह्यानीति ॥ २५ ॥

अय इत्यादि ।—मारितपुटितवज्रादिलौहचूर्णं रति ५, मधुमात्रेण लौहपात्रे मर्दयित्वा लेह्यं रक्तिकादिक्रमेण माषकद्वयपर्यन्तम् । त्रिभिर्लेहैरिति—दिनत्रयेणेत्यर्थः ॥ २६ ॥

सितातुल्य इत्यादि ।—निदिग्धिकारस इति—कण्टकारीस्वरसः; उक्तं हि वाग्भटे—“स्वरसं कण्टकार्या वा पाययेन्माक्षिकान्वितम्” (चि० ११ अ०) इति ॥ २७ ॥

सर्पिः पयो वा सितया विमिश्रं कृच्छ्रेषु पित्तप्रभवेषु योज्यम् ॥२८॥

त्रिकण्टकाद्यं घृतम् ।—

त्रिकण्टकैरण्डकुशाद्यभीरु-कर्कारुकेक्षुस्वरसेन सिद्धम् ।
सर्पिर्गुडार्द्धांशयुतं प्रपेयं कृच्छ्राश्मरीमूत्रविघातहेतोः ॥ २९ ॥

सुकुमारकुमारकघृतम् ।—

पुनर्नवामूलतुला दशमूलं शतावरी ।
बला तुरगगन्धा च तृणमूलं त्रिकण्टकम् ॥ ३० ॥
विदारिगन्धा नागाह्वा गुडूच्यतिबला तथा ।
पृथक् दशपलान् भागान् जलद्रोणे विपाचयेत् ॥ ३१ ॥
तेन पादावशेषेण घृतस्याढ़कं पचेत् ।
मधुकं शृङ्गवेरञ्च द्राक्षासैन्धवपिप्पली: ॥ ३२ ॥
द्विपलिकाः पृथक् दद्यात् यमान्याः कुड़वं तथा ।
त्रिंशत् गुड़पलान्यत्र तैलस्यैरण्डजस्य च ॥ ३३ ॥
प्रस्थं दत्त्वा समालोड्य सम्यक् मृद्वग्निना पचेत् ।
एतदीश्वरपुत्राणां प्राग्भोजनमनिन्दितम् ॥ ३४ ॥
राज्ञां राजसमानाञ्च बहुस्त्रीपतयश्च ये ।
मूत्रकृच्छ्रे कटीस्तम्भे तथा गाढ़पुरीषिणाम् ॥ ३५ ॥

---

शतावरीत्यादि ।—घृतसाधनपक्षे शतावर्य्यादीनां कल्कः, जलञ्च चतुर्गुणमिति; शर्करा तु प्रक्षेप्या ॥ २८ ॥

त्रिकण्टकेत्यादि ।—कुशादि तृणपञ्चमूलम् । अभीरु शतावरी । कर्कारुकः कुष्माण्डभेदः कष्माण्डाकृतिः उत्कलदेशे प्रसिद्धः । त्रिकण्टकादीनां सर्वेषां स्वरसः, तदभावे कषायः । गुडार्द्धांशयुतमिति—घृतापेक्षया अर्द्धांशो गुड इति षोड़शपल इत्यर्थः, गुडस्य प्रक्षेप्यः । अन्ये तु—गुडं दत्त्वैव पाक इत्याहुः ॥ २९ ॥

पुनर्नवेत्यादि ।—दशमूलस्य मिलित्वा दश पलानि । तृणमूलं तृणपञ्चमूलम्, तदपि मिलित्वा दशपलमानम । विदारिगन्धा शालपर्णी । नागाह्वा नागबला, गोरक्षतण्डुला इत्यर्थः । अतिबला श्वेतबला । द्रोणे इति—द्रव्यतुलाद्वये प्रत्येकं द्रोण एव इत्यर्थः । द्विपलिका इति—पलद्वयमानाः । गुड़मेरण्डतैलञ्च दत्त्वैव पाकः ।

मेढ्रवङ्क्षणशूले च योनिशूले प्रशस्यते ।
यथाक्तानाञ्च गुल्मानां वातशोणितिकाश्च ये ॥ २६ ॥
वस्य रसायनं प्रोक्तं सुकुमारकुमारकम् ।
पुनर्नवाशतं द्रोणो देयोऽन्येषु तथाऽपर: ॥ २७ ॥

इति मूत्रकृच्छ्र-चिकित्सा ।

## अथ मूत्राघात-चिकित्सा ।

क्रियासूत्रम् ।—

मूत्राघातान् यथादोषं मूत्रकृच्छ्रहरैर्जयेत् ।
वस्तिमुत्तरवस्तिञ्च दद्यात् स्निग्धं विरेचनम् ॥ १ ॥

एर्वारुबीजादिकल्क: ।—

कल्कमेर्वारुबीजानामक्षमात्रं ससैन्धवम् ।
धान्याम्लयुक्तं पीत्वैव मूत्राघाताद्विमुच्यते ॥ २ ॥

पानीयक्षारा: क्षारलेहाश्च ।—

पाटल्या यावशूकाच्च पारिभद्रात् तिलादपि ।
क्षारोदकेन मदिरां त्वगेलोषणसंयुताम् ॥

सुकुमारेति—सुकुमारा: सुखिन:, कुमारा: शिशव:, एतदुभयोर्हितत्वात् सुकुमारकुमारकसंज्ञा। देयोऽन्येषु तथाऽपर इति—अन्येषु दशमूलादिष्वपरो द्रोण इत्यर्थ: ॥ २०—२७ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां मूत्रकृच्छ्र-चिकित्सा-विवृति: ।

मूत्रगतविकारसाधर्म्यादनन्तरं मूत्राघातचिकित्सारम्भ:, मूत्राघातानित्यादि ।—मूत्रस्याघातो विबन्ध: मूत्राघात: । मूत्राघातमूत्रकृच्छ्रयोश्चायं भेद:,—मूत्रकृच्छ्रे कृच्छ्रत्वमधिकमीषद्विबन्ध: ; मूत्राघाते तु विबन्धो महान्, कृच्छ्रत्वमल्पमिति ॥ १ ॥

कल्कमित्यादि सुश्रुतस्य ।—एर्वारु: चीणकर्कटीति डल्लन: । धान्याम्लं काञ्जिकम् ॥ २ ॥

पाटल्या इत्यादि सुश्रुतस्य ।—तिलादिति—तिलनालात् । इहापि वक्ष्यमाणं पृथक् पृथगिति सम्बन्धनीयं, तेन पृथक् पाटल्यादीनां क्षारस्योदकेन सम्यं

पिबेत् गुड़ोपदंशान् वा लिह्यादेतान् पृथक् पृथक्॥ ३॥

त्रिफलाकल्कः कण्टकारीस्वरसश्च।—

त्रिफलाकल्कसंयुक्तं लवणञ्चापि पाययेत्।
निदिग्धिकायाः स्वरसं पिबेद्वा तान्तवस्रुतम्॥ ४॥

कुङ्कुमप्रयोगः पाटलाक्षारश्च।—

जले कुङ्कुमकल्कं वा सक्षौद्रमुषितं निशि।
सतैलं पाटलाभस्म क्षारवद्वा परिस्रुतम्॥ ५॥

---

मदिरां लवणेनोषणं प्रक्षिप्य पिबेत्। ऊषणं मरिचम्। अन्ये तु—पाटलीयावशूकयोर्मिलित्वा क्षारः, केवलयवक्षारस्यादृष्टत्वात्; अत एव वाग्भटे आयुर्वेदसारे च—"पाटलीयावशूकाभ्याम्" (वा० चि० ११ अ०) इति मिलित्वा पठ्यते इत्याहुः। अरुणदत्तोऽप्येवं वाग्भटटीकायां व्याख्यातवान्। कार्त्तिकस्तु—मदिरामित्यस्य स्थाने "मतिमान्" इति पाठं स्वीकृत्य चूर्णमिति चाध्याहृत्य एवं व्याचष्टे—'पाटल्यादीनां चूर्णं क्षारोदकेन मुष्ककक्षारवारिणा पिबेत्" इति। यदाह विश्वामित्रः,—"पाटलेः पारिभद्राद्वा तिलाद्वाऽपि यवाग्रजात्। कणोषणत्वग्युतं चूर्णं मुष्कक्षारवारिणा॥ पिबेत् गुडेन मिश्रं वा लिह्यान्मूत्रविघातजित्॥" इति। एतत्संवादात् अत्र ऊषणं पिप्पली। गुडोपदंशान् वा लिह्यादेतानिति—एतान् पृथक् पृथक् पाटल्यादिक्षारान् गुडोपदंशान् गुडमिश्रान् वा लिह्यात्। डल्लनस्तु मतिमानित्यत्र मदिरामिति पाठं, तथा गुडेन मिश्रानित्यत्र गुडोपदंशानिति पाठस्थानार्थमाह॥ ३॥

त्रिफलेत्यादि सुश्रुतस्य।—अत्रापि पानं क्षारोदकेनेत्यनुवर्त्तयति कार्त्तिकः। अन्ये तु—"अभयामलकाक्षाणां कल्कं बदरसम्मितम्। अम्भसा लवणोपेतं पिबेन्मूत्ररुजापहम्॥" (उ० ५८ अ०) इति वचनं मूत्रकृच्छ्रप्रतिषेधे सुश्रुतेनोक्तम्, अतस्तद्दर्शनादत्राप्यम्भसैव पानं, तथा मिलित्वाऽष्टमाषकमानञ्चेत्याहुः। त्रिफलाकल्क माषा ६, सैन्धव माषा २; द्वितीययोगे तान्तवस्रुतमिति—वस्त्रगालितम्। मधुयोगेनाप्ययं योगः पेयः; यदाह वाग्भटः,—"स्वरसं कण्टकार्य्या वा पाययेन्माक्षिकान्वितम्" (चि० ११ अ०) इति॥ ४॥

जले इत्यादि सुश्रुतस्य।—अत्र कुङ्कुमकल्कं शीतकषायविधिना जले पर्य्युषितं प्रातर्वस्त्रस्रुतं सक्षौद्रं पिबेत्। "पिबेत् कुङ्कुमकर्षं वा मधूदकसमाप्लुतम्। रात्रिपर्य्युषितं प्रातस्तथा सुखमवाप्नुयात्॥" (उ० ५८ अ०) इति पाठान्तरं सुश्रुतटीकाकृतः पठन्ति व्याख्यानयन्ति च—"कुङ्कुमकर्षं मधूदकाभ्यामाप्लाव्य रात्रौ स्थापयितव्यं,

सुराप्रयोगः।—

सुरां सौवर्चलवतीं मूत्राघाती पिबेन्नरः॥ ६॥

एलादिचूर्णम्।—

दाड़िमाम्बुयुतं मुख्यमेलाबीजं सनागरम्।
पीत्वा सुरां सलवणां मूत्राघाताद्विमुच्यते॥ ७॥

वीरतर्वादिक्वाथादियोगत्रयम्।—

पिबेच्छिलाजतु क्वाथे गणे वीरतरादिके।
रसं दुरालभाया वा कषायं वासकस्य वा॥ ८॥

---

ततः पातव्यम्" इति। सतैलमित्यादि द्वितीयो योगः सुश्रुतस्यैव। वा-शब्दः पूर्वयोगापेक्षया। क्षारवद्वा परिस्रुतमिति—परिस्रुतं पाटलाभस्म किं विशिष्टम्? क्षारवत् यवक्षारयुक्तं पिबेदिति केचित् व्याचक्षते। अन्ये तु—क्षारवत् पानीयक्षारमिव सप्तकृत्वः परिस्रुतं पाटलाभस्म तैलसहितं पिबेदित्याहुः; युक्तञ्चैतत्, यदाह वाग्भटः—"सतैलं पाटलाक्षारं सप्तकृत्वोऽथवा स्रुतम्" (चि० ११ अ०) इति। सुश्रुतेऽपि मूत्रकृच्छ्रप्रतिषेधे—"पाटलाक्षारमाहृत्य सप्तकृत्वः परिस्रुतम्। पिबेन्मूत्रविकारघ्नं संसृष्टं तैलमात्रया॥" (उ० ५८ अ०) इति पठ्यते। तैलमात्रया स्तोकतैलेनेत्यर्थः; अत्र मात्राशब्दोऽल्पवाची, यथा "मात्रां खादेत् बुभुक्षितः" (च० सू० मात्राशितो०) इत्यादिषु॥ ५॥

सुरामित्यादि सुश्रुतस्य।—पिबेन्नर इत्यन्त एक एवायं योगः। वाग्भटेऽपि—"सौवर्चलाढ्यां मदिरां पिबेन्मूत्ररुजापहाम्" (चि० ११ अ०) इत्येवोक्तम्॥ ६॥

दाड़िमेत्यादि।—दाड़िमेत्यादि नागरान्तो द्वितीयो योगः। दाड़िमाम्बुयुतमिति—दाड़िमफलरसयुतम्; रसाभावे तु क्वाथः। मुख्यमित्येलाबीजविशेषणम्। पीत्वा सुरां सलवणाम् इति तृतीयो योगः; सलवणामिति—ससैन्धवाम् इत्यनेन सुरामिति सम्बध्यते। वस्तुतस्तु "दाड़िमाम्लां युतां मुख्यामेलाजीरकनागरैः। पीत्वा सुरां सलवणाम्" (उ० ५८ अ०) इत्येव पाठः सुश्रुते पठ्यते, टीकाकारैश्च व्याख्यातः; तस्मात् दाड़िमाम्लामित्यादि सलवणामित्यन्त एक एवायं योगो युक्तः। दाड़िमाम्लामिति—दाड़िमयोगादम्लाम्। युतामित्येलाजीरकनागरैरित्यनेन सम्बध्यते। मुख्यां सुरामिति—पैष्टीम्॥ ७॥

पिबेदित्यादि।—वीरतरादिगणक्वाथे शिलाजतु प्रक्षिप्य पिबेदित्यर्थः। अत्र

विकण्टकादि-पञ्चतृणक्षीरे।—

विकण्टकैरण्डशतावरीभिः सिद्धं पयो वा तृणपञ्चमूलैः।
गुड़प्रगाढ़ं सघृतं पयो वा रोगेषु कृच्छ्रादिषु शस्यते तत्॥ ९॥

नलमूलादिः।—

नलकुशकाशेक्षुशिफां क्वथितां प्रातः सुशीतलां ससिताम्।
पिबतः प्रयाति नियतं मूत्रग्रह इत्युवाच कचः॥ १०॥

गोधावतीप्रयोगः।—

गोधावत्या मूलं क्वथितं घृततैलगोरसैर्मिश्रम्।
पीतं निरुद्धमचिराद्भिनत्ति मूत्रस्य सङ्घातम्॥ ११॥

खदिरीबीज-रुद्रजटाप्रयोगौ।—

जलेन खदिरीबीजं मूत्राघाताश्मरीहरम्।
मूलं रुद्रजटायाश्च तक्रपीतं तदर्थकृत्॥ १२॥

कर्पूरप्रयोगः।—

मूत्रे विबद्धे कर्पूर-चूर्णं लिङ्गे प्रवेशयेत्॥ १३॥

चन्दनप्रयोगः।—

शृतशीतपयोऽन्नाशी चन्दनं तण्डुलाम्बुना।

---

व्याधौ शिलाजतुनोऽत्यन्तयौगिकत्वेन दुरालभाक्वाथे वासकक्वाथेऽपि शिलाजतु प्रक्षिपन्ति॥ ८॥

विकण्टकेत्यादि।—योगत्रयम्। गुडप्रगाढ़मिति पूर्वेण योगद्वयेन सम्बध्यते। विकण्टकादिसिद्धं वा तृणपञ्चमूलसिद्धं वा पयो गुड़प्रगाढ़ं हितम्। सघृतं पय इति तृतीयो योगः॥ ९॥

नलेत्यादि।—शिफा मूलं, तच्च नलादिभिः प्रत्येकं सम्बध्यते। कचः वृहस्पतेः पुत्रः॥ १०॥

गोधावत्या इत्यादि।—गोधावती "गोहालिया" इति ख्यातम्। गोरसोऽत्र तक्रम्॥ ११॥

जलेनेत्यादि।—खदिरीबीजमश्मन्तकबीजमित्याहुः॥ १२॥

मूत्रे इत्यादि।—लिङ्गे इति—लिङ्गरन्ध्रे सूक्ष्मदूर्वाकाण्डादिना च कर्पूररजः प्रक्षेपः, एवं स्त्रीयोनावपि, लिङ्गपदस्य सामान्यवचनत्वात्॥ १३॥

पिबेत् सशर्करं श्रेष्ठमुष्णवाते सशोणिते ॥ १४ ॥

उष्णवाते शीतावगाहः कुष्माण्डरसप्रयोगश्च।—

शीतोऽवगाह आ-वस्तेरुष्णवातनिवारणः।
कुष्माण्डकरसश्चापि पीतः सक्षारशर्करः ॥ १५ ॥

रक्तमूत्रे चिकित्साविधिः।—

स्त्रीणामतिप्रसङ्गेन शोणितं यस्य सिच्यते।
मैथुनोपरमश्चास्य बृंहणीयो हितो विधिः ॥ १६ ॥

शुक्रदोषे स्वयङ्गुप्तादिलेहः।—

स्वगुप्ताफलमृद्वीका-कृष्णेक्षुरसितारजः।
समांशमर्द्धभागानि क्षीरक्षौद्रघृतानि च ॥ १७ ॥
सर्वं सम्यग्विमथ्याक्ष-मानं लीढ्वा पयः पिबेत्।
हन्ति शुक्राशयोत्थांश्च दोषान् वन्ध्यासुतप्रदम् ॥ १८ ॥

---

घृतेत्यादि।—श्रेष्ठ चन्दनमिति योज्यं, तेन श्वेतचन्दनमित्यर्थः। घृतशीतपयश्चा-न्नभोजनशील: ॥ १४ ॥

शीत इत्यादि।—आ-वस्तेरिति—वस्तिभागपर्य्यन्तम्। कुष्माण्डकरसः कुष्माण्ड-मञ्जिकास्वरसः ॥ १५ ॥

मूत्रदोषप्रसङ्गेन मूत्रमार्गप्रवृत्तस्य रक्तस्यापि विधानमुपदिशन्नाह, स्त्रीणा-मित्यादि सुश्रुतस्य।—सुश्रुतेऽमुं ग्रन्थं कार्त्तिककुण्डो न पठति, शुक्रक्षयलिङ्गे-नैवोक्तत्वात्। जेज्जड़स्तु प्रकरणान्तरत्वात् शिष्यहितैषितया पठति ॥ १६ ॥

स्वगुप्तेत्यादि।—स्वगुप्ताफलं शूकशिम्बीबीजम्। मृद्वीका द्राक्षा। कृष्णा पिप्पली, न तु कृष्णेति इक्षुरविशेषणम्; सुश्रुते पिप्पलीपाठात्। इक्षुरः कोकि-लाक्षः, तस्य बीजम्। सिता शर्करा। रजश्चूर्णम्। अर्द्धभागानि क्षीरक्षौद्रघृतानि चेति—समुदितचूर्णात् क्षीरादीनि प्रत्येकमर्द्धभागानि। सुश्रुते पुनरयं योगोऽन्यथा पठ्यते—"क्षौद्रार्द्धभागः कर्त्तव्यो भागः स्यात् क्षीरसर्पिषोः। शर्करायाश्च चूर्णञ्च द्राक्षाचूर्णञ्च तत्समम् ॥ स्वयंगुप्ताफलस्यैव तथैवेक्षुरकस्य च। पिप्पलीनां तथा चूर्णमर्द्धभागं प्रदापयेत् ॥ तदैकध्यं समानीय खजेनाभिप्रमथ्य च। तस्य पाणितलं चूर्णं लिह्यात् क्षीरं ततः पिबेत् ॥" (उ० ५८ अ०) इति ॥ १७।१८ ॥

चित्रकाद्यं घृतम्।—

चित्रकः शारिवा चैव बला कालानुशारिवा।
द्राक्षाविशालापिप्पल्यस्तथा चित्रफला भवेत्॥ १९॥
तथैव मधुकं दद्यात् दद्यादामलकानि च।
घृताढ़कं पचेदेभिः कल्कैरक्षसमन्वितैः॥ २०॥
क्षीरद्रोणे जलद्रोणे तत् सिद्धमवतारयेत्।
शीतं परिस्रुतञ्चैव शर्कराप्रस्थसंयुतम्॥ २१॥
तुगाक्षीर्य्याश्च तत् सर्वं मतिमान् प्रतिमिश्रयेत्।
ततो मितं पिबेत् काले यथादोषं यथाबलम्॥ २२॥
वातरेताः पित्तरेताः श्लेष्मरेताश्च यो भवेत्।
रक्तरेता ग्रन्थिरेताः पिबेदिच्छन्नरोगिताम्॥ २३॥
जीवनीयञ्च वृष्यञ्च सर्पिरेतन्महागुणम्।
प्रजाहितञ्च धन्यञ्च सर्वरोगापहं शिवम्॥ २४॥
सर्पिरेतत् प्रयुञ्जाना स्त्री गर्भं लभतेऽचिरात्।
असृग्दोषान् जयेच्चापि योनिदोषांश्च संहतान्।
मूत्रदोषेषु सर्वेषु कुर्य्यादेतच्चिकित्सितम्॥ २५॥

इति मूत्राघात-चिकित्सा।

---

चित्रक इत्यादि सुश्रुतस्य।—कालानुशारिवा तगरपादिका। विशाला गोरक्षकर्कटी। विशल्येति पाठे—काष्ठपाटला; व्यवहारस्तु विशालयैव। चित्रफला गोरक्षकर्कटीभेदः। तुगाक्षीर्य्यां इत्यत्र प्रस्थसंयुतमित्येतत् समासप्रविष्टमप्याकृष्य सम्बन्धनीयम्। काले जीर्णान्नलक्षणे। यथाबलमिति—देहाग्निबलानुरूपम्। सुश्रुते एतद्घृतात् पूर्वमतिबलानाम घृतमुक्तम्; तेन सर्पिरेतन्महाबलमित्यपि घृतस्यास्य नामेति टीकाकृतः॥ १९—२५॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां मूत्राघात-चिकित्सा-विवृतिः।

# अथाश्मरी-चिकित्सा ।

वरुणादिः ।—

वरुणस्य त्वचं श्रेष्ठां शुण्ठीगोक्षुरसंयुताम् ।
यवक्षारगुडं दत्त्वा क्वाथयित्वा पिबेद्धिताम् ॥
अश्मरीं वातजां हन्ति चिरकालानुबन्धिनीम् ॥ १ ॥

वीरतरादिगणः ।—

वीरतरः सहचरौ दर्भौ वृक्षादनी नलः ।
गुन्द्रा काशकुशावश्म-भेदमोरटटुण्टुकाः ॥ २ ॥
कुरुण्टिकाऽथ वसिरौ वसुकः साग्निमन्थकः ।
इन्दीवरः श्वदंष्ट्रा च तथा कपोतवङ्ककः ॥ ३ ॥
वीरतरादिरित्येष गणो वातविकारनुत् ।
अश्मरीशर्करामूत्र-कृच्छ्राघातरुजापहः ॥ ४ ॥

शुण्ठ्यादिः ।—

शुण्ठ्यग्निमन्थपाषाण-शिग्रुवरुणगोक्षुरैः ।
अभयाऽऽरग्वधफलैः क्वाथं कुर्याद्विचक्षणः ॥ ५ ॥
रामठक्षारलवण-चूर्णं दत्त्वा पिबेन्नरः ।
अश्मरीमूत्रकृच्छ्रघ्नं पाचनं दीपनं परम् ॥
हन्यात् कोष्ठाश्रितं वातं कट्यूरुगुदमेढ्रगम् ॥ ६ ॥

---

मूत्रकृच्छ्रसामान्यादश्मरीचिकित्सितमुच्यते, वरुणस्येत्यादि ।—श्रेष्ठामिति—कीटाद्यनुपहताम् । यवक्षारगुडौ प्रक्षेप्यौ ॥ १ ॥

वीरतर इत्यादि ।—वीरतरः शरः । सहचरौ झिण्टीद्वयं, पीतनीलपुष्प-भेदात् । दर्भः उलुयातृणम् । वृक्षादनी वन्दाकः । गुन्द्रा गुलुञ्चः । मोरटः इक्षुमूलम् । टुण्टुकः श्योणाकः । कुरुण्टिका शौहञ्जिनी ; मल्लादत्तस्तु—कण्टकुसुमपत्रा नवकमञ्जरी दक्षिणदेशे सितवराख्येत्याह । इन्दीवरः चुँचाकः । वसिरः सूर्यावर्त्तभेदः । वसुकः वसुहट्टः । कपोतवङ्ककः "काङ्क" इति ख्यातं, स च शिरीषसदृशः स्वल्पपत्रः स्वल्पविटपः । गणत्वादनेन सर्वकल्पना ॥ २—४ ॥

शुण्ठीत्यादि ।—पाषाणः पाषाणभेदो ॥ ५।६ ॥

पाषाणभेदाद्यं घृतम्।—

पाषाणभेदो वसुको वशिरोऽश्मन्तकस्तथा।
शतावरी श्वदंष्ट्रा च बृहती कण्टकारिका॥ ७॥
कपोतवङ्कार्त्तगल-काञ्चनोशीरगुल्मकाः।
वृक्षादनी भल्लूकश्च वरुणः शाकजं फलम्॥ ८॥
यवाः कुलत्थाः कोलानि कतकस्य फलानि च।
ऊषकादिप्रतीवापमेषां क्वाथे शृतं घृतम्॥
भिनत्ति वातसम्भूतामश्मरीं क्षिप्रमेव तु॥ ९॥

पाषाणभेदादिगणस्य क्षारादिप्रयोगोपदेशः।—

क्षारान् यवागूः पेयानि कषायाणि पयांसि च।
भोजनानि च कुर्वीत वर्गेऽस्मिन् वातनाशने॥ १०॥

---

पाषाणभेद इत्यादि सुश्रुतस्य।—अश्मन्तकोऽम्ललोटकः कोविदारसदृशपत्रः। आर्त्तगलः "कागड़ा" इति ख्यातं, "डोगल" इत्यन्ये। काञ्चनः नलकी विटपशीरितपत्रः। गुल्मकः गुलुचः। भल्लूकः श्योनाकः। शाकः कर्कशमसृणपृष्ठोदरपत्रः प्रायो मरुदेशे भवति, तस्य फलम्। कतकं तोयप्रसादनफलं प्रायो मगधे भवति। ऊषकादिप्रतीवापमिति—ऊषकादिरग्रे वक्ष्यमाणस्तत्कल्कः। एषामिति—पाषाणभेदादीनाम्॥ ७—९॥

घृतसाधनौषधवर्गेण क्षारादयोऽपि साध्या इत्याह, क्षारानित्यादि।—क्षारानिति—पानीयक्षारान्। यदि चूर्णरूपः क्षारः पीयते, तदा वस्तिशोधनद्रवेण मस्त्वादिना। क्षारोदकपानपक्षे तु—क्षारस्य कर्षद्वयं कर्षत्रयं वा षड्गुणेन जलेन बहुशः परिस्राव्य स्रुतं पेयम्। पेयानीति—यूषरसादीनि; पेयांश्चेति पाठेऽपि—यूषादीनित्यर्थः। "यूषांश्च" इत्यपि पाठान्तरम्। "पेयाश्च" इति तु पाठः सुश्रुतपुस्तकेषु न दृश्यते, तट्टीकाकृद्भिश्च न व्याख्यातः। भोजनानीति—विलेपीभक्तसूपलेह्यानि। यवाग्वाश्च पृथगुपादानं विशेषेण मूत्रप्रवर्त्तकतया प्राधान्यख्यापनार्थम्। वर्गेऽस्मिन् वातनाशने इति—पाषाणभेदादिकतकान्तक्वाथ्यद्रव्यवर्गे। ऊषकादिकन्तु प्रतीवापद्रव्यं कफहरमपि शक्तिविशेषाधानार्थं संयोज्यमानं क्षारादिष्वेव प्रक्षेपविधया देयमित्याहुः। अयमर्थः वृन्देनाप्युक्तः, यथा—"कुर्य्यात् क्षारादिकं क्वाथैस्तस्मिन् क्षेपमूदापकैः" इति।

ऊषकादिगणः ।—

ऊषकं सैन्धवं हिङ्गु कासीसद्वयगुग्गुलू ।
शिलाजतु तुत्थकञ्च ऊषकादिरुदाहृतः ॥ ११ ॥
ऊषकादिः कफं हन्ति गणो मेदोविशोधनः ।
अश्मरीशर्करामूत्र-शूलघ्नः कफगुल्मनुत् ॥ १२ ॥

कुशाद्यं घृतम् ।—

कुशः काशः शरो गुन्द्र इत्कटो मोरटोऽश्मभित् ।
दर्भो विदारी वाराही शालिमूलं त्रिकण्टकः ॥ १३ ॥
भल्लूकः पाटली पाठा पत्तूरोऽथ कुरुण्टकः ।
पुनर्नवे शिरीषश्च क्वथितास्तेषु साधितम् ॥ १४ ॥
घृतं शिलाह्वमधुक-बीजैरिन्दीवरस्य च ।
त्रपुषैर्वारुकाणां वा बीजैश्चावापितं घृतम् ॥
भिनत्ति पित्तसम्भूतामश्मरीं क्षिप्रमेव च ॥ १५ ॥

क्षेपमिति—प्रक्षेपम् । अवापकैरिति—आवापरूपैः कल्कद्रव्यैरित्यर्थः ; छन्दोभङ्गानुरोधाद्ध्रस्वत्वम् । एवं वर्गेऽस्मिन् पित्तनाशने इत्यादावपि व्याख्येयम् ॥ १० ॥

ऊषकादिवर्गमाह, ऊषकमित्यादि सुश्रुतस्य ।—ऊषकं क्षारमृत्तिका, तद्भवं लवणमित्यन्ये । कासीसद्वयमिति—धातुकासीसं पुष्पकासीसञ्च ; तत्राद्यं भस्मसदृशं किञ्चिदम्लं लवणरसञ्च, द्वितीयन्त्वीषत्पीतं कषायरसम् । तुत्थकं "तुँतिया" इति प्रसिद्धम् ॥ ११।१२ ॥

कुश इत्यादि सुश्रुतस्य ।—मोरटः इक्षुमूलम् । गुन्द्रः गुलुञ्चः । दर्भः उलुया । वाराही वाराहीकन्दः, तदभावे चर्मकारालुकम् । भल्लूकः श्योनाकः । पत्तूरः शालिञ्चः । पुनर्नवे पुनर्नवाद्वयम् । एषां सर्वेषां क्वाथः ; शिलाह्वादीनां कल्कः । शिलाह्वमधुकबीजैरित्यत्र बीजपदं समासप्रविष्टमपि इन्दीवरस्येत्यनेन सह सम्बन्धनीयम् ; न तु बीजो बीजकः पीतशालः, वाग्भटसंवादात् ; यथा—"पिष्टेन त्रपुषादीनां बीजेनेन्दीवरस्य च । मधुकेन शिलाजेन तत् पित्ताश्मरिनाशनम् ॥" (चि० ११ अ०) इति । इन्दीवरस्य चुँआकः । एतेन—"मधुकः क्षतक्रस्वचात् बीजैर्बीजकः उच्यते" इत्यपि वृन्दवचनमबोधविजृम्भितमेव ; अस्यार्थः,—क्रस्वमधुकशब्देन यष्टिमधुक-

ऊषकादिगणेन क्षारादिकरणोपदेशः।—

क्षारान् यवागूः पेयाश्च कषायाणि पयांसि च।
भोजनानि प्रकुर्वीत वर्गेऽस्मिन् पित्तनाशने ॥ १६ ॥

वरुणाद्यं घृतम्।—

गणे वरुणकादौ च गुग्गुल्वेलाहरेणुभिः।
कुष्ठमुस्ताह्वमरिच-चित्रकैः ससुराह्वयैः ॥ १७ ॥
एतैः सिद्धमजासर्पिरूषकादिगणेन च।
भिनत्ति कफसम्भूतामश्मरीं क्षिप्रमेव तु ॥ १८ ॥

वरुणादिगणेन क्षारादिकरणोपदेशः।—

क्षारान् यवागूः पेयाश्च कषायाणि पयांसि च।
भोजनानि प्रकुर्वीत वर्गेऽस्मिन् कफनाशने ॥ १९ ॥

वरुणादिगणः।—

वरुणार्त्तगलः शिग्रु-तर्कारीमधुशिग्रुकाः।
मेषशृङ्गी करञ्जौ च बिम्बाग्निमन्थमोरटाः ॥ २० ॥
शैरीयौ बशिरौ दर्भौ वरी वसुकचित्रकौ।
बिल्वश्चैवाजशृङ्गी च बृहतीद्वयमेव च ॥ २१ ॥
वरुणादिगणो ह्येष कफमेदोनिवारणः।
विनिहन्ति शिरःशूलं गुल्माभ्यन्तरविद्रधिम् ॥ २२ ॥

---

मैवोच्यते, न तु मधूकतरुः, तस्य बीजेनाव्यवहारात् बीजी बीजक इति। क्षारादि कल्पितम् ॥ १४—१६ ॥

गणे इत्यादि सुश्रुतस्य।—एव वरुणादिगणेन क्वाथः, शेषेण च कल्कः, ऊषकादिगणेन कल्करूपेण सिद्धमित्यर्थः। अजासर्पिरित्यत्र वाग्भटे तु घृतमित्येवोक्तम्; यथा—"भिनत्ति कफजामाशु साधितं घृतमश्मरीम्" (चि० ११ अ०) इति ॥ १७—१९ ॥

वरुण इत्यादि।—वरुणादिगणे आर्त्तगलः खगाड़ः, "झींगल" इत्यन्ये, "अर्जुन" इति भानुमती। तर्कारी जयन्ती, तन्मूलम्। मधुशिग्रुः रक्तशोभाञ्जनम्। करञ्जौ करञ्जनाटाकरञ्जौ। बिम्बी तेलाकुचा। मोरटः इक्षुमूलम्, "अङ्कोलपुष्पम्" इति भानुमती, "हस्तिकर्णपलाश" इत्यन्ये। शैरीयौ पीतनीलपुष्पझिण्टीद्वयम्। दर्भः

वरुणक्काथः।—

वरुणत्वक्कषायस्तु पीतस्तु गुड़संयुतः।

अश्मरीं पातयत्याशु वस्तिशूलविनाशनः॥ २३॥

कुष्माण्डप्रयोगः।—

यवक्षारगुड़ोपेतं पिबेत् पुष्पफलोद्भवम्।

रसं मूत्रविबन्धघ्नं शर्कराश्मरिनाशनम्॥ २४॥

वरुणशिग्रुप्रयोगौ।—

पिबेद्वरुणमूलत्वक्-क्काथं तत्कल्कसंयुतम्।

क्काथश्च शिग्रुमूलोत्थः कदुष्णोऽश्मरिनाशनः॥ २५॥

नागरादिः।—

नागरवरुणगोक्षुरकपाषाणभेदकपोतवङ्कजः क्काथः।

गुड़यावशूकमिश्रः पीतो हन्त्यश्मरीमुग्राम्॥ २६॥

वरुणादिः।—

वरुणत्वक्शिलाभेद-शुण्ठीगोक्षुरकैः कृतः।

कषायः क्षारसंयुक्तः शर्कराञ्च भिनत्त्यपि॥ २७॥

श्वदंष्ट्रादिः।—

श्वदंष्ट्रैरण्डपत्राणि नागरं वरुणत्वचम्।

एतत् क्काथवरं प्रातः पिबेदश्मरिभेदनम्॥ २८॥

श्वदंष्ट्रादिकल्कः।—

मूलं श्वदंष्ट्रेक्षुरकोरुवूकात्

क्षीरेण पिष्टं बृहतीद्वयाच्च।

---

कुशः। वरी शतावरी। वसुकः वसुहट्ट इति ख्यातम्। कलम्बङ्गौ कावर्त्तनिका॥ २०—२२॥

यवक्षारेत्यादि।—पुष्पफलोद्भव रसमिति—पुराणकुष्माण्डरसम्॥ २४॥

पिबेदित्यादि।—पिबेदश्मरीभेदनमित्यन्तं स्पष्टम्॥ २५—२८॥

आलोड्य दध्ना मधुरेण पेयं
दिनानि सप्ताश्मरिभेदनार्थम् ॥ २९ ॥

इक्ष्वाकुप्रयोगः।—

पक्वेक्ष्वाकुरसः क्षार-सितायुक्तोऽश्मरीहरः ॥ ३० ॥

सुरा तिलनालक्षारप्रयोगौ।—

पाषाणरोगपीड़ां सौवर्चलयुता सुरा जयति।
तद्वन्मधुदुग्धयुता त्रिरात्रं तिलनालभूतिश्च ॥ ३१ ॥

एलादिः।—

एलोपकुल्यामधुकाश्मभेद-कौन्तीश्वदंष्ट्रावृषकोरुबूकैः।
क्वाथं पिबेदश्मजतुप्रगाढ़ं सशर्करे चाश्मरिमूत्रकृच्छ्रे ॥ ३२ ॥

गोक्षुरप्रयोगः।—

त्रिकण्टकस्य बीजानां चूर्णं माक्षिकसंयुतम्।
अविक्षीरेण सप्ताहं पिबेदश्मरिनाशनम् ॥ ३३ ॥

शुक्राश्मरीचिकित्साऽतिदेशः।—

शुक्राश्मर्यान्तु सामान्यो विधिरश्मरिनाशनः ॥ ३४ ॥

पाषाणभेदाद्यं चूर्णं घृतञ्च।—

पाषाणभेदो वृषकः श्वदंष्ट्रा पाठाऽभयाव्योषशटीनिकुम्भाः।
हिंस्राखराश्वासितिमारकाणामेर्वारुकाच्च त्रपुषाच्च बीजम् ॥ ३५ ॥

---

मूत्रमित्यादि।—मूत्रमित्यादि इइतीत्यन्त एक एव योगः। इक्षुरकः कोकिलाक्षः। सर्वं मिलित्वा माषकचतुष्टयं दुग्धेन पिष्ट्वा अनम्लदध्ना पेयम् ॥ २९ ॥

पक्वेत्यादि।—इक्ष्वाकुः तिक्तालाबूस्तस्या माञ्जिकास्वरसः ॥ ३० ॥

पाषाणेत्यादि।—पाषाणरोगः अश्मरी। तिलनालभूतिः तिलनालक्षारः ॥ ३१ ॥

एलेत्यादि।—उपकुल्या पिप्पली। अत्र शोधितशिलाजतुनो माषकद्वयं चतुष्टयं वा प्रक्षेप्यमित्याहुः ॥ ३२।३३ ॥

शुक्राश्मर्यामित्यादि।—शुक्राश्मर्यान्तु सामान्यो विधिरिति—अश्मरीनाशनव्यवहारणीयः ॥ ३४ ॥

पाषाणभेद इत्यादि।—निकुम्भः दन्ती। खराश्वा अजमोदा। सितिमारकः

उपकुञ्चिका हिङ्गु सवेतसाम्लं स्यात् द्वे वृहत्यौ हवुषा वचा च।
चूर्णं पिबेदश्मरिभेदि पक्वं सर्पिश्च गोमूत्रचतुर्गुणं तैः॥ ३६॥

कुलत्थाद्यं घृतम्।—

कुलत्थसिन्धूत्थविडङ्गसारं सशर्करं शीतलियावशूकम्।
वीजानि कुष्माण्डकगोक्षुराभ्यां घृतं पचेन्ना वरुणस्य तोये॥३७॥
दुःसाध्यसर्वाश्मरिमूत्रकृच्छ्रं मूत्राभिघातञ्च समूत्रबन्धम्।
एतानि सर्वाणि निहन्ति शीघ्रं प्ररूढ़वृक्षानिव वज्रपातः॥३८॥

शरादिपञ्चमूल्यादि घृतम्।—

शरादिपञ्चमूल्या वा कषायेण पचेत् घृतम्।
प्रस्थं गोक्षुरकल्केन सिद्धमद्यात् सशर्करम्॥
अश्मरीमूत्रकृच्छ्रघ्नं रेतोमार्गरुजापहम्॥ ३९॥

वरुणघृतम्।—

वरुणस्य तुलां क्षुण्णां जलद्रोणे विपाचयेत्।
पादशेषं परिस्राव्य घृतप्रस्थं विपाचयेत्॥ ४०॥
वरुणं कदली विल्वं तृणजं पञ्चमूलकम्।
अमृता चाश्मजं देयं वीजञ्च त्रपुषोद्भवम्॥ ४१॥

---

शालिञ्चः। उपकुञ्चिका कृष्णजीरकम्। चूर्णं पिबेदिति विशेषानभिधानाज्जलेनैव। तैः पाषाणभेदादिभिरेव कल्करूपैः पक्वं सर्पिश्च पिबेदित्यन्वयः॥ ३५।३६॥

कुलत्थेत्यादि।—कुलत्थघृते शीतली शियलीतिलोकप्रसिद्धः; तथा च रत्नकोषः,—"शीतली शीतकुम्भी च शुक्लपुष्पा जलोद्भवा। कालानुसारिवा तस्याः फलोऽपि नलवत् गुणैः॥" इति। अन्ये तु—शीतलि-यावशूकं शियलि-यवक्षारः, स तु स्फाटिकसैन्धवसङ्काश इत्याहुः; व्यवहारस्तु पूर्वेणैव। शर्करा तु कल्करूपा॥ ३७।३८॥

शरादीत्यादि।—शरादिपञ्चमूल्या इत्यत्र शरादीतिविशेषणात् चरकोक्तं तृणपञ्चमूलं ग्राह्यं, यथा—"शरेक्षुदर्भकाशानां शालीनां मूलमेव च" (चि० अभयामलकी०) इति। वा-शब्दः पूर्वयोगापेक्षया। अत्र शर्करा प्रक्षेप्या॥ ३९॥

वरुणस्येत्यादि।—वरुणादिघृते कदल्याः फलमग्रं मूलं वा। अश्मजं शिलाजतु।

शतपर्वा तिलक्षारं पलाशक्षारमेव च ।
यूथिकायाश्च मूलानि कार्षिकाणि समावपेत् ॥ ४२ ॥
अस्य मात्रां पिबेज्जन्तुर्देशकालाद्यपेक्षया ।
जीर्णे तस्मिन् पिबेत् पूर्वं गुडं जीर्णन्तु मस्तुना ।
अश्मरीं शर्कराञ्चैव मूत्रकृच्छ्रञ्च नाशयेत् ॥ ४३ ॥

वीरतराद्यं तैलम् ।—

अश्माधिकारे यत् तैलं सैन्धवाद्यं प्रकीर्त्तितम् ।
तत् तैलं द्विगुणं क्षीरं पचेत् वीरतरादिना ॥ ४४ ॥
क्वाथेन पूर्वकल्केन साधितन्तु भिषग्वरैः ।
एतत् तैलवरं श्रेष्ठमश्मरीणां विनाशनम् ॥ ४५ ॥
मूत्राघाते मूत्रकृच्छ्रे पिच्चिते मथितेऽपि वा ।
भग्ने श्रमाभिपन्ने च सर्वथैव प्रशस्यते ॥ ४६ ॥

वरुणाद्यं तैलम् ।—

त्वक्पत्रपुष्पमूलस्य वरुणात् सत्रिकण्टकात् ।
कषायेण पचेत् तैलं वस्तिनाऽऽस्थापनेन च ॥
शर्कराऽश्मरिशूलघ्नं मूत्रकृच्छ्रविनाशनम् ॥ ४७ ॥

मधुकं मायाम्बुफलम् । शतपर्वा वंशः, तस्य नेली मूलं वा । अस्मिन् इति—घृते । पूर्वमिति—भोजनात् पूर्वम् ॥ ४०—४३ ॥

अश्माधिकारे इत्यादि ।—तत् तैलमिति—अश्माधिकारोक्तविधिना सिद्धं तैलं पुनरपि द्विगुणं क्षीरं दत्त्वा वीरतरादिक्वाथेन चतुर्गुणेन द्विगुणेन वा । पूर्वकल्केनेति—सैन्धवाद्यकल्केन पचेत् । अन्ये तु—केवलं तैलमेव द्विगुणक्षीरादिना पचेदिति वदन्ति, तत्तु न व्यवहारसिद्धम् । यद्यपि सैन्धवाद्यतैले तिलतैलमेरण्डतैलञ्चोक्तं, तथाऽप्यत्र उत्तरवस्त्यादौ तिलतैलस्यैव सूक्ष्मस्रोतोऽनुसारित्वेन यौगिकत्वात् ग्रहणमित्याहुः । पिच्चिते इति—आगन्तुव्रणविशेषे । मथिते इति—चूर्णिताख्यभग्ने ॥ ४४—४६ ॥

त्वक्पत्रेत्यादि ।—क्वाथार्थंवरुणस्य यथालाभं त्वक्पत्रमूलपुष्पं पल ३२, गोक्षुर पल ३२, पा पा श ६४, शेष श १६ । अकल्कमिदं तैलम् ॥ ४७ ॥

शस्त्रप्रयोगविध्यादिकम्।—

शल्यवित् तामशाम्यन्तीं प्रत्याख्याय समुद्धरेत्।
पायुं स्निग्धाऽङ्गुलिभ्यान्तु गुदमेढ्रान्तरे कृताम्॥ ४८॥

सेवन्याः सव्यपार्श्वे च यवमात्रं विमुच्य तु।
व्रणं कृत्वाऽश्मरीमात्रं कर्षेत् तां शल्यकर्मवित्॥ ४९॥

भिन्ने तु वस्तौ त्वज्ञानात् मृत्युः स्यादश्मरीं विना।
निःशेषामश्मरीं कुर्य्यात् वस्तौ रक्तञ्च निर्हरेत्॥ ५०॥

हृताश्मरीकमुष्णाम्बु गाहयेद्भोजयेच्च तम्।
गुडं मूत्रविशुद्ध्यर्थं मध्वाज्याक्तं व्रणं ततः॥ ५१॥

दद्यात् साज्यां त्र्यहं पेयां साधितां मूत्रशोधिभिः।
आदशाहं ततो दद्यात् पयसा मृदुमोदनम्॥ ५२॥

स्वेदयेत् यवमध्वाज्यं कषायैः क्षालयेत् व्रणम्।
प्रपौण्डरीकमञ्जिष्ठा-यष्टीलोध्रैश्च लेपयेत्॥ ५३॥

एतैश्च सनिशैः सिद्धं घृतमभ्यञ्जने हितम्।
अप्रशान्ते तु सप्ताहात् व्रणे दाहोऽपि चेष्यते॥

---

शल्यविदित्यादि।—सव्यपार्श्वे इति—वामपार्श्वे। निःशेषामश्मरीं कुर्य्यादिति—सशेषायान्तु पुनरप्यश्मर्य्यां वृद्धिसम्भवात्। वस्तौ रक्तञ्च निर्हरेदिति—वस्तिगतरक्तमित्यर्थः, तथा सति वस्तिरुजा न पूर्य्यते इति भावः। हृताश्मरीकमित्यादौ गुडं भोजयेदित्यन्वयः। मूत्रशोधिभिरिति—तृणपञ्चमूलादिभिः। तत इति—त्र्यहादूर्द्धम्। आ-दशाहं दशाहपर्य्यन्तम्। पयसा दुग्धेन, मृदुमोदनं कोमलभक्तं दद्यात्, तथा स्वेदयेच्च। आ-दशाहमित्यनेन दशाहाभ्यन्तरे एव स्वेदोऽप्युक्तः; उक्तं हि—"दशरात्रं स्नेनमप्रमत्तं स्वेदयेत्" इति। स च स्नेह एव स्वेदः रक्तपित्तानुगतत्वादश्मर्य्या इति गयदासः। भोजेऽप्युक्तं—"स्नेहस्वेदं विधिज्ञस्तु कुर्य्यात् वातरुजापहम्" इति। यवमध्वाज्यमिति मृदुमोदनमित्यस्य विशेषणं, यवकृतभक्ष्यप्रधानं मधुप्रधानञ्चेत्यर्थः। कषायैः क्षालयेद्व्रणमिति—दशाहादूर्द्ध्वमेव क्षीरिवृक्षकषायैः क्षालनं शोधनं बोध्यं,

देवान्नाड़े तु या लग्ना तां विपाट्यापकर्षयेत् ॥ ५४ ॥

इत्यश्मरी-चिकित्सा।

---

## अथ प्रमेह-चिकित्सा।

पथ्यानि।—

श्यामाककोद्रवोद्दाल-गोधूमचणकाढ़की।
कुलत्थाश्च हिता भोज्ये पुराणा मेहिनां सदा।
जाङ्गलं तिक्तशाकानि यवान्नञ्च अमो मधु ॥ १ ॥

उदकाद्यष्टमेहेषु पारिजाताद्यष्टौ क्वाथाः।—

पारिजातजयानिम्ब-वह्निगायत्रीणां पृथक्।
पाठायाः सागुरोः पीता-द्वयस्य शारदस्य च ॥ २ ॥
जलेक्षुमद्यसिकता-शनैर्लवणपिष्टकान्।
सान्द्रमेहान् क्रमात् घ्नन्ति चाष्टौ क्वाथाः समाक्षिकाः ॥३॥

शुक्रमेहे दूर्वादिः।—

दूर्वाकशेरुपूतीक-कुम्भीकप्लवशैवलम्।
जलेन क्वथितं पीतं शुक्रमेहहरं परम् ॥ ४ ॥

---

चौजसंवादात्। खनित्रैरित्यनेन घृतसाधनद्रव्यं सम्बध्यते, न तु लेप इति, सुश्रुतसंवादात् ॥ ४८—५४ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायाम् अश्मरी-चिकित्सा-विवृतिः।

---

अश्मर्यनन्तरं वस्तिविकारसाम्यात् प्रमेहप्रतिकार उच्यते, श्यामाकेत्यादि।—उद्दालः वनकोद्रवः। आढ़की तुवरी। यवान्नमिति—यवशक्त्वादिकम् ॥ १ ॥

पारिजातेत्यादि।—पारिजातः पारिभद्रकः। जया जयन्ती। वह्निः चित्रकः। गायत्री खदिरः। पाठायाः सागुरोरिति एकः क्वाथः। पीताद्वयं हरिद्राद्वयम्, अयमप्येकः। शारदः सप्तपर्णः। पारिभद्रेत्यादयोऽष्टौ क्वाथाः जलाद्यष्टौ मेहान् क्रमात् घ्नन्तीत्यन्वयः ॥ २-३ ॥

दूर्वेत्यादि।—पूतीकः करञ्जः, तस्य त्वक्। कुम्भीकः पाङ्गा। प्लवः कैवर्त्तमुस्तकम्। योगेऽत्र मधु प्रक्षिपन्ति वृद्धाः सुश्रुतसंवादात् ॥ ४ ॥

फेनमेहे त्रिफलादि।—

त्रिफलाऽऽरग्वधद्राक्षा-कषायो मधुसंयुतः।
पीतो निहन्ति फेनाख्यं प्रमेहं नियतं नृणाम्॥ ५॥

कफमेहेषु लोध्रादिकाथचतुष्टयम्।—

लोध्राभयाकट्फलमुस्तकानां विडङ्गपाठाऽर्जुनधन्वनानाम्।
कदम्बशालार्जुनदीप्यकानां विडङ्गदार्वीधवशल्यकानाम्॥ ६॥
चत्वार एते मधुना कषायाः कफप्रमेहेषु निषेवणीयाः॥ ७॥

नीलादिपञ्चमेहेषु अश्वत्थादिपञ्चक्वाथाः।—

अश्वत्थाच्चतुरङ्गुलान्न्यग्रोधादेः फलत्रयात्।
सञ्जिष्ठारक्तसाराच्च क्वाथाः पञ्च समाक्षिकाः॥ ८॥

---

त्रिफलेत्यादि।—स्पष्टम्॥ ५॥

लोध्रेत्यादि।—लोध्रेत्यादि योगद्वयं वाग्भटस्य, कदम्बेत्यादि योगद्वयं चरकस्य, चक्रेण प्रतिसंस्कृत्य लिखितम्। धन्वनः धामनी। दीप्यकः यमानी। शल्यकः खदिरः; बहुशल्य इति खदिरसंज्ञा; उक्तं हि—"बहुशल्यश्च यज्ञाङ्गो याज्ञिकः कुष्ठनाशनः" इति, तेनैकदेशोऽपि संज्ञिनं गमयति, यथा भीमो भीमसेनः; उक्तं हि चरके,—"दार्वी विडङ्गं खदिरो धवश्च" (चि० प्रमेह०) इति। वाग्भटेऽप्युक्तं—"शालविदार्वीक्रिमिजिद्धवानाम्" (चि० १२ अ०) इति। अन्ये तु—शल्यकं मदनफलमाहुः॥ ६।७॥

पित्तमेहस्य याप्यत्वेन यापनार्थं चिकित्सामाह, अश्वत्थादित्यादि।—नीलादिषु पञ्चसु मेहेषु क्रमेण एते पञ्च योगा बोध्याः। तत्र अश्वत्थक्वाथेनैको योगः, चतुरङ्गुलादिति द्वितीयः, न्यग्रोधादेरिति तृतीयः; न्यग्रोधादिश्च गणोऽत्र सौश्रुतः; यथा—"न्यग्रोधोडुम्बराश्वत्थ प्लक्ष-मधुक-कपीतन-ककुभाम्र-कोशाम्र-चोरक पत्र जम्बू-द्वय पियाल मधुक रोहिणी-वञ्जुल-कदम्ब बदरी तिन्दुकी-सल्लकी-लोध्र-सावरलोध्र-भल्लातक-पलाशा नन्दीवृक्षश्च" (सू० ३८ अ०) इति। अत्र प्लक्षः पाकुड़ि। ककुभः अर्जुनः। नन्दीवृक्षः गन्धमुण्डः। अन्ये तु—न्यग्रोधादिशब्देन पञ्चवल्कलमाहुः। फलत्रयादिति चतुर्थः। सञ्जिष्ठारक्तसारादिति—जिष्ठा मञ्जिष्ठा, रक्तसारः रक्तचन्दनम्, अयन्तु पञ्चमः। हन्युरिति—यापयेयुः इत्यर्थः; किंवा अनत्यन्तदुष्टमेदसि पित्तजानामपि साध्यत्वं, "साध्यास्तु मेहो यदि न प्रदुष्टम्" (चि० प्रमेह०) इति

नीलहारिद्र शुक्लाख्य-क्षारमञ्जिष्ठकाह्वयान् ।
मेहान् हन्युः क्रमादेते— ॥ ८ ॥

रक्तमेहे खर्ज्जुरादिः ।—

—सक्षौद्रो रक्तमेहजित् ।
क्वाथः खर्जूरकाश्मर्य्य-तिन्दुकास्थ्यमृताकृतः ॥ १० ॥

पित्तमेहे लोध्रादियोगचतुष्टयम् ।—

लोध्रार्जुनोशीरकुचन्दनाना-
मरिष्टसेव्यामलकाभयानाम् ।
धात्र्यर्जुनारिष्टकवल्कलानां
नीलोत्पलानां तिनिशार्जुनानाम् ॥ ११ ॥
चत्वार एते विहिताः कषायाः
पित्तप्रमेहे मधुसम्प्रयुक्ताः ॥ १२ ॥

सर्पिर्मेहे पाठादिचूर्णम् ।—

छिन्नावल्लिकषायेण पाठाकुटजरामठम् ।
तिक्तां कुष्ठञ्च सञ्चूर्ण्य सर्पिर्मेहे पिबेन्नरः ॥ १३ ॥

---

चरकवचनात्। शुक्लाख्यमेहः शुक्रमेहः। सुश्रुते कालमेहस्थाने अम्लमेहः पठ्यते; उक्तं हि सुश्रुते निदानस्थाने—"अम्लरसगन्धमम्लमेही" (६ अ०) इति; तथा च चिकित्सितस्थाने—"अम्लमेहिनं न्यग्रोधादिकषायं वा पाययेत्" (११ अ०) इति ॥ ८।९ ॥

रक्तमेहचिकित्सामाह, सक्षौद्र इत्यादिना कृत इत्यन्तेन।—अत्र खर्जूरकाश्मर्य्ययोः फलं, तिन्दुकस्य च फलास्थि। अमृता गुडूची। सुश्रुतेऽपि—"शोणितमेहिनं गुडूची-तिन्दुकास्थि-काश्मर्य्य-खर्जूरकषायं मधुमधुरं पाययेत्" (चि० ११ अ०) इति ॥ १० ॥

लोध्रेत्यादि।—कुचन्दनं रक्तचन्दनम्। अरिष्टः निम्बः। सेव्यम् उशीरम्। नीलोत्पलानामित्यत्र "नीलोत्पलेन" इति पाठान्तरम्; किन्त्वार्षं न दृष्टम्। तिनिशः आहुकः ॥ ११।१२ ॥

इदानीमसाध्येष्वपि वातिकमेहेषु यापनार्थं योगानाह, छिन्नेत्यादि।—श्रङ्गिः तिक्तकः। पाठादि-कुष्ठान्तानां चूर्णं गुडूचीक्वथकषाये प्रक्षिप्य पिबेत् ॥ १३ ॥

क्षौद्र-वसामेहयोः कदराद्यग्निमन्थक्वाथौ ।—

कदरखदिरपूग-क्वाथं क्षौद्राह्वये पिबेत् ।
अग्निमन्थकषायन्तु वसामेहे प्रयोजयेत् ॥ १४ ॥

हास्तिमेहे पाठादिः ।—

पाठाशिरीषदुःस्पर्श-मूर्वाकिंशुकतिन्दुक- ।
कपित्थानां भिषक क्वाथं हास्तिमेहे प्रयोजयेत् ॥ १५ ॥

कफपित्तमेहे काम्पिल्लपुष्पादि सप्त योगाः ।—

काम्पिल्लसप्तच्छदशालजानि वैभीतरौहीतककौटजानि ।
कपित्थपुष्पाणि च चूर्णितानि क्षौद्रेण लिह्यात् कफपित्तमेही ॥ १६ ॥

सर्वमेहे धात्रीप्रयोगः त्रिफलादिश्च ।—

सर्वमेहहरो धात्र्या रसः क्षौद्रनिशायुतः ।
कषायस्त्रिफलादारु-मुस्तकैरथवा क्वृतः ॥ १७ ॥

---

कदरेत्यादि ।—कदरः विट्खदिरः । खदिरस्तु तदितरः । पूगं पूगफलम् ॥ १४ ॥

पाठेत्यादि ।—तिन्दुककपित्थयोः फलम् ; तिन्दुकश्च केन्दुकफलम् । पाठादि-कपित्थान्तमेकमेव पदम् । वातमेहेष्वसाध्येष्वपि चिकित्साविधानमिदं मेहानां चिरानुबन्धित्वेन किञ्चिद्विशेषलाभेन यापनार्थम् ; सुश्रुतेऽप्युक्तम्—"अत ऊर्द्ध-मसाध्येष्वपि योगान् यापनार्थं वक्ष्यामः" ( चि० ११ अ० ) इति ॥ १५ ॥

काम्पिल्लेत्यादि ।—अत्र चूर्णितानीति विशेष्यपदं द्रष्टव्यम् ; एवं वैभीतेत्यादावपीति केचित् ; अन्ये तु—कपित्थपुष्पाणि चेति चकारात् काम्पिल्लादीनां कुसुममेव ग्राह्य-मित्याहुः ; युक्तञ्चैतत् ; उक्तं हि वाग्भटे,—"शालसप्ताह्वकाम्पिल्ल-वृक्षकाक्षकपित्थजम् । रोहीतकस्य कुसुमं मधुनाऽद्यात् सुचूर्णितम् ॥" ( चि० १२ अ० ) इति । एवं वृद्ध-वाग्भटेऽपि शालादीनां कुसुममित्येवोक्तम् । कफपित्तमेहीति—कफमेही पित्तमेही चेत्यर्थः ॥ १६ ॥

सर्वमेहेत्यादि ।—अयं योगो वार्त्तिकविदादिगुडे ज्ञेयः, सुश्रुतसंवादात् । धात्र्या रसः स्वरसः एव व्यवहारात्, न तु क्वाथ इत्याहुः । कषाय इत्यादि द्वितीययोगेऽपि क्षौद्रनिशायुत इति सम्बन्धनीयम् ॥ १७ ॥

सर्वमेहे फलत्रिकादिः ।—

फलत्रिकं दारुनिशां विशालां मुस्तञ्च निःक्वाथ्य निशांशकल्कम्।
पिबेत् कषायं मधुसम्प्रयुक्तं सर्वप्रमेहेषु समुत्थितेषु ॥ १८ ॥

सर्वमेहे कटङ्कटेर्य्यादिः ।—

कटङ्कटेरीमधुक-त्रिफलाचित्रकैः समैः।
सिद्धः कषायः पातव्यः प्रमेहाणां विनाशनः ॥ १९ ॥

सर्वमेहे त्रिफलादिः कुटजादिश्च ।—

त्रिफलादारुदार्व्यब्द-क्वाथः क्षौद्रेण मेहहा।
कुटजासनदार्व्यब्द-फलत्रयकृतोऽथवा ॥ २० ॥

सर्वमेहे त्रिफलादिचूर्णचतुष्टयम् ।—

त्रिफलालौहशिलाजतु-पथ्याचूर्णञ्च लोध्रमेकैकम्।
मधुनाऽमरारसेन इव सर्वान् मेहान् निवारयति ॥२१॥

सर्वमेहे शालादिचूर्णम् ।—

शालमुष्ककाम्पिल्ल-कल्कमक्षसमं पिबेत्।
धात्रीरसेन सक्षौद्रं सर्वमेहहरं परम् ॥ २२ ॥

---

फलत्रिकमित्यादि।—दारुनिशा दारुहरिद्रा। विशाला गोरक्षकर्कटी। निशांशकल्कमिति—निशाभागकल्कं, तत्सहितमेव त्रिफलादिद्रव्यं निःक्वाथ्य कषायं पिबेदित्येके। अन्ये तु—अंशशब्दोऽर्द्धाभिधायी, तेन फलत्रिकादीनां समुदितानामेको भागः, निशायाश्चापरो भागः; एतद्भागद्वयं निःक्वाथ्य कषायं पिबेदित्यर्थः। अपरे तु—निशाया अंशश्चतुर्थो भागः समुदितक्वाथ्यापेक्षया, स एव कल्कः प्रक्षेपरूपश्चूर्णो यत्र तत् तथेति व्याचक्षते; व्यवहारस्त्वनेनैव ॥ १८ ॥

कटङ्कटेरीत्यादि।—कटङ्कटेरी दारुहरिद्रा ॥ १९ ॥

त्रिफलेत्यादि।—कुटजासनेत्यादावपि क्षौद्रेणेत्यनुवर्त्तते। असनः पीतशालः। दार्वी दारुहरिद्रा। अब्दः मुस्तकम्। निश्चलस्तु अब्दस्थाने अम्बौति पठति, व्यवहारस्तु मुस्तकेनैव ॥ २० ॥

त्रिफलेत्यादि।—समुदितत्रिफलयैको योगः, तेन चत्वारो योगाः। लौहञ्च मारित-पुटित-वज्रादिलौहचूर्णम्। अमरा गुडूची, अयञ्च पञ्चमो योगः ॥ २१ ॥

शालेत्यादि।—शालस्य सारः। मुष्ककः घण्टापारुली, तस्य मूलम्। काम्पिल्लस्य त्वक् ॥ २२ ॥

सर्वमेहे न्यग्रोधाद्यं चूर्णम्।—

न्यग्रोधोडुम्बराश्वत्थ-श्योणाकारग्वधासनम्।
आम्रजम्बूकपित्थञ्च पियालः ककुभो धवः॥ २३॥
मधूको मधुकं लोध्रं वरुणः पारिभद्रकम्।
पटोलं मेषशृङ्गी च दन्ती चित्रकमाढ़की॥ २४॥
करञ्जत्रिफलाशक्र-भल्लातकफलानि च।
एतानि समभागानि श्लक्ष्णचूर्णानि कारयेत्॥ २५॥
न्यग्रोधाद्यमिदं चूर्णं मधुना सह लेहयेत्।
फलत्रयरसञ्चानु-पिबेन्मूत्रं विशुध्यति॥ २६॥
एतेन विंशतिर्मेहा मूत्रकृच्छ्राणि यानि च।
प्रशमं यान्ति योगेन पिड़का न च जायते॥
न्यग्रोधाद्यमिदन्त्वत्र चाम्रजम्बुस्थि गृह्यते॥ २७॥

सर्वमेहे विकण्टकाद्यं तैलं घृतं यमकञ्च।—

विकण्टकाश्मन्तकसोमवल्कै-
र्भल्लातकैः सातिविषैः सलोध्रैः।
वचापटोलार्जुननिम्बमुस्तै-
र्हरिद्रया दीप्यकपद्मकैश्च॥ २८॥
मञ्जिष्ठपाठाऽगुरुचन्दनैश्च
सर्वैः समस्तैः कफवातजेषु।

न्यग्रोधेत्यादि।—न्यग्रोधादिचूर्णे न्यग्रोधः वटः। असनः पीतशालः। आम्र-जम्बूकपित्थञ्चेति—आम्रजम्ब्वोः फलास्थि, कपित्थस्य तु फलमित्याहुः। ककुभः अर्जुनः। धवः स्वनामख्यातः। मधूकः मधुकसारः। आढ़की तुवरी। करञ्जस्य फलम्। शक्रः कुटजः॥ २३—२७॥

विकण्टकेत्यादि।—अश्मन्तकः मालुया इति ख्यातम्। सोमवल्कः खदिरः, न तु कट्फलं, सतूकर्णसंवादात्। सर्वैरित्युक्तेः पृथगपि सर्वैः स्नेहसाधनं स्यादत आह, समस्तैरिति—मिलितैरित्यर्थः, यथालाभपरिहारार्थमिति वा। कफजेषु

मेहेषु तैलं विपचेत् घृतञ्च
पित्तेषु मिश्रं त्रिषु लक्षणेषु ॥ २९ ॥

कफपित्तमेहयोः घृतप्रयोगविधिः।—

कफमेहहरक्काथ सिद्धं सर्पिः कफे हितम्।
पित्तमेहघ्ननिर्य्यूह-सिद्धं पित्ते हितं घृतम् ॥ ३० ॥

धान्वन्तरं घृतम्।—

दशमूलं करञ्जौ द्वौ देवदारु हरीतकी।
वर्षाभूर्वरुणो दन्ती चित्रकं सपुनर्नवम् ॥ ३१ ॥
सुधानीपकदम्बाश्च विल्वभल्लातकानि च।
शटी पुष्करमूलञ्च पिप्पलीमूलमेव च ॥ ३२ ॥
पृथक् दशपलान् भागान् ततस्तोयार्मणे पचेत्।
यवकोलकुलत्थानां प्रस्थं प्रस्थञ्च दापयेत् ॥ ३३ ॥

---

वातजेषु च मेहेषु तैलं, पैत्तिकेषु घृतम्। मिश्रं त्रिषु लक्षणेष्विति—दोषत्रयलक्षणप्रादुर्भावे सति मिश्रं तैलघृतं यमकं पचेदित्यर्थः। त्रिदोषजत्वञ्च कफपित्तप्रमेहेष्वेवानुबन्ध्यानुबन्धकृतं मन्तव्यम्; किंवा सर्व्वेषामेव मेहानां त्रिदोषजत्वादुद्भूतदोषाविर्भावः कदाचिद्भवतीति ज्ञेयम् ॥ २८।२९ ॥

कफमेहेत्यादि।—क्काथनिर्य्यूहेति पदोपादानात्कल्कत्वं बोध्यम् ॥ ३० ॥

दशमूलमित्यादि।—करञ्जयोः फलं, न तु मूलं, मेहहन्तृत्वं फलस्यैवेति; यदुक्तं—"करञ्जकिंशुकारिष्ट-फलं कान्तप्रमेहनुत" इति। सुधा स्नुही, तस्या मूलं, तन्त्रान्तरे मूलपाठात्। नीपकदम्बौ स्वल्पबृहत्कदम्बौ, किंवा कदम्बः भूकदम्बः, स चालम्बुषः, तन्त्रान्तरे भूमिकदम्बपाठात्। नीपस्थाने क्वापि निम्बः पठ्यते। पृथक् दशपलान् भागानिति—दशमूलमपि प्रत्येकं दशपलं, तत्र प्रतिज्ञतं तोयार्म्मणदानम्। अनवगाधिके द्रव्ये पुनरुत्सर्गसिद्धमष्टगुणमेव जलं देयम्, एतदेव वक्ष्यति—पृथक् तोयार्म्मणे इत्यादि। वर्म्मणी द्रोणः, वृन्दस्तावत्—"पाठान्तरे मतं तोयं क्काथ्यादष्टगुणन्त्विह" इति। अस्यार्थः—एतदेव घृतं तन्त्रान्तरेऽन्यथा पठ्यते; तत्र च क्काथार्थमष्टगुणं तोयमुक्तं, तत्प्रामाण्यादिहाप्यष्टगुणं तोयं देयम्। तन्त्रान्तरीयपाठान्तरं यथा—"दशमूल-हरीतकी-देवदारु-करञ्जद्वय-वर्षाभूद्वय-दन्ती-

तेन पादावशेषेण घृतप्रस्थं विपाचयेत्।
निचुलस्त्रिफला भार्गी रोहिषं गजपिप्पली ॥ ३४ ॥
शृङ्गवेरं विडङ्गानि वचा काम्पिल्लकं तथा।
गर्भपानेन तत् सिद्धं पाययेत्तु यथाबलम् ॥ ३५ ॥
एतद्धान्वन्तरं नाम विख्यातं सर्पिरुत्तमम्।
कुष्ठगुल्मप्रमेहांश्च श्वयथुं वातशोणितम् ॥ ३६ ॥
प्लीहोदरं तथाऽर्शांसि विद्रधिं पिड़काश्च याः।
अपस्मारं तथोन्मादं सर्पिरेतन्नियच्छति ॥ ३७ ॥
पृथक् तोयार्मणे तत्र पचेत् द्रव्याच्छतं शतम्।
शतत्रयाधिके तोयमुत्सर्गक्रमतो मतम् ॥ ३८ ॥

दाड़िमाद्यं घृतम्।—

दाड़िमस्य फलप्रस्थं यवप्रस्थौ तथैव च।
कुलत्थकुड़वञ्चापि क्वाथयित्वा यथाविधि ॥ ३९ ॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत्।
चतुःषष्टिपलं क्षीरं चीरतुल्यं वरीरसम् ॥ ४० ॥
दत्त्वा मृद्वग्निना कल्कैरक्षमात्रायुतैः सह।
द्राक्षाखर्जूरकाकोली-दन्तीदाड़िमजीरकैः ॥ ४१ ॥
तथा मेदामहामेदा-त्रिफलादारुरेणुकैः।
विशालारजनीदारु हरिद्राविकसाऽऽमयैः ॥ ४२ ॥
क्रिमिघ्नभूमिकुष्माण्ड-श्यामैलाभिर्भिषग्वरः।
पाने भोज्ये प्रदातव्यं सर्वर्त्तुषु च मात्रया ॥ ४३ ॥
प्रमेहान् विंशतिञ्चैव मूत्राघातांस्तथाऽश्मरीम्।
कृच्छ्रं सुदारुणञ्चैव हन्यादेतद्रसायनम् ॥ ४४ ॥

भूमिकदम्ब-भल्लातक-पुष्करमूलार्कमूल-स्नुहीमूल-वरुणमूल-पिप्पलीमूलानिति प्रत्येकं दशदशोन्मितानि। यव-कोल कुलत्थप्रस्थद्वयं चाष्टगुणेऽम्भसि पादशेषं कषायमवता-

शूलमष्टविधं हन्ति ज्वरमष्टविधं तथा ।
कामलाः पाण्डुरोगांश्च हलीमकमथारुचिम् ॥ ४५ ॥
श्लीपदञ्च विशेषेण घृतेनानेन नश्यति ।
इदमायुष्यमोजस्यं सर्व्वरोगहरं परम् ॥
दाडिमाद्यमिदं नाम अश्विभ्यां निर्म्मितं महत् ॥ ४६ ॥

त्र्यूषणादि-गुडिका ।—

त्रिकटुत्रिफलाचूर्णं तुल्यगुग्गुलुना युतम् ।
गोक्षुरक्वाथसंयुक्तं गुडिकां कारयेद्भिषक् ॥ ४७ ॥
दोषकालबलापेक्षी भक्षयेच्चानुलोमिकीम् ।
न चात्र परिहारोऽस्ति कर्म्म कुर्य्यात् यथेप्सितम् ॥
प्रमेहान् मूत्रघातांश्च वातरोगोदरान् जयेत् ॥ ४८ ॥

शिलाजतुप्रयोगः ।—

शालसारादितोयेन भावितं यच्छिलाजतु ।
पिबेत् तेनैव संशुद्ध-देहः पिष्टं यथाबलम् ॥ ४९ ॥
जाङ्गलानां रसैः सार्द्धं तस्मिन् जीर्णे च भोजनम् ।
कुर्य्यादेवं तुलां यावदुपयुञ्जीत मानवः ॥ ५० ॥

---

रयेत्” इत्यादि । अर्मश्चशब्दस्येह भूनिम्बोपलक्षणा इति इन्दस्याशयः, व्यवहारस्त्वधुना चक्रमतेनैव । निचुलः इज्जलः । रोहिषं गन्धतृणम् ॥ ३१—४६ ॥

त्रिकट्वित्यादि ।—त्रिकटुत्रिफलाचूर्णं कीदृशम् ? तुल्यगुग्गुलुयुतम् ; पुनः कीदृशम् ? गोक्षुरक्वाथेन सम्यग्युक्तं भावितम्, एवं कृत्वा गुडिकां कारयेदित्यर्थः । मिलितत्रिकटुचूर्णं पल १, मिलितत्रिफलाचूर्णं पल १, गुग्गुलु पल २, चूर्णगुग्गुलुभावनार्थं गोक्षुर पल ४, क्वाथार्थं जल श ४, एवं सप्ताहमातपे भावयेत्, तदनु षडष्टमाषकमिता वटिकाः कार्य्याः ॥ ४७।४८ ॥

शालसारादितोयेनेत्यादि ।—शालसारादिः सौश्रुतो गणः, तस्य तोयं क्वाथः ; तद्विधानं “तुल्यं गिरिजेन जले चतुर्गुणे भावनीषधं क्वाथ्यम्” (रसायनाधि०) इत्यादि वक्ष्यमाणरसायनविधिना ज्ञेयम् । तेनैवेति—शालसारादितोयेनैव पिबेत् । संशुद्धदेह इति वमनादिना । पिष्टमिति—चूर्णितम् । तुलां यावदुपयुञ्जीतेति—

मधुमेहं विहायाशौ शर्करामश्मरीं तथा।
वपुर्वर्णबलोपेतः शतं जीवत्यनामयः॥ ५१॥

स्वर्णमाक्षिकप्रयोगः।—

माक्षिकं धातुमप्येवं युञ्ज्यात् तस्याप्ययं गुणः॥ ५२॥

शालसारादिलेहः।—

शालसारादिवर्गस्य क्वाथे तु घनतां गते।
दन्तीलोध्रशिवाकान्त-लौहताम्ररजः क्षिपेत्॥
घनीभूतमदग्धञ्च प्राश्य मेहान् व्यपोहति॥ ५३॥

मेहहराहारविहाराः।—

व्यायामजातमखिलं भजन् मेहान् व्यपोहति।
पादत्रच्छत्ररहितो भिक्षाशी मुनिवत् यतः॥ ५४॥
योजनानां शतं गच्छेदधिकं वा निरन्तरम्।
मेहान् जेतुं वने वाऽपि नीवारामलकाशनः॥ ५५॥

---

प्रतिदिनमर्द्धकर्षादिमात्रया तावानुपयोगोऽस्य यावता तुला न पूर्य्यते; न तु पिप्पलीवर्द्धमानवत्। मधुमेहं विहायेति—उत्पन्नमात्रं मधुमेहं जित्वेत्यर्थः, चिरजस्य असाध्यत्वात्; किंवा महाप्रभावत्वात् योगोऽयमसाध्यमपि मधुमेहं साधयति॥ ४९—५१॥

उक्तविधिं स्वर्णमाक्षिकेऽप्यतिदिशति—माक्षिकं धातुमप्येवमिति॥ ५२॥

शालसारादिवर्गस्येत्यादि।—शालसारादिगणस्य चतुर्थभागावशिष्टे क्वाथे पुनः पाकाद्घनीभूते दन्त्यादीनां मिलितानां चूर्णं पादिकं प्रक्षेप्यं कुटजलेहवत्। शिवा हरीतकी। कान्तेति—मारितपुटितकान्तलौहादिचूर्णम्; अस्य सर्वविधिर्लौहान्तरवत्॥ ५३॥

व्यायामजातमित्यादि।—व्यायामजातमिति—मल्लयुद्धादिकम्। नीवारैरुपलक्षणं, तेन श्यामाकादिकमपि बोध्यम्; यदाह सुश्रुतः,—"महाधनो वा श्यामाक-नीवारवृत्तिरामलक-कपित्थ-तिन्दुकाश्मन्तकफलाहारो मृगैः सह वसेत्" (चि० ११ अ०) इति॥ ५४।५५॥

प्रमेहपिडकाचिकित्सा ।—

शराविकाद्याः पिडकाः साधयेच्छोथवद्भिषक् ।
पक्वाश्चिकित्सेत् व्रणवत् तासां पाने प्रशस्यते ॥ ५६ ॥
क्वाथं वनस्पतेर्वास्तं मूत्रञ्च व्रणशोधनम् ।
एलादिकेन कुर्वीत तैलञ्च व्रणरोपणम् ॥ ५७ ॥
आरग्वधादिना कुर्य्यात् क्वाथमुद्वर्त्तनानि च ।
शालसारादिसेकञ्च भोज्यादिञ्च कणादिना ॥ ५८ ॥

अपथ्यानि ।—

सौवीरकं सुरां शुक्तं तैलं क्षीरं घृतं गुडम् ।
अम्लेक्षुरसपिष्टान्नानूपमांसानि वर्जयेत् ॥ ५९ ॥

रोगनिवृत्तौ मूत्रस्य स्वरूपम् ।—

प्रमेहिणां यदा मूत्रमनाविलमपिच्छिलम् ।
विशदं कटु तिक्तञ्च तदाऽऽरोग्यं प्रचक्षते ॥ ६० ॥

कुशावलेहः ।—

शरणञ्च कुशः काशः कशेरुः खागड़स्तथा ।
एषां दशपलान् भागान् जलद्रोणे विपाचयेत् ॥ ६१ ॥
अष्टभागावशेषन्तु कषायमवतारयेत् ।
खण्डप्रस्थं समालोड्य लेहवत् साधु साधयेत् ॥ ६२ ॥
अवतार्य्य ततः पश्चाच्चूर्णानीमानि दापयेत् ।
मधुकं कर्कटीवीजं कर्कारुं त्रपुषं तथा ॥ ६३ ॥

---

प्रमेहपिडकाचिकित्सामाह, शराविकाद्या इत्यादि ।—शोथवदिति—व्रणशोथवत् इत्यर्थः । वनस्पतेरिति—वटादेः । वास्तं मूत्रं छागमूत्रम् । एलादिकेनेत्यादि—एलादिगणश्च सौश्रुतः । "कल्कक्वाथावनिर्देशे गणात् तस्मात् प्रयोजयेत्" ( सु० चि० २१ अ० ) इति वचनात् एलादिगणस्य क्वाथः कल्कश्च । अन्ये तु—एलादिगणस्य कल्कों क्वाथञ्च चतुर्गुणमित्याहुः । आरग्वधादिरपि सौश्रुतो गणः । क्वाथमिति पानार्थं परिषेकार्थञ्च । भोज्यादिमित्यादिशब्दात् पानमपि बोध्यम् । कणादिनेति—पिप्पल्यादिगणेन सौश्रुतेन ॥ ५६—५८ ॥

शुभाप्लक्षकपत्राणि एला त्वङ्नागकेशरम्।
वरुणामृतप्रियङ्गूणां प्रत्येकस्याक्षसम्मितम्॥ ६४॥
प्रमेहान् विंशतिञ्चैव मूत्राघातं तथाऽश्मरीम्।
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम्॥
हन्त्यरोचकमेवोग्रं तुष्टिपुष्टिकरस्तथा॥ ६५॥

इति प्रमेह चिकित्सा।

---

## अथ स्थौल्य-चिकित्सा।

आहारविहाराः।—

श्रमचिन्ताव्यवायाध्व-क्षौद्रजागरणप्रियः।
हन्त्यवश्यमतिस्थौल्यं यवश्यामाकभोजनः॥ १॥
अस्वप्नञ्च व्यवायञ्च व्यायामं चिन्तनानि च।
स्थौल्यमिच्छन् परित्यक्तुं क्रमेणातिप्रवर्द्धयेत्॥ २॥

मधूदकाग्निमन्थप्रयोगौ।—

प्रातर्मधुयुतं वारि सेवितं स्थौल्यनाशनम्।
उष्णमन्नस्य मण्डञ्च पिबन् कृशतनुर्भवेत्॥ ३॥

सक्तुप्रयोगः।—

सचव्यजीरकव्योष-हिङ्गुसौवर्चलानलाः।

---

निदानपरिवर्जनमाह—सौवीरकमित्यादि॥ ५९—६५॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां प्रमेह-चिकित्सा-विवृतिः।

---

प्रमेहवत् स्थौल्यस्यापि व्यायामसाध्यत्वात् तथा दुष्टमेदोजन्यत्वाच्च प्रमेहानन्तरं स्थौल्यचिकित्सामाह—श्रमेत्यादि॥ १।२॥

प्रातरित्यादि।—मधुयुतं वारीत्यत्र सचारत्वेन कर्षणत्वात् कौपं जलमेव यौगिकमिति वृद्धाः॥ ३॥

मस्तुना शक्तवः पीता मेदोघ्ना वह्निदीपनाः ॥ ४ ॥

विडङ्गाद्यं चूर्णम् ।—

विडङ्गनागरक्षार-काललोहरजो मधु ।

यवामलकचूर्णन्तु प्रयोगः स्थौल्यनाशनः ॥ ५ ॥

विडङ्गाद्यं लौहम् ।—

विडङ्गत्रिफलामुस्तैः कणानागरकेण च ।

बिल्वचन्दनह्रीवेर-पाठोशीरं तथा बला ॥ ६ ॥

एषां सर्वसमं लौहं जलेन वटिकां कुरु ।

घृतयोगेन कर्त्तव्या माषिका वटिका शुभा ॥ ७ ॥

अनुपानं प्रयोक्तव्यं लौहस्याष्टगुणं पयः ।

सर्वमेहहरं बल्यं कान्त्यायुर्बलवर्द्धनम् ॥ ८ ॥

अग्निसन्दीपनकरं वाजीकरणमुत्तमम् ।

सोमरोगं निहन्त्याशु भास्करस्तिमिरं यथा ॥

विडङ्गाद्यमिदं लौहं सर्वरोगनिसूदनम् ॥ ९ ॥

व्योषाद्यशक्तुप्रयोगः ।—

व्योषं विडङ्गशिग्रूणि त्रिफलां कटुरोहिणीम् ।

बृहत्यौ द्वे हरिद्रे द्वे पाठामतिविषां स्थिराम् ॥ १० ॥

हिङ्गु केवुकमूलानि यमानीधान्यचित्रकम् ।

सौवर्चलमजाजीञ्च हवुषाञ्चेति चूर्णयेत् ॥ ११ ॥

चूर्णतैलघृतक्षौद्र-भागाः स्युर्मानतः समाः ।

शक्तूनां षोड़शगुणो भागः सन्तर्पणं पिबेत् ॥ १२ ॥

---

सचव्येत्यादि ।—अनलः चित्रकः । शक्तव इह वक्ष्यमाणव्योषादिशक्तुप्रयोगन्यायात् सर्वचूर्णात् षोड़शगुणाः । अनेन एकवारं भोजनमाहारकल्पत्वादित्याहुः ॥ ४ ॥

विडङ्गेत्यादि ।—क्षारः यवक्षारः । काललोहः वज्रादिः, अस्य चूर्णं मारण-पुटमनिष्पन्नं ग्राह्यम् । अत्र सर्वचूर्णानामेव समभागं ग्राहयन्ति, किन्तु लौहस्य महावीर्य्यत्वेन प्राधान्यादितरमिलितचूर्णसमत्वम् । लौहस्याधिको भागः (?) । मधुना चात्रावलेह इत्यप्याहुः ॥ ५—९ ॥

व्योषमित्यादि ।—तैलघृतक्षौद्राणां प्रत्येकं मिलितचूर्णसमत्वं, शक्तनाञ्च

प्रयोगात् तस्य शाम्यन्ति रोगाः सन्तर्पणोत्थिताः।

प्रमेहा मूढ़वाताश्च कुष्ठान्यर्शांसि कामलाः॥ १३॥

प्लीहपाण्ड्वामयः शोथो मूत्रकृच्छ्रमरोचकः।

हृद्रोगो राजयक्ष्मा च कासश्वासौ गलग्रहः॥ १४॥

क्रिमयो ग्रहणीदोषाः श्वैत्रं स्थौल्यमतीव च।

नराणां दीप्यते चाग्निः स्मृतिर्बुद्धिश्च वर्द्धते॥ १५॥

बादरी पेया शिलाजतुप्रयोगश्च।—

बदरीपत्रकल्केन पेया काञ्जिकसाधिता।

स्थौल्यनुत् स्यात् साग्निमन्थ-रसं वाऽपि शिलाजतु॥१६॥

अमृताद्यगुग्गुलुः।—

अमृतात्रुटिवेल्लवत्सकं कलिङ्गपथ्याऽऽमलकानि गुग्गुलुः।

क्रमवृद्धमिदं मधुप्लुतं पिड़कास्थौल्यभगन्दरं जयेत्॥ १७॥

नवकगुग्गुलुः।—

व्योषाग्नित्रिफलामुस्त-विड़ङ्गैर्गुग्गुलुं समम्।

खादन् सर्वान् जयेद्व्याधीन् मेदःश्लेष्मामवातजान्॥१८॥

षोड़शगुणो भागः समुदितचूर्णापेक्षया। सन्तर्पणमिति—जलालोड़ितशक्तु-स्वरूपतया, तेन सन्तर्पणसंज्ञस्याप्यसन्तर्पणता ज्ञेया। मात्रा चास्य चाक्षादद्रव्य-प्रधानत्वात् भूयसी। मूढ़वातः वाताप्रवृत्तिः। श्वैत्रं श्वित्रत्वम्। श्वैत्यमिति पाठे—श्वेतावभासता, सा च कफजता॥ १०—१५॥

बदरीत्यादि।—बदरीपत्रपत्रं पिष्ट्वा काञ्जिकद्रवेण पेया साध्या। साग्नि-मन्थेत्यादि द्वितीयो योगः। रसः क्वाथः। शिलाजतु प्रक्षेप्यम्॥ १६॥

अमृतेत्यादि।—त्रुटिः सूक्ष्मैला। वेल्लः विड़ङ्गः। कलिङ्गः इन्द्रयवः। केचिच्छन्दोभङ्गभिया कल्कीति पाठं कुर्वन्ति, तन्मते—कलिर्विभीतकः; किन्तु महेश्वर-पत्रिकायामपि इन्द्रयव एव व्याख्यातः, तस्मादनन्तत्वाच्छन्दोमार्गाणामत्र छन्दोभङ्ग-दोषो नाशङ्कनीयः। क्रमवृद्धमिति—अमृताया एको भागः, द्वौ त्रुटेरित्यादि। मधुना आलोड्य पेयम्॥ १७॥

व्योषेत्यादि।—अग्निः चित्रकः॥ १८॥

लौहरसायनम्।—

गुग्गुलुस्तालमूली च त्रिफला खदिरं वृषम्।
त्रिवृताऽलम्बुषा स्नुक् च निर्गुण्डी चित्रकं शटी ॥ १९ ॥
एषां दशपलान् भागांस्तोये पक्त्वाढके पचेत्।
पादशेषं ततः कृत्वा कषायमवतारयेत् ॥ २० ॥
पलद्वादशकं देयं तीक्ष्णलौहं सुचूर्णितम्।
पुराणसर्पिषः प्रस्थं शर्कराष्टपलोन्मितम् ॥ २१ ॥
पचेत् ताम्रमये पात्रे सुशीते चावतारिते।
प्रस्थार्द्धं माक्षिकं देयं शिलाजतुपलद्वयम् ॥ २२ ॥
एलात्वचोः पलार्द्धञ्च विडङ्गानि पलत्रयम्।
मरिचञ्चाञ्जनं कृष्णा द्विपलं त्रिफलान्वितम् ॥ २३ ॥
पलद्वयन्तु काशीशं श्लक्ष्णचूर्णीकृतं बुधैः।
चूर्णं दत्त्वा सुमथितं स्निग्धे भाण्डे निधापयेत् ॥ २४ ॥
ततः संशुद्धदेहस्तु भक्षयेदक्षमात्रकम्।
अनुपानं पिबेत् क्षीरं जाङ्गलानां रसं तथा ॥ २५ ॥
वातश्लेष्महरं श्रेष्ठं कुष्ठमेहोदरापहम्।
कामलां पाण्डुरोगञ्च श्वयथुं सभगन्दरम् ॥ २६ ॥
मूर्च्छामोहविषोन्माद-गराणि विविधानि च।
स्थूलानां कर्षणं श्रेष्ठं मेदुरे परमौषधम् ॥ २७ ॥
कर्षयेच्चातिमात्रेण कुक्षिं पातालसन्निभम्।
बल्यं रसायनं मेध्यं वाजीकरणमुत्तमम् ॥ २८ ॥

गुग्गुलुरित्यादि।—अत्र पिण्डितस्य गुग्गुलोः शोधितस्य च क्वाथकरणसमये एव क्वाथमध्ये प्रक्षेपः। अलम्बुषा मुण्डिरी। पुराणसर्पिर्दशवर्षस्थितम्; यदुक्तम्—"उष्णमम्लं पुराणं स्यात् दशवर्षस्थितं घृतम्। लाक्षारसनिभं शीतं प्रपुराणमतःपरम्॥" (च० चि० उन्मादे०) इति। एलात्वचोर्मिलित्वा पलार्द्धं, मरिचादीनां त्रिफलान्तानां प्रत्येक

श्रीकरं पुत्रजननं वलीपलितनाशनम्।
नाश्नीयात् कदलीं कन्दं काञ्जिकं करमर्दकम् ॥
करीरं कारवेल्लञ्च षट् ककाराणि वर्जयेत् ॥ २९ ॥

त्रिफलाद्यं तैलम्।—

त्रिफलाऽतिविषामूर्वा-त्रिवृच्चित्रकवासकैः।
निम्बारग्वधषड्ग्रन्था-सप्तपर्णनिशाद्वयैः ॥ ३० ॥
गुडूचीन्द्रसुराकृष्णा-कुष्ठसर्षपनागरैः।
तैलमेभिः समं पक्वं सुरसादिरसाप्लुतम् ॥ ३१ ॥
पानाभ्यञ्जनगण्डूष-नस्यवस्तिषु योजितम्।
स्थूलताऽऽलस्यकण्ड्वादीन् जयेत् कफकृतान् गदान् ॥३२॥

स्वेद-गात्रदौर्गन्ध्ययोः शिरीषादि-पत्रादी प्रघर्ष-प्रदेहौ।—

शिरीषलामज्जकहेमलोध्रैस्त्वग्दोषसंस्वेदहरः प्रघर्षः।
पत्राम्बुलोहाभयचन्दनानि शरीरदौर्गन्ध्यहरः प्रदेहः ॥ ३३ ॥

गात्रदौर्गन्ध्ये वासापत्र-विल्वपत्ररसप्रयोगौ।—

वासादलरसो लेपाच्छङ्खचूर्णेन संयुतः।
विल्वपत्ररसो वाऽपि गात्रदौर्गन्ध्यनाशनः ॥ ३४ ॥

---

पलद्वयम्। अञ्जनं रसाञ्जनम्। शिलाजतुपलद्वयञ्च शोधितं भावितञ्च ग्राह्यम्। एषां चूर्णानां पाणिसहत्वमावोषादशायां प्रक्षेपः, मधुनस्तु दिनान्तरे प्रक्षेपः। मधुनः प्रस्थार्द्धं षोड़शपलानि। खण्डकाद्यलौहवदस्य पाकः, लौहान्तरवदस्य मर्दनादिक्रिया बोध्या ॥ १९—२९ ॥

त्रिफलेत्यादि।—त्रिफलाद्यतैले इन्द्रसुरा गोरक्षकर्कटी, निर्गुण्डी वा। सुरसादिरसाप्लुतमिति—सुश्रुतोक्तसुरसादिगणस्य क्वाथश्चतुर्गुणः ॥ ३०—३२ ॥

स्वेददोषजन्ययोः स्वेददौर्गन्ध्ययोश्चिकित्सामाह, शिरीषेत्यादि।—लामज्जकम् उशीरम्। हेम नागकेशरचूर्णम्। पत्रं तेजपत्रं, तमालपत्रमित्यन्ये। अम्बु वालकम्। लोहम् अगुरु। चन्दनं श्वेतचन्दनम् ॥ ३३ ॥

वासादलेत्यादि।—शङ्खचूर्णेन संयुत इति—दग्धशङ्खचूर्णेन मिश्रितः। एवं विल्वपत्ररसोऽपि ॥ ३४ ॥

वर्णप्रसादने हरीतक्यादिलेपः।—

हरीतकीलोध्रमरिष्टपत्रं
चूतत्वचो दाड़िमवल्कलञ्च।
एषोऽङ्गरागः कथितोऽङ्गनानां
जङ्घाकषायश्च नराधिपानाम् ॥ ३५ ॥

कुष्ठादिषु हरितालप्रयोगः।—

गोमूत्रपिष्टं विनिहन्ति कुष्ठं
वर्णोज्ज्वलं गोपयसा च युक्तम्।
कक्षादिदौर्गन्ध्यहरं पयोभिः
शस्तं वशीकृद्रजनीद्वयेन ॥ ३६ ॥

गात्रदौर्गन्ध्ये तिन्तिड़ीहरिद्राप्रयोगः।—

चिञ्चापत्रस्वरसमर्दितं कक्षादियोजितं जयति।
पुटदग्धहरिद्रोद्वर्त्तनमचिराद्देहदौर्गन्ध्यम् ॥ ३७ ॥

गात्रदौर्गन्ध्ये तेजपत्रादिलेपः अलम्बुषाप्रयोगश्च।—

दलजललघुमलयजाभयलेपनं हरति देहदौर्गन्ध्यम्।
विमलारनालसहितं पीतमिवालम्बुषाचूर्णम् ॥ ३८ ॥

---

हरीतकीत्यादि।—अरिष्टपत्रं निम्बपत्रम्। दाड़िमवल्कलं वृक्षस्य फलस्य वा। अङ्गरागः वर्णप्रसादः। जङ्घाकषाय इति—गजवाजिवाहनेन विवर्णयोर्जङ्घयोर्वर्णप्रसादनार्थं कषायो विलेपनमित्यर्थः; यदुक्तं मेदिनीकरकोषे—"कषायो रसभेदे च निर्य्यासे च विलेपने" इति ॥ ३५ ॥

गोमूत्रपिष्टमित्यादि।—योगान्तरमिदम्। वर्णोज्ज्वलं हरितालं, गन्धक इत्यन्ये। हरितालं गोमूत्रपिष्टं सत् कुष्ठं निहन्ति। गोपयसा युक्तमिति—पिष्टं तदेव दौर्गन्ध्यहरं, तथा रजनीद्वयेन सहितं तदेव हरितालं पयसा क्षीरेण पिष्टा तिलकदानेन वशीकरणं भवतीत्यर्थः ॥ ३६ ॥

चिञ्चेत्यादि।—चिञ्चापत्रस्वरसेनादौ मर्दनं कक्षयोस्तदनन्तरं पुटदग्धहरिद्रां पिष्टा उद्वर्त्तनं कार्य्यमित्यर्थः ॥ ३७ ॥

हस्तादिसावे औषधनिर्देशः।—

हस्तपादस्रुतौ योज्यो गुग्गुलुः पञ्चतिक्तकः।
अथवा पञ्चतिक्ताख्यं घृतं खादेदतन्द्रितः॥ ३८॥

इति स्थौल्य-चिकित्सा।

---

## अथोदर-चिकित्सा।

अन्नपाननिर्देशः।—

उदरे दोषसम्पूर्णे कुक्षौ मन्दो यतोऽनलः।
तस्माद्भोज्यानि योज्यानि दीपनानि लघूनि च॥ १॥
रक्तशाल्लीन् यवान् मुद्गान् जाङ्गलांश्च मृगान् द्विजान्।
पयोमूत्रासवारिष्ट-मधुशीधूंस्तथा पिबेत्॥ २॥

वातोदरे विरेचनविधिः।—

वातोदरं बलवतः पूर्वं स्नेहैरुपाचरेत्।
स्निग्धाय स्वेदिताङ्गाय दद्यात् स्नेहविरेचनम्॥ ३॥
हृते दोषे परिम्लानं वेष्टयेद्वाससोदरम्।
तथाऽस्यानवकाशत्वाद्वायुर्नाध्मापयेत् पुनः॥ ४॥

---

दलेत्यादि।—दलं तेजपत्रम्। जलं वालकम्। लघु अगुरु। मलयजं श्वेतचन्दनम्। अभयम उशीरम्। अलम्बुषा मुण्डीरी॥ ३८।३९॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां स्थौल्य-चिकित्सा-विवृतिः।

---

उदरोत्सेधसाधर्म्यात् स्थौल्यानन्तरमुदरचिकित्सामाह, उदरे इत्यादि।—उदरे उदररोगे॥ १।२॥

वातोदरमित्यादि।—ननु "विवर्जयेत् स्नेहपानमजीर्णी चोदरी ज्वरी" (सु० चि० ३१ अ०) इति वचनात् उदरे स्नेहपानं निषिद्धं, तथा "नोदरी नातिसारी च" (सु० चि० ३२ अ०) इत्यादिना च स्वेदोऽपि निषिद्धः, तत् कथमत्र स्नेह-स्वेदोपदेशः? उच्यते,—स्वतन्त्रयोर्निषेधो वाच्यः, न तु शोधनाङ्गभूतयोः, अन्यथा दोषहरणस्य दुष्करत्वात्। परिम्लानमिति—शोषम्। तथेति—वस्त्रवेष्टनेन॥ ३।४॥

नित्यविरेचनप्रयोगस्य हेतुनिर्देशः ।—

दोषातिमात्रोपचयात् स्रोतोमार्गनिरोधनात् ।
सम्भवत्युदरं तस्मान्नित्यमेनं विरेचयेत् ॥ ५ ॥

विरेचनानन्तरं संसर्जनविधिः ।—

विरिक्ते च यथादोषहरैः पेया शृता हिता ॥ ६ ॥

सर्वोदरेषु तक्रम् ।—

वातोदरी पिबेत् तक्रं पिप्पलीलवणान्वितम् ।
शर्करामरिचोपेतं स्वादु पित्तोदरी पिबेत् ॥ ७ ॥
यमानीसैन्धवाजाजी-व्योषयुक्तं कफोदरी ।
पिबेन्मधुयुतं तक्रं व्यक्ताम्लं नातिपेलवम् ॥ ८ ॥
मधुतैलवचाशुण्ठी-शताह्वाकुष्ठसैन्धवैः ।
युक्तं प्लीहोदरी जातं सव्योषन्तु दकोदरी ॥ ९ ॥
बद्धोदरी तु हवुषा-दीप्यकाजाजिसैन्धवैः ।
पिबेच्छिद्रोदरी तक्रं पिप्पलीक्षौद्रसंयुतम् ॥
त्र्यूषणक्षारलवणैर्युक्तन्तु निचयोदरी ॥ १० ॥

अवस्थाविशेषे तक्रस्य हितकारितानिर्देशः ।—

गौरवारोचकार्त्तानां समन्दाग्न्यतिसारिणाम् ।
तक्रं वातकफार्त्तानाममृतत्वाय कल्पते ॥ ११ ॥

---

उदरे पुनः पुनः शोधनार्थोपपत्तिमाह, दोषातिमात्रेत्यादि ।—स्रोतोमार्गः स्रोतोमुखम्; मार्गशब्दोऽत्र मुखरूपमार्गवाची ॥ ५ ॥

विरिक्ते इत्यादि ।—यथादोषहरैरिति—यस्मिन्नुदरे यो दोष उद्भूतस्तत्र तद्दोषप्रत्यनीकैर्दशमूल्यादिभिः ॥ ६ ॥

वातोदरीत्यादि ।—यमानीत्यादि नातिपेलवमित्यन्तेनैको योगः; नातिपेलवं नातितनु । अन्ये तु—कफोदरीत्यन्तेनैकयोगः एवेत्याहुः, तन्न; "यमानीसैन्धवाजाजीमधुव्योषैः कफोदरे" (चि० १५ अ०) इति वाग्भटविरोधात् । मधुतैलेत्यादौ जातमिति छेदः, सुजातदधिभवमित्यर्थः । सव्योषन्तु दकोदरीति—दकोदरी तु सव्योषं तक्रं पिबेदित्यर्थः । दीप्यकं यमानी । निचयोदरी सन्निपातोदरी ॥ ७—१० ॥

गौरवेत्यादि ।—असंस्कृतस्य केवलतक्रस्यायं गुण इति ज्ञेयम् ॥ ११ ॥

वातोदरे क्षीरप्रयोगादिः।—

वातोदरे पयोऽभ्यासो निरूहो दाशमूलिकः।
सोदावर्त्ते वातघ्नाम्ल-शृतैरण्डानुवासनः॥ १२॥

सामुद्राद्यं चूर्णम्।—

सामुद्रसौवर्चलसैन्धवानि क्षारो यवानामजमोदकञ्च।
सपिप्पलीचित्रकशृङ्गवेरं हिङ्गु विड़ञ्चेति समानि कुर्य्यात्॥१३॥
एतानि चूर्णानि घृतप्लुतानि भुञ्जीत पूर्वं कवलं प्रशस्तम्।
वातोदरं गुल्ममजीर्णभुक्तं वायुप्रकोपं ग्रहणीञ्च दुष्टाम्॥ १४॥
अर्शांसि दुष्टानि च पाण्डुरोगं भगन्दरञ्चेति निहन्ति सद्यः॥१५॥

पित्तोदरे विरेचनविधिः।—

पित्तोदरे तु बलिनं पूर्वमेव विरेचयेत्।
अनुवास्याबलं क्षीर-वस्तिशुद्धं विरेचयेत्॥ १६॥

---

वातोदरे इत्यादि।—पयोऽभ्यास इति क्रमेण बलार्थं, बलजननानन्तरं पयो निवर्त्तनीयम्। निरूहो दाशमूलिक इति—दशमूलक्वाथेन निरूहः कार्य्य इत्यर्थः, किंवा "द्विपञ्चमूलस्य रसोऽम्लयुक्तः सच्छागमांसस्य सपूर्वकल्कः। त्रिस्नेहयुक्तः प्रवरो निरूहः सर्वानिलव्याधिहरः प्रदिष्टः॥" (च० सि० वस्तिसूत्री०) इति। अयञ्च तीक्ष्णविरेचनद्रव्ययुक्तः कार्य्यः, चरकप्रामाण्यात्। सोदावर्त्ते वातोदरे इत्यन्वयः। वातघ्नाम्ल-शृतैरण्डानुवासनः इति—वातघ्नैर्द्रव्यैस्तथा अम्लैश्च काञ्जिकादिभिः शृतमेरण्डमिति—एरण्डतैलमनुवासनं यस्य वस्तेः स तथा इति; अनुवासनस्य स्नेहरूपत्वात् एरण्डपदेन एरण्डतैलमुच्यते॥ १२॥

सामुद्रेत्यादि।—यवानां क्षारो यवक्षारः। चूर्णानीत्यनन्तरं सम्मिश्रेति शेषः। अस्य हिङ्ग्वष्टकवदुपयोगः॥ १३—१५॥

पित्तोदरे त्वित्यादि।—अत्र बलिनं पुरुषं पूर्वमिति—अनुवासनमकृत्वैव विरेचयेत्; अनुवासनव्यतिरिक्तस्तु स्नेहः कर्त्तव्य एव; अत एवोक्तं वाग्भटे—"बलिनं स्वादुसिद्धेन पैत्ते संस्नेह्य सर्पिषा। श्यामा-त्रिभण्डी-त्रिफला-विपक्केन विरेचयेत्॥" (चि० १५ अ०) इति। अबलं पुनरादौ अनुवास्य ततः क्षीरवस्तिशुद्धं विरेचयेत्। क्षीरप्रधानो वस्तिः क्षीरवस्तिः। विरेकोऽवाग्निबलजननानन्तरमेव कार्य्यः;

विरेचनयोगद्वयम् ।—

पयसा सत्रिवृत्कल्केनोरुबूकशृतेन वा ।
सातलात्रायमाणाभ्यां शृतेनारग्वधेन वा ॥ १७ ॥

कफोदरे क्रियासूत्रम् ।—

कफोदरिणं शुद्धं कटुक्षारान्नभोजितम् ।
मूत्रारिष्टायस्कृतिभिर्योजयेच्च कफापहैः ॥ १८ ॥

त्रिदोषोदर-प्लीहोदरयोः क्रियासूत्रम् ।—

सन्निपातोदरे सर्वा यथोक्ताः कारयेत् क्रियाः ।
प्लीहोदरे प्लीहहरं कर्मोदरहरं तथा ॥ १९ ॥

बद्धोदरे क्रियासूत्रम् ।—

स्विन्नाय बद्धोदरिणे मूत्रं तीक्ष्णौषधान्वितम् ।
सतैललवणं दद्यान्निरूहं सानुवासनम् ॥

---

उक्तं हि वाग्भटे—"दुर्बलं त्वनुवास्यादौ शोधयेत् क्षीरवस्तिभिः । जाते चाग्निबले स्निग्धं भूयो भूयो विरेचयेत् ॥" ( चि० १५ अ० ) इति ॥ १६ ॥

केन विरेचयेत् ? इत्याह, पयसेत्यादि ।—अत्र तु उरुबूकत्वचस्य फलं ग्राह्यं, विरेचकत्वात्; एवमारग्वधस्यापि फलम् । सातला चर्मकषा । पयसेति सर्वत्र सम्बध्यते । सत्रिवृत्कल्केन पयसेत्येको योगः, उरुबूकशृतेनेति द्वितीयः, सातलाद्यारग्वधान्तस्त्वपरः, जतूकर्णसंवादात् । अन्ये तु—सत्रिवृत्कल्केनोरुबूकशृतेनेत्येको योगः, तथा सत्रिवृत्कल्केन सातलाद्यारग्वधान्तेन तु द्वितीयो योग इत्याहुः ॥ १७ ॥

कफादित्यादि ।—शुद्धमिति—वमनव्यतिरिक्तशोधनेन विशुद्धमित्यर्थः, वमनस्योदरे निषिद्धत्वात् । कटुक्षारान्नभोजितमिति—कटुक्षारयुक्तैरन्नैः पेयादिभिः कृतसंसर्जनमित्यर्थः । अयस्कृतिः नवायसादिः, किंवा अयस्कृतयो रसायनोक्तलौहप्रयोगाश्चरकोक्ता ज्ञेयाः ॥ १८ ॥

सन्निपातोदरे इत्यादि ।—सर्वा यथोक्ता इति—प्रत्येकं वातोदरादिविहिताः क्रियाः सर्वा एव सन्निपातोदरे कार्य्याः । प्लीहोदरे इत्यादौ प्लीहहरं कर्म वक्ष्यमाणं, तथोदरहरमिति—प्लीहोदरहरम्; प्लीहोदरचिकित्सा च वाच्या ॥ १९ ॥

स्विन्नायेत्यादि ।—निरूहस्य उत्सर्गत एव सतैललवणत्वे सिद्धे सतैललवणमिति पदं तैललवणयोरत्राधिक्यदानोपदर्शनार्थम् । बद्धच्छिद्रदकोदराणाञ्च यद्यप्याख्यापनं

परिस्रंसीनि चान्नानि तीक्ष्णञ्चैव विरेचनम् ॥ २० ॥

छिद्रोदरे क्रियाऽतिदेशः ।—

छिद्रोदरमृते स्वेदात् श्लेष्मोदरवदाचरेत् ॥ २१ ॥

जलोदरे क्रियासूत्रम् ।—

जातं जातं जलं स्राव्यं शास्त्रोक्तं शस्त्रकर्म च ।
जलोदरे विशेषेण द्रवसेवां विवर्जयेत् ॥ २२ ॥

देवदार्वादिलेपः ।—

देवदारुपलाशार्क-हस्तिपिप्पलिशिग्रुकैः ।
साश्वगन्धैः सगोमूत्रैः प्रदिह्यादुदरं शनैः ॥ २३ ॥

अष्टविधमूत्रप्रयोगोपदेशः ।—

मूत्राण्यष्टावुदरिणां सेके पाने च योजयेत् ॥ २४ ॥

पिप्पलीवर्द्धमानप्रयोगः ।—

स्नुक्पयोभावितानां पिप्पलीनां पयोऽशनः ।
सहस्रञ्च प्रयुञ्जीत शक्तितो जठरामयी ॥ २५ ॥

---

निषिद्धं, तथाऽपि शर्द्दिकवाय्वायामवस्थायां निरूहदानमिह ज्ञेयम्। परिस्रंसीनीति—अनुलोमीनि ॥ २० ॥

छिद्रोदरमित्यादि वाग्भटस्य।—यद्यपि "प्रायो भवत्यभावाय छिद्रान्त्रञ्चोदरं नृणाम्" (च० चि० उदर०) इत्यनेन छिद्रोदरमसाध्यमुक्तं, तथाऽपि प्रायःशब्देन तस्यासाध्यताव्यभिचारस्य दर्शितत्वात् चिकित्सितमिदं यापनार्थम्। तथा "हन्ति सर्वोदराण्येतच्चूर्णं जातोदकान्यपि" (च० चि० उदर०) इत्यनेन सर्वोदरचिकित्सैव बोध्या। अन्ये तु—सर्वोदरहन्तृत्वकथनं न पारमार्थिकं, किन्तु स्तुतिरित्याहुः। ऋते स्वेदात् इत्यनेन स्वेदस्य छिद्रोदरे क्लेदयुक्तेऽत्यर्थं क्लेदकारतया निषेधः ॥ २१ ॥

जातमित्यादि।—शास्त्रोक्तमिति—शल्यशास्त्रोक्तम् ॥ २२ ॥

देवदार्वित्यादि।—पलाशः किंशुकस्तस्य फलं ग्राह्यम्, उदरहन्तृत्वात् ॥ २३।२४ ॥

स्नुक्पय इत्यादि।—अत्र एकविंशतिवारान् भावयेत्, चारपाणिसंवादात्; व्यवहारस्तु सप्तवारभावनया। एतान् पिप्पलीकुडवांस्त्रिशतः पञ्च वा कोष्ठानुरूपं प्रत्यहमेकान्तरं द्व्यन्तरं वा विरेचनार्थं क्षीरेण पिबेत्। सहस्रञ्च प्रयुञ्जीतेति उपयुक्तपिप्पलीगणनया यावता कालेन सहस्रं पूर्य्यते इत्यर्थः; एतच्चोत्कर्षवचनं, तेन सहस्रादर्वागपि विधिर्बोध्यः ॥ २५ ॥

शिलाजत्वादिप्रयोगचतुष्टयम् ।—

शिलाजतूनां मूत्राणां गुग्गुलोस्त्रैफलस्य च ।
स्नुहीक्षीरप्रयोगश्च शमयत्युदरामयम् ॥ २६ ॥

तण्डुलपूपप्रयोगः ।—

स्नुक्पयसा परिभाविततण्डुलचूर्णैर्विनिर्मितः पूपः ।
उदरमुदारं हिंस्यात् योगोऽयं समरालेण ॥ २७ ॥

पिप्पलीवर्द्धमानप्रयोगोपदेशः ।—

पिप्पलीवर्द्धमानं वा कल्पदृष्टं प्रयोजयेत् ।
जठराणां विनाशाय नास्ति तेन समं भुवि ॥ २८ ॥

पटोलाद्यं चूर्णम् ।—

पटोलमूलं रजनीं विडङ्गं त्रिफलात्वचम् ।
कम्पिल्लकं नीलिनीञ्च त्रिवृताञ्चेति चूर्णयेत् ॥ २९ ॥
षड़ाद्यान् कार्षिकानन्त्यांस्त्रींश्च द्वित्रिचतुर्गुणान् ।
कृत्वा चूर्णं ततो मुष्टिं गवां मूत्रेण वै पिबेत् ॥ ३० ॥
विरिक्तो जाङ्गलरसैर्भुञ्जीत मृदुमोदनम् ।
मण्डं पेयाञ्च पीत्वा च सव्योषं षड़हं पयः ॥ ३१ ॥

---

शिलाजतूनामित्यादि ।—त्रैफलस्य गुग्गुलोरिति—त्रिफलागुग्गुलोरित्यर्थः । प्रयोगः अभ्यासः । समासान्तर्गतमपि प्रयोग इति पदं चकाराच्छिलाजत्वादिभिः सह प्रत्येकं सम्बध्यते ॥ २६ ॥

स्नुक्पयसेत्यादि ।—पूपः पिष्टकम् । महाद्रवचौरेण निःसृतकल्कः पिप्पलीं भावयित्वा एकां द्वे तिस्रो वा प्रयच्छेत् विरेकार्थमिति । उदारमिति—प्रवृद्धम् ॥२७॥

पिप्पलीत्यादि ।—कल्पदृष्टमिति—चरकोक्तरसायनविधिदृष्टम् ; तच्च विधिं प्लीहयकृच्चिकित्सिते दर्शयिष्यामः ॥ २८ ॥

पटोलमूलमित्यादि ।—त्वचमिति निरस्थित्रिफलाग्रहणार्थम् । नीलिनी नीलवुह्ना, तस्याश्चात्र फलं, वृद्धवाग्भटसंवादात् । षड़ाद्यान् कार्षिकानिति—पटोलमूलादीनां त्रिफलान्तानां षण्णां प्रत्येकं कर्षभागानित्यर्थः । त्रींश्च द्वित्रिचतुर्गुणानिति—कम्पिल्लकादयस्त्रयः क्रमात् कार्षिकभागापेक्षया द्वित्रिचतुर्गुणानित्यर्थः ।

शृतं पिबेत्तु तच्चूर्णं पिबेदेवं पुनः पुनः।
हन्ति सर्वोदराण्येतच्चूर्णं जातोदकान्यपि॥
कामलां पाण्डुरोगञ्च श्वयथुञ्चापकर्षति॥ ३२॥

नारायणं चूर्णम्।—

यमानी हवुषा धान्यं त्रिफला सोपकुञ्चिका।
कारवी पिप्पलीमूलमजगन्धा शटी वचा॥ ३३॥
शताह्वा जीरकं व्योषं स्वर्णक्षीरी सचित्रका।
द्वौ क्षारौ पौष्करं मूलं कुष्ठं लवणपञ्चकम्॥ ३४॥
विडङ्गञ्च समांशानि दन्त्या भागत्रयं तथा।
त्रिवृद्विशाले द्विगुणे सातला स्याच्चतुर्गुणा॥ ३५॥
एष नारायणो नाम चूर्णो रोगगणापहः।
नैनं प्राप्याभिवर्द्धन्ते रोगा विष्णुमिवासुराः॥ ३६॥
तक्रेणोदरिभिः पेयो गुल्मिभिर्बदराम्बुना।
आनद्धवाते सुरया वातरोगे प्रसन्नया॥ ३७॥
दधिमण्डेन विट्सङ्गे दाड़िमाम्बुभिरर्शसैः।
परिकर्त्ते च वृक्षाम्लैरुष्णाम्बुभिरजीर्णके॥ ३८॥
भगन्दरे पाण्डुरोगे कासे श्वासे गलग्रहे।
हृद्रोगे ग्रहणीदोषे कुष्ठे मन्दानले ज्वरे॥ ३९॥

---

कुडिमिति—पलम्। विरिक्त जाङ्गलरसैरित्यादि—विरेचनदिने जीर्णे भेषजे मृद्वोदनमण्डपेयानामन्यतममग्निबलापेक्षया उपयोक्तव्यं, तत ऊर्द्धं षड़हं यथोक्तपथ्याशिना भवितव्यम्; ततः पुनः सप्तमेऽहनि पटोलादिचूर्णं पेयम्; एवं पुनः पुनः कार्य्यम्॥ २९—३२॥

यमानीत्यादि।—उपकुञ्चिका कृष्णजीरकम्। कारवी स्वल्पप्रमाणं जीरकमीषत्कृष्णम्। अजगन्धा अजमोदा। जीरकशब्देन च प्रसिद्धं महज्जीरकम्। स्वर्णक्षीरी कङ्कुष्ठम। दन्त्या भागत्रयमाद्यभागापेक्षया, एवं त्रिवृद्विशालयोरप्याद्यभागापेक्षया प्रत्येकं द्वैगुण्यम्। सातला चर्मकषा। नारायणसंज्ञानिमित्तमाह, नैनमित्यादि—एतेन नारायणधर्मत्वान्नारायणसंज्ञा युक्ता भवति।

दंष्ट्राविषे मूलविषे गरे कृत्रिमे विषे।
यथार्हं स्निग्धकोष्ठेन पेयमेतद्विरेचनम् ॥ ४० ॥

दन्त्यादिकल्कः।—

दन्ती वचा गवाक्षी च शङ्खिनी तिल्वकं त्रिवृत्।
गोमूत्रेण पिबेत् कल्कं जठरामयनाशनम् ॥ ४१ ॥

माहिषमूत्रप्रयोगः।—

सक्षीरं माहिषं मूत्रं निराहारः पिबेन्नरः।
शाम्यत्यनेन जठरं सप्ताहादिति निश्चयः ॥ ४२ ॥

गवाक्ष्यादिकल्कः।—

गवाक्षीशङ्खिनीदन्ती-नीलिनीकल्कसंयुतम्।
सर्वोदरविनाशाय गोमूत्रं पातुमाचरेत् ॥ ४३ ॥

प्लीहोदरे अर्कलवणम्।—

अर्कपत्रं सलवणमन्तर्धूमं दहेत् ततः।
मस्तुना तत् पिबेत् क्षारं गुल्मप्लीहोदरापहम् ॥ ४४ ॥

प्लीहोदरे शिग्रुक्वाथः।—

पीतः प्लीहोदरं हन्यात् पिप्पलीमरिचान्वितः।
अम्लवेतससंयुक्तः शिग्रुक्वाथः ससैन्धवः ॥ ४५ ॥

---

गरोऽविषद्रव्यसंयोगजं विषं कालान्तरफलदायि, कृत्रिमन्तु स्थावरजङ्गमविषसंयोगादुत्कृष्टशक्तिकं विषं तत्कालफलदायि। यथार्हमिति वचनादन्यैरपि दोषव्याधिविपरीतैर्द्रव्यैः पानमिति दर्शयति। यथार्हस्निग्धकोष्ठेनेति पाठे—यो यथोचितः स्नेहस्तेन स्निग्धकोष्ठेन पेयमिदम् ॥ ३३—४० ॥

दन्तीत्यादि।—गवाक्षी गोरक्षकर्कटी। शङ्खिनी श्वेतवुह्मा ॥ ४१ ॥

सक्षीरमित्यादि।—माहिषं मूत्रं पलमेकं द्वयं वा पीत्वा विरिक्ते सति गोक्षीरमेव पीत्वा स्थातव्यमित्युपदिशन्ति; वाग्भटेऽप्युक्तं—"गव्यं मूत्रं माहिषमेव वा। पिबेद्गोक्षीरभुक् स्याद्वा करभीक्षीरवर्त्तनः ॥" ( चि० १५ अ० ) इति। गोक्षीरभुगिति—गोक्षीरमात्रभोजी। अत एव "माहिषं मूत्रं पीत्वा तत्क्षीराहार एव नरः" इति निश्चलेन यदुक्तं तदपास्तम्, उक्तवाग्भटवचनविरोधात् ॥ ४२।४३ ॥

अर्कपत्रमित्यादि।—अर्कपत्रं सलवणमिति—सैन्धवेन तुल्यं परिणतार्कपत्रं वदन्ति ॥ ४४ ॥

प्लीहोदरे इन्द्रवारुणीप्रयोगः।—

यस्य गृहीत्वा संज्ञामुत्पाटयित्वेन्द्रवारुणीमूलम्।
प्रक्षिप्यति सुदूरे शाम्येत् प्लीहोदरन्तु तस्य ॥ ४६ ॥

सर्वोदरे रोहीतकादिचूर्णम्।—

रोहीतकाभयाक्षोद-भावितं मूत्रमम्बु वा।
पीतं सर्वोदरप्लीह-मेहार्शःक्रिमिगुल्मनुत् ॥ ४७ ॥

दूष्योदरे देवदार्वादिचूर्णमश्वगन्धाचूर्णञ्च।—

देवद्रुमं शिग्रुमयूरकञ्च गोमूत्रपिष्टामथवाऽश्वगन्धाम्।
पीत्वाऽऽशु हन्यादुदरं प्रवृद्धं क्रिमीन् सशोथानुदरञ्च दूष्यम् ॥ ४८ ॥

जलोदरादौ दशमूलादिक्काथः।—

दशमूलदारुनागरच्छिन्नरुहापुनर्नवाऽभयाक्काथः।
जयति जलोदरशोथश्लीपदगलगण्डवातरोगांश्च ॥ ४९ ॥

सर्वोदरे हरीतक्यादिक्काथः।—

हरीतकीनागरदेवदारु-पुनर्नवाच्छिन्नरुहाकषायः।
सगुग्गुलुर्मूत्रयुतस्तु पेयः शोथोदराणां प्रवरः प्रयोगः ॥ ५० ॥

---

पीत इत्यादि।—अत्र पिप्पल्यादिद्रव्यचतुष्टयं प्रक्षेप्यम् ॥ ४५।४६॥

रोहीतकेत्यादि।—रोहीतकहरीतक्योश्चूर्णैकदर्शेण पलद्वयपरिमितं गोमूत्रमम्बु वा भाव्यमिति केचित्; अन्ये तु—रोहीतकहरीतक्योः क्षोदैः खण्डखण्डरूपैः शिलायां किञ्चिदवक्षुण्णैः सप्ताहं भावितं मूत्रमम्बु वेत्याहुः, वाग्भटप्रामाण्यात्; यथा—"रोहीतकलताः कृत्ताः खण्डशः साभया जले। मूत्रे वा सुनुयात् तस्य सप्तरात्रस्थितं पिबेत् ॥" (चि० १५ अ०) इति। सुनुयादिति—भावयेत् ॥ ४७ ॥

इदानीमुदरे एतोपद्रवभूतप्रभूतशोथसम्बन्धे सति चिकित्साविशेषमाह, देवद्रुममित्यादि।—मयूरकम् अपामार्गमूलम्। मूत्रमत्र योगद्वयेऽपि मूत्रेण पेषणं पानञ्चेत्याहुः। वृन्दटीप्पनिकायान्तु देवद्रुमादिरश्वगन्धान्त एको योगः, अथवा-शब्दोऽपि पूर्वयोगापेक्षया इत्युक्तम्; व्यवहारस्तु योगद्वयेनेति ॥ ४८ ॥

दशमूलेत्यादि।—क्काथ इत्यत्र युक्त इति पाठे—क्काथ इति शेषः ॥ ४९ ॥

हरीतकीत्यादि।—अतिादलोपयोगे गुग्गुलोर्माषकचतुष्टयं गोमूत्रस्यार्द्धपलं कर्षौ

वातोदरे वैरेचनिकयोगत्रयम्।—

एरण्डतैलं दशमूलमिश्रं गोमूत्रयुक्तस्त्रिफलारसो वा।
निहन्ति वातोदरशोथशूलं क्वाथः समूत्रो दशमूलजश्च॥ ५१॥

पुनर्नवाष्टकः।—

पुनर्नवानिम्बपटोलशुण्ठी-तिक्ताऽमृतादार्व्वभयाकषायः।
सर्वाङ्गशोथोदरकासशूल-श्वासान्वितं पाण्डुगदं निहन्ति॥ ५२॥

पुनर्नवादिः।—

पुनर्नवां दार्व्वभयां गुडूचीं पिबेत् समूत्रां महिषाक्षयुक्ताम्।
त्वग्दोषशोथोदरपाण्डुरोग-स्थौल्यप्रसेकोर्द्ध्वकफामयेषु॥ ५३॥

योगत्रयम्।—

गोमूत्रयुक्तं महिषीपयो वा क्षीरं गवां वा त्रिफलाविमिश्रम्।
क्षीराशनभुक् केवलमेव गव्यं मूत्रं पिबेद्वा श्वयथूदरेषु॥ ५४॥

पुनर्नवादिचूर्णम्।—

पुनर्नवा दार्व्वमृता पाठा विल्वं श्वदंष्ट्रिका।
बृहत्यौ द्वे रजन्यौ द्वे पिप्पल्यश्चित्रकं वृषम्॥ ५५॥

---

वा प्रक्षेप्यः; विरेचने तु कर्त्तव्ये प्रचुरत्वमनयोः, अत्यन्तबद्धकोष्ठे तु—गोमूत्रेणैव क्वाथं कृत्वा गुग्गुलुमात्रं प्रक्षिप्य वद्धा व्यवहरन्ति॥ ५०॥

एरण्डतैलमित्यादि।—एरण्डतैलप्रक्षेपाद्दशमूलक्वाथ इत्येको योगः; गोमूत्रप्रक्षेपात् त्रिफलाक्वाथ इति द्वितीयः; अत्यन्तबद्धकोष्ठे तु गोमूत्रेणैव त्रिफलाक्वाथः कार्य्य इति वदन्ति; एवं गोमूत्रप्रक्षेप इ मूत्रेण वा दशमूलक्वाथोऽपीत्याहुः॥ ५१ ५२॥

पुनर्नवामित्यादि।—पुनर्नवादीनां चूर्णं गुग्गुलुसंयुक्तं गोमूत्रेण पेयम्; तथा च तन्त्रान्तरे—"गोमूत्रेणाथवा दारु-वर्षाभूचेतकीरजः। पिबेत् गुग्गुलुसंयुक्तं शोथोदरविनाशनम्॥" इति। अत्र चेतकी हरीतकी, गुग्गुलुञ्च मिलितचूर्णसम इत्याहुः। अन्ये तु—पुनर्नवादीनां क्वाथे गोमूत्रं गुग्गुलुञ्च प्रक्षिप्य व्यवहरन्ति॥ ५३॥

गोमूत्रयुक्तमित्यादि।—क्षीरं गवां वा त्रिफलाविमिश्रमिति—त्रिफलायाः क्वाथः कल्को वा। क्षीराशनभुगिति क्षीरमात्रेणाशनभुक्॥ ५४॥

समभागानि चूर्णानि गवां मूत्रेण वा पिबेत् ।
बहुप्रकारं श्वयथुं सर्वगात्रविसारिणम् ॥
हन्ति शोथोदराण्यष्टौ व्रणांश्चैवोद्धतानपि ॥ ५६ ॥

माणकखण्डः ।—

पुराणं माणकं पिष्ट्वा द्विगुणीकृततण्डुलम् ।
साधितं क्षीरतोयाभ्यामभ्यसेत् पायसन्तु तत् ॥ ५७ ॥
हन्ति वातोदरं शोथं ग्रहणीं पाण्डुतामपि ।
सिद्धो भिषग्भिराख्यातः प्रयोगोऽयं निरत्ययः ॥ ५८ ॥

दशमूलषट्पलकं घृतम् ।—

दशमूलतुलार्द्धरसे सक्षारैः पञ्चकोलकैः पलिकैः ।
सिद्धं घृतार्द्धपात्रं द्विर्मस्तुकमुदरगुल्मघ्नम् ॥ ५९ ॥

चित्रकघृतम् ।—

चतुर्गुणे जले मूत्रे द्विगुणे चित्रकात् पले ।
कल्के सिद्धं घृतप्रस्थं सक्षारं जठरी पिबेत् ॥ ६० ॥

---

पुनर्नवेत्यादि ।—अत्र बिल्वस्य मूलम् । शोथोदराण्यष्टाविति—सशोथान्यष्टावुदराणीत्यर्थः ॥ ५५।५६ ॥

पुराणमित्यादि ।—पुराणमाणकस्य मूलं पलमात्रं, द्विगुणिततण्डुलस्य पलद्वयं, क्षीरतोयाभ्यां समाभ्यां साधयित्वा पायसः कार्य्यः । अस्योपयोगेऽपरमन्नव्यञ्जनं नाश्नीयादित्याहुः । योगोऽयं शोथमात्रेऽपि प्रभवति ॥ ५७।५८ ॥

दशमूलेत्यादि ।—दशमूलषट्पलके दशमूलस्य तुलार्द्धे पञ्चाशत्पलानि, तस्य क्वाथ इत्यर्थः । घृतस्यार्द्धपात्रमर्द्धाढकं, प्रस्थद्वयमित्यर्थः । द्विर्मस्तुकमिति—घृतमपेक्ष्य द्विगुणं मस्त्वित्यर्थः । चरकोक्तदशमूलषट्पलकेऽपि द्विः-शब्दः प्रस्थेन तथाऽर्द्धपलिकैरित्यनेन च योज्यः, तेन पिप्पल्यादीनां द्विरिति द्विगुणार्द्धपलैः षट्पलानि भवन्ति, तथा प्रस्थेन च द्विः-शब्दसम्बन्धात् प्रस्थद्वयं भवतीति एकवाक्यता बोध्या । ननु क्रियाभ्यावृत्तावेव सुच्-प्रत्ययो दृश्यते, न तु अभ्यावृत्तिमात्रेणैव; द्विरष्ट-संवत्सरचारुसुन्दरीत्यादौ क्रियाभ्यावृत्तिं विनाऽपि सुच्-प्रत्ययस्य दर्शनात् ॥ ५९ ॥

चतुर्गुणे इत्यादि ।—अत्र सक्षारमित्यनेन यवक्षारस्यापि चित्रकवत् पलमितं

बिन्दुघृतम्।—

अर्कक्षीरपले द्वे च स्नुहीक्षीरपलानि षट्।
पथ्या कम्पिल्लकं श्यामा सम्पाकं गिरिकर्णिका ॥ ६१ ॥
नीलिनी त्रिवृता दन्ती शङ्खिनी चित्रकस्तथा।
एतेषां पलिकैर्भागैर्घृतप्रस्थं विपाचयेत् ॥ ६२ ॥
अथास्य मलिने कोष्ठे बिन्दुमात्रं प्रदापयेत्।
यावतोऽस्य पिबेद्बिन्दूंस्तावद्वारान् विरिच्यते ॥ ६३ ॥
कुष्ठं गुल्ममुदावर्त्तं श्वयथुं सभगन्दरम्।
शमयत्युदराण्यष्टौ वृत्तमिन्द्राशनिर्यथा ॥
एतद्बिन्दुघृतं नाम येनाभ्यक्तो विरिच्यते ॥ ६४ ॥

दधिमण्डाद्यं घृतम्।—

दधिमण्डाढ़के सिद्धात् स्नुक्क्षीरपलकल्कितात्।
घृतप्रस्थात् पिबेन्मात्रां तद्वज्जठरशान्तये ॥ ६५ ॥

अष्टगुणक्षीरपक्वं दधिमण्डाद्यं घृतम्।—

तथा सिद्धं घृतप्रस्थं पयस्यष्टगुणे पचेत्।
स्नुक्क्षीरपलकल्केन त्रिवृताषट्पलेन च ॥ ६६ ॥

---

देयम्; अत्रार्थे तन्त्रान्तरं यथा,—"शङ्खिनीपलाभ्यां द्विमूर्व चतुर्जलश्च घृतप्रस्थम्" इति ॥ ६० ॥

अर्कक्षीरेत्यादि।—श्यामा श्याममूला त्रिवृत्। गिरिकर्णिका श्वेतापराजिता। नीलिनी नीलवुह्ना। शङ्खिनी श्वेतवुह्ना। अत्र पाकार्थं जलं चतुर्गुणं देयम्; अत एव क्वचित् वृन्दसङ्ग्रहे दृश्यते—"स्नुह्यर्कयोस्तु पयसा पाकस्यानुपपत्तितः। जलं चतुर्गुणं देयं पाकार्थं बिन्दुसर्पिषि ॥" इति। मात्रा तु अस्य कोष्ठानुरूपा माषकमेकं द्वयं वा प्रचरति। मलिने इति—मलबहुले ॥ ६१—६४ ॥

दधिमण्डेत्यादि।—तद्वदिति—पूर्वोक्तप्रकारेणोत्थिताद्घृतात्; चरके हि—"क्षीरद्रोणं सुधाक्षीर-प्रस्थार्द्धसहितं दधि" (चि० ७८२०) इत्यादि पूर्वयोगे क्षीरद्रोणे सुधाक्षीरप्रस्थार्द्धं प्रक्षिप्य दधि करणीयं, ततस्तद्दधि मथित्वा घृतं सम्पादनीयमिति प्रकार उक्त इति ॥ ६५ ॥

तथा सिद्धमित्यादि।—अत्रापि पूर्वोक्तप्रकारनिष्पादितदधिमन्थनसिद्धं घृतमिति

नाराचघृतम् ।—

स्नुक्क्षीरदन्तीत्रिफलाविडङ्ग-
सिंहीत्रिवृच्चित्रककल्कयुक्तम् ।
घृतं विपक्वं कुडवप्रमाणं
तोयेन तस्याक्षमथार्द्धकर्षम् ॥ ६७ ॥
पीत्वोष्णमम्भोऽनुपिबेद्विरिक्ते
पेयां सुखोष्णां वितरेद्विधिज्ञः ।
नाराचमेतज्जठरामयाणां
युक्त्योपयुक्तं शमनं प्रदिष्टम् ॥ ६८ ॥

इत्युदर-चिकित्सा ।

---

## अथ प्लीह-यकृच्चिकित्सा ।

यमानिकादिचूर्णम् ।—

यमानिकाचित्रकयावशूक-षड्ग्रन्थिदन्तीमगधोद्भवानाम् ।
प्लीहानमेतद्विनिहन्ति चूर्णमुष्णाम्बुना मस्तुसुरासवैर्वा ॥ १ ॥

पिप्पलीप्रयोगः ।—

पिप्पलीं किंशुकक्षार भाविता सम्प्रयोजयेत् ।

---

तथाशब्दार्थः । एतयोर्घृतयोरनुपानं तथा विरेकान्तरीयो विधिश्च चरकोक्त एवानुसरणीय इति ॥ ६६ ॥

स्नुक्क्षीरेत्यादि ।—सिंही कण्टकारी । युक्त्योपयुक्तमिति कोष्ठाग्न्यादिबलापेक्षया इत्यर्थः ॥ ६७।६८ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायाम् उदर-चिकित्सा-विवृतिः ।

---

प्लीहवृद्धया उदरसम्भवादनन्तरं प्लीहचिकित्सामाह, यमानिकेत्यादि ।—षड्ग्रन्थि पिप्पलीमूलम् ; उक्तं हि रत्नकोषे—"ग्रन्थिकं पिप्पलीमूलं षड्ग्रन्थि चटिकाशिरः" इति ॥ १ ॥

गुल्मप्लीहापहां वह्नि-दीपनीञ्च रसायनीम् ॥ २ ॥

विडङ्गादिक्षारः।—

विडङ्गाग्निसिन्धूत्थ-शक्तून् दग्ध्वा वचान्वितान्।

पिबेत् क्षीरेण सञ्चूर्ण्य गुल्मप्लीहोदरापहान् ॥ ३ ॥

तालपुष्पक्षारः रोहीतकादिक्राथश्च।—

तालपुष्पभवः क्षारः सगुड़ः प्लीहनाशनः।

रोहीतकाभयाक्राथः कणाक्षारसमन्वितः ॥ ४ ॥

पूतिकक्षारः।—

क्षारं वा विड़कणाभ्यां पूतिकस्याम्लनिःसुतम्।

प्लीहयकृत्प्रशान्त्यर्थं पिबेत् प्रातर्यथाबलम् ॥ ५ ॥

शुक्तिक्षारः क्षीरपिप्पलीप्रयोगश्च।—

पातव्यो युक्तितः क्षारः क्षीरेणोदधिशुक्तिजः।

पयसा वा प्रयोक्तव्याः पिप्पल्यः प्लीहशान्तये ॥ ६ ॥

---

पिप्पलीमित्यादि।—किंशुकः पलाशः, तत्क्षारोदके सप्तधा भावितां पिप्पलीं पिप्पलीवर्द्धमानक्रमेण प्रयोजयेत्, दुग्धपानमप्यत्रोपदिशन्ति वृद्धाः ॥ २ ॥

विडङ्गेत्यादि।—विड़ङ्गादीनां चूर्णं घृताक्तं कृत्वा अन्तर्धूमं दहेत्। ततः सञ्चूर्ण्य क्षीरेण सह पिबेत। अन्ये तु—कपाले कृत्वा एवमेव दहेत् न पुनरन्तर्धूममित्याहुः; व्यवहारः पूर्वेणैव ॥ ३ ॥

तालपुष्पेत्यादि।—अत्राप्यन्तर्धूमक्षारः। सगुड़ इति—समगुड़ः। क्षारस्य च माषकचतुष्टयेन व्यवहारः ॥ ४ ॥

क्षारं वेत्यादि।—पूतिकस्य नाटाकरञ्जमूलस्य क्षारम्। अम्लनिःसुतमिति—अम्ले काञ्जिके निःसुतं सप्तधा परिस्रुतं पूतिकरञ्जक्षारं विड्लवणपिप्पलीचूर्णप्रक्षेपेण पिबेत्; वाग्भटेऽप्युक्तम्—"अम्लसुतं विड़कणा-चूर्णाढ्य नक्तमालजम्" (चि० १५ अ०) इति। वाग्भटटीकायामपि अम्लकाञ्जिकादिभिः परिस्रुतमिति व्याख्यातम्। सुश्रुतेऽपि—"अम्लसुतं पूतिकरञ्जक्षारं विड्लवणपिप्पलीप्रगाढ़ं पाययेत्" (चि० १४ अ०) इत्युक्तम्; तेन अम्बुनि जले निःसुतमित्यसदर्थ एव। वा-शब्दः पूर्वयोगापेक्षया ॥५॥

पातव्य इत्यादि।—उदधिशुक्तिः मुक्तास्फोटः। युक्तित इति वयोबलाद्यपेक्षया। पयसा वेत्यादि श्लोकार्द्धं वृन्दे पठ्यते, तद्दर्शनाच्चक्रसङ्ग्रहेऽपि केचित् पठन्ति,

भल्लातकादिमोदकः ।—

भल्लातकाभयाऽजाजी-गुडेन सह मोदकः ।
सप्तरात्रान्निहन्त्याशु प्लीहानमतिदारुणम् ॥ ७ ॥

शोभाञ्जनक्वाथः यवक्षारप्रयोगश्च ।—

शोभाञ्जननिर्य्यूहं सैन्धवाग्निकणान्वितम् ।
पलाशक्षारयुक्तं वा यवक्षारं प्रयोजयेत् ॥ ८ ॥

तिलकल्कं षट्पलघृतप्रयोगोपदेशः यकृच्चिकित्साऽतिदेशश्च ।—

तिलान् सलवणांश्चैव घृतं षट्पलकं तथा ।
प्लीहोद्दिष्टां क्रियां सर्वां यकृतः सम्प्रयोजयेत् ॥ ९ ॥

लशुनादियोगः ।—

लशुनं पिप्पलीमूलमभयाञ्चैव भक्षयेत् ।
पिबेद्गोमूत्रगण्डूषं प्लीहरोगविमुक्तये ॥ १० ॥

शरपुङ्खाया द्विविधप्रयोगः ।—

प्लीहजित् शरपुङ्खायाः कल्कस्तक्रेण सेवितः ।
शरपुङ्खं सञ्चूर्ण्य जग्धा पेयाभुजाऽथवा ॥ ११ ॥

---

किन्तु तन्त्रे पिप्पलीवर्द्धमानं न पठ्यते, तेन तत्र तत्पाठो युज्यत एव, इह तु चरके पिप्पलीवर्द्धमानं वक्ष्यतेऽति पयसा वेति श्लोकार्द्धमत्र न पठनीयमेवेति, अत एव निबन्धेनापि नोपन्यस्तमिति ॥ ६ ॥

भल्लातकेत्यादि ।—स्पष्टम् ॥ ७ ॥

शोभाञ्जनकेत्यादि—निर्य्यूहः क्वाथः । अग्निः चित्रकः । पलाशक्षारयुक्तं वेति—पलाशक्षारोदकयुक्तम्; उक्तं हि सुश्रुते—"स्नुतेन वा पलाशक्षारेण यवक्षारम्" (चि० १४ अ०) इति ॥ ८ ॥

तिलानित्यादि ।—तिलान् सलवणानिति—लवणतिला एव ससैन्धवा भक्ष्याः; अन्ये तु—तिलनालक्षारोदकं सलवणं पेयमित्याहुः; व्यवहारस्तु पूर्वेणैव । घृतं षट्पलकमिति ज्वरोक्तम् ॥ ९ ॥

लशुनमित्यादि—गोमूत्रगण्डूषेणानुपानम् ॥ १० ॥

प्लीहजिदित्यादि ।—शरपुङ्खाया इति—शरपुङ्खामूलस्य ॥ ११ ॥

शाङ्गेष्ठाक्षारः पक्वाम्रयोगश्च ।—

शाङ्गेष्ठानिर्यूह मसैन्धवस्तिन्तिड़ीकसम्मिश्रः ।
प्लीहघ्नस्त्वपरमयोगः पक्वाम्ररसोऽथवा समधुः ॥ १२ ॥

रोहीतकादिचूर्णम् ।—

रोहीतकाभयाक्षोद-भावितं मूत्रमम्बु वा ।
पीतं सर्वोदरप्लीह-मेहार्शःक्रिमिगुल्मनुत् ॥ १३ ॥

शिराविधः ।—

दध्ना भुक्तवतो वामबाहुमध्ये शिरां भिषक् ।
विध्येत् प्लीहविनाशाय यकृन्नाशाय दक्षिणे ॥
प्लीहानं मर्दयेद्गाढं दुष्टरक्तप्रवृत्तये ॥ १४ ॥

माणाद्यगुडिका ।—

माणमार्गामृतावासा-स्थिराचित्रकसैन्धवम् ।
नागरं तालकण्डञ्च प्रत्यग्रन्तु त्रिकार्षिकम् ॥ १५ ॥
विड्सौवर्चलक्षार-पिप्पल्यश्चापि कार्षिकाः ।
एतच्चूर्णीकृतं सर्वं गोमूत्रस्याढ़के पचेत् ॥ १६ ॥
सान्द्रीभूते गुड़ीं कुर्य्याद्दत्त्वा त्रिपलमाक्षिकम् ।
यकृत्प्लीहोदरहरो गुल्मार्शोग्रहणीहरः ॥
योगः परिकरो नाम्ना अग्निसन्दीपनः परः ॥ १७ ॥

---

शाङ्गेष्ठेत्यादि ।—शाङ्गेष्ठा काकजङ्घा गुञ्जा वा, तस्या मूलम् । तिन्तिड़ीकं अम्लाद्रकम् । पक्वाम्ररसः समधुः शाणतोलके ॥ १२ ॥

रोहीतकेत्यादि ।—क्षोदश्चूर्णम् । गोमूत्रं विरेकार्थम्, अम्बु तु शमनार्थमिति व्यवस्था ॥ १२ ॥

दध्नेत्यादि ।—दधिभोजनं शोणितोत्क्लेशनार्थम् । वामबाहुमध्ये इति—कूर्पर-सन्धेरधस्तात् । स्नेहस्वेदावप्यत्र कार्य्यौ, सुश्रुतसंवादात् । प्लीहानं मर्दयेदिति शिरायां विद्धायां, तेन प्लीह्नो दुष्टरक्तं निःसरति ॥ १४ ॥

माणेत्यादि ।—मार्गोऽपामार्गः । स्थिरा शालपर्णी । प्रत्यग्रमिति—अभिनवम् । त्रिकार्षिकमिति प्रत्येकम् । परिकरो नामेति—परिकरो विरेचककारकत्वात्

पिप्पल्यादिचूर्णम् ।—

पिप्पली नागरं दन्ती समांशं द्विगुणाभयम् ।
चूर्णं पीतं विडड़ांशं प्लीहघ्नमुष्णवारिणा ॥ १८ ॥

पिप्पलीवर्द्धमानम् ।—

क्रमवृद्ध्या दशाहानि दशपिप्पलिकं दिनम् ।
वर्द्धयेत् पयसा सार्द्धं तथैवापनयेत् पुनः ॥ १९ ॥
जीर्णे जीर्णे च भुञ्जीत षष्टिकं क्षीरसर्पिषा ।
पिप्पलीनां सहस्रस्य प्रयोगोऽयं रसायनः ॥ २० ॥
दशपैप्पलिकः श्रेष्ठो मध्यमः षट् प्रकीर्त्तितः ।
यस्त्रिपिप्पलिपर्य्यन्तः प्रयोगः सोऽवरः स्मृतः ॥ २१ ॥
बृंहणं वृष्यमायुष्यं प्लीहोदरविनाशनम् ।
वयसः स्थापनं मेध्यं पिप्पलीनां रसायनम् ॥
पञ्चपिप्पलिकश्चापि दृश्यते वर्द्धमानकः ॥ २२ ॥

---

परिकरो योगः; उक्तं हि—"भवेत् परिकरः कर्म्मे समारम्भविरेकयोः" इति ॥ १५—१७ ॥

पिप्पलीत्यादि ।—द्विगुणाभयम् इति—एकभागापेक्षया द्वैगुण्यम्, एवं विड्लवणस्याप्येकभागापेक्षयाऽर्द्धभागत्वं ज्ञेयम् ॥ १८ ॥

पिप्पलीवर्द्धमानमाह, क्रमेत्यादि ।—दश पिप्पल्यो यत्र वर्द्धन्ते तद्दिनं दशपिप्पलिकं, तेन दशपिप्पल्यः प्रत्यहं वर्द्धनीया इत्यर्थः, उक्तं हि—"दशभिर्दशभिः शम्यत् पिप्पलीभिस्तु वर्द्धयेत्" इति । अनयोनविंशतिदिनैर्वृद्धिह्रानिक्रमेण एकेनैव सहस्रं पूर्णं भवति । पयसा सार्द्धमित्यनेन पयसोऽपि वृद्धिरित्याहुः । पिप्पलीवर्द्धमानस्य त्रैविध्यमाह, दशपैप्पलिक इत्यादि । षट्प्रकीर्त्तित इति—षड्वृद्ध्या आचार्य्यैरुक्त इत्यर्थः । त्रिपिप्पलीपर्य्यन्त इति—तिस्रः पिप्पल्यः पर्य्यन्ते यस्य स तथा, तेन पिप्पलीत्रयेण यत्र वृद्धिः स प्रयोग उच्यते, तत्रैव प्रयोगसमाप्तौ पिप्पलीवयावस्थानम् । पञ्चभिः पञ्चभिः पिप्पलीभिर्वृद्धिरपि व्यवह्रियते इति प्रतिपादयितुं चक्रः स्ववचनमुपन्यस्यति—पञ्चपिप्पलिक इत्यादि; विदेहेऽप्युक्तं—"दशभिर्दशभिः शम्यत् पिप्पलीभिस्तु वर्द्धयेत् । पञ्चभिः

पिष्टास्ता वलिभिः पेयाः शृता मध्यजलेनरैः।
चूर्णीकृता कृतजलैर्देहदोषामयान् प्रति ॥ २३ ॥

पिप्पलीचित्रकघृतम्।—

पिप्पली चित्रकान्मूलं पिष्ट्वा सम्यग्विपाचयेत्।
घृतं चतुर्गुणक्षीरं यकृत्प्लीहोदरापहम् ॥ २४ ॥

पिप्पलीघृतम्।—

पिप्पलीकल्कसंयुक्तं घृतं क्षीरचतुर्गुणम्।
पिबेत् प्लीहाग्निसादादि-यकृद्रोगहरं परम् ॥ २५ ॥

चित्रकघृतम्।—

चित्रकस्य तुलाक्वाथे घृतप्रस्थं विपाचयेत्।
आरनालं तद्द्विगुणं दधिमण्ड चतुर्गुणम् ॥ २६ ॥
पञ्चकोलक-तालीश-क्षारैर्लवणसंयुतैः।
द्विजारकनिशायुग्मैर्मरिचं तत्र दापयेत् ॥ २७ ॥
प्लीहगुल्मोदराध्मान-पाण्डुरोगारुचिज्वरान्।
बस्तिहृत्पार्श्वकट्यूरु शूलोदावर्त्तपीनसान् ॥ २८ ॥
हन्यात् पीतं तदर्शोघ्नं शोथघ्नं वह्निदीपनम्।
बलवर्णकरञ्चापि भस्मकञ्च नियच्छति ॥ २९ ॥

---

चर्मामिवांऽपि प्रतादन्तरेन पुनः ॥" इति। केचित्तु—"चूर्णीकृताः" इत्यत्र "शीतीकृताः" इति पठित्वा शीतकषायीकृता इति व्याख्यानयन्ति ॥ १९—२३ ॥

पिप्पलीत्यादि।—अत्र पिप्पली च चित्रकश्चेति समासो न कार्यः, तथा सति पिप्पलीमूलस्यैव ग्रहणं स्यात्, तच्च न व्यवहारसिद्धम् ॥ २४ ॥

पिप्पलीत्यादि।—पिप्पलीघृतं स्पष्टम् ॥ २५ ॥

चित्रकस्येत्यादि।—चित्रकघृते तुलाक्वाथ इति षष्ठीतत्पुरुषः। आरनालं तद्द्विगुणमिति घृतापेक्षया; एवं दधिमण्डस्यापि चातुर्गुण्यम्। दधिमण्डः दधिमस्तु। क्षारः यवक्षारः। लवणं सैन्धवम्। अन्ये तु—क्षारः सर्जिक्षारः, लवणं पञ्चलवणमाहुः ॥ २६—२९ ॥

रोहीतकघृतम्।—

रोहीतकत्वचः श्रेष्ठाः पलानां पञ्चविंशतिः।
कोलद्विप्रस्थसंयुक्तं कषायमुपकल्पयेत् ॥ ३० ॥
पलिकैः पञ्चकोलैश्च तैः सर्वैश्चापि तुल्यया।
रोहीतकत्वचा पिष्टैर्घृतप्रस्थं विपाचयेत् ॥ ३१ ॥
प्लीहाऽभिवृद्धिं शमयेदेतदाशु प्रयोजितम्।
तथा गुल्मज्वरश्वास-क्रिमिपाण्डुत्वकामलाः ॥ ३२ ॥

महारोहीतकघृतम्।—

रोहीतकात् पलशतं क्षोदयेद्बदराढ़कम्।
साधयित्वा जलद्रोणे चतुर्भागावशेषिते ॥ ३३ ॥
घृतप्रस्थं समावाप्य छागक्षीरं चतुर्गुणम्।
तस्मिन् दद्यादिमान् कल्कान् सर्वांस्तानक्षसम्मितान् ॥३४॥
व्योषं फलत्रिकं हिङ्गु यमानीं तुम्बुरुं विड़म्।
अजाजीं कृष्णलवणं दाड़िमं देवदारु च ॥ ३५ ॥
पुनर्नवां विशालाञ्च यवक्षारं सपौष्करम्।
विड़ङ्गं चित्रकञ्चैव हवुषां चविकां वचाम् ॥ ३६ ॥

---

रोहीतकेत्यादि वाग्भटस्य।—श्रेष्ठा इत्यत्र कल्वेति वाग्भटे पठ्यते। रोहीतकः "रोहड़" इति ख्यातस्तरुः, तस्य पञ्चविंशतिपलैः कोलप्रस्थद्वयेन मिलित्वा सप्तपञ्चाशत्पलानि क्वाथ्यानि स्युः, तेष्वष्टगुणं जलमुत्सर्गसिद्धं देयं, पादशेषश्च कषायो द्विपलाधिकचतुर्दशशरावाः। वैद्यप्रसारके तु—षोड़शगुणं जलमुक्तम्। अन्ये तु—जलद्रोणं दत्त्वा शेषमाढ़कं कषायमित्याहुः। तैः सर्वैश्चापि तुल्ययेति—पञ्चकोलैस्तुल्यया, पञ्चपलमानया इत्यर्थः, रोहीतकत्वचा पिष्टयेति योज्यम् ॥३०—३२॥

रोहीतकादित्यादि।—महारोहीतकघृते बदरचूर्णस्य आढ़कं चतुःषष्टिपलानि। अत्र एकेनैव जलद्रोणेन बदरचूर्णाढ़कसहितस्य रोहीतकपलशतस्य क्वाथः करणीयः, तथैव निर्दिष्टत्वात्; तन्त्रान्तरेऽपि—"रोहीतकशतं क्षुण्णं कोलचूर्णाढ़कान्वितम्। निःक्वाथ्य सलिलद्रोणे चतुर्भागस्थिते रसे॥" इति। अन्ये तु—जलस्याल्पत्वमाशङ्क्य द्रोणपदमावृत्त्या रोहीतकपलशतानामत्यनेन तथा बदराढ़कमित्यनेन च प्रत्येकं

एतैर्घृतं विपक्वन्तु स्थापयेद्भाजने शुभे ।
पाययेत् त्रिपलां मात्रां व्याधिं बलमवेक्ष्य च ॥ ३७ ॥
रसकेनाथ यूषेण पयसा वाऽपि भोजयेत् ।
उपयुक्ते घृते तस्मिन् व्याधीन् हन्यादिमान् बहून् ॥ ३८ ॥
यकृत्प्लीहोदरञ्चैव प्लीहशूलं यकृत् तथा ।
कुक्षिशूलञ्च हृच्छूलं पार्श्वशूलमरोचकम् ॥ ३९ ॥
विबन्धशूलं शमयेत् पाण्डुरोगं सकामलम् ।
छर्द्यतीसारशमनं तन्द्राज्वरविनाशनम् ॥
महारोहीतकं नाम्ना प्लीहघ्नन्तु विशेषतः ॥ ४० ॥

वृहल्लोकनाथो रसः ।—

शुद्धसूतं द्विधा गन्धं खल्वे कुर्याच्च कज्जलीम् ।
सूततुल्यं जारिताभ्रं मर्द्दयेत् कन्यकाऽम्बुना ॥ ४१ ॥
गोलं कुर्य्यात् ततो लौहं ताम्रञ्च द्विगुणीकृतम् ।
काकमाचीरसैः पिष्टा गोलं ताभ्याञ्च वेष्टयेत् ॥ ४२ ॥
वराटिकाया भस्माथ रसतस्त्रिगुणं क्षिपेत् ।
ततश्च सम्पुटं कृत्वा मूषामध्ये प्रकल्पयेत् ॥ ४३ ॥
तन्मध्ये गोलकं कृत्वा शरावेण पिधापयेत् ।
पुटेद्गजपुटे विद्वान् स्वाङ्गशीतं समुद्धरेत् ॥ ४४ ॥
शिवं सम्पूज्य यत्नेन द्विजांश्च परितोषयेत् ।
खादेद्रक्तिद्वयं चूर्णं मूत्रञ्चापि पिबेदनु ॥ ४५ ॥
मधुना पिप्पलीचूर्णं सगुडां वा हरीतकीम् ।
अजाजीं वा गुडेनैव भक्षयेदनुपानतः ॥ ४६ ॥
यकृद्गुल्मोदरप्लीह-श्वयथुज्वरनाशनः ।

योज्यम्; एतेनैकेन जलद्रोणेन रोहीतकपलशतस्य क्वाथः, अपरैश्च बदरादकस्य

वह्निमान्द्यप्रशमनं सर्वान् व्याधीन् नियच्छति ॥ ४७ ॥

इति शोष-यक्ष्मचिकित्सा।

---

# अथ शोथ-चिकित्सा।

वातशोथे शुण्ठ्यादिः।—

शुण्ठीपुनर्नवैरण्ड पञ्चमूलशृतं जलम्।
वातिके श्वयथौ शस्तं पानाहारपरिग्रहे ॥ १ ॥

वातशोथे दशमूलम्।—

दशमूलं सर्वथा च वातशोथे विशेषतः ॥ २ ॥

पित्तशोथे त्रिवृदादिः त्रिफलाचूर्णञ्च।—

क्षीराशनः पित्तकृतेऽथ शोथे त्रिवृद्गुडूचीत्रिफलाकषायम्।
पिबेत् गवां मूत्रविमिश्रितं वा फलत्रिकाच्चूर्णमथाक्षमात्रम् ॥३॥

पित्तशोथे पृश्निपर्ण्यादिः।—

पृश्निपर्णीवनोदीच्य-शुण्ठीसिद्धन्तु पैत्तिके ॥ ४ ॥

पित्तशोथे अभयादिः।—

अभया दारु मधुकं तिक्ता दन्ती सपिप्पली।
पटोलं चन्दनं दार्वी त्रायमाणेन्द्रवारुणी ॥ ५ ॥

---

च क्वाथ इत्याहुः, व्यवहारोऽप्यनेनैव। कणालवणं सौवर्चलम्, आयुर्वेदसारे कृष्णपाठादिति ॥ ३३—४७ ॥

इति श्रीशिवदासेन-विरचितायां तत्त्वचन्द्रिकायां शोष-यक्ष्मचिकित्सा-विवृतिः।

---

उत्सवमाधव्योरनन्तरं शोथचिकित्सामाह, शुण्ठीत्यादि।—पञ्चमूलं महत् पञ्चमूलं, वृद्धव्यवहारात्। पानाहारपरिग्रहे इति—अन्नपानसंस्कारे ॥ १ ॥

दशमूलमित्यादि।—सर्वथेति—कल्ककषायादिविधया ॥ २ ॥

क्षीरेत्यादि।—योगद्वयं, तत्र गवामित्यादि द्वितीयो योगः ॥ ३।४ ॥

एषां क्वाथः ससर्पिष्कः श्वयथुज्वरदाहहा ।
वीसर्पतृष्णासन्ताप-सन्निपातविषापहः ॥ ६ ॥

पित्तशोथे शीतक्रिया ।—

शीतवीर्य्यैर्हिमजलैरभ्यङ्गादींश्च कारयेत् ॥ ७ ॥

कफशोथे पुनर्नवादिकल्कक्वाथौ ।—

पुनर्नवाविश्वत्रिवृद्गुडूची-सम्पाकपथ्याऽमरदारुकल्कम् ।
शोथे कफोत्थे महिषाक्षयुक्तं मूत्रं पिबेद्वा सलिलं तथैषाम् ॥ ८ ॥

कफशोथे कृष्णादिलेपः कुलत्थादिपरिषेकः चण्ड्याद्यनुलेपनञ्च ।—

कफे तु कृष्णासिकतापुराण-पिण्याकशिग्रुत्वगुमाप्रलेपः ।
कुलत्थशुण्ठीजलमूत्रसेकश्चण्डाऽगुरुभ्यामनुलेपनञ्च ॥ ९ ॥

त्रिदोषशोथे अजाज्यादि भूनिम्बादि चूर्णद्वयम् ।—

अजाजिपाठाघनपञ्चकोल-व्याघ्रीरजन्यः सुखतोयपीताः ।
शोथं त्रिदोषं चिरजं प्रवृद्धं निघ्नन्ति भूनिम्बमहौषधे च ॥ १० ॥

---

अभयेत्यादि ।—अत्र सर्पिः प्रक्षेप्यम् ॥ ५।६ ॥

शीतवीर्य्यैरित्यादि ।—शीतवीर्य्याः काकोल्यादिसारिवाद्युत्पलादिगणाः, तत्कृतैः स्नेहादिभिरभ्यङ्गादीन् कारयेत् । हिमजलैरिति—शीतलजलैः ॥ ७ ॥

श्लेष्मशोथचिकित्सामाह, पुनर्नवेत्यादि ।—पुनर्नवादीनां कल्कं गुग्गुलुयुक्तं गोमूत्रेण पिबेत् । पिबेद्वा सलिलं तथैषामिति—एषां पुनर्नवादीनां क्वाथं वा गुग्गुलुगोमूत्रे प्रक्षिप्य पिबेदिति । महिषाक्षः गुग्गुलुः ॥ ८ ॥

कफे त्वित्यादि ।—सिकता वालुका । पुराणपिण्याकः पुराणसर्षपखलिः । उमा अतसी । एभिर्मूत्रपिष्टैर्लेपः; उक्तञ्च वाग्भटे—"कृष्णापुराणपिण्याक-शिग्रुत्वक्-सिकताऽतसीः । प्रलेपनार्थं युञ्ज्यात् सुखोष्णा मूत्रकल्किताः ॥" (चि० १७ अ०) इति । कुलत्थशुण्ठीक्वाथेन तथा गोमूत्रेण च कुलत्थशुण्ठीसिद्धेन सेकः कार्य्यः; उक्तं हि वाग्भटे—"स्नानं मूत्राम्भसि सिद्धे कुष्ठतर्कारिचित्रकैः । कुलत्थनागराभ्यां वा" (चि० १७ अ०) इति । चण्डा चोरपुष्पी । अनुलेपनं स्नानानन्तरमेव लेपनमिति चक्रः ॥ ९ ॥

अजाजीत्यादि वाग्भटस्य ।—एषां चूर्णमुष्णोदकेन पेयम्; एवं भूनिम्बमहौषधयोरपि । यद्यपि चरकेऽस्मिन् योगे चविकास्थाने गजपिप्पली पठ्यते,

पुनर्नवाष्टकः।—

पुनर्नवानिम्बपटोलशुण्ठी-तिक्ताऽमृतादार्वभयाकषायः।
सर्वाङ्गशोथोदरकासशूल-श्वासान्वितं पाण्डुगदं निहन्ति॥ ११॥

गुड़ार्द्रकम्।—

आर्द्रकस्य रसः पीतः पुराणगुड़मिश्रितः।
अजाक्षीराशिनां शीघ्रं सर्वशोथहरो भवेत्॥ १२॥

गुग्गुलोस्त्रिविधप्रयोगः।—

पुनर्नवादारुशुण्ठी-क्वाथे मूत्रे च केवले।
दशमूलरसे वाऽपि गुग्गुलुः शोथनाशनः॥ १३॥

बिल्वपत्रप्रयोगः।—

बिल्वपत्ररसं पूतं सोषणं श्वयथौ त्रिजे।
विट्सङ्गे चैव दुर्नाम्नि विदध्यात् कामलास्वपि॥ १४॥

गुड़ादिचूर्णम्।—

गुड़पिप्पलिशुण्ठीनां चूर्णं श्वयथुनाशनम्।
आमाजीर्णप्रशमनं शूलघ्नं वस्तिशोधनम्॥ १५॥

---

तथाऽपि अत्र चविकैव ग्राह्या, गजपिप्पलीशब्देन चविकाया अप्यभिधानात्; यदुक्तं निघण्टौ—"चविका कोलवल्ली च हस्तिपिप्पल्यपीष्यते" इति। जतूकर्णादावपि चविकैव पठ्यते, तस्मात् चव्येव युक्ता। एतेन—"पिप्पल्यादिगणे नाम्ना चरके पठ्यते त्वयम्। योगेऽत्र चविकास्थाने ग्राह्या मातङ्गपिप्पली॥" इति वृन्दोक्तमतमपास्तम्। ननु चरके त्रिदोषजशोथस्यासाध्यत्वेनोक्तत्वात् कथं त्रिदोषजं शोथं हन्तीत्युक्तम्? नैवम्; चरके क्षीणमांसस्येत्यादिना ह्यनेकदोषस्य तथा नवस्य च सुखसाध्यत्वाभिधानेन द्विदोषज-त्रिदोषजशोथयोः चिरजस्य च कृच्छ्रसाध्यत्वमेवोक्तं, न पुनरसाध्यत्वमिति॥ १०॥

पुनर्नवेत्यादि।—तिक्ता कटुकी। दारु देवदारु। वृन्दे त्वयं योगः शोथोदरे पठ्यते॥ ११—१३॥

बिल्वपत्रेत्यादि।—सोषणमिति—समरिचम्॥ १४॥

गुड़ेत्यादि।—गुड़ः एकभागसमः॥ १५॥

गुग्गुल्वादिप्रयोगचतुष्टयम् ।—

पुरो मूत्रेण सेव्येत पिप्पली वा पयोऽन्विता ।
गुड़ेन वाऽभया तुल्या विश्वं वा शोथरोगिणाम् ॥ १६ ॥

गुडार्द्रकादिप्रयोगचतुष्टयम् ।—

गुड़ार्द्रकं वा गुड़नागरं वा गुड़ाभयां वा गुड़पिप्पलीं वा ।
कर्षाभिवृद्ध्या त्रिपलप्रमाणं खादेन्नरः पक्षमथापि मासम् ॥ १७ ॥
शोथप्रतिश्यायगलास्यरोगान्
सश्वासकासारुचिपीनसादीन् ।
जीर्णज्वरार्शोग्रहणीविकारान्
हन्यात् तथाऽन्यान् कफवातरोगान् ॥ १८ ॥

स्थलपद्मप्रयोगः ।—

स्थलपद्ममयं कल्कं पयसाऽऽलोड्य पाययेत् ।
शोथामयहरश्चैव सर्वाङ्गैकाङ्गशोथजित् ॥ १९ ॥

---

पुर इत्यादि ।—पुरः गुग्गुलुः । पिप्पली वा पयोऽन्वितेति—पिप्पलीवर्द्धमानन्यायेन इतरकल्कवर्ज्जा पिप्पलीकल्कः पयसा सेव्यः । विश्वं वेत्यत्रापि गुड़ेन तुल्यमिति योज्यम् ॥ १६ ॥

गुड़ार्द्रकं वेत्यादि ।—गुड़ार्द्रकादयश्चत्वारो योगाः । एते तुल्यभागाः सन्तः प्रतिदिनं मिलित्वा कर्षेण कर्षेण वर्द्धयितव्याः, एवं द्वादशभिर्दिनैस्त्रिपलं पूर्य्यते, ततस्त्रिपलं कृत्वा प्रत्यहं पक्षं मासं वा यावत् खादेत् ; किंवा प्रथमदिने कर्षमेकं खादेत्, ततः कतिचिद्दिनानि कर्षस्यैवाभ्यासः, ततः परमपरकर्षं वर्द्धयेत्, तस्यापि पुनरभ्यासः, एवं कर्षेण कर्षेणाभिवृद्ध्या यथा पक्षेण मासेन वा त्रिपलं भवति तथा कार्य्यम् ; अन्ये तु ब्रुवते—पक्षपरोऽप्यथापिशब्दो मासमित्यनन्तरं ज्ञेयः, स च अपिशब्दः समुच्चयार्थः, तेन पक्षं मासञ्च व्याप्य सार्द्धं मासं व्याप्येत्यर्थः ; सार्द्धमासेन च त्रिपलं कर्षोऽर्योगात् प्रभृति प्रत्यहं माषचतुष्टयाधिकविधिना भवति ; अस्मिन् व्याख्याने कर्षादारभ्य माषकचतुष्टयमेव, वृद्धिर्नाधिका ; व्यवहारोऽपीत्थमेव ॥ १७।१८ ॥

स्थलपद्ममयं कल्कमित्यादि ।—स्थलपद्मं माणकन्दः, स च पुराणो ग्राह्यः । कल्कमिति—चूर्णम् ॥ १९ ॥

दार्व्वादि-वर्षाभ्वादिकल्कौ ।—

दारुगुग्गुलुशुण्ठीनां कल्को मूत्रेण शोथजित् ।
वर्षाभूशृङ्गवेराभ्यां कल्को वा सर्व्वशोथजित् ॥ २० ॥

सिंहास्यादिः ।—

सिंहास्यामृतभण्टाकी-क्वाथं कृत्वा समाक्षिकम् ।
पीत्वा शोथं जयेज्जन्तुः कासं श्वासं ज्वरं वमिम् ॥ २१ ॥

भूनिम्बादिकल्कः ।—

भूनिम्बविश्वकल्कं जग्ध्वा पेयः पुनर्नवाक्वाथः ।
अपहरति नियतमाशु शोथं सर्व्वाङ्गगं नृणाम् ॥ २२ ॥

कोकिलाक्षप्रयोगः ।—

शोथनुत् कोकिलाक्षस्य भस्म मूत्रेण वाऽम्भसा ॥ २३ ॥

दार्व्वादि-चित्रकादिक्षीरद्वयम् ।—

क्षीरं शोथहरं दारु-वर्षाभूनागरैः शृतम् ।
पेयं वा चित्रकव्योष-त्रिवृद्दारुप्रसाधितम् ॥ २४ ॥

रसादिसाधने पुनर्नवादिः ।—

पुनर्नवामूलकपित्थदारु-च्छिन्नोद्भवाचित्रकमूलसिद्धाः ।
रसा यवाग्वश्च पयांसि यूषाः शोथे प्रदेया दशमूलगर्भाः ॥ २५ ॥

---

दार्व्वित्यादि ।—दार्व्वित्यादौ वर्षाभ्वित्यादौ च योगे गोमूत्रेणैव पानं ज्ञेयम् ॥२०॥

सिंहास्येत्यादि ।—सिंहास्यं वासकमूलम् । भण्टाकी कण्टकारी ॥ २१ ॥

भूनिम्बेत्यादि ।—पेयः पुनर्नवाक्वाथ इत्यनुपानमिदम् । एतच्च पुनर्नवामूलकर्षं निःक्वाथ्य कार्य्यम्, अतोऽधिकमात्रया तु करणे भूरिभेषजत्वेनाग्निवधादिदोषः स्यादिति भावः । एवं सर्व्वत्र क्वाथेनानुपानं ज्ञेयम् ॥ २२ ॥

शोथनुदित्यादि ।—शोथनुदित्यादि भस्मेत्यन्त एको योगः, मूत्रेण कफे, अम्भसेति पित्ते ॥ २३ ॥

क्षीरमित्यादि ।—क्षीरमित्यादि शृतमित्यन्तो द्वितीयः । चित्रकेत्यादिस्तृतीयः, अत्रापि क्षीरमिति योज्यम् ॥ २४ ॥

पुनर्नवेत्यादि ।—कपित्थस्य फलम् । पुनर्नवादीनामर्द्धशृतं कृत्वा दशमूलस्यानुरूपं कल्कं दत्त्वा रसादयः साध्या इत्यर्थः ॥ २५ ॥

क्षारादिगुडिका ।—

क्षारद्वयं स्याल्लवणानि चत्वार्य्ययोरजो व्योषफलत्रिके च ।
सपिप्पलीमूलविड़ङ्गसारं मुस्ताऽजमोदाऽमरदारुविल्वम् ॥२६॥
कलिङ्गकश्चित्रकमूलपाठे यष्ट्याह्वयं सातिविषं पलांशम् ।
सहिङ्गुकर्षं त्वणुशुष्कचूर्णं द्रोणं तथा मूलकशुण्ठकानाम् ॥२७॥
स्याद्भस्मनस्तत्सलिलेन साध्यमालोड्य यावद्घनमप्यदग्धम् ।

स्यानं ततः कोलसमाञ्च मात्रां
कृत्वा सुशुष्कां विधिना प्रयुञ्ज्यात् ॥ २८ ॥
प्लीहोदरश्वित्रहलीमकार्शः-
पाण्ड्वामयारोचकशोथशोषान् ।
विसूचिकागुल्मगराश्मरीश्च
सश्वासकासान् प्रणुदेत् सकुष्ठान् ॥ २९ ॥
सौवर्चलं सैन्धवञ्च विड़मौद्भिदमेव च ।
चतुर्लवणमत्र स्याज्जलमष्टगुणं भवेत् ॥ ३० ॥

पुनर्नवाद्यं घृतम् ।—

पुनर्नवाचित्रकदेवदारु-पञ्चोषणक्षारहरीतकीनाम् ।
कल्केन पक्वं दशमूलतोये घृतोत्तमं शोथनिसूदनञ्च ॥ ३१ ॥

स्वल्पपुनर्नवाघृतम् ।—

पुनर्नवाक्वाथकल्क-सिद्धं शोथहरं घृतम् ॥ ३२ ॥

---

क्षारद्वयमित्यादि ।—क्षारद्वयं यवक्षारसर्जिकाक्षारौ । लवणानि चत्वारीति सामुद्रवर्जितानि । अयोरजः लौहचूर्णं मारितपुटितं ग्राह्यम् । पलांशमिति प्रत्येकम् । अणुशुष्कचूर्णमिति—शुष्कसूक्ष्मचूर्णमित्यर्थः । तत्सलिलेनेति—क्षारसलिलेन, क्षारद्वयादिचूर्णापेक्षया चतुर्गुणेन, अन्ये त्वष्टगुणेत्याहुः । अत्र मूलकभस्मद्रोणे षड्द्रोणं चतुर्द्रोणं वा जलं दत्त्वा त्रिभागावशिष्टमर्द्धभागावशिष्टं वा कार्य्यं, ततः परिस्राव्य, ततः क्षारद्वयादिचूर्णापेक्षया चतुर्गुणं क्षारजलं गृहीत्वा पक्तव्यं, पाकाच्च घनीभावे जाते क्षारद्वयादिचूर्णप्रक्षेप इत्याहुः ॥ २६—३० ॥

पुनर्नवेत्यादि ।—पञ्चोषणं पञ्चकोलम् ॥ ३१।३२ ॥

पञ्चकोलाद्यं घृतम्।—

रसे विपाचयेत् सर्पिः पञ्चकोलकुलत्थयोः ।
पुनर्नवायाः कल्केन घृतं शोथविनाशनम् ॥ २३ ॥

शुण्ठीघृतम्।—

विश्वौषधस्य कल्केन दशमूलजले शृतम् ।
घृतं निहन्याच्छ्वयथुं ग्रहणीं पाण्डुताऽऽमयम् ॥ २४ ॥

चित्रकाद्यं घृतम्।—

सचित्रका धान्ययमानिपाठाः सदीप्यकत्र्यूषणवेतसाम्लाः ।
बिल्वात् फलं दाडिमयावशूकं सपिप्पलीमूलमथापि चव्यम् ॥२५॥
पिष्ट्वाऽक्षमात्राणि जलाढकेन पक्त्वा घृतप्रस्थमथो रुजार्त्तः ।
अर्शांसि गुल्मं श्वयथुं च कृच्छ्रं निहन्ति वह्निं च करोति दीप्तम् ॥२६॥

चित्रकघृतम्।—

क्षीरं घटे चित्रककल्कलिप्ते दध्यागतं साधु विमथ्य तेन ।
तज्जं घृतं चित्रकमूलकल्कं तक्रेण सिद्धं श्वयथुघ्नमग्र्यम् ॥ २७ ॥
अर्शोऽतिसारानिलगुल्ममेहांस्तद्धन्ति संवर्द्धयते च वह्निम् ॥ २८ ॥

माणकघृतम्।—

माणकक्काथकल्काभ्यां घृतप्रस्थं विपाचयेत् ।

---

रसे इत्यादि।—रसे क्वाथे इत्यर्थः। पञ्चकोलकुलत्थयोरिति द्विवचननिर्देशात् पञ्चकोलस्य मिलित्वा एको भागः, अपरश्च कुलत्थस्येति वदन्ति ॥ २३ ॥

विश्वौषधस्येत्यादि।—पाण्डुताऽऽमयमिति—पाण्डुरोगम् ॥ २४ ॥

सचित्रका इत्यादि।—दीप्यकं जीरकमिति निश्चलः, तन्न, "यवानकं यवक्षारं यमानीं पञ्चकोलकम्" (चि० १७ अ०) इति वाग्भटवचनविरोधात्। तस्मात् दीप्यकम् अजमोदा। वेतसाम्लः अम्लवेतसः। बिल्वात् फलमित्यत्र बिल्वात् पलमिति न पाठः, वाग्भटे "बालबिल्वञ्च कर्षांशम्" (चि० १७ अ०) इत्युक्तत्वात् ॥ २५।२६ ॥

क्षीरमित्यादि।—दध्यागतमिति—दधिभावेन परिणतम्। तेनेति—यथोक्तदधिमथनजातेन, तक्रेणेत्यन्वयः। तज्जं घृतमिति—यथोक्तदधिभवं घृतमिति ॥ २७।२८ ॥

माणकेत्यादि।—माणकघृते माणकक्वाथार्थमष्टगुणं जलं देयं, न तु चतुर्गुण-

एकजं द्वन्द्वजं शोथं त्रिदोषञ्च व्यपोहति ॥ ३९ ॥

स्थलपद्मघृतम्।—

स्थलपद्मपलान्यष्टौ त्र्यूषणस्य चतुःपलम्।
घृतप्रस्थं पचेदेभिः क्षीरं दत्त्वा चतुर्गुणम् ॥
पञ्च कासान् हरेच्छीघ्रं शोथञ्चैव सुदुस्तरम् ॥ ४० ॥

शैलेयाद्यं तैलं प्रलेपश्च।—

शैलेयकुष्ठागुरुदारुकौन्ती-त्वक्पद्मकैलाऽम्बुपलाशमुस्तैः।
प्रियङ्गुथौणेयकहेममांसी-तालीशपत्रप्लवपत्रधान्यैः ॥ ४१ ॥
श्रीवेष्टकध्यामकपिप्पलीभिः पृक्कानखैश्चापि यथोपलाभम्।
वाताान्वितेऽभ्यङ्गमुशन्ति तैलं सिद्धं सुपिष्टैरपि च प्रदेहम् ॥४२॥

शुष्कमूलकाद्यं तैलम्।—

शुष्कमूलकवर्षाभू-दारुरास्नामहौषधैः।
पक्वमभ्यञ्जनात् तैलं समूलं श्वयथुं जयेत् ॥ ४३ ॥

पुनर्नवाऽवलेहः।—

पुनर्नवाऽमृतादारु-दशमूलरसाढके।
आर्द्रकस्वरसप्रस्थे गुडस्य तु तुलां पचेत् ॥ ४४ ॥

---

चतुर्गुणं, तथा सति यवागूवत् क्वाथः स्यादिति, अन्ये तु—तन्त्रान्तरदर्शनात् माणककन्दस्य पलशतं तोयद्रोणे पक्त्वा गृह्णन्ति, व्यवहारस्तु पूर्वेणैव। माणकन्दञ्च आर्द्रमेव गृह्णन्ति वृद्धाः ॥ ३९ ॥

स्थलपद्मपलानीत्यादि।—स्थलपद्मघृते स्थलपद्मं माणकन्दमेव। त्र्यूषणस्य च मिलित्वा चतुःपलम् ॥ ४० ॥

शैलेयेत्यादि।—कौन्ती रेणुका। पलाशः शटी। थौणेयकं ग्रन्थिपर्णम्; क्रान्तत्वादव सकारलोपः। हेम नागकेशरम्। प्लवः कैवर्त्तमुस्तकम्। श्रीवेष्टकः नवनीतखोटी। ध्यामकं गन्धतृणम्, एषां कल्कः, जलं चतुर्गुणमर्थात्। यथोपलाभमिति—यथालाभम्। तैलं सिद्धं सुपिष्टैरिति—शैलेयादिभिः सुपिष्टैस्तैलं सिद्धमुशन्ति, तथा तैरेव सुपिष्टैः प्रदेहं चोशन्ति कथयन्ति इच्छन्ति वा ॥ ४१—४२ ॥

पुनर्नवेत्यादि।—पुनर्नवादीनां दशमूलान्तानां मिलित्वा चतुःषष्टिपलानि,

तत् सिद्धं व्योषपत्रैला-त्वक्‌चयैः कार्षिकैः पृथक्।
चूर्णीकृतैः क्षिपेच्छीते मधुनः कुड़वं लिहेत्॥ ४५॥
लेहः पौनर्नवो नाम शोथशूलनिसूदनः।
श्वासकासारुचिहरो बलवर्णाग्निवर्द्धनः॥ ४६॥

दशमूलहरीतकी।—

दशमूलकषायस्य कंसे पथ्याशतं पचेत्।
तुलां गुड़ाद्दत्त्वा दद्याद्व्योषक्षारं चतुःपलम्॥ ४७॥
त्रिसुगन्धं सुवर्णांशं प्रस्थार्द्धं मधुनो हिमे।
दशमूलहरीतक्यः शोथान् हन्युः सुदारुणान्॥ ४८॥
ज्वरारोचकगुल्मार्शो-मेहपाण्डूदरामयान्।
प्रत्येकमेव कर्षांशं त्रिसुगन्धमितो भवेत्॥ ४९॥
कंसहरीतकी चैषा चरके पठ्यतेऽन्यथा।
एतन्मानेन तुल्यत्वं तेन तत्रापि वर्ण्यते॥ ५०॥

---

जलस्य चतुःषष्टिशरावाः, शेषस्तु आढ़कः। व्योषेत्यादौ चयार्थे उपलक्षणे वा तृतीया। मधुनः कुड़वमष्टौ पलानि। शूलशोथनिसूदन इति पाठान्तरम्। आयुर्वेदसारे तु "कफशोथविनाशनः" इत्युक्तम्॥ ४४—४६॥

दशमूलेत्यादि।—कंसे इति—आढ़के। अत्र कषायस्य कंसमानतानिर्देशेन अनुक्तमपि क्वाथ्यजलयोर्मानमुन्नीयते, यतः क्वाथः कंसश्चतुःषष्टिपले क्वाथ्ये जलद्रोणदानाच्चतुर्भागावशेषे सति भवति। पथ्याशतमाकृतिमानात्। व्योषक्षारं चतुःपलमिति मिलित्वा, निर्देशस्य मानप्रधानत्वात्। त्रिसुगन्धन्तु प्रत्येकं सुवर्णांशं कर्षांशं, निर्देशस्य द्रव्यप्रधानत्वात्। प्रस्थार्द्धं मधुन इति—षोड़श पलानि। एतद्योगोक्तमानसंवादात् चरकोक्तकंसहरीतक्यामपि प्रक्षेप्यद्रव्यमानं कल्पनीयमित्याह, प्रत्येकमित्यादि। इत इति एतन्मानेन, अतेत्यर्थः। चरके पठ्यतेऽन्यथेति एतेन पाठभेदः परं न तु योगभेद इत्यर्थः; एतेन मानभेदात् योगभेद इति चन्द्रोक्तमपास्तम्॥ ४७—५०॥

कंसहरीतकी।—

द्विपञ्चमूलस्य पचेत् कषाये कंसेऽभयानाञ्च शतं गुडाच्च।
लेहे सुसिद्धे च विनीय चूर्णं व्योषं त्रिसौगन्ध्यमुपस्थिते च ॥५१॥
प्रस्थार्द्धमात्रं मधुनः सुशीते किञ्चिच्च चूर्णादपि यावशूकात्।
एकाभयां प्राश्य ततश्च लेहाच्छुक्तिं निहन्ति श्वयथुं प्रवृद्धम् ॥५२॥
कासज्वरारोचकमेहगुल्मान् प्लीहत्रिदोषोदरपाण्डुरोगान्।
कार्श्यामवातावसृगम्लपित्तं वैवर्ण्यमूत्रानिलशुक्रदोषान् ॥५३॥
अत्र व्याख्यान्तरं नोक्तं व्याख्या पूर्वैव यच्छुभा ॥ ५४ ॥

भल्लातकशोथे तिलादिलेपद्वयम्।—

लेपोऽरुष्करशोथं निहन्ति तिलदुग्धमधुकनवनीतैः।
तत्तरुतलमृद्भिर्वा शालदलैर्नश्यत्यचिरेण ॥ ५५ ॥

विषजशोथे विषचिकित्साऽतिदेशः।—

शोथे विषनिमित्ते तु विषोक्ता सम्मता क्रिया ॥ ५६ ॥

अपथ्यानि।—

ग्राम्याब्जानूपं पिशित-लवणं शुष्कशाकं नवान्नं
गौड़ं पिष्टान्नं दधि सकृशरं विज्जलं मद्यमम्लम्।

---

चरके पठ्यतेऽन्यथेत्युक्तम्, अतस्तमेव पाठभेदं दर्शयितुं चरकोक्तकंसहरीतकीमाह, द्विपञ्चमूलस्येत्यादि।—लेहात् शुक्तिमिति—अर्द्धपलं प्राश्येति योज्यम्। व्योषत्रिसुगन्धयोर्यद्यप्यत्र मानं नोक्तं, तथाऽपि पूर्वोक्तदशमूलहरीतकयुक्तव्याख्यानुसारेणात्रापि कल्पनीयम्; एवं यवक्षारस्यापि। किञ्चिच्छब्दोऽत्राप्यल्पवचनः, तेन व्योषक्षारयोर्मिलित्वा चतुःपलग्रहणेऽपि व्योषभागापेक्षया यवक्षारस्य किञ्चिन्न्यूनता कल्पनीयेत्यर्थः। तदस्याह—"किञ्चिच्च कर्षपर्य्यायः शुक्तिरर्द्धपलं तथा। सान्निध्यान्मधुनो मानं व्योषादेर्मिलितस्य च॥" इति ॥ ५१—५४ ॥

लेप इत्यादि।—योगद्वयम् ॥ ५५।५६ ॥

ग्राम्येत्यादि।—पिशितञ्च लवणञ्चेति समाहारः, तस्य विशेषणं ग्राम्याब्जानूपमिति; अत्र छागादिमांसं ग्राम्यम्; लवणञ्च यत् पाकेनाभिनिर्वृत्तं तत् ग्राम्यम्।

धाना वल्लूरं समशनमथो गुर्वसात्म्यं विदाहि
स्वप्नञ्चारात्रौ श्वयथुगदवान् वर्जयेन्मैथुनञ्च ॥ ५७ ॥

इति शोथ-चिकित्सा।

---

## अथ वृद्धि-ब्रध्न-चिकित्सा।

वातवृद्धौ गुग्गुल्वेरण्डतैलप्रयोगौ।—

गुग्गुलुं रुवुतैलं वा गोमूत्रेण पिबेन्नरः।
वातवृद्धिं निहन्त्याशु चिरकालानुबन्धिनीम् ॥ १ ॥

वातवृद्धौ एरण्डतैलप्रयोगः।—

सक्षीरं वा पिबेत् तैलं मासमेरण्डसम्भवम् ॥ २ ॥

वातवृद्धौ तैलप्रयोगाः।—

पुनर्नवायास्तैलं वा तैलं नारायणं तथा।
पाने वस्तौ रुवोस्तैलं पेयं वा दशकाम्भसा ॥ ३ ॥

---

अजं कच्छपादिमांसम्; लवणञ्च सामुद्रं, करकचेति ख्यातं, तदव्जम्। आनूपं शूकरादिमांसम्; लवणञ्च समुद्रतीरजं साम्बरीति ख्यातं, तदप्यानूपम्। गौड़ं गुड़विकारम्। धाना अङ्कुरितभृष्टयवाः। वल्लूरं शुष्कमांसम्। समशनं पथ्यापथ्ययोरेव भोजनम्। अरात्राविति—दिने ॥ ५७ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां शोथ-चिकित्सा-विवृतिः।

---

पूर्वोक्तसङ्गत्यैव शोथानन्तरं वृद्धिब्रध्नचिकित्सितमुच्यते, गुग्गुलुमित्यादि।—वृद्धिः कुरण्डः। गोमूत्रपलद्वये एरण्डतैलदिष्टगुग्गुलुमाषकाष्टकं प्रक्षिप्य पेयम्; तथा गोमूत्रपलद्वये एरण्डतैलकर्षमेकं प्रक्षिप्य पिबेत्; इमौ योगौ क्रमात् कफानुबन्धे वाते च योज्यावित्याहुः ॥ १ ॥

सक्षीरमित्यादि सुश्रुतस्य।—गव्यदुग्ध पल २, एरण्डतैल कर्ष १; अयं योगः पित्तानुबन्धे इत्याहुः ॥ २ ॥

पुनर्नवाया इत्यादि।—पुनर्नवातैलन्तु पुनर्नवाक्वाथकल्काभ्यां साध्यमित्याहुः।

पित्तवृद्धौ चन्दनादिलेपः।—

चन्दनं मधुकं पद्ममुशीरं नीलमुत्पलम्।
क्षीरपिष्टैः प्रदेहः स्याद्दाहशोथरुजापहः॥ ४॥

पित्तज-रक्तजवृद्ध्योः पञ्चवल्कलप्रलेपः रक्तमोक्षणोपदेशश्च।—

पञ्चवल्कलकल्केन सघृतेन प्रलेपनम्।
सर्वं पित्तहरं कार्य्यं, रक्तजे रक्तमोक्षणम्॥ ५॥

श्लेष्मवृद्धौ उष्णवीर्य्यद्रव्यप्रलेपः देवदारुक्काथश्च।—

श्लेष्मवृद्धिन्तूष्णवीर्य्यैर्मूत्रपिष्टैः प्रलेपयेत्।
पीतदारुकषायञ्च पिबेद्वा मूत्रसंयुतम्॥ ६॥

मेदोवृद्धौ सुरसादिलेपः पिप्पल्यादिलेपश्च।—

स्विन्नं मेदःसमुत्थन्तु लेपयेत् सुरसादिना।
शिरोविरेकद्रव्यैर्वा सुखोष्णैर्मूत्रसंयुतैः॥ ७॥

मूत्रवृद्धौ शिरावेधविधिः।—

संस्वेद्य मूत्रप्रभवां वस्त्रपट्टेन वेष्टयेत्।

---

पाने वक्ताविति पूर्वेण सह सम्बध्यते। क्षवीतैलम् एरण्डतैलं दशकस्य दशमूलस्य क्वाथेन पेयमिति॥ ३॥

पैत्तिकवृद्धिमपजमाह, चन्दनमित्यादि।—पद्मं पद्मकेशरम्॥ ४॥

पञ्चवल्कलेत्यादि।—रक्तजे रक्तमोक्षणमिति—अपक्वायां रक्तजवृद्धौ जलौकाभिः रक्तमोक्षणं कार्य्यं, सुश्रुतसंवादात्॥ ५॥

श्लेष्मवृद्धिमित्यादि।—उष्णवीर्य्यैरिति—अजगन्धादिभिः सुश्रुतोक्तैः। पीतदारु देवदारु, गोमूत्रेणैव देवदारुक्काथः कार्य्य इत्याहुः, व्यवहारस्तु प्रक्षेपविषयः। वाग्भटे तु—"गोमूत्रेण पिबेत् कल्कं श्लैष्मिके पीतदारुजम्" (चि० १३ अ०) इत्युक्तम्॥ ६॥

स्विन्नमित्यादि सुश्रुतस्य।—गोमयपिण्डादिना मृदु स्विन्नम्; चरके—"वृषणौ हृदयं दृष्टौ स्वेदयेन्मृदु वा न वा" (सू० १४ अ०) इत्युक्तत्वात्। सुरसादिना सुरसादिगणेन। शिरोविरेकद्रव्यैः पिप्पलीमरिचविडङ्गापामार्गादिभिः संशोधनसंशमनीयोक्तैः। मूत्रसंयुतैरिति—मूत्रपिष्टैः, लेपयेदिति पूर्वेणान्वयः॥ ७॥

मूत्रजवृद्धिचिकित्सामाह, संस्वेद्येत्यादि सुश्रुतस्य।—मूत्रप्रभवामिति—मूत्रं

सेवन्याः पार्श्वतोऽधस्ताद्विध्येत् व्रीहिमुखेन वै ॥ ८ ॥

अन्त्रवृद्धौ शिराव्यधविधिः ।—

शङ्खोपरि च कर्णान्ते त्यक्त्वा सेवनिमादरात् ।
व्यत्यासाद्वा शिरां विध्येदन्त्रवृद्धिनिवृत्तये ॥ ९ ॥

अन्त्रवृद्धौ दाहविधिः ।—

अङ्गुष्ठमध्ये त्वक् छित्त्वा दहेदङ्गविपर्य्यये ॥ १० ॥

अन्त्रवृद्धौ रास्नादिः ।—

रास्नायष्ट्यमृतैरण्ड-बलागोक्षुरसाधितः ।
क्वाथोऽन्त्रवृद्धिं हन्त्याशु रुबुतैलेन मिश्रितः ॥ ११ ॥

अन्त्रवृद्धौ एरण्डतैलप्रयोगः ।—

तैलमेरण्डजं पीत्वा बलासिद्धपयोऽन्वितम् ।
आध्मानशूलोपचितामन्त्रवृद्धिं जयेन्नरः ॥ १२ ॥

---

वेगसंरोधनजाम् । संस्वेदनं कर्त्तव्यं शस्त्रकर्मवेदनानिवारणार्थं त्वगादिमृदुकरणार्थञ्च । वस्त्रपट्टेन घटिकाकृतिवस्त्रेण वेष्टनं कर्त्तव्यं शस्त्रकर्मणः सौकर्य्यार्थम् । व्रीहिमुखेन शस्त्रविशेषेण वेध्यः ; व्यधश्च मूत्रस्रावणार्थम् । एतदनन्तरं यदाह सुश्रुतः,— "अथात्र द्विमुखीं नाडीं दत्त्वा विस्रावयेद्भिषक् । मूत्रं नाडीमथोद्धृत्य स्थगिकाबन्धमाचरेत् ॥" ( चि० १९ अ० ) इति ॥ ८ ॥

अप्राप्तफलकोषान्त्रवृद्धिचिकित्सामाह, शङ्खेत्यादि सुश्रुतस्य ।—त्यक्त्वा सेवनिमिति—केशान्तसेवनीं मर्मत्वात् परित्यज्य ; अत एवोक्तं वाग्भटे—"षट् कूर्चाः सप्त सेवन्यो मेढ्रजिह्वाशिरोगताः । शस्त्रेणैताः परिहरेत्" ( शा० ३ अ० ) इति । व्यत्यासादिति—वामकोषवृद्धौ दक्षिणे, दक्षिणकोषवृद्धौ तु वामे ; यदि तु पुनरुभयतो वृद्धिस्तदोभयभागे व्यधः ; वा-शब्दो विध्यन्तरापेक्षया ॥ ९ ॥

अङ्गुष्ठेत्यादि सुश्रुतस्य ।—हस्तस्य वृद्धाङ्गुष्ठमध्ये त्वङ्मात्रं छित्त्वा दहेत्, न तु वातकफवृद्धिवत् स्नायुमपि । त्वक्शब्दस्य नपुंसकलिङ्गता समाधेया छान्दसत्वात् । अङ्गविपर्य्यये इति—विपर्य्यासार्थः पूर्ववदिति ॥ १०।११ ॥

तैलमित्यादि ।—बलासिद्धपयोऽन्वितमिति—इदं क्षीरसाधनपरिभाषया बलामूलसाधिते क्षीरे एरण्डतैलं प्रक्षिप्य पेयमित्यर्थः ॥ १२ ॥

कफवातवृद्धौ हरीतकीप्रयोगः।—

हरीतकीं मूत्रसिद्धां सतैलां लवणान्विताम्।
प्रातः प्रातश्च सेवेत कफवातामयापहाम्॥ १३॥

कफवातवृद्धौ भृष्टहरीतकीप्रयोगः।—

गोमूत्रसिद्धां रुवुतैलभृष्टां हरीतकीं सैन्धवचूर्णयुक्ताम्।
खादेन्नरः कोष्णजलानुपानां निहन्ति वृद्धिं चिरजां प्रवृद्धाम्॥१४॥

कफवातवृद्धौ त्रिफलाक्वाथः।—

त्रिफलाक्वाथगोमूत्रं पिबेत् प्रातरतन्द्रितः।
कफवातोद्भवं हन्ति श्वयथुं वृषणोत्थितम्॥ १५॥

कफवातवृद्धौ सरलादिलेपः।—

सरलागुरुकुष्ठानि देवदारुमहौषधम्।
मूत्रारनालसम्पिष्टं शोथघ्नं कफवातनुत्॥ १६॥

हरीतकीपिप्पलीप्रयोगः।—

भृष्टो रुवुकतैलेन कल्कः पथ्यासमुद्भवः।
कृष्णासैन्धवसंयुक्तो वृद्धिरोगहरः परः॥ १७॥

आदित्यपक्वघृतम्।—

गव्यं घृतं सैन्धवसम्प्रयुक्तं शम्बूकभाण्डे निहितं प्रयत्नात्।
सप्ताहमादित्यकरैर्विपक्वं हन्यात् कुरण्डं चिरजं प्रवृद्धम्॥ १८॥

---

हरीतकीमित्यादि।—अत्र तैलमेरण्डतैलमित्याहुः। अस्य योगस्य विरेचनत्वान्मूत्रेणैव पानमिच्छन्ति; अन्ये तु—उष्णोदकेन पानमित्याहुः॥ १३॥

गोमूत्रेत्यादि।—अत्र पूर्वयोगापेक्षया भृष्टामिति विशेषः। कोष्णजलानुपानमिति पाठपक्षे क्रियाविशेषणम्॥ १४॥

त्रिफलेत्यादि।—अत्र गोमूत्रं प्रक्षेप्यम्॥ १५॥

सरलेत्यादि।—सरलं सरलकाष्ठं, लेपोऽयं योगः॥ १६॥

भृष्ट इत्यादि।—योगोऽयं भक्षणविषया॥ १७॥

गव्यमित्यादि।—शम्बूकभाण्डे इति—शम्बूकरूपभाण्डे; शम्बूकभाण्डञ्च सद्यस्तं

इन्द्रवारुण्युपयोगः ।—

ऐन्द्रीमूलभवं चूर्णं रुबुतैलेन मर्दितम् ।
वाराहाङ्गीपयसा पीतं सर्ववृद्धिनिवारणम् ॥ १९ ॥

रुद्रजटाप्रलेपः ।—

रुद्रजटामूललिप्ता करटव्यङ्गचर्मणा ।
बद्धा वृद्धिः शमं याति चिरजाऽपि न संशयः ॥ २० ॥

रुपिकाप्रलेपः ।—

निष्पिष्टमारनालेन रुपिकामूलवल्कलम् ।
लेपो वृद्ध्यामयं हन्ति बद्धमूलमपि दृढम् ॥ २१ ॥

वचादि-लज्जादिलेपद्वयम् ।—

वचासर्षपकल्केन प्रलेपो वृद्धिनाशनः ।
लज्जागर्दभमलाभ्यां च लेपो वृद्धिहरः परः ॥ २२ ॥

ब्रध्ने बिल्वादिचूर्णम् ।—

मूलं बिल्वकपित्थयोररलुकस्याग्नेर्बृहत्योर्द्वयोः
श्यामापूतिकरञ्जशिग्रुकतरोर्विश्वौषधापुष्करम् ।
कृष्णाग्रन्थिकचव्यपञ्चलवणक्षाराजमोदान्वितं
पीतं काञ्जिककोष्णतोयमथितं चूर्णीकृतं ब्रध्नजित् ॥ २३ ॥

---

ग्राह्यं, न तु पुराणमित्याहुः । घृतात् पादिकस्तु सैन्धवमिति च वदन्ति । लेपविधया योज्यमेतत् ॥ १८ ॥

ऐन्द्रीत्यादि ।—ऐन्द्री गोरक्षकर्कटी ॥ १९ ॥

रुद्रजटेत्यादि ।—रुद्रजटा रुद्रकड़ा इति ख्यातम् । आदौ रुद्रजटामूलकल्केन लिप्त्वा तदनु करटवी कटा इति ख्याता नकुलाकारा प्राणी वृक्षोपरि तिष्ठति, तस्या अङ्गचर्मणा क्रोड़चर्मणा बद्धा वृद्धिरित्यर्थः ॥ २० ॥

निष्पिष्टमित्यादि ।—रुपिका अर्कपर्णः ॥ २१ ॥

वचेत्यादि ।—लज्जेत्यादौ लज्जा वराहक्रान्ता । गर्दभमलिभ्यो मलं विट् ॥ २२ ॥

सम्प्रति ब्रध्नचिकित्सामाह, मूलमित्यादि वाग्भटस्य ।—ब्रध्नलक्षणन्तु यद्यपि रुग्विनिश्चये नास्ति, तथाऽपि तन्त्रान्तरमनुसर्त्तव्यम् ; यथा—"अत्यभिष्यन्दि-गुर्वन्न-

ब्रध्ने गोधूमकुन्दुरुकल्कौ।—

अवीक्षीरेण गोधूम-कल्कं कुन्दुरुकस्य वा।
प्रलेपनं सुखोष्णं स्यात् ब्रध्नशूलहरं परम्॥ २४॥

ब्रध्ने काकप्रयोगः।—

मृतमात्रे तु वै काके विशस्ते सम्प्रवेशयेत्।
ब्रध्नं मुहूर्त्तं मेधावी तत्क्षणादरुजं भवेत्॥ २५॥

ब्रध्ने अजाज्यादिप्रलेपः।—

अजाजी हवुषा कुष्ठं गोधूमं बदराणि च।
काञ्जिकेन समं पिष्ट्वा कुर्य्याद्ब्रध्नप्रलेपनम्॥ २६॥

बृहत्सैन्धवाद्यं तैलम्।—

सैन्धवं मदनं कुष्ठं शताह्वां निचुलं वचाम्।
ह्रीबेरं मधुकं भार्गीं देवदारु सनागरम्॥ २७॥
कट्फलं पौष्करं मेदां चविकां चित्रकं शटीम्।
विड़ङ्गातिविषे श्यामां रेणुकां नीलिनीं स्थिराम्॥ २८॥
बिल्वाजमोदे कृष्णाञ्च दन्तीरास्ने प्रपिष्य च।
साध्यमेरण्डजं तैलं तैलं वा कफवातनुत्॥ २९॥

---

सेवनाग्निबधं गतः। करोति ग्रन्थिवच्छोथं दोषो वङ्क्षणसन्धिषु॥ ज्वरशूलाङ्गदाहाढ्यं तं ब्रध्नमिति निर्दिशेत्॥" इति। ब्रध्नस्तु लोके बाघसीति भाँड़सीति वा नाम्ना ख्यातम्। मूलमिति षष्ठ्यन्तैः सर्वैर्योज्यम्। अरलुकः श्योनाकः। अग्निः चित्रकः। श्यामा वृद्धदारकः। पूतिकरञ्जः नाटाकरञ्जः। काञ्जिककोष्ण-तोयमथितानामन्यतमेन पानं प्रकृत्याद्यपेक्षया ज्ञेयम॥ २३॥

अवीक्षीरेणेत्यादि वाग्भटस्य।—कुन्दुरु स्वनामख्यातम्। अवीक्षीरेण गोधूम-कुन्दुरुणी पिष्ट्वा लेपः कार्य्यः, एक एवायं योगः। वा-शब्दः पूर्वयोगापेक्षया; अत एव वाग्भटे वा-शब्दस्थाने चकारः पठ्यते। अपरे तु—योगद्वयमाहुः॥ २४॥

मृतमात्रे इत्याद्यपि वाग्भटस्य। मृतमात्रे इति—सद्योमारिते। विशस्ते इति—पाटिते। काकस्य क्रोड़ं पाटयित्वा तत्र कोष्णे ब्रध्नं प्रवेशनीयं, ततो बन्धः कार्य्यः॥ २५।२६॥

सैन्धवमित्यादि।—बृहत् सैन्धवाद्यतैले निचुलः वेतसः। श्यामा त्रिवृतेति

अश्मोदावर्त्तगुल्मार्शः-प्लीहमेहाढ्यमारुतान्।
आनाहमश्मरीञ्चैव हन्यात् तदनुवासनात्॥ ३०॥

शतपुष्पाद्यं घृतम्।—

शतपुष्पाऽमृता दारु चन्दनं रजनीद्वयम्।
जीरके द्वे वचानाग-त्रिफलागुग्गुलुत्वचः॥ ३१॥
मांसी कुष्ठं पत्रकैला-रास्नाशृङ्गीः सचित्रकाः।
क्रिमिघ्नमश्वगन्धाञ्च शैलेयं कटुरोहिणीम्॥ ३२॥
सैन्धवं तगरं पिष्ट्वा कुटजातिविषे समे।
एतैश्च कार्षिकैः कल्कैर्घृतप्रस्थं विपाचयेत्॥ ३३॥
वृषमुण्डितिकैरण्ड-निम्बपत्रभवं रसम्।
कण्टकार्य्यास्तथा क्षीरं प्रस्थं प्रस्थं विनिक्षिपेत्॥ ३४॥
सिद्धमेतत् घृतं पीतमन्त्रवृद्धिमपोहति।
वातवृद्धिं पित्तवृद्धिं मेदोवृद्धिञ्च दारुणाम्॥ ३५॥
मूत्रवृद्धिं श्लीपदं वा यकृत् प्लीहानमेव च।
शतपुष्पाघृतं रोगान् हन्यादेव न संशयः॥ ३६॥

सौरेश्वरघृतप्रयोगोपदेशः।—

घृतं सौरेश्वरं योज्यं ब्रध्न-वृद्धिनिवृत्तये॥ ३७॥

इति वृद्धि-ब्रध्न-चिकित्सा।

---

वैद्यप्रसारकसंवादात्। नीलिनी नीलवृक्षः। चतुर्गुणजलेन पाकः। तैलं वेति—तिलतैलं वा॥ ३०—३६॥

घृतमित्यादि।—सौरेश्वरघृतं वक्ष्यमाणम्॥ ३७॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां वृद्धि-ब्रध्न-चिकित्सा-विवृतिः।

# अथ गलगण्ड-गण्डमालाऽपची-ग्रन्थ्यर्बुदचिकित्सा ।

गलगण्डे सामान्यविधिः ।—

यवमुद्गपटोलानि कटुरूक्षञ्च भोजनम् ।
छर्दिं सरक्तमुक्तिञ्च गलगण्डे प्रयोजयेत् ॥ १ ॥

गलगण्डे हस्तिकर्णपलाशलेपः ।—

तण्डुलोदकपिष्टेन मूलेन परिलेपितः ।
हस्तिकर्णपलाशस्य गलगण्डः प्रशाम्यति ॥ २ ॥

गलगण्डादौ सर्षपादिप्रलेपः ।—

सर्षपान् शिग्रुबीजानि शणबीजातसीयवान् ।
मूलकस्य च बीजानि तक्रेणाम्लेन पेषयेत् ॥ ३ ॥
गण्डानि ग्रन्थयश्चापि गलगण्डाः सुदारुणाः ।
प्रलेपात् तेन शाम्यन्ति विलयं यान्ति चाचिरात् ॥ ४ ॥

गलगण्डे कर्कारुरसनस्यम् ।—

जीर्णकर्कारुकरसो विड़सैन्धवसंयुतः ।
नस्येन हन्ति तरुणं गलगण्डं न संशयः ॥ ५ ॥

गलगण्डे जलकुम्भीकक्षारः ।—

जलकुम्भीकजं भस्म पक्वं गोमूत्रगालितम् ।
पिबेत् कोद्रवभक्ताशी गलगण्डप्रशान्तये ॥ ६ ॥

---

उक्तसङ्गत्यैव गलगण्डादयोऽभिधीयन्ते, यवमुद्गेत्यादि ।—सुगमम् ॥ १ ॥

तण्डुलोदकेत्यादि ।—हस्तिकर्णपलाशस्य मूलेनेत्यन्वयः । सर्वेऽपि गलगण्डाः वातकफमेदोभिरारभ्यन्ते, न तु पित्तेन, व्याधिस्वभावात् ; अतो गलगण्डोक्तलेपाः कोष्णा एव देया इत्याहुः ॥ २—४ ॥

जीर्णेत्यादि ।—जीर्णकर्कारुः परिणततिक्तालाबूः ; अन्ये तु—कुष्माण्डभेद इत्याहुः ; व्यवहारस्तु पूर्वेणैव । तरुणमिति—अचिरजातम् ॥ ५ ॥

जलकुम्भीकजमित्यादि ।—जलकुम्भी पाना, तस्या भस्म पानीयक्षारविधिना गोमूत्रेण विपाच्य परिस्राव्य च पिबेत् ॥ ६ ॥

गलगण्डे सूर्य्यावर्त्ताद्युपनाहः ।—

सूर्य्यावर्त्त-रसोनाभ्यां गलगण्डोपनाहने ।
स्फोटास्रावैः शमं याति गलगण्डो न संशयः ॥ ७ ॥

गलगण्डे अलाबूफलोषितजलमद्ययोः प्रयोगौ ।—

तिक्तालाबूफले पक्वे सप्ताहमुषितं जलम् ।
मद्यं वा गलगण्डघ्नं पानात् पथ्यानुसेविनः ॥ ८ ॥

गलगण्डे कट्फल-गिरिकर्णिकाप्रयोगौ ।—

कट्फलचूर्णान्तर्गल-घर्षो गलगण्डमपहरति ।
घृतमिश्रं पीतमिव श्वेतगिरिकर्णिकामूलम् ॥ ९ ॥

गलगण्डे मण्डूरप्रयोगः ।—

महिषीमूत्रविमिश्रं लौहमलं संस्थितं घटे मासम् ।
अन्तर्धूमविदग्धं लिह्यान्मधुनाऽथ गलगण्डे ॥ १० ॥

गलगण्डे जिह्वाशिरावेधविधिः ।—

जिह्वायाः पार्श्वतोऽधस्ताच्छिरा द्वादश कीर्त्तिताः ।
तासां स्थूलशिरे कृष्णे छिन्द्यात् द्वे च शनैः शनैः ॥ ११ ॥
वडिशेनैव सङ्गृह्य कुशपत्रेण बुद्धिमान् ।
स्रुते रक्ते व्रणे तस्मिन्दद्यात् सगुड़मार्द्रकम् ॥
भोजनञ्चानभिष्यन्दि यूषः कौलत्थ इष्यते ॥ १२ ॥

---

सूर्य्यावर्त्तेत्यादि ।—उपनाहनम् उष्णबहलप्रलेपः । स्फोटास्रावैः उष्णोपनाहकृतैः ॥ ७।८ ॥

कट्फलेत्यादि ।—श्वेतगिरिकर्णिका श्वेतापराजिता ॥ ९ ॥

महिषीत्यादि ।—पुराणलौहमलं महिषीमूत्रे मासं स्थापयित्वा, अन्तर्धूमं दग्ध्वा मधुना लिह्यादित्यर्थः ॥ १० ॥

जिह्वाया इत्यादि ।—कृष्णे स्थूलशिरे वडिशेन शनैः शनैः सङ्गृह्य कुशपत्रेण शस्त्रविशेषेण छिन्द्यादित्यन्वयः । तस्मिन् व्रणे स्रुतरक्ते सति सगुड़मार्द्रकमद्यात् भक्षयेत् ; अन्ये तु—दद्यादिति पठन्ति, तन्मते—भक्षणार्थमिति शेषः ॥ ११।१२ ॥

गलगण्डे कर्णशिरावेधविधि:।—

कर्णयुग्मबहि:सन्धि-मध्याभ्यासे स्थितञ्च यत्।
उपर्य्युपरि तच्छिन्द्यात् गलगण्डे शिरात्रयम् ॥ १३ ॥

गलगण्डे तुम्बीतैलम्।—

विडङ्गक्षारसिन्धूत्थ-रास्नाऽग्निव्योषदारुभिः।
कटुतुम्बीफलरसे कटुतैलं विपाचितम् ॥
चिरोत्थमपि नस्येन गलगण्डं विनाशयेत् ॥ १४ ॥

गलगण्डे अमृताद्यं तैलम्।—

तैलं पिबेच्चामृतवल्लिनिम्ब-हंसाह्वयावृक्षकपिप्पलीभिः।
सिद्धं बलाभ्याञ्च सदेवदारु हिताय नित्य गलगण्डरोगी ॥ १५ ॥

गण्डमालायां वरुणमूलक्वाथः।—

माक्षिकाढ्यः सकृत् पीतः क्वाथो वरुणमूलजः।
गण्डमालां हरत्याशु चिरकालानुबन्धिनीम् ॥ १६ ॥

गण्डमालायां काञ्चनारादिकल्कः।—

पिष्टा ज्येष्ठाम्बुना पेयाः काञ्चनालत्वचः शुभाः।

---

कर्णयुग्मेत्यादि।—कर्णयुग्मबहि:सन्धिमध्याभ्यासे इति—कर्णयोः पृष्ठसमीपे उपर्य्युपरि स्थितमित्यन्वयः ॥ १३ ॥

विडङ्गेत्यादि।—तुम्बीतैले उग्रा वचा। कटुतुम्बीफलरसे इति—परिणततिक्ततुम्बीफलस्य चतुर्गुणस्वरसे इत्यर्थः। उक्तं हि वाग्भटे—"रूढायास्तिक्ततुम्ब्याश्च रसे तैलाच्चतुर्गुणे" ( उ० २२ अ० ) इति ॥ १४ ॥

तैलमित्यादि सुगमम्।—अमृतवल्ली गुडूची। हंसाह्वा हंसपादी। वृक्षकः कुटजः; यदाह वाग्भटः,—"गुडूचीनिम्बकुटज-हंसपादीबलाद्वयैः। साधितं पाययेत् तैलं सकृष्णादेवदारुभिः ॥" ( उ० २२ अ० ) इति। अन्ये तु—हिंसाह्वयेति पठित्वा रक्तश्वेतपुष्पभेदेन कालांकड़ाद्वयं व्याख्यानयन्ति। अमृतवल्ल्यादिभिः क्वाथकल्करूपैरिति चन्द्रिका। अन्ये तु—एभिः सर्वैः कल्कः, जलं चतुर्गुणमित्याहुः ॥ १५ ॥

अतः परं गण्डमालाचिकित्सामाह, माक्षिकाढ्य इत्यादि।—सकृदिति—एकवारं पीतः, सुतिवादोऽयम् ॥ १६ ॥

विश्वभेषजसंयुक्ता गण्डमालाहराः पराः ॥ १७ ॥

गण्डमालायाम् आरग्वधनस्य-प्रलेपौ ।—

आरग्वधशिफां क्षिप्रं पिष्ट्वा तण्डुलवारिणा ।
सम्यङ्नस्यप्रलेपाभ्यां गण्डमालां समुद्धरेत् ॥ १८ ॥

गण्डमालायां निर्गुण्डीनस्यम् ।—

गण्डमालामयार्त्तानां नस्यकर्मणि योजयेत् ।
निर्गुण्ड्याश्च शिफां सम्यक् वारिणा परिपेषिताम् ॥१९॥

गण्डमालायां कोषातकीस्वरसादिनस्यचतुष्टयम् ।—

कोषातकीनां स्वरसेन नस्यं तुम्ब्यास्तु वा पिप्पलिसंयुतेन ।
तैलेन वाऽरिष्टभवेन कुर्याद्वचोपकुल्ये सह माक्षिकेण ॥ २० ॥

गण्डमालायाम् ऐन्द्री-गिरिकर्णीप्रयोगौ ।—

ऐन्द्र्या वा गिरिकर्ण्या वा मूलं गोमूत्रयोगतः ।
गण्डमालां हरेत् पीतं चिरकालोत्थितामपि ॥ २१ ॥

अपची-गण्डमालयोः अलम्बुषास्वरसः ।—

अलम्बुषादलोद्भूतात् स्वरसात् द्वे पले पिबेत् ।
अपच्या गण्डमालायाः कामलायाश्च नाशनः ॥ २२ ॥

गलगण्डादौ भार्गीप्रलेपः ।—

गलगण्डगण्डमाला-कुरण्डांश्च विनाशयेत् ।
पिष्टं ज्येष्ठाऽम्बुना लेपान्मूलं ब्राह्मणयष्टिजम् ॥ २३ ॥

---

पिष्टेत्यादि ।—ज्येष्ठाम्बु तण्डुलोदकम् । काञ्चनालः काञ्चनः ॥ १७ ॥

आरग्वधेत्यादि ।—आरग्वधस्य शिफां मूलम् ॥ १८।१९ ॥

कोषातकीनामित्यादि ।—चत्वारो योगाः । पिप्पलीसंयुतेन इति पदं कोषातकीनां स्वरसेनेत्यनेनापि सम्बध्यते । कोषातकी घोषकः, तस्याः फलस्य स्वरसः; एवं तिक्ततुम्ब्या अपि । अरिष्टभवेन निम्बफलजेन तैलेन तृतीयो योगः । अरिष्टफलस्येति पाठान्तरे—अरिष्टफलस्येत्यर्थः । वचोपकुल्ये इति—वचोपकुल्ये पिष्ट्वा मधुना नस्यं विधेयमित्यर्थः ॥ २० ॥

ऐन्द्र्या इत्यादि ।—ऐन्द्री गोरक्षकर्कटी । गिरिकर्णी श्वेतापराजिता ॥ २१ ॥

अलम्बुषेत्यादि ।—अलम्बुषा मुण्डितिका, अलम्बुषो वा ॥ २२-२३ ॥

गण्डमालायां कुकुन्दरीतैलम् ।—

अभ्यङ्गान्नाशयेन्नृणां गण्डमालां सुदारुणाम् ।
कुकुन्दर्य्यां विपक्वन्तु क्षणात् तैलवरं ध्रुवम् ॥ २४ ॥

गण्डमालायां शाखोटकबिम्ब्याद्ये तैले ।—

गण्डमालापहं तैलं सिद्धं शाखोटकत्वचा ।
बिम्ब्यश्वमारनिर्गुण्डी-साधितञ्चापि नावनम् ॥ २५ ॥

गण्डमालायां निर्गुण्डीतैलम् ।—

निर्गुण्डीस्वरसेनाथ लाङ्गलीमूलकल्कितम् ।
तैलं नस्यान्निहन्त्याशु गण्डमालां सुदारुणाम् ॥ २६ ॥

अपच्यां कार्पासमूलपूपिका ।—

वनकार्पासिकामूलं तण्डुलैः सह योजितम् ।
पक्वा तु पूपिकां खादेदपचीनाशनाय च ॥ २७ ॥

अपच्यां शोभाञ्जनादिप्रलेपः ।—

शोभाञ्जनं देवदारु काञ्जिकेन तु पेषितम् ।
कोष्णं प्रलेपतो हन्यादपचीमतिदुस्तराम् ॥ २८ ॥

अपच्यां सर्षपादिप्रलेपः ।—

सर्षपारिष्टपत्राणि दग्ध्वा भल्लातकैः सह ।
छागमूत्रेण सम्पिष्टमपचीघ्नं प्रलेपनम् ॥ २९ ॥

---

अभ्यङ्गादित्यादि ।—कुकुन्दरी "कुकुया" इति ख्याता मूषिकाकृतिः, तस्याः कल्कः ; जलं चतुर्गुणम् ॥ २४ ॥

गण्डमालापहमित्यादि ।—शाखोटकत्वचा स्वरसकल्करूपया ; सुश्रुतेऽप्युक्तं—"शाखोटकल्कस्वरसेन सिद्धं तैलं हितं नस्यविरेचनेषु" (चि० १८ अ०) इति । बिम्बीत्यादि योगान्तरम् । बिम्बी डिम्बिरिति ख्यातम् ; तेलाकुचा इत्यन्ये । अश्वमारः करवीरः । बिम्ब्यादीनां मूलस्य कल्कः, जलं चतुर्गुणमिति गयदासः ॥ २५ ॥

निर्गुण्डीत्यादि ।—अत्र निर्गुण्डीस्वरसश्चतुर्गुणः ॥ २६ ॥

अपचीचिकित्सामाह वनेत्यादि ।—त्रयो भागास्तण्डुलानां भेषजस्यैकः ॥ २७—२९ ॥

अपच्याम् अश्वत्थादिप्रलेपः।—

अश्वत्थकाष्ठं निचुलं गवां दन्तञ्च दाहयेत्।
वराहमज्जसंयुक्तं भस्म हन्त्यपचीव्रणान्॥ २०॥

अपच्यां पाददेशे दाहविधिः।—

पार्ष्णिं प्रति द्वादश चाङ्गुलानि
मित्वेन्द्रवस्तिं परिवर्ज्य सम्यक्।
विदार्य्य मत्स्याण्डनिभानि वैद्यो
निष्कृष्य जालान्यनलं विदध्यात्॥ २१॥

अपच्यां हस्तदेशे दाहविधिः।—

मणिबन्धोपरिष्टाद्वा कुर्य्याद्रेखात्रयं भिषक्।
अङ्गुल्यन्तरितं सम्यगपचीनां प्रशान्तये॥ २२॥

अपच्यां दण्डोत्पलापामार्गयोर्मूलधारणं शिराच्छेदश्च।—

दण्डोत्पलाभवं मूलं बद्धं पुष्येऽपचीं जयेत्।
अपामार्गस्य वा छिन्द्याज्जिह्वातलगते शिरे॥ २३॥

अपच्यां व्योषाद्यं तैलम्।—

व्योषं विडङ्गं मधुकं सैन्धवं देवदारु च।

---

अश्वत्थेत्यादि।—अत्र वराहमज्जयोगाल्लेपः॥ २०॥

पार्ष्णिं प्रतीत्यादि सुश्रुतस्य।—पार्ष्णिः गुल्फस्याधोदेशः, पार्ष्णिमारभ्य ऊर्द्धं द्वादशाङ्गुलानि मित्वा परिमाय इन्द्रवस्तिं द्व्यङ्गुलं परित्यज्य विदार्य्य जालानि मेदोजालानि मत्स्याण्डेन सदृशान्याकृष्य अग्निं विदध्यादित्यर्थः, एवमपच्या मूलोच्छेदात् प्रशमः; यदाह भोजः,—"वातपित्तकफा वृद्धा मेदश्चापि समाचितम्। जङ्घयोः कण्डरां प्राप्य मत्स्याण्डसदृशान् बहून्॥ कुर्वन्ति—" इत्यादि॥ २१॥

कक्षाकूर्परसन्धिगतापचीषु बाहुगतमेव कर्माह, मणिबन्धेत्यादि सुश्रुतस्य।—मणिबन्धः हस्तबाहुसन्धिः। अत्र मणिबन्धादङ्गुलमेकं द्वयं वा परित्यज्य दाहः कार्य्यः॥ २२॥

दण्डोत्पलेत्यादि।—दण्डोत्पला स्वनामख्याता। अपामार्गस्य वा मूलमिति योज्यम्। अपचीप्रदेशे एव भेषजबन्धनम्। अत्रैव शस्त्रकर्मान्तरमाह, छिन्द्यादित्यादि॥ २३॥

तैलमेभिः श्रुतं नस्यात् कच्छामप्यपचीं जयेत् ॥ ३४ ॥

अपच्यां चन्दनाद्यं तैलम् ।—

चन्दनं साभया लाक्षा वचा च कटुरोहिणी ।
एभिस्तैलं श्रुतं पीतं समूलामपचीं जयेत् ॥ ३५ ॥

अपच्यादौ गुञ्जाद्यं तैलम् ।—

गुञ्जाहयारिश्यामाऽर्क-सर्वपैर्मूत्रसाधितम् ।
तैलन्तु दशधा पश्चात् कणालवणपञ्चक-॥ ३६ ॥
मरिचैश्चूर्णितैर्युक्तं सर्वावस्थागतां जयेत् ।
अभ्यङ्गादपचीं नाड़ीं वल्मीकार्शोऽर्बुदव्रणान् ॥ ३७ ॥

ग्रन्थिषु व्रणशोथचिकित्साऽतिदेशः ।—

ग्रन्थिष्वामेषु कुर्वीत भिषक् शोथप्रतिक्रियाम् ।
पक्वानापाट्य संशोध्य रोपयेत् व्रणभेषजैः ॥ ३८ ॥

वातग्रन्थौ हिंस्रादिप्रलेपः ।—

हिंस्रा सरोहिण्यमृता च भार्गी
श्योनाकबिल्वागुरुकृष्णगन्धाः ।

---

व्योषमित्यादि ।—अत्र जलं चतुर्गुणम् ॥ ३४ ॥

चन्दनमित्यादि ।—अभया हरीतकी, न तु अभयमुशीरं, "वचाहरीतकी-लाक्षा-कटुरोहिणिचन्दनैः । तैलं प्रसाधितं पीतं समूलामपचीं जयेत् ॥" ( उ० ३० अ० ) इति वाग्भटसंवादात् ॥ ३५ ॥

गुञ्जेत्यादि । —हयारिः करवीरः, तस्य मूलम् । श्यामा वृद्धदारकः । अर्कस्य क्षीरम् । गोमूत्रं चतुर्गुणं दत्त्वा दशधा पाकः, ततः कणा-लवणपञ्चक-मरिचचूर्णं प्रक्षिप्य प्रयोज्यम् ; कणालवणपञ्चकमरिचैरित्येकपदं, "घृततैलवसामज्ज-वेश-वारपयोदधि-। मांसधावनतोयाभम्" इतिवत् ॥ ३६।३७ ॥

ग्रन्थिचिकित्सामाह, ग्रन्थिष्वित्यादि ।—शोथप्रतिक्रियामिति—व्रणशोथचिकित्सितं, तच्च सौश्रुतं व्रणयोग्यालेपनपरिषेकादिविरेकान्तमेकादशविधम् ॥ ३८ ॥

हिंस्रेत्यादि सुश्रुतस्य ।—हिंस्रा कालाकड़ा । कृष्णगन्धा कृष्णशोभाञ्जनः ।

गोपित्तपिष्टाः सह तालपर्ण्या
ग्रन्थौ विधेयोऽनिलजे प्रलेपः ॥ ३९ ॥

पित्तग्रन्थौ जलौकाप्रयोगादिः काकोल्यादिक्वाथश्च।—

जलायुकाः पित्तकृते हितास्तु
क्षीरोदकाभ्यां परिषेचनञ्च।
काकोलिवर्गस्य तु शीतलानि
पिबेत् कषायाणि सशर्कराणि ॥ ४० ॥

पित्तग्रन्थौ हरीतकीप्रयोगः मधूकादिप्रलेपश्च।—

द्राक्षारसेनेक्षुरसेन वाऽपि चूर्णं पिबेद्वाऽपि हरीतकीनाम्।
मधूकजम्ब्वर्जुनवेतसानां त्वग्भिः प्रदेहानवतारयेच्च ॥ ४१ ॥

श्लेष्मग्रन्थौ दोषहरणविम्लापनोपदेशौ।—

हृतेषु दोषेषु यथाऽऽनुपूर्व्या ग्रन्थौ भिषक् श्लेष्मसमुत्थिते तु।
स्विन्ने च विम्लापनमेव कुर्य्यादङ्गुष्ठवेणुदृषदीसुतैश्च ॥ ४२ ॥

श्लेष्मग्रन्थौ विकङ्कतादिप्रलेपः।—

विकङ्कतारग्वधकाकणन्ती-काकादनीतापसवृक्षमूलैः।

---

गोपित्तपिष्टा इत्यत्र "गोजी च पिष्टा" इति पाठान्तरे—गोजी शाखोटकः; किन्तु गोजीपाठो युक्तः, आयुर्वेदसारप्रामाण्यात् तथा सुश्रुतटीकाकृद्भिर्व्याख्यातत्वाच्च। तालपर्णी तालमूली ॥ ३९ ॥

जलायुका इत्यादि विदाग्निव्यन्तं सुश्रुतस्य।—काकोलिवर्गस्येति—काकोल्यादिगणस्य ॥ ४०।४१ ॥

हृतेषु दोषेष्वित्यादि।—वमनादिभिः तथा रक्तमोक्षणेन दोषेषु कफादिरक्तान्तेषु हृतेषु सत्सु। यथाऽऽनुपूर्व्येति—स्नेहस्वेदादिक्रमं कृत्वेत्यर्थः। दृषदीसुतः शिलापुत्रकः। अत्र छन्दोभङ्गभयं नाशङ्कनीयम्, अनन्तत्वाच्छन्दोमार्गाणाम्। क्वचित्तु सुश्रुतपुस्तके "अङ्गुष्ठलोष्टोपलवेणुदण्डैः" इति पठ्यते, केचित्तु "वेणूदृषदीसुतैः" इति ॥ ४२ ॥

विकङ्कतेत्यादि।—विकङ्कतेत्यादि मदनान्त एको योगः इति चन्द्रिका।

आलेपयेदेनमलाबुभार्गीकरञ्जकालामदनैश्च विद्वान्॥ ४३॥

ग्रन्थौ दन्त्यादिलेपः।—

दन्ती चित्रकमूलत्वक् सुह्यर्कपयसी गुड़ः।

भल्लातकास्थि काशीशं लेपो भिन्द्याच्छिलामपि॥ ४४॥

ग्रन्थ्यादिषु मालवाहककीटलेपः।—

ग्रन्थ्यर्बुदादिजल्लेपो मालवाहककीटजः॥ ४५॥

ग्रन्थ्यादौ स्वर्जिकादिप्रलेपः।—

स्वर्जिकामूलकक्षारः शङ्खचूर्णसमन्वितः।

प्रलेपो विहितस्तीक्ष्णो हन्ति ग्रन्थ्यर्बुदादिकान्॥ ४६॥

ग्रन्थौ अग्निक्षारप्रयोगः।—

ग्रन्थीनमर्मप्रभवानपक्वा-

नुद्धृत्य वाऽग्निं विदधीत वैद्यः।

क्षारेण वैतान् प्रतिसारयेत्तु

संलिख्य संलिख्य यथोपदेशम्॥ ४७॥

अर्बुदे ग्रन्थिचिकित्साऽतिदेशः।—

ग्रन्थ्यर्बुदानाञ्च यतोऽविशेषः

प्रदेशहेत्वाकृतिदोषदूष्यैः।

---

विकङ्कतः वइँचखेखर, वयकङ्कोलिरिति वा ख्यातम्। काकणन्ती गुञ्जा, अस्या मूलम्। काकादनी काकतिन्दुकः। तापसद्रुमः पुत्रञ्जीवकः। अलाबुः कटुतुम्बी। काला कालाकड़ा, मञ्जिष्ठा वा॥ ४३॥

दन्तीत्यादि।—सुह्यर्कपयसीति सुह्यर्कयोः क्षीरम्। भल्लातकास्थि भल्लातकबीजम्। काशीशं धातुकाशीशम्॥ ४४॥

ग्रन्थ्यर्बुदादीत्यादि।—मालवाहककीटः सुखाशादिभवपर्ंकीटः "मादुरे पोका" इति ख्यातम्॥ ४५।४६॥

ग्रन्थीनित्यादि सुश्रुतस्य।—क्षारेण वेति विकल्पो दोषापेक्षया; तेन वाते वातकफेऽग्निः, पित्ते च क्षार इति। प्रतिसारयेदिति—प्रलेपयेत्। यथोपदेशमिति—यथाशास्त्रम्; एतच्च अग्निं विदधीत इत्यनेनापि सम्बध्यते, तेनाग्निकर्मविधिना प्रतिसारणीयक्षारविधिना चेत्यर्थः॥ ४७॥

अर्बुदे ग्रन्थिचिकित्सितं सोपपत्तिकमतिदिशति, ग्रन्थ्यर्बुदानामित्यादि।—अवि-

ततश्चिकित्सेद्भिषगर्बुदानि
विधानवित् ग्रन्थिचिकित्सितेन ॥ ४८ ॥

वातार्बुदे वेशवारोपनाह-नाडीस्वेद रक्तमोक्षणानि।—

वातार्बुदे चाप्युपनाहनानि
स्निग्धैश्च मांसैरथ वेशवारैः।
स्वेदं विदध्यात् कुशलस्तु नाड्या
शृङ्गेण रक्तं बहुशो हरेच्च ॥ ४९ ॥

पित्तार्बुदे मृदुस्वेदोपनाहविरेचनानि।—

स्वेदोपनाहा मृदवस्तु पथ्याः
पित्तार्बुदे कायविरेचनञ्च ॥ ५० ॥

पित्तार्बुदे सर्जरसादि प्रलेपः।—

विघृष्य चोडुम्बरशाकगोजी-
पत्रैर्भृशं क्षौद्रयुतैः प्रलिम्पेत्।
श्लक्ष्णीकृतैः सर्जरसप्रियङ्गु-
पत्तङ्गलोध्रार्जुनयष्टिकाह्वैः ॥ ५१ ॥

कफार्बुदे शङ्खचूर्णादिलेपः।—

लेपनं शङ्खचूर्णेन सह मूलकभस्मना।
कफार्बुदापहं कुर्यात् ग्रन्थ्यादिषु विशेषतः ॥ ५२ ॥

शेष इव अविशेष इह ज्ञेयः, तेन सुश्रुतोक्तभेदोऽपि भवत्युक्तः; सुश्रुते हि पृथक् ग्रन्थि-लक्षणमुक्त्वा अर्बुदलक्षणञ्च "गात्रप्रदेशे" इत्यादिना पृथगेवोक्तं, तस्मात् लोकविशेषे सत्यपि प्रायेणाविशेषादिह ग्रन्थिचिकित्सैवातिदिश्यतेऽर्बुदे। विधानविदिति—दाहादि-विधिज्ञः ॥ ४८ ॥

वातार्बुदे इत्यादि।—नाड्येति—नाडीस्वेदविधिना ॥ ४९ ॥

स्वेदोपनाहा मृदव इत्यादि।—मृदुस्वेदः द्रवस्वेदः। मृदुरुपनाहस्तु काकोल्यादि-मृदुद्रव्यकृतः। कायविरेचनम् इत्यत्र कायग्रहणं शिरोविरेचनव्युदासार्थम् ॥ ५० ॥

विघृष्येत्यादि।—उडुम्बरः फल्गुः, कर्कशपत्रत्वात्। शाकः सप्तच्छदः कर्कशपत्रः। गोजी दार्वीशाकः, शाखोटको वा। क्षौद्रयुतैरिति कर्म-

अर्बुदे निष्पावादि प्रलेपः।—

निष्पावपिण्याककुलत्थकल्कै-
र्मांसप्रगाढैर्दधिमर्दितैश्च।
लेपं विदध्यात् क्रिमयो यथाऽत्र
मुञ्चन्त्यपत्यान्यथ मक्षिका वा ॥ ५३ ॥

अर्बुदे अग्निप्रयोगादिः।—

अल्पावशिष्टं क्रिमिभिः प्रजग्धं
लिखेत् ततोऽग्निं विदधीत पश्चात्।
यदल्पमूलं त्रपुताम्रसीसैः
संवेष्ट्य पत्रैरथवाऽऽयसैर्वा ॥ ५४ ॥

क्षारादिप्रयोगो बलस्य अवेक्षणीयता पक्वार्बुदचिकित्साविधिश्च।—

क्षाराग्निशस्त्राण्यवतारयेच्च
मुहुर्मुहुः प्राणमवेक्षमाणः।

रसादिभिः सम्बध्यते। पत्तङ्गं रक्तचन्दनम्। अर्जुनस्थानेऽञ्जनं इति पाठे—अञ्जनं स्रोतोऽञ्जनम्। यष्टिकाह्वं यष्टिमधु ॥ ५१।५२ ॥

निष्पावेत्यादि सुश्रुतस्य।—निष्पावः श्वेतशिम्बी। पिण्याकः तिलकल्कः। क्रिमयो यथाऽवेत्यतः परम् उत्पद्यन्ते इति शेषः। मुञ्चन्तीत्यत्र मूर्च्छन्तीति पाठे—अपत्यान्यथ मक्षिका वेत्यतः परं मुञ्चन्तीति शेषः ॥ ५३ ॥

एतत्कर्मणः फलमाह, अल्पावशिष्टमित्यादि सुश्रुतस्य।—अल्पावशिष्टं क्रिमिभिर्भक्षणादल्पावशिष्टम्। लिखेदिति—अल्पावशिष्टं पूतिमांसं शस्त्रेण छिन्द्यात्, अल्पावशिष्टस्य च छेदने न आतुरस्य महान् क्लेश इति तात्पर्य्यम्। ततोऽग्निं विदधीतेति—शस्त्रच्छेदनानन्तरञ्चावशिष्टार्बुदमूलस्य सम्यगुच्छेदाय अग्निं विदधीत तप्तशलाकया दहेत्। अग्निकर्मणि कृतेऽपि यद्यर्बुदस्य मूलं तिष्ठेत्, तदा किं कर्त्तव्यम्? इत्याह, यदल्पमूलमित्यादि—अर्बुदस्य यदल्पमूलं तत् त्रपुादिधातूनामन्यतमेन रचितैः पत्रैः संवेष्ट्य स्थापयेदिति व्याख्येयं, न तु क्षाराद्यवचारणापेक्षया त्रपुादिपत्रसंवेष्टनस्य पूर्व्वभावित्वमित्याहुः। त्रपुादिपत्रवेष्टनेन च तन्मूलस्यार्बुदस्य सङ्घर्षणात् स्वयमेव उपशमो भविष्यतीति भावः। त्रपु रङ्गः ॥ ५४ ॥

विध्यन्तरमाह, क्षाराग्नीत्यादि।—यद्यपि सुश्रुते "एकदेशापहरेच्छस्त्रम्" (सू०

यदृच्छया चोपगतानि पाकं
पाकक्रमेणोपचरेत् यथोक्तम् ॥ ५५ ॥

अर्बुदस्य मूलविनाशोपदेशः ।—

सशेषदोषाणि हि योऽर्बुदानि
करोति तस्याशु पुनर्भवन्ति ।
तस्मादशेषाणि समुद्धरेत्तु
हन्युः सशेषाणि यथा विषाग्नी ॥ ५६ ॥

पिड़कार्बुदे उपोदिकाप्रयोगः ।—

उपोदिकारसाभ्यक्तास्तत्पत्रपरिवेष्टिताः ।
प्रणश्यन्त्यचिरान्नृणां पिड़काऽर्बुदजातयः ॥ ५७ ॥

मर्मजार्बुदे उपोदिकोपनाहः ।—

उपोदिका काञ्जिकतक्रपिष्टा
तयोपनाहो लवणेन मिश्रः ।
दृष्टोऽर्बुदानां प्रशमाय कैश्चित्
दिने दिने रात्रिषु मर्मजानाम् ॥ ५८ ॥

अर्बुदे रम्भामोचकादि-गन्धकादिप्रलेपौ ।—

लेपोऽर्बुदजित् रम्भामोचकभस्मतुषशङ्खचूर्णकृतः ।

---

५ अ० ) इत्युक्तं, तथाऽपि अर्बुदस्य महामूलत्वात् न तत्र क्षारादयः सकृदवचारणीया इत्याह, मुहुर्मुहुरिति । प्राणानवेक्षमाण इति—यथा न बलहानिः स्यात् तथा कालविप्रकर्षं कृत्वा मुहुर्मुहुः क्षारादीनवचारयेदित्यर्थः । अपक्वस्यार्बुदस्य चिकित्सामभिधाय पक्वस्य चिकित्सामाह, यदृच्छयेति—कारणाप्रतिनियमेन अनियतमभिघातादिपाककारणं प्राप्येत्यर्थः । यत्तु निदाने "न पाकमायान्ति" ( सु० नि० ११ अ० ) इत्युक्तं, तत् प्रायिकमिति ज्ञेयम् । पाकक्रमेणेति—पाकोक्तपाटनशोधनादिक्रमेण । यथोक्तमित्युपचारक्रियाविशेषणम् । सुश्रुते तु—यथोक्तमित्यत्र "विधिज्ञः" इति पाठः ॥ ५५।५६ ॥

उपोदिकेत्यादि ।—पिड़काऽर्बुदजातय इति—पिड़काऽर्बुदप्रकारा इत्यर्थः ॥५७।५८॥

सरटरुधिरार्द्रगन्धकयवजविड़ङ्गनागरैर्वाऽथ ॥ ५९ ॥

अर्बुदे स्नुहीगण्डीरिकादिस्वेदचतुष्टयम् ।—

स्नुहीगण्डीरिकास्वेदो नाशयेदर्बुदानि च ।
सीसकेनाथ लवणैः पिण्डारकफलेन वा ॥ ६० ॥

मेदोऽर्बुदे हरिद्रादिलेपः ।—

हरिद्रालोध्रपत्तङ्ग-गृहधूममनःशिलाः ।
मधुप्रगाढ़ो लेपोऽयं मेदोऽर्बुदहरः परः ॥ ६१ ॥

शर्करार्बुदे अर्बुदचिकित्साऽतिदेशः ।—

एतामेव क्रियां कुर्य्यादशेषां शर्करार्बुदे ॥ ६२ ॥

इति गलगण्ड-गण्डमालाऽपची-ग्रन्थ्यर्बुद-चिकित्सा ।

---

## अथ श्लीपद-चिकित्सा ।

क्रियासूत्रम् ।—

लङ्घनालेपनस्वेद-रेचनै रक्तमोक्षणैः ।
प्रायः श्लेष्महरैरुष्णैः श्लीपदं समुपाचरेत् ॥ १ ॥

धुस्तूरादिप्रलेपः ।—

धुस्तूरैरण्डनिर्गुण्डी-वर्षाभूशिग्रुसर्षपैः ।
प्रलेपः श्लीपदं हन्ति चिरोत्थमपि दारुणम् ॥ २ ॥

---

लेप इत्यादि ।—रम्भामोचकः कदलीकाण्डकः, तस्य भस्म क्षार इत्यर्थः । सरटः कृकलासः । यवजः यवक्षारः ॥ ५९ ॥

स्नुहीत्यादि ।—चत्वारः स्वेदाः । स्नुहीगण्डीरिका स्नुहीकाण्डः । तप्तस्नीहुदण्डेन, तथा तप्तसीसकेन, तथा तप्तलवणेन, तथा पिण्डारकफलमुत्स्विद्य पोट्टलिकां बद्ध्वा स्वेदः कार्य्य इत्यर्थः ॥ ६० ॥

हरिद्रेत्यादि ।—पत्तङ्गं रक्तचन्दनम् ॥ ६१।६२ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां गलगण्ड गण्डमालाऽपची-ग्रन्थ्यर्बुद-चिकित्सा-विवृतिः ।

---

पूर्वोक्तसङ्गत्यैव श्लीपदचिकित्सितमाह—लङ्घनेत्यादि ॥ १।२ ॥

रूपिकामूलप्रलेपः।—

निष्पिष्टमारनालेन रूपिकामूलवल्कलम्।

प्रलेपात् श्लीपदं हन्ति बद्धमूलमपि दृढ़म्॥ ३॥

पिण्डारकतरुचोत्थवन्दाकस्य द्विविधप्रयोगः।—

पिण्डारकतरुसम्भव-वन्दाकशिफा जयति सर्पिषा पीता।

श्लीपदमुग्रं नियतं बद्धा सूत्रेण जङ्घायाम्॥ ४॥

चित्रकादिलेपद्वयम्।—

हितश्चालेपने नित्यं चित्रको देवदारु वा।

सिद्धार्थशिग्रुकल्को वा सुखोष्णो मूत्रपेषितः॥ ५॥

वातश्लीपदे स्नेहादिः शिराविधश्च।—

स्नेहस्वेदोपनाहांश्च श्लीपदेऽनिलजे भिषक्।

कृत्वा गुल्फोपरि शिरां विध्येत् तु चतुरङ्गुले॥ ६॥

पित्तश्लीपदे शिरावेधः पित्तार्बुदादिचिकित्सातिदेशश्च।—

गुल्फस्याधः शिरां विध्येत् श्लीपदे पित्तसम्भवे।

पित्तघ्नीञ्च क्रियां कुर्य्यात् पित्तार्बुदविसर्पवत्॥ ७॥

पित्तश्लीपदे माञ्जिष्ठादिप्रलेपः।—

मञ्जिष्ठां मधुकं रास्नां सहिंस्रां सपुनर्नवाम्।

पिष्ट्वाऽऽरनालैर्लेपोऽयं पित्तश्लीपदशान्तये॥ ८॥

---

निष्पिष्टमित्यादि।—रूपिका अर्कमूलम॥ ३॥

पिण्डारकेत्यादि।—पिण्डारकतरुः स्वनामख्यातः। बद्धा सूत्रेणेति अत्रापि वन्दाक-शिफेति सम्बध्यते; अयमर्थः,—वन्दाकशिफा मा ८, घृत तो २ पेयम्, अथवा श्लीपदाश्रयजङ्घायां रक्तसूत्रेण बन्धनीया॥ ४॥

हितश्चेत्यादि।—गोमूत्रपिष्टास्त्रयो लेपा बोध्याः। सिद्धार्थः श्वेतसर्षपः॥ ५॥

स्नेहेत्यादि सुश्रुतस्य।—स्नेहस्वेदाविह शिराव्यधाङ्गभूतौ, न तु स्वतन्त्रतया स्नेहो देयः, सर्वश्लीपदानां कफप्रधानतया विरूक्षणीयत्वात्। विध्येदिति—अयञ्च गुल्फोपरि पश्चाद्भागे शिराव्यधो रक्तदुष्टौ सत्यामेव कार्य्यः॥ ६॥

पैत्तिकश्लीपदचिकित्सामाह, गुल्फस्याध इत्यादि सुश्रुतस्य।—पित्तघ्नीञ्चेति चकारात् कफघ्नीञ्च क्रियां कुर्य्यादिति ज्ञेयं, श्लीपदानां कफप्रधानत्वात्॥ ७॥

मञ्जिष्ठामित्यादि।—हिंस्रा कालाकड़ाभेदः॥ ८॥

श्लेष्मश्लीपदे शिरावेधः कफघ्नकषायप्रयोगोपदेशश्च ।—

शिरां सुविदितां विध्येदङ्गुष्ठे श्लेष्मश्लीपदे ।
मधुयुक्तानि चाभीक्ष्णं कषायाणि पिबेन्नरः ॥ ९ ॥

पूतीकरञ्जरसः ।—

पिबेत् सर्षपतैलेन श्लीपदानां निवृत्तये ।
पूतीकरञ्जच्छदजं रसं वाऽपि यथाबलम् ॥ १० ॥

पुत्रञ्जीवकरसः वृद्धदारकचूर्णञ्च ।—

अनेनैव विधानेन पुत्रञ्जीवकजं रसम् ।
काञ्जिकेन पिबेच्चूर्णं मूत्रैर्वा वृद्धदारजम् ॥ ११ ॥

गुडहरिद्राप्रयोगः ।—

रजनीं गुडसंयुक्तां गोमूत्रेण पिबेन्नरः ।
वर्षोत्थं श्लीपदं हन्ति दद्रुकुष्ठं विशेषतः ॥ १२ ॥

एरण्डतैलभृष्टहरीतकीप्रयोगः ।—

गन्धर्वतैलभृष्टां हरीतकीं गोजलेन यः पिबति ।
श्लीपदबन्धनमुक्तो भवत्यसौ सप्तरात्रेण ॥ १३ ॥

तैलकाञ्जिकप्रयोगः ।—

धान्याम्लं तैलसंयुक्तं कफवातविनाशनम् ।
दीपनञ्चामदोषघ्नमेतत् श्लीपदनाशनम् ॥ १४ ॥

शिरामित्यादि सुश्रुतस्य ।—सुविदितामिति—व्यक्ताम् । अङ्गुष्ठे इति—पादाङ्गुष्ठसन्निधौ क्षिप्रमर्मण उपरि द्व्यङ्गुले शिराव्यधः कार्य्यः, क्षिप्रमर्मव्यधाद्धि मरणं स्यादिति ; तदुक्तं सुश्रुते—"पादाङ्गुष्ठाङ्गुल्योर्मध्ये क्षिप्रं नाम मर्म, तत्र विद्धस्याक्षेपकेण मरणम्" ( शा० ६ अ० ) इति । कषायाणीति—कफहरारग्वधादिगण-मुष्ककादिगणकृतानि ॥ ९ ॥

पिबेदित्यादि ।—पूतीकरञ्जच्छदजमिति—कण्टकीकरञ्जपत्रस्वरसं पलमानं कटुतैलाद्यं प्रक्षिप्य पिबेत् ॥ १० ॥

अनेनेत्यादि ।—अनेनैव विधानेनेति—कटुतैलप्रक्षेपेणेत्यर्थः ॥ ११।१२ ॥

गन्धर्वतैलेत्यादि ।—गन्धर्वतैलम् एरण्डतैलम् । गोजलेन गोमूत्रेण ॥ १३ ॥

धान्याम्लमित्यादि ।—तैलसंयुक्तमिति अत्र तैलं कटुतैलम् ॥ १४ ॥

श्लीपदज्वरे माषिण्डरीप्रयोगः।—

गोधावतीमूलयुक्तां खादन्माषिण्डरीं नरः।
जयेत् श्लीपदकोपोत्थं ज्वरं सद्यो न संशयः॥ १५॥

तैलगुडूच्योप्रयोगः।—

श्लीपदघ्नो रसोऽभ्यासात् गुडूच्यास्तैलसंयुतः॥ १६॥

समवृद्धदारकचूर्णम्।—

त्रिकटु त्रिफला चव्यं दार्वीवरुणगोक्षुरम्।
अलम्बुषां गुडूचीञ्च समभागानि चूर्णयेत्॥ १७॥
सवर्वां चूर्णमाहृत्य वृद्धदारस्य तत्समम्।
काञ्जिकेन च तत् पेयमक्षमात्रं प्रमाणतः॥ १८॥
जीर्णे चापरिहारं स्याद्भोजनं सार्वकामिकम्।
नाशयेत् श्लीपदं स्थौल्यमामवातञ्च दारुणम्॥
कुष्ठगुल्मानिलहरं वातश्लेष्मज्वरापहम्॥ १९॥

पिप्पल्याद्यं चूर्णम्।—

पिप्पलीत्रिफलादारु-नागरं सपुनर्नवम्।
भागैर्द्विपलिकैरेषां तत्समं वृद्धदारकम्॥ २०॥
काञ्जिकेन पिबेच्चूर्णं कर्षमात्रं प्रमाणतः।
जीर्णे चापरिहारं स्याद्भोजनं सार्वकामिकम्॥ २१॥
श्लीपदं वातरोगांश्च हन्यात् प्लीहानमेव च।
अग्निञ्च कुरुते घोरं भस्मकञ्च नियच्छति॥ २२॥

गोधावतीत्यादि।—गोधावती गोहालिया लता, एतन्मूलस्यैको भागः, माषकलायस्य तु भागत्रयम्॥ १५॥

श्लीपदघ्न इत्यादि।—गुडूच्या रसः इति—स्वरसः क्वाथो वा। तैलमत्र कटुतैलम्॥ १६॥

त्रिकट्वित्यादि।—अलम्बुषा मुण्डीरी। वृद्धदारस्य तत्सममिति—त्रिकट्वादि-सर्वचूर्णसमं वृद्धदारस्य चूर्णमित्यर्थः। सार्वकामिकमिति—यथेच्छमित्यर्थः॥१७—१९॥

पिप्पलीत्यादि।—अग्निञ्च कुरुते इति विरेकेण पित्तहरत्वात्। अन्ये तु—भस्माग्निं घोरं कुरुते अतो भस्मकं नियच्छति प्रयच्छतीत्याहुः॥ २०—२२॥

कृष्णाद्यमोदकः ।—

कृष्णाचित्रकदन्तीनां कर्षमर्द्धपलं पलम् ।
विंशतिश्च हरीतक्या गुड़स्य तु पलद्वयम् ॥
मधुना मोदकं खादेत् श्लीपदं हन्ति दुस्तरम् ॥ २३ ॥

सौरेश्वरघृतम् ।—

सुरसो देवकाष्ठञ्च त्रिकटुत्रिफले तथा ।
लवणान्यथ सर्वाणि विड़ङ्गान्यथ चित्रकम् ॥ २४ ॥
चविका पिप्पलीमूलं गुग्गुलुर्हवुषा वचा ।
यवाग्रजञ्च पाठा च शट्येला वृद्धदारकम् ॥ २५ ॥
कल्कैश्च कार्षिकैरेभिर्घृतप्रस्थं विपाचयेत् ।
दशमूलीकषायेण धान्ययूषद्रवेण च ॥ २६ ॥
दधिमण्डसमायुक्तं प्रस्थं प्रस्थं पृथक् पृथक् ।
पक्वं स्यादुद्धृतं कल्कात् पिबेत् कर्षद्वयं हविः ॥ २७ ॥
श्लीपदं कफवाताढ्यं मांसरक्ताश्रितञ्च यत् ।
मेदःाश्रितञ्च पित्ताढ्यं हन्यादेव न संशयः ॥ २८ ॥
अपचीं गण्डमालाञ्च अन्त्रवृद्धिं तथाऽर्बुदम् ।
नाशयेत् ग्रहणीदोषं श्वयथुं गुदजानि च ॥ २९ ॥

---

कृष्णेत्यादि ।—कृष्णादीनां कर्षादिमानं यथाक्रमं ज्ञेयम् । विंशतिश्च हरीतक्य इत्याकृतिमानात् । मध्वत्र मोदककरणोचितं देयम् ॥ २३ ॥

सुरस इत्यादि ।—सौरेश्वरघृते सुरसः पर्णासः, वृन्दलिखिततन्त्रान्तरसंवादात् निर्गुण्डी वा । दशमूलीकषायस्य मिलित्वा प्रस्थः, जलं चतुर्गुणं, शेषं प्रस्थमेकम् । धान्ययूषद्रवेण काञ्जिकेन, न तु धन्याककाथेन ; धान्याम्लेति तन्त्रान्तरपाठात् व्यवहाराभावाच्च । ननु कयोर्द्रवयोः कियन्मानं ग्राह्यम् ? इत्याह, प्रस्थमित्यादि । सौरेश्वरमिति—इन्द्राणी निर्गुण्डीपर्य्यायवाची, तेन सुरेश्वरा निर्गुण्डी, तत्कृतत्वात् सौरेश्वरमिति संज्ञा । जीवकेनेति—जीवो वृहस्पतिः, स्वार्थे कः ; अन्यत्राप्युक्तं— "द्राक्षा दुरालभा कृष्णा वृगा कर्कटकी तथा । एषां श्लक्ष्णानि चूर्णानि योजयेन्मधु-

परमाग्निकरं हृद्यं कोष्ठक्रिमिविनाशनम्।
घृतं सौरेश्वरं नाम श्लीपद श्रान्त सेवितम्॥
जीवकेन कृतं ह्येतद्रोगानीकविनाशनम्॥ ३०॥

विडङ्गाद्यं तैलम्।—

विडङ्गमरिचार्केषु नागरे चित्रके तथा।
भद्रदार्वेलकाख्येषु सर्वेषु लवणेषु च॥
तैलं पक्कं पिबेद्वाऽपि श्लीपदानां निवृत्तये॥ ३१॥

इति श्लीपद-चिकित्सा।

---

# अथ विद्रधि-चिकित्सा।

क्रियासूत्रम्।—

जलौकापातनं शस्तं सर्वस्मिन्नेव विद्रधौ।
मृदुर्विरेको लघ्वन्नं स्वेदः पित्तोद्भवं विना॥ १॥

वातविद्रधौ वातघ्नद्रव्यप्रलेपोपदेशः।—

वातघ्नमूलकल्कैस्तु वसातैलघृताप्लुतैः।
सुखोष्णो बहलो लेपः प्रयोज्यो वातविद्रधौ॥ २॥

---

सर्पिषा॥ कासश्वासज्वरहरं विशेषात् तमकं जयेत्। निर्मितं जीवकेनेदं कुमाराणां सुखावहम्॥" इति॥ २४—३०॥

विडङ्गेत्यादि।—विडङ्गाद्यतैले भद्रदारु देवदारु। एलकाख्यः छोगला, एलवालुकमित्यन्ये, पेटिकेत्यपरे। विडङ्गादीनां कल्को द्रवन्तु जलं चतुर्गुणम्॥ ३१॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां श्लीपद-चिकित्सा-विवृतिः।

---

पाकुक्रमत्वादेव विद्रधिचिकित्सोच्यते, जलौकेत्यादि।—मृदुर्विरेक इति बचनात् मृदुविरेको बहुधा कार्य्यः। गम्भीरधातुगतदोषकृतत्वात् विद्रधिरिति वदन्ति॥ १॥

वातघ्नेत्यादि सुश्रुतस्य।—वातघ्नमूलं दशमूलम्। वातघ्नस्थाने सुरङ्गीति पाठे —सुरङ्गी शोभाञ्जनकः॥ २॥

वातविद्रधौ शिग्रुयुक्तस्वेदाद्युपदेशः ।—

स्वेदोपनाहाः कर्त्तव्याः शिग्रुमूलसमन्विताः ॥ ३ ॥

विद्रधिविलयने यवादिप्रलेपः ।—

यवगोधूममुद्गैश्च सिद्धपिष्टैः प्रलेपयेत् ।
विलीयते क्षणेनैवमपक्वश्चैव विद्रधिः ॥ ४ ॥

वातविद्रधौ गुग्गुलेरण्डतैलप्रयोगौ ।—

पुनर्नवादारुविश्व-दशमूलाभयाम्भसा ।
गुग्गुलुं रुबुतैलं वा पिबेन्मारुतविद्रधौ ॥ ५ ॥

पित्तविद्रधौ शर्करादि-पयस्यादिप्रलेपौ ।—

पैत्तिकं शर्करालाजा-मधुकैः शारिवायुतैः ।
प्रदिह्यात् क्षीरपिष्टैर्वा पयस्योशीरचन्दनैः ॥ ६ ॥

पित्तविद्रधौ त्रिफलाक्वाथः पञ्चवल्कललेपश्च ।—

पिबेद्वा त्रिफलाक्वाथं त्रिवृत्कल्काक्षसंयुतम् ।
पञ्चवल्कलकल्केन घृतमिश्रेण लेपनम् ॥ ७ ॥

पित्तविद्रधौ यष्ट्याह्वादि लेपः ।—

यष्ट्याह्वशारिवादूर्वा-नलमूलैः सचन्दनैः ।
क्षीरपिष्टैः प्रलेपस्तु पित्तविद्रधिशान्तये ॥ ८ ॥

श्लेष्मविद्रधौ इष्टकादिस्वेदः ।—

इष्टकासिकतालोह-गोशकृत्तुषपांशुभिः ।
मूत्रैरुष्णैश्च सततं स्वेदयेत् श्लेष्मविद्रधिम् ॥ ९ ॥

---

स्वेदेत्यादि ।—स्वेदो वेशवारादिभिः ; यदाह सुश्रुतः,—"वेशवारैः सकृशरैः पयोभिः पायसैस्तथा । स्वेदयेच्चापि सततम्—" (चि० १६ अ०) इति । उपनाहोऽपि तत्रैवोक्तः ; यथा—"सानूपौदकमांसस्तु काकोल्यादिः सतर्पणः । स्नेहाम्लसिद्धो लवणः प्रयोज्यश्चोपनाहने ॥" (चि० १६ अ० ) इति ॥ ३ ॥

यवेत्यादि ।—सिद्धपिष्टैरिति—उत्स्विन्नपिष्टैः ॥ ४ ॥

पुनर्नवेत्यादि ।—अम्भसा क्वाथेन ॥ ५ ॥

पैत्तिकमित्यादि सुश्रुतस्य ।—योगद्वयेऽपि क्षीरं पेषणार्थम् । शारिवा अनन्त-मूलम् । पयस्या क्षीरकाकोली ॥ ६—८ ॥

इष्टकेत्यादि सुश्रुतस्य ।—अत्र मूत्रपिष्टैरिति प्रमादपाठः ; किन्तु मूत्रैरुष्णै-

श्लेष्मविद्रधौ दशमूल्यादि-परिषेचनद्वयम्।—

दशमूलीकषायेण सस्नेहेन रसेन वा।
शोथं व्रणं वा कोष्णेन सशूलं परिषेचयेत्॥ १०॥

श्लेष्मविद्रधौ गुग्गुलोर्द्विविधप्रयोगः।—

त्रिफलाशिग्रुवरुण-दशमूलाम्भसा पिबेत्।
गुग्गुलुं मूत्रयुक्तं वा विद्रधौ कफसम्भवे॥ ११॥

रक्तागन्तुविद्रध्योः पित्तविद्रधिक्रियाऽतिदेशः।—

पित्तविद्रधिवत् सर्वां क्रियां निरवशेषतः।
विद्रध्योः कुशलः कुर्य्याद्रक्तागन्तुनिमित्तयोः॥ १२॥

शोभाञ्जनक्वाथः।—

शोभाञ्जनकनिर्य्यूहो हिङ्गुसैन्धवसंयुतः।
अचिराद्विद्रधीन् हन्ति प्रातः प्रातर्निषेवितः॥ १३॥

अन्तर्विद्रधौ शिग्रुमूलस्वरसः।—

शिग्रुमूलं जले धौतं दरपिष्टं प्रगालयेत्।
तद्रसं मधुना पीत्वा हन्त्यन्तर्विद्रधिं नरः॥ १४॥

अपक्वविद्रधौ वर्षाभ्वादिक्वाथः।—

श्वेतवर्षाभुवो मूलं मूलं वरुणकस्य च।
जलेन क्वथितं पीतमपक्वं विद्रधिं जयेत्॥ १५॥

---

रित्येव पाठः सुश्रुते पठ्यते; "उष्णैश्च मूत्रैर्द्रवस्वेदः" इति टीकाकर्त्तां व्याख्या। अन्ये तु—लोहं लोहचूर्णं, गोशकृत् गोमयम्, एभिरिष्टकाचूर्णादिभिर्मूत्रपिष्टैरेरण्डपत्रबद्धैः स्वेद इति व्याख्याय मूत्रपिष्टैरिति पाठमेव स्वीकुर्वन्ति॥ ९॥

दशमूलीत्यादि।—सस्नेहेनेति पूर्वेण परेण च सम्बध्यते। रसेनेति—मांसरसेन॥ १०।११॥

पित्तेत्यादि सुश्रुतस्य।—विपुलवचनस्यापि सर्वशब्दस्य दृष्टत्वात् पुनर्निरवशेषग्रहणम् कृत्युक्तं कृतजलेपादिविध्यतिदेशार्थम्॥ १२।१३॥

शिग्रुमूलमित्यादि।—दरपिष्टम् ईषत्पिष्टम्॥ १४।१५॥

अन्तर्विद्रधौ वरुणादिक्वाथः ।—

वरुणादिगणक्वाथमपक्वेऽभ्यन्तरोत्थिते ।
ऊषकादिप्रतीवापं पिबेत् संशमनाय वै ॥ १६ ॥

अन्तर्विद्रधौ पाठाप्रयोगः ।—

शमयति पाठामूलं क्षौद्रयुतं तण्डुलाम्बुना पीतम् ।
अन्तर्भूतं विद्रधिमुद्धतमाश्वेव मनुजस्य च ॥ १७ ॥

पक्वविद्रधौ व्रणचिकित्साऽतिदेशः ।—

अपक्वे त्वेतदुद्दिष्टं पक्वे तु व्रणवत् क्रिया ॥ १८ ॥

स्रुतेऽन्तर्विद्रधौ वरुणादिप्रयोगः मधुशिग्रुप्रयोगश्च ।—

स्रुतेष्यूर्द्ध्वमधश्चैव मैरेयाम्लसुरासवैः ।
पेयो वरुणकादिस्तु मधुशिग्रुद्रुमोऽथ वा ॥ १९ ॥

प्रियङ्ग्वादि तैलम् ।—

प्रियङ्गुधातकीलोध्रं कट्फलं तिनिशत्वचम् ।
एतैस्तैलं विपक्तव्यं विद्रधौ रोपणं परम् ॥ २० ॥

इति विद्रधि-चिकित्सा ।

---

वरुणादीत्यादि सुश्रुतस्य ।—वरुणाद्यूषकादिगणौ सौश्रुतौ ॥ १६—१८ ॥

स्रुतेऽपीत्यादि सुश्रुतस्य ।—ऊर्द्ध्वं स्रवतामपि कादाचित्की साध्यता चिकित्साभिधानादनुमन्तव्या । मैरेयं मद्यविशेषः । अम्लं काञ्जिकम् । मधुशिग्रुद्रुम इति—रक्तशोभाञ्जनवृक्षस्य मूलम् ॥ १९ ॥

प्रियङ्ग्वित्यादि सुश्रुतस्य ।—तिनिशः अतिमुक्तकः । त्वचमिति निर्देशात् त्वचशब्दोऽकारान्तो नपुंसकलिङ्गोऽप्यस्तीति गम्यते । चन्द्राटे तु—"तिनिशं धवम्" इति पाठो दृश्यते । "तिनिशैस्त्वचम्" इति पाठान्तरे—तिनिशैस्तिनिश एव । प्रियङ्ग्वादि कल्कद्रव्य, जलं चतुर्गुणम् । एतच्च तैलं मज्जमवविद्रधौ सुश्रुते पठ्यते ॥ २० ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां विद्रधि-चिकित्सा-विवृतिः ।

# अथ व्रणशोथ-चिकित्सा।

सप्त क्रमाः।—

आदौ विम्लापनं कुर्य्याद्द्वितीयमवसेचनम्।
तृतीयमुपनाहञ्च चतुर्थीं पाटनक्रियाम् ॥ १ ॥
पञ्चमं शोधनञ्चैव षष्ठं रोपणमिष्यते।
एते क्रमा व्रणस्योक्ताः सप्तमो वैकृतापहः ॥ २ ॥

वातशोथे मातुलुङ्गादिलेपः।—

मातुलुङ्गाग्निमन्थौ च भद्रदारु महौषधम्।
अहिंस्रा चैव रास्ना च प्रलेपो वातशोथहा ॥ ३ ॥

वातशोथे शाखोटकप्रलेपः।—

कल्कः काञ्जिकसम्पिष्टः स्निग्धः शाखोटकत्वचः।
सुपर्ण इव नागानां वातशोथविनाशनः ॥ ४ ॥

पित्तशोथे दूर्वादिप्रलेपः।—

दूर्वा च नलमूलञ्च मधुकं चन्दनं तथा।
शीतलाश्च गणाः सर्वे प्रलेपः पित्तशोथहा ॥ ५ ॥

---

विद्रध्युक्तसंवादात् प्रायेण तुल्योपक्रमत्वाच्चानन्तरं व्रणशोथचिकित्सामाह, आदौ विम्लापनमित्यादि सुश्रुतस्य।—अनेन च वाक्येन चिकित्सितस्थानवक्ष्यमाण-षष्ट्युपक्रमाणामन्तर्भावेण सप्तत्वं सुखावबोधार्थं सूत्रस्थाने सुश्रुतेनोच्यते; तेन विम्लापनमिह न केवलमङ्गुष्ठादिमर्दनमात्रं परिभाषितं ग्राह्यं, किन्तु विम्लाप्यतेऽनेनेति व्युत्पत्त्या बहिःपरिमार्जनरूपे शमने शोथविलयनकरे प्रलेप-परिषेकाभ्यङ्गादावपि वर्त्तते। अवसेचनमपि शोधनरूपेऽन्तःपरिमार्जने वमनविरेकरक्तमोक्षणादौ च वर्त्तते। उपनाहोऽपि स्वेदे पाचनपिण्डे च वर्त्तते। एवमपरेऽप्युपक्रमाः शोथेषु यथायोग-मन्तर्भाव्याः, किंवा षष्ट्युपक्रमेषु प्राधान्यात् सप्त विम्लापनादयः कथ्यन्ते। विम्लापना-दयो भाविव्रणविघातप्रयोजनतया व्रणस्येत्युक्तम् ॥ १।२ ॥

मातुलुङ्गेत्यादि सुश्रुतस्य।—मातुलुङ्गस्य मूलम्। अहिंस्रा कुड़कराणि, कालाकड़ाभेदः ॥ ३ ॥

कल्क इत्यादि।—अत्र स्निग्ध इति घृतेन ॥ ४ ॥

दूर्वेत्यादि।—शीतलाश्च गणा इति—काकोल्याद्युत्पलादिन्यग्रोधादयश्च सौश्रुताः ॥ ५ ॥

पित्तशोथे न्यग्रोधादिप्रलेपः।—

न्यग्रोधोडुम्बराश्वत्थ-प्लक्षवेतसवल्कलैः।
ससर्पिष्कैः प्रलेपः स्याच्छोथनिर्वापणः स्मृतः॥ ६॥

आगन्तुजरक्तजशोथयोः पित्तशोथक्रियाऽतिदेशः।—

आगन्तौ शोणितोत्थे च एष एव क्रियाक्रमः॥ ७॥

श्लेष्मशोथे अजगन्धादिप्रलेपः।—

अजगन्धाऽश्वगन्धा च काला सरलया सह।
एकैषिकाऽजशृङ्गी च प्रलेपः श्लेष्मशोथहा॥ ८॥

वातश्लेष्मशोथे पुनर्नवादिप्रलेपः।—

पुनर्नवादारुशिग्रु-दशमूलमहौषधैः।
कफवातकृते शोथे लेपः कोष्णो विधीयते॥ ९॥

प्रलेपदानविधिः।—

न रात्रौ लेपनं दद्याद्धृतञ्च पतितं तथा।
न च पर्य्युषितं शुष्यमाणं नैवावधीरयेत्॥ १०॥

---

न्यग्रोधेत्यादि।—शोथनिर्वापण इति—शोथशमनः॥ ६॥

आगन्तावित्यादि।—एष एवेति—पैत्तिकव्रणशोथविहितः॥ ७॥

अजगन्धेत्यादि।—अजगन्धा छागलगन्धेति भानुमती, अन्ये यमानिकेत्याहुः। काला अहिंस्रा, कालाकडाभेदः। सरला सरल एव। एकैषिका त्रिवृदिति भानुमती; अन्ये तु—सरला त्रिवृत्, एकैषिका पाठेत्याहुः। अजशृङ्गी कर्कटशृङ्गीति भानुमती चन्द्रिका च॥ ८-९॥

न रात्रावित्यादि।—न रात्रौ लेपनं दद्यात् इत्यादिना निषेधमुखेन विध्युपदर्शनं रात्रौ लेपनस्य सर्वथा निषेधार्थं, प्रलेपनिषेधेन प्रदेहादिविधानं रात्रावपि सूच्यते; तेन यः प्रदेहो वातकफविषयः, स रात्रावपि देयोऽविरुद्धत्वात्, पाचनलेपनन्तु पाचकत्वादेव दातव्यम्; तथा पित्तजे वातपित्तजे च शतधौतघृताभ्यङ्गः, तथा क्षीरशीतजलादिसेकश्च निर्वापणतया दीयते एव, तथा व्रणकल्कोऽप्यहोरात्रावस्थायि-त्वाद्विहित एव; उक्तञ्च वैतरणे—"सर्वशस्तु निशां प्राप्य लेपनन्तु निवर्त्तयेत्। क्षीर-सर्पिःप्रलेपन्तु हित्वा पक्काद्यं तथा॥" इति। रात्रौ लेपदाने पुनः सुश्रुतेन दोष उक्तः; यथा—"न चालेपं रात्रौ प्रयुञ्जीत, मा भूच्छैत्यपिहितोष्मणस्तदनिर्गमादिकार-

शुष्यमाणमुपेक्षेत प्रदेहं पीड़नं प्रति।
न चापि मुखमालिम्पेत् तेन दोषः प्रसिच्यते ॥ ११ ॥

कठिनशोथे विम्लापनविधिः।—

स्थिरान् मन्दरुजः शोथान् स्नेहैर्वातकफापहैः।
अभ्यज्य स्वेदयित्वा च वेणुनाड्या ततः शनैः।
विम्लापनार्थं मृद्नीयात् तलेनाङ्गुष्ठकेन वा ॥ १२ ॥

महाशोथे रक्तमोक्षणोपदेशः।—

रक्तावसेचनं कुर्य्यादादावेव विचक्षणः।
शोथे महति संरब्धे वेदनावति च व्रणे ॥ १३ ॥

---

प्रर्शितः" (सू० १८ अ०) इति। स्वाविस्राभाविकशैत्यात् संवृतरोमकूपत्वाच्च पुनरालेपनेनापि व्रणोष्मा बहिर्निर्गच्छन् अवरुद्धो विरुद्धः सन्नितरां व्रणे व्रणशोथे वा दाहपाकौ कुर्य्यादिति भावः। प्रलेपप्रदेहयोस्तु भेदः सुश्रुतेन प्रदर्शितो यथा— "प्रलेपः शीतस्तनुरविशोषी विशोषी च" (सू० १८ अ०)। विशोषीति पीड़यितव्ये विशोषीत्यर्थः। "प्रदेहस्तूष्णः शीतो वा बहलो बहुरविशोषी च" (सू० १८ अ०)। बहल इति—आर्द्रमहिषचर्मप्रमाणोत्सेधः प्रलेपः, प्रदेहस्तु प्रलेपापेक्षया बहलः। शोथे लेपश्च लोमाभिमुखं देयः; यदाह सुश्रुतः,— "तत्र प्रतिलोममालिम्पेत् न चानुलोमम्; प्रतिलोमे हि सम्यगौषधमवतिष्ठते अनुप्रविशति च लोमकूपान् स्वेदवाहिभिः शिरामुखैर्वीर्यं प्राप्नोति" (सू० १८ अ०) इति। प्रतिलोममिति—लोमाभिमुखम्। न च नैवेति प्रतिषेधद्वयेन अवधीरयेदेव इत्यर्थः। अवधीरणञ्च दूरीकरणम्। तन्त्रान्तरेऽप्युक्तं—"लेपस्योद्धृत्य दातव्यो न यावच्छुष्कतां व्रजेत्। गुणवान् न भवेच्छुष्को भूयो दोषं करोति सः॥" इति। अस्यैवापवादमाह, शुष्यमाणमित्यादि।—उपेक्षेतेति—यावच्छुष्कतां न प्रयाति तावत् न दूरीकुर्य्यादित्यर्थः। पीड़नं प्रतीति—व्रणपीड़नमुद्दिश्य यो लेप इत्यर्थः, व्रणपीड़नलेपस्तु स एव, यः शुष्कः सन् व्रणमुखं पीड़यित्वा पूयं स्रावयति। तेनेति— मुखेन। दोष इति—पूयः ॥ १०।११ ॥

कठिनशोथे पारिभाषिकविम्लापनमाह, स्थिरानित्यादि सुश्रुतस्य।—वेणुनाड्या वेणुदण्डेन। तलेन करतलेन ॥ १२ ॥

रक्तावसेचनमित्यादि।—आदावेवेति—उत्पन्नमात्रे; सुश्रुतेऽप्युक्तम्—"अचिरो-

अचिरजातशोथे रक्तमोक्षणोपदेशः।—

निवारणाय पाकस्य वेदनोपशमाय च।
अचिरोत्पतिते शोथे कार्य्यं शोणितमोक्षणम्॥ १४॥

रक्तमोक्षणस्य फलम्।—

यो न याति शमं लेपस्वेदसेकापतर्पणैः।
सोऽपि नाशं व्रजत्याशु शोथः शोणितमोक्षणात्॥ १५॥

रक्तमोक्षणस्य उपयोगिता।—

एकतश्च क्रियाः सर्वा रक्तमोक्षणमेकतः।
रक्तं हि व्यम्लतां याति तच्चेन्नास्ति न चास्ति रुक्॥ १६॥

पूर्वक्रियायां शोथाशान्तौ क्रियान्तरोपदेशः।—

स चेदेवमुपक्रान्तः शोथो न प्रशमं व्रजेत्।
तस्योपनाहैः पक्वस्य पाटनं हितमुच्यते॥ १७॥

पाकाय शक्तुपिण्डिकोपनाहः।—

तैलेन सर्पिषा वाऽपि ताभ्यां वा शक्तुपिण्डिका।
सुखोष्णा शोथपाकार्थमुपनाहः प्रशस्यते॥ १८॥

---

त्पतिते शोथे कार्य्यं शोणितमोक्षणम्" (चि० १ अ०) इति। शोथे इति—व्रणपूर्वरूपशोथे। संरब्धे इति—शोथे, एतच्च व्रणे इत्यनेन योज्यम्। शोथे इत्युक्त्वाऽपि पुनः संरब्धे इति वचनम् एतादृशसशोथे व्रणे विशेषेण रक्तस्रावविधानार्थम्; सुश्रुतेऽप्युक्तं—"सशोथे कठिने स्थाने सरक्ते वेदनावति। संरब्धे विषमे वाऽपि व्रणे विस्रावणं हितम्॥ सविषे च विशेषेण जलौकाभिः पदैस्तथा॥" (चि० १ अ०) इति। अन्ये तु—पच्यमानावस्थव्रणविषयकं संरब्धे इत्यादिवचनं ज्ञेयमित्याहुः॥ १३।१४॥

उपक्रमान्तरापेक्षया रक्तमोक्षणस्य प्रकर्षमाह, यो न यातीत्यादि॥ १५।१६॥

स चेदित्यादि।—उपनाहैरिति—शोथावबद्धलेपैः। पक्वस्य पाटनमिति दारणौषधैः शस्त्रैर्वा॥ १७॥

तानेवोपनाहानाह, तैलेनेत्यादि।—तैलेन वाते, कफे च सर्पिषा, पित्ते रक्ते च ताभ्यां वेति—तैलसर्पिर्भ्यां मिलिताभ्याम्। चतुर्ष्वेवेति (?) दोषभेदेन विकल्पो ज्ञेय इत्याहुः॥ १८॥

तिलाद्युपनाहः।—

सतिला सातसीबीजा दध्यम्ला शक्तुपिण्डिका।
सकिण्वकुष्ठलवणा शस्ता स्यादुपनाहने ॥ १९ ॥

बालादीनां पक्वशोथे पाचनभेदनम्।—

बालवृद्धासहक्षीण-भीरूणां योषितामपि।
मर्मोपरि च जातं तु पक्वे शोथे च दारुणे ॥ २० ॥
गवां दन्तं जले घृष्टं बिन्दुमात्रं प्रलेपनात्।
अत्यर्थकठिने चापि शोथे पाचनभेदनम् ॥ २१ ॥

दारणे सर्पनिर्मोकः।—

कटुतैलान्वितैर्लेपात् सर्पनिर्मोकभस्मभिः।
चयः शाम्यति गण्डस्य प्रकोपः स्फुटति द्रुतम् ॥ २२ ॥

दारणे चिरविल्वादिः।—

चिरविल्वाग्निकौ दन्तो चित्रको हयमारकः।
कपोतकङ्कगृध्राणां पुरीषाणि च दारणम् ॥ २३ ॥

दारणे क्षारः।—

क्षारद्रव्याणि वा यानि क्षारो वा दारणः परः ॥ २४ ॥

---

सतिलेत्यादि—किण्व सुराबीजम् ॥ १९—२१ ॥

कटुतैलेत्यादि।—चय इति—उपचयः। गण्डस्य व्रणस्य। प्रकोप इति—प्रकोपहेतुः पूयरूपो दोषः ॥ २२ ॥

चिरविल्वेत्यादि सुश्रुतस्य।—चिरविल्वः वृहत्करञ्जः। अग्निकः लाङ्गलकी। हयमारकः करवीरः, एषां मूलं वृद्धवाग्भटसंवादात्; एते च चिरविल्वादयो व्यस्ताः समस्ता वा योज्याः। एतत् सर्वं दारणं सुकुमारविषयत्वेनोक्तम् ॥ २३ ॥

असुकुमारविषयमाह, क्षारेत्यादि।—क्षारद्रव्याणि क्षारोत्पादनद्रव्याणि मुष्कक-पलाशादीनीत्यर्थः। क्षारो वेति—तद्व्यक्ततः; किन्तु वाग्भटे चरके च क्षारकर्म क्षारद्रव्यरूपञ्च दारणं सुकुमारविषयत्वेनैवोक्तम्, असुकुमारविषयन्तु शस्त्रमेवेति; यथा—"सुपक्के पिण्डिते शोथे पीडनैरुपपीडिते। दारणं दारणार्हस्य सुकुमारस्य चेष्यते ॥ गुग्गुल्वतसीगोदन्त-स्वर्णक्षीरीकपोतविट्। क्षारौषधानि क्षाराश्च पक्वशोथ-प्रभेदनाः ॥" (वा० उ० २५ अ०) इति। तथा चरकेऽपि—"उमाऽथ गुग्गुलुः सौदं •

पीड़ने पिच्छिलद्रव्याणि यवादीनि च।—

द्रव्याणां पिच्छिलानान्तु त्वङ्मूलानि निपीड़नम्।
यवगोधूममाषाणां चूर्णानि च समासतः॥ २५॥

अशुद्धशुद्धव्रणयोः प्रक्षालने पटोलपत्रादि-न्यग्रोधादिक्वाथौ।—

ततः प्रक्षालनं क्वाथः पटोलीनिम्बपत्रजः।
अविशुद्धे विशुद्धे च न्यग्रोधादित्वगुद्भवः॥ २६॥

वातादिजे सर्वकर्मसु क्रमात् दशमूलन्यग्रोधाद्यारग्वधादयः।—

पञ्चमूलद्वयं वाते न्यग्रोधादिश्च पैत्तिके।
आरग्वधादिको योज्यः कफजे सर्वकर्मसु॥ २७॥

शोधने तिलाष्टकः।—

तिलकल्कः सलवणो द्वे हरिद्रे त्रिवृद्घृतम्।
मधुकं निम्बपत्राणि लेपः स्यात् व्रणशोधनः॥ २८॥

दुष्टव्रणशोधने निम्बपत्रादिलेपः।—

निम्बपत्रं तिला दन्ती त्रिवृत् सैन्धवमाक्षिकम्।
दुष्टव्रणप्रशमनो लेपः शोधनकेशरौ॥ २९॥

---

पयो दक्षकपोतयोः। विट् पलाशभवः क्षारो हेमक्षीरी मुकूलकः॥ इत्युक्तो भेषजगणः पक्वशोथप्रभेदनः। सुकुमारस्य कक्षस्य शस्त्रन्तु परमुच्यते॥" (चि० द्विव्रणी०) इति। अत्र सुकुमारस्येति पूर्वेण सम्बध्यते, कक्षस्येत्यत्रासुकुमारस्य शस्त्रं परं भेदनमिति सम्बन्ध इति दीपिका च। तस्मात् क्षारद्रव्यं क्षारश्च सुकुमारविषयेऽपि ज्ञेयः॥ २४॥

पीड़नद्रव्याण्याह, द्रव्याणामित्यादि।—पिच्छिलानामिति—शेलुशाल्मलीप्रभृतीनाम्। इदञ्च पीड़नं मर्मादिसमीपस्थसूक्ष्ममुखव्रणविषयं ज्ञेयम्; उक्तं हि वाग्भटे—"पूयगर्भानणुद्वारान् सोत्सङ्गान् मर्मगानपि। निःस्नेहैः पीड़नद्रव्यैः समन्तात् परिपीड़येत्॥" (उ० २५ अ०) इति॥ २५॥

तत इत्यादि।—पटोलीपत्रं पटोलपत्रमेव। अविशुद्धे इति छेदः। न्यग्रोधादिगणः सौश्रुतः॥ २६॥

पञ्चमूलद्वयमित्यादि।—सर्वकर्मसु प्रक्षालनलेपनादिषु॥ २७॥

तिलकल्क इत्यादि।—वचनमिदं स्पष्टम्॥ २८।२९॥

शोधने शारिवालेपः।—

एकं वा शारिवामूलं सर्वव्रणविशोधनम् ॥ ३० ॥

शोधने पटोल्यादिलेपः।—

पटोलीतिलयष्ट्याह्व-त्रिवृद्दन्तीनिशाद्वयम्।
निम्बपत्राणि चालेपः सपटुर्व्रणशोधनः ॥ ३१ ॥

शोधने त्रिफलादिः।—

त्रिफला खदिरो दार्वी न्यग्रोधादिबलाकुशाः।
निम्बकोलकपत्राणि कषायः शोधने हितः ॥ ३२ ॥

रोपणे तिलादिलेपः।—

अपेतपूतिमांसानां मांसस्थानामरोहताम्।
कल्कः संरोपणः कार्य्यस्तिलानां मधुकान्वितः ॥ ३३ ॥

शोधनरोपणयोः तिलादिलेपद्वयम्।—

निम्बपत्रमधुभ्यान्तु युक्तः संशोधनः स्मृतः।
पूर्वाभ्यां सर्पिषा वाऽपि युक्तश्चाप्युपरोपणः ॥ ३४ ॥

---

एकमित्यादि।—शारिवामूलम् अनन्तमूलम् ॥ ३० ॥

पटोलीत्यादि।—पटोली पटोलपत्रम्। पटु अत्र सैन्धवलवणम् ॥ ३१ ॥

त्रिफलेत्यादि।—न्यग्रोधादीति—"न्यग्रोधोडुम्बराश्वत्थ-कदम्बप्लक्षवेतसाः। करवीरार्ककुटजाः कषाया व्रणरोपणाः॥" (चि० द्विव्रणी०) इत्यनेन शोथव्रणरोपककर्म्मे चरकोक्तं ग्राह्यम्, अस्य योगस्य चरकोक्तत्वात्; किंवा पञ्चवल्कलमेव ग्राह्यम्। निम्बकोलकपत्राणि कोमलनिम्बपत्राणीत्यर्थ इति दीपिका। अन्ये तु—कोलकी बदर इत्याहुः; युक्तमिदं वाग्भटप्रामाण्यात्। अन्ये तु—कुलकपत्राणीति पठित्वा पटोलपत्राणीति व्याचक्षते ॥ ३२ ॥

अपेतेत्यादि वाग्भटस्य।—मधुकान्वितः यष्टिमधुयुक्तः। अत्र "तिलजो मधुसंयुतः" इति पाठः सुश्रुते बहुपुस्तके च दृश्यते, वाग्भटे तु सर्वत्रैव मधुकान्वित इति; उभयमपि प्रमाणं श्रुतिद्वैधवत् ॥ ३३ ॥

निम्बपत्रेत्यादि।—पूर्वोक्तयष्टिमधुयुक्तस्तिलानां कल्क एव निम्बपत्रमधुभ्यां युक्त इत्यर्थः। पूर्वाभ्यामिति—यष्टिमधुयुक्तस्तिलकल्क एव निम्बपत्रमधुभ्यां सर्पिषा च युक्तो रोपणः, अपिशब्दात् शोधनोऽपि भवतीत्यर्थः ॥ ३४ ॥

शोधनरोपणयोः निम्बपत्रादिलेपः यवलेपश्च ।—

निम्बपत्रतिलैः कल्को मधुना व्रणशोधनः ।
रोपणः सर्पिषा युक्तो यवकल्केऽप्ययं विधिः ॥ ३५ ॥

शोधनरोपणयोः निम्बपत्रादिवर्त्तिः तिलकल्कश्च ।—

निम्बपत्रघृतक्षौद्र-दार्वीमधुकसंयुता ।
वर्त्तिस्तिलानां कल्को वा शोधयेद्रोपयेत् व्रणान् ॥ ३६ ॥

रोपणे सप्तपर्णक्षीर-शरपुङ्खालेपौ ।—

सप्तदलदुग्धकल्कः शमयति दुष्टव्रणं प्रलेपेन ।
मधुयुक्ता शरपुङ्खा सर्वव्रणरोपणी कथिता ॥ ३७ ॥

रोपणे मानुषशिरःकपालादिप्रलेपः ।—

मानुषशिरःकपालं तदस्थि वा लेपनं मूत्रेण ।
रोपणमिदं क्षतानां योगशतैरप्यसाध्यानाम् ॥ ३८ ॥

शोधने अभयादिवर्त्तिः ।—

व्रणान् विशोधयेत् वर्त्त्या सूक्ष्मास्यान् सन्धिमर्मगान् ।
अभयात्रिवृतादन्ती-लाङ्गलीमधुसैन्धवैः ॥ ३९ ॥

---

निम्बपत्रतिलैरित्यादि ।—उक्ततिलकल्कविधिं यवकल्केऽप्यतिदिशति, यवकल्केऽप्ययं विधिरिति ॥ ३५ ॥

निम्बपत्रेत्यादि ।—एभिर्द्रव्यैर्वस्त्रमालिप्य वर्त्तिः कार्य्या, वर्त्तिदानविषयो व्रणः सुश्रुते यथा—"अन्तःपूयानणुमुखान् गभीरान् मांससंश्रितान् । शोधनद्रव्य-युक्ताभिर्वर्त्तिभिः समुपाचरेत् ॥" (चि० १ अ०) इति । तिलानां कल्को वेति लेपविषयः ॥ ३६ ॥

सप्तदलेत्यादि ।—सप्तदलः सप्तपर्णः, तस्य क्षीरम् ॥ ३७ ॥

मानुषेत्यादि ।—मानुषशिरःकपालन्तु पुराणं ग्राह्यमित्याहुः । मूत्रेणेति—गोमूत्रेण ॥ ३८ ॥

व्रणानित्यादि वाग्भटस्य ।—अभयेत्यस्य स्थाने "अतया" इत्येव पाठो वाग्भट-पुस्तकेषु दृश्यते ॥ ३९ ॥

गम्भीरव्रणरोपणे सुषवीपत्रादिलेपचतुष्टयम्।—

सुषवीपत्रपत्तूर-कर्णमोटकुठारिकाः।
पृथगेते प्रलेपेन गम्भीरव्रणरोपणाः॥ ४०॥

रोपणे पञ्चवल्कलादिचूर्ण-धातक्यादिचूर्णलेपद्वयम्।—

पञ्चवल्कलचूर्णैर्वा शुक्तिचूर्णसमायुतैः।
धातकीचूर्णलोध्रैर्वा तथा रोहन्ति ते व्रणाः॥ ४१॥

वातप्रधाने दाहवेदनायुक्ते तिलादिलेपः।—

सदाहा वेदनावन्तो ये व्रणा मारुतोत्तराः।
तेषां तिलानुमाश्चैव भृष्टान् पयसि निर्वृतान्॥
तेनैव पयसा पिष्ट्वा दद्यादालेपनं भिषक्॥ ४२॥

वातप्रधाने सास्रावे यवादिधूपः।—

वाताभिभूतान् सास्रावान् धूपयेदुग्रवेदनान्।
यवाज्यभूर्जमदन-श्रीवेष्टकसुराह्वयैः॥ ४३॥

स्रावादियुक्ते श्रीवासादिधूपः।—

श्रीवासगुग्गुल्वगुरु-शालनिर्य्यासधूपिताः।
कठिनत्वं व्रणा यान्ति नश्यन्त्यास्रावेदनाः॥ ४४॥

---

सुषवीत्यादि।—सुषवी कारवेल्लः। पत्तूरः शालिञ्चः। कर्णमोटः स्वनामख्यातः। कुठारिका कुठारिया। "कुठेरकः" इति पाठे—पर्णासः॥ ४०॥

पञ्चवल्कलेत्यादि चरकस्य।—शुक्तिः बदरी, तस्यास्त्वक्। शुक्तिचूर्णसमायुतैरिति पञ्चवल्कलचूर्णैरित्यस्य विशेषणम्॥ ४१॥

सदाहा इत्यादि।—उमा—अतसी। पयसि निर्वृतानिति—दुग्धे निर्वापितान्॥ ४२॥

वाताभिभूतानित्यादि वाग्भटस्य।—सास्रावान् अल्पस्रावान्। भूर्जः भूर्जग्रन्थिः। मदनः सिक्थक इति वृन्दटिप्पनी। श्रीवेष्टकः नवनीतखोटिः। सुराह्वयं देवदारु॥ ४३॥

श्रीवासेत्यादि।—श्रीवासः नवनीतखोटी; न च पूर्वोक्तेन पौनरुक्त्यम्, अस्य वाक्यस्य तन्त्रान्तरीयत्वात्; वृन्दटिप्पनिकायान्तु पौनरुक्त्यमाशङ्क्य पूर्वोक्तश्रीवेष्टकशब्देन कुन्दुरुरिति व्याख्यातम्। शालनिर्यासः धूनकः॥ ४४॥

शोथादियुक्ते तिलादिलेपः ।—

तिलाः पयः सिता क्षौद्रं तैलं मधुकचन्दनम् ।
लेपेन शोथरुग्दाह रक्तं निर्वापयेत् व्रणान् ॥ ४५ ॥

अग्निदग्धव्रणचिकित्सा ।

पित्तविद्रधिवीसर्पचिकित्साऽतिदेशः ।—

पित्तविद्रधिवीसर्प-शमनं लेपनादिकम् ।
अग्निदग्धे व्रणे सम्यक् प्रयुञ्जीत चिकित्सकः ॥ ४६ ॥

महाराष्ट्रीमूलादिप्रयोगद्वयम् ।—

महाराष्ट्रीजटालेपो दग्धपिष्टावचूर्णनम् ।
जीर्णगेहतृणाच्चूर्णं दग्धव्रणहरं परम् ॥ ४७ ॥

जीरकाद्यं घृतम् ।—

जीरकपक्वं पश्चात् सिक्थकसर्जरससम्मिश्रितं हरति ।
घृतमभ्यङ्गात् पावकदग्धजदुःखं क्षणार्द्धेन ॥ ४८ ॥

कुठारकलेपोऽश्वत्थवल्कलचूर्णगुण्ठनञ्च ।—

अन्तर्दग्धकुठारको दहनजं लेपान्निहन्ति व्रणम् ।
अश्वत्थस्य विशुष्कवल्कलकृतं चूर्णं तथा गुण्ठनात् ॥ ४९ ॥

---

तिला इत्यादि ।—पयः पेषणार्थम् । सिता शर्करा । क्षौद्रतैलाभ्यां सन्धाय लेपो देयः ॥ ४५ ॥

इदानीं शारीरव्रणचिकित्सामभिधाय व्रणसामान्यादस्मिन्नेव व्रणाधिकारे आगन्तुव्रणचिकित्साऽभिधानार्थं प्रकरणमारभ्यते, तत्र प्रथममग्निदग्धव्रणचिकित्सा-माह, पित्तेत्यादि ।—सुगमम् ॥ ४६ ॥

महाराष्ट्रीत्यादि ।—महाराष्ट्रीजटा महाराष्ट्रीमूलम्, प्रथमेको योगः । पिष्टं पिष्टकमेव, दग्धपिष्टकचूर्णेनावचूर्णनमिति द्वितीयः ॥ ४७ ॥

जीरकेत्यादि ।—जीरकस्य कल्कः, जलं चतुर्गुणमर्थात्, पश्चात् सिद्धे च सिक्थसर्जरसयोः प्रक्षेपः ॥ ४८ ॥

अन्तरित्यादि ।—कुठारकः कुड़ालिया, स च स्थालीमध्ये अन्तर्धूमं दग्धव्यः । गुण्ठनादिति—अवचूर्णनात् ॥ ४९ ॥

गण्डूपदतैलं शाल्मलीतूलकादिलेपश्च।—

अभ्यङ्गाद्विनिहन्ति तैलमखिलं गण्डूपदैः साधितम्।
पिष्टा शाल्मलितूलकैर्जलगता लेपात् तथा वालुका॥५०॥

## सद्योव्रण-चिकित्सा।

यष्टिमधुकघृतम्।—

सद्यः क्षतव्रणं वैद्यः सशूलं परिषेचयेत्।
यष्टिमधुकयुक्तेन नातिशीतेन सर्पिषा॥ ५१॥

शीतक्रियोपदेशः।—

बुद्ध्वाऽऽगन्तुव्रणं वैद्यो घृतक्षौद्रसमायुतम्।
शीतां क्रियां प्रयुञ्जीत पित्तरक्तोष्मनाशिनीम्॥ ५२॥

मुस्तकलेपः।—

कान्तकामकमेकं सुक्ष्मत्वां गव्यसर्पिषा पिष्टम्।
शमयति लेपान्नियतं व्रणमागन्तुजं न सन्देहः॥ ५३॥

रक्तनिवारणे अपामार्गप्रयोगः।—

अपामार्गस्य संसिक्तं पत्रोत्थेन रसेन वा।

---

अभ्यङ्गादित्यादि।—गण्डूपदैः किञ्चुलुकैः कल्कः, जलं चतुर्गुणमनुक्तत्वादिति नियमः। जलं विना घटघटाशब्दिः पाक इत्यन्ये। शाल्मलीतूलकैरिति, सहार्थे तृतीया॥ ५०॥

इदानीं सद्योव्रणचिकित्सामाह, सद्य इत्यादि।—सद्य इति—सप्ताहाभ्यन्तरे। यष्टिमधुकयुक्तेनेति—यष्टिमधुकं कल्कीकृत्य चतुर्गुणजलेन यथाविधि घृतं साधनीयम्। यदि पुनस्त्वरया यथाविधि घृतमिदं पक्तुं न शक्यते, तदा घृतात् पलद्वयं, जलात् चतुःपलं, यष्टिमधुकस्य कर्षद्वयं किञ्चित् पक्त्वाऽवतार्य्य व्रणं सेचयेदित्याहुः। नातिशीतेनेति—कदुष्णेनेत्यर्थः। "किञ्चिदुष्णेन" इति पाठान्तरम्॥ ५१॥

बुद्धेत्यादि चक्रटस्य।—बुद्धेत्यत्र "बद्धा" इति पाठः साधुः; बन्धो हि सद्योव्रणेषु छिन्नभिन्नादिषु सन्धानजनकतया प्रधानम्; उक्तं हि—"ततो बन्धः प्रधानं, तेन शुद्धिर्व्रणरोपणमस्थिसन्धिस्थैर्य्यञ्च" (सु० सू० १८ अ०) इति। चक्रटादावयमेव पाठो दृश्यते। बुद्धेति पाठे—घृतक्षौद्रसमायुतमित्यनन्तरं कृत्वेति शेषः, किंवा प्रयुञ्जीतेति क्रियाविशेषणम्॥ ५२॥

सद्योव्रणेषु रक्तन्तु प्रवृत्तं परितिष्ठति ॥ ५४ ॥

रोपणे कर्पूरप्रयोगः।—

कर्पूरपूरितं बद्धं सघृतं सम्प्ररोहति।

सद्यः शस्त्रक्षतं पुंसां व्यथापाकविवर्जितम् ॥ ५५ ॥

शरपुङ्खादिलेपचतुष्टयम्।—

शरपुङ्खा काकजङ्घा प्रथमं महिषीसुत-।

मलं लज्जा च सद्यस्क-व्रणघ्नं पृथगेव तु ॥ ५६ ॥

रोपणे कुक्कुरजिह्वाचूर्ण-चक्रतैलप्रयोगौ।—

शुनो जिह्वाकृतं चूर्णं सद्यःक्षतविरोहणम्।

चक्रतैलं क्षते छिन्ने रोपणं परमं मतम् ॥ ५७ ॥

नष्टशल्ये शृगालकोलिप्रलेपः।—

यवक्षारं भक्षयित्वा पिण्डं दद्यात् व्रणोपरि।

शृगालकोलिमूलेन नष्टशल्यं विनिःसरेत् ॥ ५८ ॥

नष्टशल्ये लाङ्गली-गवाक्षीमूललेपद्वयम्।—

लाङ्गलीमूललेपाद्वा गवाक्षीमूलतस्तथा ॥ ५९ ॥

---

कान्तेत्यादि।—कान्तकामकं भद्रमुस्तकम्। घृतमत्र शतधौतमित्युपदिशन्ति, एवं वक्ष्यमाणेऽपि ॥ ५३।५४ ॥

कर्पूरेत्यादि।—सघृतं यथा स्यात् तथा कर्पूरपूरितं, तेन कर्पूरचूर्णेन शतधौत-घृतमिश्रेण खड्गादिक्षतं प्रपूर्य्य बध्नीयादित्यर्थः ॥ ५५ ॥

शरपुङ्खेत्यादि।—माहिषीसुतस्य मलं महिषीसुतमलम्; "घृततैलवसामज्जविश-वारपयोदधि-। मांसधावनतोयाभम्" इतिवत् अयं प्रयोगः समर्थनीयः; अभिनव-जातमहिषीवत्सस्य प्रथमं [illegible]मलमित्यर्थः। लज्जा लाजालुः; अन्ये तु—वराहक्रान्तामाहुः ॥ ५६ ॥

शुन इत्यादि।—शुनः [illegible]ति—कुक्कुरस्य, तन्त्रान्तरसंवादात् सर्वाङ्गकणाकुकुरी-जिह्वेत्यन्ये। चक्रतैलं [illegible]चक्रादुद्धृतमभ्रष्टसर्षपतैलम्। अन्ये तु—चक्रकाष्ठोद्भवं तैलमाहुः ॥ ५७ ॥

अन्तःशल्यावि[illegible], यवक्षारमित्यादिना तथेत्यन्तेन। यवक्षार कर्ष १, उष्णजल पल २, आलोड्य पीत्वा नष्टशल्यव्रणोपरि शृगालकोलिमूलं पिष्ट्वा पिण्डी-

क्षतोष्मनिग्रहाय कषायादिकृतलेपा:।—

क्षतोष्मणो निग्रहार्थं तत्कालं विसृतस्य च।
कषायशीतमधुर-स्निग्धालेपादयो हिता:॥ ६०॥

आमपक्वाशयस्थरुधिरे वमनविरेचनोपदेश:।—

आमाशयस्थे रुधिरे वमनं पथ्यमुच्यते।
पक्वाशयस्थे देयञ्च विरेचनमसंशयम्॥ ६१॥

कोष्ठस्थरुधिरे वंशत्वगादिक्वाथ:।—

क्वाथो वंशत्वगेरण्ड-श्वदंष्ट्राऽश्मभिदा कृत:।
सहिङ्गुसैन्धव: पीत: कोष्ठस्थं स्रावयेदसृक्॥ ६२॥

अन्नादिसाधने यवादि:।—

यवकोलकुलत्थानां नि:स्नेहेन रसेन च।
भुञ्जीतान्नं यवागूं वा पिबेत् सैन्धवसंयुताम्॥ ६३॥

अतिरक्तस्रावे वातघ्नस्नेहप्रयोगा:।—

अत्यर्थमस्रं स्रवति प्रायशो यत्र विक्षते।
ततो रक्तक्षयाद्वायौ कुपितेऽतिरुजाकरे॥ ६४॥
स्नेहपानं परीषेकं स्नेहलेपोपनाहनम्।

---

देय:। शृगालकोलि: "शेयाकुल" इति ख्यात: बदरीभेद:। एवं लाङ्गलिकामूल-गोरक्षकर्कटीमूलाभ्यामपि॥ ५८।५९॥

क्षतेत्यादि वाग्भटस्य।—कषाय इति—रस:॥ ६०॥

आमाशयस्थे इत्यादि सुश्रुतस्य।—आमाशयस्थमपक्वाशयस्थम्। अत्र पक्वाशयस्थं रक्तं विरेचनेन सुखेन निर्हर्त्तुं शक्यते इत्यभिप्रायेण विरेचनविधानं, न तु पित्तप्रत्यनीकतया, पक्वाशयस्य वातस्थानत्वात्। अन्ये तु—पक्वशब्देन पाक उच्यते, न पक्वाशय:; तेन पक्वाशयस्थे इत्यन्नपच्यमानाशयस्थे इत्यर्थ:; तस्यैव हि पित्तस्थानत्वेन विरेचनमुपयोगिकमिति व्याचक्षते॥ ६१॥

क्वाथ इत्यादि।—वंशत्वक् वंशनीशी। अश्मभित् पाषाणभेदी। हिङ्गुसैन्धवञ्च प्रक्षेप्यम्; अयं योग: प्रभावात् रक्तं स्रावयति॥ ६२।६३॥

अत्यर्थमित्यादि वाग्भटस्य।—विक्षते इति—विविधक्षते छिन्नभिन्नादौ। स्नेह-

स्नेहवस्तिञ्च कुर्वीत वातघ्नौषधसाधितम् ॥ ६५ ॥

सप्ताहानन्तरं शारीरव्रणक्रियाऽतिदेशः।—

इति साप्ताहिकः प्रोक्तः सद्योव्रणहितो विधिः।
सप्ताहात् परतः कुर्य्याच्छारीरव्रणवत् क्रियाम् ॥ ६६ ॥

व्रणक्रिमौ करञ्जादिरसादिपूरणद्वयम्।—

करञ्जारिष्टनिर्गुण्डी-रसो हन्यात् व्रणक्रिमीन्।
कलायविदलीपत्र-कोशाम्रास्थि च पूरणात् ॥ ६७ ॥

व्रणक्रिमौ सुरसादिपरीषेकः सुरसालेपश्च।—

सुरसादिरसैः सेको लेपनं सुरसेन वा ॥ ६८ ॥

व्रणक्रिमौ निम्बादिसेकादिकम्।—

निम्बसम्पाकजात्यर्क-सप्तपर्णाश्वमारकाः।
क्रिमिघ्ना मूत्रसंयुक्ताः सेकालेपनधावनैः ॥ ६९ ॥

व्रणक्रिमौ मांसपेश्याच्छादनं रसोनलेपश्च।—

प्रच्छाद्य मांसपेश्या वा क्रिमीनपहरेत् व्रणात्।
लशुनेनाथवा दद्याल्लेपनं क्रिमिनाशनम् ॥ ७० ॥

---

स्नेहोपनाहनमिति—स्नेहयुक्तो लेपः स्नेहयुक्तमुपनाहनञ्च; किन्तु वाग्भटे "स्वेदलेपोपनाहनम्" (उ० २६ अ०) इति पाठः; तन्मते—स्वेदो धान्यस्वेदः; उक्तं हि सुश्रुते—"धान्यस्वेदांश्च कुर्वीत स्निग्धान्यालेपनानि च" (चि० २ अ०) इति। वातघ्नौषधं भद्रदार्वादि ॥ ६४।६५ ॥

सद्योव्रणचिकित्सामुपसंहरति—इति साप्ताहिक इत्यादि वाग्भटस्य ॥ ६६ ॥

करञ्जेत्यादि।—करञ्जादिपत्रस्वरसः। कलायविदली स्वनामख्याता लता। कोशाम्रः कुसुम इति ख्यातः, तस्य फलास्थि, आभ्यां सम्पिष्टाभ्यां प्रत्येकं व्रणाभ्यन्तरपूरणम् ॥ ६७ ॥

सुरसादीत्यादि।—सुरसादिगणः सौश्रुतः। सुरसेनेति—पर्णासेन ॥ ६८ ॥

निम्बेत्यादि।—जात्याः पत्रं, निम्बादीनान्तु त्वक्। एते च निम्बादयो यथालाभं मूत्रपिष्टाः सेकादौ प्रयोज्याः ॥ ६९ ॥

प्रच्छाद्येत्यादि।—मांसपेशी मांसखण्डः; तत्रामिषगन्धात् क्रिमय उपर्य्युपरि सञ्चरन्तीति भावः ॥ ७० ॥

त्रिफलागुग्गुलुः ।—

ये क्लेदपाकस्रुतिगन्धवन्तो
व्रणा महान्तः सरुजाः सशोथाः ।
प्रयान्ति ते गुग्गुलुमिश्रितेन
पीतेन शान्तिं त्रिफलारसेन ॥ ७१ ॥

वटिकागुग्गुलुः ।—

त्रिफलाचूर्णसंयुक्तो गुग्गुलुर्वटकीकृतः ।
निर्यन्त्रणो विबन्धघ्नो व्रणशोधनरोपणः ॥ ७२ ॥

अमृतागुग्गुलु-वज्रकतैलप्रयोगातिदेशः ।—

अमृतागुग्गुलुः शस्तो हितं तैलञ्च वज्रकम् ॥ ७३ ॥

विड़ङ्गादिवटिकागुग्गुलुः ।—

विड़ङ्गत्रिफलाव्योष-चूर्णं गुग्गुलुना समम् ।
सर्पिषा वटिकां कृत्वा खादेद्वा हितभोजनः ॥
दुष्टव्रणापचीमेह-कुष्ठनाड़ीव्रणापहः ॥ ७४ ॥

अमृतावटिकागुग्गुलुः ।—

अमृतापटोलमूल-त्रिफलात्रिकटुक्रिमिघ्नानाम् ।
समभागानां चूर्णं सर्वसमो गुग्गुलोर्भागः ॥ ७५ ॥
प्रतिवासरमेकैकां गुड़िकां खादेदक्षपरिमाणाञ्च ।
जेतुं व्रणवातासृग्गुल्मोदरश्वयथुपाण्डुरोगांश्च ॥ ७६ ॥

---

बहिःपरिमार्जनमुक्त्वा अन्तःपरिमार्जनमाह, ये इत्यादि ।—कोष्ठानुरूपोऽत्र गुग्गुलुः प्रदेयः ॥ ७१ ॥

त्रिफलेत्यादि ।—त्रिफलाचूर्णसंयुक्त इति—त्रिफलाचूर्णेन समेन युक्तो गुग्गुलुः घृतमनुरूपं दत्त्वा विमृद्य चूर्णञ्च प्रक्षिप्य वटकीकर्त्तव्यः ; एवं सर्वत्र वटकविधाने । यन्त्रणा आहाराचारनियमश्च ॥ ७२ ॥

अमृतेत्यादि ।—अमृतागुग्गुलुर्वातरक्तोक्तः । वज्रकतैलञ्च कुष्ठे वक्ष्यमाणम् ॥ ७३ ॥

विड़ङ्गेत्यादि ।—विड़ङ्गादिवटिकागुग्गुलौ गुग्गुलुना सममिति—विड़ङ्गादि-चूर्णसमेन ॥ ७४ ॥

अमृतेत्यादि ।—अमृतावटिकागुग्गुलुः स्पष्टः ॥ ७५।७६ ॥

जातिकाद्यं घृतम् ।—

जातीनिम्बपटोलपत्रकटुकादार्वीनिशाशारिवा-
मञ्जिष्ठाभयसिक्थतुत्थमधुकैर्नक्ताह्वबीजैः समैः ।
सर्पिः सिद्धमनेन सूक्ष्मवदना मर्माश्रिताः स्राविणो
गम्भीराः सरुजो व्रणाः सगतिकाः शुष्यन्ति रोहन्ति च ॥ ७७ ॥

गौराद्यं घृतम् ।—

गौरा हरिद्रा मञ्जिष्ठा मांसी मधुकमेव च ।
प्रपौण्डरीकं ह्रीवेरं भद्रमुस्तं सचन्दनम् ॥ ७८ ॥
जातीनिम्बपटोलञ्च करञ्जं कटुरोहिणी ।
मधूच्छिष्टं मधूकञ्च महामेदा तथैव च ॥ ७९ ॥
पञ्चवल्कलतोयेन घृतप्रस्थं विपाचयेत् ।
एष गौरो महावीर्य्यः सर्वव्रणविशोधनः ॥ ८० ॥
आगन्तुः सहजश्चैव सुचिरोत्थाश्च ये व्रणाः ।
विषमामपि नाड़ीञ्च शोधयेच्छीघ्रमेव च ॥ ८१ ॥

गौराद्य-जातिकाद्यतैले तैलविषयश्च ।—

गौराद्यं जातिकाद्यञ्च तैलमेवं प्रसाध्यते ।
तैलं सूक्ष्मानने दुष्ट-व्रणे गम्भीर एव च ॥ ८२ ॥

---

जातीत्यादि वाग्भटस्य ।—जात्यादीनां त्रयाणां पत्रम् । दार्वी दारुहरिद्रा । निशा हरिद्रा । अभयम् उशीरम् । नक्ताह्वबीजं करञ्जबीजम् । गतिर्नाड़ी ॥ ७७ ॥

गौरेत्यादि ।—गौराद्यघृते गौरा हरिद्रा, प्रियङ्गुर्वा ; व्यवहारस्तु हरिद्रैव । हरिद्रा दारुहरिद्रा । जातीनिम्बपटोलानां पत्रम् । करञ्जस्य फलम् । मधूकं मधूकपुष्पम् । मधूकञ्चेत्यस्य स्थाने "समधुकम" इति पाठे—यष्टिमधुकस्य भागद्वयं, द्विःपाठात् । पञ्चवल्कलस्य तोयेन क्वाथेन । एष गौर इति भीमो भीमसेन इतिवत् । "गौराद्योऽयं महावीर्य्यः" इत्यपि पाठः ॥ ७८—८१ ॥

उक्तघृतद्वयविधिना तैलद्वयमपि साध्यमित्याह—गौराद्यमित्यादि । तैलविषयमाह—तैलमित्यादि ॥ ८२ ॥

करञ्जाद्यं घृतम्।—

नक्तमालस्य पत्राणि तरुणानि फलानि च।
सुमनायाश्च पत्राणि पटोलारिष्टयोस्तथा ॥ ८३ ॥
द्वे हरिद्रे मधूच्छिष्टं मधुकं तिक्तरोहिणी।
मञ्जिष्ठा चन्दनोशीरमुत्पलं शारिवे त्रिवृत् ॥ ८४ ॥
एतेषां कार्षिकैर्भागैर्घृतप्रस्थं विपाचयेत्।
दुष्टव्रणप्रशमनं तथा नाड़ीविशोधनम् ॥
सद्यश्छिन्नव्रणानाञ्च करञ्जाद्यमिदं शुभम् ॥ ८५ ॥

प्रपौण्डरीकाद्यं घृतम्।—

प्रपौण्डरीकमञ्जिष्ठा-मधुकोशीरपद्मकैः।
सहरिद्रैः शृतं सर्पिः सक्षीरं व्रणरोपणम् ॥ ८६ ॥

तिक्ताद्यं घृतम्।—

तिक्तासिक्थनिशायष्टी-नक्ताह्वफलपल्लवैः।
पटोलमालतीनिम्ब-पत्रैर्व्रण्यं घृतं स्मृतम् ॥ ८७ ॥

विपरीतमल्लतैलम्।—

सिन्दूरहिङ्गुविषकुष्ठरसोनचित्र-
बाणाङ्घ्रिलाङ्गलिककल्कविपक्वतैलम्।
शासादमल्लयुतफुल्लतनुव्रफेनो
दुष्टव्रणप्रशमनो विपरीतमल्लः ॥ ८८ ॥

नक्तमालस्येत्यादि।—पत्राणि तरुणानीत्यन्वयः। सुमना जाती। उत्पलं नीलोत्पलम्। शारिवे अनन्तमूल-श्यामलते ॥ ८३—८५ ॥

प्रपौण्डरीकेत्यादि।—अत्र क्षीरमेव चतुर्गुणम् ॥ ८६ ॥

तिक्तेत्यादि।—अत्र पत्रशब्दः त्रिभिः सम्बध्यते, जलञ्च चतुर्गुणम् ॥ ८७ ॥

तैलान्याह, सिन्दूरेत्यादि।—चित्रकः रक्तचित्रकः। बाणाङ्घ्रिः शरपुङ्खामूलम्। न तु झिण्टीमूलं, जलं चतुर्गुणं तैलञ्च सार्षपं, तन्त्रान्तरसंवादात्; यदुक्तं—"सिन्दूरहिङ्गुविषकुष्ठरसोनबाण-पुङ्खाकणानलहलाह्वयमूलकल्कैः। एतच्चतुर्गुणजले विधिवत् सुसिद्धं सिद्धार्थतैलमिति सिद्धफलं प्रदिष्टम् ॥" इति। शसादमल्लः

खड्गाभिघातगुरुगण्डमहोपदंश-
नाडीव्रणव्रणविचर्चिककुष्ठपामाः ।
एतान् निहन्ति विपरीतकमल्लनाम
तैलं यथेष्टशयनासनभोजनस्य ॥ ८९ ॥

अङ्गारकं तैलम् ।—

कुठारकात् पलशतं क्वाथयेल्लवणेऽम्भसि ।
तेन पादावशेषेण तैलप्रस्थं विपाचयेत् ॥ ९० ॥
कल्कैः कुठारापामार्ग-प्रोष्ठिकामक्षिकायुतैः ।
एतदङ्गारकं तैलं व्रणशोधनरोपणम् ॥
नाडीषु परमाभ्यङ्गो निजास्वागन्तुकीषु च ॥ ९१ ॥

प्रपौण्डरीकाद्यं तैलम् ।—

प्रपौण्डरीकं मधुकं काकोल्यौ द्वे सचन्दने ।
सिद्धमेतैः समैस्तैलं तत् परं व्रणरोपणम् ॥ ९२ ॥

दूर्वाद्यं तैलं घृतञ्च ।—

दूर्वास्वरससिद्धं वा तैलं काम्पिल्लकेन च ।
दार्वीत्वचश्च कल्केन प्रधानं व्रणरोपणम् ॥ ९३ ॥
येनैव विधिना तैलं घृतं तेनैव साधयेत् ।
रक्तपित्तोत्तरं ज्ञात्वा सर्पिरेवावचारयेत् ॥ ९४ ॥

---

महेश्वरमन्त्रः । शुम्रः अपसारितः । "ओँ ह्राँ ह्रीँ ह्रूँ ह्रैँ ह्रौँ ह्रः शिवाय स्वाहा" इति पठित्वा फुत्कारेण फेनमालोड्यम् ॥ ८८।८९ ॥

कुठारकादित्यादि ।—कुठारकः कुड़ालिया । लवणः द्रोणः । प्रोष्ठिका शफरीमत्स्यः ; पाठीनाम्ना ख्यातो वा चिटप इत्यन्ये । मक्षिका कीटविशेषः प्रसिद्ध एव । प्रोष्ठिकामक्षिका पञ्चाखियामत्स्य इत्यन्ये ॥ ९०—९२ ॥

दूर्वेत्यादि ।—योगद्वयम् । अत्र दूर्वा एव कल्को बोध्यः । चकार इयात् काम्पिल्लकदार्वीत्वचोर्मिलित्वा कल्कः, पाकश्च जलेन, चारपाणिसंवादात् । अपरे तु—"दूर्वास्वरससिद्धं वा तैलं काम्पिल्लकेन वा" इति पठित्वा दूर्वास्वरसेन अकल्कमेव तैलं साध्यम् ; काम्पिल्लकेन वा दार्वीकल्केन वा जलेन द्रवेणापरं तैलद्वयमित्याहुः ।

मञ्जिष्ठाद्यं घृतम्।—

मञ्जिष्ठां चन्दनं मूर्वां पिष्ट्वा सर्पिर्विपाचयेत्।
सर्वेषामग्निदग्धानामेतद्रोपणमिष्यते ॥ ९५ ॥

पाटलीतैलम्।—

सिद्धं कल्ककषायाभ्यां पाटल्याः कटुतैलकम्।
दग्धव्रणरुजास्राव-दाहविस्फोटनाशनम् ॥ ९६ ॥

चन्दनाद्यं यमकम्।—

चन्दनं वटशुङ्गञ्च मञ्जिष्ठा मधुकं तथा।
प्रपौण्डरीकं दूर्वा च पत्तङ्गं धातकी तथा ॥ ९७ ॥
एभिस्तैलं विपक्वव्यं सर्पिःक्षीरसमायुतम्।
अग्निदाहव्रणे श्रेष्ठं म्रक्षणाद्रोपणं परम् ॥ ९८ ॥

सवर्णीकरणे मनःशिलादिलेपः।—

मनःशिलाऽऽले मञ्जिष्ठा सलाक्षा रजनीद्वयम्।
प्रलेपः सघृतक्षौद्रस्त्वग्विशुद्धिकरः परः ॥ ९९ ॥

कृष्णीकरणे लौहचूर्णादिप्रलेपः।—

अयोरजः सकाशीशं त्रिफलाकुसुमानि च।
प्रलेपः कुरुते कार्ष्ण्यं सद्य एव नवत्वचि ॥ १०० ॥

---

तैलमाषनविधिं घृतेऽप्यतिदिशति, येनेत्यादि।—अयञ्च सर्वतैलविध्यतिदेशः। अन्ये तु—दूर्वादितैलविध्यतिदेश इत्याहुः ॥ ९३।९४ ॥

मञ्जिष्ठामित्यादि।—अत्र जलं चतुर्गुणम् ॥ ९५।९६ ॥

चन्दनमित्यादि।—चन्दनाद्यमके तैलघृताभ्यां समाभ्यां मिलित्वा प्रस्थः। पत्तङ्गं रक्तचन्दनम्। तैलमिति—तिलतैलमेव एवंविधशेषोक्तिं विना। क्षीरमेवात्र चतुर्गुणम् ॥ ९७।९८ ॥

सावर्ण्यमुपक्रममाह—मनःशिलेत्यादि ॥ ९९ ॥

अयोरज इत्यादि।—काशीशं धातुकाशीशम्। त्रिफलाकुसुमानि हरीतक्यादि-तरुकुसुमानि; कुसुमाभावे फलेन व्यवहारः ॥ १०० ॥

सवर्णीकरणे कालीयकादिप्रलेपः ।—

कालीयकलताऽऽम्रास्थि-हेमकालारसोत्तमैः ।
लेपः सगोमयरसः सवर्णकरणः परः ॥ १०१ ॥

रोमसञ्जनने चतुष्पदां त्वगादिचूर्णावचूर्णनम् ।—

चतुष्पदां हि त्वग्रोम-खुरशृङ्गास्थिभस्मना ।
तैलाक्ता चूर्णिता भूमिर्भवेद्रोमवती पुनः ॥ १०२ ॥

व्रणग्रन्थौ ग्रन्थिचिकित्साऽतिदेशः क्षारप्रयोगश्च ।—

व्रणग्रन्थिं ग्रन्थिवच्च जयेत् क्षारेण वा भिषक् ॥ १०३ ॥

इति व्रणशोथ-चिकित्सा ।

---

## अथ नाड़ीव्रण-चिकित्सा ।

क्रियासूत्रम् ।—

नाड़ीनां गतिमन्विष्य शस्त्रेणापाट्य कर्मवित् ।
सर्वव्रणक्रमं कुर्याच्छोधनं रोपणादिकम् ॥ १ ॥

वातनाड्यां पाटनादिकं तिलादिलेपश्च ।—

नाड़ीं वातकृतां साधु-पाटितां लेपयेद्भिषक् ।

---

कालीयकेत्यादि ।—कालीयकं कालीयकाष्ठम् । लता प्रियङ्गुः, दूर्वेत्यन्ये । हेम नागकेशरचूर्णम् । काला मञ्जिष्ठा । रसोत्तमः पारदः, घृतमित्यन्ये । गोमयरसः पेषणार्थम् ॥ १०१ ॥

चतुष्पदामित्यादि ।—सुगमम् ॥ १०२ ॥

व्रणग्रन्थिमित्यादि ।—व्रणग्रन्थिमिति—दुष्टतया सञ्जातं मांसग्रन्थिमित्यर्थः ॥१०३॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां व्रणशोथ-चिकित्सा विवृतिः ।

---

व्रणत्वसामान्यान्नाडीव्रणचिकित्सामाह, नाड़ीनामित्यादि ।—गतिमिति—पूयगतिम् । आदिशब्देनोत्सादनावसादनसवर्णकरणादयो गृह्यन्ते ॥ १ ॥

नाड़ीमित्यादि ।—साधुपाटनमुपनाहपूर्वकम् ; तदुक्तं वाग्भटे—"उपनाह्यानिलान्नाड़ीं पाटितां साधु लेपयेत् । प्रत्यक्पुष्पीफलयुतैस्तिलैः पिष्टैः ससैन्धवैः ॥"

प्रत्यक्पुष्पीफलयुतैस्तिलैः पिष्टैः प्रलेपयेत् ॥ २ ॥

पित्तकफनाड्योः तिलादिलेपद्वयम्।—

पैत्तिकीं तिलमञ्जिष्ठा-नागदन्तीनिशाद्वयैः।

श्लैष्मिकीं तिलयष्ट्याह्व-निकुम्भारिष्टसैन्धवैः ॥ ३ ॥

शल्यजनाड्यां तिलादिलेपः।—

शल्यजां तिलमध्वाज्यैर्लेपयेच्छिन्नशोधिताम् ॥ ४ ॥

आरग्बधादिवर्त्तिः।—

आरग्बधनिशाकाला-चूर्णाज्यक्षौद्रसंयुता।

मूत्रवर्त्तिर्व्रणे योज्या शोधनी गतिनाशिनी ॥ ५ ॥

---

(उ० ३० अ०) इति; अत एव वचनात् सैन्धवयोगादप्ययं लेपो बोध्यः। प्रत्यक्पुष्पी अपामार्गः, तस्य बीजम्। लेखयेदिति—क्षारेण प्रतिसारयेदित्यर्थः; एतच्च लेखनयोग्यव्रणं प्रति बोध्यम्; उक्तं हि—"उद्वृत्तान् स्थूलपर्य्यन्तानुत्सन्नान् कठिनान् व्रणान्। क्लिष्टासानि सकुष्ठानि लिखेल्लेख्यानि बुद्धिमान् ॥" (च० चि० द्विव्रणी०) इति ॥ २ ॥

पैत्तिकीमित्यादि।—नागदन्ती स्थूलमूला दन्त्येव। "पित्तजां निशिमञ्जिष्ठा-नागदन्तीतिलैः समैः" इत्यायुर्वेदसारदर्शनात् निशाद्वयैरित्यत्र "निशायुतैः" इति केचित् पठन्ति, तन्न, विशेष्याभावात्, निशिशब्देन हरिद्राया अनभिधानाच्च; किन्तु मिषीत्येव तत्र पाठ इति योगान्तरमेतत्; तथा वाग्भटेऽपि "निशाद्वयैः" (उ० ३० अ०) इत्येव पाठः पठ्यते; वृन्देऽपि तथा। सुश्रुते तु—हरिद्राद्वयव्यतिरेकेणाप्ययं योगः। श्लैष्मिकीमित्यादौ निकुम्भः दन्ती। अरिष्टः निम्बः। अत्र यष्ट्याह्वस्थाने सौराष्ट्री-योगादप्ययं योगः; उक्तं हि वाग्भटे—"श्लैष्मिकीं तिलसौराष्ट्री-निकुम्भारिष्टसैन्धवैः" (उ० ३० अ०) इति ॥ ३ ॥

शल्यजामित्यादि वाग्भटस्य।—छिन्नशोधितामिति—आदौ छिन्नामिति पाटितां पश्चात् शल्यं निर्हृत्य शोधितामित्यर्थः; सुश्रुतेऽप्युक्तं—"नाड़ीन्तु शल्यप्रभवां विदार्य्य निर्हृत्य शल्यं प्रविशोध्य मार्गम्। संशोधयेत् क्षौद्रघृतप्रगाढ़ैः तिलैस्ततो रोपणमस्य कुर्य्यात् ॥" (चि० १७ अ०) इति ॥ ४ ॥

आरग्वधेत्यादि।—आरग्वधस्य पत्रम्। काला कालाकड़ामूलं, न तु मञ्जिष्ठा, अस्यैकस्यैव दुष्टव्रणहन्तृत्वात्। मूत्रवर्त्तिरिति—गोमूत्रकृता वर्त्तिः। सोनालुपाता, हलदि, कालाकड़ामूल एषां प्रत्येकं चूर्ण मा ८, घृत कर्ष १, मधु कर्ष १, गोमूत्र

घोण्टाफलादिवर्त्तिः ।—

घोण्टाफलत्वक् लवणं सलाक्षं पूगात् फलञ्चालवणाञ्च पत्रम् ।
स्नुह्यर्कदुग्धेन तु एष कल्को वर्त्तीकृतो हन्त्यचिरेण नाड़ीम् ॥ ६ ॥

सैन्धववर्त्तिः दुष्टव्रणोक्ततैलप्रयोगातिदेशश्च ।—

वर्त्तीकृतं माक्षिकसम्प्रयुक्तं नाड़ीघ्नमुक्तं लवणोत्तमं वा ।
दुष्टव्रणे यद्विहितञ्च तैलं तत् सेव्यमानं गतिमाशु हन्ति ॥ ७ ॥

जात्यादिवर्त्तिः ।—

जात्यर्कसम्पाककरञ्जदन्ती-सिन्धूत्थसौवर्चलयावशूकैः ।
वर्त्तिः कृता हन्त्यचिरेण नाड़ीं स्नुक्क्षीरपिष्टा सह चित्रकेण ॥ ८ ॥

---

पत्र १ एतत् सर्वं पक्त्वा मधुसैन्धवयोर्वर्त्तिवत् वर्त्तिः कार्य्येत्याहुः, पाकमन्तरेण वर्त्तिकरणस्याशक्यत्वात् । "सूत्रवर्त्तिः" इति पाठे—एभिर्लिप्ता सूत्रवर्त्तिरित्यर्थः ; वृद्धास्तु पूर्वेणैव व्यवहरन्ति ॥ ५ ॥

घोण्टेत्यादि सुश्रुतस्य ।—घोण्टा अरण्यबदरम्, अस्याः फलं त्वक् च । लवणं सैन्धवम् । लाक्षा प्रसिद्धैव । पूगात् फलमिति—शुष्कपूगफलम् । आलवणाञ्च पत्रमिति—अलवणा ज्योतिष्मती, अस्याः पत्रमालवणम् ; वाग्भटेऽप्युक्तं—"घोण्टाफलत्वक् लवणं सलाक्षं पूगात् फलञ्चालवणाञ्च पत्रम् । स्नुह्यर्कदुग्धान्वित एष कल्को वर्त्तीकृतो हन्त्यचिरेण नाड़ीम् ॥" (उ० ३० अ०) इति । अन्ये तु लाक्षां ज्योतिष्मतीपत्रञ्च न पठन्ति, मदनफलञ्च पठन्ति ; यथा—"घोण्टाफलत्वङ्मदनात् फलानि पूगस्य च त्वङ् लवणञ्च मुख्यम् । स्नुह्यर्कदुग्धेन सहैष कल्को वर्त्तीकृतो हन्त्यचिरेण नाड़ीम् ॥" इति । एतत् सर्वं समभागं कृत्वा किञ्चित् सैन्धवं दत्त्वा स्नुहीक्षीरैरर्कक्षीरैर्जलैराप्लाव्य पक्त्वा वर्त्तिः कार्य्या ॥ ६ ॥

वर्त्तीकृतमित्यादि सुश्रुतस्य ।—लवणोत्तममिति—सैन्धवम् । वर्त्तीकरणञ्च मधुसैन्धवयोरग्नौ पाकात्, अन्यथा वर्त्तिः न स्यात् । दुष्टव्रणे यद्विहितञ्च तैलमिति—सुश्रुतोक्तारग्वधतैलादि ॥ ७ ॥

जात्यादि ।—जातीपल्लवाः । अर्कस्य मूलम् । सम्पाकः आरग्वधः, तस्यापि पत्रम् । करञ्जस्य बीजम् । दन्ती दन्तीमूलम् । अत्र स्नुहीक्षीरेणैव सह किञ्चिज्जलं दत्त्वा पक्त्वा च वर्त्तिः कार्य्येत्याहुः ॥ ८ ॥

कङ्गुनीमूलप्रयोगः।—

माहिषदधिकोद्रवान्नमिश्रं हरति चिरविरूढाञ्च।
भुक्तं कङ्गुनिकामूलचूर्णमतिदारुणां नाड़ीम् ॥ ९ ॥

कृशादीनां नाड्यां क्षारसूत्रेण छेदनोपदेशः।—

कृशदुर्बलभीरूणां गतिर्मर्माश्रिता च या।
क्षारसूत्रेण तां छिन्द्यान्न शस्त्रेण कदाचन ॥ १० ॥

क्षारसूत्रप्रयोगविधिः।—

एषण्या गतिमन्विष्य क्षारसूत्रानुसारिणीम्।
सूचीं निदध्यात् गत्यन्ते चोन्नाम्य चाशु निर्हरेत् ॥ ११ ॥
सूत्रस्यान्तं समानीय गाढं बन्धनमाचरेत्।
ततः क्षीणबलं वीक्ष्य सूत्रमन्यत् प्रवेशयेत् ॥
क्षाराक्तं मतिमान् वैद्यो यावन्न छिद्यते गतिः ॥ १२ ॥

भगन्दरे क्षारसूत्रप्रयोगातिदेशः।—

भगन्दरेऽप्येष विधिः कार्य्यो वैद्येन जानता ॥ १३ ॥

अर्बुदादौ क्षारसूत्रप्रयोगविधिः।—

अर्बुदादिषु चोत्क्षिप्य मूले सूत्रं निधापयेत्।
सूचीभिर्यववक्त्राभिराचितं वा समन्ततः ॥

---

माहिषेत्यादि।—कोद्रवः तृणधान्यविशेषः, तस्य भक्तम्। कङ्गुनिका कायनिः, तन्मूलचूर्णं माहिषदधिकोद्रवभक्ताभ्यां मिश्रितं कृत्वा भुक्तं स्यादित्यर्थः ॥ ९ ॥

कृशेत्यादि सुश्रुतस्य।—कृशः क्षीणमांसः। दुर्बलः क्षीणबलः ॥ १० ॥

क्षारसूत्रेण छेदनविधिमाह, एषण्येत्यादि।—क्षारसूत्रेण सह अनुसर्तुं शीलं यस्याः एतादृशीं सूचीमुन्नाम्य उत्क्षिप्य सूच्यग्रेण गतिप्रान्तं विद्ध्वा सूचीं निर्हरेदिति भावः। अत्र यदि गतिर्दीर्घा भवति, तदा द्व्यङ्गुले त्र्यङ्गुले चतुरङ्गुले वा बद्ध्वा क्रमेण गतिमानेन छेदयेत्, न पुनरेकदैव गतिप्रमाणेन बद्ध्वा छेदः कार्य्यः, सूत्रच्छेदभयात् पीडाऽतिशयजनकत्वाच्च इत्याहुः। क्षाराक्तमिति सूत्रविशेषणम् ॥ ११—१२ ॥

अर्बुदादिषु बन्धनविशेषमाह, अर्बुदादिष्वित्यादि।—अर्बुदादिकं यदि तनुमूलं भवति, तदा उत्क्षिप्यैव मूले सूत्रेण बध्नीयादित्यर्थः। स्थूलमूलेषु तु सूत्रस्योर्ध्वं

मूले सूत्रेण बध्नीयाच्छिन्ने चोपचरेत् व्रणम् ॥ १४ ॥

सप्ताङ्गगुग्गुलुः ।—

गुग्गुलुस्त्रिफलाव्योषैः समांशैराज्ययोजितः ।
नाड़ीदुष्टव्रणशूल-भगन्दरविनाशनः ॥ १५ ॥

सर्जिकाद्यं तैलम् ।—

सर्जिकासिन्धुदन्त्यग्नि-रूपिकानलनीलिका ।
खरमञ्जरिबीजेषु तैलं गोमूत्रपाचितम् ॥
दुष्टव्रणप्रशमनं कफनाड़ीव्रणापहम् ॥ १६ ॥

कुम्भीकाद्यं तैलम् ।—

कुम्भीकखर्जूरकपित्थबिल्व-वनस्पतीनान्तु शलाटुकल्कैः ।
कृत्वा कषायं विपचेत् तु तैलमावाप्य मुस्तासरलप्रियङ्गूः ॥ १७ ॥
सौगन्धिकामोचरसाहिपुष्प-लोध्राणि दत्त्वा खलु धातकीञ्च ।
एतेन शल्यप्रभवा हि नाड़ी रोहेत् व्रणो वै सुखमाशु चैव ॥१८॥

---

मूले समन्ततः सूचीभिराचितं यथा स्यात् तथा बध्नीयात् । यववक्त्राभिरिति यववन्मध्यस्थूलवक्त्राभिः ; यववक्त्रत्वञ्च सूचीनां दार्ढ्यार्थम् । छिन्ने चोपचरेत् व्रणमिति द्विव्रणीयोक्तविधिनेति शेषः ॥ १४ ॥

गुग्गुलुरित्यादि ।—त्रिफलाव्योषैरिति विशेषणे तृतीया । त्रिफलादीनान्तु मिलित्वा गुग्गुलुसमत्वम् । आज्ययोजित इति—घृतपिण्डितः, घृतञ्च तावद्देयं यावता वटकीभवति ॥ १५ ॥

सर्जिकेत्यादि ।—अग्निः चित्रकः । रूपिका श्वेतार्कः । नलश्च स्वनामख्यातः । नीलिका नीलीति प्रसिद्धा, नीलवृक्ष इत्यन्ये । खरमञ्जरी अपामार्गः । गोमूत्रं पाकार्थं चतुर्गुणम् ; सुश्रुतेऽप्युक्तं यथा—"सुवर्चिकासैन्धवचित्रकेषु निकुम्भनीलीनलरूपिकासु । फलेष्वपामार्गभवेषु चैव कुर्य्यात् समूत्रेषु हिताय तैलम् ॥" (चि० १७ अ०) इति ॥ १६ ॥

कुम्भीकेत्यादि सुश्रुतस्य ।—कुम्भीका कुम्भाडुलता दाड़िमसमानफला, स्थूलदन्तीत्यन्ये । वनस्पतयः वटादयः, एषां शलाटु कोमलफलम् । सौगन्धिका चन्दनसुगन्धम् । मोचरसः शाल्मलीनिर्य्यासः । अहिपुष्पं नागकेशरम् ॥ १७।१८॥

भल्लातकाद्यं तैलम्।—

भल्लातकार्कमरिचैर्लवणोत्तमेन
सिद्धं विडङ्गरजनीद्वयचित्रकैश्च।
स्यान्मार्कवस्य च रसेन निहन्ति तैलं
नाड़ीं कफानिलकृतामपचीं व्रणांश्च॥ १९॥

निर्गुण्डीतैलम्।—

समूलपत्रां निर्गुण्डीं पीड़यित्वा रसेन तु।
तेन सिद्धं समं तैलं नाड़ीदुष्टव्रणापहम्॥ २०॥
हितं पामाऽपचीनान्तु पानाभ्यञ्जननावनैः।
विविधेषु च स्फोटेषु तथा सर्वव्रणेषु च॥ २१॥

हंसपादीतैलम्।—

हंसपाद्यरिष्टपत्रं जातीपत्रं ततो रसैः।
तत्कल्कैश्च पचेत् तैलं नाड़ीव्रणविशोधनम्॥ २२॥

इति नाड़ीव्रण-चिकित्सा।

---

भल्लातकेत्यादि सुश्रुतस्य।—मार्कवः भृङ्गराजः, तस्य स्वरसश्चतुर्गुणः॥ १९॥

समूलपत्रामित्यादि।—निर्गुण्डीतैले सममिति सहार्थे, तेन निर्गुण्डीस्वरसश्चतुर्गुण एव ग्राह्यः; चक्रस्तु समशब्दस्य तुल्यार्थतामित्याह। अकल्कमिदं तैलम्॥ २०।२१॥

हंसपादीत्यादि।—हंसपादीतैले हंसपादी स्वनामख्याता। अरिष्टपत्रं निम्बपत्रम्। ततो रसैरिति—तेषां रसैरित्यर्थः, षष्ठ्याः तसिः। त्रयाणां रसो मिलित्वा तैलाच्चतुर्गुणः॥ २२॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां नाड़ीव्रण-चिकित्सा-विवृतिः।

# अथ भगन्दर-चिकित्सा।

क्रियासूत्रम्।—

गुदस्य श्वयथुं दृष्ट्वा विशोष्य शोधयेत् ततः।
रक्तावसेचनं कुर्य्यात् यथा पाकं न गच्छति॥ १॥

वटपत्रादिलेपः।—

वटपत्रेष्टकाशुण्ठी-गुडूच्यः सपुनर्नवाः।
सुपिष्टाः पिड़कारम्भे लेपः शस्तो भगन्दरे॥ २॥

अपक्के क्रियाविधिः।—

पिड़कानामपक्कानामपतर्पणपूर्व्वकम्।
कर्म्म कुर्य्याद्विरेकान्तं भिन्नानां वक्ष्यते क्रिया॥ ३॥

पक्के क्रियाविधिः।—

एषणीपाटनक्षार-वह्निदाहादिकं क्रमम्।
विधाय व्रणवत् कार्य्यं यथादोषं यथाक्रमम्॥ ४॥

तिल्वदाद्युत्सादनम्।—

त्रिवृत् तिला नागदन्ती मञ्जिष्ठा सह सर्पिषा।
उत्सादनं भवेदेतत् सैन्धवक्षौद्रसंयुतम्॥ ५॥

---

नाड़ीव्रणत्वसामान्यात् सञ्ज्ञासामान्याच्च भगन्दरमाह, गुदस्येत्यादि।—विशोष्य इति उपवासादिना। शोधयेदिति—विरेचयेत्, न शोणितमोक्षणादिभिः॥ १॥

वटपत्रेत्यादि।—वटस्य कोमलपत्रम्। इष्टका च पानीये चिरमुषिता ग्राह्येति वृद्धाः व्यवहरन्ति॥ २॥

पिड़कानामित्यादि।—अपतर्पणपूर्व्वकं कर्म्म कुर्य्याद्विरेकान्तमिति—अपतर्पणादयो विरेकान्ता एकादशोपक्रमा द्विव्रणीयोक्ताः कर्त्तव्या इत्यर्थः॥ ३॥

एषणीत्यादि।—कार्य्यमित्यत्र चिकित्सितमिति शेषः॥ ४॥

त्रिवृदित्यादि सुश्रुतस्य।—नागदन्ती स्थूलमूला दन्ती। उत्सादनमिति—शोधनं, न तु निम्नव्रणोत्थापनरूपमुत्सादनमिह व्याख्येयं, त्रिवृदादीनां तीक्ष्णद्रव्यत्वात्, उत्सादनस्य तु मृदुमधुरद्रव्यसम्पाद्यत्वात्; उक्तं हि चरके—"स्वन्यानि जीवनीयानि बृंहणीयानि यानि च। उत्सादनार्थं निम्नानां व्रणानां तानि

रसाञ्जनादिप्रलेपः ।—

रसाञ्जनं हरिद्रे द्वे मञ्जिष्ठानिम्बपल्लवाः ।
त्रिवृत्तेजोवतीदन्ती-कल्को नाड़ीव्रणापहः ॥ ६ ॥

कुष्ठादिप्रलेपः ।—

कुष्ठं त्रिवृत्-तिला-दन्ती-मागध्यः सैन्धवं मधु ।
रजनी त्रिफला तुत्थं हितं व्रणविशोधनम् ॥ ७ ॥

स्नुह्यादिवर्त्तिः ।—

स्नुह्यर्कदुग्धदार्व्वीभिर्वर्त्तिं कृत्वा विचक्षणः ।
भगन्दरगतिं ज्ञात्वा पूरयेत् तां प्रयत्नतः ॥
एषा सर्वशरीरस्थां नाड़ीं हन्यादसंशयम् ॥ ८ ॥

तिलादिप्रलेपः ।—

तिलाभयाकुष्ठमरिष्टपत्रं निशे वचा लोध्रमगारधूमः ।
भगन्दरे नाड्युपदंशयोश्च दुष्टव्रणे शोधनरोपणोऽयम् ॥ ९ ॥

भूनागचूर्णादिलेपत्रयम् ।—

खरास्रपक्वभूनाग-चूर्णलेपो भगन्दरम् ।
हन्ति दन्त्यग्न्यतिविषा-लेपस्तद्वच्छुनोऽस्थि वा ॥ १० ॥

विड़ालास्थिप्रलेपः ।—

त्रिफलारससंयुक्तं विड़ालास्थिप्रलेपनम् ।

---

कल्पयेत् ॥" ( चि० द्विव्रणी० ) इति । अन्ये तु—संयोगमहिम्ना त्रिवृदादीनामप्युत्सादनत्वमिह बोध्यमित्याहुः ॥ ५ ॥

रसाञ्जनमित्यादि सुश्रुतस्य ।—तेजोवती ज्योतिष्मती, अन्ये तु—चवीत्याहुः । शोधनरोपणोऽयं कल्कः ॥ ६ ॥

कुष्ठमित्यादि सुश्रुतस्य ।—स्पष्टम् ॥ ७ ॥

स्नुहीत्यादि ।—स्नुह्यर्कयोः क्षीरेण दारुहरिद्राचूर्णं पक्त्वा वर्त्तिः कार्य्येत्यर्थः ॥ ८ ॥

तिलेत्यादि ।—कुष्ठस्थाने लोध्रपाठे—लोध्रद्वयं शावरपट्टिकाख्यभेदात् ग्राह्यम् । निशे हरिद्रे द्वे ॥ ९ ॥

खरेत्यादि ।—गर्दभरक्तपक्वगण्डूपदचूर्णलेप इत्यर्थः । दन्तीत्यादि द्वितीययोगे

भगन्दरं निहन्त्याशु दुष्टव्रणहरं परम् ॥ ११ ॥

नवकार्षिकगुग्गुलुः ।—

त्रिफलापुरकृष्णानां त्रिपञ्चैकांशयोजिता ।
गुड़िका शोथगुल्मार्शो-भगन्दरवतां हिता ॥ १२ ॥

सप्तविंशतिको गुग्गुलुः ।—

त्रिकटुत्रिफलामुस्त-विड़ङ्गामृतचित्रकम् ।
शठ्येलापिप्पलीमूलं हवुषा सुरदारु च ॥ १३ ॥
तुम्बुरुः पुष्करं चव्यं विशाला रजनीद्वयम् ।
विड़ं सौवर्चलं क्षारौ सैन्धवं गजपिप्पली ॥ १४ ॥
यावन्त्येतानि चूर्णानि तावद्द्विगुणगुग्गुलुः ।
कोलप्रमाणां गुड़िकां भक्षयेन्मधुना सह ॥ १५ ॥
कासं श्वासं तथा शोथमर्शांसि च भगन्दरम् ।
हृच्छूलं पार्श्वशूलञ्च कुक्षिवस्तिगुदे रुजम् ॥ १६ ॥
अश्मरीं मूत्रकृच्छ्रञ्च अन्त्रवृद्धिं तथा क्रिमीन् ।
चिरज्वरोपसृष्टानां क्षयोपहतचेतसाम् ॥ १७ ॥
आनाहञ्च तथोन्मादं कुष्ठानि चोदराणि च ।
नाड़ीदुष्टव्रणान् सर्वान् प्रमेहं श्लीपदं तथा ॥
सप्तविंशतिको ह्येष सर्वरोगनिसूदनः ॥ १८ ॥

जम्बूकमांसप्रयोगः ।—

जम्बूकस्य च मांसानि भक्षयेत् व्यञ्जनादिभिः ।

---

अग्निः चित्रकः । शुनोऽस्थि कुक्कुरस्यास्थीत्यत्र तृतीययोगे त्रिफलारसोऽपि पेषणार्थं देयः ; उक्तं हि—"शुनोऽस्थि वा विड़ालास्थि त्रिफलारसभावितम ॥" इति ॥१०।११॥

त्रिफलेत्यादि । नवकार्षिके त्रिपञ्चैकांशयोजिता इति—अंश इह कर्षरूपो भागः ; तेन त्रिफलायाः प्रत्येकं कर्षः, गुग्गुलोः पञ्च कर्षाः, कृष्णाया एककर्षः इति नवकार्षिकत्वम स्य योगस्य ॥ १२ ॥

त्रिकट्वित्यादि ।—क्षारौ यवक्षार-सर्जिकाक्षारौ ; एतेन गुग्गुलुं विना सप्त-

अजीर्णवर्जी मासेन मुच्यते ना भगन्दरात् ॥ १९ ॥

पञ्चतिक्तघृत-पञ्चतिक्तगुग्गुल्वोः प्रयोगोपदेशः।—

पञ्चतिक्तं घृतं शस्तं पञ्चतिक्तश्च गुग्गुलुः ॥ २० ॥

न्यग्रोधादिगणप्रयोगोपदेशः।—

न्यग्रोधादिगणो यस्तु हितः शोधनरोपणः।
तैलं घृतं वा तत्पक्वं भगन्दरविनाशनम् ॥ २१ ॥

विष्यन्दनतैलम्।—

चित्रकार्कौ त्रिवृत्पाठे मलपू-हयमारकौ।
सुधां वचां लाङ्गलिकीं हरितालं सुवर्चिकाम् ॥ २२ ॥
ज्योतिष्मतीञ्च संहृत्य तैलं धीरो विपाचयेत्।
एतद्विष्यन्दनं नाम तैलं दद्याद्भगन्दरे ॥
शोधनं रोपणञ्चैव सवर्णकरणं तथा ॥ २३ ॥

करवीराद्यं तैलम्।—

करवीरनिशादन्ती-लाङ्गलीलवणाग्निभिः।
मातुलुङ्गार्कवत्साह्वैः पचेत् तैलं भगन्दरे ॥ २४ ॥

निशाद्यं तैलम्।—

निशार्कक्षीरसिन्ध्वग्नि-पुराश्वहनवत्सकैः।

---

विंशतिर्द्रव्याणीति निश्चलः। ये तु यवक्षार-सौवर्चलक्षाराविति पठन्ति, तन्मते गुग्गुलुना सहैव सप्तविंशतिरिति ॥ १३—२० ॥

न्यग्रोधादीत्यादि सुश्रुतस्य।—कल्कोऽयम्। तत्पक्वमिति—न्यग्रोधादेः क्वाथकल्काभ्यां पक्वम् ॥ २१ ॥

चित्रकेत्यादि सुश्रुतस्य।—चित्रकादीनां कल्कः, जलं चतुर्गुणम्। मलपूः काकोडुम्बरः, तस्य मूलं, रक्तपित्तादौ तु फलम्। विष्यन्दयति पूयं स्रावयतीति विष्यन्दनं शोधनम् ॥ २२।२३ ॥

करवीरेत्यादि।—करवीराद्ये मातुलुङ्गस्य मूलम्। वत्साह्वः कुटजः, तस्य त्वक्, अन्ये तु—तत्फलमाहुः ॥ २४ ॥

सिद्धमभ्यञ्जने तैलं भगन्दरविनाशनम् ॥ २५ ॥

अपथ्यानि।—

व्यायामो मैथुनं युद्धं पृष्ठयानं गुरूणि च।
संवत्सरं परिहरेदुपरूढव्रणो नरः ॥ २६ ॥

इति भगन्दर-चिकित्सा।

---

## अथोपदंश-चिकित्सा।

प्राथमिकी चिकित्सा पाकात् रक्षणोपदेशश्च।—

स्निग्धस्विन्नशरीरस्य ध्वजमध्ये शिराव्यधः।
जलौकापातनं वा स्यादूर्द्धाधःशोधनं तथा ॥ १ ॥
सद्यो निर्हृतदोषस्य रुक्शोथावुपशाम्यतः।
पाको रक्ष्यः प्रयत्नेन शिश्नक्षयकरो हि सः ॥ २ ॥

पटोलादि-खदिरादिक्वाथयोः द्विविधप्रयोगः।—

पटोलनिम्बत्रिफलागुडूची-
क्वाथं पिबेद्वा खदिराशनाभ्याम्।
सगुग्गुलुं वा त्रिफलायुतं वा
सर्वोपदंशापहरः प्रयोगः ॥ ३ ॥

---

निशेत्यादि।—पुरः गुग्गुलुः। अश्वघ्नः करवीरः, तस्य मूलम् ॥ २५।२६ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां भगन्दरचिकित्सा-विवृतिः।

---

स्थानप्रत्यासत्तेः उपदंशचिकित्सितमुच्यते, स्निग्धस्विन्नेत्यादि।—ध्वजमध्ये मेढ्रमध्ये। शिराव्यधश्च रक्तदुष्टौ महत्याम्, अल्पायान्तु जलौकया रक्तपातनम् ॥१।२॥

पटोलेत्यादि।—पटोलादिक्वाथं गुग्गुलुं त्रिफलाचूर्णं वा प्रक्षिप्य पिबेत्; एवं खदिरासनक्वाथमपि। असनः पीतशालः। अन्ये तु—क्वाथद्वये यथायुक्तं गुग्गुलु-

वातजे प्रपौण्डरीकादिलेपसेकौ।—

प्रपौण्डरीकं मधुकं रास्ना कुष्ठं पुनर्नवा।
सरलागुरुभद्राख्यैर्वातिके लेपसेचने॥ ४॥

पित्तजे गैरिकादिलेपः।—

गैरिकाञ्जनमञ्जिष्ठा-मधुकोशीरपद्मकैः।
सचन्दनोत्पलैः स्निग्धैः पैत्तिकं सम्प्रलेपयेत्॥ ५॥

रक्तपित्तजे निम्बादिप्रयोगः।—

निम्बार्जुनाश्वत्थकदम्बशाल-जम्बूवटोडुम्बरवेतसेषु।
प्रक्षालनालेपघृतानि कुर्य्याच्चूर्णानि पित्तास्रभवोपदंशे॥ ६॥

प्रक्षालने त्रिफलाक्वाथः भृङ्गराजरसौ।—

त्रिफलायाः कषायेण भृङ्गराजरसेन वा।
व्रणप्रक्षालनं कुर्य्यादुपदंशप्रशान्तये॥ ७॥

त्रिफलाभस्मप्रलेपः।—

दहेत् कटाहे त्रिफलां सा मसी मधुसंयुता।
उपदंशे प्रलेपोऽयं सद्यो रोपयति व्रणम्॥ ८॥

रसाञ्जनप्रलेपत्रयम्।—

रसाञ्जनं शिरीषेण पथ्यया वा समन्वितम्।
सक्षौद्रं वा प्रलेपेन सर्वलिङ्गगदापहम्॥ ९॥

---

त्रिफलाचूर्णयोः प्रक्षेप इत्याहुः। अपरे तु—केवलक्वाथेन योगद्वयं, तदेव गुग्गुलो-स्त्रिफलाचूर्णस्य वा प्रक्षेपेणापि योगद्वयमिति वदन्ति। व्यवहारस्तु पूर्व्वेणैव॥ ३॥

प्रपौण्डरीकमित्यादि सुश्रुतस्य।—भद्राख्यं देवदारु॥ ४॥

गैरिकाञ्जनेत्यादि।—स्निग्धैरिति—शतधौतघृतैः॥ ५॥

निम्बेत्यादि।—अत्र प्रक्षालनमिति कषायेण। घृतसाधनपक्षे—निम्बादिक्वाथ-कल्काभ्यामिति वदन्ति॥ ६—८॥

रसाञ्जनमित्यादि।—योगत्रयम्। अत्र पथ्या गुडूची॥ ९॥

बब्बीलाद्यवचूर्णनलयम् ।—

बब्बोलदलचूर्णेन दाड़िमत्वग्भवेन वा ।
गुण्ठनं नृस्थिचूर्णेन उपदंशहरं परम् ॥ १० ॥

पूगादिलेपद्वयं पानाहारविधिश्च ।—

लेपः पूगफलेनाश्व-मारमूलेन वा तथा ।
सेवेत् नित्यं यवान्नञ्च पानीयं कौपमेव च ॥ ११ ॥

प्रक्षालने जयादिक्वाथपञ्चकम् ।—

जयाजात्यश्वमारार्क-सम्पाकानां दलैः पृथक् ।
कृतं प्रक्षालने क्वाथं मेढ्रपाके प्रयोजयेत् ॥ १२ ॥

भूनिम्बाद्यं घृतम् ।—

भूनिम्बनिम्बत्रिफलापटोल-करञ्जजातीखदिराशनानाम् ।
सतोयकल्कैर्घृतमाशु पक्वं सर्वोपदंशापहरं प्रदिष्टम् ॥ १३ ॥

करञ्जाद्यं घृतम् ।—

करञ्जनिम्बार्जुनशालजम्बू-वटादिभिः कल्ककषायसिद्धम् ।
सर्पिर्निहन्यादुपदंशदोषं सदाहपाकं स्रुतिरागयुक्तम् ॥ १४ ॥

आगारधूमाद्यं तैलम् ।—

आगारधूमरजनी-सुराकिण्वञ्च तैस्त्रिभिः ।
भागोत्तरैः पचेत् तैलं कण्डूशोथरुजापहम् ॥
शोधनं रोपणञ्चैव सवर्णकरणं परम् ॥ १५ ॥

---

बब्बोलेत्यादि।—बब्बोलस्य दलं पत्रम्। गुण्ठनम् अवचूर्णनम्। नृस्थि मनुष्यकपालास्थि, चन्द्राटेऽपि नृकपालास्थीत्युक्तत्वात् ॥ १०—१३ ॥

करञ्जेत्यादि।—करञ्जाद्यघृते करञ्जस्य मूलम्। वटादिभिरिति—वटोडुम्बराश्वत्थप्लक्षकपीतनैः पञ्चभिः। कपीतनः गन्धमुण्डः। घृतस्यास्य पानं, सचणञ्चानेन कार्य्यम् ॥ १४ ॥

आगारधूमेत्यादि।—आगारधूमः अलन्धूमः। किण्वं सुराबीजम्। भागोत्तरैरिति—तैलप्रस्थे आगारधूम पल १, कर्ष १, माषा ५, रत्ति २; हरिद्रा पल २,

लिङ्गार्शश्चिकित्साविधिः ।—

अर्शसां छिन्नदग्धानां क्रिया कार्य्योपदंशवत् ॥ १६ ॥

इत्युपदंश-चिकित्सा ।

---

# अथ शूकदोष-चिकित्सा ।

क्रियासूत्रम् ।—

हितञ्च सर्पिषः पानं पथ्यञ्चापि विरेचनम् ।
हितः शोणितमोक्षश्च यच्चापि लघुभोजनम् ॥ १ ॥

सर्षपीचिकित्सा ।—

सर्षपीं लिखितां सूक्ष्मैः कषायैरवचूर्णयेत् ।
तैरेवाभ्यञ्जनं तैलं साधयेत् व्रणरोपणम् ॥ २ ॥

अधिमन्थाष्ठीलयोः चिकित्सा ।—

क्रियेयमधिमन्थेऽपि रक्तं स्राव्यं तथोभयोः ।

---

कर्ष २, माषा १०, रक्ति ६; सुरावीज पल ३; कर्ष ३, माषा १५, रक्ति ९, एवं देवदार्व्वादिकल्कं कल्काय, पाकस्तु जलेनैव ॥ १५ ॥

चिकित्सासामान्यादेव लिङ्गार्शसां चिकित्सामाह, अर्शसामित्यादि ।—अर्शसामिति—लिङ्गार्शसामित्यर्थः ॥ १६ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायाम् उपदंश-चिकित्सा-विवृतिः ।

---

प्रागुक्तसङ्गत्यैव शूकदोषचिकित्सितमुच्यते, हितमित्यादि सुश्रुतस्य ।—शूकः जलशूकः सविषजन्तुः, तत्कृतो दोषः शूकदोषः । सर्पिष इति यथादोषं संस्कृतस्य । विरेचनमपि पथ्यं हितमित्यर्थः ॥ १ ॥

सर्षपीमित्यादि वाग्भटस्य ।—कषायैरिति—रसभेदोये कषायवर्गोक्तैः पथ्याविभीतकशिरीषादिभिः शोधनादिगणसङ्कोचितन्यग्रोधादिगणैश्च । सूक्ष्मैरिति—सूक्ष्मचूर्णीकृतैः । सुश्रुते तु—सूक्ष्मैरित्यत्र "सम्यक्" (चि० २१ अ०) इति पाठः । तैरेवेति—पूर्वोक्तकषायैः क्वाथकल्कैः ॥ २ ॥

अष्ठीलायां हृते रक्ते श्लेष्मग्रन्थिवदाचरेत् ॥ ३ ॥

कुम्भीकाचिकित्सा।—

कुम्भीकायां हरेद्रक्तं पक्वायां शोधिते व्रणे।
तिन्दुकत्रिफलालोध्रैर्लेपस्तैलञ्च रोपणम् ॥ ४ ॥

अलजीचिकित्सा।—

अलज्यां हृतरक्तायामयमेव क्रियाक्रमः ॥ ५ ॥

ग्रथितचिकित्सा।—

स्वेदयेत् ग्रथितं स्निग्धं नाडीस्वेदेन बुद्धिमान्।
सुखोष्णैरुपनाहैश्च सुस्निग्धैरुपनाहयेत् ॥ ६ ॥

उत्तमाचिकित्सा।—

उत्तमाख्यान्तु पिड़कां संछिद्य वड़िशोद्धृताम्।
कल्कैश्चूर्णैः कषायाणां क्षौद्रयुक्तैरुपाचरेत् ॥ ७ ॥

---

क्रियेत्यादि।—उभयोरिति—सर्षप्यधिमन्थयोः। अष्ठीलायामित्यादि वाग्भटस्य। —वातजायामप्यष्ठीलायां शूकदूषितरक्तस्यावरकस्य निर्हरणं जलौकादिभिरुचितमेव ॥ ३ ॥

कुम्भीकायामित्यादि।— हरेद्रक्तम् इति आमावस्थायाम्। तैलञ्च रोपणमिति उक्ततिन्दुकादिकल्कसिद्धम्; सुश्रुते तु—"कुम्भीकां पाकमापन्नां भिन्नां शोध्य रोपयेत्। तैलेन लोध्रत्रिफला-तिन्दुकाम्रकृतेन वा॥" (चि० २१ अ०) इत्युक्तम्; तिन्दुकाम्रयोः फलास्थीति च तट्टीकाकृतः ॥ ४ ॥

अलज्यामित्यादि वाग्भटस्य।—अयमेवेति—कुम्भीकोक्तः ॥ ५ ॥

स्वेदयेदित्यादि सुश्रुतस्य।—ग्रथितमिति—ग्रथिताख्यं शूकदोषम्। स्निग्धमिति तैलयोगात्। स्वेदेनेति स्वेदनद्रव्याणि चरकोक्तानि; यथा—"वारुणामृतकैरण्ड-शिग्रुमूलकसर्षपैः। वासावंशकरञ्जार्क-पत्रैरश्मन्तकस्य च॥ शोभाञ्जनकशैरीय-मालती-सुरसार्जकैः। पत्रैरुत्क्वाथ्य सलिलं नाडीस्वेदं प्रयोजयेत्॥" (सू० स्वेदाध्या०) इति। सुखोष्णैरुपनाहैरिति कफहरद्रव्यकृतैः, ग्रथितस्य कफकृतत्वात्। सुस्निग्धैरिति तैलयोगात् ॥ ६ ॥

उत्तमाख्यामित्यादि वाग्भटस्य।—कषायाणामिति—कषायवर्गपठितानां पथ्यादीनां न्यग्रोधादीनां वा। उपाचरेदिति प्रलेपेन ॥ ७ ॥

पुष्करी-सम्मूढ़पिड़का-त्वक्पाक-स्पर्शहानिचिकित्सा।—

क्रमः पित्तविसर्पोक्तः पुष्करीमूढ़योर्हितः।
त्वक्पाके स्पर्शहान्याञ्च— ॥ ८ ॥

मृदितचिकित्सा।—

— सेचयेन्मृदितं पुनः।
बलातैलेन कोष्णेन मधुरैश्चोपनाहयेत् ॥ ९ ॥

लिखित-शतपोनकयोः चिकित्सा।—

रसक्रिया विधातव्या लिखिते शतपोनके।
पृथक्पर्ण्यादिसिद्धञ्च तैलं देयमनन्तरम् ॥ १० ॥

शोणितार्बुदचिकित्सा।—

रक्तविद्रधिवच्चापि क्रिया शोणितजेऽर्बुदे।
कषायतैलसर्पींषि कल्कं चूर्णं रसक्रियाम् ॥

---

क्रम इत्यादि वाग्भटस्य।—पुष्करी-मूढ़योरिति—पुष्करिका-सम्मूढ़पिड़कयोः। त्वक्पाके स्पर्शहान्याञ्चेति पूर्वेण सम्बध्यते, तेनैतयोरपि पित्तविसर्पोक्तः क्रमः कार्यः ॥ ८ ॥

सेचयेदित्यादि।—मृदितं पुनः बलातैलेन सेचयेदिति योज्यम्। मधुरैरिति—काकोल्यादिभिः, किंवा जीवनीयगणैः; वाग्भटे जीवनीयगणोक्तत्वात्। बलातैलञ्च वाग्भटे वातव्याधावुक्तम् ॥ ९ ॥

रसक्रियेत्यादि सुश्रुतस्य।—रसक्रिया तु अवस्थां वीक्ष्य शोधनीया रोपणीया वा देया; तत्र शोधनीया यथा,—"शालसारादिसारेषु पटोलत्रिफलासु च। रसक्रिया विधातव्या शोधनी शोधनेषु च ॥" ( सु० सू० ३६ अ० ) इति। रोपणीया यथा—"त्वक्षु न्यग्रोधवर्गस्य त्रिफलायास्तथैव च। रसक्रियां रोपणार्थे विदधीत यथाविधि ॥" ( सु० सू० ३६ अ० ) इति। पृथक्पर्ण्यादि—मिश्रकोक्तघृतसाधन-द्रव्यम्; तद्यथा—"पृथक्पर्ण्यात्मगुप्ता च हरिद्रे मालती सिता। काकोल्यादिश्च योज्यः स्यादिषका रोपणे घृते ॥" ( सु० सू० ३६ अ० ) इति। अत्र सिता शर्करेति चक्रः, श्वेतदूर्वेति तु ब्रह्मदेवः। एतच्च घृतं तैलं वा पृथक्पर्ण्यादिना क्वाथेन कल्करूपेण च साध्यमिति वदन्ति, शर्करा तु कल्करूपेणैव देया, क्वाथानर्हत्वात्। अनन्तरमिति—रसक्रियादानस्यानन्तरमित्यर्थः ॥ १० ॥

शोधने रोपणे चैव वीक्ष्य वीक्ष्यावचारयेत् ॥ ११ ॥

अर्बुदमांसपाकविद्रधितिलकालकानां प्रत्याख्यानपूर्वकचिकित्साविधिः।—

अर्बुदं मांसपाकञ्च विद्रधिं तिलकालकम्।
प्रत्याख्याय प्रकुर्वीत भिषक् तेषां प्रतिक्रियाम् ॥ १२ ॥

इति शूकदोष-चिकित्सा।

---

## अथ भग्न-चिकित्सा।

सेकालेपनबन्धनानि।—

आदौ भग्नं विदित्वा तु सेचयेच्छीतलाम्बुना।
पङ्केनालेपनं कार्य्यं बन्धनञ्च कुशान्वितम् ॥
सुश्रुतोक्तञ्च भग्नेषु वीक्ष्य बन्धादिमाचरेत् ॥ १ ॥

अवनामितादीनामुन्नमनाद्युपदेशः।—

अवनामितमुन्नह्येदुन्नतञ्चावपीडयेत्।
आञ्छेदतिक्षिप्तमधो-गतञ्चोपरि वर्त्तयेत् ॥ २ ॥

---

रक्तविद्रधिवदित्यादि सुश्रुतस्य।—वीक्ष्य वीक्ष्येति—व्रिणोक्तामवस्थां निरूप्य यदि शोधनं कर्त्तव्यं भवति, तदा शोधनानि कषायादीन्यवचारयेत्, यदा तु रोपणं कर्त्तव्यं भवति, तदा रोपणानि कषायादीन्यवचारयेदित्यर्थः ॥ ११ ॥

अर्बुदमित्यादि।—असाध्यत्वेनोक्तेष्वप्यर्बुदादिषु कदाचिदसम्पूर्णलिङ्गत्वादिना साध्यता याप्यता वा सम्भवतीति प्रत्याख्याय तत्र क्रिया कार्य्येति ज्ञेयम् ॥ १२ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां शूकदोष-चिकित्सा-विवृतिः।

---

आगन्तुत्वसामान्याद्भग्नचिकित्सामाह, आदौ भग्नमित्यादि।—कुशान्वितमित्यत्र कुशेति भग्नास्थिबन्धनसाधनकदम्बादित्वचः संज्ञा; उक्तं हि वाग्भटे,—"कदम्बोदुम्बराश्वत्थ-सर्ज्जार्जुनपलाशजैः। वंशोद्भवैर्वा पृथुभिस्तनुभिः सुनिवेशितैः ॥ सुश्लक्ष्णैः सुप्रतिष्टम्भैर्वल्कलैः शकलैरपि। कुशाह्वयैः समं बन्धं पट्टस्योपरि योजयेत् ॥" (उ० २७ अ०) इति ॥ १ ॥

अवनामितमित्यादि सुश्रुतस्य।—अवनामितम् अवनतं कर्कटाख्यमस्थि तच्च

मञ्जिष्ठादि-शालिपिष्टलेपौ ।—

आलेपनार्थं मञ्जिष्ठा-मधुकञ्चाम्लपेषितम् ।
शतधौतघृतोन्मिश्रं शालिपिष्टञ्च लेपनम् ॥ ३ ॥

ऋतुभेदे बन्धनमोक्षविधिः ।—

सप्तरात्रात् सप्तरात्रात् सौम्येष्वृतुषु मोक्षणम् ।
कर्त्तव्यं स्यात् त्रिरात्राच्च तथाऽऽग्नेयेषु जानता ॥
काले च समशीतोष्णे पञ्चरात्राद्विमोक्षयेत् ॥ ४ ॥

न्यग्रोधादिकषायादिपरीषेकत्रयम् ।—

न्यग्रोधादिकषायञ्च सुशीतं परिषेचने ।
पञ्चमूलीविपक्वन्तु क्षीरं दद्यात् सवेदने ॥
सुखोष्णमवताप्यं वा चक्रतैलं विजानता ॥ ५ ॥

आहारविधिः ।—

मांसं मांसरसः सर्पिः क्षीरं यूषः सतीनजः ।

---

उन्नह्येत् उन्नामयेत्। उन्नतमंसकर्णादि अवपीडयेत् अवनामयेत्। अतिक्षिप्तम् अध ऊर्द्ध्वं वा अतिनिर्गतम्, आञ्छेदिति—प्रसारयेत्, आञ्छि आयामे इत्यस्य रूपम्। अधोगतमधःक्षिप्तादि उपरि वर्त्तयेत् आकर्षयेत् ॥ २ ॥

आलेपनार्थमित्यादि सुश्रुतस्य।—अम्लपेषितमिति—काञ्जिकपिष्टम्। शतधौतघृतोन्मिश्रमिति पूर्व्वेण परेण च योज्यमिति अन्नः ॥ ३ ॥

सप्तरात्रादित्यादि सुश्रुतस्य।—सौम्येषु ऋतुष्विति—शीते। आग्नेये ग्रीष्मे। जानता, वैद्येनेति शेषः। समशीतोष्णे काले चेति—शरद्वसन्तकाले। वाग्भटेऽप्युक्तं—"त्र्यहात् त्र्यहादृतौ घर्मे सप्ताहान्मोक्षयेद्भिषक्। साधारणे तु पञ्चाहात् भग्नदोषवशेन वा ॥" (उ० २७ अ०) इति ॥ ४ ॥

न्यग्रोधेत्यादि सुश्रुतस्य।—पञ्चमूलीत्यादि पञ्चमूली भाव स्वल्पेति वदन्ति। एतत्पक्वञ्च क्षीरं वातपित्तोत्तरे भग्ने, अत्रापि परिषेचने इति योज्यम्। चक्रतैलमिति—सद्यःपीडितं तैलं, किंवा सौश्रुतवातव्याधिचिकित्सितोक्ततैलविधानरक्षीतं तैलम्। शीतोपचारोचितेऽपि भग्ने सुखोष्णस्य विधानमनिलो बलीयानिति ज्ञेयम्, अत एव विजानतेत्युक्तम् ॥ ५ ॥

भग्नहितमन्नपानमाह, मांसमित्यादि सुश्रुतस्य।—क्षीरमिहाग्रे भग्ने

बृंहणञ्चान्नपानञ्च देयं भग्नं विजानता ॥ ६ ॥

काकोल्यादिक्षीरम् ।—

गृष्टिक्षीरं ससर्पिष्कं मधुरौषधसाधितम् ।
शीतलं लाक्षया युक्तं प्रातर्भग्नः पिबेन्नरः ॥ ७ ॥

अस्थिसंहारादिचूर्णम् ।—

सघृतेनास्थिसंहारं लाक्षां गोधूममर्जुनम् ।
सन्धिमुक्तेऽस्थिभग्ने च पिबेत् क्षीरेण मानवः ॥ ८ ॥

छिन्नभिन्नच्युतास्थिषु रसोनादिकल्कः ।—

रसोनमधुलाक्षाऽऽज्य-सिताकल्कं समश्नताम् ।
छिन्नभिन्नच्युतास्थीनां सन्धानमचिराद्भवेत् ॥ ९ ॥

अस्थिभग्ने वराटिकाचूर्णम् ।—

पीतवराटिकाचूर्णं द्विगुञ्जं वा त्रिगुञ्जकम् ।
अपक्वक्षीरपीतं स्यादस्थिभग्नप्ररोहणम् ॥ १० ॥

लाक्षादिचूर्णं गोधूमचूर्णञ्च ।—

क्षीरं सलाक्षामधुकं ससर्पिः स्याज्जीवनीयञ्च सुखावहञ्च ।
भग्नः पिबेत् त्वक्पयसाऽर्जुनस्य गोधूमचूर्णं सघृतेन वाऽथ ॥ ११ ॥

---

सन्धानीयतया हितम्; यत् पुनर्नवधान्यादिवर्गे क्षीरं निषिद्धं, तत् व्रणविषये एवेति न विरोधः। अन्ये तु—क्षीरसर्पिरिति पठित्वा क्षीरादुत्थितं सर्पिरिति व्याचक्षते। सतीनः वर्त्तुलकलायः, स च यद्यपि वातजनकस्तथाऽपि सन्धानीयत्वादिहोक्त इति ॥ ६ ॥

गृष्टिक्षीरमित्यादि सुश्रुतस्य।—गृष्टिः एकवारप्रसूता धेनुः, तस्याः क्षीरम्। मधुरौषधं काकोल्यादिगणः, तेन क्षीरपरिभाषासाधितम्। सर्पिर्लाक्षे प्रक्षेप्ये ॥ ७ ॥

सघृतेनेत्यादि।—सघृतेन क्षीरेणास्थिसंहारादिकं व्यस्तं समस्तं वा पिबेदित्याहुः ॥ ८—१० ॥

क्षीरमित्यादि।—जीवनीयमिति—आरोग्यहेतुत्वात् प्राणधारणम्। त्वक्पयसाऽर्जुनस्येति—अर्जुनस्य त्वचा साधितं पयस्त्वक्पयः, अर्जुनत्वक्पयसा सघृतेन गोधूमचूर्णं पिबेदिति योज्यम्। अन्ये तु—त्वक्-शब्दो नपुंसकलिङ्गोऽप्यस्तीति अर्जुनस्य त्वचं पिबेदित्याहुः ॥ ११ ॥

लाक्षागुग्गुलुः।—

लाक्षाऽस्थिसंहृत्ककुभाश्वगन्धाश्चूर्णीकृता नागबला पुरश्च।
सम्भग्नयुक्ताऽस्थिरुजं निहन्यादङ्गानि कुर्यात् कुलिशोपमानि ॥१२॥
अत्रान्यतोऽपि दृष्टत्वात् तुल्यश्चूर्णेन गुग्गुलुः ॥ १३ ॥

आभागुग्गुलुः।—

आभाफलत्रिकैर्व्योषैः सर्वैरेभिः समीकृतैः।
तुल्यो गुग्गुलुरायोज्यो भग्नसन्धिप्रसाधकः ॥ १४ ॥

सव्रणभग्ने कषायप्रतिसारणादिः।—

सव्रणस्य तु भग्नस्य व्रणं सर्पिर्मधूत्तरैः।
प्रतिसार्य्य कषायैश्च शेषं भग्नवदाचरेत् ॥ १५ ॥

भग्नस्य पाकात् व्रणोपदेशः वातव्याधिस्नेहप्रयोगातिदेशश्च।—

भग्नं नैति यथापाकं प्रयतेत तथा भिषक्।
वातव्याधिविनिर्दिष्टान् स्नेहानत्र प्रयोजयेत् ॥ १६ ॥

गन्धतैलम्।—

रात्रौ रात्रौ तिलान् कृष्णान् वासयेदस्थिरे जले।
दिवा दिवैव संशोष्य क्षीरेण परिभावयेत् ॥ १७ ॥
तृतीयं सप्तरात्रञ्च भावयेन्मधुकाम्बुना।
ततः क्षीरं पुनः पीतान् सुशुष्कांश्चूर्णयेद्भिषक् ॥ १८ ॥

---

लाक्षेत्यादि।—अस्थिसंहृत् अस्थिसंहारः। ककुभः अर्जुनः। नागबला गोरक्षतण्डुला। पुरः गुग्गुलुः, स च निखिललाक्षादिचूर्णसमः, वक्ष्यमाणाभादि-गुग्गुलौ दृष्टत्वादिति चक्रः ॥ १२।१३ ॥

एतदेवाह, आभेत्यादि।—आभा आढ़ेति ख्यातम्।। १४ ॥

सव्रणभग्नचिकित्सामाह, सव्रणस्येत्यादि सुश्रुतस्य।—प्रतिसार्य्य कषायैरिति—न्यग्रोधादिकषायद्रव्यकृतकल्कैः, प्रतिसार्य्यं प्रलिप्य; कार्त्तिकस्तु—कषायैरिति मधुरौषधक्वाथैः प्रतिसार्य्य प्रतिषिच्य इति व्याचष्टे, धातूनामनेकार्थत्वात्। शेषमिति—आहारादिकम् ॥ १५।१६ ॥

रात्रावित्यादि सुश्रुतस्य।—अस्थिरे जले इति—स्रोतोजले। चतुःप्रस्थ-तैलोचितकृष्णतिलान् गृहीत्वा वस्त्रेण पोट्टलीं बद्ध्वा स्रोतोजले प्रक्षिप्य रात्रौ स्थाप्यं,

काकोल्यादिं श्वदंष्ट्राह्वं मञ्जिष्ठां शारिवां तथा ।
कुष्ठं सर्जरसं मांसीं सुरदारु सचन्दनम् ॥ १९ ॥
शतपुष्पाञ्च सञ्चूर्ण्य तिलचूर्णेन योजयेत् ।
पीड़नार्थञ्च कर्त्तव्यं सर्वगन्धैः शृतं पयः ॥ २० ॥
चतुर्गुणेन पयसा तत् तैलं विपचेत् पुनः ।
एलामंशुमतीं पत्रं जीरकं तगरं तथा ॥ २१ ॥
लोध्रं प्रपौण्डरीकञ्च तथा कालानुशारिवाम् ।
शैलेयकं क्षीरशुक्लामनन्तां समधूलिकाम् ॥ २२ ॥
पिष्ट्वा शृङ्गाटकञ्चैव प्रागुक्तान्यौषधानि च ।
एभिस्तद्विपचेत् तैलं शास्त्रविन्मृदुनाऽग्निना ॥ २३ ॥
एतत् तैलं सदा पथ्यं भग्नानां सर्वकर्मसु ।

---

ततो दिवसे चातपे शोषयेत् ; एवं सप्त दिनानि यावत् ; तदनु तिलतुल्यपरिमाणे गव्यक्षीरे रात्रौ तिलान् निक्षिप्य दिवा प्रसार्य्यातपे शोषयेत् ; एवं सप्त दिनानि यावत् ; तदनु "भाव्यद्रव्यसमं क्वाथ्यम्" इति वचनबलात् तिलतुल्यपरिमाणं यष्टिमधु गृहीत्वा अष्टगुणोदके पक्त्वा अष्टमभागावशिष्टे क्वाथे तिलान् रात्रौ प्रक्षिप्य दिवातपे शोषयेत्, एवं सप्त दिनानि यावत् ; एवं गव्यक्षीरेऽपि सप्ताहम् । पुनरपि तिलतुल्यपरिमाणे गव्यक्षीरे रात्रौ तिलान् निक्षिप्य दिवा सूर्य्यातपे शोषयेत् ; एवं सप्त दिनानि यावत् ; तदनु तिलान् निस्तुषीकृत्य चूर्णयेत् । ततश्च एषां तिलचूर्णानां चत्वारो भागाः, भागश्चैकः काकोल्यादिशतपुष्पान्तमिलितचूर्णस्य ; वक्ष्यति च—"तिलचूर्णाच्चतुर्थांशम्" इत्यादि । एतस्यैव चूर्णस्य पीड़नार्थमुत्सादने कर्त्तव्ये आर्द्रताकरणार्थं सर्वगन्धशृतं क्षीरं तावन्मानं ग्राह्यं, यावता क्षीरेण चूर्णमार्द्रं भवति । सर्वगन्धैरिति—एलादिगणेन क्षीरपरिभाषयैव दुग्धं साध्यम् । एलादिगणश्च सौश्रुतः । एवमुक्तप्रकारेण गृहीततैलस्य चत्वारः शरावाः, एतत्क्वाथार्थं च गव्यदुग्धस्य षोडश शरावा ग्राह्या इत्यर्थः । अंशुमती शालपर्णी । कालानुशारिवा तगरम् । क्षीरशुक्ला क्षीरविदारी । अनन्ता अनन्तमूलम् । मधूलिका मर्कटहस्ततृणम्, अन्ये तु गोधूमभेद इत्याहुः । प्रागुक्तानीति—काकोल्यादिशतपुष्पान्तानि । एभिरिति—कल्कैरित्यर्थः । श्वदंष्ट्राह्वमित्यत्र स्वयङ्गुप्ताह्वमित्येव पाठः

आक्षेपके पक्षाघाते चाङ्गशोषे तथाऽर्दिते ॥ २४ ॥
मन्यास्तम्भे शिरोरोगे कर्णशूले हनुग्रहे ।
बाधिर्य्ये तिमिरे चैव ये च स्त्रीषु क्षयं गताः ॥ २५ ॥
पथ्यं पाने तथाऽभ्यङ्गे नस्ये वस्तिषु योजयेत् ।
ग्रीवास्कन्धोरसां वृद्धिरनेनैवोपजायते ॥ २६ ॥
मुखञ्च पद्मप्रतिमं स्यात् सुगन्धसमीरणम् ।
गन्धतैलमिदं नाम्ना सर्ववातविकारनुत् ॥ २७ ॥
राजार्हमेतत् कर्त्तव्यं राज्ञामेव विचक्षणैः ।
तिलचूर्णात् चतुर्थांशं मिलितं चूर्णमिष्यते ॥ २८ ॥

अपथ्यानि ।—

लवणं कटुकं क्षारमम्लं मैथुनमातपम् ।
व्यायामञ्च न सेवेत भग्नो रूक्षान्नमेव च ॥ २९ ॥

इति भग्न-चिकित्सा ।

---

## अथ कुष्ठ-चिकित्सा ।

वातजादिषु सर्पिरादिप्रयोगविधिः ।—

वातोत्तरेषु सर्पिर्वमनं श्लेष्मोत्तरेषु कुष्ठेषु ।
पित्तोत्तरेषु मोक्षो रक्तस्य विरेचनञ्चाग्रम् ॥ १ ॥

---

सुश्रुतटीकासु व्याख्यातः. अस्मिंस्तु पाठे—यष्टिमधुनी भागद्वयं, काकोल्यादिगणपठितेऽपि यष्टिमधुपाठात् ॥ १७—२९ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां भग्न-चिकित्सा-विवृतिः ।

---

रक्तादुष्टत्वग्गतत्वसाधर्म्यात् कुष्ठचिकित्सितमुच्यते, वातोत्तरेष्वित्यादि।—सर्पिरित्युपलक्षणं, तेन तैलाभ्यङ्गोऽपि बोध्यः ; उक्तं हि वाग्भटे—"तत्र वातोत्तरे तैलं घृतं वा साधितं हितम्" (चि० १९ अ०) इति। अग्रमिति सर्पिरादिषु योज्य, तेन वातो-

रक्तमोक्षणोपदेशः।—

प्रच्छन्नमल्पे कुष्ठे महति च शस्तं शिराव्यधनम्।
बहुदोषः संशोध्यः कुष्ठी बहुशोऽनुरक्षता प्राणान्॥ २॥

वमनकषायः।—

वचावासापटोलानां निम्बस्य फलिनीत्वचः।
कषायो मधुना पीतो वान्तिकृन्मदनान्वितः॥ ३॥

त्रिफलाकषायः।—

विरेचनन्तु कर्त्तव्यं त्रिवृद्दन्तीफलत्रिकैः॥ ४॥

रक्तमोक्षणस्य प्रशंसा।—

ये लेपाः कुष्ठानां प्रयुज्यन्ते निर्गतास्रदोषाणाम्।
संशोधिताशयानां सद्यः सिद्धिर्भवति तेषाम्॥ ५॥

मनःशिलादि-करञ्जबीजादिलेपौ।—

मनःशिलाऽऽले मरिचानि तैलमार्कं पयः कुष्ठहरः प्रदेहः।
करञ्जबीजैडगजः सकुष्ठो गोमूत्रपिष्टश्च परः प्रदेहः॥ ६॥

---

ज्वरादिषु सर्पिरग्रं प्रथमं कार्य्यं, तदनु वक्ष्यमाणा चिकित्सा कार्य्येत्याहुः। अग्र्यमिति पाठे—प्रधानमित्यर्थः॥ १॥

प्रच्छन्नमित्यादि।—बहुश इति—बलरक्षार्थं स्तोकं स्तोकं दोषनिर्हरणेन पुनः पुनः शोध्यः, एकदा हि भूरिदोषहरणेन बलक्षयः प्राणात्ययश्च स्यादिति; अत एव एतदनन्तरमुक्तं चरकेण—"दोषे ह्यतिमात्रहृते वायुर्हन्यादबलमाशु" (चि० कुष्ठ०) इति॥ २॥

वचेत्यादि।—अत्र वचादीनां त्रयाणां मूलम्। फलिनी प्रियङ्गुः। कषाय इति वमनार्थक्वाथविधया, यथा—"क्वाथ्यद्रव्यस्य कुडवं श्रपयित्वा जलाढके। चतुर्भागावशिष्टन्तु वमनेष्ववचारयेत्॥" इति परिभाषया कार्य्यः॥ ३॥

विरेचनमित्यादि।—त्रिफलाक्वाथे त्रिवृद्दन्तीमूले प्रक्षिप्य, अथवा दन्तीमूलत्रिवृता-मूलचूर्णं प्रति मा २, त्रिफलाक्वाथेन पेयम्॥ ४॥

ये लेपा इत्यादि।—निर्गतोऽस्रगतो दोषो येषां ते तथा निर्गतास्रदोषाः॥ ५॥

मनःशिलेत्यादि।—आलं हरितालम्। तैलञ्च सार्षपं, कुष्ठहरत्वात्। आर्कं पयोऽर्कक्षीरम्॥ ६॥

चतुरङ्गुलादिप्रलेपः।—

पर्णानि पिष्ट्वा चतुरङ्गुलस्य तक्रेण पर्णान्यथ काकमाच्याः।
तैलाक्तगात्रस्य नरस्य कुष्ठान्युद्वर्त्तयेदश्वहनच्छदैश्च ॥ ७ ॥

आरग्वधादयः षट्प्रलेपाः।—

आरग्वधः सैड़गजः करञ्जो वासा गुडूची मदनं हरिद्रे।
श्र्याह्वः सुराह्वः खदिरो धवश्च निम्बो विड़ङ्गं करवीरकश्च ॥ ८ ॥
ग्रन्थिश्च भौर्जो लशुनः शिरीषः सलोमशो गुग्गुलु-कृष्णगन्धे।
फणिज्झको वत्सकसप्तपर्णौ पीलूनि कुष्ठं सुमनःप्रवालाः ॥ ९ ॥
वचा हरेणुस्त्रिवृता निकुम्भो भल्लातकं गैरिकमञ्जनञ्च।
मनःशिलाऽऽले गृहधूम एला काशीशलोध्रार्जुनमुस्तसर्जाः ॥ १० ॥
इत्यर्द्धरूपैर्विहिताः षड़ेते गोपित्तपीताः पुनरेव पिष्टाः।
सिद्धाः परं सर्षपतैलयुक्ताश्चूर्णप्रदेहा भिषजा प्रयोज्याः ॥ ११ ॥
कुष्ठानि कृच्छ्राणि नवं किलासं सुरेन्द्रलुप्तं किटिमं सदद्रु।
भगन्दरार्शांस्यपचीं सपामां हन्युः प्रयुक्तास्त्वचिरान्नराणाम् ॥ १२ ॥

मनःशिलाद्यष्टाङ्गलेपः।—

मनःशिला त्वक् कुटजात् सकुष्ठा सलोमशः सैड़गजः करञ्जः।
ग्रन्थिश्च भौर्जः करवीरमूलं चूर्णानि साध्यानि तुषोदकेन ॥ १३ ॥

---

पर्णानीत्यादि।—चतुरङ्गुलः शोनालुः। अश्वहनच्छदः करवीरपत्रम्, एतद्दन्त एक एव योगः, योगविंशे चरकोक्तद्वाविंशत्यदेहसङ्ख्याबद्धिः स्यादिति ॥ ७ ॥

आरग्वध इत्यादि।—आरग्वध इत्यादिना षड्भिः श्लोकार्द्धैः षड्योगाः। आरग्वधस्य पत्रम्। श्र्याह्वः नवनीतखोटिः। करवीरकः करवीरस्य त्वक्। ग्रन्थिश्च भौर्ज इति भूर्जपत्रग्रन्थिः। लोमशः धातुकाशीशं, तमालपत्रं वा। कृष्णगन्धा शोभाञ्जनकः। फणिज्झकः पर्णासभेदः। पीलु श्रौत्तरापथिकं फलम्। सुमनःप्रवालाः जातीपल्लवाः। निकुम्भः दन्ती। अञ्जनं रसाञ्जनम्। अर्द्धरूपैरिति—अर्द्धश्लोकैः। गोपित्तपीता इति—गोपित्तभावनया पीता पीतवर्णा, भावना च सप्ताहम् ॥ ८—१२ ॥

मनःशिलेत्यादि।—त्वक् कुटजादिति—कुटजस्य त्वक्। लोमशः धातु-

पलाशनिर्दाहरसेन वाऽपि कर्षोद्धृतान्याढकसम्मितेन।
दर्वीप्रलेपं प्रवदन्ति लेपमेतत् परं कुष्ठविनाशनाय ॥ १४ ॥

कण्ड्वादौ कुष्ठाद्युद्वर्त्तनम्।—

कुष्ठं हरिद्रे सुरसं पटोलं
निम्बाश्वगन्धे सुरदारुशिग्रु।
ससर्षपं तुम्बुरुधान्यवन्यं
चण्डाञ्च दूर्वाञ्च समानि कुर्य्यात् ॥ १५ ॥
तैस्तक्रपिष्टैः प्रथमं शरीरं
तैलाक्तमुद्वर्त्तयितुं यतेत।
अथास्य कण्डूः पिड़काः सकोठाः
कुष्ठानि शोथाश्च शमं प्रयान्ति ॥ १६ ॥

धात्र्यक्षपथ्यादिलेपः।—

धात्र्यक्षपथ्याक्रिमिशत्रुवह्नि-
भल्लातकावल्गुजलोहभृङ्गैः।
भागाभिवृद्धैस्तिलतैलमिश्रैः
सर्व्वाणि कुष्ठानि निहन्ति लेहः ॥ १७ ॥

काश्मीरम्। तुषोदकं सतुषैर्यवैः सन्धानविशेषात् कृतं काञ्जिकम्। पलाशनिर्दाह-रसेनेति—पलाशवृक्षस्य प्रधानमूलं छित्त्वा तदधः कुम्भं स्थापयित्वा उपरि प्रज्वालनात् यः स्वरसो गलति स पलाशनिर्दाहरसः; अन्ये तु—पलाशक्षारो-दकमाहुः ॥ १३।१४ ॥

कुष्ठमित्यादि।—सुरसः पर्णासः। तुम्बुरु स्वनामख्यातम्। वन्यं कैवर्त्तमुस्तकम्। चण्डा चोरपुष्पी। प्रथमं तैलाक्तमिति योज्य, तैलञ्च इह सार्षपम् ॥ १५।१६ ॥

धात्रीत्यादि।—अक्षः विभीतकम्। क्रिमिशत्रुः विड़ङ्गसारः। वह्निः चित्रकः। लोह इति—वज्रादयश्चूर्णं, न त्वगुरु। भृङ्ग इति—भृङ्गराजस्य चूर्णं, न तु गुड़-त्वक्; उक्तं हि विन्ध्यवासिना—"त्रिफलाऽथ विड़ङ्गानि चित्रकोऽरुष्करस्तथा। इन्दु-रेखा अयश्चूर्णं भृङ्गराजरजोऽपि च ॥ क्रमाभिवृद्धा संयुक्तं तैलेन सुपरिप्लुतम्। रसायनमिदं नाम रसायनमनुत्तमम् ॥" इति। तथा लेप इति प्रमादपाठः, किन्तु

विड़ङ्गादिलेपः।—

विड़ङ्गसैन्धवशिवाशशिरेखासर्षपकरञ्जरजनीभिः।
गोजलपिष्टो लेपः कुष्ठहरो दिवसनाथसमः॥ १८॥

दद्र्वादौ विड़ङ्गैड़गजादिलेपः।—

विड़ङ्गैड़गजाकुष्ठ-निशासिन्धूत्थसर्षपैः।
धान्याम्लपिष्टैर्लेपोऽयं दद्रुकुष्ठरुजापहः॥ १९॥

दद्र्वादौ दूर्वादिप्रलेपः।—

दूर्वाऽभयासैन्धवचक्रमर्द-कुठेरकाः काञ्जिकतक्रपिष्टाः।
त्रिभिः प्रलेपैरपि बद्धमूलं दद्रुञ्च कण्डूञ्च रुजाञ्च हन्युः॥ २०॥

दद्रुरोगे सर्जादिप्रलेपः।—

तुल्यो रसः शालतरोस्तुषेण सचक्रमर्दोऽप्यभयाविमिश्रः।
पानीयभक्तेन तदम्बुपिष्टो लेपः कृतो दद्रुगजेन्द्रसिंहः॥ २१॥

दद्रुरोगे प्रपुन्नाड़वीजाद्युद्वर्त्तनम्।—

प्रपुन्नाड़स्य वीजानि धात्री सर्जरसः स्नुही।
सौवीरपिष्टं दद्रूणामेतदुद्वर्त्तनं परम्॥ २२॥

---

लेह इति; उक्तं हि तन्त्रान्तरे—"धात्री विभीतकं पथ्या विड़ङ्गाग्निमरुष्करम्। वागुजीलौहभृङ्गञ्च सचूर्णं क्रमवर्द्धितम्॥ तिलतैलान्वितं लिह्यात् श्रेष्ठमेतद्रसायनम्॥" इति। तेनायं योगः शशाङ्कलेखेत्याद्यनन्तरं बोध्यः, लेखकदोषात्तु लेपप्रकरणे पठित इति॥ १७॥

विड़ङ्गेत्यादि।—शशिरेखा सोमराजीवीजम्। गोजलं गोमूत्रम्। दिवसनाथः सूर्य्यः॥ १८।१९॥

दूर्वेत्यादि।—चक्रमर्दः एड़गजः। कुठेरकः पर्णासभेदः। काञ्जिकतक्रपिष्टा इति—काञ्जिकतक्रयोरन्यतरेण पिष्टा इत्यर्थः। त्रिभिः प्रलेपैरित्यनेन शीघ्रप्रशमनकारितां दर्शयति, न तु नियमोऽयम्॥ २०॥

दद्रुरोगे चक्रमर्दबीजादिलेपः ।—

चक्रमर्दकबीजानि जीरकञ्च समांशिकम् ।
स्तोकं सुदर्शनामूलं दद्रुकुष्ठविनाशनम् ॥ २३ ॥

दद्रुरोगे टङ्कणलेपः यूथीपुन्नागलेपश्च ।—

लेपनाट्टङ्कणाच्चैव टङ्कणं दद्रुनाशनम् ।
यूथीपुन्नागमूलञ्च लेपात् काञ्जिकपेषितम् ॥ २४ ॥

दद्र्वादौ कासमर्दलेपः ।—

कासमर्दकमूलञ्च सौवीरेण च पेषितम् ।
दद्रुकिटिमकुष्ठानि जयेदेतत् प्रलेपनात् ॥ २५ ॥

सिध्मे मूलकबीज-कदलीक्षारादिलेपौ ।—

शिखरिरसेन सुपिष्टं मूलकबीजं प्रलेपतः सिध्म ।
क्षारेण वा कदल्या रजनीमिश्रेण नाशयति ॥ २६ ॥

सिध्मे गन्धकलेपौ ।—

गन्धपाषाणचूर्णेन यवक्षारेण पेषितम् ।
सिध्मं नाशं व्रजत्याशु कटुतैलयुतेन वा ॥ २७ ॥

सिध्मे कासमर्दबीजादिलेपः ।—

कासमर्दकबीजानि मूलकानां तथैव च ।
गन्धपाषाणमिश्राणि सिध्मानां परमौषधम् ॥ २८ ॥

---

चक्रमर्दकेत्यादि ।—स्तोकं सुदर्शनामूलमिति—मिलितचक्रमर्दजीरकापेक्षया पादिकमित्याहुः ॥ २३ ॥

लेपनादित्यादि ।—टङ्कणं "सोनागास" इति नाम्ना ख्यातम् । यूथीपुन्नागमूलं स्वनामख्यातम ॥ २४ ॥

कासमर्दकेत्यादि ।—कासमर्दकः कालकासुन्दा, एतन्मूलं सौवीरेण पिष्टा रात्रौ स्थाप्यं, प्रातस्तत्काकरुते लेपो विधेय इत्युपदिशन्ति ॥ २५ ॥

शिखरिरसेनेत्यादि ।—शिखरिरसेन अपामार्गस्वरसेन । क्षारेण वा कदल्या इति—कदलीक्षारोदकेन पिष्टमित्यर्थः, पेषणं प्रति विकल्पेनास्य प्रणयनात् ॥ २६ ॥

गन्धपाषाणेत्यादि ।—गन्धपाषाणः गन्धकः । मूलकानां तथैव चेति—मूलकानां बीजानीति शेषः ॥ २७।२८ ॥

सिध्मे धात्रीरसाद्युद्वर्त्तनम् ।—

धात्रीरसः सर्जरसः सपाक्यः सौवीरपिष्टश्च तदायुतश्च ।
भवन्ति सिध्मानि यथा न भूयस्तथैवमुद्वर्त्तनकं करोति ॥ २९ ॥

सिध्मे कुष्ठादिलेपः ।—

कुष्ठं मूलकबीजं प्रियङ्गवः सर्षपास्तथा रजनी ।
एतत् केशरषष्ठं निहन्ति बहुवार्षिकं सिध्म ॥ ३० ॥

सिध्मे मूलकबीजलेपः ।—

नीलकुरुण्टकपत्रस्वरसेनालिप्य गात्रमतिबहुशः ।
लिम्पेन्मूलकबीजैः पिष्टैस्तक्रेण सिध्मनाशाय ॥ ३१ ॥

किटिभे चक्रमर्दलेपः ।—

चक्राह्वयं स्नुहीक्षीर-भावितं मूत्रसंयुतम् ।
रवितप्तं हि किञ्चित्तु लेपनात् किटिभापहम् ॥ ३२ ॥

दद्र्वादौ आरग्वधलेपः ।—

आरग्वधस्य पत्राणि आरनालेन पेषयेत् ।
दद्रुकिटिमकुष्ठानि हन्ति सिध्मानमेव च ॥ ३३ ॥

दद्र्वादौ मूलकबीजादिलेपः ।—

बीजानि वा मूलकसर्षपाणां
लाक्षारजन्यौ प्रपुनाड़बीजम् ।
श्रीवेष्टकव्योषविड़ङ्गकुष्ठं
पिष्ट्वा च मूत्रेण तु लेपनं स्यात् ॥ ३४ ॥

---

धात्रीरस इत्यादि ।—धात्रीरसः आमलकीस्वरसः । धात्रीरसस्थाने धात्रीफलमिति चन्द्रटः पठति । पाक्यः यवक्षारः, विड़लवणमित्यन्ये । तदायुत इति—सौवीरेणैव दिनत्रयं सम्भावितः ; "पूतिकृतं दिवसत्रयम्" इति योगान्तरदर्शनात् ॥ २९ ॥

कुष्ठमित्यादि ।—केशरं नागकेशरम् ॥ ३० ॥

नीलेत्यादि ।—नीलकुरुण्टकः नीलझिण्टी ॥ ३१ ॥

चक्राह्वयमित्यादि ।—चक्राह्वयम् एड़गजबीजम् । "रवितप्तं सकाञ्जिकं" इत्यादि पाठान्तरम् ॥ ३२।३३ ॥

दद्रूणि सिध्मं किटिमानि पामां
कपालकुष्ठं विषमञ्च हन्यात् ॥ २५ ॥

क्रिमिसिध्मादौ एड़गजादिलेपः।—

एड़गजकुष्ठसौवीरक-सैन्धवसर्षपैः क्रिमिघ्नैश्च।
क्रिमिसिध्मदद्रुमण्डलकुष्ठानां नाशनो लेपः ॥ २६ ॥

विचर्च्चिकायां पक्वसर्षपप्रलेपः।—

स्नुक्काण्डे सर्षपात् कल्कः कुकूलानलपाचितः।
लेपाद्विचर्च्चिकां हन्ति रागवेग इव त्रपाम् ॥ २७ ॥

विचर्च्चिकायां पक्वगृहधूमादिलेपः।—

स्नुक्काण्डसुषिरे दग्ध्वा गृहधूमं ससैन्धवम्।
अन्तर्धूमं तैलयुक्तं लेपाद्धन्ति विचर्च्चिकाम् ॥ २८ ॥

विचर्च्चिकादौ एड़गजादिलेपः।—

एड़गजातिलसर्षपकुष्ठं मागधिकालवणत्रयमस्तु।
पूतिकृतं दिवसत्रयमेतद्धन्ति विचर्च्चिकदद्रु सकुष्ठम् ॥ २९ ॥

---

बीजानीत्यादि।—अत्र लाचारजन्याविति द्वन्द्वः, न तु हरिद्राद्वयमित्याहुः। श्रीवेष्टकः नवनीतखोटी ॥ २४।२५ ॥

एड़गजेत्यादि।—सौवीरकं सौवीराञ्जनम्; अत्र विशिष्टद्रवस्यानुक्तत्वात् गोमूत्रमेव कुष्ठहरतया पेषणार्थं ग्राह्यमिति वदन्ति; अपरे तु—सौवीरशब्दस्य काञ्जिकार्थतां परिकल्प्य तेनैव पेषणमित्याहुः ॥ २६ ॥

स्नुक्काण्डे इत्यादि वाग्भटस्य।—कुकूलानलः करीषाग्निः। स्नुक्काण्डमध्ये गर्त्तं कृत्वा पिष्टश्वेतसर्षपैस्तत् प्रपूर्य्य स्नुहीकाण्डान्तरेणाच्छाद्य कुशादिभिर्बद्ध्वा मृत्तिकया प्रलिप्य गोमयाग्निना दहेत्, ततः आकृष्य तेन कल्केन लेपः ॥ २७ ॥

स्नुक्काण्डसुषिरे इत्यादि।—स्नुक्काण्डं सोऽनुपर्वं कोरयित्वा तद्विवरं गृहधूमसैन्धवचूर्णाभ्यां पूरयित्वा स्थालीमध्ये तन्निक्षिप्य तदुपरि शरावं दत्त्वा मृत्तिकया शरावसन्धिं पिधायान्तर्धूमं दहेत्, तदनु कटुतैलेन सम्मिश्य लेपः ॥ २८ ॥

एड़गजेत्यादि।—लवणत्रयं सौवर्चल-सैन्धव-विड़लवणम् ॥ २९ ॥

विपादिकायां धुस्तूरतैलम्।—

उन्मत्तकस्य वीजेन माणक्षारवारिणा।

कटुतैलं विपक्तव्यं शीघ्रं हन्याद्विपादिकाम्॥ ४०॥

विपादिकायां तण्डुललेपः।—

नारिकेलोदके न्यस्तस्तण्डुलः पूतितां गतः।

लेपाद्विपादिकां हन्ति चिरकालानुबन्धिनीम्॥ ४१॥

पादस्फुटने सर्जरसादिलेपः।—

सर्जरससिन्धुसम्भव-गुड़मधुमहिषाक्षगैरिकं सघृतम्।

सिक्थकमेतत् पक्वं पादस्फुटनापहं सिद्धम्॥ ४२॥

कच्छ्वादौ अवल्गुजादिलेपः।—

अवल्गुजं कासमर्दं चक्रमर्दं निशायुतम्।

माणिमन्थेन तुल्यांशं मस्तुकाञ्जिकपेषितम्॥

कच्छूं कण्डूं जयत्युग्रां सिद्ध एष प्रयोगराट्॥ ४३॥

कच्छूरोगे वासापत्रादिलेपः।—

कोमलसिंहास्यदलं सनिशं सुरभीजलेन सम्पिष्टम्।

दिवसत्रयेण नियतं क्षपयति कच्छूं विलेपनतः॥ ४४॥

कच्छ्वादौ हरिद्राकल्कः।—

हरिद्राकल्कसंयुक्तं गोमूत्रस्य पलद्वयम्।

---

उन्मत्तकस्येत्यादि।—उन्मत्तकस्य धुस्तूरकस्य वीजं कल्कः। माणकक्षार-परिस्रुतजलं चतुर्गुणं पाकार्थम्। विपादिका पादस्फोटनम्॥ ४०॥

नारिकेलोदके इत्यादि।—नारिकेलस्य सजलशस्यं कस्यक् चाम्लम्॥ ४१॥

सर्जरसेत्यादि।—सिन्धुसम्भवं सैन्धवम्। महिषाक्ष इति—गुग्गुलुः। एतत् सर्वं समभागमेकीकृत्य मनाक् पक्तव्यं यथा सिक्थकाकृति भूत्वा लेपयोग्यं भवति॥ ४२॥

अवल्गुजमित्यादि।—अवल्गुजं सोमराजीवीजम्। माणिमन्थं सैन्धवम्। मस्तु-काञ्जिकपेषितमिति—मस्तुकाञ्जिकयोरन्यतरेण॥ ४३॥

कोमलेत्यादि।—सिंहास्यः वासकः, तस्य पत्रम्। सुरभीजलं गोमूत्रम्॥ ४४॥

हरिद्रेत्यादि।—अत्र शास्त्रयुक्त्या हरिद्राकल्ककर्षस्य प्रक्षेपः; "कर्षचूर्णस्य

पिबेन्नरः कामचारी कच्छूपामाविनाशनम् ॥ ४५ ॥

कच्छ्वादौ पथ्याचूर्णम् ।—

शोथपाण्ड्वामयहरी गुल्ममेहकफापहा ।
कच्छूपामाहरी चैव पथ्या गोमूत्रसाधिता ॥ ४६ ॥

पामायां गन्धकप्रयोगः ।—

पिबति सकटुतैलं गन्धपाषाणचूर्णं
रविकिरणसुतप्तं पामलो यः पलार्द्धम् ।
त्रिदिन तदनुषिक्तः क्षीरभोजी च शीघ्रं
भवति कनकदीप्त्या कामयुक्तो मनुष्यः ॥ ४७ ॥

पामादौ निशाद्युद्वर्त्तनम् ।—

निशासुधाऽऽरग्वधकाकमाची-पत्रैः सदार्वीप्रपुनाड़बीजैः ।
तक्रेण पिष्टैः कटुतैलमिश्रैः पामादिषूद्वर्त्तनमेतदिष्टम् ॥ ४८ ॥

पामायां सिन्दूरादिलेपः करवीरतैलञ्च ।—

सिन्दूरमरिचचूर्णं महिषीनवनीतसंयुतं बहुशः ।

---

कल्कस्य" इति वचनात्; व्यवहारस्तु हरिद्राकल्कस्याष्टौ माषकाः, गोमूत्रस्य पलमेकम् ॥ ४५ ॥

शोथेत्यादि ।—पथ्या गोमूत्रसाधितेति—गोमूत्रेणस्विन्ना हरीतकी ॥ ४६ ॥

पिबतीत्यादि ।—पलार्द्धमिति उत्तमबलानलं प्रति प्रात्यहिकी मात्रा, किंवा पलार्द्धं त्रिदिनं यः पिबतीति योज्यम् । त्रिदिनेत्यत्रानुस्वारस्य लोपश्छान्दसत्वात्; तेन पलार्द्धं दिनत्रयं विभज्य योज्यं, तेन किञ्चिदधिकदशमाषकाः प्रत्यहं भवन्ति, व्यवहारस्तु शोधितगन्धकचूर्णस्य माषकचतुष्टयं कटुतैलस्य तु कर्षं एक इति । तदनुषिक्त इति—तेन सतैलगन्धकचूर्णेन अभ्यक्तगात्रः । क्षीरभोजीति क्षीरासहत्वे मण्डेन व्यवहारः । दिनत्रयं सप्ताहं वा प्रयोगावधिः वातातपवर्जनञ्चेति । कनकदीप्त्येति उपलक्षणे तृतीया । "कनकगौरः" इति च पाठः । कामयुक्त इति—उपचितशुक्रधातुः; "कामतुल्यः" इत्यपि पाठः ॥ ४७ ॥

निशेत्यादि ।—अत्र निशादिचतुष्टयस्य पत्राणि; अन्ये तु निशा हरिद्रैव, सुधादीनामेव पत्राणीत्याहुः ॥ ४८ ॥

लेपादिनिहन्ति पामां तैलं करवीरसिद्धं वा ॥ ४९ ॥

कण्डूरोगे मांस्यादिगणः।—

मांसीचन्दनसम्पाक-करञ्जारिष्टसर्षपम्।
यष्टीकुटजदार्व्यब्दं हन्ति कण्डूमयं गणः ॥ ५० ॥

कुष्ठादौ भल्लातकादिलेपः।—

भल्लातकं द्वीपिसुधाऽर्कमूलं गुञ्जाफलं त्र्यूषणशङ्खचूर्णम्।
तुत्थं सकुष्ठं लवणानि पञ्च चारद्वयं लाङ्गलिकाञ्च पक्का ॥ ५१ ॥
स्नुहार्कदुग्धे घनमायसस्थं शलाकया तं विदधीत लेपम्।
कुष्ठे किलासे तिलकालके च अशेषदुर्नामसु चर्मकीले ॥ ५२ ॥

विषादिलेपः।—

विषवरुणहरिद्राचित्रकागारधूम-
मनलमरिचदूर्वाः चीरमर्कस्नुहाभ्याम्।
दहति पतितमात्रात् कुष्ठजातीरशेषाः
कुलिशमिव सरोषाच्छक्रहस्ताद्विमुक्तम् ॥ ५३ ॥

सोमराज्यादिलेपः।—

शशाङ्कलेखा सविडङ्गसारा
सपिप्पलीका सहुताशमूला।

---

सिन्दूरेत्यादि।—करवीरक्वाथकल्काभ्यां सिद्धं कटुतैलमित्यर्थः ॥ ४९ ॥

मांसीत्यादि।—सम्पाकस्य पत्रम्। करञ्जस्य फलम्। अरिष्टः निम्बः, तस्य पत्रम्। यष्टीति—यष्टिमधु। कण्डूमित्यत्र कुष्ठमिति क्वचित् पाठः, किन्तु चरकेऽप्यस्मिन् गणे दशैमानि कण्डूघ्नानीत्युक्तम् ॥ ५० ॥

भल्लातकमित्यादि वाग्भटस्य।—द्वीपी चित्रकः। अत्र भल्लातकाद्यर्कान्तानां मूलमिति केचित; अन्ये तु—भल्लातकस्य बीजं, तस्यैव सर्वत्रोपयोगित्वादित्याहुः, चित्रकादित्रयाणां मूलम; एषां भल्लातकादिलाङ्गलिकान्तानां चूर्णं स्नुहार्कचीराभ्यां मिलित्वा चूर्णमपेक्ष्य चतुर्गुणाभ्यां लोहपात्रे लेपयोग्यता यावत् तावत् पाकं कुर्यादित्याहुः ॥ ५१।५२ ॥

विषेत्यादि।—विषं स्थावरविषम्। अनलः भल्लातकः। अत्रापि पूर्ववच्चूर्णादिमानम्, अर्कस्नुहीचीराभ्यां पाकविधिश्चेति वदन्ति ॥ ५३ ॥

सायोमला सामलका सतैला
सर्वाणि कुष्ठानि निहन्ति लीढ़ा ५४ ॥

सोमराज्यादिचूर्णम् ।—

तीव्रेण कुष्ठेन परीतदेहो
यः सोमराजीं नियमेन खादेत् ।
संवत्सरं कृष्णतिलद्वितीयां
स सोमराजीं वपुषाऽतिशेते ॥ ५५ ॥

सोमराजीप्रयोगः ।—

धर्मसेवी कदुष्णेन वारिणा वागुजीं पिबेत् ।
क्षीरभोजी त्रिसप्ताहात् कुष्ठरोगाद्विमुच्यते ॥ ५६ ॥

गुह्यदद्रुरोगे तिलादिचूर्णम् ।—

एकस्तिलस्य भागो द्वौ सोमराज्यास्तथैव च ।
भक्ष्यमाणमिदं प्रातर्गुह्यदद्रुविनाशनम् ॥ ५७ ॥

अवल्गुजप्रयोगः ।—

अवल्गुजाद्बीजकर्षं पीत्वा कोष्णेन वारिणा ।
भोजनं सर्पिषा कार्य्यं सर्वकुष्ठप्रणाशनम् ॥ ५८ ॥

कफपित्तजकुष्ठे नवकषायः ।—

त्रिफलापटोलरजनी-मञ्जिष्ठारोहिणीवचानिम्बैः ।

---

शशाङ्कलेखेत्यादि वाग्भटस्य ।—शशाङ्कलेखा सोमराजी। हुताशः चित्रकः। अयोमलं शोधितमण्डूरचूर्णम्। अस्मान्मिलितचूर्णान्माषकत्रयं चतुष्टयं वा गृहीत्वा तिलतैलेन लेह्यम् ॥ ५४ ॥

तीव्रेणेत्यादि।—नियमेन इत्यनेन प्रात्यहिकत्वं पथ्याशित्वञ्च गमयति। सोमराजीकृष्णतिलयोस्तु प्रत्येकं माषकत्रयं माषकचतुष्टयं वा व्यवहरन्ति। सोमराजीमिति—चन्द्रश्रेणीम ॥ ५५ ॥

धर्मसेवीत्यादि ।—धर्मसेवी आतपसेवी। वागुजी सोमराजीबीजम्, अस्य च माषकचतुष्टयमुष्णोदकेनालोड्य पिबेत ॥ ५६ ॥

एक इत्यादि।—अत्रापि उष्णोदकमनुपेयम् ॥ ५७।५८ ॥

एष कषायोऽभ्यस्तो निहन्ति कफपित्तजं कुष्ठम् ॥ ५९ ॥

गुडूचीप्रयोगः।—

छिन्नायाः स्वरसो वाऽपि सेव्यमानो यथाबलम्।
जीर्णे घृतेन भुञ्जीत मुद्गयूषोदकेन वा॥
अतिपूतिशरीरोऽपि दिव्यरूपो भवेन्नरः॥ ६० ॥

पटोलादिक्वाथः।—

पटोलखदिरारिष्ट-त्रिफलाकृष्णावेत्रजम्।
तिक्ताशनः पिबेत् क्वाथं कुष्ठी कुष्ठं व्यपोहति ॥६१॥

सप्तसमो योगः।—

तिलाज्यत्रिफलाक्षौद्र-व्योषभल्लातशर्कराः।
वृष्यः सप्तसमो मेध्यः कुष्ठहा कामचारिणः॥ ६२ ॥

कुष्ठादौ विडङ्गादिचूर्णम्।—

विडङ्गत्रिफलाकृष्णा-चूर्णं लीढं समाक्षिकम्।
हन्ति कुष्ठं क्रिमीन् मेहान् नाडीव्रणभगन्दरान् ॥ ६३ ॥

इन्द्राशनप्रयोगः।—

इन्द्राशनं समादाय प्रशस्तेऽहनि चोद्धृतम्।
तच्चूर्णं मधुसर्पिर्भ्यां लिहेत् क्षीरघृताशनः॥
हत्वा च सर्वकुष्ठानि जीवेद्वर्षशतद्वयम् ॥ ६४ ॥

अभयादि-निम्बादिचूर्णद्वयम्।—

यः खादेदभयारिष्टमरिष्टामलकानि वा।

---

त्रिफलेत्यादि।—स्पष्टम ॥ ५९ ॥

छिन्नाया इत्यादि।—छिन्ना गुड़ूची ॥ ६० ॥

पटोलेत्यादि।—कृष्णावेत्रं कालियाबतेति ख्यातम्। तिक्ताशन इति—तिक्त-भूयिष्ठाहारः॥ ६१ ॥

तिलेत्यादि।—सप्तसम इति संज्ञाबलात् मिलितत्रिफलैव तिलाद्येकभाग-समा, एवं व्योषमपि ॥ ६२।६३ ॥

इन्द्राशनमित्यादि।—अत्र चूर्णमिति माषकद्वयं त्रयं वा देयम् ॥ ६४ ॥

स जयेत् सर्वकुष्ठानि मासादूर्ध्वं न संशयः ॥ ६५ ॥

खदिरादिरसप्रयोगः ।—

दह्यमानाच्च्युतः कुम्भे मूलगो खदिरात् रसः ।
साज्यधात्रीरसक्षौद्रो हन्यात् कुष्ठं रसायनम् ॥ ६६ ॥

श्वित्रे वायस्यादिलेपः ।—

वायस्येड़गजाकुष्ठ-कृष्णाभिर्गुड़िका कृता ।
बस्तमूत्रेण सम्पिष्टा लेपाच्छ्वित्रविनाशिनी ॥ ६७ ॥

श्वित्रादौ पूतिकादिलेपः ।—

पूतीकार्कस्नुङ्नरेन्द्रद्रुमाणां
मूत्रैः पिष्टाः पल्लवाः सौमनाश्च ।
लेपाच्छ्वित्रं घ्नन्ति दद्रुव्रणांश्च
कुष्ठान्यर्शांस्युग्रनाड़ीव्रणांश्च ॥ ६८ ॥

श्वित्रे गजचर्मादिभस्म पूतिकीटलेपौ ।—

गजचित्रव्याघ्रचर्म-मसीतैलविलेपनात् ।
श्वित्रं नाशं व्रजेत् श्विला पूतिकीटविलेपनात् ॥ ६९ ॥

श्वित्रे अवल्गुजबीजादिलेपः ।—

कुड़वोऽवल्गुजबीजाद्धरितालचतुर्थभागसम्मिश्रः ।
मूत्रेण गवां पिष्टः सवर्णकरणः परः श्वित्रे ॥ ७० ॥

श्वित्रे धामलक्यादिक्वाथः ।—

धात्रीखदिरयोः क्वाथं पीत्वाऽवल्गुजसंयुतम् ।

---

यः खादिरेत्यादि ।—अरिष्टः निम्बः ॥ ६५ ॥

दह्यमानादित्यादि ।—खदिररसधात्रीरसौ तुल्यौ, घृतक्षौद्रे तु प्रक्षेप्ये इत्याहुः ॥ ६६ ॥

वायसीत्यादि ।—वायसी काकमाची ॥ ६७ ॥

पूतीकेत्यादि सुश्रुतस्य ।—पूतीकः नाटाकरञ्जः । नरेन्द्रद्रुमः आरग्वधः, एषां पल्लवा इत्यन्वयः ; तथा सौमनाश्च पल्लवा जातीपल्लवा इत्यर्थः ॥ ६८ ॥

गजेत्यादि ।—चित्रव्याघ्रः चित्रितचर्मा व्याघ्रः । केवलगजचर्ममसीलेपश्च

शङ्खेन्दुधवलं श्वित्रं तूर्णं हन्ति न संशयः ॥ ७१ ॥

श्विते गजपुरीषक्षारपक्वावल्गुजप्रलेपः।—

क्षारे सुदग्धे गजलण्डजे च
गजस्य मूत्रेण बहुस्रुते च।
द्रोणप्रमाणं दशभागयुक्तं
दत्त्वा पचेद्वीजमवल्गुजस्य ॥ ७२ ॥
एतत् यदा चिक्कणतामुपैति
तदा सुसिद्धां गुड़िकां प्रयुञ्ज्यात्।
श्वित्रं विलिम्पेदथ तेन घृष्टं
तदा व्रजत्याशु सवर्णभावम् ॥ ७३ ॥

---

श्विवहरलेनोक्तो यथा—"श्वेतजयन्त्यङ्घ्रिमूलं चौरं श्विवविनाशनम्। गजचर्ममसीलेपो लेपो वा पूतिकीटकः॥" इति। पूतिकीटः पादुकाकीटः, "पादकुरा" इति लोके ख्यातः॥ ६९—७१ ॥

क्षारे इत्यादि सुश्रुतस्य।—गजलण्डं गजपुरीषम्। "नलगण्डजे" इति पाठे—नलः गण्डः शमठः। गजस्य मूत्रेण इत्यनन्तरं पक्व इति शेषः। बहुस्रुते इति—एकविंशतिवारं सप्तवारं वा परिस्रुते। दशभागयुक्तमिति—द्रोणस्य दशमांशेन युक्तमवल्गुजमित्यर्थः। एतस्य क्रियापरिपाटी लिख्यते—प्रथमतो गजलण्डक्षारस्य द्रोणमेकं (२५६ पल) ग्राह्यं, तत्क्वाथार्थं गजमूत्रं क्षारपरिभाषया षड्गुणं दीयमानं द्रवद्वैगुण्येन द्वादश द्रोणा भवन्ति; अद्विगुणगणनया तु षड् द्रोणानि स्युः, तेन मूत्रशराव १९२; "प्रायस्त्रिभागशेषेऽस्मिन्" इति वचनेन तृतीयभागावशेषात् द्वैगुण्येन द्रोणमेकं ग्राह्यं, तच्च शराव ६४; ततस्तृतीयभागावशिष्टक्षारोदकद्रोणापेक्षया दशमांशेनावल्गुजवीजं पिष्ट्वा तत्र प्रक्षिप्य पचेत्, तेनावल्गुजवीजस्य किञ्चिन्न्यूनत्रयोदशमाषकाधिकैकपञ्चाशत्पलानि भवन्ति, (पल ५१, तोला १, माषा ५) अन्ये तु—षट्पञ्चाशदधिकपलशतद्वयकपर्याप्तद्रोणापेक्षया दशमांशेनावल्गुजवीजं गृह्णन्ति, तेन तन्मते—अवल्गुजवीजस्य पल २५, कर्ष २, माषा ६, रति ४, एतन्मानं भवति; किन्तु व्यवहारः पूर्ववदेव। ततोऽवतार्य्य शिलायां पिष्ट्वा चिक्कणतामुपगते सति गुड़िका कार्य्या। घृष्टमिति फल्गुपत्रकरीषादिना ॥ ७२।७३ ॥

श्वित्रे श्वेतजयन्तीप्रयोगः।—

श्वेतजयन्तीमूलं पिष्टं पीतञ्च गव्यपयसैव।
श्वित्रं निहन्ति नियतं रविवारे वैद्यनाथाज्ञा॥ ७४॥

पञ्चनिम्बम्।—

पुष्पकाले च पुष्पाणि फलकाले फलानि च।
सञ्चयं पिचुमर्दस्य त्वङ्मूलानि दलानि च॥ ७५॥
द्विरंशानि समाहृत्य भागिकानि प्रकल्पयेत्।
त्रिफलाच्यूषणब्राह्मी-श्वदंष्ट्राऽरुष्करान्निकाः॥ ७६॥
विडङ्गसारवाराही-लौहचूर्णास्तिताः समाः।
हरिद्राद्वयवागुजी-व्याधिघाताः सशर्कराः॥ ७७॥
कुष्ठेन्द्रयवपाठाश्च कृत्वा चूर्णं सुसंयुतम्।
खदिरासननिम्बानां घनक्वाथेन भावयेत्॥ ७८॥
सप्तधा पञ्चनिम्बन्तु मार्कवस्वरसेन तु।
स्निग्धशुद्धतनुर्धीमान् योजयेच्च शुभे दिने॥ ७९॥
मधुना तिक्तहविषा खदिरासनवारिणा।
लेह्यमुष्णाम्बुना वाऽपि कोलवृद्ध्या पलं पिबेत्॥
जीर्णे च भोजनं कार्य्यं स्निग्धं लघु हितञ्च यत्॥ ८०॥
विचर्चिकोडुम्बरपुण्डरीक-कापालदद्रूकिटिमालसादीन्।
शताकविस्फोटविसर्पपामां कफप्रकोपं त्रिविधं किलासम्॥ ८१॥
भगन्दरश्लीपदवातरक्तं जातान्ध्यनाडीव्रणशीर्षरोगान्।
सर्वान् प्रमेहान् प्रदरांश्च सर्वान् दंष्ट्राविषं मूलविषं निहन्ति॥ ८२॥

---

श्वेतजयन्तीत्यादि।—अत्र गोपयसैव पिष्टं पीतञ्चेत्यर्थः॥ ७४॥

पुष्पकाले इत्यादि।—अत्र पञ्चनिम्बानां प्रत्येकं भागद्वयं, त्रिफलादीनान्तु प्रत्येकमेको भागः, त्रिफलाव्यूषणयोरपि प्रत्येकं भागः। अग्निः चित्रकः। वाराही वाराहीकन्दः। व्याधिघातः शोनालुः। खदिरासननिम्बानां घनक्वाथेनेति—खदिरादीनां प्रत्येकमष्टभागावशेषेण क्वाथेन भावना। असनः पीतशालः। तिक्त-

स्थूलोदरः सिंहकृशोदरश्च सुश्लिष्टसन्धिर्मधुनोपयोगात्।
समोपयोगादपि ये दशन्ति सर्पादयो यान्ति विनाशमाशु ॥८३॥
जीवेच्चिरं व्याधिजराविमुक्तः शुभे रतश्चन्द्रसमानकान्तिः ॥८४॥

एकविंशतिको गुग्गुलुः।—

चित्रकत्रिफलाव्योषमजाजीं कारवीं वचाम्।
सैन्धवातिविषे कुष्ठं चव्यैलायावशूकजम् ॥ ८५ ॥
विडङ्गान्यजमोदाञ्च मुस्तान्यमरदारु च।
यावन्त्येतानि सर्वाणि तावन्मात्रन्तु गुग्गुलुम् ॥ ८६ ॥
सङ्कुट्य सर्पिषा सार्द्धं गुड़िकां कारयेद्भिषक्।
प्रातर्भोजनकाले वा भक्षयेत् तु यथाबलम् ॥ ८७ ॥
हन्त्यष्टादश कुष्ठानि क्रिमीन् दुष्टव्रणानपि।
ग्रहण्यर्शोविकारांश्च मुखामयगलग्रहान् ॥ ८८ ॥
गृध्रसीमथ भग्नञ्च गुल्मञ्चापि नियच्छति।
व्याधीन् कोष्ठगतांश्चान्यान् जयेद्विष्णुरिवासुरान् ॥ ८९ ॥

भल्लातकवर्द्धमानम्।—

पञ्च भल्लातकांश्छित्त्वा साधयेद्विधिवज्जले।
कषायं तं पिबेच्छीतं घृतेनाक्तौष्ठतालुकः ॥ ९० ॥
पञ्चवृद्ध्या पिबेत् यावत् सप्ततिं ह्रासयेत् ततः।
जीर्णेऽद्यादोदनं शीतं घृतक्षीरोपसंहितम् ॥ ९१ ॥
एतद्रसायनं मेध्यं वलीपलितनाशनम्।
कुष्ठार्शःक्रिमिदोषघ्नं दुष्टशुक्रविशोधनम् ॥ ९२ ॥

---

हविषेति—वक्ष्यमाणतिक्तषट्पलकादिना। खदिरासनवारिणेति—खदिरासनक्वाथेन। कोलद्वयेति—कोलः कर्षार्द्धम्। समोपयोगादिति—वर्षोपयोगात् ॥७५—८४॥

चित्रकेत्यादि।—स्पष्टम् ॥ ८५—८९ ॥

पञ्चेत्यादि।—विधिवदिति—क्वाथविधिना। पिप्पलीवर्द्धमानवदत्रापि वृद्धिह्रासौ ॥ ९०—९२ ॥

भल्लातकतैलप्रयोगोपदेशः।—

तैलं भल्लातकानाञ्च पिबेन्मासं यथाबलम्।
सर्वोपतापनिर्मुक्तो जीवेद्वर्षशतं दृढ़ः॥ ९३॥

त्वग्दोषे खादिरवारिप्रयोगः।—

प्रलेपोद्वर्त्तनस्नान-पानभोजनकर्म्मणि।
शीलितं खादिरं वारि सर्वत्वग्दोषनाशनम्॥ ९४॥

तिक्तषट्पलकं घृतम्।—

निम्बं पटोलं दार्वीं दुरालभां तिक्तरोहिणीं त्रिफलाम्।
कुर्य्यादर्द्धपलांशान् पर्पटकं त्रायमाणाञ्च॥ ९५॥
सलिलाढ़कसिद्धानां रसेऽष्टभागस्थिते क्षिपेत् पूते।
चन्दनकिराततिक्तकमागधिकात्रायमाणाञ्च॥ ९६॥
मुस्तकवत्सकवीजं कल्कीकृतमर्द्धकार्षिकान् भागान्।
नवसर्पिषश्च षट्पलमेतत् सिद्धं घृतं पेयम्॥ ९७॥
कुष्ठज्वरगुल्मार्शोग्रहणीपाण्डामयश्वयथून् हन्ति।
पामाविसर्पपिड़काकण्डूगलगण्डनुत् सिद्धम्॥ ९८॥

पञ्चतिक्तघृतम्।—

निम्बं पटोलं व्याघ्रीञ्च गुड़ूचीं वासकं तथा।
कुर्य्याद्दशपलान् भागानेकैकस्य सुकुट्टितान्॥ ९९॥

---

तैलमित्यादि।—भल्लातकतैलं भूयन्त्रेण ग्राह्यम॥ ९३।९४॥

निम्बमित्यादि।—यद्यपि "सर्पिश्चाप्यनवं हितम्" इति वचनात् पुराणसर्पिष एव सर्व्वोपयोगिकत्वं, तथाऽप्यत्र योगमहिम्ना नवसर्पिष एव प्रयोजनवत्त्वमिति वचनात् एवोपयोगते। सर्पिषः इति पदं षट्पलमानग्रहणार्थं, द्वितीयन्तु घृतमिति पदं पेयत्वोपदर्शनार्थम्; तथा प्रथमं सिद्धमिति—पक्वं, द्वितीयन्तु प्रसिद्धिव्यापकम्। अनेन च षट्पलाभिधानेन कुष्ठे ज्यष्ठा षट्पली स्नेहमात्रा एकाहोपयोज्या दर्शितेत्याहुः॥ ९५—९८॥

निम्बमित्यादि।—पञ्चतिक्तघृते चत्वारिंशच्च पैत्तिकानिति—चत्वारिंशत् रोग-

जलद्रोणे विपक्तव्यं यावत् पादावशेषितम्।
घृतप्रस्थं पचेत् तेन त्रिफलागर्भसंयुतम् ॥ १०० ॥
पञ्चतिक्तमिदं ख्यातं सर्पिः कुष्ठविनाशनम्।
अशीतिं वातजान् रोगांश्चत्वारिंशच्च पैत्तिकान् ॥ १०१ ॥
विंशतिं श्लैष्मिकांश्चैव पानादेवापकर्षति।
दुष्टव्रणक्रिमीनर्शः पञ्च कासांश्च नाशयेत् ॥ १०२ ॥

तिक्तकघृतम्।—

त्रिफलाद्विनिशावासा-यासपर्पटकूलकान्।
त्रायन्तीकटुकानिम्बान् प्रत्येकं द्विपलोन्मितान् ॥ १०३
क्वाथयित्वा जलद्रोणे पादशेषेण तेन तु।
घृतप्रस्थं पचेत् कल्कैः पिप्पलीघनचन्दनैः ॥ १०४ ॥
त्रायन्तीशक्रभूनिम्बैस्तत् पीतं तिक्तकं घृतम्।
हन्ति कुष्ठज्वरार्शांसि श्वयथुं ग्रहणीगदम् ॥
पाण्डुरोगं विसर्पञ्च क्लीवानामपि शस्यते ॥ १०५ ॥

महातिक्तकं घृतम्।—

सप्तच्छदं प्रतिविषां सम्पाकं तिक्तरोहिणीं पाठाम्।
मुस्तमुशीरं त्रिफलां पटोलपिचुमर्दपर्पटकम् ॥ १०६ ॥
धन्वयवासं सचन्दनमुपकुल्ये पद्मकं रजन्यौ च।
षड्ग्रन्थां सविशालां शतावरीं शारिवे चोभे ॥ १०७ ॥
वत्सकबीजं वासां मूर्वामम‍ृतां किराततिक्तञ्च।
कल्कान् कुर्य्यान्मतिमान् यष्ट्याह्वं त्रायमाणाञ्च ॥ १०८ ॥
कल्कस्तु चतुर्भागो जलमष्टगुणं रसोऽमृतफलानाम्।

---

तानपकर्षति, कांस्तान्? इत्याकाङ्क्षायामाह, पैत्तिकानिति, एवं भेदयित्वा योजना कार्य्या, अन्यथा चत्वारिंशतमिति द्वितीया स्यात् ॥ ९९—१०२ ॥

त्रिफलेत्यादि।—कूलकं पटोलपत्रम्। शक्रः कुटजः, तस्य फलम् ॥१०३—१०५॥

सप्तच्छदमित्यादि।—महातिक्तके उपकुल्येत्येकवचनपाठो न युक्तः; आयुर्वेद

द्विगुणो घृतात् प्रदेयस्तन् सर्पिः पाययेत् सिद्धम् ॥ १०९ ॥
कुष्ठानि रक्तपित्तं प्रबलान्यर्शांसि रक्तवाहीनि।
वीसर्पमम्लपित्तं वातासृक् पाण्डुरोगञ्च ॥ ११० ॥
विस्फोटकान् सपामानुन्मादकान् कामलां ज्वरं कण्डूम्।
हृद्रोगगुल्मपिड़कामसृग्दरं गण्डमालाञ्च ॥ १११ ॥
हन्यादेतत् सद्यः पीतं काले यथाबलं सर्पिः।
योगशतैरप्यजितान् महाविकारान् महातिक्तकम् ॥ ११२ ॥

महाखदिरकं घृतम्।—

खदिरस्य तुलाः पञ्च शिंशपासनयोस्तुले।
तुलार्द्धाः सर्व एवैते करञ्जारिष्टवेतसाः ॥ ११३ ॥
पर्पटः कुटजश्चैव वृषः क्रिमिहरस्तथा।
हरिद्रे कृतमालश्च गुड़ूची त्रिफला त्रिवृत् ॥ ११४ ॥
सप्तपर्णश्च संक्षुण्णो दशद्रोणे च वारिणः।
अष्टभागावशेषन्तु कषायमवतारयेत् ॥ ११५ ॥
धात्रीरसञ्च तुल्यांशं सर्पिषश्चाढ़कं पचेत्।
महातिक्तककल्कैश्च यथोक्तैः पलसम्मितैः ॥ ११६ ॥

---

वाग्भटादौ पिप्पलीद्वयपाठात्। कल्कस्तु चतुर्भाग इति—घृताच्चतुर्थो भागः; एतच्च सामान्यपरिभाषासिद्धमपि स्पष्टार्थमुच्यते। षड्ग्रन्था वचा, श्रीकण्ठस्तु पिप्पली-मूलमित्याह; तन्न, वाग्भटे वचापाठात्। अमृतफलानामिति—आमलकीफलानाम्। अत्राद्यं सर्पिःपदं कल्कादिविभागार्थं, द्वितीयं पेयत्वोपदर्शनार्थं, तृतीयं महातिक्तक-संज्ञार्थम् ॥ १०६—११२ ॥

खदिरस्येत्यादि।—महाखदिरघृते शिंशपा "शिशु" इति ख्यातवृक्षः। असनः स्वनामख्यातः, न तु पीतशाल इत्याहुः, एतयोस्तुलाद्वयं मिलित्वा। तुलार्द्धाः सर्व एवैते इति—करञ्जादिसप्तपर्णान्ताः प्रत्येकं तुलार्द्धाः। दशद्रोणे च वारिणः इत्यनन्तरं पचेदिति शेषः। तुल्यांशमिति—मिलित्वा आढ़कमानमित्यर्थः। चक्रस्तु—"धात्रीरसञ्च तुल्यांशं सर्पिषश्चाढ़कं पचेत्" इति ग्रन्थं न पठति, तथा "यथोक्तैः पलसम्मितैः" इत्यत्र "यथोक्तैस्तु साधयेत्" इति पठति, व्याचष्टे च—साधयेदित्यत्र सर्पिरिति

निहन्ति सर्वकुष्ठानि पानाभ्यङ्गनिषेवणात् ।
महाखदिरमित्येतत् परं कुष्ठविनाशनम् ॥ ११७ ॥

पञ्चतिक्त-घृतगुग्गुलुः ।—

निम्बामृतावृषपटोलनिदिग्धिकानां
भागान् पृथग्दशपलान् विपचेद्घटेऽपाम् ।
अष्टांशशेषितजलेन सुनिःसृतेन
प्रस्थं घृतस्य विपचेत् पिचुभागकल्कैः ॥ ११८ ॥
पाठाविडङ्गसुरदारुगजोपकुल्या-
द्विक्षारनागरनिशामिषिचव्यकुष्ठैः ।
तेजोवतीमरिचवत्सकदीप्यकाग्नि-
रोहिण्यरुष्करवचाकणमूलयुक्तैः ॥ ११९ ॥
मञ्जिष्ठयाऽतिविषया वरया यमान्या
संशुद्धगुग्गुलुपलैरपि पञ्चसङ्ख्यैः ।
तत् सेवितं विधमति प्रबलं समीरं
सन्ध्यस्थिमज्जगतमप्यथ कुष्ठमीदृक् ॥ १२० ॥
नाडीव्रणार्बुदभगन्दरगण्डमालां
जत्रूर्ध्वसर्वगदगुल्मगुदोत्थमेहान् ।
यक्ष्मारुचिश्वसनपीनसकासशोष-
हृत्पाण्डुरोगगलविद्रधिवातरक्तम् ॥ १२१ ॥

शेषः । अत्र यद्यपि घृतमानं नोक्तं, तथाऽपि क्वाथशेषस्याढकाधिकद्रोणस्य नियतत्वात् तत्क्वाथचतुर्थांशं प्रस्थाधिकाढकमानं घृतस्यार्थापत्तितन्त्रयुक्त्या सिद्धं भवतीति । कल्कस्य स्नेहपादिकत्वं सामान्यपरिभाषासिद्धमेवेति । केचिन्महाखदिरघृतमिदमनार्षमित्याहुः ॥ ११३—११७ ॥

निम्बामृतेत्यादि वाग्भटस्य ।—घटे इति—द्रोणे । पिचुः कर्षरूपो भागो येषां कल्कानां तैः । मिषिः शतपुष्पा, न तु मधुरिका, वृद्धव्यवहारात् । तेजो-

वज्रकं घृतम् ।—

वासागुडूचीत्रिफलापटोलं करञ्जनिम्बासनकृष्णवेत्रम् ।
तत्क्वाथकल्केन घृतं विपक्वं तद्वज्रवत् कुष्ठहरं प्रदिष्टम् ॥ १२२ ॥
विशीर्णकर्णाङ्गुलिहस्तपादः क्रिम्यर्दितो भिन्नगलोऽपि मर्त्यः ।
पौराणिकीं कान्तिमवाप्य जीवेदभ्याहतो वर्षशतञ्च कुष्ठी ॥ १२[३] ॥

आरग्वधाद्यं तैलम् ।—

आरग्वधं धवं कुष्ठं हरितालं मनःशिलाम् ।
रजनीद्वयसंयुक्तं पचेत् तैलं विधानवित् ॥
एतेनाभ्यञ्जयेच्छ्वित्री क्षिप्रं श्वित्रं विनश्यति ॥ १२४ ॥

तृणकं तैलम् ।—

मञ्जिष्ठारुङ्निशाचक्र-मदारग्वधपल्लवैः ।
तृणकस्वरसे सिद्धं तैलं कुष्ठहरं कटु ॥ १२५ ॥

महातृणकं तैलम् ।—

हरिद्रात्रिफलादारु-हयमारकचित्रकम् ।
सप्तच्छदश्च निम्बत्वक्-करञ्जौ बालकं नखी ॥ १२६ ॥
कुष्ठमेड़गजाबीजं लाङ्गली गणिकारिका ।
जातीपत्रञ्च दार्वी च हरितालं मनःशिला ॥ १२७ ॥

---

वती ज्योतिष्मती । दीप्यकं जीरकम् । वत्सकं कुटजफलम् । अग्निः चित्रकः । त्र्यूषणमूलं पिप्पलीमूलम् । वरया त्रिफलया ॥ ११८—१२१ ॥

वासेत्यादि ।—कृष्णवेत्रं कालिया-लता । वज्रवदिति—वज्रसदृशः, अव्यर्थ-शक्तिकत्वात् ॥ १२२।१२३ ॥

आरग्वधमित्यादि ।—तैलमिति—सार्षपतैलादन्यतमं, कुष्ठहितत्वात्; उक्तं हि चरके—"तैलानि सर्षपाणां करञ्जकोषातकीङ्गुदादीनाञ्च । कुष्ठेषु हितान्याहुस्तैलं यच्चापि खदिरस्य ॥" ( चि० कुष्ठ० ) इति । अन्ये तु—सामान्यश्रुतौ प्रधानकल्पत्वेन तिलतैलमेव ग्राह्यं, यत्र तु सार्षपादिविशेषोक्तिस्तत्रैव सार्षपादिग्रहणमित्याहुः । एवमन्यत्रापि एवंजातीये ज्ञेयम् ॥ १२४ ॥

[मञ्जिष्ठेत्य]ादि ।—रुक् कुष्ठम् । तृणकं गन्धतृणम् ॥ १२५ ॥

कलिङ्गं तिलपत्रञ्च अर्कक्षीरञ्च गुग्गुलुः।
गुड़त्वङ्मरिचं चोरा कुङ्कुमं ग्रन्थिपर्णकम् ॥ १२८ ॥
सर्जपर्णाशखदिर-विड़ङ्गं पिप्पली वचा।
घनरेणुस्नुतायष्टि-केशरं ध्यामकं विषम् ॥ १२९ ॥
विश्वकट्फलमञ्जिष्ठा बोलं तुम्बीफलं तथा।
स्नुहीसम्याकयोः पत्रं वागुजीवीजमांसिके ॥ १३० ॥
एला ज्योतिष्मतीमूलं शिरीषो गोमयाद्रसः।
चन्दने कुष्ठनिर्गुण्डी-विशाला मल्लिकाद्वयम् ॥ १३१ ॥
वासाऽश्वकर्णी ब्राह्मी च अग्राह्वचम्पककुड्मलम्।
एतैः कल्कैः पचेत् तैलं तृणकस्वरसद्रवम् ॥
सर्वत्वग्दोषहरणं महातृणकसंज्ञितम् ॥ १३२ ॥

वज्रकतैलम्।—

सप्तपर्णकरञ्जार्क-मालतीकरवीरजम्।
मूलं स्नुहाशिरीषाभ्यां चित्रकास्फोतयोरपि ॥ १३३ ॥
विषलाङ्गलवज्राख्य-काशीशालमनःशिलाः।
करञ्जवीजं त्रिफलां त्रिकटुं रजनीद्वयम् ॥ १३४ ॥
सिद्धार्थकं विड़ङ्गञ्च प्रपुन्नाड़ञ्च संहरेत्।
मूत्रपिष्टैः पचेत् तैलमेभिः कुष्ठविनाशनम् ॥
अभ्यङ्गाद्वज्रकं नाम नाड़ीदुष्टव्रणापहम् ॥ १३५ ॥

---

हरिद्रेत्यादि।—लाङ्गली "विषलाङ्गली" इति ख्यातम्। कलिङ्गः इन्द्रयवः। चोरा चोरपुष्पी। ग्रन्थिपर्णकं गेँठेला। ध्यामकं गन्धतृणम्। बोलं गन्धरसम्। तुम्बीफलं पक्वतिक्तालाबूफलम्। मल्लिकाद्वयं मल्लिका आफरमल्लिका च। अग्राह्वः नवनीतखोटी। चम्पककुड्मलं चम्पककलिका। तृणकस्वरसो द्रवः पाक-साधनं जलं यस्य तत् तथा। अत्रान्तरे सोमराजीतैलं केचित् पठन्ति, तत्तु न टीका-सम्मतमिति ॥ १२६—१३२ ॥

सप्तपर्णेत्यादि सुश्रुतस्य।—मूत्रपिष्टैः पचेत्तैलमिति पाकोऽपि गोमूत्रेणैव। आस्फोता श्वेतार्कमूलमिति केचित्। अत्र तिलतैलमेव देयम्; "तैलं तैलं साधितं तैः

स्वल्पमरिचाद्यं तैलम् ।—

मरिचाऽऽलशिलाऽब्दार्कपयोऽश्वारिजटात्रिवृत् ।
शकृद्रसविशालारुङ्-निशायुग्दारुचन्दनैः ॥ १३६ ॥
कटुतैलात् पचेत् प्रस्थं द्व्यक्षैर्विषपलान्वितैः ।
सगोमूत्रं तदभ्यङ्गाद्दद्रुश्वित्रविनाशनम् ॥
सर्वेष्वपि च कुष्ठेषु तैलमेतत् प्रशस्यते ॥ १३७ ॥

बृहन्मरिचाद्यं तैलम् ।—

मरिचं त्रिवृता दन्ती क्षीरमार्कं शकृद्रसः ।
देवदारु हरिद्रे द्वे मांसी कुष्ठं सचन्दनम् ॥ १३८ ॥
विशाला करवीरश्च हरितालं मनःशिला ।
चित्रको लाङ्गलाख्या च विडङ्गं चक्रमर्दकम् ॥ १३९ ॥
शिरीषं कुटजो निम्बः सप्तपर्णस्नुहामृताः ।
सम्पाको नक्तमालोऽब्दः खदिरं पिप्पली वचा ॥ १४० ॥
ज्योतिष्मती च पलिका विषस्य द्विपलं भवेत् ।
आढकं कटुतैलस्य गोमूत्रन्तु चतुर्गुणम् ॥ १४१ ॥
मृत्पात्रे लौहपात्रे वा शनैर्मृद्वग्निना पचेत् ।
पक्त्वा तैलवरं ह्येतत् म्रक्षयेत् कौष्ठिकान् व्रणान् ॥ १४२ ॥
पामाविचर्चिकादद्रु-कण्डूविस्फोटकानि च ।
वलयः पलितं छाया नीली व्यङ्गस्तथैव च ॥

---

समूलैः” (चि० १९ अ०) इति वाग्भटसंवादात्। केचित्तु तैलमत्र सार्षपमाहुः ॥ १३२—१३५

मरिचेत्यादि।—स्वल्पमरिचाद्यतैले आलं हरितालम्। शिला मनःशिला। अर्कपयः अर्कक्षीरम्। अश्वारिः करवीरः। जटा जटामांसी; चन्द्राटादिपठितमरिचाद्ये मांसीदर्शनात् व्यवहाराच्च। शकृद्रसः गोमयरसः, अयमपि कल्कः। विशालात्र गोरक्षकर्कटी। रुक् कुष्ठम्। निशायुक् हरिद्राद्वयम्। प्रस्थमिति—प्रस्थपरिमितं, तेन सामानाधिकरण्यं न विरुध्यते। गोमूत्रमत्र चतुर्गुणं बोध्यम् ॥ १३६।१३७ ॥

अभ्यङ्गेन प्रणश्यन्ति सौकुमार्य्यञ्च जायते ॥ १४३ ॥
प्रथमे वयसि स्त्रीणां यासां नस्यन्तु दीयते ।
परामपि जरां प्राप्य न स्तना यान्ति नम्रताम् ॥ १४४ ॥
बलीवर्दस्तुरङ्गो वा गजो वा वायुपीड़ितः ।
एभिरभ्यञ्जनैर्गाढ़ं भवेन्मारुतविक्रमः ॥ १४५ ॥

विषतैलम् ।—

नक्तमालं हरिद्रे द्वे अर्कं तगरमेव च ।
करवीरं वचा कुष्ठमास्फोता रक्तचन्दनम् ॥ १४६ ॥
मालती सप्तपर्णञ्च मञ्जिष्ठा सिन्धुवारिका ।
एषामर्द्धपलान् भागान् विषस्यापि पलं भवेत् ॥ १४७ ॥
चतुर्गुणे गवां मूत्रे तैलप्रस्थं विपाचयेत् ।
श्विवविस्फोटकिटिम-कीटलूताविचर्चिकाः ॥ १४८ ॥
कण्डूकच्छूविकाराश्च ये व्रणा विषदूषिताः ।
विषतैलमिदं नाम्ना सर्व्वव्रणविशोधनम् ॥ १४९ ॥

चित्रकाद्यं तैलम् ।—

श्वेतकरवीरकरसो गोमूत्रं चित्रको विड़ङ्गञ्च ।
कुष्ठेषु तैलयोगः सिद्धोऽयं सम्मतो भिषजाम् ॥ १५० ॥

श्वेतकरवीराद्यं तैलम् ।—

श्वेतकरवीरमूलं विषांशसाधितं गवां मूत्रे ।

---

मरिचमित्यादि ।—बृहन्मरिचाद्ये शक्रद्रसः पूर्व्ववत् । कुटजः कुटजस्य फलमित्याहुः । सुहायास्तु चीरम् । प्रथमे वयसीति—वयःसन्धौ ॥ १३८—१४५ ॥

नक्तमालमित्यादि ।—विषतैले नक्तमालं करञ्जबीजम् । अर्कम् अर्कस्य चीरम् । तगरं तगरपादिका । मालती जाती, तस्याः पत्रम् । सिन्धुवारिका निर्गुण्डी ॥ १४६—१४९ ॥

श्वेतकरवीरकेत्यादि ।—करवीररस-गोमूत्रयोर्मिलिता चातुर्गुण्यं, शेषस्य तु कल्कत्वम् ॥ १५० ॥

श्वेतकरवीरमूलमित्यादि ।—श्वेतकरवीरस्य मूलं यत्र, श्वेतं करवीरस्य मूलं

चर्मदलसिध्मपामाविस्फोटक्रिमिकिटिभजित् तैलम् ॥ १५१ ॥

स्वल्पसिन्दूराद्यं तैलम् ।—

सिन्दूरार्द्धपलं पिष्ट्वा जीरकस्य पलं तथा ।
कटुतैलात् पचेन्मानी सद्यः पामाहरं परम् ॥ १५२ ॥

महासिन्दूराद्यं तैलम् ।—

सिन्दूरं चन्दनं मांसी विडङ्गं रजनीद्वयम् ।
प्रियङ्गु पद्मकं कुष्ठं मञ्जिष्ठां खदिरं वचाम् ॥ १५३ ॥
जात्यर्कत्रिवृतानिम्ब-करञ्जं विषमेव च ।
कृष्णाचैवकलोध्रञ्च प्रपुन्नाडञ्च संहरेत् ॥ १५४ ॥
स्लक्ष्णपिष्टानि सर्वाणि योजयेत् तैलमात्रया ।
अभ्यङ्गेन प्रयुञ्जीत सर्वकुष्ठविनाशनम् ॥ १५५ ॥
पामाविचर्चिकाकण्डू-विसर्पादिविनाशनम् ।
रक्तपित्तोत्थितान् हन्ति रोगानेवंविधान् बहून् ॥ १५६ ॥

आदित्यपाकं तैलम् ।—

मञ्जिष्ठात्रिफलालाक्षा-निशाशिलाऽऽलगन्धकैः ।
चूर्णितैस्तैलमादित्य-पाकं पामाहरं परम् ॥ १५७ ॥

---

यचेति वा विग्रह्य तैलविशेषणता ज्ञेया । विषांशसाधितमिति—विषस्यांश-श्चतुर्थो भागः, स च करवीरमूलापेक्षया इति केचित्, अन्ये तु—गतविषतैले विषस्य पलमुक्तं तदपेक्षया कर्षमाहुः; तन्न, तन्त्रान्तरीयवाक्यत्वात् । अन्ये पुनः अंशः भागः, तेन विषकरवीरमूलयोः समभागयोरेव स्नेहपादिकत्वेन कल्कत्वं, व्यवहारोऽप्यनेनैव ॥ १५१ ॥

सिन्दूरार्द्धेत्यादि ।—स्वल्पसिन्दूराद्ये मानीम् इति—अष्टौ पलानि । वृन्दे तु—"कटुतैलं पचेदाभ्यां सद्यः पामाहरं परम्" इति पठ्यते; तन्मते वृद्धवैद्य-व्यवहारादेव अष्टपलं ग्राह्यम् ॥ १५२ ॥

सिन्दूरमित्यादि ।—महासिन्दूराद्ये जात्याः पत्रम् । अर्कस्य क्षीरम् । करञ्जस्य फलम् । तैलमात्रया प्रस्थरूपया ॥ १५३—१५६ ॥

मञ्जिष्ठेत्यादि ।—आदित्यपाकतैले जलं तैलसमं दत्त्वा जलशोषपर्य्यन्तमातपे

दूर्वाद्यं तैलम्।—

स्वरसेन तु दूर्वायाः पचेत् तैलं चतुर्गुणम्।
कच्छूविचर्च्चिकापामा अभ्यङ्गादेव नाशयेत्॥ १५८॥

निशा-मनःशिलातैले।—

अर्कपत्ररसे पक्वं कटुतैलं निशायुतम्।
मनःशिलायुतं वाऽपि पामाकण्ड्वादिनाशनम्॥ १५९॥

गण्डीरिकाद्यं तैलम्।—

गण्डीरिकाचित्रकमार्कवार्क-कुष्ठद्रुमत्वग्लवणैः समूत्रैः।
तैलं पचेन्मण्डलकुष्ठदद्रु-दुष्टव्रणारुःकिटिमापहारि॥ १६०॥

पृथ्वीसारतैलम्।—

चित्रकस्याथ निर्गुण्ड्या हयमारस्य मूलतः।
नाड़ीचवीजाद्विषतः काञ्जिपिष्टं पलं पलम्॥ १६१॥
करञ्जतैलाष्टपलं काञ्जिकस्य पलं पुनः।
मिश्रितं सूर्य्यसम्पक्वं तैलं कुष्ठव्रणास्रजित्॥ १६२॥

सोमराजीतैलम्।—

सोमराजी हरिद्रे द्वे सर्षपाः कुष्ठमेव च।
करञ्जैड़गजावीजं पत्रमारग्वधस्य च॥ १६३॥

---

स्याप्यं, जलं विना पाकानुपपत्तेः। एवमिन्द्रलुप्तोक्तादित्यपाकेऽपि गुड़ूचीरसमेव तैलसमं व्यवहरन्ति वृद्धाः। अन्ये तु—द्रवानुक्तावद्रवमेवादित्यपाकमाहुः॥ १५७॥

स्वरसेनेत्यादि।—दूर्वातैले चतुर्गुणं यथा स्यात् तथा दूर्वास्वरसेन पचेत् दूर्वास्वरसेन चतुर्गुणेन तैलं पचेदित्यर्थः; वृन्देऽपि—"स्वरसेऽपि च दूर्वायाः पचेत्तैलं चतुर्गुणे" इति पाठः॥ १५८॥

अर्केत्यादि।—निशामनःशिलातैलयोः कल्कभेदात् योगद्वयं, स्वरसश्च चतुर्गुणः, कल्कश्चाष्टांश एव स्वरससाध्यत्वात्॥ १५९॥

गण्डीरिकेत्यादि।—गण्डीरिका स्नुही, तस्याः चीरम्; एवमर्कस्यापि। द्रुमः स्वर्णालुः, तस्य त्वक्। लवणं सैन्धवम्; यदुक्तमायुर्वेदसारे—"पक्वं कार्य्यर्कसिन्धूत्थ-कुष्ठस्नुग्वह्निमार्कवैः। समूत्रैस्तैलमाहन्ति दद्रूणि किटिमानि च॥" इति। अत्र स्वर्णो

चतुर्गुणं जलं दत्त्वा गोमूत्रप्रस्थसंयुतम्।
विपचेत् सार्षपं तैलं नाड़ीदुष्टव्रणापहम्॥ १६४॥
अनेनाशु प्रणश्यन्ति कुष्ठान्यष्टादशैव तु।
नीलिका पिप्लवो व्यङ्गो गम्भीरं वातशोणितम्॥
कण्डून्यच्छप्रशमनं कच्छूपामाविनाशनम्॥ १६५॥

वमनादीनां दिनावधिनिर्देशः।—

पक्षात् पक्षाच्छर्दनान्यभ्युपेयात्
मासान्मासात् स्रंसनञ्चाप्यधस्तात्।
त्र्यहात् त्र्यहान्नस्ततश्चावपीड़ान्
मासेष्वस्रञ्चोक्षयेत् षट्सु षट्सु॥ १६६॥

पथ्यानि।—

योषिन्मांससुरात्यागः शालिमुद्गयवादयः।
पुराणास्तिक्तशाकञ्च जाङ्गलं कुष्ठिनां हितम्॥ १६७॥

इति कुष्ठ-चिकित्सा।

---

## अथोदर्द-कोठ-शीतपित्त-चिकित्सा।

उदर्दे कटुतैलाभ्यङ्गादिः।—

अभ्यङ्गः कटुतैलेन सेकश्चोष्णाम्बुभिस्ततः।

---

स्वर्णालुः; तथा च द्रव्यावली—"आरेवतस्तथा कर्णी कर्णिकारोऽथ वैरतः" इति। अन्ये तु—गण्डीरिका मञ्जिष्ठा, द्रुमः कुटजः, तस्य त्वगित्याहुः॥ १६०॥

चित्रकस्येत्यादि।—अत्यन्तोत्कृष्टगुणत्वात् पृथ्वीसार इति संज्ञा॥ १६१—१६५॥

पक्षादित्यादि सुश्रुतस्य।—स्रंसनं विरेचनम्। नस्तत इति—नासापुटयोरवपीड़ान् नस्यविशेषान् दद्यात्। अवपीड़शब्देन बहुमात्रसर्पिःप्रयोगोऽप्युच्यते, तन्निरासार्थं नस्तत इति पदम्॥ १६६॥

योषिदित्यादि।—मांसमानूपं निषिद्धं, जाङ्गलस्य विधानात्॥ १६७॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां कुष्ठ-चिकित्सा-विवृतिः।

उदर्दे वमनं कार्य्यं पटोलारिष्टवारिणा ॥ १ ॥

उदर्दे त्रिफलाक्वाथादिः।—

त्रिफलापुरकृष्णाभिर्विरेकश्चात्र शस्यते।
त्रिफलां क्षौद्रसहितां पिबेद्वा नवकार्षिकाम् ॥ २ ॥

उदर्दे अमृतादिक्वाथप्रयोगोपदेशः मधुकादियोगद्वयञ्च।—

विसर्पोक्तममृतादिं भिषगत्रापि योजयेत्।
सितां मधुकसंयुक्तां गुड़मामलकैः सह ॥ ३ ॥

उदर्दे सगुड़यमानीप्रयोगः।—

सगुड़ं दीप्यकं यस्तु खादेत् पथ्यान्नभुङ् नरः।
तस्य नश्यति सप्ताहादुदर्दः सर्वदेहजः ॥ ४ ॥

उदर्दे सिद्धार्थाद्युद्वर्त्तनम्।—

सिद्धार्थरजनीकल्कैः प्रपुन्नाड़तिलैः सह।
कटुतैलेन सम्मिश्रमेतदुद्वर्त्तनं परम् ॥ ५ ॥

शीतपित्तादौ दूर्वादिलेपः।—

दूर्वानिशायुतो लेपः कच्छूपामाविनाशनः।
क्रिमिदद्रुहरश्चैव शीतपित्तापहः स्मृतः ॥ ६ ॥

शीतपित्तादौ अग्निमन्थप्रयोगः।—

अग्निमन्थभवं मूलं पिष्टं पीतञ्च सर्पिषा।

---

प्रायस्तुल्यचिकित्सितत्वात् उदर्दादिचिकित्सामाह, अभ्यङ्ग इत्यादि।—स्वेद इत्यत्र स्वेद इत्यपि पाठः; अत एवोक्तमन्यत्र—"अभ्यङ्गः कटुतैलेन स्वेदनं कोष्ण-वारिणा" इति। पटोलारिष्टवारिणेत्यत्रानुक्तोऽपि मदनफलकल्कः प्रक्षेप्यः ॥ १ ॥

त्रिफलेत्यादि।—त्रिफलापुरकृष्णाभिरिति—त्रिफलायाः कषायः, गुग्गुलुपिप्पल्यौ प्रक्षेप्ये, प्रक्षेपश्च व्यवहारात् गुग्गुलोर्द्दश माषकाः, पिप्पल्यास्तु षण्माषका इति। त्रिफलां क्षौद्रसहितामिति—त्रिफलायाः कषायः, क्षौद्रन्तु प्रक्षेप्यम्। नवकार्षिकं वातरक्तोक्तम् ॥ २ ॥

विसर्पोक्तमित्यादि।—विसर्पोक्तममृतादिमिति—"अमृतवृषपटोलं मुस्तकम्" इत्यादिनोक्तं, तस्यैव शीतपित्तहन्तृत्वेनोक्तत्वात्; न पुनः "अमृतवृषपटोलं निम्बकल्कै-

शीतपित्तोदर्दकोठान् समाहादेव नाशयेत् ॥ ७ ॥

कोठे कुष्ठादिचिकित्साऽतिदेशः ।—

कुष्ठोक्तञ्च क्रमं कुर्य्यादम्लपित्तघ्नमेव च ।
उदर्दोक्तां क्रियाञ्चापि कोठरोगे समासतः ॥ ८ ॥

कोठे रक्तमोक्षणोपदेशः ।—

सर्पिः पीत्वा महातिक्तं कार्य्यं शोणितमोक्षणम् ॥ ९ ॥

कोठादौ निम्बपत्रस्य द्विविधप्रयोगः ।—

निम्बस्य पत्राणि सदा घृतेन धात्रीविमिश्राण्यथवोपयुञ्ज्यात् ।
विस्फोटकोठक्षतशीतपित्तं कण्ड्वम्लपित्तं रकसाञ्च हन्यात् ॥१०॥

कोठादौ क्षाराद्यभ्यङ्गः ।—

क्षारसिन्धूत्थतैलैश्च गात्राभ्यङ्गं प्रयोजयेत् ॥ ११ ॥

शीतपित्ते गाम्भारीफलप्रयोगः ।—

गाम्भारिकाफलं पक्वं शुष्कमुत्स्वेदितं पुनः ।
क्षीरेण शीतपित्तघ्नं खादितं पथ्यसेविना ॥ १२ ॥

शीतपित्ते एलाद्युद्वर्त्तनम् ।—

तैलोद्वर्त्तनयोगेन योज्य एलादिको गणः ॥ १३ ॥

भोजनविधिः ।—

शुष्कमूलकयूषेण कौलत्थेन रसेन वा ।

---

कृपितम्” इत्यादिकम् । सितां मधुकसंयुक्तामित्यत्र “सितां कटुकया युक्ताम्” इति केचित् पठन्ति ॥ ३ ॥

सगुड़मित्यादि ।—दीप्यकं यमानिकाम् ॥ ४—७ ॥

उदर्दचिकित्सां कोठरोगेऽप्यतिदिशति—कुष्ठोक्तमित्यादि ॥ ८ ॥

सर्पिरित्यादि ।—महातिक्तं सर्पिः कुष्ठोक्तम् ॥ ९ ॥

निम्बस्येत्यादि ।—योगद्वयम्; अन्ये तु एकमेव योगं वदन्ति । रकसा क्षुद्रकुष्ठभेद इति श्रीकण्ठः ॥ १० ॥

क्षारेत्यादि ।—क्षारो यवक्षारः । तैलञ्च कटुतैलं वदन्ति ॥ ११ ॥

गाम्भारिकेत्यादि ।—सुपक्वशुष्कं गाम्भारीफलं गव्यदुग्धं दत्त्वा उत्स्विद्य खाद्यम् ॥ १२ ॥

भोजनं सर्वदा कार्य्यं लावतित्तिरिजैन वा ॥ १४ ॥

शीतपित्ते दोषापेक्षया शीतोष्णान्नपानप्रयोगोपदेशः।—

शीतलान्यन्नपानानि बुद्ध्वा दोषगतिं भिषक्।
उष्णानि वा यथाकालं शीतपित्ते प्रयोजयेत् ॥ १५ ॥

इत्युदर्द-कोठ-शीतपित्त-चिकित्सा।

---

## अथाम्लपित्त-चिकित्सा।

वमनं चतुष्कम्।—

वान्तिं कृत्वाऽम्लपित्ते तु विरेकं मृदु कारयेत्।
सम्यक् वान्तविरिक्तस्य सुस्निग्धस्यानुवासनम् ॥
आस्थापनं चिरोद्भूते देयं दोषाद्यपेक्षया ॥ १ ॥

संसर्गजे शमनाद्युपदेशः।—

क्रिया शुद्धस्य शमनो ह्यनुबन्ध्यपेक्षया।
दोषसंसर्गजे कार्य्या भेषजाहारकल्पना ॥ २ ॥

---

तैलेत्यादि।—सुश्रुतोक्त एलादिको गणः तैलयोगेन उद्वर्त्तनयोगेन च योज्य इत्याहुः ॥ १३—१५ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायामुदर्द कोठ-शीतपित्त-चिकित्सा-विवृतिः।

---

उक्तसङ्गत्यैव अम्लपित्तचिकित्सितमुच्यते, वान्तिं कृत्वेत्यादि।—वमनञ्च पटोलारिष्टादिभिः। अत्र तन्त्रान्तरं यथा,—"प्रागम्लपित्तरोगार्त्तं कुलकारिष्टवारिभिः। सराठ-क्षौद्रसिन्धूत्थैर्वमनं कारयेद्भिषक् ॥" इति। राठं मदनफलम् ॥ १ ॥

क्रियेत्यादि।—दोषसंसर्गजे अनुबन्ध्यपेक्षया अनुबन्धभूतदोषाविरोधेन शमनी संशमनरूपा भेषजाहारकल्पना क्रिया कार्य्येत्यर्थः ॥ २ ॥

ऊर्द्धगाधोगयोः वमनविरेचनोपदेशः ।—

ऊर्द्धगं वमनैर्धीमानधोगं रेचनैर्हरेत् ॥ ३ ॥

पानाहारविधिः ।—

तिक्तभूयिष्ठमाहारं पानं वाऽपि प्रकल्पयेत् ।
यवगोधूमविकृतीस्तीक्ष्णसंस्कारवर्जिताः ॥
यथास्वं लाजसक्तून् वा सितामधुयुतान् पिबेत् ॥ ४ ॥

निस्तुषयवादिक्वाथः ।—

निस्तुषयववृषधात्रीक्वाथस्त्रिसुगन्धिमधुयुतः पीतः ।
अपनयति चाम्लपित्तं यदि भुङ्क्ते मुद्गयूषेण ॥ ५ ॥

शृङ्गवेरादिक्वाथः ।—

कफपित्तवमीकण्डू-ज्वरविस्फोटदाहहा ।
पाचनो दीपनः क्वाथः शृङ्गवेरपटोलयोः ॥ ६ ॥

पटोलादिक्वाथः ।—

पटोलं नागरं धान्यं क्वाथयित्वा जलं पिबेत् ।
कण्डूपामार्त्तिशूलघ्नं कफपित्ताग्निमान्द्यजित् ॥ ७ ॥

पटोलविश्वादिक्वाथः ।—

पटोलविश्वाऽमृतरोहिणीकृतं
जलं पिबेत् पित्तकफोच्छ्रये तु ।

---

उक्तवमनविरेचनयोर्विषयमाह, ऊर्द्धगमित्यादि ।—ऊर्द्धगे बहुकफे वमनम्, अधोगे तु अम्लपित्ते सविबन्धे विरेचनम् ॥ ३ ॥

तिक्तेत्यादि ।—यवगोधूमेति, यवगोधूमौ हि सरत्वमधुरत्वादिना अम्लपित्ते हितौ, तयोः पेयादिरूपान् विकारान् । तीक्ष्णसंस्कारवर्जिता इति—कट्वम्ललवणादि-संस्कारयोगरहिताः । यथास्वमिति पिबेदित्यनेन योज्यम् ; तेन दोषसंसर्गाद्यपेक्षया तत्तद्दोषप्रत्यनीकेन द्रवेण पिबेदित्यर्थः ॥ ४ ॥

निस्तुषेत्यादि ।—त्रिसुगन्धिमधुयुत इति—त्रिसुगन्धि त्वगेलापत्रं, तच्च सौगन्ध्य-मात्रकारकं, मधु तु प्रक्षेपन्यायेन योज्यम् ॥ ५ ॥

शूलभ्रमारोचकवह्निमान्द्य-
दाहज्वरच्छर्दिनिवारणं तत् ॥ ८ ॥

यवादिक्वाथः।—

यवकृष्णापटोलानां क्वाथं क्षौद्रयुतं पिबेत्।
नाशयेदम्लपित्तञ्च अरुचिञ्च वमिं तथा ॥ ९ ॥

दशाङ्गः।—

वासाऽमृतापर्पटक-भूनिम्बनिम्बमार्कवैः।
त्रिफलाकुलकैः क्वाथः सक्षौद्रश्चाम्लपित्तहा ॥ १० ॥

फलत्रिकादिक्वाथः।—

फलत्रिकं पटोलञ्च तिक्ताक्वाथः सितायुतः।
पीतः क्षीतकमध्वाक्तो ज्वरच्छर्द्यम्लपित्तजित् ॥ ११ ॥

पथ्यादिचूर्णम्।—

पथ्याभृङ्गरजश्चूर्णं युक्तं जीर्णगुड़ेन तु।
जयेदम्लपित्तजन्यां छर्दिमन्नविदाहजाम् ॥ १२ ॥

वासागुग्गुलुः।—

वासानिम्बपटोलत्रिफलाऽसनयासयोजितो जयति।
अधिककफमम्लपित्तं प्रयोजितो गुग्गुलुः क्रमशः ॥ १३ ॥

गुड़ूच्यादिक्वाथः हरीतक्याः विविधप्रयोगश्च।—

छिन्नाखदिरयष्ट्याह्व-दार्वम्भो वा मधुद्रवम्।
सद्राक्षामभयां खादेत् सक्षौद्रां सगुड़ाञ्च ताम् ॥ १४ ॥

---

कफेत्यादि।—शृङ्गवेरं शुण्ठी ॥ ६—१० ॥

फलत्रिकमित्यादि।—तिक्तेत्यतः परमेषामिति शेषः; तेन त्रिफलादीनि यान्येतानि एषां क्वाथ इत्यर्थः। क्षीतकं यष्टिमधु। सिताक्षीतकमधूनि प्रक्षेप्याणि ॥ ११ ॥

पथ्येत्यादि।—भृङ्गरजश्चूर्णं भृङ्गराजस्य चूर्णम् ॥ १२ ॥

वासेत्यादि।—असनः पीतशालः। यासः दुरालभा। वासादीनां चूर्णं गुग्गुलुतुल्यं, गुग्गुलोः प्राधान्यात्। क्रमश इति—अभ्यासेन ॥ १३ ॥

कटुक्वीप्रयोगः पटोलादिक्वाथः खण्डकुष्माण्डप्रयोगोपदेशश्च।—

कटुका सिता च लेह्या पटोलविश्वश्च मधुसमायुक्तम्।
रक्तस्रुतौ च युक्त्या खण्डकुष्माण्डकं श्रेष्ठम्॥ १५॥

पटोलधन्याकादिक्वाथः।—

पटोलधन्याकमहौषधाब्दैः
कृतः कषायो विनिहन्ति शीघ्रम्।
मन्दानलं पित्तबलासदाह-
च्छर्दिज्वरामानिलशूलरोगान्॥ १६॥

गुडूच्यादिषडङ्गक्वाथः।—

छिन्नोद्भवानिम्बपटोलपत्रं फलत्रिकं सुक्वथितं सुशीतम्।
क्षौद्रान्वितं पीतमनेकरूपं सुदारुणं हन्ति तदम्लपित्तम्॥ १७॥

पटोलादिपञ्चाङ्गक्वाथः।—

पटोलत्रिफलाऽरिष्ट-शृतं मधुयुतं पिबेत्।
पित्तश्लेष्मज्वरच्छर्दि-दाहशूलोपशान्तये॥ १८॥

सिंहास्यादिक्वाथः।—

सिंहास्यामृतभण्टाकी-क्वाथं पीत्वा समाक्षिकम्।
अम्लपित्तं जयेज्जन्तुः कासं श्वासं ज्वरं वमिम्॥ १९॥

---

छिन्नेत्यादि।—मधुद्रवमिति बहुव्रीहिः, तेनाम्ल इत्यस्य विशेषणम्। मध्वत्र प्रक्षेप्यम्। सद्राक्षामित्यादि योगत्रयमेतत्॥ १४॥

कटुकेत्यादि।—कटुका सिता चेति—कटुका कटुरोहिणी सशिता लेह्येत्यर्थः। पटोलविश्वश्च मधुसमायुक्तमिति—पटोलविश्वयोः क्वाथं मधु प्रक्षिप्य पिबेत् इत्यर्थः। कुष्माण्डखण्डकं रक्तपित्तोक्तम्॥ १५॥

पटोलेत्यादि।—तन्त्रान्तरोक्तः पटोलधन्याकेत्यादियोगः तथा छिन्नोद्भवानिम्बेत्यादियोगश्च क्वचित् पुस्तके दृश्यते, तौ च निश्चलेन वृन्देन च धृतौ (?)॥ १६।१७॥

पटोलत्रिफलेत्यादि।—अरिष्टः निम्बः॥ १८॥

सिंहास्येत्यादि।—सिंहास्यः वासकः। भण्टाकी कण्टकारी॥ १९॥

वासाघृतादिप्रयोगोपदेश: ।—

वासाघृतं तिक्तघृतं पिप्पलीघृतमेव वा ।
अम्लपित्ते प्रयोक्तव्यं गुड़कुष्माण्डकं तथा ॥
पक्तिशूलापहा योगास्तथा खण्डामलक्यपि ॥ २० ॥

पिप्पली-जम्बीरप्रयोगौ ।—

पिप्पली मधुसंयुक्ता चाम्लपित्तविनाशिनी ।
जम्बीरस्वरस: पीत: सायं हन्त्यम्लपित्तकम् ॥ २१ ॥

गुड़ादिमोदक: ।—

गुड़पिप्पलिपथ्याभिस्तुल्याभिर्मोदक: कृत: ।
पित्तश्लेष्मापह: प्रोक्तो मन्दमग्निञ्च दीपयेत् ॥ २२ ॥

हिङ्ग्वादिपुटपाक: ।—

हिङ्गु च कतकफलानि चिञ्चात्वचो घृतञ्च पुटदग्धम् ।
शमयति तदम्लपित्तमम्लभुजो यदि यथोत्तरं द्विगुणम् ॥ २३ ॥

त्रिफलाप्रयोग: ।—

कान्तपात्रे वराकल्को व्युषितोऽभ्यासयोगत: ।
सिताक्षौद्रसमायुक्त: कफपित्तहर: स्मृत: ॥ २४ ॥

---

वासाघृतमित्यादि ।—वासाघृतं रक्तपित्तोक्तम् । तिक्तघृतं कुष्ठोक्तमहातिक्तकं, तत्रैव अम्लपित्तहन्तृत्वश्रुते: । पिप्पलीघृतन्तु परिणामशूलोक्तम् ; एतच्च यद्यपि "पक्तिशूलापहा योगा:" इत्यनेनैव लभ्यते, तथाऽपि विशेषार्थमुक्तम् ; तथा गुड़-कुष्माण्डकं तथा खण्डामलकी च योज्या ॥ २० ॥

पिप्पलीत्यादि ।—पिप्पली मधुसंयुक्तेति अवलेहविषया । जम्बीरेत्यादौ पक्व-जम्बीरफलरस:, अयञ्च योगो वातोल्वणे अम्लपित्ते इत्याहु: ॥ २१।२२ ॥

हिङ्ग्वित्यादि ।—कतकफलं जलप्रसादनफलं प्रायो मगधे भवति । यथोत्तरं द्विगुणमिति—हिङ्ग्वपेक्षया कतकफलं द्विगुणं, कतकफलापेक्षया तिन्तिड़ीतवल्क् द्विगुणा, तिन्तिड़ीतवल्कपेक्षया च घृतं द्विगुणमिति ; एतत् सर्वं स्थालीमध्ये निक्षिप्य शरावेण पिधायान्तर्धूमं दग्ध्वा माषकचतुष्टयमुपयोज्यं, तन्त्रजलञ्चानुपेयं, तन्त्रान्तरसंवादात् ॥ २३ ॥

पञ्चनिम्बादिचूर्णम् ।—

एकोऽंशः पञ्चनिम्बानां द्विगुणो वृद्धदारकः ।
शक्तुर्दशगुणो देयः शर्करामधुरीकृतः ॥ २५ ॥
शीतेन वारिणा पीतः शूलं पित्तकफोत्थितम् ।
निहन्ति चूर्णं सक्षौद्रमम्लपित्तं सुदारुणम् ॥ २६ ॥

अभ्रशुद्धिः ।—

आशुभक्तोदकैः पिष्टमभ्रकं तत्र संस्थितम् ।
कन्दमाणास्थिसंहार-खण्डकर्णरसैरथ ॥ २७ ॥
तण्डुलीयकशालिञ्च-कालमारिषजेन च ।
वृश्चीरवृहतीभृङ्ग-लक्ष्मणाकेशराजजैः ॥ २८ ॥
पेषणं भावनं कुर्य्यात् पुटञ्चानेकशो भिषक् ।
यावन्निश्चन्द्रकं तत् स्याच्छुद्धिरेवं विहायसः ॥ २९ ॥

लौहशुद्धिः ।—

स्वर्णमाक्षिकशालिञ्च-ध्मातं निर्वापितं जले ।

---

कान्तेत्यादि ।—कान्तपात्रे इति—कान्ताख्यलौहविशेषपात्रे प्रक्षिप्य स्थापित-त्रिफलाकल्क इत्यर्थः । शर्करामधुनी प्रक्षेप्ये ॥ २४ ॥

एकोऽंश इत्यादि ।—पञ्चनिम्बानामिति—निम्बस्य त्वक्पत्रपुष्पफलमूलानां पञ्चानां मिलितानामेको भागः । शक्तुर्दशगुण इति निम्बभागापेक्षया । मात्रा चास्य पलमर्द्धपलं वा आहारद्रव्यशक्तुबाहुल्यात् ॥ २५।२६ ॥

सम्प्रति सुधावती वाच्या, तत्र प्रथममभ्रकशुद्धिमाह, आशुभक्तेत्यादि ।—आशुः धान्यभेदः । अत्राभ्रकं कृष्णाभ्रकं ग्राह्यं, श्रेष्ठत्वात्, तच्चैकपत्रीकृत्य उदूखलादिषु सञ्चूर्ण्य आशुभक्तकाञ्जिके अहोरात्रं स्थापयित्वा तेनैव काञ्जिकेन पेषणीयं, ततः कन्दादीनां व्यस्तसमस्तानां स्वरसेन पुनः पेषणं भावनं पुटनञ्च बहुधा कुर्वीत, यावन्निश्चन्द्रकत्वमभ्रस्य स्यादित्यर्थः । तत्र कन्दः वन्य ओलः । खण्डकर्णः खाण्डकानः 'खारकोन' इति ख्यातम् । तण्डुलीयकालमारिषयोः स्वल्पपत्र-बृहत्पत्रभेदेन भेदः । वृश्चीरः पुनर्नवा । भृङ्गः भृङ्गराजः । लक्ष्मणा स्वनामख्याता । विहायस इति—अभ्रस्य ॥ २७—२९ ॥

त्रैफलेऽथ विचूर्ण्यैवं लौहं कान्तादिकं पुनः ॥ ३० ॥
वृहत्पत्रकरीकर्ण-त्रिफलावृद्धदारजैः।
माणकन्दास्थिसंहार-शृङ्गवेरभवै रसैः ॥ ३१ ॥
दशमूलीमुण्डितिका-तालमूलीसमुद्भवैः।
पुटितं साधु यत्नेन शुद्धिमेवमयो व्रजेत् ॥ ३२ ॥

मण्डूरशुद्धिः।—

वज्रिरं श्वेतवाट्यालं मधुपर्णीमयूरकम्।
तण्डुलीयञ्च वर्षाभूं दत्त्वाऽधश्चोर्द्धमेव च ॥ ३३ ॥
पाक्यं सुजीर्णमण्डूरं गोमूत्रेण दिनत्रयम्।
अन्तर्वाष्पमदग्धञ्च तथा स्थाप्यं दिनत्रयम् ॥
विचूर्णितं शुद्धिरियं लौहकिट्टस्य दर्शिता ॥ ३४ ॥

रसशुद्धिः।—

जयन्त्या वर्द्धमानस्य आर्द्रकस्य रसेन च।

---

लौहशुद्धिमाह, स्वर्णमाचिकेत्यादि।—पिष्टाभ्यां स्वर्णमाक्षिकशालिञ्चाभ्यां कान्तादिलौहं लिप्त्वा ततो भस्त्रया वह्नौ ध्मातं, ततोऽम्लसारवक्ष्यमाणविधिकथित-त्रिफलाक्काथे निर्वापितमित्यर्थः। त्रैफले जले इति—त्रिफलाक्काथे इत्यर्थः। तदेव निरुत्थमारितं लौहचूर्णं प्रक्षाल्य भानुपाकादिना शोधितं वृहत्पत्रकरिकर्णपलाशादि-स्वरसैः पुटितं कुर्य्यादित्याह, वृहत्पत्रेत्यादि। वृहत्पत्रं 'बड़बड़' इति ख्यातम्। अत्र वृहत्पत्रकरिकर्णाद्येकादशपुटनद्रव्येषु मध्ये येषां स्वरसप्राप्तिस्तेषां स्वरसो ग्राह्यः, येषान्तु स्वरसो न लभ्यते तेषां पुटनीयलौहसमानानामष्टगुणं जलं दत्त्वा अष्टभागाव-शेषक्काथेन पुटनं कर्त्तव्यमिति ॥ ३०—३२ ॥

लौहमलशुद्धिमाह, वज्रिरमित्यादि।—वज्रिरः श्वेतसूर्य्यावर्त्तः। मधुपर्णी गुडूची। मयूरकः अपामार्गः। तण्डुलीयः क्षुद्रमारिषः। वर्षाभूः पुनर्नवा। सुजीर्णमण्डूरं पुराणमण्डूरम्। वज्रिरादीनां मूलत्वक्पत्रपल्लवान् स्थालीमध्ये पातयित्वा तदुपरि जीर्णमण्डूरं दत्त्वा तैरेव पल्लवादिभिराच्छाद्य गोमूत्रं दत्त्वा दिवसत्रयं व्याप्य सुदग्धं यथा स्यात् तथा पाको विधेयः; तदनु शरावेण पिधायान्तर्वाष्पं यथा स्यात् तथा दिनत्रयं स्थाप्यम्; तदनु प्रक्षाल्य आतपे शोषयित्वा चूर्णयेदिति मण्डूरशुद्धिः ॥ ३३।३४ ॥

वायस्यास्त्वानुपूर्व्येण मर्दनं रसशोधनम् ॥ ३५ ॥

गन्धकशुद्धिः ।—

गन्धकं नवनीताख्यं क्षुद्रितं लौहभाजने ।
त्रिधा चण्डातपे शुष्कं भृङ्गराजरसाप्लुतम् ॥ ३६ ॥
ततो वह्नौ द्रवीभूतं त्वरितं वस्त्रगालितम् ।
यत्नात् भृङ्गरसे क्षिप्तं पुनः शुष्कं विशुध्यति ॥ ३७ ॥

क्षुधावती गुडिका ।—

गगनात् द्विपलं चूर्णं लौहस्य पलमात्रकम् ।
लौहकिट्टपलार्द्धञ्च सर्वमेकत्र संस्थितम् ॥ ३८ ॥
मण्डूकपर्णीवशिर-तालमूलीरसैः पुनः ।
वरीभृङ्गकेशराज-कालमारिषजैरथ ॥ ३९ ॥
त्रिफलाभद्रमुस्ताभिः स्थालीपाकाद्विचूर्णितम् ।
रसगन्धकयोः कर्षौ प्रत्येकं ग्राह्यमेकतः ॥ ४० ॥

---

अथ रसशुद्धिमाह, जयन्त्या इत्यादि ।—वर्द्धमानः एरण्डः । वायसी काकमाची ॥ ३५ ॥

गन्धकशुद्धिमाह, गन्धकमित्यादि ।—क्षुद्रितमिति—तण्डुलकणपरिमितं कृत्वा लौहभाजने स्थापयित्वा भृङ्गराजस्वरसेनाप्लाव्य चण्डातपे शोषयेत्, एवमपरवारद्वयमपि ; तदनु प्रक्षाल्य आतपे संशोष्य लौहपात्रमध्ये स्थापयित्वा ज्वलदङ्गारोपरि दत्वा दर्व्विकया सञ्चाल्य यदा तैलवत् द्रवीभवति तदा भृङ्गराजस्वरसपरिपूरितपात्रे घृताक्तसूक्ष्मवस्त्रेण पिहितमुखे गन्धकं त्वरितं ढालयित्वा पात्रान्तरेण पिदध्यात् ; तदनु प्रक्षाल्य आतपे शोषयित्वा चूर्णयेदिति गन्धकशुद्धिः ॥ ३६।३७ ॥

अथ शोधिताभ्रक-लौह-लौहमलचूर्णानां मिलित्वा स्थालीपाकमाह, गगनादित्यादि ।—गगनादिति—अभ्रकात् । मण्डूकपर्ण्यादितालमूल्यन्तस्य रसेनाभ्रक-लौहतन्मलमिलितचूर्णसमेनैकः स्थालीपाकः । वरीति—शतावरी । ततः शतावर्य्यादिकालमारिषान्तरसेन च द्वितीयः स्थालीपाकः ; तदनु त्रिफलाभद्रमुस्ताभिरप्यनन्तरोक्तक्वाथविधिकृतक्वाथेन तथैव तृतीयः स्थालीपाक इति । निश्चलस्तु मण्डूकपर्ण्यादितालमूल्यन्तरसेन पुटदानमाह ; तन्तु न सम्यक्, पुटदानाश्रुतेः, पूर्व-

तन्मर्द्दनाच्छिलाखल्ले यत्नतः कज्जलीकृतम्।
वचा चव्यं यमानी च जीरके शतपुष्पिका॥ ४१॥
व्योषं मुस्तं विड़ङ्गञ्च ग्रन्थिकं खरमञ्जरी।
त्रिवृता चित्रको दन्ती सूर्य्यावर्त्तः सितस्तथा॥ ४२॥
भृङ्गमाणककन्दौ च खण्डकर्णक एव च।
दण्डोत्पला केशराज-कालावकड़कोऽपि च॥ ४३॥
एषामर्द्धपलं ग्राह्यं पटघृष्टं सुचूर्णितम्।
प्रत्येकं त्रिफलायाश्च पलार्द्धं पलमेव च॥ ४४॥
एतत् सर्वं समालोड्य लौहपात्रे तु भावयेत्।
आतपे दण्डसङ्घृष्टमार्द्रकस्य रसैस्त्रिधा॥ ४५॥
तद्रसेन शिलापिष्टां गुड़िकां कारयेद्भिषक्।
बदरास्थिमितां शुष्कां सुनिगुप्तां निधापयेत्॥ ४६॥
तत् प्रातर्भोजनादौ च सेवितं गुड़िकात्रयम्।
अम्लोदकानुपानञ्च हितं मधुरवर्जितम्॥ ४७॥
दुग्धञ्च नारिकेलञ्च वर्जनीयं विशेषतः।
भोज्यं यथेष्टमिष्टञ्च वारिभक्ताम्लकाञ्जिकम्॥ ४८॥
हन्त्यम्लपित्तं विविधं शूलञ्च परिणामजम्।
पाण्डुरोगञ्च गुल्मञ्च शोथोदरगुदामयान्॥ ४९॥

---

पुटदानस्य तु रसशोधनादिग्रन्थेन व्यवधानाच्चेति। स्थालीपाकाद्विचूर्णितमिति— स्थालीपाकानन्तरं पुनर्लौहशिलायां चूर्णीकर्त्तव्यमित्यर्थः। एतदनन्तरं यद्विधेयं तदाह, रसगन्धकयोः कर्षावित्यादि—रसगन्धकयोः कर्षौ प्रत्येकमिति छेदः, तन्मिलितरसगन्धककर्षचतुष्टयमेकत्र इति—एकीकृत्य कज्जलीकृतं ग्राह्यमिति योज्यम्। वचा चव्यमित्यादिना प्रक्षेप्यचूर्णद्रव्याण्याह। खरमञ्जरी अपामार्गः। सूर्य्यावर्त्तः नामातसूर्य्यावर्त्तः, स च श्वेतः। माणककन्दः माणकन्दः। एषाञ्च वचादीनां चूर्णं प्रत्येकमर्द्धपलं, त्रिफलायाः; मिलित्वा सार्द्धपलमेकं, तेन त्रिफलायाः प्रत्येकमर्द्धपलमिति फलति। बदरास्थिमितामिति—अत्रोपदेशात् कषायपरिमाणाम्

यक्ष्माणं पञ्च कासांश्च मन्दाग्नित्वमरोचकम् ।
प्लीहानं श्वासमानाहमामवातं सुदारुणम् ॥
गुड़ो क्षुधावती सेयं विख्याता रोगनाशिनी ॥ ५० ॥

जीरकाद्यं घृतम् ।—

पिष्ट्वाऽजाजीं सधन्याकं घृतप्रस्थं विपाचयेत् ।
कफपित्तारुचिहरं मन्दानलवमिं जयेत् ॥ ५१ ॥

पटोलशुण्ठीघृतं ।—

पटोलशुण्ठयोः कल्काभ्यां केवलं कुलकेन वा ।
घृतप्रस्थं विपक्तव्यं कफपित्तहरं परम् ॥ ५२ ॥

पिप्पलीघृतम् ।—

पिप्पलीक्वाथकल्केन घृतं सिद्धं मधुप्लुतम् ।
पिबेत्तत् प्रातरुत्थाय अम्लपित्तनिवृत्तये ॥ ५३ ॥

द्राक्षाद्यं घृतम् ।—

द्राक्षाऽमृताशक्रपटोलपत्रैः सोशीरधात्रीघनचन्दनैश्च ।
त्रायन्तिकापद्मकिरातधान्यैः कल्कैः पचेत् सर्पिरुपेतमेभिः ॥ ५४ ॥
युञ्जीत मात्रां सह भोजनेन सर्वर्तुपानेऽपि भिषग्विदध्यात् ।
बलासपित्तग्रहणीं प्रवृद्धां कासाग्निसादज्वरमम्लपित्तम् ॥ ५५ ॥
सर्वं निहन्यात् घृतमेतदाशु सम्यक् प्रयुक्तं ह्यमृतोपमञ्च ॥ ५६ ॥

शतावरीघृतम् ।—

शतावरीमूलकल्कं घृतप्रस्थं पयः समम् ।
पचेन्मृद्वग्निना सम्यक् क्षीरं दत्त्वा चतुर्गुणम् ॥ ५७ ॥

---

इत्याहुः । अत्र क्षीरादिवर्जनं तथा वारिभक्ताम्लकाञ्जिकादिविधानञ्च प्रयोगसात्म्यत्वात्, अचिन्त्या हि योगशक्तिरिति ॥ ३८—५० ॥

पिष्ट्वेत्यादि ।—अत्र जलं चतुर्गुणम् ॥ ५१।५२ ॥

पिप्पलीत्यादि ।—पिप्पलीघृते मधुप्लुतमिति—सिद्धे घृते घृतपादिकं मधु सम्मिश्रणीयम् ॥ ५३ ॥

द्राक्षेत्यादि ।—शक्रः कुटजः, तस्य फलमिति वदन्ति । पद्मं पद्मकाष्ठम् ॥ ५४—५६ ॥

नाशयेदम्लपित्तञ्च वातपित्तोद्भवान् गदान् ।
रक्तपित्तं तृषां मूर्च्छां श्वासं सन्तापमेव च ॥ ५८ ॥

इत्यम्लपित्त-चिकित्सा ।

---

# अथ वीसर्प-विस्फोट-चिकित्सा ।

क्रियासूत्रम् ।—

विरेकवमनालेप-सेचनासृग्विमोक्षणैः ।
उपाचरेत् यथादोषं वीसर्पानविदाहिभिः ॥ १ ॥

पटोलादिक्वाथः ।—

पटोलपिचुमर्दाभ्यां पिप्पल्या मदनेन च ।
वीसर्पे वमनं शस्तं तथैवेन्द्रयवैः सह ॥ २ ॥

त्रिफलाक्वाथः ।—

त्रिफलारससंयुक्तं सर्पिस्त्रिवृतया सह ।

---

शतावरीत्यादि ।—शतावरीघृते पयः समामिति—पयःशब्देनेह पयःसाधर्म्यात् शतावर्य्या रसो ग्राह्यः, न तु क्षीरं, तस्य पृथगुपादानात् । समामिति—घृतेन सह तुल्यम् ॥ ५७।५८ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायामम्लपित्त-चिकित्सा-विवृतिः ।

---

अम्लपित्तवत् वीसर्पेऽपि पित्तसम्बन्धस्यावश्यम्भावात् प्रायस्तुल्यचिकित्सत्वाच्चाम्लपित्तानन्तरं वीसर्पचिकित्सितमुच्यते, विरेकेत्यादि ।—अविदाहिभिरित्यन्नपानैरिति शेषः ॥ १ ॥

पटोलेत्यादि ।—पटोलपिचुमर्दाभ्यामित्येको योगः । पिप्पल्या मदनेन चेति द्वितीयः । इन्द्रयवस्तु योगद्वयेऽपि सम्बध्यते इति केचित् । अन्ये तु पटोलनिम्बयोः क्वाथः पिप्पल्यादित्रयं प्रक्षेप्यमित्येकं योगमाहुः; व्यवहारः पुनरेकेनैव ॥ २ ॥

प्रयोक्तव्यं विरेकार्थं वीसर्पज्वरशान्तये ॥ ३ ॥

आमलकप्रयोगः ।—

रसमामलकानां वा घृतमिश्रं प्रदापयेत् ॥ ४ ॥

वातजे पञ्चमूलचतुष्टयप्रयोगोपदेशः ।—

तृणवर्जं प्रयोक्तव्यं पञ्चमूलचतुष्टयम् ।
प्रदेहसेकसर्पिर्भिर्वीसर्पे वातसम्भवे ॥ ५ ॥

वातजे कुष्ठादिप्रयोगः ।—

कुष्ठं शताह्वासुरदारुमुस्ता-वाराहिकुस्तुम्बुरुकृष्णगन्धाः ।
वातेऽर्कवंशार्त्तगलाश्च योज्याः सेकेषु लेपेषु तथा घृतेषु ॥ ६ ॥

पित्तजे प्रपौण्डरीकादिप्रलेपः ।—

प्रपौण्डरीकमञ्जिष्ठा-पद्मकोशीरचन्दनैः ।
सयष्टीन्दीवरैः पित्ते क्षीरपिष्टैः प्रलेपनम् ॥ ७ ॥

पित्तजे कशेर्वादिप्रलेपः ।—

कशेरुशृङ्गाटकपद्मगुन्द्राः सशैवलाः सोत्पलकर्दमाश्च ।
वस्त्रान्तराः पित्तकृते विसर्पे लेपा विधेयाः सघृताः सुशीताः ॥८॥

---

त्रिफलेत्यादि ।—त्रिफलायाः क्वाथं सर्पिस्त्रिवृते प्रक्षिप्य पिबेत् ॥ ३ ॥

रसमित्यादि ।—अत्रापि विरेकार्थमिति सम्बध्यते ॥ ४ ॥

तृणवर्जमित्यादि ।—तृणवर्जमिति—तृणपञ्चमूलं वर्जयित्वा पञ्चमूलचतुष्टयम् । तत्र स्वल्पमहत्पञ्चमूलद्वयं प्रसिद्धमेव । कण्टकिपञ्चमूलं वल्लीपञ्चमूलञ्च यथा—"मेषशृङ्गी हरिद्रा च विदारी शारिवाऽमृता । वल्ल्याख्यं कण्टकाख्यन्तु श्वदंष्ट्राऽभीरुसैर्य्यकैः ॥ अहिंस्राकरमर्दैश्च सर्वदोषहराश्च ते ॥" अत्र अभीरुः शतावरी । सैर्य्यकः झिण्टी । अहिंस्रा कालाकड़ः । करमर्दः स्वल्पमधुरफलः, चारीति लोके इति सुश्रुतटीका । तृणपञ्चमूलस्य वर्जनमिह पित्तहरत्वेन वातेऽयौगिकत्वात् ॥ ५ ॥

कुष्ठमित्यादि सुश्रुतस्य ।—वाराही वाराहीकन्दः, एतदभावे चर्मकारालुकः । कुस्तुम्बुरु धन्याकम् । कृष्णगन्धा शोभाञ्जनं, तस्य मूलम्, अन्ये तु बीजम् । अर्कः अर्कस्य मूलम् । वंशः वंशनेत्री । आर्त्तगलः आगड़ामूलम्, अर्जुनवल्कलं वा ॥ ६ ॥

प्रपौण्डरीकेत्यादि ।—इन्दीवरं नीलोत्पलम् ॥ ७ ॥

कशेर्वित्यादि सुश्रुतस्य ।—पद्मं पद्मकाष्ठम् । गुन्द्रा गुलञ्चः । उत्पलं नीलोत्-

पित्तजे पञ्चवल्कल-पद्मकाद्योः प्रयोगौ।—

प्रदेहाः परिषेकाश्च शस्यन्ते पञ्चवल्कलैः।
पद्मकोशीरमधुक-चन्दनैर्वा प्रशस्यते ॥ ९ ॥

पित्तजे पद्मिनीपङ्कादिलेपचतुष्टयम्।—

पित्ते तु पद्मिनीपङ्कं पिष्टं वा शङ्खशैवलम्।
गुन्द्रामूलन्तु शुक्तिर्वा गैरिकं वा घृतान्वितम् ॥ १० ॥

पित्तजे न्यग्रोधादिलेपः।—

न्यग्रोधपादास्तरुणाः कदलीगर्भ एव च।
विसग्रन्थिश्च लेपः स्याच्छतधौतघृताप्लुतः ॥ ११ ॥

पित्तजे हरेण्वादिलेपचतुष्टयम्।—

हरेणवो मसूराश्च मुद्गाश्चैव सशालयः।
पृथक् पृथक् प्रदेहाः स्युः सर्वैर्वा सर्पिषा सह ॥ १२ ॥

पित्तजे द्राक्षादि-त्रिवृदादियोगौ।—

द्राक्षाऽऽरग्वधकाश्मर्य-त्रिफलाऽमण्डपीलुभिः।

---

पलम्। कर्दमः पद्मिनीस्थानगतकर्दमः। वस्त्रान्तराः वस्त्रेणान्तरिताः, एवं सति पित्तवीसर्पेऽतिवृद्धौ त्वगाद्युपघातो न स्यात्, लेपस्फोटनञ्च सुकरं भवतीति। लेपा इति बहुवचननिर्देशादेकैकशोऽप्येते लेपा योज्या इति वदन्ति ॥ ८ ॥

प्रदेहा इत्यादि।—पञ्चवल्कलैरिति—"कपीतनवटाश्वत्थ-प्लक्षोडुम्बरवल्कलैः"। प्रशस्यते इत्यत्र वचनविपरिणामेन प्रदेह इति योज्यम् ॥ ९ ॥

पित्ते त्वित्यादि।—श्लोकपादैश्चत्वारो योगाः। शङ्खश्च शैवलञ्चेति समाहारः। गुन्द्रा गुलुच्चः। शुक्तिः मुक्तोत्पत्तिभाण्डः। शीतवीर्यत्वात् मौक्तिकमपीति केचित्। घृतान्वितमिति योगचतुष्टयेऽपि योज्यम् ॥ १० ॥

न्यग्रोधेत्यादि वाग्भटस्य।—न्यग्रोधस्य पादाः प्ररोहाः; अन्ये तु मूलानीत्याहुः। तरुणा इति—अभिनवाः। "तरुणाः" इत्यत्र "गुन्द्रा" इति न पाठः, वाग्भटे चरके च "तरुणाः" इति पाठात्। कदलीगर्भः गर्भस्था कदलीमञ्जरी। विसग्रन्थिः मृणालग्रन्थिः ॥ ११ ॥

हरेणव इत्यादि।—हरेणवः वर्तुलकलायाः ॥ १२ ॥

द्राक्षेत्यादि।—आरग्वधम् आरग्वधस्य फलम्। अमण्डः एरण्डः, तस्य बीजं,

त्रिवृद्धरीतकीभिश्च वीसर्पे शोधनं हितम् ॥ १३ ॥

श्लेष्मजे गायत्र्यादिलेपः।—

गायत्रीसप्तपर्णाब्द-वासाऽऽरग्वधदारुभिः।
कुटन्नटैर्भवेल्लेपो वीसर्पे श्लेष्मसम्भवे ॥ १४ ॥

श्लेष्मजे अजगन्धादिलेपः।—

अजाश्वगन्धा सरलाऽथ काला सैकेशिका वाऽप्यथवाऽजशृङ्गी।
गोमूत्रपिष्टो विहिमः प्रदेहो हन्याद्विसर्पं कफजं सुशीघ्रम् ॥१५॥

श्लेष्मजे मदनादिक्वाथः।—

मदनं मधुकं निम्बं वत्सकस्य फलानि च।
वमनञ्च विधातव्यं वीसर्पे कफसम्भवे ॥ १६ ॥

श्लेष्मजे त्रिफलादिलेपः।—

त्रिफलापद्मकोशीर-समङ्गाकरवीरकम्।
नलमूलमनन्ता च लेपः श्लेष्मविसर्पहा ॥१७॥

---

विरेचकत्वात्। पीलु श्रौत्तरापथिकं फलम्। क्वाथेन कल्केन वा योगद्वयमिदं, तत्र पीलवन्त एको योगः, हरीतक्यन्तश्च द्वितीयो योगः इति ॥ १३ ॥

गायत्रीत्यादि।—अब्द आरग्वधस्य पत्रम्। कुटन्नटं कैवर्त्तमुस्तकम्। अयं योगो वासास्थाने धवस्य कुटन्नटस्थाने कुरण्टकस्य प्रक्षेपादपि बोध्यः; यदाह चरकः,—"खदिरं सप्तपर्णञ्च मुस्तमारग्वधं धवम्। कुरण्टकं देवदारु दद्यादालेपनं भिषक् ॥" (चि० वीसर्पं०) इति ॥ १४ ॥

अजेत्यादि सुश्रुतस्य।—अजगन्धा फोकान्दी। अश्वगन्धा ख्यातैव। सरला त्रिवृत्। काला कालाकडः। एकेशिका पाठा। अजशृङ्गी मेषशृङ्गी, कर्कटशृङ्गी वा। अजगन्धादिरजशृङ्ग्यन्त एको योगः; उक्तं हि वाग्भटे—"कालाऽजशृङ्गी-सरल-बस्तगन्धा-हयाह्वयाः। एकैशिका च लेपः स्यात् श्वयथावेकगात्रजे ॥" (चि० १७ अ०) इति। विहिम इति—हिमविपरीतः, कोष्ण इत्यर्थः ॥ १५।१६ ॥

त्रिफलेत्यादि वाग्भटस्य।—समङ्गा वराहक्रान्ता। करवीरकमित्यत्र करवीरज-मिति पाठे—मूलम्। अनन्ता अनन्तमूलम्। अयं लेपस्तथा वक्ष्यमाणोऽप्यारग्वधादिः स्वल्पघृतयोगेन स्निग्धः कार्यः; एतदनन्तरं "प्रदेहाः सर्व एवैते देयाः स्वल्पघृताप्लुताः" (चि० वीसर्पं०) इति चरकेणोक्तत्वात् ॥ १७ ॥

श्लेष्मजे आरग्वधादिलेपावचूर्णने।—

आरग्वधस्य पत्राणि त्वचः श्लेष्मातकोद्भवाः।
शिरीषपुष्पं काकाची हिता लेपावचूर्णनैः॥ १८॥

मुस्तादि-धात्र्यादिक्काथौ।—

मुस्तारिष्टपटोलानां क्काथः सर्वविसर्पनुत्।
धात्रीपटोलमुद्गानामथवा घृतसम्प्लुतः॥ १९॥

नवकषायगुग्गुलुः।—

अमृतवृषपटोलं निम्बकल्कैरुपेतं
त्रिफलखदिरसारं व्याधिघातञ्च तुल्यम्।
क्वथितमिदमशेषं गुग्गुलोर्भागयुक्तं
जयति विषविसर्पान् कुष्ठमष्टादशाख्यम्॥ २०॥

विसर्पादौ अमृतादिः।—

अमृतवृषपटोलं मुस्तकं सप्तपर्णं
खदिरमसितवेत्रं निम्बपत्रं हरिद्रे।
विविधविषविसर्पान् कुष्ठविस्फोटकण्डू-
रपनयति मसूरीं शीतपित्तं ज्वरञ्च॥ २१॥

विस्फोटादौ पटोलामृतादिक्काथः।—

पटोलामृतभूनिम्ब-वासकारिष्टपर्पटैः।
खदिराब्दयुतैः क्काथो विस्फोटार्त्तिज्वरापहः॥ २२॥

---

आरग्वधस्येत्यादि।—श्लेष्मातकः बहुवारः। काकाची काकमाची॥ १८॥

मुस्तेत्यादि।—सर्ववीसर्पनुदिति—प्रत्येकदोषजसर्ववीसर्पनुत, सन्निपातवीसर्पस्या-साध्यत्वात्॥ १९॥

अमृतेत्यादि।—त्रिफलं त्रिफला। व्याधिघातं स्वर्णालुफलम्। गुग्गुलोर्भाग-युक्तमिति प्रत्यहोपयोगे प्रक्षेपपरिमाणयैव देयं, वटिके कर्त्तव्ये प्रक्षेपमानापेक्षया द्विगुण्येनेत्याहुः॥ २०॥

अमृतेत्यादि।—असितवेत्रं कालिया लता, तस्या मूलम्। अत्रापि वटिके कर्त्तव्ये गुग्गुलुं प्रक्षिपन्ति वृद्धाः॥ २१॥

विस्फोटादौ पटोलत्रिफलादिक्वाथः ।—

पटोलत्रिफलारिष्ट-गुडूचीमुस्तचन्दनैः ।
समूर्वा रोहिणी पाठा रजनी सदुरालभा ॥ २३ ॥
कषायं पाययेदेतत् पित्तश्लेष्मज्वरापहम् ।
कण्डूत्वग्दोषविस्फोट-विषवीसर्पनाशनम् ॥ २४ ॥

वीसर्पादौ भूनिम्बादिक्वाथः ।—

भूनिम्बवासाकटुकापटोल-फलत्रिकाचन्दननिम्बसिद्धः ।
वीसर्पदाहज्वरवक्त्रशोष-विस्फोटतृष्णावमिनुत् कषायः ॥ २५ ॥

कफपित्तजे त्रिफलाक्वाथः ।—

सकफे पित्तयुक्ते तु त्रिफलां योजयेत् पुरैः ॥ २६ ॥

दुरालभादिक्वाथः खदिराष्टकप्रयोगोपदेशश्च ।—

दुरालभां पर्पटकं पटोलं कटुकां तथा ।
सोष्णां गुग्गुलुसंयुक्तां पिबेद्वा खदिराष्टकम् ॥ २७ ॥

विस्फोटे कुण्डल्यादि-खदिरादिक्वाथौ ।—

कुण्डलीपिचुमर्दाम्बु खदिरेन्द्रयवाम्बु वा ।
विस्फोटान् नाशयत्याशु वायुर्जलधरानिव ॥ २८ ॥

सदाहविस्फोटे चन्दनादिलेपः ।—

चन्दनं नागपुष्पञ्च तण्डुलीयकशारिवे ।

---

विस्फोटचिकित्सामाह—पटोलेत्यादि ॥ २२ ॥

पटोलत्रिफलेत्यादि ।—समूर्वा रोहिणी पाठा रजनी सदुरालभा इत्यतःपरम् एभिरिति शेषः, तेन एभिः कृतं कषायं पाययेदित्यर्थसङ्गतिः कार्य्या ॥ २३—२५ ॥

सकफे इत्यादि ।—त्रिफलां योजयेत् पुरैरिति—त्रिफलाक्वाथे गुग्गुलुः प्रक्षेप्य इत्यर्थः ॥ २६ ॥

दुरालभामित्यादि ।—अत्रापि दुरालभादीनां क्वाथे गुग्गुलुः प्रक्षेप्यः । सोष्णामिति सशब्दः ईषदर्थे । खदिराष्टकं मसूर्य्यां वक्ष्यमाणम्, इदमपि गुग्गुलुयुक्तमेव पिबेत् ॥ २७ ॥

कुण्डलीत्यादि ।—योगद्वयम् । कुण्डली गुडूची । अम्बु क्वाथः ॥ २८ ॥

शिरीषवल्कलं जाती लेपः स्याद्दाहनाशनः ॥ २९ ॥

सर्वविस्फोटे शुकतर्वादिलेपः।—

शुकतरुनतं च माची रजनी पद्मा च तुल्यानि।

पिष्टानि शीततोयेन लेपः स्यात् सर्वविस्फोटे ॥ ३० ॥

मुखजविस्फोटे शिरीषमूलादिकवलाः।—

शिरीषमूलमञ्जिष्ठा-चव्यामलकयष्टिकाः।

सजातीपल्लवक्षौद्रा विस्फोटे कवड़ग्रहाः ॥ ३१ ॥

नेत्रजविस्फोटे शिरीषादिप्रयोगः श्लेष्मातकप्रयोगश्च।—

शिरीषोड़ुम्बरौ जम्बूः सेकालेपनयोर्हिताः।

श्लेष्मातकत्वचो वाऽपि प्रलेपाश्च्योतने हिताः ॥ ३२ ॥

दशाङ्गः।—

शिरीषयष्टीनतचन्दनैला-मांसीहरिद्राद्वयकुष्ठबालैः।

लेपो दशाङ्गः सघृतः प्रदिष्टो विसर्पकण्डूज्वरशोथहारी ॥ ३३ ॥

चतुःसमम्।—

शिरीषोशीरनागाह्व-हिंस्राभिर्लेपनात् द्रुतम्।

विसर्पविषविस्फोटाः प्रशाम्यन्ति न संशयः ॥ ३४ ॥

वृषाद्यं घृतम्।—

वृषखदिरपटोलपत्रनिम्ब-त्वगमृताऽऽमलकीकषायकल्कैः।

---

चन्दनमित्यादि।—शारिवा अनन्तमूलम्। जात्यास्तु पत्रम् ॥ २९ ॥

शुकतर्वित्यादि वाग्भटस्य।—शुकतरुः शिरीषः। नतं तगरपादिका। माची देवदारु। पद्मा ब्राह्मणयष्टिका ॥ ३० ॥

शिरीषेत्यादि।—शिरीषमूलेत्यत्र शिरीषपूगेति पाठे—पूगस्य फलम्। अत्र बहुवचननिर्देशात् प्रत्येकमप्येते कवड़े योज्या इति वदन्ति। जातीपत्रं क्षौद्रञ्च सर्वत्र ज्ञेयम् ॥ ३१ ॥

शिरीषोड़ुम्बरावित्यादि।—आश्च्योतनं सर्वत्र चक्षुषि द्रवौषधदानम् ॥ ३२ ॥

शिरीषेत्यादि।—यष्टी यष्टिमधु। बालं ह्रीवेरम् ॥ ३३ ॥

शिरीषेत्यादि।—नागाह्वं नागकेशरचूर्णम्। हिंस्रा काकादनी ॥ ३४ ॥

घृतमभिनवमेतदाशु पक्वं जयति विसर्पगदान् सकुष्ठगुल्मान् ॥ ३५ ॥

पञ्चतिक्तकघृतम् ।—

पटोलसप्तच्छदनिम्बवासा-फलत्रिकच्छिन्नरुहाविपक्वम् ।
तत् पञ्चतिक्तं घृतमाशु हन्ति त्रिदोषविस्फोटविसर्पकण्डूः ॥ ३६ ॥

महापद्मकघृतम् ।—

पद्मकं मधुकं लोध्रं नागपुष्पस्य केशरम् ।
द्वे हरिद्रे विड़ङ्गानि सूक्ष्मैला तगरं तथा ॥ ३७ ॥
कुष्ठं लाक्षा पत्रकञ्च सिक्थकं तुल्यमेव च ।
बहुवारः शिरीषश्च कपित्थफलमेव च ॥ ३८ ॥
तोयेनालोड्य तत् सर्वं घृतप्रस्थं विपाचयेत् ।
यांश्च रोगान् निहन्त्याशु तान् निबोध महामुने ! ॥ ३९ ॥
सर्पकीटाखुदष्टेषु लूतामूत्रकृतेषु च ।
विविधेषु स्फोटकेषु तथा कुष्ठविसर्पिषु ॥ ४० ॥
नाड़ीषु गण्डमालासु प्रभिन्नासु विशेषतः ।
अगस्त्यविहितं धन्यं पद्मकन्तु महाघृतम् ॥ ४१ ॥

## स्नायुकचिकित्सा ।

विसर्पचिकित्साऽतिदेशः ।—

रोगस्तु स्नायुकाख्यो यः क्रिया तत्र विसर्पवत् ॥ ४२ ॥

---

वृषेत्यादि ।—वृषाद्यघृते निम्बत्वगमृताऽऽमलकीकषायकल्कैरित्यस्य स्थाने छन्दःपूरणार्थं "निम्बत्वगमृताधात्रीकषायकल्कयुक्तम्" इति केचित् पठन्ति । अन्ये तु "त्वगमृतकामलकी" इति पठन्ति । कश्चित्तु "तामलकी" इति पाठः, तन्न, व्यवहाराभावात ॥ ३५ ॥

पटोलेत्यादि ।—पञ्चतिक्तघृते त्रिफलायाः कल्कः, शेषाणाञ्च कषाय इति व्यवहरन्ति वृद्धवैद्याः ॥ ३६ ॥

पद्मकमित्यादि ।—महापद्मकघृते नागपुष्पस्य केशरमिति—नागकेशरचूर्णमित्यर्थः ॥ ३७—४१ ॥

स्नायुकरोगचिकित्सामाह, रोगस्त्वित्यादि ।—स्नायुकरोगो नहरुया नाम्ना पश्चिम-

निर्गुण्डीस्वरसः।—

गव्यं सर्पिस्त्र्यहं पीत्वा निर्गुण्डीस्वरसं त्र्यहम्।
पिबन् स्नायुकमत्युग्रं हन्त्यवश्यं न संशयः॥ ४३॥

शोभाञ्जनादिलेपः मोचत्वक्-लेपश्च।—

शोभाञ्जनमूलदलैः काञ्जिकपिष्टैः सलवणैर्लेपः।
हन्ति स्नायुकरोगं यद्वा मोचत्वचो लेपः॥ ४४॥

इति वीसर्प-विस्फोट-चिकित्सा।

## अथ मसूरिका-चिकित्सा।

वमने पटोलादि-वचादिक्काथौ।—

सर्वासां वमनं पथ्यं पटोलारिष्टवासकैः।
कषायैश्च वचावत्स-यष्ट्याह्वफलकल्कितैः॥ १॥

---

देशे ख्यातः, अयञ्च रोगो रुग्विनिश्चये नोक्तः, वृन्देन पुनरुक्तः; यथा—"शाखासु कुपितो वायुः शोथं कृत्वा विसर्पवत्। भित्त्वैव तं क्षते तत्र सोष्मा मांसं विशोष्य च॥ कुर्यात् तन्तुनिभं सूत्रं तत् पिडकाक्षतकृज्जैः। क्षिप्तं शनैः क्षताद्याति छेदात् तत् कोपमावहेत्॥ तत्पाताच्छोथशान्तिः स्यात् पुनः स्थानान्तरे भवेत्। रोगः स स्नायुको नाम्ना तन्तुकश्च प्रकीर्त्तितः॥" इति। शाखास्विति—जङ्घादिषु। तदिति—सूत्रम्। तत्क्षतकृज्जैः पिडकैर्निर्गतं सत् क्षताद्याति निःसरति। छेदादिति—कदाचिदभिघातादिना सूत्रच्छेदात्। तत्पातादिति—तस्य सूत्रस्य स्वयमेव पतनात्॥ ४२॥

गव्यमित्यादि।—पिबन्नित्यत्र "पीतः" इति पाठे—कर्त्तरि क्तः॥ ४३॥

शोभाञ्जनमित्यादि।—मोचत्वचो लेप इति—मोचं कदलीफलं, कौरण्टकं वा, तस्य त्वक्॥ ४४॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां वीसर्प-विस्फोट-चिकित्सा-विवृतिः।

---

विस्फोटभेदत्वात् प्रायस्तुल्यचिकित्सितत्वाच्च मसूरीचिकित्सितमुच्यते, सर्वासामित्यादि।—वासकैरित्यत्र कृतैरिति शेषः, तेन कषायैरित्यनेन सामानाधिकरण्यं न विरुध्यते। वत्सः इन्द्रयवः। फलं मदनफलम्॥ १॥

ब्राह्मी-हिलमोचिकाप्रयोगौ ।—

सक्षौद्रं पाययेत् ब्राह्म्या रसं वा हैलमोचिकम् ।
वान्तस्य रेचनं देयं शमनञ्चाबले नरे ॥ २ ॥

रोमान्त्यादौ सुषवीपत्रस्वरसः ।—

सुषवीपत्रनिर्य्यासं हरिद्राचूर्णसंयुतम् ।
रोमान्तीज्वरविस्फोट-मसूरीशान्तये पिबेत् ॥ ३ ॥

वमनविरेचनयोः फलनिर्देशः ।—

उभाभ्यां हृतदोषस्य विशुध्यन्ति मसूरिकाः ।
निर्विकाराश्चाल्पपूयाः पच्यन्ते चाल्पवेदनाः ॥ ४ ॥

मुष्टियोगषट्कम् ।—

कण्टाकुम्भाण्डमूलं क्वथनविधिकृतं हिङ्गुमाषैकयुक्तं
पीतं वीजं जयायाः सहृतमुषितवाः पीतमङ्घ्रिः सिकट्याः ।
भव्या मूलं शिफा वा मदनकुसुमजा सोषणा वाऽथ पूति-
योगा वाप्यष्टनैते प्रथममसगदे दृश्यमाने प्रयोज्याः ॥ ५ ॥

---

सक्षौद्रमित्यादि ।—रसमिति—स्वरसम्, एतच्च वामकं विरेचकञ्च ॥ २ ॥

सुषवीत्यादि ।—सुषवी कारवेल्लकः, एतद्रसोऽप्युभयभागहरः ॥ ३ ॥

उभाभ्यामित्यादि ।—उभाभ्यामिति—वमनविरेचनाभ्याम् ॥ ४ ॥

मुष्टियोगानाह, कण्टाकुम्भाण्डमूलमित्यादि ।—कण्टाकुम्भाण्डलता स्वनामख्याता । हिङ्गुमाषैकयुक्तं पीतमिति पूर्वेणैव सम्बध्यते । वीजं जयायाः सहृतमुषितवाः पीतमिति द्वितीयो योगः । जया जयन्ती, अस्याश्च बीजमुपदेशादेकाधिकषड्गण्डकं सहृतं पर्य्युषितजलेन पीतमित्याहुः । ये तु "उषितवाः पीतम्" इति पदं जयावीजमित्यनेन सह न योजयन्ति, तन्मते पीतमिति नपुंसकलिङ्गनिर्द्देशो नोपपद्यते इति ; सामान्यविशेषभावेन योजनाऽपि कष्टकल्पनेवेति । अङ्घ्रिः सिकट्या इति तृतीयो योगः । अत्राप्युषितवाः पीत इति लिङ्गविपरिणामेन सम्बध्यते । अङ्घ्रिरिति—मूलम् । सिकटी स्वनामख्यातैव । भव्या अपि तथैव च, भव्यो मुराकः, तस्य मूलम् । सोषणा समरिचा ; एतच्च पूतिरित्यनेनैव सम्बध्यते । पूतिः खट्टासिकाऽण्डम् । अन्ये तु मदनकुसुमजा शिफा सोषणा, पूतिर्नाटाकरञ्जी-

मुष्टियोगस्वरूपम् ।—

उद्धृत्य मुष्टिनाऽऽक्राद्य भेषजं यत् प्रयुज्यते ।
तन्मुष्टियोगमित्याहुर्मुष्टियोगपरायणाः ॥ ६ ॥

उष्ट्रकण्टकमूलानन्तमूलप्रयोगौ ।—

उष्ट्रकण्टकमूलं वाऽप्यनन्तामूलमेव वा ।
विधिग्रहीतं ज्येष्ठाम्बु पीतं हन्ति मसूरिकाम् ॥ ७ ॥

शृगालकण्टकमूलप्रयोगः ।—

तद्वच्छृगालकण्टक-मूलञ्च व्युषिताम्भसा ॥ ८ ॥

कज्जलीप्रयोगः निशादियोगश्च ।—

मसूरीं मूर्च्छितो हन्ति गन्धकाद्दैस्तु पारदः ।
निशाचिञ्चाच्छदे शीत-वारिपीते तथैव तु ॥ ९ ॥

बहुवारप्रयोगः ।—

यावत्सङ्ख्या मसूर्य्यङ्गे तावद्भिः शेलुजैर्दलैः ।
छिन्नैरातुरनाम्ना तु गुणी व्येति न वर्द्धते ॥ १० ॥

---

ऽपि स्रोषध इति वदन्ति । अत्र मरिचमेकाधिकषड्गण्डकमित्युपदिशन्ति । अघगदः पापरोगो मसूरीपर्य्याय एव ॥ ५ ॥

मुष्टियोगस्वरूपमाह—उद्धृत्येत्यादि ॥ ६ ॥

उष्ट्रेत्यादि ।—उष्ट्रकण्टकं स्वनामख्यातं, 'उङ्कुर' इति केचित् । अनन्तामूलम् अनन्तमूलम् । ज्येष्ठाम्बु तण्डुलोदकम् ॥ ७ ॥

तद्वदित्यादि ।—शृगालकण्टकमपि स्वनामख्यातम् ॥ ८ ॥

मसूरीमित्यादि ।—मूर्च्छित इति—कज्जलीकृतः । शोधितगन्धक कर्ष १, शोधितरस मा ८, कज्जली कर्त्तव्या, अतो माषकचतुष्टयं षट्कं वा पर्णे कृत्वा खाद्यमिति व्यवहारः । निशेत्यादौ छदः पत्रम्; छदशब्दस्य नपुंसकलिङ्गता छान्दसत्वात्, किंवा निशाचिञ्चाच्छदाविति पाठः । द्विवचनदर्शनात् पत्रद्वयं ग्राह्यमित्यन्ये ॥ ९ ॥

यावदित्यादि ।—शेलुः बहुवारः । मसूरिकां गणयित्वा तावत्सङ्ख्या आतुरनाम्ना पत्राणि छिन्द्यादित्यर्थः । गुणी मसूरिकेत्यर्थः ॥ १० ॥

पर्युषितवारिप्रयोगः कायशोषणे शेलुत्वक्शीतकषायश्च।—

व्युषितं वारि सक्षौद्रं पीतं दाहगुणोहरम्।
शेलुत्वक्कृतशीताम्भः-सेकं वा कायशोषणे ॥ ११ ॥

रोमान्तिकादौ उग्रादिधूपः।—

उग्राऽऽज्यवंशनीलि-वृषमूलकार्पासकीकसत्वग्भी-।
सुरसमयूरकलाक्षाधूपो रोमान्तिकादिहरः ॥१२॥

वातजायां तर्पणादिविधिः।—

तर्पणं वातजायां प्राक् लाजचूर्णैः सशर्करैः।
भोजनं तिक्तयूषैश्च प्रतुदानां रसेन वा ॥ १३ ॥

वातजायां दशमूलादिक्वाथः।—

द्विपञ्चमूलं रास्ना च दार्व्युशीरं दुरालभा।
सामृतं धान्यकं मुस्तं जयेद्वातसमुत्थिताम् ॥ १४ ॥

वातजायां गुडूच्यादिक्वाथः।—

गुडूचीं मधुकं रास्नां पञ्चमूलं कनिष्ठकम्।
चन्दनं काश्मर्यफलं बलामूलं विकङ्कतम् ॥
पाककाले मसूर्यान्तु वातजायां प्रयोजयेत् ॥ १५ ॥

पित्तजायां द्राक्षादिक्वाथः।—

द्राक्षाकाश्मर्यखर्जूर-पटोलारिष्टवासकैः।
लाजाऽऽमलकदुःस्पर्शैः सितायुक्तश्च पैत्तिके ॥ १६ ॥

---

व्युषितमित्यादि।—शेलुत्वगित्यादौ शीताम्भः शीतकषायः। कायशोषणे इति—उत्कूनगात्रप्रदेशशोषणनिमित्तमित्याहुः। "कायशोधनम्" इति पाठे—शरीरमलक्लेदनिरासार्थमित्यर्थः, किंवा कायशब्देनोपचारान्मसूरिकैवोच्यते ॥ ११ ॥

उग्रेत्यादि।—उग्रा वचा। आज्यं घृतम्। वृषस्य वासकस्य मूलम्। कार्पासकीकसं कार्पासास्थि। सुरसः पर्णासः। मयूरकः अपामार्गः ॥ १२ ॥

तर्पणमित्यादि।—तर्पणमिति—द्रवेणालोडिताः शक्तवः। तिक्तयूषैरिति—तिक्तद्रव्यकृतयूषैः। प्रतुदाः पारावतादयः ॥ १३ ॥

द्विपञ्चमूलमित्यादि।—योगोऽयं क्वाथेन, एवं गुडूचीमित्यादिकमपि ॥ १४।१५ ॥

शिरीषादिलेपः।—

शिरीषोडुम्बराश्वत्थ-शेलुन्यग्रोधवल्कलैः।

प्रलेपः सघृतः शीघ्रं व्रणविस्फोटदाहहा ॥ १७ ॥

पित्तश्लेष्मजयोः दुरालभादिक्वाथः।—

दुरालभां पर्पटकं भूनिम्बं कटुरोहिणीम्।

श्लैष्मिक्यां पित्तजायां वा पाने निःक्वाथ्य दापयेत् ॥ १८॥

निम्बादिक्वाथः।—

निम्बं पर्पटकं पाठां पटोलं कटुरोहिणीम्।

वासां दुरालभां धात्रीमुशीरं चन्दनद्वयम् ॥ १९ ॥

एष निम्बादिकः ख्यातः पीतः शर्करया युतः।

हन्ति त्रिदोषमसूरीं ज्वरवीसर्पसम्भवाम् ॥

उत्थिता प्रविशेत् या तु पुनस्तां वाह्यतो नयेत् ॥ २० ॥

पटोलादिक्वाथः।—

पटोलकुण्डलीमुस्त वृषधन्वयवासकैः।

भूनिम्बनिम्बकटुका-पर्पटैश्च शृतं जलम् ॥ २१ ॥

मसूरीं शमयेदामां पक्वाञ्चैव विशोधयेत्।

नातः परतरं किञ्चिद्विस्फोटज्वरशान्तये ॥ २२ ॥

पटोलमूलादिक्वाथः।—

पटोलमूलारुणतण्डुलीयकं पिबेद्धरिद्राऽऽमलकल्कसंयुतम्।

मसूरिविस्फोटविदाहशान्तये तदेव रोमान्तिकमिज्वरापहम् ॥२३॥

पटोलमूलादिचतुरङ्गक्वाथः।—

पटोलमूलारुणतण्डुलीयकं तथैव धात्रीखदिरेण संयुतम्।

---

द्राक्षेत्यादि।—सितायुक्तमित्यनन्तरं कषायमिति शेषः ॥ १६—१८॥

निम्बमित्यादि।—निम्बादिरपि क्वाथविधया देयः ॥ १९।२० ॥

पटोलेत्यादि।—कुण्डली गुडूची। यवासः दुरालभा ॥ २१।२२॥

पटोलमूलेत्यादि।—क्वाथे हरिद्राऽऽमलकचूर्णं प्रक्षिप्य अनुलोमनार्थं पिबेत्। अरुणतण्डुलीयकं लोहिततण्डुलीयकम् ॥ २३ ॥

पिबेज्जलं सुक्वथितं सुशीतलं मसूरिकारोगविनाशनं परम् ॥२४॥

खदिराष्टकम् ।—

खदिरत्रिफलारिष्ट-पटोलामृतवासकैः ।
क्वाथोऽष्टकाख्यो जयति रोमान्तिकमसूरिकाः ॥
कुष्ठवीसर्पविस्फोट-कण्ड्वादीनपि पानतः ॥ २५ ॥

पित्तश्लेष्मजायाम् अमृतादिक्वाथप्रयोगोपदेशः ।—

अमृतादिकषायस्तु जयेत् पित्तकफात्मिकाम् ॥ २६ ॥

मातुलुङ्गकेशरलेपः ।—

सौवीरेण तु सम्पिष्टं मातुलुङ्गस्य केशरम् ।
प्रलेपात् पातयत्याशु दाहञ्चाशु नियच्छति ॥ २७ ॥

पाददाहे तण्डुलाम्बुसेकः ।—

पाददाहं प्रकुरुते पिड़का पादसम्भवा ।
तत्र सेकं प्रशंसन्ति बहुशस्तण्डुलाम्बुना ॥ २८ ॥

पाककाले बृंहणक्रियोपदेशः ।—

पाककाले तु सर्वास्ता विशोषयति मारुतः ।
तस्मात् संबृंहणं कार्य्यं न तु पथ्यं विशोषणम् ॥ २९ ॥

पाककाले गुड़ूच्यादिक्वाथः ।—

गुड़ूची मधुकं द्राक्षा मोरटं दाड़िमैः सह ।

---

पटोलमूलारुणेत्यादि ।—धात्रीखदिरेण संयुतमिति—धात्रीखदिरावपि पटोलमूलारुणतण्डुलीयकाभ्यां सह क्वथनीयौ ॥ २४ ॥

खदिरेत्यादि ।—अष्टकाख्य इति—खदिराष्टक इति संज्ञा । अत्र शोधने कर्त्तव्ये गुग्गुलुमपि प्रक्षिपन्ति ॥ २५ ॥

अमृतादीति ।—अमृतादिकषायो विसर्पोक्तदशद्रव्यकृतः, तस्यैव मसूरीहरत्वश्रुतेः ; न तु ज्वराधिकारोक्तोऽमृतादिरिति ॥ २६ ॥

सौवीरेणेत्यादि ।—सौवीरेणेति—काञ्जिकेन ॥ २७।२८ ॥

पाककाले वायुप्रशमनार्थं बृंहणाहारमाह, पाकेत्यादि ।—विशोषणेन पाकोन्मुखस्य दोषस्यान्तःप्रवेशाद्गुणाधिक्यं स्यादिति भावः ॥ २९ ॥

पाककाले तु दातव्यं भेषजं गुडसंयुतम् ॥
तेन पाकं व्रजत्याशु न च वायुः प्रकुप्यति ॥ ३० ॥

पाचनार्थं बादरलेहः।—

लिह्याद्वा बादरं चूर्णं पाचनार्थं गुडेन तु।
अनेनाशु विपच्यन्ते वातपित्तकफात्मिकाः ॥ ३१ ॥

शूलादियुक्तस्य मांसरसप्रयोगः।—

शूलाध्मानपरीतस्य कम्प्यमानस्य वायुना।
धन्वमांसरसाः शस्ता ईषत्सैन्धवसंयुताः ॥ ३२ ॥

अरुचौ यूषप्रयोगः।—

दाड़िमाम्लरसैर्युक्ता यूषाः स्युररुचौ हिताः ॥ ३३ ॥

खदिरादिपानीयं शौचार्थं गायत्र्यादिजलञ्च।—

पिबेदम्भस्तप्तशीतं भावितं खदिरासनैः।
शौचे वारि प्रयुञ्जीत गायत्रीबहुवारजम् ॥ ३४ ॥

मुखादिरोगे जातीपत्रादिगण्डूषः।—

जातीपत्रं समञ्जिष्ठं दार्वीं पूगफलं शमीम्।
धात्रीफलं समधुकं क्वथितं मधुसंयुतम् ॥
मुखरोगे कण्ठरोगे गण्डूषार्थं प्रशस्यते ॥ ३५ ॥

नेत्रे गवेधुकादिपरिषेकः।—

अक्ष्णोः सेकं प्रशंसन्ति गवेधुमधुकाम्बुना ॥ ३६ ॥

---

गुडूचीत्यादि।—भीरटम् इक्षुमूलम्; एषां क्वाथः, गुडस्तु प्रक्षेप्यः ॥३०।३१॥

शूलेत्यादि।—धन्वमांसरसा इति—जाङ्गलपक्षिमांसरसाः ॥ ३२।३३ ॥

पिबेदित्यादि।—पिबेदम्भस्तप्तशीतमिति—अर्द्धशृतं शीतञ्च; एवं वक्ष्यमाण-शौचेऽपि। भावितं खदिरासनैरिति—खदिरासनैः वासितं कार्यमित्यर्थः। असनः शालसालः, असन एव कथ्यते। गायत्री खदिरः ॥ ३४।३५ ॥

अक्ष्णोरित्यादि।—गवेधुमधुकाम्बुनेति—गवेधुकः, गुलुञ्चः, अनयोः क्वाथं कर्पटे बद्ध्वा प्रपीड्याक्षिसेकः कार्यः ॥ ३६ ॥

नेत्रे मधुकादिप्रलेपाश्च्योतने ।—

मधुकं त्रिफला मूर्वा दार्वीत्वङ्नीलमुत्पलम् ।
उशीरलोध्रमञ्जिष्ठाः प्रलेपाश्च्योतने हिताः ॥
नश्यन्त्यनेन दृग्जाता मसूर्यो न द्रवन्ति च ॥ ३७ ॥

क्लेदयुक्तायां पञ्चवल्कलाद्यवचूर्णनम् ।—

पञ्चवल्कलचूर्णेन क्लेदिनीमवचूर्णयेत् ।
भस्मना केचिदिच्छन्ति केचिद्गोमयरेणुना ॥ ३८ ॥

कीटोपद्रवनिवारणार्थं सरलादिधूपः ।—

क्रिमिपातभयाच्चापि धूपयेत् सरलादिना ॥ ३९ ॥

वेदनादौ त्रिफलाक्वाथ-खदिराष्टके ।—

वेदनादाहनाशार्थं स्रुतानाञ्च विशुद्धये ।
सगुग्गुलुं वराक्वाथं युञ्ज्याद्वा खदिराष्टकम् ॥ ४० ॥

कण्ठशोधने कृष्णादिचूर्णं अष्टाङ्गावलेहः आर्द्रकादिकवलश्च ।—

कृष्णाऽभयारजो लिह्यान्मधुना कण्ठशुद्धये ।
अथाष्टाङ्गावलेहो वा कवडश्चार्द्रकादिभिः ॥ ४१ ॥

रक्तशोधनार्थं क्रियाविशेषाः ।—

पञ्चतिक्तं प्रयुञ्जीत पानाभ्यञ्जनभोजनैः ।
कुर्य्यात् व्रणविधानञ्च तैलादीन् वर्जयेच्चिरम् ॥ ४२ ॥
विषघ्नैः सिद्धसञ्ज्ञैश्च प्रमृज्यात् तु पुनः पुनः ।
तथा शोणितसंसृष्टाः काश्चिच्छोणितमोक्षणैः ॥ ४३ ॥

---

मधुकमित्यादि ।—अत्र हिताः इति बहुवचननिर्देशात् व्यस्तैः समस्तैर्मधुकादिभिः प्रलेपः, अर्द्धशृतैश्च तैराश्च्योतनमित्याहुः । आश्च्योतनं परिषेकः ॥ ३७ ॥

पञ्चवल्कलेत्यादि ।—क्लेदिनीं क्लेदयुक्तां मसूरीम् । भस्मनेति—शुष्कगोमयभस्मना । गोमयरेणुनेति—गोमयचूर्णेन वस्त्रच्छानितेन ॥ ३८ ॥

क्रिमिपातेत्यादि ।—सरलादिभिरिति—सरलागुरुगुग्गुलुप्रभृतिभिः ॥ ३९ ॥

वेदनेत्यादि ।—सगुग्गुलुमित्युभयत्रापि सम्बध्यते ॥ ४० ॥

कृष्णेत्यादि ।—अष्टाङ्गावलेहार्द्रकादिकवडौ ज्वराधिकारोक्तौ ॥ ४१ ॥

निशादिलेपः।—

निशाद्वयोशीरशिरीषमुस्तकैः सलोध्रभद्रश्रियनागकेशरैः।
सस्वेदविस्फोटविसर्पकुष्ठ-दौर्गन्ध्यरोमान्तिहरः प्रदेहः॥ ४४॥

अनागतप्रतिषेधार्थं बिम्ब्यादिक्वाथः।—

बिम्ब्यतिमुक्ताकाशोक-प्लक्षवेतसपल्लवैः।
निशि पर्य्युषितः क्वाथो मसूरीभयनाशनः॥ ४५॥

कूर्परादिशोथे व्रणचिकित्सोपदेशादिः।—

मसूरीस्फोटयोरन्ते कूर्परे मणिबन्धके।
मुखांसफलके शोथो जायते यः सुदारुणः॥ ४६॥
व्रणशोथहरैर्योगैर्वातघ्नैश्च जलौकसा।
हर्त्तव्यस्तैलभृष्टस्य वृश्चिकस्य विलेपनैः॥ ४७॥

अनागतप्रतिषेधार्थं क्रियाविशेषोपदेशः।—

चैत्रासितभूतदिने रक्तपताकाऽन्विता सुधी भवने।
धवलितकलसन्यस्ता पापरुजो दूरतो धत्ते॥ ४८॥

इति मसूरी-चिकित्सा।

---

# अथ क्षुद्ररोग-चिकित्सा।

अजगल्लिकाचिकित्सा।—

तत्राजगल्लिकामामां जलौकाभिरुपाचरेत्।

---

पञ्चतिक्तमित्यादि।—पञ्चतिक्तघृतं कुष्ठोक्तम्॥ ४२।४३॥

निशाद्वयेत्यादि।—भद्रश्रियं श्वेतचन्दनम्॥ ४४॥

बिम्बीत्यादि।—बिम्बी तुमरीति श्रीकण्ठः। अतिमुक्तकः माधवीलता।
योगोऽयमनागतमसूरीनिवारणार्थं चैत्रे मासि पेयः॥ ४५—४७॥

चैत्रेत्यादि।—चैत्रासितभूतदिने इति—चैत्रकृष्णचतुर्दश्याम्॥ ४८॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां मसूरी-चिकित्सा-विवृतिः।

---

शुक्तिसौराष्ट्रिकाक्षार-कल्कैश्चालेपयेन्मुहुः ॥ १ ॥

नवीनकण्टकाख्यांस्तु कण्टकैर्वेधमात्रतः।

क्रिमाश्चर्य्यं विपच्याशु प्रणश्यत्यजगल्लिका ॥ २ ॥

कठिनां क्षारयोगैश्च द्रावयेदजगल्लिकाम् ॥ ३ ॥

अनुशयीचिकित्सातिदेशः।—

श्लेष्मविद्रधिकल्पेन जयेदनुशयीं भिषक् ॥ ४ ॥

विवृतादीनां पञ्चानां चिकित्सा।—

विवृतामिन्द्रवृद्धाञ्च गर्दभीं जालगर्दभम्।

इरिवेल्लिं गन्धमालां जयेत् पित्तविसर्पवत् ॥

मधुरौषधसिद्धेन सर्पिषा शमयेत् व्रणान् ॥ ५ ॥

विदारिकाचिकित्सा।—

रक्तावसेकैर्बहुभिः स्वेदनैरपतर्पणैः।

---

विसर्पादीनामक्षुद्रहेतुलक्षणचिकित्सितानामभिधानेन क्षुद्रहेतुलक्षणचिकित्सितानां रोगाणां पारिशेष्यात् क्षुद्ररोगचिकित्सितमुच्यते, तत्रेत्यादि।—ननु यदि क्षुद्रत्वमेषां हेतुलक्षणचिकित्सिताल्पत्वेन, तर्हि अग्निरोहिणीवल्मीकादीनां त्रिदोषजत्वेन हेत्वादि-बाहुल्यात् तेषां कथं क्षुद्रत्वम्? नैवं, बाहुल्येन तावत् छत्रिणो गच्छन्तीतिवत्; किंवा अवान्तरभेदविरहत्वं क्षुद्रत्वम्; येनात्र वक्तव्यानामजगल्लिकादीनां न दोष-दूष्यादिकृतभूरिसङ्ख्याभेदेन व्रणज्वरादिवन्निर्देशः, किन्तु प्रत्येकं लोकसङ्ख्ययाऽभिधानं तेषाम्। अजगल्लिका "आँचलो" इति लोके। आमामिति—अपक्वाम्; वाग्भटेऽपि अपक्वामित्युक्तम्। शुक्तीत्यादौ शुक्तिः सुक्तोत्पत्तिभाण्डम्। सौराष्ट्रिका सौराष्ट्रमृत्। सुश्रुते तु सौराष्ट्रीस्थाने "शुण्ठिका" (चि॰ २० अ॰) पठ्यते, शुण्ठिका सर्जिक्षारः। क्षारः यवक्षार इति॥ १।२॥

कठिनामित्यादि।—क्षारयोगैरिति—घण्टापारुल्यादियोगैः॥ ३।४॥

विवृतामित्यादि।—मधुरौषधं काकोल्यादिगणः। व्रणानिति—विवृतादीनेव गन्धमालान्तान् पाकेन व्रणभावमापन्नान् मधुरौषधसिद्धेन सर्पिषा शमयेदित्यर्थः; सुश्रुतेऽप्युक्तं—विवृतामिन्द्रवृद्धां गर्दभिकां जालगर्दभमिरिवेल्लिकां गन्धमालां कक्षां विस्फोटकञ्च पित्तविसर्पविधानेनोपाचरेत्, पक्वांश्च मधुरौषधसिद्धेन सर्पिषा इति॥ ५॥

जयेद्विदारिकां लेपैः शिग्रुदेवद्रुमोद्भवैः ॥ ६ ॥

पनसिकादिपञ्चानां चिकित्साविधिः ।—

पनसिकां कच्छपिकामनेन विधिना भिषक् ।
अन्नालजीं यवप्रख्यां तथा पाषाणगर्दभम् ॥ ७ ॥
साधयेत् कठिनानन्यान् शोथान् दोषसमुद्भवान् ।
सुरदारुशिलाकुष्ठैः स्वेदयित्वा प्रलेपयेत् ॥ ८ ॥

पाषाणगर्दभचिकित्साविधिः ।—

कफमारुतशोथघ्नो लेपः पाषाणगर्दभे ॥ ९ ॥

वल्मीकचिकित्सा ।—

शस्त्रेणोत्कृत्य वल्मीकं क्षाराग्निभ्यां प्रसाधयेत् ।
मनःशिलाऽऽलभल्लात-सूक्ष्मैलाऽगुरुचन्दनैः ॥ १० ॥
जातीपल्लवकल्कैश्च निम्बतैलं विपाचयेत् ।
वल्मीकं नाशयेत् तद्धि बहुच्छिद्रं बहुस्रवम् ॥ ११ ॥

पाददारीचिकित्सा ।—

पाददारीषु च शिरां व्यधयेत् तलशोधनीम् ।
स्नेहस्वेदोपपन्नौ तु पादौ चालेपयेन्मुहुः ॥
मधूच्छिष्टवसामज्ज-घृतक्षारैर्विमिश्रितैः ॥ १२ ॥

---

रक्तावक्षैरित्यादि ।—रक्तावसेकैरित्यादिना विदारिकाचिकित्सा ॥ ६ ॥

पनसिकामित्यादि ।—अनेन विधिनेति—विदारिकोक्तेन । अन्यान् शोथानिति—पाषाणगर्दभादीन् । दोषसमुद्भवानिति—योग्यतया कफवातजान् साधयेत् ॥ ७।८ ॥

कफेत्यादि ।—पाषाणगर्दभः "गालठाहुया" इति ख्यातम् ॥ ९ ॥

शस्त्रेणेत्यादि ।—मनःशिलेत्यादौ आलं हरितालम् । निम्बतैलमिति—निम्बवीजभवतैलम् । बहुस्रवमिति—बहुस्रावम् । सुश्रुते आलस्थाने पिप्पलीयोगादप्ययं योगः पठितः ॥ १०।११ ॥

पाददारीष्वित्यादि ।—तलशोधनीमिति—पादतलगामिनीम् । स्नेहस्वेदोपपन्नावित्यनन्तरं कृत्वेति शेषः । अन्ये तु शिराव्यधाङ्गीभूतस्नेहस्वेदौ कृत्वा शिरां व्यधयेदिति बोध्यम्, एतावन्तरेण शिराव्यधस्यासम्भवेः; स्नेहस्वेदोपपन्नावित्यादिना

सर्जाख्यसिन्धूद्भवयोश्चूर्णं मधुघृतप्लुतम् ।
निर्मथ्य कटुतैलाक्तं हितं पादप्रमार्जनम् ॥ १३ ॥

उपोदिकाक्षारतैलम् ।—

उपोदिकासर्षपनिम्बमोच-
कर्कारुकैर्वारुकभस्मतोये ।
तैलं विपक्वं लवणांशयुक्तं
तत् पाददारीं विनिहन्ति लेपात् ॥ १४ ॥

अलसकचिकित्सा ।—

अलसेऽम्लैश्चिरं सिक्तौ चरणौ परिलेपयेत् ।
पटोलारिष्टकाशीश-त्रिफलाभिर्मुहुर्मुहुः ॥ १५ ॥
करञ्जवीजं रजनीं काशीशं मधुकं मधु ।
रोचना हरितालञ्च लेपोऽयमलसे हितः ॥ १६ ॥
लाक्षाऽभयारसालेपः कार्य्यं वा रक्तमोक्षणम् ।
जातीपत्रञ्च सम्मर्द्य दद्यादलसके भिषक् ॥ १७ ॥
बृहतीरससिद्धेन तैलेनाभ्यज्य बुद्धिमान् ।
शिलारोचनकाशीश-चूर्णैर्वा प्रतिसारयेत् ॥ १८ ॥

---

तु पश्चात्कर्मोपदेशः दोषशेषक्षयार्थं रक्ताक्रान्तिजनितवातक्षयार्थं वेति । आलेपयेन्मधूच्छिष्टादिभिरित्यन्वयः । अत्र क्षीरविमिश्रितैरित्यपपाठः, सुश्रुते यवक्षारैरिति पाठात ॥ १२ ॥

सर्जाख्येत्यादि ।—सर्जः धूनकः । कटुतैलाक्तमिति—कटुतैलयुक्तं यथा स्यात् तथा पादप्रमार्जनमित्यर्थः, किंवा चूर्णविशेषणम् ॥ १३ ॥

उपोदिकेत्यादि ।—उपोदिकानालं ग्राह्यम् । मोचकः कदलीकोरकः । कर्कारुः कुष्माण्डभेदः । एर्वारुः कर्कटी ; अनयोर्नाडी । एषां क्षारोदके चतुर्गुणे सैन्धवकल्केन तैलं पक्तव्यम् । लेपादिति अतिघनत्वात् तैलस्य ॥ १४ ॥

अलसे इत्यादि ।—अलसः 'पाकोयाना' इति ख्यातम् । अम्लैरिति—काञ्जिकैः । अरिष्टः निम्बः ॥ १५।१६ ॥

लाक्षेत्यादि ।—अत्र रसः गन्धरसः ॥ १७ ॥

कदरचिकित्सा।—

दहेत् कदरमुद्धृत्य तैलेन दहनेन वा ॥ १९ ॥

चिप्पचिकित्सा।—

चिप्पमुष्णाम्बुना स्विन्नमुत्कृत्याभ्यज्य तं व्रणम्।
दत्त्वा सर्जरसं चूर्णं बद्ध्वा व्रणवदाचरेत् ॥ २० ॥
स्वरसेन हरिद्रायाः पात्रे कृष्णायसेऽभयाम्।
घृष्ट्वा तज्जेन कल्केन लिम्पेच्चिप्पं पुनः पुनः ॥ २१ ॥
चिप्पे सटङ्कणास्फोता-मूललेपो नखप्रदः ॥ २२ ॥

पद्मिनीकण्टकचिकित्सा।—

निम्बोदकेन वमनं पद्मिनीकण्टके हितम्।
निम्बोदकहृतं सर्पिः सक्षौद्रं पानमिष्यते ॥ २३ ॥
पद्मनालकृतः क्षारः पद्मिनीं हन्ति लेपतः।
निम्बारग्वधकल्कैर्वा मुहुरुद्वर्त्तनं हितम् ॥ २४ ॥

---

बृहतीत्यादि।—बृहती कण्टकारी, तस्याः स्वरसः, तैलञ्च सार्षपं, सुश्रुतसंवादात्। प्रतिसारयेदिति—घर्षयेत् ॥ १८ ॥

दहेदित्यादि।—कदरं शस्त्रेणोद्धृत्य तप्ततैलेन दहनेन वा दहेदित्यर्थः। दहनेनेत्यत्र "मदनेन" इति पाठे—मदनः सिक्थकः, तेनापि तप्तेन दाहः ॥ १९ ॥

चिप्पमित्यादि।—चिप्पमिह कुनखमभिप्रेतं, न त्वङ्गुलीवेष्टकम्, उत्कृत्यपाकित्व-सायास्तवानर्हत्वादिति केचित्। उष्णाम्बुना स्वेदनमिह मार्दवजननार्थं, मृदुत्वे सत्येव कुनखोत्कर्त्तनं कर्त्तुं शक्यमिति। बद्ध्वेति व्रणोक्तबन्धनविधिना। व्रणवदाचरेदिति—व्रणहितैराहाराचारादिभिरित्यर्थः ॥ २० ॥

स्वरसेनेत्यादि।—कृष्णायसे पात्रे कान्तलौहपात्रे ॥ २१ ॥

चिप्पे इत्यादि।—आस्फोता हापरमाली। योगोऽयं व्यस्तसमस्ततया व्यवह्रियते वृद्धैः ॥ २२ ॥

निम्बोदकेनेत्यादि।—निम्बोदकेन निम्बक्वाथेन मदनफलादियुतेनेत्याहुः ॥ २३ ॥

पद्मनालेत्यादि।—निम्बेत्यादि—"निम्बारग्वधयोः क्वाथो हित उत्सादने भवेत्" (चि० २० अ०) इति यत् सुश्रुतेनोक्तं, तत्रापि क्वाथशब्दस्य कल्क एवार्थः ॥ २४ ॥

जालगर्दभचिकित्सा ।—

नीलीपटोलमूलाभ्यां साज्याभ्यां लेपनं हितम् ।
जालगर्दभरोगे तु सद्यो हन्ति च वेदनाम् ॥ २५ ॥

अहिपूतनकचिकित्सा ।—

अहिपूतनके धात्र्याः पूर्वं स्तन्यं विशोधयेत् ।
त्रिफलाखदिरक्वाथैर्व्रणानां धावनं सदा ॥ २६ ॥
करञ्जत्रिफलातिक्तैः सर्पिः सिद्धं शिशोर्हितम् ।
रसाञ्जनं विशेषेण पानालेपनयोर्हितम् ॥ २७ ॥

गुदभ्रंशचिकित्सा ।—

गुदभ्रंशे गुदं स्नेहैरभ्यज्याशु प्रवेशयेत् ।
प्रविष्टे स्वेदयेच्चापि बद्धं गोष्फणया दृढम् ॥ २८ ॥
कोमलं पद्मिनीपत्रं यः खादेच्छर्करान्वितम् ।
एतन्निश्चित्य निर्दिष्टं न तस्य गुदनिर्गमः ॥ २९ ॥
वृक्षाम्लानलचाङ्गेरी बिल्वपाठायवाग्रजम् ।
तक्रेण शीलयेत् पायुभ्रंशार्त्तोऽनलदीपनम् ॥ ३० ॥
गुदस्य गव्यवसया म्रक्षयेदविशङ्कितः ।
दुष्प्रवेशो विशत्याशु गुदभ्रंशो न संशयः ॥ ३१ ॥

---

नीलीत्यादि ।—नीली नीलवुह्ना ॥ २५ ॥

अहिपूतनके इत्यादि ।—स्तन्यं विशोधयेदिति—पित्तश्लेष्महरैः स्तन्यशोधनद्रव्यैरित्यर्थः ; उक्तं हि—"तत्र धात्र्याः पयः शोध्यं पित्तश्लेष्महरौषधैः" ( वा० उ० २अ० ) इति ॥ २६ ॥

करञ्जेत्यादि ।—अत्र तिक्तशब्देनात्र तिक्तकगणः ; अन्ये तु पटोलपत्रमाहुः ॥२७॥

गुदभ्रंशे इत्यादि ।—स्नेहैरिति बहुवचनात् चतुर्भिरेव स्नेहैरित्यर्थः, किंवा "गुदस्य गव्यवसया म्रक्षयेत्" इति वक्ष्यमाणयोगदर्शनादत्रापि स्नेहशब्देन गव्यवसैव ग्राह्या । गोष्फणा बन्धविशेषः, स हि सुश्रुते व्रणालेपनबन्धविधौ व्यक्तः ; उक्तं हि—"वर्चोनिरसनार्थं सच्छिद्रेण चर्मणाऽस्य कौपीनबन्धः कार्यः" इति ॥ २८।२९ ॥

मूषिकाणां वसाभिर्वा गुदे सम्यक् प्रलेपनम्।
स्विन्नमूषिकमांसेन चाथवा स्वेदयेत् गुदम् ॥ ३२ ॥

चाङ्गेरीघृतम्।—

चाङ्गेरीकोलदध्यम्ल-नागरक्षारसंयुतम्।
घृतमुत्क्वथितं पेयं गुदभ्रंशरुजापहम् ॥
शुण्ठीक्षारावत्र कल्कौ शिष्टन्तु द्रवमिष्यते ॥ ३३ ॥

मूषिकाद्यं तैलम्।—

क्षीरे महत् पञ्चमूलं मूषिकामन्त्रवर्जिताम्।
पक्त्वा तस्मिन् पचेत् तैलं वातघ्नौषधसाधितम् ॥
गुदभ्रंशमिदं तैलं पानाभ्यङ्गात् प्रसाधयेत् ॥ ३४ ॥

---

वचाम्लेत्यादि।—वचाम्लं महार्द्रकम्। अनलः चित्रकः। एषां कल्कं तक्रेण पिबेत् ॥ ३०।३१ ॥

मूषिकाणामित्यादि।—स्विन्नमूषिकमांसेनेत्यत्र काञ्जिकेन स्विन्नं घृतेन भृष्ट-मित्याहुः ॥ ३२ ॥

चाङ्गेरीत्यादि।—चाङ्गेरीघृते चाङ्गेर्य्याः स्वरसः। कोलस्य शुष्कवदरस्य क्वाथः। अम्लं दधि दध्यम्लम्। एभिस्त्रिभिर्द्रवैर्मिलित्वा चातुर्गुण्यम्; किंवा चाङ्गेरीस्वरसः स्नेहसमः, "स्वरसे क्षीरवद्विधिः" इति वचनात्; दधिकोलरसौ तु मिलित्वा त्रिगुणौ; पूर्वेणैव व्यवहारः। नागरक्षारौ कल्कौ ॥ ३३ ॥

क्षीरे इत्यादि।—अत्र मूषिकागुडकमेकं ग्राह्यं, पञ्चमूलस्य मिलित्वा प्रस्थ एकः, क्षीरस्यापि प्रस्थ एकः, तोयस्य प्रस्थद्वयम्। एवं निःक्वाथ्य शेषः क्षीरप्रस्थः स्थाप्यः, अनेन तैलकुडवः साध्य इति कश्चित्। अन्ये तु "द्रव्यादष्टगुणं क्षीरं क्षीरात् तोयं चतुर्गुणम्। क्षीरावशेषः" इत्यादिपरिभाषया क्षीरं साधयित्वा तेन चतुर्गुणेन तैलकुडवः साध्य इत्याहुः। चक्रस्त्वाह, अन्त्रवर्जितामिति ग्रहणयोग्यतोपदर्शनार्थम्; तेन मूषिकमांसस्य पलान्यष्टौ, पञ्चमूलस्यापि पलान्यष्टौ, क्षीरस्य प्रस्थः, तोयस्य प्रस्थत्रयं, शेषः क्षीरप्रस्थः, तेन तैलकुडवः साध्यः; एवमन्यत्रापि पक्तेन क्षीरेण स्नेहसाधने एषैव व्यवस्थेति। व्यवहारः प्रायः प्रथमव्याख्ययैव। वातघ्नौषधं भद्रदार्वादिगणः, स च कल्कः ॥ ३४ ॥

परिवर्त्तिकाचिकित्सा।—

स्वेदोपनाहौ परिवर्त्तिकायां
कृत्वा समभ्यज्य घृतेन पश्चात्।
प्रवेशयेच्चर्म शनैः प्रविष्टे
मांसैः सुखोष्णैरुपनाहयेच्च॥ ३५॥

अवपाटिकाचिकित्सा।—

स्नेहस्वेदैस्तथैवैनां चिकित्सेदवपाटिकाम्॥ ३६॥

निरुद्धप्रकशचिकित्सा।—

निरुद्धप्रकशे नाडीं द्विमुखीं कनकादिजाम्।
क्षिप्त्वाऽऽज्याक्तां चुल्लक्यादि-स्नेहेन परिषिञ्चयेत्॥ ३७॥
तैलेन वा वचादारु-कल्कैः सिद्धेन च त्र्यहात्।
पुनः स्थूलतरा नाडी देया स्रोतोविशुद्धये॥ ३८॥
शस्त्रेण सेवनीं त्यक्त्वा भित्त्वा व्रणवदाचरेत्।
स्निग्धश्च भोजनं— ॥ ३९॥

सन्निरुद्धगुदचिकित्सा।—

—रुद्ध-गुदेऽप्येष क्रियाक्रमः॥ ४०॥

---

स्वेदेत्यादि।—परिवर्त्तिकायां सर्पिषा अभ्यज्य अनन्तरं वातघ्नैर्मांसादिभिः स्वेदं कृत्वा शाल्वणादिना उपनाहं कृत्वा च परिवर्त्तितं चर्म यथोक्तस्वेदादिना मृदुभूतं प्रवेशयेत् सम्यगानयेदित्यर्थः, प्रविष्टे च सुखोष्णैर्मांसैरुपनाहयेत्; सुश्रुतेऽप्येवमेवोक्तम्॥ ३५॥

स्नेहेत्यादि।—तथैवैनामित्यनेनावपाटिकायामप्युपनाहं चर्मानयनञ्चातिदिशति॥ ३६॥

निरुद्धेत्यादि।—कनकादीत्यादिना त्रपुशस्त्रप्रभृतीनां ग्रहणम्। चुल्लकी 'शुशुक' इति ख्यातो जलजन्तुः। आदिशब्दात् वराहादयः। त्र्यहादित्यत्र वीप्सा बोध्या, तेन त्र्यहात् त्र्यहात् प्रागुक्तनाड्यपेक्षया पुनः पुनः स्थूलतरा नाडी देया। स्रोतोविशुद्धये इत्यत्र "स्रोतोविवृद्धये" इति पाठः; यदाह सुश्रुतः,—"एवमस्य स्रोतोद्वारं वर्द्धयेत्" इति। व्रणवदिति—सद्योव्रणवत्। स्निग्धश्च भोजनमिति आचरेदित्यनेन सम्बध्यते; सुश्रुतेऽपि—निरुद्धप्रकशे स्निग्धचाहारमुपसेवते इत्युक्तम्॥ ३७—३९॥

चर्मकील-जतुमणि-मषक-तिलकालकचिकित्सा।—

चर्मकीलं जतुमणिं मषकांस्तिलकालकान्।
उद्धृत्य शस्त्रेण दहेत् क्षाराग्निभ्यामशेषतः॥ ४१॥

मषकचिकित्सा।—

कवुनालात्तचूर्णेन घर्षो मषकनाशनः।
निर्मोकभस्मघर्षाद्वा मषः शान्तिं व्रजेत् सदा॥ ४२॥

युवानपिड़का-न्यच्छ-नीलिका-व्यङ्ग-शर्कराचिकित्सा।—

युवानपिड़कान्यच्छ-नीलिकाव्यङ्गशर्कराः।
शिराव्यधैः प्रलेपैश्च जयेदभ्यञ्जनैस्तथा॥ ४३॥

युवानपिड़काचिकित्सा।—

लोध्रधान्यवचालेपस्तारुण्यपिड़कापहः।
तद्वद्गोरोचनायुक्तं मरिचं मुखलेपनात्॥ ४४॥
सिद्धार्थकवचालोध्र-सैन्धवैश्च प्रलेपनम्।
वमनञ्च निहन्त्याशु पिड़कां यौवनोद्भवाम्॥ ४५॥

व्यङ्गचिकित्सा।—

व्यङ्गेषु चार्जुनत्वग्वा मञ्जिष्ठा वा समाक्षिका।
लेपः सनवनीता वा श्वेताऽश्वखुरजा मसी॥ ४६॥

---

कङ्गुदे इत्यादि।—एष क्रियाक्रम इति—निरुद्धप्रकशोक्तविधिः॥ ४०॥

चर्मकीलमित्यादि।—जतुमणिः जड़ुः। क्षाराग्निभ्यामिति अनवगाढ़े क्षारेण, अवगाढ़े त्वग्निना॥ ४१॥

कवुनालेत्यादि।—कवुः एरण्डः, तस्य नालेन आत्तं गृहीतं यच्चूर्णमिति—शङ्खचूर्णं, तेन घर्षो घर्षणमित्यर्थः। निर्मोक इति—कृष्णसर्पनिर्मोकः॥ ४२॥

युवानपिड़केत्यादि।—यूनामाननपिड़का युवानपिड़का, "वर्णागमः" इत्यादि-निरुक्तविधिना वर्णलोपः॥ ४३॥

लोध्रेत्यादि।—धान्यं धानियकम्॥ ४४।४५॥

व्यङ्गेष्वित्यादि वाग्भटस्य।—समाक्षिकेति अर्जुनत्वक् वा इत्यत्रापि सम्बध्यते। अर्जुनत्वक् वचनसम्बन्धादेव स्वयं शुष्का ग्राह्या। श्वेता श्वेतापराजिता। अश्वखुरः अश्वस्य घोटकस्य खुरः, तयोर्मसी भस्म; अन्ये तु धवलघोटकखुरमसीत्याहुः॥४६॥

रक्तचन्दनमञ्जिष्ठा-कुष्ठलोध्रप्रियङ्गवः ।
वटाङ्कुरमसूराश्च व्यङ्गघ्ना मुखकान्तिदाः ॥ ४७ ॥
व्यङ्गानां लेपनं शस्तं रुधिरेण शशस्य च ॥ ४८ ॥
केवलान् पयसा पिष्ट्वा तीक्ष्णान् शाल्मलिकण्टकान् ।
आलिप्तं त्र्यहमेतेन भवेत् पद्मोपमं मुखम् ॥ ४९ ॥
मसूरैः सर्पिषा पिष्टैर्लिप्तमास्यं पयोऽन्वितैः ।
सप्तरात्राद्भवेत् वक्त्रं पुण्डरीकदलोपमम् ॥ ५० ॥

व्यङ्ग-युवानपिड़का-तिलकालकचिकित्सा ।—

मातुलुङ्गजटा सर्पिः शिला गोशकृतो रसः ।
मुखकान्तिकरो लेपः पिड़कातिलकालजित् ॥ ५१ ॥

व्यङ्गचिकित्सा ।—

नवनीतगुड़क्षौद्र-कोलमज्जप्रलेपनम् ।
व्यङ्गजित् वरुणत्वग्वा च्छागीक्षीरप्रपेषिता ॥ ५२ ॥

नीलिका-व्यङ्गचिकित्सा ।—

जातीफलकल्कलेपो नीलीव्यङ्गादिनाशनः ।
सायञ्च कटुतैलेनाभ्यङ्गो वक्त्रप्रसादनः ॥ ५३ ॥

व्यङ्गचिकित्सा ।—

कालीयकोत्पलामयदधिसरबदरास्थिमध्यफलिनीभिः ।

---

रक्तचन्देत्यादि ।—अत्र बहुवचनात् व्यस्तसमस्तमिति वदन्ति । वटाङ्कुराः वटस्य अभिनवपत्रमुकुलाः ॥ ४७।४८ ॥

केवलानित्यादि ।—तीक्ष्णानिति—अभिनवान् ॥ ४९ ॥

मसूरैरित्यादि ।—अत्र सर्पिषेति विशेषणे तृतीया । पिष्टैरित्यर्थात् पयसैव पिष्टैरित्यर्थः । पिष्टैरित्यत्र भृष्टैरित्यपि केचित् पठन्ति ; वाग्भटेऽप्युक्तं—"क्षीरपिष्टा घृत-क्षौद्रयुक्ता वा भृष्टनिस्तुषाः । मसूराः" ( उ० ३२अ० ) इति ॥ ५० ॥

मातुलुङ्गेत्यादि ।—मातुलुङ्गस्य जटा मूलम् । शिला मनःशिला ॥ ५१ ॥

नवनीतेत्यादि ।—कोलमज्जा बदरमज्जा । वरुणत्वक् वेति द्वितीययोगः ॥ ५२।५३ ॥

लिप्तं भवति च वदनं शशिप्रभं सप्तरात्रेण ॥ ५४ ॥
तुषरहितमसृणयवचूर्णसयष्टीमधुकलोध्रलेपेन ।
भवति मुखं परिनिर्जितचामीकरचारुसौभाग्यम् ॥ ५५ ॥
रक्षोघ्नशर्वरीद्वयमञ्जिष्ठागैरिकाज्यवस्तपयः ।
सिद्धेन लिप्तमाननमुद्यद्विधुबिम्बवत् विभाति ॥ ५६ ॥
परिणतदधिशरपुङ्खैः कुवलयदलकुष्ठचन्दनोशीरैः ।
मुखकमलकान्तिकारी भ्रुकुटीतिलकालकान् जयति ॥ ५७ ॥

हरिद्राद्यं तैलम् ।—

हरिद्राद्वययष्ट्याह्व-कालीयककुचन्दनैः ।
प्रपौण्डरीकमञ्जिष्ठा-पद्मपद्मककुङ्कुमैः ॥ ५८ ॥
कपित्थतिन्दुकप्लक्ष-वटपत्रैः पयोऽन्वितैः ।
लेपयेत् कल्कितैरेभिस्तैलं वाऽभ्यञ्जनं चरेत् ॥ ५९ ॥
पिप्लवं नीलिकाव्यङ्गांस्तिलकान् मुखदूषिकान् ।
नित्यसेवी जयेत् क्षिप्रं मुखं कुर्य्यान्मनोरमम् ॥ ६० ॥

कनक-तैलम् ।—

मधुकस्य कषायेण तैलस्य कुडवं पचेत् ।
कल्कैः प्रियङ्गुमञ्जिष्ठा-चन्दनोत्पलकेशरैः ॥ ६१ ॥
कनकं नाम तत् तैलं मुखकान्तिकरं परम् ।
अभीरुनीलिकाव्यङ्ग-शोधनं परमर्च्चितम् ॥ ६२ ॥

---

कालीयकेत्यादि ।—उत्पलं नीलोत्पलम् । आमयः कुष्ठम् । बदरास्थिमध्यं बदरास्थिमज्जा । फलिनी प्रियङ्गुः ॥ ५४।५५ ॥

रक्षोघ्नेत्यादि ।—रक्षोघ्नः श्वेतसर्षपः । आज्यं घृतम् । वस्तपयःसिद्धेनेति समासपदं, रक्षोघ्नादिसिद्धेन लेपेनेत्यर्थः ॥ ५६ ॥

परिणतेत्यादि ।—परिणतदधिप्रभृतिभिर्लेपः । भ्रुकुटी ललाटे बलीरूपा ॥ ५७ ॥

हरिद्रेत्यादि ।—कुचन्दनं चन्दनभेदः । पद्मं पद्मपुष्पम् । पत्रशब्दः कपित्थादिभिः प्रत्येकं सम्बध्यते । लेपपक्षे पयसैव पेषणम् । तैलपाकपक्षे हरिद्रादीनां कल्कः, क्षीरन्तु चतुर्गुणम् । पिप्लवमिति—जटुलम् ॥ ५८—६० ॥

मञ्जिष्ठाद्यं तैलम् ।—

मञ्जिष्ठा मधुकं लाक्षा मातुलुङ्गं सयष्टिकम् ।
कर्षप्रमाणैरेतैस्तु तैलस्य कुडवं तथा ॥ ६३ ॥
आजं पयस्तद्द्विगुणं शनैर्मृद्वग्निना पचेत् ।
नीलिकापिड़काव्यङ्गानभ्यङ्गादेव नाशयेत् ॥ ६४ ॥
मुखं प्रसन्नोपचितं वलीपलितवर्जितम् ।
सप्तरात्रप्रयोगेण भवेत् कनकसन्निभम् ॥ ६५ ॥

कुङ्कुमाद्यं तैलम् ।—

कुङ्कुमं चन्दनं लाक्षा मञ्जिष्ठा मधुयष्टिका ।
कालीयकमुशीरञ्च पद्मकं नीलमुत्पलम् ॥६६॥
न्यग्रोधपादाः प्लक्षस्य शुङ्गाः पद्मस्य केशरम् ।
द्विपञ्चमूलसहितैः कषायैः पलिकैः पृथक् ॥६७॥
जलाढ़कं विपक्तव्यं पादशेषमथोद्धरेत् ।
मञ्जिष्ठा मधुकं लाक्षा पत्तङ्गं मधुयष्टिका ॥ ६८ ॥
कर्षप्रमाणैरेतैस्तु तैलस्य कुड़वं पचेत् ।
अजाक्षीरं तद्द्विगुणं शनैर्मृद्वग्निना पचेत् ॥ ६९ ॥
सम्यक् पक्वं परं ह्येतन्मुखवर्णप्रसादनम् ।
नीलिकापिड़काव्यङ्गानभ्यङ्गादेव नाशयेत् ॥ ७० ॥
सप्तरात्रप्रयोगेण भवेत् काञ्चनसन्निभम् ।
कुङ्कुमाद्यमिदं तैलमश्विभ्यां निर्मितं पुरा ॥ ७१ ॥

---

मधुकस्येत्यादि ।—केशरं नागकेशरम् । अभीरु जटुलम् ॥ ६१।६२ ॥

मञ्जिष्ठेत्यादि ।—अत्र मातुलुङ्गस्य मूलम् । मधुकं सयष्टिकम् इति पदद्वयोपादानात् मलकस्थलजभेदेन यष्टिमधुद्वयमिह ग्रहणमिति ज्ञेयम् ॥ ६३—६५ ॥

कुङ्कुमित्यादि ।—न्यग्रोधस्य वटस्य पादाः शुङ्गाः । प्लक्षः पाकड़ी । द्विपञ्चमूलसहितैरत्र "पद्मकिञ्जल्कसहितैः" इति केचित् पठन्ति ; वाग्भटेऽपि दशमूलं विना योगोऽयं दृश्यते, एवं चन्द्रटेऽपि, तेनापि योगान्तरलम् । कषायैरिति

पञ्चाङ्गकुङ्कुमाद्यं तैलम्।—

कुङ्कुमं चन्दनं लाचा मञ्जिष्ठा मधुयष्टिका।
कर्षप्रमाणैरेतैस्तु तैलस्य कुड़वं पचेत्॥ ७२॥
अजाचीरं तद्द्विगुणं शनैर्मृद्वग्निना पचेत्।
सम्यक् पक्वं परं ह्येतन्मुखकान्तिप्रसादनम्॥ ७३॥
नीलिकापिड़काव्यङ्गानभ्यङ्गादेव नाशयेत्।
सप्तरात्रप्रयोगेण भवेत् काञ्चनसन्निभम्॥
कुङ्कुमाद्यमिदं तैलमश्विभ्यां निर्मितं पुरा॥ ७४॥

सप्तविंशाङ्ग-कुङ्कुमाद्यं तैलम्।—

कुङ्कुमं किंशुकं लाचा मञ्जिष्ठा रक्तचन्दनम्।
कालीयकं पद्मकञ्च मातुलुङ्गं सकेशरम्॥ ७५॥
कुसुम्भं मधुयष्टीकं फलिनी मदयन्तिका।
निशे द्वे रोचनापद्ममुत्पलञ्च मनःशिला॥ ७६॥
काकोल्यादिसमायुक्तैरेतैरचसमैर्भिषक्।
लाचारसपयोभ्याञ्च तैलप्रस्थं विपाचयेत्॥ ७७॥
कुङ्कुमाद्यमिदं तैलञ्चाभ्यङ्गात् काञ्चनोपमम्।
करोति वदनं सम्यक् पुष्टिलावण्यकान्तिदम्॥
सौभाग्यलक्ष्मीजननं वशीकरणमुत्तमम्॥ ७८॥

वर्णकं घृतम्।—

मधुकं चन्दनं कङ्गुः सर्षपं पद्मकं तथा।

—कषायसाधनैः कुङ्कुमरक्तचन्दनादिभिः, पञ्चवल्कलैरित्यन्ये। पत्तङ्गं रक्तचन्दनम्॥ ६६—७१॥

द्वितीयकुङ्कुमाद्यं तैलमाह, कुङ्कुमित्यादि।—स्पष्टम्॥ ७२—७४॥

कुङ्कुमित्यादि।—तृतीयकुङ्कुमाद्यतैले किंशुकः पलाशः, तस्य पुष्पं ग्राह्यम्। मातुलुङ्गं सकेशरमिति—मातुलुङ्गस्य मूलं केशरञ्चेत्याहुः। मदयन्ती मल्लिकाभेदः। काकोल्यादिः जीवनीयगणः, अष्टवर्ग इत्यन्ये। लाचारसपयसी मिलित्वा तैलाच्चतुर्गुणे॥ ७५—७८॥

कालेयकं हरिद्रा च लोध्रमेभिश्च कल्कितैः ॥ ७९ ॥
विपचेद्धि घृतं वैद्यस्तत् पक्वं वस्त्रगालितम् ।
पादांशं कुङ्कुमं सिक्थं क्षिप्त्वा मन्दानले पचेत् ॥ ८० ॥
तत् सिद्धं शिशिरे नीरे प्रक्षिप्याकर्षयेत् ततः ।
तदेतद्वर्णकं नाम घृतं वर्णप्रसादनम् ॥ ८१ ॥
अनेनाभ्यासलिप्तं हि वलीपलितनाशनम् ।
निष्कलङ्केन्दुबिम्बाभं स्याद्विलासवतीमुखम् ॥ ८२ ॥

अरुंषिकाचिकित्सा ।—

अरुंषिकायां रुधिरेऽवसिक्ते
शिराव्यधेनाथ जलौकसा वा ।
निम्बाम्बुसिक्ते शिरसि प्रलेपो
देयोऽश्वशकृद्रससैन्धवाभ्याम् ॥ ८३ ॥
पुराणमपि पिण्याकं पुरीषं कुक्कुटस्य वा ।
मूत्रपिष्टं प्रलेपोऽयं शीघ्रं हन्यादरुंषिकाम् ॥ ८४ ॥
अरुंषिघ्नं भृष्टकुष्ठ-चूर्णं तैलेन संयुतम् ॥ ८५ ॥

द्विहरिद्राद्यं तैलम् ।—

हरिद्राद्वयभूनिम्ब-त्रिफलाऽरिष्टचन्दनैः ।
एतत् तैलमरुंषीणां सिद्धमभ्यञ्जने हितम् ॥ ८६ ॥

---

मधुकमित्यादि ।—कङ्गुः कायीनीसंज्ञकं तृणधान्यम् । वस्त्रगालितमिति—किञ्चिज्जलसम्बन्धे सत्येव वस्त्रेण गालनीयं, ततो मिलित्वा घृतात् पादांशं कुङ्कुमं सिक्थकस्य कल्कं प्रक्षिप्य मृद्वग्निना पुनरप्यवधानेन जलक्षयपर्य्यन्तं पक्तव्यं, यथा सिक्थकदाहो न स्यात्, सिद्धे च तत् घृतपात्रं शीतलजले निक्षिप्य शीतीभूते चाकर्षयेत, तथा सति सिक्थकस्य दाहो न स्यादिति भावः ॥ ७९—८२ ॥

अरुंषिकायामित्यादि ।—निम्बाम्बु चर्द्दमतो निम्बक्वाथः ॥ ८३ ॥

पुराणमित्यादि ।—योगद्वयम्, अत एव वा-शब्दः । पिण्याकः तिलखली, एकयोगताऽप्यायुर्वेदसारसंवादात् ॥ ८४ ॥

दारुणकचिकित्सा।—

दारुणे तु शिरां विध्येत् स्निग्धां स्विन्नां ललाटजाम्।
अवपीड़शिरोवस्तीनभ्यङ्गांश्चावचारयेत्॥ ८७॥
कोद्रवाणां तृणक्षार-पानीयं परिधावने॥ ८८॥
कार्य्यो दारुणके मूर्द्ध्नि प्रलेपो मधुसंयुतः।
पियालबीजमधुक-कुष्ठमिश्रैः ससैन्धवैः॥ ८९॥
काञ्जिकस्थास्त्रिसप्ताहं माषा दारुणकापहाः॥ ९०॥
सह नीलोत्पलकेशर-यष्टीमधुकतिलैः सदृशामलकम्।
चिरजातमपि च शीर्षे दारुणरोगं शमं नयति॥ ९१॥

त्रिफलाद्यं तैलम्।—

त्रिफलाया रजो मांसी-मार्कवोत्पलशारिवैः।
ससैन्धवैः पचेत् तैलमभ्यङ्गादुक्थिकां जयेत्॥ ९२॥

चित्रकाद्यं तैलम्।—

चित्रकं दन्तिमूलञ्च कोषातकीसमन्वितम्।
कल्कं पिष्ट्वा पचेत् तैलं केशदद्रुविनाशनम्॥ ९३॥

गुञ्जाद्यं तैलम्।—

गुञ्जाफलैः शृतं तैलं भृङ्गराजरसेन तु।

---

अरुंषिघ्नमित्यादि।—भृष्टकुष्ठचूर्णमिति—कपाले कुष्ठं भृष्ट्वा दग्ध्वा चूर्णी कर्त्तव्यमित्यर्थः॥ ८५।८६॥

दारुणे इत्यादि।—दारुणे इति—उक्थिकायाम्। अवपीड़ः नस्यभेदः। शिरोवस्तिश्च हिमरिद्राद्यतैलेन देय इत्याहुः। पियालबीजमधुककुष्ठमिश्रैरिति—पियालबीजमधुककुष्ठानि च तानि मिश्राणि चेति विग्रहं कृत्वा समाधेयम्; मिश्रैरित्यत्र माषैरित्यपि पाठान्तरम्॥ ८७—९०॥

सहेत्यादि।—नीलोत्पलस्य केशरं किञ्जल्कः। सदृशमिति—तुल्यम्॥ ९१॥

त्रिफलाया इत्यादि।—मार्कवः भृङ्गराजः। उत्पलशारिवा अनन्तमूलम्; छान्दसत्वादुत्वः; अन्ये तु उत्पलं नीलोत्पलं, शारिवा च इत्याहुः॥ ९२॥

चित्रकमित्यादि।—कोषातकी घोषकः॥ ९३॥

कण्डूदारुणहृत् कुष्ठ-कपालव्याधिनाशनम् ॥ ९४ ॥

भृङ्गराजतैलम् ।—

भृङ्गरजस्त्रिफलोत्पलशारि-लौहपुरीषसमन्वितकारि ।
तैलमिदं पच दारुणहारि कुञ्चितकेशघनस्थिरकारि ॥ ९५ ॥

प्रपौण्डरीकाद्यं तैलम् ।—

प्रपौण्डरीकमधुक-पिप्पलीचन्दनोत्पलैः ।
कार्षिकैस्तैलकुडवः तैर्द्विरामलकीरसः ॥
साध्यः सप्रतिमर्षः स्यात् सर्वशीर्षगदापहः ॥ ९६ ॥

इन्द्रलुप्तचिकित्सा ।—

मालत्याद्यं तैलम् ।—

मालतीकरवीराग्नि-नक्तमालविपाचितम् ।
तैलमभ्यञ्जने शस्तमिन्द्रलुप्तापहं परम् ॥
इदं हि त्वरितं हन्ति दारुणं नियतं नृणाम् ॥ ९७ ॥
धात्र्याम्रमज्जलेपात् स्यात् स्थिरता स्निग्धकेशता ॥ ९८ ॥

---

गुञ्जाफलैरित्यादि ।—भृङ्गराजरसेनेति चतुर्गुणेनेत्यर्थः ॥ ९४ ॥

भृङ्गरज इत्यादि ।—भृङ्गरजः भृङ्गराजः, तस्य रसश्चतुर्गुणः, पाकार्थत्वात् । भृङ्गरजःशब्दोऽप्यस्ति, यथा—"ये मासमेकं स्वरसं पिबन्ति दिने दिने भृङ्गरजःसमुत्थम्" इति । त्रिफलादीनां कल्कः । उत्पलं नीलोत्पलम् । शारि शारिवा, अनन्तमूलम् । समन्वितकारः सहकारः, समन्वितशब्दस्य सहार्थत्वात्, अस्य च फलमध्यं ग्राह्यं, केश्यत्वात् कृष्णीकरणत्वाच्च । भृङ्गराजादिसमन्वितकारान्तं द्रव्यमस्मिन्नस्तीति इन्; तैलविशेषणमेतत् । अन्ये तु भृङ्गरज-आदि सर्वं द्रव्यं कल्कः, जलेन पाकः । उत्पलशारिवा अनन्तमूलम । भृङ्गराजादिभिः सह समन्वयं कर्तुं शीलमस्येति तैलविशेषणमिति । व्यवहारस्तु पूर्वव्याख्ययैव । कुञ्चितकेशघनस्थिरकारीति—केशस्य कुञ्चितत्व-घनत्व-स्थिरत्वकारीत्यर्थः ; कुञ्चितशब्दस्य पूर्वनिपातश्छान्दसत्वात् ॥ ९५ ॥

प्रपौण्डरीकेत्यादि ।—अत्र तैलापेक्षया द्विगुणेनामलकीरसेनैव पाकः । प्रतिमर्षः नस्यभेदः, सप्रतिमर्ष इति—प्रतिमर्षविधिना उपयुक्त इत्यर्थः ॥ ९६ ॥

मालतीत्यादि ।—मालती जाती । अग्निः चित्रकः । अत्र गोमूत्रेण पाक इति श्रीकण्ठः ॥ ९७ ॥

इन्द्रलुप्ते शिरां विद्ध्वा शिलाकाशीशतुत्थकैः।
लेपयेत् परितः कल्कैस्तैलञ्चाभ्यञ्जने हितम्॥
कुटन्नटशिखीजाती-करञ्जकरवीरजैः॥ ९९॥
अवगाढ़पदञ्चैव प्रच्छयित्वा पुनः पुनः।
गुञ्जाफलैश्चिरं लिम्पेत् केशभूमिं समन्ततः॥ १००॥
हस्तिदन्तमसीं कृत्वा मुख्यञ्चैव रसाञ्जनम्।
लोमान्यनेन जायन्ते नृणां पाणितलेष्वपि॥ १०१॥
भल्लातकबृहतीफल-गुञ्जामूलफलैश्च एकेन।
मधुसहितेन विलिप्तं सुरपतिलुप्तं शमं याति॥ १०२॥
बृहतीफलरसपिष्टं गुञ्जामूलफलञ्चेन्द्रलुप्तस्य।
कनकनिघृष्टस्य सतो दातव्यं प्रच्छितस्य सदा॥ १०३॥

---

धात्रीत्यादि।—अत्र मज्जशब्देनास्थ्नैव सम्बन्धः, आम्रमज्जा तु बालास्थि॥ ९८॥

इन्द्रलुप्ते इत्यादि।—शिरामिति—इन्द्रलुप्तसन्निहितां शिराम्। तैलञ्चाभ्यञ्जने हितमिति—कुटन्नटादिकरवीरान्तैः कल्कैः सिद्धं तैलमित्यर्थः। कुटन्नटमिति—कैवर्त्तमुस्तकम्। शिखी चित्रकः। अन्ये तु कुटन्नटमिति छेदः, विच्छेदपाठात् कुटन्नटं विनाऽपि चित्रकादिद्रव्यचतुष्टयेन तैलसाधनं सूचयन्ति, व्याख्यानयन्ति च। शिखीति दीर्घपाठश्छान्दसत्वात् समर्थनीयः। अन्ये तु कुटन्नटादिभिरपि लेप एव, तैलन्तु पूर्वोक्तमालतीकरवीरादिसिद्धमेव बोध्यमित्याहुः॥ ९९॥

अवगाढ़ेत्यादि।—अवगाढ़पदमिति—गम्भीरपदं यथा स्यात् तथा सूचीनख-रञ्जन्यादिभिः प्रच्छयित्वा रक्तगुञ्जाफलैः पुनः पुनर्लिम्पेत्॥ १००॥

हस्तिदन्तेत्यादि।—मुख्यमिति—अकृत्रिमं, तेन दार्वीक्वाथोद्भवरसाञ्जननिषेधः। अत्र जलेन पेषणं बोध्यं, द्रव्यान्तरस्यानुक्तेः; अत एव वक्ष्यमाणेन काशीचीर-रसाञ्जनेत्यादिना अस्य न पौनरुक्त्यम्॥ १०१॥

भल्लातकेत्यादि।—भल्लातकबृहतीफलयोः रसः; उक्तं हि वाग्भटे—"सक्षौद्र-क्षुद्रवार्त्ताकु-स्वरसेन रसेन वा। धुस्तूरस्य च पत्राणां भल्लातकरसेन वा॥" (उ० २४ अ०) इति॥ १०२॥

बृहतीत्यादि।—अत्र पक्वबृहतीफलरसेन पिष्टं गुञ्जाया मूलं फलं वा। कनक-

घृष्टस्य कर्कशैः पत्रैरिन्द्रलुप्तस्य गुण्ठनम्।
चूर्णितैर्मरिचैः कार्यमिन्द्रलुप्तविनाशनम् ॥ १०४ ॥
छागक्षीररसाञ्जनपुटदग्धगजेन्द्रदन्तमसिलिप्ताः।
जायन्ते सप्तरात्रात् खल्वग्रामपि कुञ्चिताश्चिकुराः ॥१०५॥
मधुकेन्दीवरमूर्वातिलाज्यगोक्षीरभृङ्गलेपेन।
अचिराद्भवन्ति घनकेशा दृढमूलायतानृजवः ॥ १०६ ॥

स्नुह्याद्यं तैलम्।—

स्नुहीपयः पयोऽर्कस्य मार्कवो लाङ्गलीविषम्।
मूत्रमाजं मगोमूत्रं रक्तिका सेन्द्रवारुणी ॥ १०७ ॥
सिद्धार्थं तीक्ष्णतैलञ्च गर्भं दत्त्वा विपाचितम्।
वह्निना मृदुना पक्वं तैलं खालित्यनाशनम् ॥ १०८ ॥
कूर्मपृष्ठसमानाऽपि रूक्षा या रोमतस्करी।
दिग्धा साऽनेन जायेत ऋक्षशारीव लोमशी ॥ १०९ ॥

आदित्यपाक-गुडूची तैलम्।—

वटावरोहकेशिन्योश्चूर्णेनादित्यपाचितम्।

---

निघृष्टस्येति—कनकं सुवर्णं, धुस्तूरस्य मूलं वा। प्रच्छितस्येति—नखरञ्जन्यादिना विलिखितस्य ॥ १०३ ॥

घृष्टस्येत्यादि।—गुण्ठनमिति—अवचूर्णनम् ॥ १०४।१०५ ॥

मधुकेत्यादि।—इन्दीवरं नीलोत्पलम्। भृङ्गः भृङ्गराजः। अनृजवः कुटिलाः ॥ १०६ ॥

स्नुहीत्यादि।—मार्कवः भृङ्गराजः। लाङ्गलीविषं विषलाङ्गलियामूलाख्यं विषं, किंवा लाङ्गली च विषञ्चेति द्रव्यद्वयम्। रक्तिका गुञ्जिका, तस्या मूलं, फलमित्यन्ये। इन्द्रवारुणी गोरक्षकर्कटी। सिद्धार्थः श्वेतसर्षपः। तीक्ष्णतैलं सार्षपतैलं, ज्योतिष्मतीमूलं फलञ्चेत्यन्ये। सिद्धार्थतीक्ष्णतैलमिति समस्तपाठपक्षे—तीक्ष्णमिति तैलविशेषणम्, अभर्जितस्य सर्षपस्य तैलं ज्ञेयम्। अजामूत्रगोमूत्रे मिलित्वा चतुर्गुणे, शेषः कल्कः। दिग्धा इति—म्रक्षिता। ऋक्षस्य भल्लूकस्य, शारी शाविका इव ॥ १०७—१०९ ॥

गुड़ूचीस्वरसे तैलञ्चाभ्यङ्गात् केशरोपणम् ॥ ११० ॥

चन्दनाद्यं तैलम्।—

चन्दनं मधुकं मूर्वा त्रिफला नीलमुत्पलम्।
कान्ता वटावरोहश्च गुड़ूची बिसमेव च ॥ १११ ॥
लौहचूर्णं तथा केशी शारिवे द्वे तथैव च।
मार्कवस्वरसेनैव तैलं मृद्वग्निना पचेत् ॥ ११२ ॥
शिरस्युत्पतिताः केशा जायन्ते घनकुञ्चिताः।
दृढ़मूलाश्च स्निग्धाश्च तथा भ्रमरसन्निभाः ॥
नस्येनाकालपलितं निहन्यात् तैलमुत्तमम् ॥ ११३ ॥

यष्टिमध्वाद्यं तैलम्।—

तैलं सयष्टिमधुकैः क्षीरे धात्रीफलैः शृतम्।
नस्ये दत्तं जनयति केशान् श्मश्रूणि चाप्यथ ॥ ११४ ॥

पलितचिकित्सा।—

त्रिफला नीलिनीपत्रं लौहभृङ्गरजः समम्।
अविमूत्रेण संयुक्तं कृष्णीकरणमुत्तमम् ॥ ११५ ॥
त्रिफलाचूर्णसंयुक्तं लौहचूर्णं विनिःक्षिपेत्।
ईषत्पक्वे नारिकेले भृङ्गराजरसान्विते ॥ ११६ ॥
मासमेकन्तु निःक्षिप्य सम्यक् गर्भाद् समुद्धरेत्।

---

वटावरोहेत्यादि।—केशिनी मूलकेशी मांसी वा, एतयोश्चूर्णं तैलात् पादिकं कल्कत्वात्; गुड़ूचीरसस्तु तैलसमः आदित्यपाकत्वात् ॥ ११० ॥

चन्दनमित्यादि।—कान्ता प्रियङ्गुः। बिसं मृणालम्। केशी मूलकेशी। मार्कवरसश्चतुर्गुणः ॥ १११—११३ ॥

तैलमित्यादि।—अत्र क्षीरमेव चतुर्गुणं द्रवान्तराभावात् ॥ ११४ ॥

त्रिफलेत्यादि।—नीलिनी नेलीति प्रसिद्धा लता, तस्याः पत्रम्। लौहभृङ्गरजोश्चूर्णमित्यर्थः। अविमूत्रेण संयुक्तमिति—भावितम्। शिरोलेपोऽयं मध्ये द्वौ त्रीन् वा धार्य्यः; एवमन्यत्रापि शिरोलेपनधारणम् ॥ ११५ ॥

ततः शिरो मुण्डयित्वा लेपं दद्याद्विचक्षणः ॥ ११७ ॥
...ध्य कदलीपत्रैर्मोचयेत् सप्तमे दिने ।
क्षालयेत् त्रिफलाक्वाथैः क्षीरमांसरसाशिनः ॥
कपालरञ्जनञ्चैतत् कृष्णीकरणमुत्तमम् ॥ ११८ ॥
उत्पलं पयसा सार्द्धं मासं भूमौ निधापयेत् ।
केशानां कृष्णीकरणं स्नेहनञ्च विधीयते ॥ ११९ ॥
भृङ्गपुष्पं जवापुष्पं मेषीदुग्धप्रपेषितम् ।
तेनैवालोड़ितं लौह-पात्रस्थं भूम्यधःकृतम् ॥ १२० ॥
सप्ताहादुद्धृतं पश्चात् भृङ्गराजरसेन तु ।
आलोड्याभ्यज्य च शिरो वेष्टयित्वा वसेन्निशाम् ॥
प्रातस्तु क्षालनं कार्य्यमेवं स्यान्मूर्द्धरञ्जनम् ॥ १२१ ॥
एवं सिन्दूरबालाम्र-शङ्खभृङ्गरसैः क्रिया ॥ १२२ ॥
नरदुग्धशङ्खचूर्णं काञ्जिकसिक्तं हि सीसकं घृष्ट्वा ।
लेपात् कचमकेदलावनद्धं शुभ्रं करोति नीलतरम् ॥१२३॥

---

त्रिफलाचूर्णेत्यादि ।—गर्भादिति—नारिकेलोदरात् । "गर्त्तात्" इति च पाठे—स एवार्थः ॥ ११६—११८ ॥

उत्पलमित्यादि ।—उत्पलं नीलोत्पलम् । मासं भूमौ निधापयेदिति—लौहपात्रे कृत्वा भूम्यधः स्थापयेदित्यर्थः ॥ ११९ ॥

भृङ्गपुष्पमित्यादि ।—अभ्यज्येति—भृङ्गराजरसालोड़ितेन भृङ्गराजपुष्पादिना मर्दयित्वेत्यर्थः । वेष्टयित्वा इति कदलीपत्रेणेति शिवः । शिरःप्रक्षालनञ्च त्रिफलाक्वाथेनेति वदन्ति ॥ १२०।१२१ ॥

एवमित्यादि ।—"एवम्" इत्यनेन सिन्दूरादिष्वपि पूर्ववन्मेषीदुग्धपेषणादिकं अतिदिशति । बालाम्रं बालाम्रबीजम् । शङ्खः शङ्खनाभिः । भृङ्गरसैरिति—भृङ्गराज... ...पि आलोड़नार्थमेव ; एतच्च यद्यपि एवमित्यतिदेशेनैव लभ्यते तथाऽपि स्पष्टार्थमुक्तम् ॥ १२२ ॥

नरेत्यादि ।—अत्र किञ्चित् पारदं गृहीत्वा आवर्त्तमाने सीसके प्रक्षिपेत्,

लौहमलामलकल्कैः सजवाकुसुमैर्नरः सदा स्नायी।
पलितानीह न पश्यति गङ्गास्नायीव नरकाणि॥ १२४॥

भावित-निम्बतैलम्।—

निम्बस्य वीजानि हि भावितानि
भृङ्गस्य तोयेन तथाऽसनस्य।
तैलन्तु तेषां विनिहन्ति नस्यात्
दुग्धान्नभोक्तुः पलितं समूलम्॥ १२५॥

अभावित-निम्बतैलम्।—

निम्बस्य तैलं प्रकृतिस्थमेव
नस्यो निषिक्तं विधिना यथावत्।
मासेन गोक्षीरभुजो नरस्य
जराग्रभूतं पलितं निहन्ति॥ १२६॥

मधुकतैलम्।—

क्षीरात् समार्कवरसाद्द्विप्रस्थे मधुकात् पले।
तैलस्य कुड़वं पक्वं तन्नस्यं पलितापहम्॥ १२७॥

महानील-तैलम्।—

आदित्यवल्ल्या मूलानि कृष्णसैरीयकस्य च।

---

ततस्तेन सह एकीभूतं सीसकं घृष्ट्वा शिरसि लेपो देय इत्युपदिशन्ति वृद्धाः। अर्कदलावनद्धमिति—अर्कपत्रेण पिधाय बद्धमित्यर्थः॥ १२३॥

लौहमलेत्यादि।—आमलं धात्रीफलम्। जवाकुसुमम् ओड्रपुष्पम्॥ १२४॥

निम्बस्येत्यादि।—असनः पीतशालः। भावना च प्रत्येकं सप्ताहम्॥ १२५॥

निम्बस्य तैलमित्यादि।—निम्बस्य तैलं निम्बवीजस्य तैलम्। प्रकृतिस्थमेवेति—भृङ्गराजरसादिभावनारहितम्। विधिनेति—नस्योक्तविधिना। जराग्रभूतमिति—जरागमनसूचकम्॥ १२६॥

क्षीरादित्यादि।—क्षीरभृङ्गराजरसयोर्मिलित्वा प्रस्थद्वयं, निर्देशस्य मानप्रधानत्वात्। मधुकात् पले इति सप्तम्येकवचनं, न तु प्रथमाया द्विवचनं, अनुकार्यसंवादात्॥ १२७॥

# अथ मुखरोग-चिकित्सा ।

## ओष्ठरोग-चिकित्सा ।

वातजे क्रियासूत्रम् ।—

ओष्ठप्रकोपे वातोत्थे शाल्वणेनोपनाहनम् ।
मस्तिष्के चैव नस्ये च तैलं वातहरैः शृतम् ॥
स्वेदोऽभ्यङ्गः स्नेहपानं रसायनमिहेष्यते ॥ १ ॥

वातजे श्रीवेष्टकादिप्रतिसारणम् ।—

श्रीवेष्टकं सर्जरसं गुग्गुलुं सुरदारु च ।
यष्टीमधुकचूर्णञ्च विदध्यात् प्रतिसारणम् ॥ २ ॥

पित्तजे क्रियासूत्रम् ।—

वेधं शिराणां वमनं विरेकं
तिक्तस्य पानं रसभोजनञ्च ।
शीतान् प्रलेपान् परिषेचनञ्च
पित्तोपसृष्टेष्वधरेषु कुर्यात् ॥ ३ ॥

पित्तरक्ताभिघातजे जलौकाप्रयोगाद्युपदेशः ।—

पित्तरक्ताभिघातोत्थान् जलौकाभिरुपाचरेत् ।
पित्तविद्रधिवच्चापि क्रियां कुर्य्यादशेषतः ॥ ४ ॥

---

चक्षुरोगास्तु चतुश्चत्वारिंशत्, मुखरोगास्तु पञ्चषष्टिः, अतो रोगगणत्वसामान्यात् चक्षुरोगचिकित्सितप्रसङ्गान्मुखरोगचिकित्सितमुच्यते, ओष्ठेत्यादि सुश्रुतस्य।—मस्तिष्के चैवेति—मस्तिष्कः शिरोवस्तिः स्नेहाक्तपिचुधारणं वा। वातहरैरिति—भद्रदार्वादिभिः। रसायनमिहेष्यते इति—रसायनं च्यवनप्राशादि ॥ १ ॥

श्रीवेष्टकमित्यादि सुश्रुतस्य।—श्रीवेष्टकं नवनीतखोटी। प्रतिसारणं घर्षणम्। वाग्भटे तु—श्रीवेष्टक-स्थाने "मधूच्छिष्टं" (उ० २२ अ०) पठ्यते ॥ २ ॥

वेधमित्यादि।—शिरा च ओष्ठसमीपगता बोध्या। तिक्तस्येत्यत्र सर्पिष इति शेषः ॥ ३ ॥

पित्तेत्यादि सुश्रुतस्य।—पित्तोत्थं रक्तोत्थमभिघातजञ्चेत्यर्थः। यद्यपि

कफजे क्रियासूत्रम् ।—

शिरोविरेचनं धूमः स्वेदः कवड़धारणम् ।
हृते रक्ते प्रयोक्तव्यमोष्ठकोपे कफात्मके ॥ ५ ॥

कफजे त्रिकट्वादिप्रतिसारणम् ।—

त्रिकटु स्वर्जिकाक्षारः क्षारश्च यावशूकजः ।
क्षौद्रयुक्तं विधातव्यमेतच्च प्रतिसारणम् ॥ ६ ॥

मेदोजे क्रियासूत्रम् ।—

मेदोजे स्वेदिते भिन्ने शोधिते ज्वलनो हितः ॥ ७ ॥

मेदोजे प्रियङ्ग्वादिप्रतिसारणं त्रिफलालेपश्च ।—

प्रियङ्गुस्त्रिफलालोध्रं सक्षौद्रं प्रतिसारणम् ।
हितञ्च त्रिफलाचूर्णं मधुयुक्तं प्रलेपनम् ॥ ८ ॥

सर्जादिलेपः ।—

सर्जरसकनकगैरिकधन्याकतैलघृतसिन्धुसंयुक्तम् ।
सिद्धं सिक्थकमधरे स्फुटितोच्चटिते व्रणं हरति ॥ ९ ॥

इत्योष्ठरोग-चिकित्सा ।

---

—"ओष्ठप्रकोपे वर्ज्याः स्युर्मांसरक्तादिदोषजाः" ( सु० चि० २२ अ० ) इत्युक्तं, तथाऽप्यनातङ्कहेतुतत्र चिकित्सेयम् इत्याहुः ॥ ४ ॥

शिर इत्यादि सुश्रुतस्य ।—धूमोऽत्र वैरेचनिकः, कफहरणयोग्यत्वात्, एवं कवड़धारणमपि कफहरद्रव्यकृतम् ; वाग्भटेऽप्युक्तं—"धूमनावनगण्डूषाः प्रयोज्याश्च कफच्छिदः" ( उ० २२ अ० ) इति ॥ ५।६ ॥

मेदोजे इत्यादि सुश्रुतस्य ।—शोधिते इति—मेदोहरणेन विशुद्धे । ज्वलन इति—अग्निकर्म ॥ ७।८ ॥

सर्जेत्यादि ।—कनकगैरिकम् उत्कृष्टस्वर्णगैरिकमित्यर्थः । एतच्च सर्जरसादिचूर्णं सिक्थकान्तं खोलके किञ्चिदग्नावुष्णीकृत्य प्रलेपयोग्यं पक्त्वा अवतार्य्य अधरे धारणीयम् ॥ ९ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायाम् ओष्ठरोग-चिकित्सा विवृतिः ।

# अथ दन्तमूलरोग-चिकित्सा।

शीतादे नागरादिगण्डूषः।—

शीतादे हृतरक्ते तु तोये नागरसर्षपान्।
निःक्वाथ्य त्रिफलाञ्चापि कुर्य्याद्गण्डूषधारणम्॥ १ ॥

शीतादे प्रियङ्ग्वादिलेपः।—

प्रियङ्गवश्च मुस्ता च त्रिफला च प्रलेपनम्॥ २ ॥

रक्तस्रावादौ कुष्ठादिचूर्णम्।—

कुष्ठं धात्री लोध्रमब्दं समङ्गा
पाठा तिक्ता तेजनी पीतिका च।
चूर्णं शस्तं घर्षणं तद्द्विजानां
रक्तस्रावं हन्ति कण्डूं रुजाश्च॥ ३ ॥

दन्तचाले वकुलप्रयोगः आर्त्तगलगण्डूषश्च।—

चलदन्तस्थिरकरं कार्य्यं वकुलचर्वणम्।
आर्त्तगलदलक्वाथ-गण्डूषो दन्तचालनुत्॥ ४ ॥

दन्तचाले तिलादिप्रयोगः।—

दन्तचाले हितं श्रेष्ठं तिलोग्राचर्वणं सदा॥ ५ ॥

दन्तपुप्पुटके रक्तमोक्षणं पञ्चलवणादिप्रतिसारणञ्च।—

दन्तपुप्पुटके कार्य्यं तरुणे रक्तमोक्षणम्।
सपञ्चलवणक्षारः सक्षौद्रः प्रतिसारणम्॥ ६ ॥

---

दन्तमूलरोगचिकित्सामाह, शीतादे इत्यादि सुश्रुतस्य।—नागरादित्रिफलान्त एको योगः॥ १।२ ॥

कुष्ठमित्यादि।—तेजनी चवी। पीतिका हरिद्रा॥ ३ ॥

चलेत्यादि।—चव वकुलस्य फलं, दन्तस्थैर्य्यकरत्वात्। आर्त्तगलः "झागुड़ा" इति ख्यातः॥ ४ ॥

दन्तेत्यादि।—उग्रा वचा॥ ५ ॥

दन्तपुप्पुटके इत्यादि सुश्रुतस्य।—तरुणे इति—उपन्नमात्रे। रक्तमोक्षणञ्च प्रच्छनेन। क्षारः यवक्षारः॥ ६ ॥

चा

दन्ततोदहर्षचालेषु कवलगण्डूषौ।—

दन्तानां तोदहर्षे च वातघ्नाः कवड़ा हिताः।
दन्तचाले तु गण्डूषो बकुलत्वक्कृतो हितः॥ ७॥

दन्तशूले माक्षिकादिः।—

माक्षिकं पिप्पलीसर्पिर्मिश्रितं धारयेन्मुखे।
दन्तशूलहरं प्रोक्तं प्रधानमिदमौषधम्॥ ८॥

दन्तवेष्टे लोध्रादिप्रतिसारणम्।—

विस्राविते दन्तवेष्टे व्रणान्तु प्रतिसारयेत्।
लोध्रपत्तङ्गमधुक-लाक्षाचूर्णैर्मधूत्तरैः॥ ९॥

दन्तवेष्टे क्षीरिवृक्षगण्डूषः।—

गण्डूषे क्षीरिणो योज्याः सक्षौद्रघृतशर्कराः॥ १०॥

शौषिरे लोध्रादिलेपः क्षीरिवृक्षगण्डूषश्च।—

शौषिरे हृतरक्ते तु लोध्रमुस्तारसाञ्जनैः।
सक्षौद्रैः शस्यते लेपो गण्डूषे क्षीरिणो हिताः॥ ११॥

परिदरे शीतादचिकित्साऽतिदेशः।—

क्रियां परिदरे कुर्य्याच्छीतादोक्तां विचक्षणः।
संशोध्योभयतः कायं शिरश्च—" ॥ १२॥

---

दन्तानामित्यादि।—वातघ्नाः कवड़ा इति—उष्णतैलघृतससेहदशमूल-क्वाथादयः॥ ७॥

माक्षिकमित्यादि।—अत्र पिप्पलीघृतापेक्षया मधु तु बहुमात्रं देयमिति वदन्ति; मधुनः कर्षमेकं, गव्यघृतं माषकाष्टकं, पिप्पलीचूर्णं माषकचतुष्टयम्, आलोड्य मुखे धार्य्यम्॥ ८॥

विस्राविते इत्यादि।—विस्राविते जलौकाप्रच्छनादिना रक्ते हृते। व्रणमिति—जलौकाप्रच्छनादिजं क्षतम्। पत्तङ्गं रक्तचन्दनम्॥ ९॥

गण्डूषे इत्यादि।—क्षीरिण इति—वटोडुम्बरादयः, एषां क्वाथः, क्षौद्रघृतशर्कराः प्रक्षेपणीयाः॥ १०॥

शौषिरे इत्यादि।—शौषिरे इति—दन्तरोगविशेषे। एवं परिदरेऽपि॥ ११॥

क्रियामित्यादि सुश्रुतस्य।—कायमुभयतः संशोध्येति—कायं शरीरम्, उभयत

उपकुशे रक्तस्रावणाद्युपदेशः।—

"—उपकुशे ततः।
काकोडुम्बरिकागोजी-पत्रैर्विस्रावयेद्भिषक्॥
क्षौद्रयुक्तैश्च लवणैः सव्योषैः प्रतिसारयेत्॥ १३॥

उपकुशे पिप्पल्यादिकवलः।—

पिप्पल्यः सर्षपाः श्वेता नागरं नैचुलं फलम्।
सुखोदकेन सङ्कृह्य कवडं तस्य योजयेत्॥ १४॥

दन्तवैदर्भे शोधनादिः।—

शस्त्रेण दन्तवैदर्भे दन्तमूलानि शोधयेत्।
ततः क्षारं प्रयुञ्जीत क्रियाः सर्वाश्च शीतलाः॥ १५॥

---

इति—वमनविरेचनाभ्यां, शिरश्च विशोध्येत्यन्वयः; शिरःशोधनञ्च शिरोविरेचनेनैव। 'संशोध्योभयतः कार्यं शिरश्च' इति ग्रन्थं परिदरे उपकुशे च योजयन्ति, युक्तञ्चैतत्; यतः परिदरो रक्तपित्तकफजः, अत एव कफप्रत्यनीकं वमनं पित्तरक्तप्रत्यनीकञ्च विरेचनं हितमेव, शिरोविरेचनञ्च शिरोगतकफक्षयार्थम्, एवमुपकुशेऽपि। उपकुशस्तु यद्यपि निदाने माधवेन पित्तरक्ताभ्यामेवोक्तः, तथाऽपि तन्त्रान्तरप्रत्ययात् कफोऽप्यत्र ज्ञेयः; तद्यथा,—"वेष्टे च दाहपाकौ चलनं दन्तेषु नासिकापचनम्। कुर्यात् पित्तं रक्तं कफश्च कुपितस्तथोपकुशे॥" इति; तेन उपकुशेऽपि वमनशिरोविरेचने युक्ते एव भवतः। कार्यमित्यत्र "कार्य्यम" इति पाठे—शीतादोक्तां क्रियां परिदरे कुर्यात्, उपकुशे तु वक्ष्यमाणरक्तस्रावादि कार्य्यमिति ज्ञेयम्। गोजी शाखोटकः। लवणैरिति पञ्चभिः॥ १२।१३॥

पिप्पल्य इत्यादि।—अत्र श्वेता इति सर्षपविशेषणम्। निचुलफलं हिज्जलफलम्। एते च पिप्पल्यादयो व्यस्ताः समस्ताश्च कवले योज्याः॥ १४॥

शस्त्रेणेत्यादि।—शस्त्रेणेति—मण्डलाग्रेण। शोधयेदिति—दन्तमूलानि शोधयेत्। अभिघातजेऽपि दन्तवैदर्भे शस्त्रेण दन्तमूलमांसच्छेदनम् अभिघातदुष्टरक्तकृतपाकेन शीर्णमांसस्यापगमनार्थम्। क्षारप्रयोगोऽपीडाशोधितशेषपूतिमांसदूरीकरणार्थं, तदनन्तरञ्च शीतक्रियाः क्षारकुपितपित्तरक्तनिर्वापणार्थं, ताश्च नस्यगण्डूषादयः; उक्तं हि वाग्भटे—"क्षारं दद्यात् ततो नस्यं गण्डूषादि च शीतलम्" (उ० २२ अ०) इति॥ १५॥

अधिदन्ते दन्तोद्धरणाद्युपदेशः ।—

उद्धृत्याधिकदन्तन्तु ततोऽग्निमवचारयेत् ।
क्रिमिदन्तकवच्चात्र विधिः कार्य्यो विजानता ॥ १६ ॥

अधिमांसे पाठादिचूर्णम् ।—

छित्त्वाऽधिमांसं सक्षौद्रैरेतैश्चूर्णैरुपाचरेत् ।
पाठावचातेजोवती-सर्जिकायावशूकजैः ॥ १७ ॥

अधिमांसे पिप्पलीकवलादयः ।—

क्षौद्रद्वितीयाः पिप्पल्यः कवलश्चात्र कीर्त्तितः ।
पटोलनिम्बत्रिफला-कषायश्चात्र धावने ॥
शिरोविरेकश्च हितो धूमो वैरेचनश्च यः ॥ १८ ॥

दन्तनाड्यां नाड़ीव्रणचिकित्साऽतिदेशादिः ।—

नाड़ीव्रणहरं कर्म दन्तनाड़ीषु कारयेत् ।
यं दन्तमधिजायेत नाड़ी तं दन्तमुद्धरेत् ॥ १९ ॥

दन्तनाड्यां दाहाद्युपदेशः ।—

छित्त्वाऽधिमांसं शस्त्रेण यदि नोपरिजो भवेत् ।
शोधयित्वा दहेच्चापि क्षारेण ज्वलनेन वा ॥ २० ॥

---

उद्धृत्येत्यादि सुश्रुतस्य ।—अग्निदाहोऽत्र रक्तादिस्रुतिनिषेधार्थम् । क्रिमिदन्तो द्विविधः, चलाचलश्च ; तत्र यश्चलः स उद्धार्य्यः, तद्विधिरेवात्रातिदिश्यते, उद्धार्य्यत्वेन समानत्वात्, न त्वचलस्य, तस्यानुद्धार्य्यत्वात् । चले एव क्रिमिदन्ते उद्धरणदाहौ युक्तौ । अधिदन्ते पुनरचलेऽपि तद्विधानार्थमिह क्रिमिदन्तकविध्यतिदेशस्तत्रत्ययोरप्युद्धरणदाहयोरभिधानम् ॥ १६ ॥

छित्त्वेत्यादि सुश्रुतस्य ।—तेजोवती चवी । कवडग्रहोऽयम् ॥ १७ ॥

क्षौद्रेत्यादि ।—क्षौद्रद्वितीयाः पिप्पल्य इति—क्षौद्रालोड़ितपिप्पलीकवलः । वैरेचनिकधूमसाहचर्य्यात् शिरोविरेकोऽपि तीक्ष्णोऽत्र बोध्यः ॥ १८ ॥

नाड़ीत्यादि ।—यमिति—यस्य दन्तस्य समीपे नाड़ी स्यात्, तं दन्तं चलमचलं वा शस्त्रेण दन्तावरकमांसं छित्त्वा उद्धरेत ॥ १९ ॥

छित्त्वेत्यादि ।—यदि नोपरिजो भवेदित्युद्धरणस्यापवादः ॥ २० ॥

दन्तनाड्यां दन्तोद्धरणस्य अवश्यकर्त्तव्यतोपदेशः ।—

गतिर्हिनस्ति हन्वस्थि दशने समुपेक्षिते ।
तस्मात् समूलं दशनमुद्धरेत् भग्नमस्थि च ॥ २१ ॥

उत्तरदन्तोद्धरणे दोषनिर्देशः ।—

उद्धृते तूत्तरे दन्ते शोणितं सम्प्रसिच्यते ।
रक्ताभियोगात् पूर्वोक्ता घोरा रोगा भवन्ति च ॥
चलमप्युत्तरं दन्तमतो नापहरेद्भिषक् ॥ २२ ॥

दन्तनाड्यां लोध्रादितैलम् ।—

कषायं जातीमदन-कटुकास्वादुकण्टकैः ।
लोध्रखदिरमञ्जिष्ठा-यष्ट्याह्वैश्चापि यत् कृतम् ॥
तैलं संशोधनं तद्धि हन्याद्दन्तगतां गतिम् ॥ २३ ॥
कषायं परतः कृत्वा पिष्ट्वा लोध्रादिकल्कितम् ।

---

अधोगतदन्तानुद्धरणे दोषमाह, गतिरित्यादि ।—गतिः नाडी । हन्वस्थि कपोलसमीपास्थि । हिनस्ति दारयति । दशने समुपेक्षिते सत्यनुद्धृते सतीत्यर्थः, किंवा—"गतिर्हिनस्ति हन्वस्थि दशने समुपेक्षिता" इति पाठान्तरे—दन्ते गतिरुपेक्षितेत्यर्थः । भग्नमस्थि चेति—अवश्यमुद्धृतदन्तस्य भग्नशेषमस्थि चेत्यर्थः, किंवा गतिविशीर्णितहन्वस्थि भग्नास्थीत्युच्यते ॥ २१ ॥

उपरिजदन्तानुद्धरणे हेतुमाह, उद्धृते इत्यादि ।—उत्तरे इति—उपरिजाते । सम्प्रसिच्यते अतिस्रवतीत्यर्थः । पूर्वोक्ता इति—शोणितवर्णनीयोक्ता आक्षेपकादयः ॥ २२ ॥

कषायमित्यादि सुश्रुतस्य ।—जात्याः पत्रम् । मदनं मदनकण्टकम् । कटुका कटुरोहिणी । स्वादुकण्टकः विकङ्कतः । एतैः कृतः कषायः मुखधावनरूपः क्वाथः दन्तगतां गतिं हन्यात्, तथा लोध्रादिभिश्च यष्ट्याह्वान्तैः कल्करूपैर्यत् कृतं तैलं तदपि दन्तगतिं हन्यादित्यर्थः । अन्ये तु कषायमित्यतः परं कृत्वेति शेषः, तेन जात्यादिभिः कषायं कृत्वा लोध्रादिकल्केन च कृतं यत् तैलमिति व्याचक्षते ; वृन्देनाप्यनुमतोऽयमर्थः ; व्यवहारोऽप्यनेनैव । जेज्जडस्तु—"धावनं जातीमदन-स्वादुकण्टकखदिरम्" इत्यधिकं श्लोकार्द्धं पठित्वा तदनन्तरमेव "कषायं जातीमदन" इत्यादिकं पठति ; व्याचष्टे च, —कषायमिति पदं धावनमित्यनेन सम्बध्यते ; तेन जात्यादिद्रव्यचतुष्टयकषायेण धावनं, परेण तु जातीमदनादिद्रव्याष्टकेन कल्केन तैलं साधनीयमिति ; अत एव

कण्टकीमदनो योज्यः स्वादुकण्टो विकङ्कतः ॥ २४ ॥

इति दन्तमूलरोग-चिकित्सा।

---

## अथ दन्तरोग-चिकित्सा।

दन्तहर्षे स्नेहकवलादिः।—

सुखोष्णाः स्नेहकवडाः सर्पिषस्त्रैवृतस्य वा।
निर्य्यूहाश्चानिलघ्नानां दन्तहर्षप्रमर्दनाः ॥
स्नैहिकश्च हितो धूमो नस्यं स्नैहिकमेव च ॥ १ ॥

दन्तशर्करायां लाक्षाप्रतिसारणादिकम्।—

अहिंसन् दन्तमूलानि शर्करामुद्धरेद्भिषक्।
लाक्षाचूर्णैर्मधुयुतैस्ततस्तां प्रतिसारयेत् ॥
दन्तहर्षक्रियाञ्चापि कुर्य्यान्निरवशेषतः ॥ २ ॥

---

तन्मतानुयायिवाग्भटोऽपि—"धावनं जातीमदन-खदिरस्वादुकण्टकैः" इत्युक्तवान्। अन्ये तु कषायशब्दं समासे विभक्तिरहितं पठन्ति, तेषां मते कषायमाम्रपूगफलं, मिश्रकाध्यायोक्तशल्लक्यादिशोधनकषायद्रव्यं वा; अस्मिन् पक्षे—कषायद्रव्यादिभिः यथ्याह्वान्तैस्तैलपाकः। कषायद्रव्यान्तर्गताया अपि जात्याः पृथगभिधानं आगदवग्रहणार्थमित्यपि वदन्ति ॥ २३।२४ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां दन्तमूलगतरोग-चिकित्सा-विवृतिः।

---

दन्तमूलगतचिकित्सितमभिधाय दन्तगतव्याधिचिकित्सामाह, सुखोष्णा इत्यादि सुश्रुतस्य।—स्नेहाः सर्पिस्तैलवसामज्जानस्तेषां व्यस्तानां समस्तानाञ्च कवला गण्डूषाः। सर्पिषस्त्रैवृतस्य वेति—वैवृतसर्पिरपतानक-चिकित्सायां सुश्रुतेनोक्तम्। अनिलघ्नानामिति—भद्रदार्वादिदशमूलादीनां निर्य्यूहाः क्वाथाः ॥ १ ॥

अहिंसन्नित्यादि सुश्रुतस्य।—दन्तमूलहिंसया हि अभिघातजा दन्तनाडी दन्तघातश्च स्यात् ॥ २ ॥

कपालिकायां दन्तहर्षक्रियाऽतिदेशः।—

कपालिका कृच्छ्रसाध्या तत्राप्येषा क्रिया हिता ॥ ३ ॥

अचलक्रिमिदन्ते रक्तस्रावणाद्युपदेशः।—

जयेद्विस्रावणैः स्विन्नमचलं क्रिमिदन्तकम्।
तथाऽवपीडैर्वातघ्नैः स्नेहगण्डूषधारणैः ॥
भद्रदार्वादिवर्षाभू-लेपैः स्निग्धैश्च भोजनैः ॥ ४ ॥

अचलक्रिमिदन्ते हिङ्गुलेपः।—

हिङ्गु कोष्णन्तु मतिमान् क्रिमिदन्तेषु दापयेत् ॥ ५ ॥

अचलक्रिमिदन्ते बृहत्यादिगण्डूषः।—

बृहतीभूमिकदम्बकपञ्चाङ्गुलकण्टकारिकाक्वाथः।
गण्डूषस्तैलयुतः क्रिमिदन्तकवेदनाशमनः ॥ ६ ॥

अचलक्रिमिदन्ते नीलीप्रयोगादिः।—

नीलीवायसजङ्घास्नुग्दुग्धीनान्तु मूलमेकैकम्।
सञ्चर्व्य दशनविधृतं दशनक्रिमिपातनं प्राहुः ॥ ७ ॥

चलक्रिमिदन्ते विदार्यादितैलनस्यम्।—

चलमुद्धृत्य वा स्थानं दहेत्तु शुषिरस्य वा।
ततो विदारीयष्ट्याह्व-शृङ्गाटककशेरुभिः ॥

---

कपालिकेत्यादि।—कृच्छ्रसाध्या इत्यनेन कपालिकायाः शीघ्रप्रतिकर्त्तव्यतां सूचयति। एषा क्रियेति—दन्तहर्षोक्ता, कपालिकाया अपि वातजत्वात्; शर्करोक्तेत्यन्ये ॥ ३ ॥

जयेत् विस्रावणैरित्यादि।—विस्रावणं क्रिमिदूषितरक्तस्य। अवपीडः नस्यभेदः। वातघ्नैरिति—वातघ्नद्रव्यकृतैरवपीडैरिति चक्रः। अन्ये तु अवपीडो यद्यपि कफहरस्तथाऽपि स्थानानुरोधात् क्रियते; अतो विस्रावणादिकुपितवातशान्त्यर्थं वातहरं कर्म कर्त्तव्यमिति दर्शयितुं वातघ्नैरिति स्नेहगण्डूषादिविशेषणं कृतम्; वाग्भटेऽप्येवमेवोक्तम् ॥ ४ ॥

हिङ्ग्वित्यादि।—कोष्णमिति—ईषदुष्णम् ॥ ५ ॥

बृहतीत्यादि।—भूमिकदम्बः अलम्बुषः। पञ्चाङ्गुल एरण्डः ॥ ६ ॥

नीलीत्यादि।—स्नुक् स्नुही। दुग्धी क्षीराह्वा ॥ ७ ॥

तैलं दशगुणं क्षीरं सिद्धं नस्ये तु योजयेत् ॥ ८ ॥

हनुमोक्षे अर्दितचिकित्साऽतिदेशादिः।—

हनुमोक्षे समुद्दिष्टा कार्य्या चार्दितवत् क्रिया ॥ ९ ॥

अपथ्यानि।—

फलान्यम्लानि शीताम्बु रूक्षान्नं दन्तधावनम्।

तथाऽतिकठिनान् भक्ष्यान् दन्तरोगी विवर्जयेत् ॥ १० ॥

क्रिमिदन्ते सप्तच्छदार्कदुग्धादिपूरणम्।—

सप्तच्छदार्कदुग्धाभ्यां पूरणं क्रिमिदन्तनुत्।

जीवनीयेन दुग्धेन क्रिमिरन्ध्रप्रपूरणम् ॥

अर्कक्षीरेणैवमेक-योगः सद्भिः प्रशस्यते ॥ ११ ॥

क्रिमिदन्ते द्रोणपुष्परसपूरणम्।—

द्रोणपुष्पद्रवैः फेन-मधुतैलसमायुतैः।

क्रिमिदन्तविनाशाय कार्य्यं कर्णस्य पूरणम् ॥ १२ ॥

क्रिमिदन्ते पटोलादिलेपः मधुतैलकवलश्च।—

पटोलकटुकाव्योष-पाठासैन्धवमार्गिकैः।

चूर्णैर्मधुयुतो लेपः कवड़ो मधुतैलकैः ॥ १३ ॥

क्रिमिदन्ते मुस्तादितैलम्।—

मुस्तामधुकनिर्गुण्डी-खदिरोशीरदारुभिः।

समञ्जिष्ठाविड़ङ्गैश्च सिद्धं तैलं हरेत् क्रिमीन् ॥ १४ ॥

दन्तशब्दे कर्कटघृतं कर्कटलेपश्च।—

कर्कटाङ्घ्रिक्षीरपक्व-घृताभ्यङ्गेन नश्यति।

---

चलमित्यादि सुश्रुतस्य।—वा-शब्दोऽवधारणे, चलमुद्धृत्यैवेत्यर्थः। स्थानमिति—उद्धृतदन्तस्य समग्रस्थानम्। शुषिरस्येति—क्रिमिकृतच्छिद्रस्य यावन्मात्रं स्थानं तावदेव दहेत्. स्थानशब्दोऽत्रापि योजनीयः; भूरिदेशदुष्टौ समग्रस्यैव दन्तस्थानस्य दाहः, एकस्थानदुष्टौ च शुषिरस्थानमात्रदाह इति ॥ ८ ॥

हनुमोक्षे इत्यादि।—समुद्दिष्टा इति पदम् अर्दितोक्तसमस्तविध्यर्थमाहुः ॥ ९ ॥

फलानीत्यादि।—दन्तधावनं दन्तकाष्ठम् ॥ १०—१४ ॥

दन्तशब्दः कर्कटाङ्घ्रि-लेपाद्वा दन्तयोजितात् ॥ १५ ॥

इति दन्तरोग-चिकित्सा।

---

## अथ जिह्वारोग-चिकित्सा।

वातजकण्टके वातजौष्ठरोगचिकित्साऽतिदेशः।—

जिह्वारोगेषु कर्त्तव्यं विधानमिदमौषधम्।
ओष्ठप्रकोपेऽनिलजे यदुक्तं प्राक् चिकित्सितम् ॥
कण्टकेष्वनिलोत्थेषु तत् कार्य्यं भिषजा खलु ॥ १ ॥

पित्तजकण्टके रक्तस्रावणाद्युपदेशः।—

पित्तजेषु निघृष्टेषु निःस्रुते दुष्टशोणिते।
प्रतिसारणगण्डूष-नस्यञ्च मधुरं हितम् ॥ २ ॥

कफजकण्टके रक्तमोचणाद्युपदेशः।—

कण्टकेषु कफोत्थेषु लिखितेष्वसृजः क्षये।
पिप्पल्यादिर्मधुयुतः कार्य्यन्तु प्रतिसारणम् ॥ ३ ॥

---

कर्कटेत्यादि।—अत्र क्षीरसाधनपरिभाषया कर्कटपादेन साधितं यत् क्षीरं तत्पक्वघृताभ्यङ्गेनेत्यर्थः। अभ्यङ्गश्च दशनप्रदेशे मर्दनमित्याहुः। अन्ये तु—कर्कटपादकल्कक्षीराभ्यां साधितं यत् घृतं तेनाभ्यङ्ग इत्याहुः। दन्तशब्दो दन्तकड़कड़ध्वनिः ॥ १५ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां दन्तरोग-चिकित्सा-विवृतिः।

---

जिह्वारोगचिकित्सामाह, जिह्वेत्यादि।—ओष्ठेत्यादि सुश्रुतस्य।—कण्टकः जारीति ख्यातो रोगः ॥ १ ॥

पित्तजेष्वित्यादि।—निघृष्टेष्विति शाखोटकादिपत्रैः। मधुरमिति—मधुरेण काकोल्यादिगणेनैव कृतं नस्यान्तरमित्याहुः ॥ २ ॥

कण्टकेष्वित्यादि।—लिखितेष्विति मण्डलाग्रादिना। असृजः क्षये अवसाने, विरामे इत्यर्थः। पिप्पल्यादिरिति—पिप्पल्यादिगणः ॥ ३ ॥

कफजकण्टके गौरसर्षपादिकवलः पटोलादियूषश्च ।—

गृह्णीयात् कवलान् वाऽपि गौरसर्षपसैन्धवैः ।
पटोलनिम्बवार्त्ताकु-क्षारयूषैश्च भोजयेत् ॥ ४ ॥

जिह्वाजाड्ये शाणकक्षारघर्षणादियोगौ ।—

जिह्वाजाड्यं चिरजं शाणकभस्मलवणतैलघर्षणं हन्ति ।
ईषत्सुक्क्षीराणां जम्बीराद्यम्लचर्वणं वाऽपि ॥ ५ ॥

उपजिह्वायां रक्तमोक्षणाद्युपदेशः ।—

उपजिह्वान्तु संलिख्य क्षारेण प्रतिसारयेत् ।
शिरोविरेकगण्डूष-धूमैश्चैनामुपाचरेत् ॥ ६ ॥

उपजिह्वायां व्योषादिचूर्ण-तैले ।—

व्योषक्षाराभयावह्नि-चूर्णमेतत् प्रघर्षणम् ।
उपजिह्वाप्रशान्त्यर्थमेभिस्तैलं विपाचयेत् ॥ ७ ॥

इति जिह्वारोग-चिकित्सा ।

---

गृह्णीयादित्यादि ।—श्वेतसर्षप-सैन्धवाभ्याञ्च कवल उष्णोदकेन कार्यः । पटोलादिभिर्भोजयेत् तथा क्षारयूषैश्च भोजयेदिति—क्षारप्रधानकुलत्थादियूषः क्षारयूषः; तदुक्तं—"शुष्कमूलककुलत्थादि-यूषाः क्षारोत्तरा हिताः । कुलकं बिल्वकञ्च वार्त्ताकुश्चाशने हितम् ॥" इति ॥ ४ ॥

जिह्वेत्यादि ।—जिह्वाजाड्यं जाड़ीसंज्ञकं रोगमिति लोके । ईषत्सुक्क्षीरेण युक्तं सचितं यज्जम्बीरादिकेशरचर्वणम् । चर्वणमित्यत्र घर्षणमित्यपि पाठः ॥ ५ ॥

उपजिह्वामित्यादि सुश्रुतस्य ।—संलिख्येति शाखोटकादिपत्रेण । क्षारेण इति—यवक्षारेण; उक्तं हि वाग्भटे—"उपजिह्वां परिस्राव्य यवक्षारेण घर्षयेत्" (उ० २२ अ०) इति । अन्ये तु प्रतिसारणीयक्षारेणेत्याहुः ॥ ६ ॥

व्योषेत्यादि ।—एभिस्तैलमिति—व्योषादिभिः कल्करूपैरित्यर्थः । जलं चतुर्गुणम् ॥ ७ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां जिह्वारोग-चिकित्सा-विवृतिः ।

# अथ तालुरोग-चिकित्सा ।

गलशुण्ड्यां व्योषादिघर्षणम् ।—

छित्त्वा घर्षेद्गले शुण्डीं व्योषोग्राक्षौद्रसिन्धुजैः ॥ १ ॥

गलशुण्ड्यां कुष्ठादिघर्षणम् ।—

कुष्ठोषणवचासिन्धु-कणापाठाप्लवैरपि ।

सक्षौद्रैर्भिषजा कार्य्यं गलशुण्ड्या विघर्षणम् ॥ २ ॥

गलशुण्ड्यां शिराव्यधोपदेशः शेफालीप्रयोगश्च ।—

उपनासाव्यधो हन्ति गलशुण्डीमशेषतः ।

गलशुण्डीहरं तद्वच्छेफालीमूलचर्वणम् ॥ ३ ॥

गलशुण्ड्यां वचादिकवलः ।—

वचामतिविषां पाठां रास्नां कटुकरोहिणीम् ।

निःक्वाथ्य पिचुमर्दञ्च कवलं तत्र योजयेत् ॥ ४ ॥

गलशुण्ड्यां क्षारसिद्धमुद्गयूषः ।—

क्षारसिद्धेषु मुद्गेषु यूषाश्चाप्यशने हिताः ॥ ५ ॥

तुण्डिकेर्य्यादिषु गलशुण्डीचिकित्सातिदेशः ।—

तुण्डिकेर्य्यध्रुषे कूर्मे सङ्घाते तालुपुप्पुटे ।

---

तालुरोगचिकित्सामाह, छित्त्वेत्यादि ।—उग्रा वचा ॥ १ ॥

कुष्ठोषणेत्यादि ।—उषणं मरिचम् । प्लवः कैवर्त्तमुस्तकः । सिन्धुकणेत्यत्र "सिन्धुकणा" इति केचित् पठन्ति । अरुणा अतिविषा ; वाग्भटेऽप्युक्तं—"मरिचाऽतिविषापाठा वचाकुष्ठकुटन्नटैः । छिन्नायां सपटुक्षौद्रैर्घर्षणम्—" ( उ० २२ अ० ) इति ; एवं सुश्रुतेऽप्यायुर्वेदसारेऽपि ॥ २ ॥

उपनासेत्यादि ।—उपनासाव्यध इति—नासासमीपवर्त्तिशिराव्यध इत्यर्थः । नासायां शिराश्चतुर्विंशतिः, तन्मध्ये नासिकाया अतिसन्निहितास्तस्रः परिहार्य्याः उक्तं हि सुश्रुते—"द्विर्द्वादश नासायां, तासामौपनासिक्यस्तस्रः परिहार्य्याः" ( शा० ७ अ० ) इति ॥ ३ ॥

वचामित्यादि सुश्रुतस्य ।—पिचुमर्दः निम्बः ॥ ४ ॥

क्षारेत्यादि ।—क्षारसिद्धेष्विति—मुष्ककापामार्गादिक्षारोदकसिद्धेषु ॥ ५ ॥

एष एव विधिः कार्य्यो विशेषः शस्त्रकर्मणि ॥ ६ ॥

तालुपाक-तालुशोषयोः यथाक्रमं पित्त-वातचिकित्साऽतिदेशः।—

तालुपाके तु कर्त्तव्यं विधानं पित्तनाशनम्।

स्नेहस्वेदौ तालुशोषे विधिश्चानिलनाशनः ॥ ७ ॥

इति तालुगतरोग-चिकित्सा।

## अथ कण्ठगतरोग-चिकित्सा।

गलरोहिण्यां क्रियासूत्रम्।—

साध्यानां रोहिणीनान्तु हितं शोणितमोक्षणम्।

छर्दनं धूमपानञ्च गण्डूषो नस्तकर्म च ॥ १ ॥

वातरोहिण्यां रक्तमोक्षणाद्युपदेशः।—

वातिकीन्तु हृते रक्ते लवणैः प्रतिसारयेत्।

सुखोष्णान् स्नेहकवड़ान् धारयेच्चाप्यभीक्ष्णशः ॥ २ ॥

पित्तरोहिण्यां पत्तङ्गादिप्रतिसारणं द्राक्षादिकवलश्च।—

पत्तङ्गशर्कराक्षौद्रैः पैत्तिकीं प्रतिसारयेत्।

द्राक्षापरूषकक्वाथो हितश्च कवलग्रहे ॥ ३ ॥

---

तुण्डिकेर्य्यध्रुषे इत्यादि सुश्रुतस्य।—कूर्मे इति—कच्छपरोगे। एष एवेति—शलग्रण्डाक्तविधिविशेषः। शस्त्रकर्मणीति—तुण्डिकेरी-तालुपुप्पुटौ भेद्यौ, अपरे छेद्या इति शेषः ॥ ६ ॥

तालुपाके इत्यादि।—पित्तनाशनं पित्तव्रणनाशनमित्यर्थः ॥ ७ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां तालुगतरोग-चिकित्सा-विवृतिः।

---

कण्ठरोगचिकित्सामाह, साध्यानामित्यादि सुश्रुतस्य।—साध्यानामित्यादिना सन्निपातजाया असाध्याया व्यवच्छेदः ॥ १ ॥

वातिकीमित्यादि।—लवणैरिति पञ्चभिः ॥ २ ॥

पत्तङ्गेत्यादि।—पत्तङ्गं रक्तचन्दनम् ॥ ३ ॥

कफरोहिण्याम् आगारधूमादिप्रतिसारणम् ।—

आगारधूमकटुकैः कफजां प्रतिसारयेत् ॥ ४ ॥

कफरोहिण्यां श्वेतादितैलम् ।—

श्वेताविडङ्गदन्तीषु सिद्धं तैलं ससैन्धवम् ।

नस्तःकर्मणि दातव्यं कवड़ञ्च कफोच्छ्रये ॥ ५ ॥

रक्तरोहिण्यां पित्तरोहिणीचिकित्साऽतिदेशः ।—

पित्तवत् साधयेद्वैद्यो रोहिणीं रक्तसम्भवाम् ।

विस्राव्य—" ॥ ६ ॥

कण्ठशालूके तुण्डिकेरीचिकित्साऽतिदेशः ।—

"—कण्ठशालूकं साधयेत् तुण्डिकेरिवत् ।

एककालं यवान्नञ्च भुञ्जीत स्निग्धमल्पशः ॥ ७ ॥

अधिजिह्वायामुपजिह्वाचिकित्साऽतिदेशः ।—

उपजिह्विकवच्चापि साधयेदधिजिह्विकाम् ॥ ८ ॥

अधिजिह्वायां छेदनाद्युपदेशः ।—

उन्नाम्य जिह्वामाकृष्य वड़िशेनाधिजिह्विकाम् ।

छेदयेन्मण्डलाग्रेण तीक्ष्णोष्णैर्घर्षणादिभिः ॥ ९ ॥

---

आगारधूमेत्यादि ।—स्पष्टम् ॥ ४ ॥

श्वेतेत्यादि ।—श्वेता कटभी अपराजिता वा । श्वेतादिसैन्धवान्तः कल्कः । कवड़-श्चेति—श्वेतादिसैन्धवान्तसिद्धं तैलमेव कवड़मपीत्यर्थः ॥ ५ ॥

पित्तवदित्यादि ।—पित्तवदिति—पित्तरोहिणीवदित्यर्थः । विस्राव्येत्यत्र रक्तमिति शेषः । एतच्च पूर्वेण सम्बध्यते ॥ ६ ॥

कण्ठशालूकमित्यादि ।—साधयेत् तुण्डिकेरीवदिति—तुण्डिकेर्यामपि गल-शुण्डिकाविध्यतिदेशात् "साधयेत् गलशुण्डिवत्" इति वाच्ये तुण्डिकेरीविध्यति-देशो निःशेषच्छेदनार्थः, तेन गलशुण्डीवदत्र त्रिभागच्छेदो न कार्य्य इति बोधयति ॥ ७।८ ॥

उन्नाम्येत्यादि वाग्भटस्य ।—तीक्ष्णोष्णैर्घर्षणादिभिरित्यत्र उपाचरेदिति शेषः । आदिशब्दात् कवड़ादिपरिग्रहः ॥ ९ ॥

एकवृन्दे रक्तमोक्षणाद्युपदेशः।—

एकवृन्दन्तु विस्राव्य विधिं शोधनमाचरेत्॥ १०॥

शिलायुरोगे शस्त्रप्रयोगोपदेशः।—

शिलायुश्चापि यो व्याधिस्तञ्च शस्त्रेण साधयेत्॥ ११॥

गलविद्रधौ शस्त्रप्रयोगोपदेशः।—

अमर्मस्थं सुपक्वञ्च भेदयेद्गलविद्रधिम्॥ १२॥

सर्वकण्ठरोगे क्रियासूत्रम्।—

कण्ठरोगेष्वसृङ्मोक्षस्तीक्ष्णनस्यादिकर्म च॥ १३॥

दार्व्यादि-हरीतकीक्वाथौ।—

क्वाथपानन्तु दार्वीत्वङ्-निम्बतार्क्ष्यकलिङ्गजम्।

हरीतकीकषायो वा पेयो माक्षिकसंयुतः॥ १४॥

कटुकादिक्वाथः।—

कटुकाऽतिविषादारु-पाठामुस्तकलिङ्गकाः।

गोमूत्रक्वथिताः पेयाः कण्ठरोगविनाशनाः॥ १५॥

---

एकवृन्दमित्यादि सुश्रुतस्य।—विस्राव्येति—जलौकादिभी रक्तं विस्राव्य इत्यर्थः। शोधनमिति—गलगतदोषशोधनं प्रतिसारणशिरोविरेककवलादिकं, तथा कायशोधनञ्च वमनादिकं, तस्यापि कायशोधनेन शिरोगतदोषस्यापि शोधकत्वात्॥ १०॥

शिलायुरित्यादि।—तच्च शस्त्रेण साधयेदिति—कठिनमल्पवेदनमपक्वं शिलायुं छेदयेत्, पक्वन्तु भेदयेत् पूयनिःसारणार्थं, ततो व्रणोयोक्तविधिना शोधनादिरवादि लभ्यते॥ ११॥

अमर्मस्थमित्यादि।—सुश्रुते गलविद्रधिरयं त्रिदोषविद्रधितुल्यत्वेनोक्तोऽपि चिकित्सितोपदेशात् साध्य इति ज्ञेयः। अन्ये तु गलविद्रधेस्त्रिदोषजविद्रधितुल्यत्वेनोक्तत्वेऽपि चिकित्साविधानात् कृच्छ्रसाध्यत्वं ज्ञेयम्। अयञ्च "सर्वं गलं व्याप्य समुत्थितो यः" (सु॰ नि॰ १६५०) इत्यभिधानेन सर्वव्यापकोऽपि गलगतमर्मसन्धि मूलास्पदविरहादमर्मज इत्युच्यते; किंवा अमर्मस्थमिति क्रियाविशेषणम्; अनभिज्ञत्वेन मर्माभ्यन्तरास्पर्शीयं यथा स्यात् तथा भेदयेदित्यर्थः॥ १२॥

सामान्यकण्ठरोगचिकित्सामाह, कण्ठरोगेष्वित्यादि॥ १३॥

कालकचूर्णम्।—

गृहधूमो यवक्षारः पाठा व्योषं रसाञ्जनम्।
तेजोह्वा त्रिफला लौहं चित्रकश्चेति चूर्णितम्॥ १६॥
सक्षौद्रं धारयेदेतत् गलरोगविनाशनम्।
कालकं नाम तच्चूर्णं दन्तजिह्वास्यरोगनुत्॥ १७॥

पिप्पल्यादिचूर्णम्।—

पिप्पलीपिप्पलीमूल-चव्यचित्रकनागरैः।
सर्जिकाक्षारतुल्यांशैश्चूर्णोऽयं गलरोगनुत्॥ १८॥

पीतकचूर्णम्।—

मनःशिला यवक्षारो हरितालं ससैन्धवम्।
दार्वीत्वक् चेति तच्चूर्णं माक्षिकेण समायुतम्॥ १९॥
मूर्च्छितं घृतमण्डेन कण्ठरोगेषु धारयेत्।
मुखरोगेषु च श्रेष्ठं पीतकं नाम कीर्त्तितम्॥ २०॥

क्षारादि गुडिका।—

यवाग्रजं तेजोवतीं सपाठां
रसाञ्जनं दारुनिशां सकृष्णाम्।

---

क्वाथपानमित्यादि।—वाग्भटे—"क्वाथः पाने तु दार्वीत्वङ्-निम्बतार्क्ष्य-कलिङ्गजः" (उ० २२अ०) इति पाठः। दार्व्यास्त्वक्। तार्क्ष्यं रसाञ्जनम्॥१४।१५॥

गृहधूम इत्यादि।—कालकचूर्णे तेजोह्वा चवी। लौहं काललौहचूर्णम् अगुरु वा, व्यवहारस्तु पूर्व्ववदेव। लौहस्थाने लोध्रमिति केचित् पठन्ति। अस्य योगस्य लौहचूर्णरसाञ्जनचूर्णयोगात् कृष्णत्वेन "कालक" इति संज्ञा; एवं वक्ष्यमाण-पीतकचूर्णेऽपि मनःशिलादियोगात् पीतत्वेन पीतकसंज्ञा विधेया॥ १६—१८॥

मनःशिलेत्यादि।—पीतकचूर्णे दार्वीत्वगिति षष्ठीसमासः। मूर्च्छितमिति—आलोडितम्। एतच्चूर्णं तथा कालकचूर्णं सर्व्वस्मिन्नेव मुखरोगे धार्य्यम्; अत एवोक्तं चरके—"योगास्त्वेते त्रयः प्रोक्ता वातपित्तकफापहाः" (चि० त्रिमर्मीय०) इति। प्रत्येकमेव कालकादयस्त्रिदोषहरा इति चक्रव्याख्या॥ १९।२०॥

क्षौद्रेण कुर्य्यात् गुड़िकां मुखेन
तां धारयेत् सर्वगलामयेषु ॥ २१ ॥

दशमूल-मूलकादियूषौ।—

दशमूलं पिबेदुष्णं यूषं मूलकुलत्थयोः ॥ २२ ॥

क्षीरादिकवलाष्टकम्।—

क्षीरेक्षुरसगोमूत्र-दधिमस्त्वम्लकाञ्जिकैः।
विदध्यात् कवलान् वीक्ष्य दोषं तैलघृतैरपि ॥ २३ ॥

क्षारगुडिका।—

पञ्चकोलकतालीश-पत्रैलामरिचत्वचः।
पलाशमुष्ककक्षार-यवक्षाराश्च चूर्णिताः ॥ २४ ॥
गुड़े पुराणे क्वथिते द्विगुणे गुड़िकाः कृताः।
कर्कन्धुमात्राः सप्ताहं स्थिता मुष्ककभस्मनि ॥
कण्ठरोगेषु सर्वेषु धार्य्याः स्युरमृतोपमाः ॥ २५ ॥

इति कण्ठगतरोग-चिकित्सा।

---

## अथ मुखगतरोग-चिकित्सा।

वैरस्ये शिवादिचूर्णम्।—

मूत्रखिन्नां शिवां तुल्यां मधुरीकुष्ठबालकैः।

---

यवाग्रजमित्यादि।—तेजोवती ज्योतिष्मती, चवी इत्यन्ये। दारुनिशा दारुहरिद्रा ॥ २१ ॥

दशमूलमित्यादि।—मूलं मूलकशुण्ठकम् ॥ २२ ॥

क्षीरेत्यादि सुश्रुतस्य।—क्षीरादिभिः प्रत्येकं यथादोषं कवड़ाः कार्य्याः, एवं तैलघृतैरपि ॥ २३ ॥

पञ्चकोलकेत्यादि।—पत्रं तेजपत्रम्। त्वक् गुड़त्वक्। मुष्ककः घण्टापारुली। अत्र समुदितचूर्णात् द्विगुणो गुड़ः। क्वथिते इति—वह्निसंयोगात् द्रवीभूते। कर्कन्धुमात्रा इति—अष्टमाषकमात्राः ॥ २४।२५ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां कण्ठगतरोग-चिकित्सा विवृतिः।

अभ्यस्य मुखरोगांस्तु जयेद्विरसतामपि ॥ १ ॥

वातिकसर्वसरे सैन्धवप्रतिसारणं वातघ्नतैल-नस्य-कवलौ।—

वातात् सर्वसरं चूर्णैर्लावणैः प्रतिसारयेत्।
तैलं वातहरैः सिद्धं हितं कवड़नस्ययोः ॥ २ ॥

पैत्तिकसर्वसरे पित्तनाशनचिकित्साऽतिदेशः।—

पित्तात्मके सर्वसरे शुद्धकायस्य देहिनः।
सर्वः पित्तहरः कार्य्यो विधिर्मधुरशीतलः ॥ ३ ॥

कफजसर्वसरे कफहरप्रतिसारणाद्युपदेशः।—

प्रतिसारणगण्डूषान् धूमं संशोधनानि च।
कफात्मके सर्वसरे क्रमं कुर्य्यात् कफापहम् ॥ ४ ॥

मुखपाके शिरावेधाद्युपदेशः जातीपत्रप्रयोगश्च।—

मुखपाके शिरावेधः शिरःकायविरेचनम्।
कार्य्यन्तु बहुधा नित्यं जातीपत्रस्य चर्वणम् ॥ ५ ॥

मुखपाके जातीपत्रादिगण्डूषः।—

जातीपत्रामृताद्राक्षा-यासदार्वीफलत्रिकैः।

---

मुखगतरोगचिकित्सामाह, मूत्रेत्यादि।—शिवा हरीतकी। मधुरी मधुरिकैव। अभ्यस्य इति भक्षणविषया। विरसतामिति—आस्यवैरस्यम् ॥ १ ॥

वातादित्यादि सुश्रुतस्य।—सर्वसरः मुखपाकः। लावणैश्चूर्णैरिति—सैन्धवचूर्णैः। अन्ये तु लवणा ज्योतिष्मती, तदुद्भवं लावणमित्याहुः। निश्चलस्तु पञ्चलवणचूर्णैरित्याह। वातहरैः सिद्धमिति—भद्रदार्वादिभिः कल्कक्वाथरूपैः ॥ २ ॥

पित्तात्मके इत्यादि।—शुद्धकायस्येति विरेकेण वमनेनापि, कफस्थानगतत्वेन पित्तस्यापि वमनार्हत्वात्। मधुरशीतल इति विशेषणार्थमुक्तम् ॥ ३ ॥

कफजसर्वसरचिकित्सामाह, प्रतिसारणेत्यादि।—क्रमं कुर्य्यात् कफापहमिति अनुक्तकफहरविधिसङ्ग्रहार्थमुक्तम् ॥ ४ ॥

मुखपाके शिरावेध इत्यादि।—शिरावेधस्तालुनि अधोजिह्विकायां वा कार्य्यः। शिरोविरेचनं कायविरेचनञ्च बहुधा कार्य्यमिति योज्यम्। नित्यमिति तु परेण सम्बध्यते ॥ ५ ॥

क्वाथः क्षौद्रयुतः शीतो गण्डूषो मुखपाकनुत् ॥ ६ ॥

मुखपाकादौ कृष्णजीरकादिचूर्णम्।—

कृष्णजीरककुष्ठेन्द्र-यवानां चूर्णतस्त्र्यहात्।
मुखपाकव्रणक्लेद-दौर्गन्ध्यमुपशाम्यति ॥ ७ ॥

मुखपाके रसाञ्जनादिचूर्णम्।—

रसाञ्जनं लोध्रमथामयञ्च मनःशिला नागरगैरिकञ्च।
पाठा हरिद्रा गजपिप्पली च स्याद्धारणं क्षौद्रयुतं मुखस्य ॥ ८ ॥

मुखपाके पञ्चपल्लवक्वाथः।—

पटोलनिम्बजम्ब्वाम्र-मालतीनवपल्लवाः।
पञ्चपल्लवजः श्रेष्ठः कषायो मुखधावने ॥ ९ ॥

मुखपाके पञ्चवल्कलक्वाथ-त्रिफलाक्वाथौ।—

पञ्चवल्ककषायो वा त्रिफलाक्वाथ एव वा।
मुखपाकेषु सक्षौद्रः प्रयोज्यो मुखधावने ॥ १० ॥

मुखरोगादौ दार्वीरसक्रिया।—

स्वरसः क्वथितो दार्व्या घनीभूतो रसक्रिया।
सक्षौद्रा मुखरोगासृग्दोषनाड़ीव्रणापहा ॥ ११ ॥

मुखपाके सप्तच्छदादिक्वाथः।—

सप्तच्छदोशीरपटोलमुस्त-हरीतकीतिक्तकरोहिणीभिः।
यष्ट्याह्वराजद्रुमचन्दनैश्च क्वाथं पिबेत् पाकहरं मुखस्य॥१२॥

---

जातीपत्रेत्यादि।—जाती मालती, तस्याः पत्रं जातीपल्लवम्। अमृता गुडूची। यासः दुरालभा। यासस्थाने पाठेति केचित् पठन्ति। दार्वी दारुहरिद्रा ॥६—८॥

पटोलेत्यादि।—अत्र पटोलादिभिः पल्लवशब्दस्य प्रत्येकमन्वयः ॥ ९ ॥

पञ्चवल्केत्यादि।—सक्षौद्र इत्युभयत्रापि सम्बध्यते ॥ १० ॥

स्वरस इत्यादि।—अयं योग आस्ये धार्य्यः। वाग्भटे तु गैरिकमप्यत्र योगे पठ्यते, यथा—"स्वरसः क्वथितो दार्व्या घनीभूतः सगैरिकः। आस्यस्थः सम्धुवक्त्र-पाक-नाड़ीव्रणापहः॥" (उ० २२अ०) इति ॥ ११ ॥

सर्वमुखरोगे पटोलादिक्वाथः ।—

पटोलशुण्ठीत्रिफलाविशाला-त्रायन्तितिक्ताद्विनिशाऽमृतानाम् ।
पीतः कषायो मधुना निहन्ति मुखे स्थितश्चास्यगदानशेषान् ॥ १३ ॥

मुखपाके त्रिफलादिक्वाथः त्रिफलाचूर्णञ्च ।—

क्वथितास्त्रिफलापाठा-मृद्वीकाजातिपल्लवाः ।
निषेव्या भक्षणीया वा त्रिफला मुखपाकहा ॥ १४ ॥

चूर्णदग्धमुखे तिलादिपञ्चगण्डूषाः ।—

तिला नीलोत्पलं सर्पिः शर्करा क्षीरमेव च ।
सक्षौद्रो दग्धवक्त्रस्य गण्डूषो दाहपाकनुत् ॥ १५ ॥

चूर्णदग्धमुखे तैल-काञ्जिकगण्डूषौ ।—

तैलेन काञ्जिकेनाथ गण्डूषश्चूर्णदाहहा ॥ १६ ॥

महासहचर-तैलम् ।—

तुलां धृतां नीलसहाचरस्य
द्रोणेऽम्भसः संश्रपयेत् यथावत् ।
पूत्वा चतुर्भागरसे तु तैलं
पचेच्छनैरर्द्धपलप्रयुक्तैः ॥ १७ ॥
कल्कैरनन्ताखदिरारिमेद-
जम्ब्वाम्रयष्टीमधुकोत्पलानाम् ।

---

सप्तच्छदेत्यादि ।—सप्तच्छदः शारदी । तिक्तरोहिणी कटुकी । राजद्रुमः आरग्वधः ॥ १२।१३ ॥

क्वथिता इत्यादि ।—निषेव्या इति—पानगण्डूषाभ्यामुपयोज्या इत्यर्थः । भक्षणीयेति परेण सम्बध्यते, तेन लेहादिविषया त्रिफला भक्षणीयेत्यर्थः ॥ १४ ॥

तिला इत्यादि ।—पञ्च एते गण्डूषा इति । सक्षौद्र इति—प्रत्येकमनी सक्षौद्रा योगा इति निश्चलः । दग्धवक्त्रस्येति शम्बूकशङ्खचूर्णादिनेत्यर्थः । घनकुष्ठेलादि-योगमत्र केचित् पठन्ति ; तदयुक्तम् ; तृष्णाधिकारे अस्य योगस्य वक्ष्यमाणत्वात् ; निश्चलेन तु भ्रमादुभयत्रैवायं योगः पठितो व्याख्यातश्च ॥ १५।१६ ॥

तुलामित्यादि ।—नीलसहाचरः नीलझिण्टी । चतुर्भागरसे इति—चतुर्थ-

तत् तैलमाश्वेव धृतं मुखेन
स्थैर्य्यं द्विजानां विदधाति सद्यः ॥ १८ ॥

इरिमेदाद्यं तैलम्।—

इरिमेदत्वक्पलशतमभिनवमापोथ्य खण्डशः कृत्वा।
तोयाढ़कैश्चतुर्भिर्निःक्वाथ्य चतुर्थशेषेण ॥ १९ ॥
क्वाथेन तेन मतिमांस्तैलस्यार्द्धाढ़कं शनैर्विपचेत्।
कल्कैरक्षसमांशैर्मञ्जिष्ठालोध्रमधुकानाम् ॥ २० ॥
इरिमेदखदिरकट्फललाक्षान्यग्रोधमुस्तसूक्ष्मैला-।
कर्पूरागुरुपद्मक-लवङ्गकक्कोलजातीफलानाम् ॥ २१ ॥
पत्तङ्गगैरिकवराङ्गगजकुसुमधातकीनाञ्च।
सिद्धं भिषक् विदध्यादिदं मुखोत्थेषु रोगेषु ॥ २२ ॥
परिशीर्णदन्तविद्रधि-शौषिरशीतादन्तहर्षेषु।
क्रिमिदन्तदालनचलितप्रहृष्टमांसावशीर्णेषु ॥ २३ ॥
मुखदौर्गन्ध्ये कार्य्यं प्रागुक्तेष्वामयेषु तैलमिदम् ॥ २४ ॥

लाक्षाद्यं तैलम्।—

तैलं लाक्षारसं क्षीरं पृथक् प्रस्थं समं पचेत्।
चतुर्गुणेरिमक्वाथे द्रव्यैश्च पलसम्मितैः ॥ २५ ॥

---

भागरसे। अनन्ता अनन्तमूलम्। इरिमेदः विट्खदिरः, तदभावे खदिरमेव द्विगुणं गृह्णन्ति ॥ १७।१८ ॥

इरिमेदत्वगित्यादि।—पद्मकं पद्मकाष्ठम्। जाती जातीकोषः। फलं जातीफलम्। पत्तङ्गं रक्तचन्दनम्। वराङ्गं गुड़त्वक्। गजकुसुमं नागकेशरम्। परिशीर्णदन्तः दन्तभेदः; उक्तं हि वाग्भटे—"दन्तभेदे द्विजास्तोद-भेदरुक्स्फुटनान्विताः" (उ० २१अ०) इति। विद्रधिः गलविद्रधिः। दालनः दारणवद्व्यथायोगात्। प्रहृष्टमांसः अधिमांसः। अवशीर्णः अवशीर्णमांसः। परिदरः "दन्तमांसानि शीर्य्यन्ते" (सु० नि० १६अ०) इत्यादि तल्लक्षणम् ॥ १९—२४ ॥

तैलमित्यादि।—लाक्षाया रसः क्वाथः। इरिमक्वाथ इति—इरिमेदक्वाथः। पङ्-

लोध्रकट्फलमञ्जिष्ठा-पद्मकेशरपद्मकैः ।
चन्दनोत्पलयष्ट्याह्वैस्तैलं गण्डूषधारणम् ॥ २६ ॥
दालनं दन्तचालञ्च हनुमोक्षं कपालिकाम् ।
शीतादं पूतिवक्त्रञ्च अरुचिं विरसास्यताम् ॥
हन्यादास्यगदानेतान् कुर्य्याद्दन्तानपि स्थिरान् ॥ २७ ॥

बकुलाद्यं तैलम् ।—

बकुलस्य फलं लोध्रं वज्रवल्ली कुरुण्टकम् ।
चतुरङ्गुलबब्बोल-वाजिकर्णारिमाशनम् ॥ २८ ॥
एषां कषायकल्काभ्यां तैलं पक्वं मुखे धृतम् ।
स्थैर्य्यं करोति चलतां दन्तानां धावनेन च ॥ २९ ॥

सहकारगुड़िका ।—

एलालतालवलिकाफलशीतकोष-
कोलाह्विकानि खदिरस्य कृते कषाये ।
तुल्यांशकानि दशभागमिते निधाय
प्रोद्भिन्नकेतकपुटे पुटवह्निपाच्यं ॥ ३० ॥

---

गुणोऽयं पाकः । हनुमोक्षः दन्तरोगविशेषः ; उक्तं हि सुश्रुते—"वातेन तैस्तैर्भावैस्तु हनुसन्धौ विघट्टिते । हनुमोक्ष इति ज्ञेयो व्याधिरर्दितलक्षणः ॥" ( नि० १६ अ० ) इति । अयञ्च दन्तदेशसामीप्यात् दन्तपीड़ाजनकत्वाच्च दन्तरोगमध्ये सुश्रुतेन पठितः । चन्द्राटेऽपि हनुमोक्ष इत्येव पाठः, तेन दन्तमोक्ष इत्यपपाठः एव ॥ २५—२७ ॥

बकुलस्येत्यादि ।—बकुलाद्ये वज्रवल्ली अस्थिसंहारः । कुरुण्टकः नीलझिण्टी । चतुरङ्गुलः आरग्वधः । बब्बोलः तुलसी, "बाबुइ" इति ख्यातम् । वाजिकर्णः शालभेदः । अशनः पीतशालः । चलतामिति षष्ठीबहुवचनम् ॥ २८।२९ ॥

एलेत्यादि ।—लता लताकस्तूरी । लवलिका लवङ्गम् । फलं जातीफलम् । शीतं कर्पूरम् । कोषः जातीकोषः । कोलं कक्कोलम् । ह्विकम् अगुरु । एलादीनां तुल्योंऽशः ; एषां मिलितानामपेक्षया दशभागपरिमिते खदिरक्वाथे इत्यर्थः । प्रोद्भिन्नकेतकपुटे इति—विकसितकेतकपत्रकृतपुटके खदिरक्वाथालोड़ितमेलादिचूर्णं

शाणांशतुल्यशशिनाऽथ तदेकसंस्थं
पिष्ट्वा नवीन सहकाररसेन हस्तौ।
लिप्त्वा यथाऽभिलषितां गुड़िकां विदध्यात्
स्त्रीपुंसयोर्वदनसौरभवन्धुभूताम्॥ २१॥

खल्पखदिर-वटिका।—

खदिरस्य तुलां सम्यक् जलद्रोणे विपाचयेत्।
शेषेऽष्टभागे तत्रैव प्रतिवापं प्रदापयेत्॥ २२॥
जातीकर्पूरपूगानि कङ्कोलकफलानि च।
इत्येषा गुड़िका कार्य्या मुखसौभाग्यवर्द्धिनी॥
दन्तौष्ठमुखरोगेषु जिह्वाताल्वामयेषु च॥ २३॥

वृहत्खदिर-वटिका।—

गायत्रिसारतुलयेरिमवल्कलानां
सार्द्धं तुलायुगलमम्बुघटैश्चतुर्भिः।
निःक्वाथ्य पादमवशेष्य सुवस्त्रपूतं
भूयः पचेदथ शनैर्मृदुपावकेन॥ २४॥
तस्मिन् घनत्वमुपगच्छति चूर्णमेषां
श्लक्ष्णं क्षिपेच्च कवड़ग्रहभागिकानाम्।

---

निधाय पुटविधिना मनाक् विपाच्य ततः शीतीकृत्य प्रथमगृहीतकर्पूरकस्तूरिका-मानवदपरञ्च तत् गृहीत्वा तेन पुटपक्वचूर्णपिण्डेन सह एकीकृत्य पिष्टैकत्र स्थाप्यं, ततोऽभिनवचूतवल्कनिर्य्यासेन हस्तौ लिप्त्वा यथेच्छं गुड़िकाः कार्य्या इति॥ २०।२१॥

खदिरस्येत्यादि।—जाती जातीकोषः। पूगं गुवाकफलम्। फलानि जाती-फलानि। एषां चूर्णानां प्रत्येकं पलं, वक्ष्यमाणखदिरवटिकायां पलांशिकानीति दर्श-नात्। अन्ये तु वक्ष्यमाणखदिरवटिकायां तुलात्रयनिष्पाद्यक्वाथे यावच्चूर्णमुक्तं, तावती मिलितचूर्णस्य तृतीयभागेनैषां मिलितानां चूर्णं ग्राह्यम्, एतत्क्वाथस्य तुलैक-निष्पाद्यत्वादित्याहुः॥ २२।२३॥

गायत्रीत्यादि।—गायत्रीसारः खदिरसारः, तस्य तुलया सार्द्धं सह इरिम-वल्कलानां विट्खदिरत्वचां तुलायुगलमित्यर्थः। घटः द्रोणः। कवड़ग्रहभागिकानां

एलामृणालसितचन्दनचन्दनाम्बु-
श्यामातमालविकसाघनलोहयष्टी ॥ ३५ ॥
लज्जाफलत्रयरसाञ्जनधातकीभ-
श्रीपुष्पगैरिककटङ्कटिकट्फलानाम् ।
पद्माह्वलोध्रवटरोहयवासकानां
मांसीनिशासुरभिवेष्टकसंयुतानाम् ॥ ३६ ॥
कक्कोलजातिफलकोषलवङ्गकानि
चूर्णीकृतानि विदधीत पलांशिकानि ।
शीतेऽवतार्य्य घनसारचतुःपलञ्च
क्षिप्त्वा कलायसदृशीर्वटिकाः प्रकुर्य्यात् ॥ ३७ ॥
शुष्का मुखे विनिहिता विनिवारयन्ति
रोगान् गलौष्ठरसनाद्विजतालुजातान् ।
कुर्य्युर्मुखे सुरभितामरुचिञ्च हन्युः
स्थैर्य्यं परं दशनगं रसनापटुत्वम् ॥ ३८ ॥

इति मुखगतरोग-चिकित्सा ।

---

मिति—प्रत्येकं कर्षमानानाम् । अमृणालम् उशीरम् । चन्दनं रक्तचन्दनम् । अम्बु वालकम् । श्यामा प्रियङ्गुः । तमालं तमालपत्रं, तेजपत्रं वा । विकसा मञ्जिष्ठा । घनं मुस्तकम् । लोहम् अगुरु । यष्टि यष्टिमधु । लज्जा वराहक्रान्ता । इभः नागकेशरम् । श्रीपुष्पं पुण्डरीकम् । कटङ्कटिः दारुहरिद्रा । पद्माह्वं पद्मकाष्ठम् । सुरभिः शल्लकी । वेष्टकं कुन्दुरुरिति ख्यातं वणिग्द्रव्यं, रालमित्यन्ये, मूरेत्यपरे । "वल्कलम्" इति पाठे—वल्कलं गुड़त्वक् । जातीफलकोष इति—जातीफलं जातीकोषञ्च । घनसारः कर्पूरम् । पटुत्वं स्वाद्वग्राहित्वम् ॥३४—३८ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां मुखगतरोग-चिकित्सा-विवृतिः ।

# अथ कर्णरोग-चिकित्सा ।

कर्णशूले कपित्थादिरसपूरणम् ।—

कपित्थमातुलुङ्गाम्ल-शृङ्गवेररसैः शुभैः ।

सुखोष्णैः पूरयेत् कर्णं कर्णशूलोपशान्तये ॥ १ ॥

कर्णशूले शृङ्गवेरादिपूरणम् ।—

शृङ्गवेरञ्च मधु च सैन्धवं तैलमेव च ।

कदुष्णं कर्णयोर्देयमेतद्वा वेदनाऽपहम् ॥ २ ॥

कर्णशूले रसोनादिस्वरसषट्कम् ।—

लशुनार्द्रकशिग्रूणां सुरङ्ग्या मूलकस्य च ।

कदल्याः स्वरसः श्रेष्ठः कदुष्णः कर्णपूरणे ॥ ३ ॥

कर्णशूले समुद्रफेनप्रयोगः ।—

समुद्रफेनचूर्णेन युक्त्या वाऽप्यवचूर्णयेत् ॥ ४ ॥

---

मुखरोगेषु जिह्वाश्रयरोगा उक्ताः, जिह्वा चेन्द्रियाधिष्ठानम्, अत इन्द्रियाधिष्ठानगतरोगचिकित्साप्रसङ्गात् कर्णरोगचिकित्सितमुच्यते, कपित्थेत्यादि सुश्रुतस्य ।—कपित्थस्य फलम्, एवं मातुलुङ्गस्यापि, अम्लेति विशेषणात् सुपक्वफलं ग्राह्यम् । रसशब्दस्य कपित्थादिभिरन्वयः । एते च त्रयो योगाः ॥ १ ॥

शृङ्गवेरमित्यादि ।—शृङ्गवेरस्वरसमाषकचतुष्टयं, मधुनो माषकद्वयं सैन्धवस्य रक्तिकामेकां, तैलं तिलजं माषकद्वयं गृहीत्वा सर्वमालोड्य कदुष्णं कृत्वा कर्णं पूरयेत ॥ २ ॥

लशुनेत्यादि सुश्रुतस्य ।—सुरङ्गी रक्तशोभाञ्जनम् । कदली कदलीवागुड़ा, तस्याः स्वरसः । एते च लशुनस्वरसादयो व्यस्ताः समस्ता वा बोध्याः । पूर्वोक्तस्याप्यार्द्रकरसस्य पुनरुपादानं समस्तपक्षे सम्प्रयोजनमेव ॥ ३ ॥

समुद्रेत्यादि ।—युक्त्येति—प्रथमं तैलेन कर्णं सञ्चार्यित्वा ततोऽवचूर्णनमिति युक्त्यर्थं इति केचित्; अन्ये तु शुक्तेन कर्णौ पूरयित्वा ततो समुद्रफेनावचूर्णनमिति युक्त्यर्थमाहुः; युक्तञ्चैतत्; यदाह वाग्भटः,—"शुक्तेन पूरयित्वा वा फेनेनान्ववचूर्णयेत्" (उ० १८ अ०) इति । अत एव समुद्रफेनचूर्णेनेत्यत्र "समुद्रफेनयुक्तेन" इति पाठान्तरं सुश्रुते केचित् पठन्ति; तन्मते समुद्रफेनयुक्तेनेति पदं पूर्वोक्तशुक्तविशेषणम् ।

कर्णशूले आर्द्रकादिस्वरसचतुष्टयम्।—

आर्द्रकसूर्य्यावर्त्तक-शोभाञ्जनमूलकस्वरसाः।
मधुतैलसैन्धवयुताः पृथगुष्णाः कर्णशूलहराः॥ ५॥

कर्णशूले शोभाञ्जनस्वरसपूरणम्।—

शोभाञ्जनकनिर्य्यासस्तिलतैलेन संयुतः।
व्यक्तोष्णः पूरणः कर्णे कर्णशूलोपशान्तये॥ ६॥

कर्णशूले मूत्राष्टकानामन्यतममूत्रपूरणम्।

अष्टानामपि मूत्राणां मूत्रेणान्यतमेन वा।
कोष्णेन पूरयेत् कर्णौ कर्णशूलोपशान्तये॥ ७॥

कर्णशूले अश्वत्थतैलपूरणम्।—

अश्वत्थपत्रखल्लं वा विधाय बहुपत्रकम्।
तैलाक्तमङ्गारपूर्णं विदध्यात् श्रवणोपरि॥ ८॥
यत् तैलं च्यवते तस्मात् खल्लादङ्गारतापितात्।
तत् प्राप्तं श्रवणस्रोतः सद्यो गृह्णाति वेदनाम्॥ ९॥

कर्णशूले पुटपक्वस्नुहीरसपूरणम्।—

अर्कपत्रपुटे दग्ध-स्नुहीपत्रभवो रसः।
कदुष्णः पूरणादेव कर्णशूलनिवारणः॥ १०॥

---

सुश्रुतेऽपि एतस्मात् पूर्वं—"कर्णं कोष्णेन मूत्रेण पूरयेत् कर्णशूलिनः" (उ० २१अ०) इत्युक्तम्, अस्मिन् पक्षे—युक्त्या इत्यस्य मात्रया इत्यर्थः॥ ४॥

आर्द्रकेत्यादि।—शोभाञ्जनं शोभाञ्जनमूलम्। मूलकन्तु मूलकन्दः। एते च कदुष्णीकृत्योपयोज्याः; अत एव पृथगुष्णा इत्यत्र "पृथगुष्णाः" इति पाठान्तरं केचित् पठन्ति॥ ५॥

शोभाञ्जनकेत्यादि।—शोभाञ्जननिर्य्यासः शोभाञ्जनमूलस्वरसः॥ ६।७॥

अश्वत्थेत्यादि सुश्रुतस्य।—अश्वत्थपत्रैर्बहुभिस्तैलाक्तैः तुलिकां आरभ्य कृत्वा तदुपरि ज्वलदङ्गारं विन्यस्य कर्णयोरुपरि धारयेत्, ततः पतिततैलेन कर्णपूरणम्। पित्तानुबन्धे तु तैलस्थाने सर्पिर्देयं, विदेहसंवादात्॥ ८।९॥

अर्कपत्रेत्यादि।—स्नुहीपत्रमर्कपत्रेण वेष्टयित्वा तदनु स्नुहीपत्रं दग्ध्वा पीडयित्वा तद्रसेन कर्णयोः पूरणमित्युपदेशः॥ १०॥

दीपिका-तैलम्।—

महतः पञ्चमूलस्य काण्डान्यष्टाङ्गुलानि च।
क्षौमेणावेष्ट्य संसिच्य तैलेनादीपयेत् ततः॥ ११॥
यत् तैलं च्यवते तेभ्यः सुखोष्णं तत् प्रयोजयेत्।
ज्ञेयं तद्दीपिकातैलं सद्यो गृह्णाति वेदनाम्॥ १२॥

दीपिकातैलान्तरत्रयम्।—

एवं कुर्य्याद्भद्रकाष्ठे कुष्ठे काष्ठे च सारले
मतिमान् दीपिकातैलं कर्णशूलनिवारणम्॥ १३॥

कर्णशूले अर्कपत्ररसपूरणम्।—

अर्कस्य पत्रं परिणामपीतमाज्येन लिप्तं शिखिनाऽवतप्तम्।
आपीड्य तोयं श्रवणे निषिक्तं निहन्ति शूलं बहुवेदनञ्च॥ १४॥

कर्णशूले छागमूत्रपूरणम्।—

तीव्रशूलान्विते कर्णे सशब्दे क्लेदवाहिनि।
वस्तमूत्रं क्षिपेत् कोष्णं सैन्धवेनावचूर्णितम्॥ १५॥

कर्णशूले वंशनेलीतैलम्।—

वंशावलेखसंयुक्ते मूत्रे चाजाविके भिषक्।

---

महत इत्यादि सुश्रुतस्य।—पञ्चमूलस्येति—बिल्वमूलादीनामन्यतमस्य। अष्टाङ्गुलानीति—अग्रभागे अष्टाङ्गुलानि व्याप्य क्षौमेण वेष्टनं कार्य्यमित्यर्थः, तेन तत् काष्ठमष्टाङ्गुलाधिकं कर्त्तव्यं यथा धर्त्तुं पार्य्यते इति। वृद्धास्तु अष्टादशाङ्गुलमितं पञ्चमूलकाष्ठं गृहीत्वा तस्याग्रभागेऽष्टाङ्गुलं व्याप्य तिलतैलाक्तं वस्त्रं बद्ध्वा प्रज्वाल्य ततो गलिततैलेन कर्णपूरणं कुर्वन्ति। स्वल्पवाग्भटे तु अष्टाङ्गुलादिपरिमाणं नोक्तम्; यथा—"महतः पञ्चमूलस्य काष्ठात् क्षौमेण वेष्टितात्। तैलसिक्तात् प्रदीप्ताग्रात् स्नेहः सद्यो रुजापहः॥" (उ० १८ अ०) इति॥ ११—१३॥

अर्कस्येत्यादि।—परिणामपीतमिति—कालप्रकर्षेण पाकवशात् पीतवर्णं शिखिना वह्निना अवतप्तं स्विन्नमित्यर्थः। तोयमिति—रसः। बहुवेदनमिति—नानाविधतोदभेदादिवेदनासहितम्॥ १४।१५॥

वंशेत्यादि सुश्रुतस्य।—वंशावलेखः वंशनेली, अस्याः कल्कः। मूत्रे चाजाविके इति—आजे वा आविके मूत्रे वा पचेदित्यर्थः; यदाह करालः,—"वंशावलेखकल्केन

तैलं पचेत् तेन कर्णं पूरयेत् कर्णशूलिनः ॥ १६ ॥

कर्णशूल-नादयोः हिङ्ग्वादितैलम् ।—

हिङ्गुतुम्बुरुशुण्ठीभिः साध्यं तैलन्तु सार्षपम् ।
कर्णशूले प्रणादे च पूरणं हितमुच्यते ॥ १७ ॥

क्षार-तैलम् ।—

बालमूलकशुण्ठीनां क्षारो हिङ्गु सनागरम् ।
शतपुष्पा वचा कुष्ठं दारु शिग्रु रसाञ्जनम् ॥ १८ ॥
सौवर्चलं यवक्षारः सर्जिकोद्भिदसैन्धवम् ।
भूर्जग्रन्थिविडं मुस्तं मधुशुक्तं चतुर्गुणम् ॥ १९ ॥
मातुलुङ्गरसश्चैव कदल्या रस एव च ।
तैलमेभिर्विपक्तव्यं कर्णशूलहरं परम् ॥ २० ॥
बाधिर्य्यं कर्णनादश्च पूयास्रावश्च दारुणः ।
पूरणादस्य तैलस्य क्रिमयः कर्णसंश्रिताः ॥ २१ ॥
क्षिप्रं विनाशं गच्छन्ति कृष्णात्रेयस्य शासनात् ।
क्षारतैलमिदं श्रेष्ठं मुखदन्तामयापहम् ॥ २२ ॥

---

मूत्रे आजेऽथवाऽऽविके । पचेत् तैलं ततः शान्त्यै कर्णयोः पूरणं भिषक् ॥" इति विदेहवचनात् घृतमप्यनेन विधिना पक्तव्यम् ॥ १६ ॥

हिङ्ग्वित्यादि ।—साध्यमिति जलचतुर्गुणेन ॥ १७ ॥

बालमूलकेत्यादि ।—मधुशुक्तं चतुर्गुणमिति—मधूपलक्षितं शुक्तं मधुशुक्तम्; एतेन "प्रस्थं तण्डुलतोयतः" इत्याद्युक्तस्य मधुरहितशुक्तस्य निषेधः, ग्रहणन्तु "यन्मस्त्वादि शुचौ भाण्डे" इत्याद्युक्तस्य, तथा "जम्बीरस्य फलरसम्" इत्यादिना चुक्रत्वेनैव वक्ष्यमाणस्य वा ज्ञेयम् । एतदेव मधुप्रधानं शुक्तमित्यादिना वक्ष्यति । अन्ये तु मध्विति छेदः, तेन मधुनः कल्कत्वं, शुक्तस्य चतुर्गुणत्वमित्याहुः । अपरे तु मधु चतुर्गुणं शुक्तञ्च चतुर्गुणमित्याचक्षते । एतन्मतद्वयमपि नोपपद्यते, समानतन्त्रे जतूकर्णे मधुनोऽपठितत्वात् । मातुलुङ्ग-कदलीवागुडास्वरसौ तु तैलसमौ, जतूकर्णसंवादात्; तत्र हि—"पक्वफलपूरकदलीरसैः समांशैः" इत्युक्तत्वात्, अतः षड्गुणः पाकः । अन्ये तु वाग्भटसंवादात् मातुलुङ्ग-कदलीस्वरसयोः प्रत्येकं चतुर्गुणत्वमाहुः; तत्र हि "मधुशुक्तं चतुर्गुणम् । मातुलुङ्ग-

मधुशुक्तद्वयम्।—

मधुप्रधानं शुक्तन्तु मधुशुक्तं तथाऽपरम्।
जम्बीरस्य फलरसं पिप्पलीमूलसंयुतम् ॥ २३ ॥
मधुभाण्डे विनिक्षिप्य धान्यराशौ निधापयेत्।
मासेन तज्जातरसं मधुशुक्तमुदाहृतम् ॥ २४ ॥

कर्णनादादौ कटुतैलपूरणं वातकर्णशूलचिकित्साऽतिदेशश्च।—

कर्णनादे कर्णक्ष्वेड़े कटुतैलेन पूरणम्।
नादबाधिर्य्ययोः कुर्य्याद्वातशूलोक्तमौषधम् ॥ २५ ॥

अपामार्गक्षार-तैलम्।—

मार्गक्षारजलेन च तत्कृतकल्केन साधितं तिलजम्।
अपहरति कर्णनादं बाधिर्य्यञ्चापि पूरणतः ॥ २६ ॥

स्वर्जिकाक्षार-तैलम्।—

स्वर्जिका मूलकं शुष्कं हिङ्गु कृष्णा महौषधम्।
शतपुष्पा च तैस्तैलं पक्वं शुक्तचतुर्गुणम् ॥
प्रणादशूलबाधिर्य्यं स्रावञ्चाशु व्यपोहति ॥ २७ ॥

दशमूली-तैलम्।—

दशमूलीकषायेण तैलप्रस्थं विपाचयेत्।
एतत्कल्कं प्रदायैव बाधिर्य्ये परमौषधम् ॥ २८ ॥

---

वरुणवत् कदलीस्वरसश्च" (उ० १८ अ०) इत्युक्तम्। उभयमपि प्रमाणं श्रुतिद्वैधवत्। व्यवहारस्तु पूर्ब्बेणैवेति ॥ १८—२२ ॥

मध्वित्यादि।—जम्बीरस्येति—जम्बीरफलरसस्य द्वात्रिंशत् पलानि, पिप्पलीमूलस्य तु चत्वारि, मधुनोऽष्टौ पलानि इति वृद्धवैद्योपदेशात् मानक्रमः॥ २३।२४ ॥

कर्णनादे इत्यादि।—कटुतैलं सार्षपतैलम् ॥ २५ ॥

मार्गेत्यादि।—मार्गः अपामार्गः। अपामार्गक्षारपलानि षोड़श, जलन्तु द्रवद्वैगुण्यात् चतुर्विंशतिशरावाः, एकविंशतिवारान् परिस्राव्य अतः क्षारजलात् षोड़श शरावा ग्राह्याः। तत्कृतकल्केनेति—अपामार्गकृतक्षारकल्केन; स च तैलशोषभयाज्जलेनालोड्य तैले देयः, यदा तु पिण्डीभूतात् कल्कात् तैलं सम्यक्

बिल्व-तैलम्।—

फलं बिल्वस्य मूत्रेण पिष्ट्वा तैलं विपाचयेत्।
साजाक्षीरं तद्धि हरेत् बाधिर्य्यं कर्णपूरणे॥ २९॥

प्रणाद-बाधिर्य्ययोः गुड़ादिनस्यम्।—

एष एव विधिः कार्य्यः प्रणादे नस्यपूर्वकः।
गुड़नागरतोयेन नस्यं स्यादुभयोरपि॥ ३०॥

कर्णस्रावे पञ्चकषाय-पूरणम्।—

चूर्णं पञ्चकषायाणां कपित्थरससंयुतम्।
कर्णस्रावे प्रशंसन्ति पूरणं मधुना सह॥ ३१॥

पूतिकर्णे मालतीरसादि-पूरणद्वयम्।—

मालतिदलरसमधुना पूरितमथवा गवां मूत्रैः।
दूरात् परित्यज्यते च श्रवणयुगलं पूतिरोगेण॥ ३२॥

---

पृथग्भूतं दृश्यते, तदेव तैलं पात्रान्तरे कृत्वा ग्राह्यं, न तु कल्को गालनीयः, क्षारमिश्रताभयात्। अन्ये तु—समासान्तर्भूतमपि मार्गपदं तच्छब्देन समाकृष्य अपामार्गमूलमेव कल्कमाहुः॥ २६—२८॥

फलमित्यादि।—मूत्रेणेत्यस्य पिष्ट्वेत्यनेन तथा विपाचयेदित्यनेन च सम्बन्धः, तदुक्तं तन्त्रान्तरे—"बिल्वगर्भं पचेत् तैलं गोमूत्राजपयोऽन्वितम्। बाधिर्य्ये पूरयेत् तेन कर्णौ सकफवातजे॥" इति। अत्राजक्षीरं तैलसमं, गोमूत्रं त्रिगुणं चतुर्गुणं वेत्याहुः॥ २९॥

एष एवेत्यादि।—विधिः बाधिर्य्यहरः। उभयोरपि बाधिर्य्यकर्णनादयोः॥३०॥

कर्णस्रावचिकित्सामाह, चूर्णमित्यादि सुश्रुतस्य।—पञ्चकषायाणां पञ्चवल्कलानां चूर्णम्; उक्तं हि तन्त्रान्तरे—"पञ्चवल्कलचूर्णञ्च कपित्थस्वरसान्वितम्। मधुना योजितं हन्यात् कर्णस्रावं प्रपूरणात्॥" इति। अन्ये तु पञ्चकषायशब्देन सौश्रुतम् एव कर्णस्रावोक्तं तिन्दुकादिपञ्चकमुच्यते, यथा—"तिन्दुकान्यभया लोध्रं समङ्गाऽऽमलकं मधु। पूरणञ्चात्र पथ्यं स्यात् कपित्थरसयोजितम्॥" (उ० २१ अ०) इति; न च उभयोरपि वचनयोः सौश्रुतत्वेन पौनरुक्त्यमिति वाच्यं, कटुरोगाध्यायोः योगद्वैविध्यादित्याहुः॥ ३१॥

पूतिकर्णे हरिताल-पूरणम्।—

हरितालं सगोमूत्रं पूरणं पूतिकर्णजित्॥ ३३॥

कर्णस्रावे सर्जत्वक्-पूरणम्।—

सर्जत्वक्चूर्णसंयुक्तः कार्पासीफलजो रसः।

मधुना संयुतः साधुः कर्णस्रावे प्रशस्यते॥ ३४॥

कर्णस्रावे जम्ब्वादिरस-पूरणम्।—

जम्ब्वाम्रपत्रं तरुणं समांशं कपित्थकार्पासफलञ्च सार्द्रम्।

क्षुत्त्वा रसं तन्मधुना विमिश्रं स्रावापहं सम्प्रवदन्ति तज्ज्ञाः॥३५॥

कर्णस्रावे जम्ब्वाद्यं तैलम्।—

एतैः शृतं निम्बकरञ्जतैलं ससार्षपं स्रावहरं प्रदिष्टम्॥॥ ३६॥

कर्णस्रावे पुटपक्वच्छत्राकरसपूरणम्।—

पुटपाकविधिस्विन्न-हस्तिविड्जातगोण्डकः।

रसः सतैलसिन्धूत्थः कर्णस्रावहरः परः॥ ३७॥

---

मालतीत्यादि।—मालतिदलेति छन्दोऽनुरोधात् ह्रस्वत्वम्॥ ३२।३३॥

सर्जेत्यादि सुश्रुतस्य।—सर्जः शालः। कार्पासी वनकार्पासी, ग्राम-कार्पासी वा; तथा च विदेहः,—"कार्पासीतुण्डिकेरीणां स्वरसो मधुसंयुतः। सर्जत्वक्चूर्णसंयुक्तः कर्णस्रावस्य भेषजम्॥" इति। अत्र कार्पासीफलरसमपेक्ष्य अर्द्धं मधु, मध्वपेक्षया च सर्जत्वक्चूर्णमर्द्धमिति वृद्धोपदेशः। साधुरिति कार्पासी-फलरसविशेषणं, तेन कीटाद्यनभ्यक्कार्पासीफलरसो ग्राह्य इति॥ ३४॥

जम्ब्वाम्रपत्रमित्यादि।—अत्र सार्द्रमिति सहशब्दः साकल्ये, "सह साकल्य इष्यते" इति मेदिनी, समन्तादार्द्रमित्यर्थः। क्षुत्त्वेति—सङ्कुट्येत्यर्थः॥ ३५॥

एतैरित्यादि।—एतैरिति—जम्ब्वाम्रपत्रादिभिः कल्करूपैरित्यर्थः। जलञ्चात्रापि चतुर्गुणम्। अन्ये तु जम्बूपत्रादिरसैरित्याहुः। एतन्मते त्वकल्क एवायं पाकः, पाकोत्तरकालश्च मधुप्रक्षेप इत्याहुः। निम्बकरञ्जतैलं निम्बबीज-करञ्जबीजभवं तैलं सार्षपतैलञ्च सम्मिश्र्य पक्तव्यम्। पृथगेव तैलत्रयं पक्तव्यमित्यन्ये॥ ३६॥

पुटपाकेत्यादि।—हस्तिविड्जातगोण्डकः हस्तिलण्डोद्भूतच्छत्रकः। रस इत्यत्र तस्येति शेषः; तेन हस्तिलण्डोद्भूतच्छत्रकरस इत्यर्थः। अन्ये तु कोण्टज इति पठन्ति। अपरे तु कोण्टकरस इति समस्तमेव पठन्ति, 'वैश्रवारपयोदधि। कांस्यभाजनतोयाभम्' इतिवत्॥ ३७॥

कर्णनाड्यां शम्बूकाद्यं तैलम्।—

शम्बूकस्य तु मांसेन कटुतैलं विपाचयेत्।
तस्य पूरणमात्रेण कर्णनाड़ी प्रशाम्यति ॥ ३८ ॥

कर्णनाड्यां धुस्तूराद्यं तैलम्।—

निशागन्धपले पक्वं कटुतैलं पलाष्टकम्।
धुस्तूरपत्रजरसे कर्णनाड़ीजिदुत्तमम् ॥ ३९ ॥

कर्णप्रतीनाहे क्रियासूत्रम्।—

अथ कर्णप्रतीनाहे स्नेहस्वेदौ प्रयोजयेत्।
ततो विरिक्तशिरसः क्रियां प्राप्तां समाचरेत् ॥ ४० ॥

कर्णपाके क्षतविसर्पचिकित्साऽतिदेशः।—

कर्णपाकस्य भेषज्यं कुर्य्यात् क्षतविसर्पवत् ॥ ४१ ॥

कर्णकण्ड्वां कफचिकित्साऽतिदेशः।—

नाड़ीस्वेदोऽथ वमनं धूमो मूर्द्धविरेचनम्।
विधिश्च कफहा सर्वः कर्णकण्डूं व्यपोहति ॥ ४२ ॥

कर्णगूथे तन्निःसारणविधिः।—

क्लेदयित्वा तु तैलेन स्वेदेन प्रविलाप्य च।
शोधयेत् कर्णगूथन्तु भिषक् सम्यक् शलाकया ॥ ४३ ॥

पूतिकर्णे निर्गुण्ड्यादिपूरणम्।—

निर्गुण्डीस्वरसस्तैलं सिन्धुधूमरजो गुड़ः।

---

शम्बूकस्येत्यादि।—शम्बूकमांसस्य कल्कः, जलं चतुर्गुणमिति ॥ ३८ ॥

निशेत्यादि।—निशा हरिद्रा। निशागन्धयोर्मिलित्वा पलमेकं, तथा धुस्तूरपत्रस्वरसस्य तैलसमः; उक्तं हि—"चूर्णेन गन्धकशिलारजनीभवेन मुष्ट्यंशिकेन कटुतैलपलाष्टकञ्च। धुस्तूरपत्ररसतुल्यमिदन्तु सिद्धं नाड़ीं जयेच्चिरभवामपि कर्णजाताम् ॥" इति। कटुतैलस्थाने केचित् कटुतैलं पठन्ति ॥ ३९ ॥

अथेत्यादि सुश्रुतस्य।—क्रियां प्राप्तामिति—दोषानुरूपाम् ॥ ४०।४१ ॥

नाड़ीस्वेद इत्यादि।—अत्र "स्नेहस्वेदः" इति पाठे—कफकृतायामपि कर्णकण्ड्वां स्नेहो वमनाङ्गतया बोध्यः ॥ ४२।४३ ॥

निर्गुण्डीत्यादि।—अत्र निर्गुण्डीस्वरसतिलतैलयोः प्रत्येकं माषकचतुष्टयं, गुड़-

पूरणात् पूतिकर्णस्य शमनो मधुसंयुतः ॥ ४४ ॥

पूतिकर्णे जातीतैलम्।—

जातीपत्ररसे तैलं विपक्वं पूतिकर्णजित् ॥ ४५ ॥

पूतिकर्णे वरुणादितैलं जातीपत्ररसश्च।—

वरुणार्ककपित्थाम्र-जम्बुपल्लवसाधितम्।

पूतिकर्णापहं तैलं जातीपत्ररसोऽथ वा ॥ ४६ ॥

क्रिमिकर्णे सूर्य्यावर्त्तस्वरसादिपूरणत्रयम्।—

सूर्य्यावर्त्तकस्वरसं सिन्धुवाररसं तथा।

लाङ्गलीमूलजरसं त्र्यूषणेनावचूर्णितम् ॥

पूरयेत् क्रिमिकर्णन्तु जन्तूनां नाशनं परम् ॥ ४७ ॥

क्रिमिकर्णे क्रिमिचिकित्साऽतिदेशः वार्त्ताक-सार्षपयोगौ च।—

क्रिमिकर्णकनाशार्थं क्रिमिघ्नं योजयेद्विधिम्।

वार्त्ताकुधूमश्च हितः सार्षपस्नेह एव च ॥ ४८ ॥

क्रिमिकर्णे लाङ्गल्यादिपूरणम्।—

हलिसूर्य्यावर्त्तव्योष-स्वरसेनाभिपूरिते।

कर्णे पतन्ति सहसा सर्वास्तु क्रिमिजातयः ॥ ४९ ॥

क्रिमिकर्णे नीलवुह्नादिपूरणम्।—

नीलवुह्नारसस्तैल-सिन्धुकाञ्जिकसंयुतः।

कटुष्णः पूरणात् कर्णे निःशेषक्रिमिपातनः ॥ ५० ॥

---

धूमचूर्णगुडयोस्तु प्रत्येकमेकमाषकं, मधुनस्तु माषकद्वयं, सैन्धवस्य तु रक्तिपञ्चकमिति व्यवहरन्ति ॥ ४४ ४५ ॥

वरुणेत्यादि।—अत्र वरुणादिपल्लवानां कल्कः ॥ ४६ ॥

सूर्य्यावर्त्तेत्यादि।—सूर्य्यावर्त्तकादिषु त्रिषु योगेषु व्योषचूर्णं प्रक्षेप्यम् ॥ ४७ ॥

क्रिमीत्यादि।—वार्त्ताकुधूम इति—परिणतवार्त्ताकुफलचूर्णम् अङ्गारसम्पुटे दत्त्वा नलिकया कर्णे धूमो देयः। वार्त्ताकुबीजेन धूमः कार्य्य इति वृद्धवाग्भटः ॥ ४८ ॥

कर्णदौर्गन्ध्ये गुग्गुलुधूपः।—

धूपनः कर्णदौर्गन्ध्ये गुग्गुलुः श्रेष्ठ उच्यते ॥ ॥ ५१ ॥

कर्णदौर्गन्ध्ये राजवृक्षादि-सुरसादिक्षालनद्वयं चूर्णद्वयञ्च।—

राजवृक्षादितोयेन सुरसादिजलेन वा।

कर्णप्रक्षालनं कुर्य्याच्चूर्णैरेतैः प्रपूरणम् ॥ ५२ ॥

कर्णस्राव-पूतिकर्णयोः रसाञ्जनप्रयोगः।—

श्रेष्ठं रसाञ्जनं नार्य्याः क्षीरेण क्षौद्रसंयुतम्।

प्रशस्यते चिरोत्थेऽपि सास्रावे पूतिकर्णके ॥ ५३ ॥

पूतिकर्णे कुष्ठाद्यं तैलम्।—

कुष्ठहिङ्गुवचादारु-शताह्वाविश्वसैन्धवैः।

पूतिकर्णापहं तैलं वस्तमूत्रेण साधितम् ॥ ५४ ॥

कर्णविद्रधौ विद्रधिचिकित्साऽतिदेशः।—

विद्रधौ चापि कुर्वीत विद्रध्युक्तं हि भेषजम् ॥ ५५ ॥

कर्णपालीवर्द्धने शतावर्य्यादि तैलम्।—

शतावरीवाजिगन्धा-पयस्यैरण्डबीजकैः।

तैलं विपक्वं सक्षीरं पालीनां पुष्टिकृत् परम् ॥ ५६ ॥

कर्णपालीवर्द्धने गुञ्जानवनीतम्।—

गुञ्जाचूर्णयुते जाते माहिषे क्षीर उद्धृतम्।

---

हलीत्यादि।—हली लाङ्गलीयामूलम्। हलीसूर्य्यावर्त्तयोर्व्योषयुक्तस्वरसेन कर्णपूरणमित्यर्थः ॥ ४९—५१ ॥

राजवृक्षेत्यादि।—राजवृक्षादिगणः आरग्वधादिगणः। सुरसादिः सुरसादिगणः। चूर्णैरेतैरिति—आरग्वधादिसुरसादिजैः ॥ ५२।५३ ॥

कुष्ठेत्यादि।—अत्र कुष्ठादीनां कल्कः ॥ ५४ ॥

विद्रधावित्यादि।—विद्रध्युक्तमिति—अन्तर्विद्रध्युक्तमिति श्रीकण्ठः ॥ ५५ ॥

शतावरीत्यादि वाग्भटस्य।—पयस्या क्षीरकाकोली, विदारीकन्द इत्यन्ये। एरण्डबीजकम् एरण्डस्य बीजं, न तु बीजकः पीतशालः, तस्य रूक्षत्वादिति। बीजकैरित्यत्र "जीवकैः" इत्येव पाठ इति निश्चलः ॥ ५६ ॥

नवनीतं तदभ्यङ्गात् कर्णपालिविवर्द्धनम् ॥ ५७ ॥

कर्णपालीवर्द्धने विषगर्भतैलम्।—

विषगर्भं तिक्ततुम्बी-तैलमष्टगुणे खर-।
मूत्रे पक्कं तदभ्यङ्गात् कर्णपालिविवर्द्धनम् ॥ ५८ ॥

कर्णपालीवर्द्धने जीवनीयाद्यं तैलम्।—

कल्केन जीवनीयेन तैलं पयसि साधितम्।
आनूपमांसक्काथेन पालीपोषणवर्द्धनम् ॥ ५९ ॥

कर्णपालीवर्द्धने मुसलीकन्दप्रयोगः।—

माहिषनवनीतयुतं सप्ताहं धान्यराशिपरिवासि तत्।
नवमुसलिकन्दचूर्णंवृद्धिकरं कर्णपालीनाम् ॥ ६० ॥

दुर्विद्धकर्णे मधुकादिलेपः।—

कर्णस्य दुर्व्यधे भूते संरम्भो वेदना भवेत्।
तत्र दुर्व्यधरोहार्थं लेपो मध्वाज्यसंयुतैः ॥
मधूकयवमञ्जिष्ठा-रुवुमूलैः समन्ततः ॥ ६१ ॥

छिन्नकर्णे संयोजनविधिः।—

अनेकधा तु च्छिन्नस्य सन्धिः कर्णस्य वै भिषक्।

---

गुञ्जेत्यादि।—गुञ्जाचूर्णं चीरापेक्षया अष्टमांशमित्याहुः। जाते इत्यत्र दध्नीति शेषः। अष्टमांशगुञ्जाचूर्णयुते महिषीचीरे जातस्य दध्नो नवनीतमित्यर्थः ॥ ५७ ॥

विषगर्भमित्यादि।—विषगर्भं विषकल्कम्। तिक्ततुम्बीबीजभवं तैलं तिक्ततुम्बी-तैलम्। खरस्य गर्दभस्य मूत्रे खरमूत्रे ॥ ५८ ॥

कल्केनेत्यादि वाग्भटस्य।—जीवनीयेनेति—जीवनीयदशकेन, अष्टवर्गेण वेत्यन्ये। दुग्धमत्र स्नेहसमम्, आनूपमांसक्काथस्तु त्रिगुणः। पोषणं पारम्पाहेन, वर्द्धनन्तु दैर्घ्येण ॥ ५९ ॥

माहिषेत्यादि।—सप्ताहं धान्यराशौ परिवस्तुं शीलमस्येति तत् तथा। नव-मुसलिकन्दचूर्णमिति—तत्क्षणानीतशुष्कतालमूलीकन्दचूर्णं पल २, माहिषनवनीत पल १, सम्मर्द्य सप्ताहं धान्यराशौ स्थाप्यमित्यर्थः ॥ ६० ॥

दुर्विद्धकर्णचिकित्सामाह, कर्णस्येत्यादि।—रुवुमूलम् एरण्डमूलम्; उक्तं हि तन्त्रान्तरे—"यदेरण्डजटासर्पिर्मधूकमधुसंयुतम्। त्रिकणाघवचूर्णं वा केवलं रोपणं हितम् ॥" इति; अत एव रुवुमूलस्थाने "रुवुतैलम्" इत्यपपाठः ॥ ६१ ॥

यो यथा विनिविष्टः स्यात् तं तथा विनियोजयेत् ॥ ६२ ॥

छिन्नकर्णे दोषभेदेन परिषेकमाह।—

धान्याम्लोष्णोदकाभ्यान्तु सेको वातेन दूषिते।
रक्तपित्तेन पयसा श्लेष्मणा तूष्णवारिणा ॥ ६३ ॥
ततः सीव्य स्थिरं कुर्य्यात् सन्धिं बन्धेन वा पुनः।
मध्वाज्येन ततोऽभ्यज्य पिचुना सन्धिवेष्टनम् ॥
कपालचूर्णेन ततश्चूर्णयेत् पथ्ययाऽथवा ॥ ६४ ॥

इति कर्णरोग-चिकित्सा।

---

छिन्नकर्णपालिसन्धानार्थं विधिमाह, अनेकधेत्यादि।—कर्णपालिच्छेदो हि हेतुद्वयेन भवति; उक्तं हि सुश्रुते—"एवं विवर्द्धितः कर्णश्छिद्यते तु द्विधा नृणाम्। दोषतो वाऽभिघाताद्वा" (सू० १६ अ०) इति। दोषत इति—वातादिकोपात्। छिन्नस्य कर्णस्येति—छिन्नायाः कर्णपालिकायाः। अत्र स्थूलह्रस्वदीर्घ-ऋजुतिर्य्यगादिभेदेन अनेकविधत्वात् तत्सन्धिरपि अनेकधा भवति; तत्र यः सन्धिर्यथा येन प्रकारेण विनिविष्टः सुसम्बद्धः स्यात्, तं सन्धिं तथा तेन प्रकारेण विनियोजयेत् सन्धानार्थं योजयेदित्यर्थः। तत्र सुश्रुते पञ्चदश छिन्नकर्णबन्धप्रकारा आकृतिभेदेनोक्ताः, ते च तत्रैव कर्णव्यधबन्धविध्यध्याये थानुसन्धेयाः, इह तु विस्तरभयान्नोक्तम ॥ ६२ ॥

तत्र दोषानुरूपं प्रक्षालनमाह, धान्याम्लेत्यादि।—पयसेति—दुग्धेन, शीतोदकेनेति वा; उक्तं हि सुश्रुते—"पित्तदुष्टे शीतोदकपयोभ्याम्" (सू० १६ अ०) इति। तत इत्यादौ तत इति—सन्धिद्रवसंयोगानन्तरम। सीव्येति—सीव तन्तुसन्ताने इत्यस्य ल्यपि रूपं क्रान्त्वा। सीव्येत्यत्र क्षौमसूत्रेणेति शेषः। सन्धिं कर्णपालिद्वयसन्धिं, क्षौमसूत्रेण सीव्य स्थिरं कुर्य्यात्, तथा बन्धेन वा सन्धिं स्थिरं कुर्य्यादित्यर्थः। तत इति—सन्धिस्थिरीकरणानन्तरं मधुघृताभ्यां सन्धिमभ्यज्य पिचुना तूलकपिण्डेन सन्धिवेष्टनं कुर्य्यात, सन्धिवेष्टनानन्तरञ्च सूत्रेण नातिगाढं नातिशिथिलञ्च बन्धनं बोध्यम्; उक्तं हि वाग्भटे—"अभ्यज्य मधुसर्पिर्भ्यां पिचुप्लोतावगुण्ठितम। सूत्रेणागाढशिथिलं बद्धा चूर्णैरवाकिरन् ॥" (उ० १८ अ०) इति। कपालः मृत्पात्रकपालः ॥ ६३।६४ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां कर्णरोग-चिकित्सा-विवृतिः।

# अथ नासारोग-चिकित्सा।

पीनसे पञ्चमूलीक्षीरादिप्रयोगोपदेशः।—

पञ्चमूलीशृतं क्षीरं स्याच्चित्रकहरीतकी।
सर्पिर्गुडः षडङ्गश्च यूषः पीनसशान्तये॥ १॥

पीनसादौ व्योषादिचूर्णम्।—

व्योषचित्रकतालीश-तिन्तिडी चाम्लवेतसम्।
सचव्याजाजितुल्यांशमेलात्वक्पत्रपादिकम्॥ २॥
व्योषादिकं चूर्णमिदं पुराणगुडसंयुतम्।
पीनसश्वासकासघ्नं रुचिस्वरकरं परम्॥ ३॥

अपीनसे पाठादि तैलम्।—

पाठाद्विरजनीमूर्वा-पिप्पलीजातिपल्लवैः।
दन्त्या च तैलं संसिद्धं नस्यं स्यादपीनसे॥ ४॥

पूतिनासायां व्याघ्री-तैलम्।—

व्याघ्रीदन्तीवचाशिग्रु-सुरसव्योषसैन्धवैः।
पाचितं नावनं तैलं पूतिनासागदं जयेत्॥ ५॥

---

उक्तसङ्गत्यैव कर्णरोगचिकित्सानन्तरं नासारोगचिकित्सितमुच्यते, पञ्चमूलीत्यादि।—पञ्चमूली स्वल्पेति निश्चलः, महतीत्यन्ये। चित्रकहरीतकी अत्रैवाधिकारे वाच्या। सर्पिर्गुड-षडङ्गयूषौ यक्ष्मोक्तौ। इदन्तु क्रियासूत्रं पीनसे बोध्यम्॥ १॥

व्योषेत्यादि।—व्योषादिचूर्णे व्योषः त्रिकटु। तिन्तिडी महार्द्रकम्। अजाजी जीरकम्। एलात्वक्पत्रपादिकमिति—एलात्वक्पत्राणि प्रत्येकमेकभागापेक्षया पादिकं, गुडस्तु सर्वचूर्णसम इति निश्चलः; किन्तु "तालीशचित्रकव्योष तिन्तिडी-काम्लवेतसम्। सचव्याजाजीद्विपलमेलात्वक्पत्रपादिकम्॥ जीर्णाद्गुडात् तुलार्द्धेन पक्वेन वटकीकृतम्। पीनसश्वासकासघ्नं रुचिस्वरकरं परम्॥" (उ० २० अ०) इति वाग्भटे सार्द्धोनविंशतिपलचूर्णे गुडतुलार्द्धस्योक्तत्वात् गुडस्य सर्वचूर्णसमत्वं नोपपद्यते इति॥ २।३॥

पाठेत्यादि।—पाठादीनां कल्कः, जलं चतुर्गुणमिति॥ ४॥

व्याघ्रीत्यादि।—सुरसः सिन्धुवारः, पर्णास इत्यन्ये॥ ५॥

पूतिनस्ये त्रिकट्वाद्यं तैलम्।—

त्रिकटुविड़ङ्गसैन्धवबृहतीफलशिग्रुसुरसदन्तीभिः।
तैलं गोजलसिद्धं नस्यं स्यात् पूतिनस्यस्य॥ ६॥

पूतिनस्ये कलिङ्गाद्यवपीड़ः।—

कलिङ्गहिङ्गुमरिच-लाक्षासुरसकट्फलैः।
कुष्ठोग्राशिग्रुजन्तुघ्नैरवपीड़ः प्रशस्यते॥ ७॥

पूतिनस्ये कलिङ्गादितैलम्।—

तैरेव मूत्रसंयुक्तैः कटुतैलं विपाचयेत्।
अपीनसे पूतिनस्ये शमनं कीर्त्तितं परम्॥ ८॥

नासापाके पित्तहरचिकित्सा-क्षीरिवृक्षत्वगाद्युपदेशः।—

नासापाके पित्तहरं विधानं
कार्य्यं सर्वं वाह्यमाभ्यन्तरञ्च।
हत्वा रक्तं क्षीरिवृक्षत्वचश्च
योज्याः सेके सघृताश्च प्रदेहाः॥ ९॥

नासापाके पूयरक्तादिहरकषायादिप्रयोगोपदेशः।—

पूयास्रक्तपित्तघ्नाः कषाया नावनानि च॥ १०॥

---

त्रिकट्वित्यादि।—अत्रापि सुरसः सिन्धुवारः, पर्णास इत्यन्ये। अत्र शिग्रुवीजं दन्तीवीजञ्च ग्राह्यं, तथा बृहतीफलस्यापि वीजम्; उक्तं हि वाग्भटे—"शिग्रुसिंही-निकुम्भानां वीजैः सव्योषसैन्धवैः। सबिल्वसुरसैस्तैलं नावनं परमं हितम्॥" (उ० २० अ०) इति॥ ६॥

कलिङ्गेत्यादि।—सुरसः पर्णासः। उग्रा वचा। जन्तुघ्नः विडङ्गः। अत्रापि वक्ष्यमाणमूत्रसंयुक्तैरित्यस्य सम्बन्धं कृत्वा अवपीड़मपि मूत्रेण पिष्टं कुर्य्यात्। तैलपाके तु गोमूत्रमेव चतुर्गुणमिति॥ ७।८॥

नासापाके इत्यादि।—पित्तहरं विधानमित्यत्र "पित्तहृत् संविधानम्" इति पाठो रत्नप्रभासम्मतः। हरेद्रक्तमित्यत्र "हत्वा रक्तम्" इत्यपि तथा। वाह्यमाभ्यन्तरञ्चेति—वाह्यं लेपादि, आभ्यन्तरं स्नेहपानादि। क्षीरिवृक्षाः वटोडुम्बरादयः पञ्च॥ ९।१०॥

क्षवथौ शुण्ठ्यादितैलम्रुते ।—

शुण्ठीकुष्ठकणाविल्व-द्राक्षाकल्ककषायवत् ।
साधितं तैलमाज्यं वा नस्यं क्षवपुटप्रणुत् ॥ ११ ॥

दीप्ते पैत्तिकचिकित्साऽतिदेशः नासानाहे स्नेहपानाद्युपदेशश्च ।—

दीप्ते रोगे पैत्तिके पैत्तिकन्तु
विधिं कुर्य्यान्मधुरं शीतलञ्च ।
नासाऽऽनाहे स्नेहपानं प्रधानं
स्निग्धा धूमा मूर्द्धवस्तिश्च नित्यम् ॥ १२ ॥

वातप्रतिश्याये लावणघृत-विदारिगन्धादिघृते ।—

वातिके तु प्रतिश्याये पिबेत् सर्पिर्यथाक्रमम् ।
पञ्चभिर्लवणैः सिद्धं प्रथमेन गणेन वा ॥ १३ ॥

वातप्रतिश्याये अर्दितोक्तनस्याद्यतिदेशः ।—

नस्यादिषु विधिं कृत्स्नमवेक्षेतार्दितेरितम् ॥ १४ ॥

---

शुण्ठीत्यादि वाग्भटस्य ।—विल्वं विल्वस्य मूलम् । "क्षवपुटप्रणुत्" इत्येव पाठो वाग्भटे तु दृश्यते, टीकायाञ्चैवमेवोक्तम् ; अस्यार्थमबुद्धैव "क्षवथुकफप्रणुत्" इति पाठमज्ञाः कुर्वन्ति ; क्षवः क्षवथुः, पुटोऽपि नासारोगविशेषः ; उक्तं हि वाग्भटे —"पित्तश्लेष्मावरुद्धोऽन्तर्नासायां शोषयेन्मरुत् । कफं संशुष्कपुटतां प्राप्नोति पुटकन्तु तत् ॥" ( उ० १९ अ० ) इति ॥ ११ ॥

दीप्ते इत्यादि सुश्रुतस्य ।—"दीप्ते रोगे पैत्तिकं संविधानम्" ( उ० २३ अ० ) इति पाठः सुश्रुते दृश्यते ॥ १२ ॥

वातिके इत्यादि सुश्रुतस्य । यथाक्रममिति—स्नेहोपयौगिकाध्यायोक्तविध्यनति-क्रमेण । पञ्चभिर्लवणैरिति पञ्चभिर्लवणैः कल्करूपैः सिद्धं सर्पिः पिबेत् । प्रथमेन गणेनेति—विदारीगन्धादिगणेन वा क्वाथकल्करूपेण सिद्धं सर्पिः पिबेदित्यर्थः । तथा नस्यादिकर्मसु कर्त्तव्येषु अर्दितोक्तं विधिम् अवेक्षेत जानीयात् ; वाग्भटेऽप्युक्तं—"पिबेत् वातप्रतिश्याये सर्पिर्वातघ्नसाधितम् । षट्पञ्चकसिद्धं वा विदार्य्यादिगणेन वा ॥ स्वेदनस्यादिकां कुर्य्यात् चिकित्सामार्दितेरिताम् ॥" ( उ० २० अ० ) इति । अन्ये त्वाहुः, प्रथमेन गणेनेत्येतन्नस्यादिष्वित्यनेन सम्बध्यते, तेन प्रथमेन गणेन सिद्धं

पित्तरक्तप्रतिश्यायरयोः काकोल्यादिघृतादिकम् ।—

पित्तरक्तोत्थयोः पेयं सर्पिर्मधुरकैः शृतम् ।
परिषेकान् प्रदेहांश्च कुर्य्यादपि च शीतलान् ॥ १५ ॥

कफप्रतिश्याये वमनाद्युपदेशः ।—

कफजे सर्पिषा स्निग्धं तिलमाषविपक्वया ।
यवाग्वा वामयित्वा वा कफघ्नं क्रममाचरेत् ॥ १६ ॥

कफप्रतिश्याये दार्व्यादिधूमवर्त्तिः ।—

दार्वीङ्गुदीनिकुम्भैश्च किणिह्या सुरसेन च ।
वर्त्तयोऽत्र कृता योज्या धूमपाने यथाविधि ॥ १७ ॥

नवप्रतिश्याये शक्तुधूमः ।—

अथवा सघृतान् शक्तून् कृत्वा मल्लकसम्पुटे ।
नवप्रतिश्यायवतां धूमं वैद्यः प्रयोजयेत् ॥ १८ ॥

प्रतिश्याये शीतोदकम् ।—

यः पिबति शयनकाले शयनारूढ़ः सुशीतलं भूरि ।

---

सर्पिःस्वेदोपनाहशिरोबस्त्यादिषु योज्यमित्यर्थः । एतत्तु वाग्भटविरोधादुपेक्षणीय-मिति ॥ १३।१४ ॥

पित्तेत्यादि सुश्रुतस्य ।—पित्तरक्तोत्थयोः, प्रतिश्याययोरिति शेषः । मधुरकैः शृत-मिति—काकोल्यादिभिर्विपक्वम् । शीतलानिति—न्यग्रोधाद्युत्पलादिगणाः शीतलास्तैः कृतान् ॥ १५ ॥

कफजे इत्यादि सुश्रुतस्य ।—तिलमाषौ कल्करूपौ । अत्र मदनफलमपि बोध्यं, वमनयोगात् । कफघ्नं क्रममिति—कफहरद्रव्यकृतपेयादिक्रमम् ॥ १६ ॥

दार्वीत्यादि सुश्रुतस्य ।—दार्वी दारुहरिद्रा । इङ्गुदी पुत्रजीवकः । निकुम्भः दन्ती, तस्या बीजं मूलं वा । किणिही कटभीबीजम्, अपामार्ग इत्यन्ये । सुरसः पर्णासः, निर्गुण्डी वा । सुरसेनेत्यत्र "सरलेन" इति सुश्रुते पठ्यते ; तन्मते सरलं सरलकाष्ठमेव । यथाविधीति—वैरेचनिकधूमवर्त्तिविधानक्रमेण ॥ १७ ॥

अथवेत्यादि ।—यवशक्तून् सघृतान् शरावस्थिताङ्गारे दत्त्वा तदुपरि कृत-च्छिद्रेण शरावान्तरेण पिधाय तस्मिन्नेव छिद्रे नलिकां दत्त्वा धूमं पिबेदित्यर्थः ॥ १८ ॥

सलिलं पीनसयुक्तः स मुच्यते तेन रोगेण ॥ १९ ॥

प्रतिश्याये जयापुटपाकः।—

पुटपक्वं जयापत्रं सिन्धुतैलसमन्वितम्।
प्रतिश्यायेषु सर्वेषु शीलितं परमौषधम् ॥ २० ॥

नवप्रतिश्याये दधिप्रयोगः।—

मोषणं गुड़संयुक्तं स्निग्धदध्यम्लभोजनम्।
नवप्रतिश्यायहरं विशेषात् कफपाचनम् ॥ २१ ॥

नवप्रतिश्याये चिञ्चायूषः।—

प्रतिश्याये नवे शस्तो यूषश्चिञ्चादलोद्भवः।
ततः पक्वं कफं ज्ञात्वा हरेच्छीर्षविरेचनैः ॥ २२ ॥

नवप्रतिश्याये शिरोऽभ्यङ्गाद्युपदेशः।—

शिरसोऽभ्यञ्जनस्वेद-नस्यकट्वम्लभोजनैः।
वमनैर्घृतपानैश्च तान् यथास्वमुपाचरेत् ॥ २३ ॥

पुराणप्रतिश्याये माषप्रयोगः।—

भक्षयति भुक्तमात्रे सलवणमुत्स्विन्नमाषमत्युष्णम्।
स जयति सर्वसमुत्थं चिरजातञ्च प्रतिश्यायम् ॥ २४ ॥

प्रतिश्याये पिप्पल्याद्यवपीडः।—

पिप्पल्यः शिग्रुबीजानि विड़ङ्गं मरिचानि च।
अवपीड़ः प्रशस्तोऽयं प्रतिश्यायनिवारणः ॥ २५ ॥

---

यः पिबतीत्यादि।—योगोऽयं वातपित्तोत्तरे प्रतिश्याये बोध्यः ॥ १९ ॥

पुटेत्यादि।—जया जयन्ती ॥ २० ॥

मोषणमित्यादि।—ऊषणं मरिचम्। योगोऽयं वातिके इत्याहुः ॥ २१ ॥

प्रतिश्याये इत्यादि।—यूषः क्वाथः। चिञ्चा तिन्तिड़ी, तस्याः दलः पत्रम्। अत्र हिङ्गुमरिचचूर्णं मात्रानुरूपं प्रक्षिपन्ति वृद्धाः ॥ २२ ॥

शिरस इत्यादि।—यथास्वमिति—पक्वे शिरोऽभ्यञ्जनस्वेदपानानि, शेषविधानन्तु अपक्वे ॥ २३ ॥

भक्षयतीत्यादि।—योगोऽयं वातोत्तरे बोध्यः ॥ २४।२५ ॥

क्रिमियुक्तप्रतिश्याये क्रिमिचिकित्साऽतिदेशः ।—

समूत्रपिष्टास्तूद्दिष्टाः क्रियाः क्रिमिषु योजयेत् ।
नावनार्थं क्रिमिघ्नानि भेषजानि च बुद्धिमान् ॥ २६ ॥

अवशिष्टनासारोगाणां चिकित्साऽतिदेशः ।—

शेषाणान्तु विकाराणां यथास्वं स्याच्चिकित्सितम् ॥ २७ ॥

नासार्शःसु करवीराद्यं तैलम् ।—

रक्तकरवीरपुष्पं जात्यशनमल्लिकायाश्च ।
एतैः समन्तु तैलं नासार्शोनाशनं श्रेष्ठम् ॥ २८ ॥

नासार्शःसु गृहधूमादि-तैलम् ।—

गृहधूमकणादारु-क्षारनक्ताह्वसैन्धवैः ।
सिद्धं शिखरिवीजैश्च तैलं नासार्शसां हितम् ॥ २९ ॥

नासार्शःसु चित्रक-तैलम् ।—

चित्रकचविकादीप्यक-निदिग्धिकाकरञ्जवीजलवणार्कैः ।
गोमूत्रयुक्तं सिद्धं तैलं नासार्शसां विहितम् ॥ ३० ॥

---

समूत्रेत्यादि सुश्रुतस्य ।—समूत्रं यथा स्यात् तथा पिष्टाः, कर्मधारयो वा। उद्दिष्टा इति—सुश्रुतेऽनन्तरोक्ताः सर्वाः क्रियाः मूत्रपिष्टाः प्रतिश्याये क्रिमिसम्बन्धे सति योजयेदित्यर्थः। अन्ये तु क्रिमिषु याः क्रियाः उक्तास्ताश्च सर्वा मूत्रपिष्टा योजयेदित्याहुः। क्रिमिघ्नानि भेषजानीति—सुरसादिगणप्रभृतीनि ॥ २६ ॥

शेषाणामित्यादि।—शेषाणान्तु विकाराणामिति—नासाऽर्बुद-नासाऽर्शःप्रभृतीनाम्। यथास्वमिति—यत् यत् स्वं यथास्वमिति वीप्सायामव्ययीभावः ॥ २७ ॥

रक्तकरवीरेत्यादि।—जाती मालती, तस्या अपि पुष्पम्। अशनमल्लिका आस्फोटमल्लिका। जात्यशनेति संहितानिर्देशोऽसिद्धविधेरनित्यत्वात्। एतैः सममिति—एतैः कल्करूपैः सह पक्वमित्यर्थः। पाकार्थन्तु जलं चतुर्गुणमिति ज्ञेयम् ॥ २८ ॥

गृहधूमेत्यादि।—क्षारः यवक्षारः। नक्ताह्वः करञ्जवीजम्। शिखरिवीजम् अपामार्गवीजतण्डुलः। अत्रापि जलं चतुर्गुणं देयम् ॥ २९ ॥

चित्रकेत्यादि।—दीप्यकं यमानी। लवणं सैन्धवम्। अर्कम् अर्कक्षीरम् ॥ ३० ॥

चित्रकहरीतकी ।—

चित्रकस्यामलक्याश्च गुडूच्या दशमूलजम् ।
शतं शतं रसं दत्त्वा पथ्याचूर्णाढकं गुडात् ॥ ३१ ॥
शतं पचेद्घनीभूते पलद्वादशकं क्षिपेत् ।
व्योषत्रिजातयोः क्षारात् पलार्द्धमपरेऽहनि ॥ ३२ ॥
प्रस्थार्द्धं मधुनो दत्त्वा यथाऽग्न्यश्यादतन्द्रितः ।
वृद्धयेऽग्नेः क्षयं कासं पीनसं दुस्तरं क्रिमीन् ॥
गुल्मोदावर्त्तदुर्नाम श्वासान् हन्ति रसायनम् ॥ ३३ ॥

इति नासारोग-चिकित्सा ।

---

## अथ नेत्ररोग-चिकित्सा ।

अभिष्यन्दे क्रियासूत्रम् ।—

लङ्घनालेपनस्वेद-शिराव्यधविरेचनैः ।
उपाचरेदभिष्यन्दानञ्जनाश्च्योतनादिभिः ॥ १ ॥

---

चित्रकस्येत्यादि ।—चित्रकहरीतक्यां चित्रकस्य पञ्चाशत् पलानि, जलशरावाः पञ्चाशत्, स्थाप्यास्तु सार्द्धद्वादशशरावाः, एवं चित्रकस्य क्वाथस्य पलशतं भवति । आमलकीस्वरसस्यापि पलशतं, स्वरसाभावे त्वयमेव स्वरसविधिः । एवं गुडूच्याः मिलितदशमूलस्य च क्वाथविधिः । व्योषत्रिजातयोर्मिलित्वा पलद्वादशकम् । पलार्द्धमिति क्षारादित्यनेनैव सम्बध्यते । अपरेऽहनीति परेण सम्बध्यते ॥ ३१—३३ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां नासारोग-चिकित्सा-विवृतिः ।

---

उक्तसंवादादेव नेत्ररोगचिकित्सामाह, तत्राभिष्यन्दस्य निखिलनेत्ररोगमूलत्वेन प्राधान्यात् प्रथमतोऽभिष्यन्दप्रतिकारमाह, लङ्घनेत्यादि ।—लङ्घनमत्र लघ्वन्नमुपवासो वा ; उक्तं हि—"प्रागेवाक्ष्यामये भुक्तं विरावनगुरु स्थितम् । उपवासस्त्र्यहं वा स्यात्—" इति । किन्तु उपवासो वातजादन्यत्र विधेयः, वाग्भटसंवादात् । स्वेदोऽपि पित्तजं विना नयनापान्ते मृदुर्भीष्यः ; यदुक्तं—"वृषणौ हृदयं दृष्टी

अव्यक्ताभिष्यन्दे श्रीवासादिगुण्ठनम् ।—

श्रीवासातिविषालोध्रैस्त्रुटितैरल्पसैन्धवैः ।
अव्यक्तेऽक्षिगदे कार्य्यं प्रोतस्थैर्गुण्ठनं वहिः ॥ २ ॥

लङ्घनप्रयोगस्य दिननियमः ।—

अक्षिकुक्षिभवा रोगाः प्रतिश्यायव्रणज्वराः ।
पञ्चैते पञ्चरात्रेण प्रशमं यान्ति लङ्घनात् ॥ ३ ॥

पाचनानि ।—

स्वेदः प्रलेपस्तिक्तान्नं सेको दिनचतुष्टयम् ।
लङ्घनञ्चाक्षिरोगाणामामानां पाचनानि षट् ॥ ४ ॥

आमावस्थायाम् अञ्जनादिनिषेधः ।—

अञ्जनं पूरणं क्वाथ-पानमामे न शस्यते ॥ ५ ॥

नवाभिष्यन्दे धात्रीफलाद्याश्चोतनद्वयम् ।—

धात्रीफलनिर्य्यासो नवदृक्कोपं निहन्ति पूरणतः ।

---

स्वेदयेत् मृदु वा न वा" ( च० सू० स्वेदाध्या० ) इति। शिराव्यधो रक्तदुष्टौ सत्यां शिराव्यधनम्। विरेचनं शिरसः कायस्य च; तत्र शिरोविरेचनन्तु नवे, कायविरेचनञ्च जीर्णे ज्ञेयम्। आदिशब्देन तर्पणपुटपाकक्वाथादिपरिग्रहः ॥ १ ॥

श्रीवासेत्यादि।—श्रीवासः देवदारु। अल्पसैन्धवैरिति—एकभागापेक्षया चतुर्भागत्वं सैन्धवस्येत्याहुः। अव्यक्ते इति—पूर्वरूपे। प्रोतस्थैरिति—कर्पटबद्धैः। गुण्ठनम् अवचूर्णनम्। एतच्च मुकुलिते चक्षुःपत्रे, न तु विस्तारिते ॥ २ ॥

अक्षिकुक्षिभवा इत्यादि।—कुक्षिभवा अतीसारविलम्बिकादयः। पञ्चरात्रेण इत्युपलक्षणं, तेन त्र्यहमपि बोध्यम्; यदाह विदेहः,—"उपवासस्त्र्यहं वा स्यात्" इति। अयञ्च मतभेदो दोषप्रकोपतारतम्यान्न विरोधमावहति ॥ ३ ॥

स्वेद इत्यादि।—अत्र सेकः वासकादिक्वाथादिना चक्षुःसेचनमाश्चोतनशब्दवाच्यं, न तु पूरणं, तस्यामे निषेधात्; आश्चोतनं पुनरामे क्रियते एव; यदुक्तं,—"सर्वेषामक्षिरोगाणामादावाश्चोतनं हितम्" इति। दिनचतुष्टयमिति—दिनचतुष्टयं स्वरूपत एव ज्वराष्टाहवदिति ॥ ४ ॥

आमे नेत्ररोगे अञ्जनादिकं न कार्य्यमित्याह, अञ्जनमित्यादि।—पूरणम् आश्चोतनम् ॥ ५ ॥

सक्षौद्रसैन्धवो वा शिग्रुद्भवपत्ररसमसेकः ॥ ६ ॥

अभिष्यन्दे रसाञ्जनाश्चोतनम्।—

दार्वीरसाञ्जनं वाऽपि स्तन्ययुक्तं प्रपूरणम्।
निहन्ति शीघ्रं दाहाश्रु-वेदनाः स्यन्दसम्भवाः ॥ ७ ॥

नवाभिष्यन्दे करवीररसाश्चोतनम्।—

करवीरतरुणकिशलयच्छेदोद्भवबहुलसलिलसम्पूर्णम्।
नयनयुगं भवति दृढ़ं सहसैव तत्क्षणात् कुपितम् ॥ ८ ॥

नवाभिष्यन्दे अपामार्गमूलाश्चोतनम्।—

शिखरिजमूलं ताम्रभाजने स्तोकसैन्धवोन्मिश्रम्।
मस्तुनिघृष्टं भरणाद्धरति नवं लोचनोत्कोपम् ॥ ९ ॥

सर्वाक्षिरोगे सैन्धवादिविड़ालकः।—

सैन्धवदारुहरिद्रा-गैरिकपथ्यारसाञ्जनैः पिष्टैः।
दत्तो बहिः प्रलेपो भवत्यशेषाक्षिरोगहरः ॥ १० ॥

सर्वाक्षिरोगे लोध्र-हरीतकीविड़ालकौ।—

तथा शावरकं लोध्रं घृतभृष्टं विड़ालकः।
कार्य्यो हरीतकी तद्वत् घृतभृष्टा विड़ालकः ॥ ११ ॥

---

सावीत्यादि।—पूरणशब्देनाश्चोतनं वाच्यम्। सक्षौद्रसैन्धवो वेति—शोभाञ्जनपत्ररसमाषकचतुष्टयं, मधु माषैकं, सैन्धवं रक्तिद्वयम् ॥ ६ ॥

दार्वीत्यादि।—दार्वीरसाञ्जनं दारुहरिद्राक्राथकृतं रसाञ्जनम्। स्यन्दसम्भवा इति—अभिष्यन्दसम्भवाः ॥ ७ ॥

करवीरेत्यादि।—तरुणमभिनवं यत् किशलयं, तस्य छेदात् यो रसो निर्गच्छति, तेन पूरणमित्यर्थः ॥ ८ ॥

शिखरिजेत्यादि।—शिखरि अपामार्गः। स्तोकसैन्धवं रक्तिद्वयं रक्तित्रयं वा सैन्धवमित्यर्थः। भरणादिति—पूरणात् ॥ ९ ॥

सैन्धवेत्यादि।—एतैः स्तोकसैन्धवसहितैः समभागपिष्टैः सुक्ष्मवस्त्रोपरि निमीलितचक्षुषि लेपो देयः ; एवं वक्ष्यमाणविड़ालकद्वयेऽपि ज्ञेयमित्याहुः ॥ १० ॥

तथेत्यादि।—शावरकं लोध्रमिति—श्वेतलोध्रम् ॥ ११ ॥

विड़ालकलक्षणम् ।—

आलाक्येऽक्ष्णोर्बहिर्लेपो विड़ालक उदाहृतः ॥ १२ ॥

अभिष्यन्दे गैरिकादिविड़ालकः ।—

गिरिमृच्चन्दननागर-खटिकांऽशयोजितो बहिर्लेपः ।
कुरुते वचया मिश्रो लोचनमगदं न सन्देहः ॥ १३ ॥

अभिष्यन्दे भूम्यामलक्यादिविड़ालकः ।—

भूम्यामलकी घृष्टा ससैन्धवगृहवारियोजिता ताम्रे ।
जाता घनत्वमक्ष्णोर्जयति बहिर्लेपतः पीड़ाम् ॥ १४ ॥

वाताभिष्यन्दे विल्वाद्याश्च्योतनम् ।—

आश्च्योतनं मारुतजे क्वाथो विल्वादिभिर्हितः ।
कोष्णः सैरण्डबृहती-तर्कारीमधुशिग्रुभिः ॥ १५ ॥

अभिष्यन्दे एरण्डादिक्षीरसेकः ।—

एरण्डपल्लवे मूले त्वचि चाजं पयः शृतम् ।
कण्टकार्य्याश्च मूलेषु सुखोष्णं सेचने हितम् ॥ १६ ॥

---

विड़ालकशब्दार्थमाह, आलाक्ये इत्यादि।—आलाक्ये आलाक्यग्रन्थे, सुश्रुते इति यावत् ॥ १२ ॥

गिरिमृदित्यादि।—अंशः भागः। एतैः समभागपिष्टैश्चक्षुःसमीपे लेपः कार्य्य इत्याहुः ॥ १३ ॥

भूम्यामलकीत्यादि।—अत्र गृहवारि काञ्जिकम् ॥ १४ ॥

आश्च्योतनमित्यादि।—आश्च्योतनम् अक्षिसेकः। विल्वादि महत् पञ्चमूलम्। तर्कारी जयन्ती। मधुशिग्रु रक्तशोभाञ्जनम्। विल्वादिभिरित्यस्य सैरण्डेत्यादि विशेषणं, तेन एक एवायं योगः; यदाह जतूकर्णः,—"महत्पञ्चमूलरुवुकशिग्रुतर्कारीसिंहीक्वाथः" इति; किन्तु तन्त्रान्तरे केवलविल्वादिक्वाथेनाप्ययं योगो दृश्यते; यथा—"पूरणं तीव्रशूलघ्नं तथा विल्वादिनाम्भसा" इति। किन्तु योगद्वयपक्षे सैरण्डेति बृहत्यादिविशेषणं, न तु विल्वादिविशेषणम्, एकयोगत्वप्रसङ्गात् ॥ १५ ॥

एरण्डेत्यादि सुश्रुतस्य।—एरण्डपल्लवादिकण्टकार्य्या मूलान्त एक एवायं योगः, विदेहसंवादात्; यथा—"कण्टकारीत्रिफैरण्ड-मूलत्वक्पत्रसाधितम्।

अञ्जनादिकालनिर्देशः।—

सम्यक्केऽक्षिगदे कार्य्यमञ्जनादिकमिष्यते ॥ १७ ॥

पक्काभिष्यन्दलक्षणम्।—

प्रशस्तवर्त्मता चाक्ष्णोः संरम्भाश्रुप्रशान्तता।

मन्दवेदनता कण्डूः पक्काक्षिगदलक्षणम् ॥ १८ ॥

अञ्जनादीनामग्रे अभिधाननिर्देशः।—

अञ्जनादिविधिश्चाग्रे निखिलेनाभिधास्यते ॥ १९ ॥

वाताभिष्यन्दे बृहत्यादिवर्त्तिः।—

बृहत्येरण्डमूलत्वक् शिग्रोर्मूलं ससैन्धवम्।

अजाक्षीरेण पिष्टं स्याद्वर्त्तिर्वाताक्षिरोगनुत् ॥ २० ॥

वाताभिष्यन्दे हरिद्राद्यञ्जनम्।—

हरिद्रे मधुकं द्राक्षां देवदारु च पेषयेत्।

आजेन पयसा श्रेष्ठमभिष्यन्दे तदञ्जनम् ॥ २१ ॥

वाताभिष्यन्दे गैरिकाद्यञ्जनम्।—

गैरिकं सैन्धवं कृष्णां तगरञ्च यथोत्तरम्।

---

क्षीरमाजं हितं सेके चक्षुःस्यन्दाभिमन्थयोः॥" इति। आजं पयोऽत्र क्षीरपरिभाषयैव साध्यम्। अन्ये त्वाहुः, एतद्योगानन्तरं सुश्रुते—"सैन्धवौदीच्ययष्ट्याह्वपिप्पलीभिः शृतं पयः। हितमर्द्धोदकं सेके" (उ० ९ अ०) इति पठ्यते; एतद्वचनन्तु सर्व्वमाश्रुतीतक्षीरसाधनार्थं परिभाषास्थानीयं, तेनात्रापि अर्द्धोदकं क्षीरं साध्यमिति; किन्तु अत्र विशेषानुक्त्या क्षीरपरिभाषयैव साधनमिति युक्तमुत्पश्यामः, व्यवहारोऽपि क्षीरसाधनपरिभाषयैवेति ॥ १६ ॥

अञ्जनादिविधानस्य समयमाह—सम्पक्के इत्यादि ॥ १७ ॥

पक्काक्षिरोगलक्षणमाह, प्रशस्तेत्यादि।—प्रशस्तवर्त्मता दोषानभिभूतवर्त्मता। संरम्भः शोथः। एतच्च लक्षणं प्रायस्त्र्यहादुपरि ज्ञेयम्; यदाह चरकः,—"पक्कास्त्र्यहव्यता कार्य्यं सम्यक् नेत्राञ्जनं त्र्यहात्" (चि० विमर्शी०) इति ॥ १८ ॥

अञ्जनादिविधिश्च कथं ज्ञातव्य इत्यपेक्षया आह, अञ्जनादिविधिरित्यादि।—अग्रे इति—आश्रुतीतनाद्यधिकारे ॥ १९।२० ॥

हरिद्रे इत्यादि सुश्रुतस्य।—अत्र द्राक्षास्थाने "पथ्या" इति केचित् पठन्ति ॥२१॥

पिष्टं द्विरंशतोऽद्भिर्वा गुड़िकाऽञ्जनमिष्यते ॥ २२ ॥

पित्ताभिष्यन्दे प्रपौण्डरीकादिसेकः।—

प्रपौण्डरीकयष्ट्याह्व-निशाऽऽमलकपद्मकैः।
शीतैर्मधुसमायुक्तैः सेकः पित्ताक्षिरोगनुत् ॥ २३ ॥

पित्ताभिष्यन्दे द्राक्षादिक्षीराश्च्योतनम्।—

द्राक्षामधुकमञ्जिष्ठा-जीवनीयैः शृतं पयः।
प्रातराश्च्योतनं पथ्यं शोथशूलाक्षिरोगिणाम् ॥ २४ ॥

पित्तादिजाभिष्यन्दे लोध्राश्च्योतनम्।—

निम्बस्य पत्रैः परिलिप्य लोध्रं
स्वेदाग्निना चूर्णमथापि कल्कम्।
आश्च्योतनं मानुषदुग्धमिश्रं
पित्तास्रवातापहमग्र्यमुक्तम् ॥ २५ ॥

कफाभिष्यन्दे क्रियासूत्रम्।—

कफजे लङ्घनं स्वेदो नस्यं तिक्तान्नभोजनम्।
तीक्ष्णैः प्रधमनं कुर्य्यात् तीक्ष्णैश्चैवोपनाहनम् ॥ २६ ॥

गैरिकमित्यादि सुश्रुतस्य।—तत्र तगरस्थाने "नागरम्" इति निश्चलः पठति। यथोत्तरं द्विरंशत इति—यथोत्तरं भागतो द्विगुणमित्यर्थः; तेन गैरिकमाषा १, सैन्धवमाषा २, पिप्पलीमाषा ४, तगरमाषा ८। अद्भिर्वेति वा शब्दाच्छागीक्षीरमपि बोध्यम् ॥ २२ ॥

प्रपौण्डरीकेत्यादि।—शीतैरिति—प्रपौण्डरीकादीनां कषायैः शीतलैरित्यर्थः। समायुक्तैरित्यत्र "सितायुक्तैः" इति केचित् पठन्ति। सितायुक्तैरिति पाठे—मधुवत् सिता प्रक्षेप्येत्यर्थः ॥ २३ ॥

द्राक्षेत्यादि।—जीवनीयशब्देन जीवनीयाष्टवर्गं गृह्णन्ति ॥ २४ ॥

निम्बस्येत्यादि।—निम्बपत्रं पिष्ट्वा तत्पिण्डमध्ये लोध्रकल्कं तच्चूर्णं वा प्रक्षिप्य पत्रेण वेष्टयित्वा अङ्गारैस्तत्स्विन्नं नारीक्षीरेण सम्मिश्र्य वस्त्रेण गालयित्वा चक्षुः सेको विधेय इति ॥ २५ ॥

कफजे इत्यादि।—प्रधमनं चूर्णनस्यम् ॥ २६ ॥

कफाभिष्यन्दे फणिज्झकादिस्वेदः वर्हिष्ठादिलेपश्च ।—

फणिज्झकास्फोतकपित्थबिल्व-पत्तूरपीलुसुरसार्जभङ्गैः ।
स्वेदं विदध्यादथवा प्रलेपं वर्हिष्ठशुण्ठीसुरदारुकुष्ठैः ॥ २७ ॥

कफाभिष्यन्दे शुण्ठ्यादिपिण्डः ।—

शुण्ठीनिम्बदलैः पिण्डः सुखोष्णैः स्वल्पसैन्धवैः ।
धार्य्यश्चक्षुषि सङ्क्षेपाच्छोथकण्डूव्यथापहः ॥ २८ ॥

कफाभिष्यन्दे पारिजातवल्कलाद्यञ्जनम् ।—

वल्कलं पारिजातस्य तैलं काञ्जिकसैन्धवम् ।
कफोद्भूताक्षिशूलघ्नं तरुघ्नं कुलिशं यथा ॥ २९ ॥

कफाभिष्यन्दे लोध्राद्याश्च्योतनम् ।—

ससैन्धवं लोध्रमथाज्यभृष्टं सौवीरपिष्टं सितवस्त्रबद्धम् ।
आश्च्योतनं तन्नयनस्य कुर्य्यात् कण्डूञ्च दाहञ्च रुजाञ्च हन्यात् ॥ ३० ॥

---

फणिज्झकेत्यादि सुश्रुतस्य ।—फणिज्झकः पर्णासभेदः, निर्गुण्डीत्यन्ये । आस्फोता आफरमल्लिका, कान्दलवाकुलम् । पत्तूरः शालिञ्चशाकः । पीलुः औत्तरापथिकतरुः, अत एव निर्देशात् पीलुशब्दो दीर्घोकारान्तोऽपि ज्ञेयः । सुरसार्जावपि पर्णासभेदौ । एषां भङ्गैः पल्लवैर्व्यस्तसमस्तैरङ्गारतापितैश्चक्षुषोर्मृदुस्वेदः कार्य्यः । अत्रैव तन्त्रान्तरदर्शनात् अर्जस्थाने अर्कः इति केचित् पठन्ति ; तन्त्रान्तरं यथा—"कपित्थसुरसाऽऽस्फोता पीलूपत्तूरकपिका । फणिज्झबिल्वपत्रैः स्वेदः कफाभिष्यन्दिनः ॥" इति । कपिका अर्कः । वर्हिष्ठं बालकम् ॥ २७ ॥

शुण्ठ्यादि ।—अत्र निम्बपत्रापेक्षया शुण्ठी स्वल्पा देया, सैन्धवमपि चतुःपञ्चरक्तिकमिति वदन्ति । एषां पिण्डः कदुष्ण एव चक्षुषोरुपरि सूक्ष्मवस्त्रं दत्त्वा देय इत्युपदेशः । सङ्क्षेपादिति—अल्पप्रक्रियातः ॥ २८ ॥

वल्कलमित्यादि ।—पारिजातः पारिभद्रः । पारिभद्रवल्कलस्वरसस्य माषकमितं, तैलस्य माषकद्वयं, सैन्धवस्य रक्तिद्वयं सर्वं वा, काञ्जिकन्तु निकुञ्चमात्रम् ; निकुञ्चस्तु आमुष्ठाङ्गुलिचतुष्टयपरिमितः । एतत् सर्वं ताम्रपात्रे कृत्वा कपर्दकेन तावत् घर्षणीयं यावत् घनं भवति, तदनु चक्षुष्यञ्जनं देयमिति वृद्धा व्यवहरन्ति ॥ २९ ॥

ससैन्धवमित्यादि ।—सैन्धवस्य रक्तिद्वयं, लोध्रस्य माषकचतुष्टयं, काञ्जिकेन

वाताद्यभिष्यन्दे सङ्क्षिप्तक्रियासूत्रम् ।—

स्निग्धैरुष्णैश्च वातोत्थः पित्तजो मृदुशीतलैः ।
तीक्ष्णरूक्षोष्णविशदैः प्रशाम्यति कफात्मकः ॥
तीक्ष्णोष्णमृदुशीतानां व्यत्यासात् सान्निपातिकः ॥ २१ ॥

रक्ताभिष्यन्दे तिरीटादिसेकः ।—

तिरीटत्रिफलायष्टी-शर्कराभद्रमुस्तकैः ।
पिष्टैः शीताम्बुना सेको रक्ताभिष्यन्दनाशनः ॥ २२ ॥

रक्ताभिष्यन्दे कशेर्वाद्याश्चोतनम् ।—

कशेरुमधुकानाञ्च चूर्णमम्बरसंयुतम् ।
न्यस्तमप्स्वन्तरीक्षासु हितमाश्चोतनं भवेत् ॥ २३ ॥

रक्ताभिष्यन्दे दार्व्यादिरसक्रिया ।—

दार्वीपटोलमधुकं सनिम्बं पद्मकोत्पलम् ।
प्रपौण्डरीकञ्चैतानि पचेत् तोये चतुर्गुणे ॥ २४ ॥
विपाच्य पादशेषन्तु तत् पुनः कुड़वं पचेत् ।

---

पिष्ट्वा गव्यघृतेन मृष्ट्वा निर्मलसूक्ष्मवस्त्रेण बद्ध्वा अङ्गुलीद्वयेन सम्पीड्य चक्षुषि तद्रसो देयः ॥ २० ॥

सङ्क्षेपेण वातजादीनां चिकित्सामाह, स्निग्धैरित्यादि ।—विशदैरिति—अपिच्छिलैः । तीक्ष्णोष्णमृदुशीतानां व्यत्यासोऽत्र परस्परविपर्य्ययेणोपयोगः, तेन तीक्ष्णमुपयुज्य तद्विपरीतस्य मृदुन उपयोगः, एवं मृदुद्रव्यमुपयुज्य तद्विपरीतस्य तीक्ष्णस्योपयोगः, एवमुष्णशीतयोरपि व्यत्यासो ज्ञेयः । किंवा परस्परविरुद्धानां भावानां सम्मिश्रणेन उपयोगो व्यत्यासोपयोगः । तीक्ष्णोष्णमृदुशीतानामित्युपलक्षण, तेन स्निग्धरूक्षादीनामपि ग्रहणं बोध्यम् ॥ २१ ॥

तिरीटेत्यादि ।—तिरीटं पट्टिकालोध्रम् । एषां प्रत्येकं माषकमेकं द्वयं वा गृहीत्वा श्लक्ष्णं पिष्ट्वा शीतलजलपलेकेन सम्मिश्र्य परिषेकः कार्य्यः ॥ २२ ॥

कशेर्वित्यादि सुश्रुतस्य ।—कशेरुयष्टिमधुनोः प्रत्येकं माषकचतुष्टयं गृहीत्वा सूक्ष्मवस्त्रेण पोट्टलीं श्लथं बद्ध्वा आकाशोदके पलेके निक्षिप्य तेन जलेन सेकः; आकाशोदकाभावे हंसोदकेन ॥ २३ ॥

शीतीभूते तत्र मधु दद्यात् पादांशिकं ततः॥
रसक्रियैषा दाहाश्रु-रागरक्तरुजापहा॥ ३५॥

रक्ताभिष्यन्दे तिक्तघृतादिप्रयोगोपदेशः।—

तिक्तस्य सर्पिषः पानं बहुशश्च विरेचनम्।
अक्ष्णोरपि समन्ताच्च पातनन्तु जलौकसः॥
पित्ताभिष्यन्दशमनो विधिश्चाप्युपपादितः॥ ३६॥

अभिष्यन्दे शिग्रुपल्लवधूपः।—

शिग्रुपल्लवनिर्य्यासः सुघृष्टस्ताम्रसम्पुटे।
घृतेन धूपितो हन्ति शोथघर्षाश्रुवेदनाः॥ ३७॥

अभिष्यन्दे निम्बादिगुड़िका।—

पिष्टैर्निम्बस्य पत्रैरतिविमलतरैर्जातिसिन्धूत्थमिश्रा
अन्तर्गर्भं दधाना पटुतरगुड़िका पिष्टलोध्रेण भृष्टा।
तूलैः सौवीरसार्द्रैरतिशयमृदुभिर्वेष्टिता सा समन्तात्
चक्षुःकोपप्रशान्तिं चिरमुपरि दृशोर्भ्राम्यमाणा करोति॥ ३८॥

---

दार्व्वीत्यादि।—पटोलनिम्बयोः पत्रम्। पद्मकं पद्मकाष्ठम्। उत्पलं नीलोत्पलम्। एषां मिलित्वा कुड़वचतुष्टयो ग्राह्यः। पाकार्थञ्च जलस्य द्वात्रिंशत् पलानि; "ततस्तु कुड़वं यावत् तोयमष्टगुणं भवेत्" इति वचनात्; ततः कुड़वोऽष्टपलः क्वाथ्यः, तत् वस्त्रपूतं कृत्वा पुनः पक्तव्यमा-घनीभावात्, ततः शीते मधु पलद्वयं प्रक्षेप्यं, ततोऽञ्जनं कार्य्यमिति॥ ३४।३५॥

तिक्तस्येत्यादि।—तिक्तं सर्पिर्वक्ष्यमाणपटोलादिघृतम्। विरेचनञ्च वक्ष्यमाण-कङ्कादिना॥ ३६॥

शिग्रुपल्लवेत्यादि।—निर्य्यासः स्वरसः, घृतेन सह ताम्रपात्रे घृष्ट इत्यन्वयः। धूपित इति करीषाग्निना। अन्ये तु करीषाग्नौ घृतं दत्त्वा तेन धूमेन धूपित इति व्याचक्षते। घर्षः करकरिकाख्यवेदनाविशेषः॥ ३७॥

पिष्टैरित्यादि।—जातिसिन्धूत्थं सारसैन्धवं, जातिर्जातीकलिकेत्यन्ये। अन्तर्गर्भं दधानेति—पिष्टनिम्बपत्रपिण्डाभ्यन्तरे लोध्रकल्कपिण्डं निक्षिप्य कृता गुड़िकेत्यर्थः। भृष्टा इति—खर्परे मनाग्भृष्टेत्यर्थः। तदनु सौवीरेण काञ्जिकेन, सार्द्रैरिति—ईषदार्द्रैस्तूलकैर्वेष्टिता चक्षुषोरुपरि भ्राम्यमाणेत्यर्थः॥ ३८॥

अभिष्यन्दादौ बिल्वाञ्जनम्।—

बिल्वपत्ररसः पूतः सैन्धवाज्येन चान्वितः।
शुल्वे वराटिकाघृष्टो धूपितो गोमयाग्निना॥ ३९॥
पयसाऽऽलोडितश्चाक्ष्णोः पूरणात्क्रोधशूलनुत्।
अभिष्यन्देऽधिमन्थे च स्रावे रक्ते च शस्यते॥ ४०॥

वातश्लेष्माभिष्यन्दे सैन्धवाद्यञ्जनम्।—

सलवणकटुतैलं काञ्जिकं कांस्यपात्रे
चनितमुपलघृष्टं धूपितं गोमयाग्नौ।
सपवनकफकोपं छागदुग्धावसिक्तं
जयति नयनशूलं स्रावशोथं सरागम्॥ ४१॥

अभिष्यन्दे आमलक-पुराणघृतप्रयोगौ।—

तरुस्थविद्धामलक-रसः सर्वाक्षिरोगनुत्।
पुराणं सर्वथा सर्पिः सर्वनेत्रामयापहम्॥ ४२॥

अधिमन्थादिषु अभिष्यन्दचिकित्साऽतिदेशादिः।—

अयमेव विधिः सर्वो मन्थादिष्वपि शस्यते।
अशान्तौ सर्वथा मन्थे भ्रुवोरुपरि दाहयेत्॥ ४३॥

---

बिल्वपत्रेत्यादि।—शुल्वे इति—ताम्रपात्रे। पयसेति—नारीस्तन्येन। वस्त्रपूत-बिल्वपत्ररसस्य माषकचतुष्टयं, सैन्धवस्य रत्तिद्वयं, घृतस्य बिन्दुचतुष्टयम्, एतत् सर्वं ताम्रपात्रे कृत्वा कपर्दकेन तावद्घर्षणीयं यावद्घनं भवति, तदनु न्युब्जीकृतताम्रपात्रे शुष्कगोमयाग्निना धूपयित्वा नारीक्षीरेण तरलीकृत्य चक्षुःपूरणम्॥ ३९।४०॥

सलवणेत्यादि।—सैन्धवस्य रत्तिद्वयं, कटुतैलस्य बिन्दुचतुष्टयं, काञ्जिकस्य माषकचतुष्टयम्। उपलः प्रस्तरखण्डस्तेन घृष्टं, किंवा उपलशब्देनात्र चक्षुष्यत्वात् रसाञ्जनादिशिलैव ग्राह्या। वृद्धास्तु वराटिकयैव व्यवहरन्ति॥ ४१॥

तरुस्थेत्यादि।—तरुस्थस्यैवामलकीफलस्य सूच्यादिभिर्विद्धस्य यो रसो निर्गच्छतीत्यर्थः। पुराणसर्पिर्दशवर्षस्थितं, तदभावे संवत्सरातीतमपि पुराणं ग्राह्यमित्याहुः; उक्तं हि—"अल्पाभिष्यन्दि मधुरं यत्तु संवत्सरोषितम्। अनुत्क्लेदश्च दोषाणां पुराणं तत् प्रकीर्त्तितम्॥" इति। सर्वथेति—पानलेपाञ्जनैरित्यर्थः॥ ४२॥

नेत्रपाके जलौकाप्रयोगाद्युपदेशः शुक्रचिकित्सातिदेशश्च।—

जलौकःपातनं शस्तं नेत्रपाके विरेचनम्।
शिराव्यधं वा कुर्वीत सेकालेपांश्च शुक्रवत्॥ ४४॥

पिल्लादौ षड़ङ्गगुग्गुलुः षड़ङ्गघृतगुग्गुलुश्च।—

विभीतकशिवाधात्री-पटोलारिष्टवासकैः।
क्वाथो गुग्गुलुना पेयः शोथशूलाक्षिपाकहा॥ ४५॥
पिल्लञ्च सव्रणं शुक्रं रागादींश्चापि नाशयेत्।
एतैश्चापि घृतं पक्वं रोगांस्तांश्च व्यपोहति॥ ४६॥

रक्तस्रावादौ वासकादिः।—

अटरूषाभयानिम्ब-धात्रीमुस्ताक्षकूलकैः।
रक्तस्रावं कफं हन्ति चक्षुष्यं वासकादिकम्॥ ४७॥

तिमिरादौ बृहद्वासादिः।—

वासाघनं निम्बपटोलपत्रं तिक्ताऽमृताचन्दनवत्सकत्वक्।
कलिङ्गदार्वीदहनञ्च शुण्ठी-भूनिम्बधात्रीत्र्यवमयाविभीतम्॥४८॥
श्यामा यवक्वाथमथाष्टभागं पिबेदिमं पूर्वदिने कषायम्।
तैमिर्यकण्डूपटलार्बुदञ्च शुक्रं जयेत् सव्रणमव्रणञ्च॥ ४९॥
काचञ्च पिल्लञ्च सह्यारुजञ्च नक्तान्ध्यरोगं श्वयथुं सशूलम्।
वासादिरेष प्रथितप्रभावो निहन्ति सर्वान् नयनामयांश्च॥ ५०॥

---

अयमेव विधिरित्यादि वाग्भटस्य।—अयम् अभिष्यन्दोक्तः। आदिशब्दात् अन्यतोवातादयः॥ ४३॥

नेत्रपाकचिकित्सामाह, जलौक इत्यादि।—स्पष्टम्॥ ४४॥

विभीतकेत्यादि।—पिल्लं पक्ष्मोड़िका, किंवा—"प्रक्षालिते तथा धूते क्लान्ते पुनः पुनः। अपरिक्लिन्नवर्त्मानं तं पिल्लमिति निर्दिशेत्॥" इत्युक्तलक्षणम्। अत्र घृतपाकपक्षे तु विभीतकादीनां क्वाथो गुग्गुलोः कल्क इति। विभीतकादिचूर्णसमं गुग्गुलुं गृहीत्वा घृतेन पिष्ट्वा वटिकां कुर्य्यादित्युपदिशन्ति वृद्धाः॥ ४५।४६॥

अटरूषेत्यादि।—अटरूषकं वासकम्। अक्षं विभीतकम्। कूलकं पटोल-

अभिष्यन्दादौ पथ्यादिः ।—

पथ्यास्तिस्रो विभीतक्यः षड् धात्र्यो द्वादशैव तु ।
प्रस्थार्द्धे सलिले क्वाथमष्टभागावशेषितम् ॥ ५१ ॥
पीत्वाऽभिष्यन्दमास्रावं रागञ्च तिमिरं जयेत् ।
संरम्भरागशूलाश्रु-नाशनं दृक्प्रसादनम् ॥ ५२ ॥

अभिघातजे शीताश्च्योतनाद्युपदेशः ।—

नेत्रे त्वभिहते कुर्य्याच्छीतमाश्च्योतनादिकम् ॥ ५३ ॥

अभिघातजादौ स्निग्धक्रियाद्युपदेशः ।—

दृष्टिप्रसादजननं विधिमाशु कुर्य्यात्
स्निग्धैर्हिमैश्च मधुरैश्च तथा प्रयोगैः ।
स्वेदाग्निधूमभयशोकरुजाभितापै-
रभ्याहतामपि तथैव भिषक् चिकित्सेत् ॥ ५४ ॥

आगन्तुजे स्त्रीक्षीरस्वेदाद्युपदेशः ।—

आगन्तुदोषं प्रसमीक्ष्य कार्य्यं वस्त्रोष्मणा स्वेदितमादितस्तु ।
आश्च्योतनं स्त्रीपयसा च सद्यो यच्चापि पित्तक्षतजापहं स्यात् ॥ ५५ ॥

---

चयम् ; एतैः क्वथितेन क्वाथेन चक्षुःसेचनं, तथा गुग्गुलुं प्रक्षिप्य विरेचनमप्युपदिशन्ति वृद्धाः ॥ ४७—५० ॥

पथ्या इत्यादि ।—प्रस्थार्द्धे इति—द्रवद्वैगुण्यात् शरावद्वये । पीत्वेति त्रायन्तमित्याहुः ॥ ५१।५२ ॥

आगन्तुनेत्ररोगचिकित्सामाह, नेत्रे इत्यादि ।—आदिशब्दात् नस्यलेपादीनां ग्रहणम् ॥ ५३ ॥

दृष्टीत्यादि सुश्रुतस्य ।—दृष्टिप्रसादजननं नयनावरकदोषनाशनम् । कैर्दृष्टिप्रसादनं कार्य्यम् ? इत्याह, स्निग्धैरित्यादि ।—स्वेदादिकृता रुजा एव अभितापो रोगो रोगजनकत्वादुच्यते । अभ्याहतामित्यनन्तरं दृष्टिमिति शेषः । तथैवेति—अनन्तरोक्तस्निग्धहिमादिविधिना ॥ ५४ ॥

आगन्त्वित्यादि ।—आगन्तुदोषं धूल्याद्यभिघातम् । वस्त्रोष्मा च वस्त्रपुटेन ग्राह्यः । यच्चापि पित्तक्षतजापहं स्यात् इति—पित्ताभिष्यन्दे रक्ताभिष्यन्दे च यदुक्तं तदपि हितम् ॥ ५५ ॥

सूर्य्यदर्शनादिजे सन्तर्पणाद्युपदेशः ।—

सूर्य्योपरागानलविद्युदादि-विलोकनेनोपहतेक्षणस्य ।
सन्तर्पणं स्निग्धहिमादि कार्य्यं सायं निषेव्यास्त्रिफलाप्रयोगाः ॥ ५६॥

अभिघातजे निशादिपूरणम् ।—

निशाऽब्दत्रिफलादार्वी-सितामधुकसंयुतम् ।
अभिघाताक्षिशूलघ्नं नारीक्षीरेण पूरणम् ॥ ५७ ॥

अभिघातजे द्रुत्कटस्वरसपूरणम् ।—

द्रुत्कटाङ्कुरजस्तद्वत् स्वरसो नेत्रपूरणम् ॥ ५८ ॥

अभिघातजे मधुकादिघृतम् ।—

आजं घृतं क्षीरपात्रं मधुकञ्चोत्पलानि च ।
जीवकर्षभकौ चापि पिष्ट्वा सर्पिर्विपाचयेत् ॥
सर्वनेत्राभिघातेषु सर्पिरेतत् प्रशस्यते ॥ ५९ ॥

शुष्काक्षिपाके सैन्धवाद्यञ्जनम् ।—

सैन्धवं दारु शुण्ठी च मातुलुङ्गरसो घृतम् ।
स्तन्योदकाभ्यां कर्त्तव्यं शुष्कपाके तदञ्जनम् ॥ ६० ॥

---

सूर्य्योपरागेत्यादि ।—त्रिफलाप्रयोगा इति—त्रिफलाक्वाथेन चक्षुःसेकादयः ॥५६॥

निशेत्यादि ।—एषां चूर्णं नारीक्षीरे प्रक्षिप्य पूरणम् ॥ ५७ ॥

द्रुत्कटेत्यादि ।—तद्वदिति—अभिघाताक्षिशूलघ्न इत्यर्थः ॥ ५८ ॥

आजमित्यादि ।—आजं घृतमिह प्रस्थमानम् । क्षीरपात्रमिति—पात्रशब्दः, द्रवद्वैगुण्यात् षोडश शरावाः । क्षीरञ्चेह गव्यमेव, निर्विशेषणत्वात् । अन्ये तु आजघृतसाहचर्य्यात् क्षीरमप्याजमाहुः । सर्पिषोर्द्विरुच्चारणमिह नस्ये तर्पणे च हितत्वप्रतिपादनार्थमिति वदन्ति । जेज्जड़स्तु आजघृतस्य कल्कत्वमेवाह, तेन तन्मते द्वितीयसर्पिःपदस्य गव्यघृतमेवार्थं इति ॥ ५९ ॥

शुष्काक्षिपाकरोगचिकित्सामाह, सैन्धवमित्यादि सुश्रुतस्य ।—स्तन्योदकाभ्यामिति उपलक्षणे सहार्थे वा तृतीया । सैन्धवदारुशुण्ठीनां मिलित्वा पादिकः कल्कः कार्य्यः, पादिकत्वञ्च मिलितमातुलुङ्गरसादिद्रवचतुष्टयमपेक्ष्य । सैन्धवे माषकत्रयं, देवदारुशुण्ठ्योस्तु प्रत्येकं माषकचतुष्टयं, मातुलुङ्गरसादीनां चतुर्णां प्रत्येकं द्वादश माषकाः, सर्वमेकीकृत्य मृदग्निना पक्तव्यं यावत् घनीभवति,

अन्यतोवात-वातपर्य्ययोः वाताभिष्यन्दचिकित्साऽतिदेशादिः।—

वाताभिष्यन्दवच्चान्यद्वाते मारुतपर्य्यये।
पूर्वभक्तं हितं सर्पिः क्षीरञ्चाप्यत्र भोजने॥ ६१॥

अन्यतोवात-वातपर्य्यययोः वृक्षादन्यादिघृतम्।—

वृक्षादन्यां कपित्थे च पञ्चमूले महत्यपि।
सक्षीरं कर्कटरसे सिद्धञ्चापि पिबेत् घृतम्॥ ६२॥

अभिष्यन्दादौ शिराव्यधोपदेशः।—

अभिष्यन्दमधीमन्थं रक्तोत्थमथवाऽर्जुनम्।
शिरोत्पातं शिराहर्षमन्यांश्चाक्षिभवान् गदान्॥
स्निग्धस्याज्येन कौम्भेन शिराव्यधैः शमं नयेत्॥ ६३॥

अम्लाध्युषिते शीतप्रलेपाद्युपदेशः।—

अम्लाध्युषितशान्त्यर्थं कुर्य्यात्लेपान् सुशीतलान्।
तैन्दुकं त्रैफलं सर्पिर्जीर्णं वा केवलं हितम्॥
शिराव्यधं विना कार्य्यः पित्तस्यन्दहरो विधिः॥ ६४॥

---

ततोऽञ्जनं कार्य्यम्। रसक्रियेयम्। अन्ये तु "सन्योदकार्द्रम्" इति पठित्वा सौवीर-जलयोर्मिलितयोः समुदयादर्द्धमानं, सैन्धवदारुशुण्ठीमातुलुङ्गरसद्रवाणां समो भागः, सैन्धवदारुशुण्ठीनां कल्कं मातुलुङ्गरसादिद्रवचतुष्टयेनाम्लाव्याञ्जनं कार्य्यमिति व्याचक्षते॥ ६०॥

अन्यतोवातादिचिकित्सामाह, वातेत्यादि।—पूर्वभक्तमिति—भक्तात् पूर्वमित्यर्थः। अन्यतोवाते वातपर्य्यये च क्षीरपानम्, अनयोः पित्तरक्तारब्धत्वात्॥ ६१॥

वृक्षादन्यामित्यादि।—वृक्षादनी वन्दा। वृक्षादन्यादिभिः कल्कः, क्षीरं स्नेहसमं, कर्कटरसस्तु त्रिगुणः, एवं घृतं साध्यमिति श्रीकण्ठः। गयदासस्तु वृक्षादन्यादीनां पञ्चमूलान्तानां मिलित्वा त्रिगुणः क्वाथः, क्षीरकर्कटरसयोस्तु प्रत्येकं स्नेहसमत्वमित्याह। अन्ये तु विभिन्नविभक्तिकत्वात् वृक्षादन्यादीनां प्रत्येकं स्नेहसमः क्वाथः, एवं क्षीरकर्कटरसावपि, इति पञ्चगुणः पाकः इत्याहुः॥ ६२॥

अभिष्यन्दमित्यादि।—अन्यांश्चेति—शुक्रादीन्। कौम्भं सर्पिर्दशवर्षस्थितम्॥ ६३॥

अम्लाध्युषितेत्यादि।—तैन्दुकं सर्पिर्वातव्याधौ प्रस्तुतेनोक्तम्। त्रैफलं त्रिफला-

शिरोत्पाते सौवीर-सैन्धवाद्यञ्जने।—

सर्पिः क्षौद्राञ्जनञ्च स्याच्छिरोत्पातस्य भेषजम्।
तद्वत् सैन्धवकासीसं स्तन्यपिष्टञ्च पूजितम्॥ ६५॥

शिराहर्षे फाणिताञ्जनाद्यञ्जनत्रयम्।—

शिराहर्षेऽञ्जनं कुर्य्यात् फाणितं मधुसंयुतम्।
मधुना तार्क्ष्यशैलं वा कासीसं वा ससैन्धवम्॥ ६६॥

सव्रणशुक्रे षडङ्गगुग्गुलुप्रयोगोपदेशः।—

व्रणशुक्रप्रशान्त्यर्थं षडङ्गं गुग्गुलुं पिबेत्॥ ६७॥

सव्रणशुक्रे कतकाद्यञ्जनम्।—

कतकस्य फलं शङ्खं तिन्दुकं रूप्यमेव च।
कांस्ये निघृष्टं स्तन्येन क्षतशुक्रापहं परम्॥ ६८॥

सव्रणशुक्रे चन्दनादिवर्त्तिः।—

चन्दनं गैरिकं लाक्षा मालतीकलिका समा।
व्रणशुक्रहरा वर्त्तिः शोणितस्य प्रसादनी॥ ६९॥

---

क्वाथकल्काभ्यां सिद्धम्। केवलमिति—असंस्कृतम्। अम्लाध्युषिते शिराव्यधवर्ज्जनं व्याधिस्वभावात्॥ ६४॥

सर्पिरित्यादि सुश्रुतस्य।—अञ्जनं सौवीराञ्जनम्। घृतमधुभ्यां सौवीराञ्जनं पिष्ट्वा वर्त्तिः कार्य्या, घृष्ट्वा वा अञ्जनं कार्य्यम्। भेषजमिति अञ्जनरूपम्। तद्वदिति—शिरोत्पातभेषजमित्यर्थः। कासीसं पुष्पकासीसं, धातुकासीसमित्यन्ये, व्यवहारस्तु पूर्व्वेण॥ ६५॥

शिराहर्षे इत्यादि।—फाणितं द्रवगुडः। तार्क्ष्यशैलं रसाञ्जनम्॥ ६६।६७॥

कतकस्येत्यादि।—कतकं तोयप्रसादनफलं, प्रायो मगधे भवति। शङ्खं नाभिशङ्खम्। तिन्दुकं तिन्दुकफलास्थि। रूप्यं रूप्यचूर्णम्। एषां समभागं गृहीत्वा कांस्यपात्रे स्तन्येन सह घर्षणीयम्। क्षतशुक्रं व्रणशुक्रम्॥ ६८॥

चन्दनमित्यादि।—गैरिकं स्वर्णगैरिकं, तच्चात्यन्तरक्तं मृदु च यत् गैरिकमिति। पेषणन्तु जलेन; वृद्धा गगनजलेन व्यवहरन्ति, तदभावे तक्कुपेन वा। एवमन्यत्रापि द्रवानुक्तिस्थाने बोध्यम्; तथा छायाशोषणं मधुना घृष्ट्वा चाञ्जनमित्यपि विशेषाभावस्थाने व्यवहारो वृद्धानाम्॥ ६९॥

सव्रणशुक्रे रक्तमोक्षणं विभीतकमज्जाञ्जनञ्च ।—

शिरया वा हरेद्रक्तं जलौकाभिश्च लोचनात् ।
अक्षमज्जाऽञ्जनं सायं स्तन्येन शुक्रनाशनम् ॥ ७० ॥

सव्रणशुक्रादौ पुण्डरीकसेकः ।—

एकं वा पुण्डरीकञ्च छागीक्षीरावसेचितम् ।
रागाश्रुवेदना हन्यात् क्षतपाकात्ययाञ्जकाः ॥ ७१ ॥

सव्रणशुक्रे तुत्थकपूरणम् ।—

तुत्थकं वारिणा युक्तं शुक्रं हन्त्यक्षिपूरणात् ॥ ७२ ॥

सव्रणशुक्रे समुद्रफेनादिवर्त्तिः ।—

समुद्रफेनदक्षाण्ड त्वक्सिन्धूत्थैः समाक्षिकैः ।
शिग्रुबीजयुतैर्वर्त्तिः शुक्रघ्नी शिग्रुवारिणा ॥ ७३ ॥

सर्वविधशुक्रे धात्र्यादिसेकः ।—

धात्रीफलं निम्बकपित्थपत्रं
यष्ट्याह्वलोध्रं खदिरं तिलाश्च ।
क्वाथः सुशीतो नयने निषिक्तः
सर्वप्रकारं विनिहन्ति शुक्रम् ॥ ७४ ॥

---

शिरयेत्यादि ।—अक्षेत्यादौ अक्षमज्जा विभीतकफलमज्जा । स्तन्येनेत्यत्र मध्वपि बोध्यं, सुश्रुतसंवादात् ॥ ७० ॥

एकमित्यादि ।—एकं केवलं श्रेष्ठमिति वा । पुण्डरीकं पुण्डरीयाकाष्ठं, तच्च उत्तरापथजं पिष्ट्वा वस्त्रेण पोट्टलीं बद्ध्वा छागीक्षीरे स्थाप्यं, यदा पीतवर्णं दुग्धं भवति, तदा चक्षुषि तत् दुग्धं देयम् । प्रबलरक्तदुष्टौ योगोऽयम् ॥ ७१ ॥

तुत्थकमित्यादि ।—अत्र मध्वपि बोध्यं, सुश्रुतसंवादात् ॥ ७२ ॥

समुद्रेत्यादि ।—दक्षाण्डत्वक् कुक्कुटाण्डकपालम् । समाक्षिकैरिति—स्वर्णमाक्षिकसहितैरिति केचित्, अन्ये तु मधु वदन्ति । समाक्षिकैरित्यत्र "सशङ्खकैः" इति पाठे—शङ्खकः शङ्खनाभिः । शिग्रुवारिणेति—शोभाञ्जनरसेन पिष्ट्वा वर्त्तिः कार्या ॥ ७३ ॥

धात्रीत्यादि ।—निम्बस्य कपित्थस्य च पत्रम् । क्वाथ इत्यत्र एषामिति शेषः । सर्वप्रकारमिति—सव्रणमव्रणञ्च ॥ ७४ ॥

अव्रणशुक्रे नागकेशर श्यामासेकौ।—

क्षुण्णपुन्नागपत्रेण परिभावितवारिणा।

श्यामाक्वाथाम्बुना वाऽथ सेचनं कुसुमापहम्॥ ७५॥

अव्रणशुक्रादौ कुक्कुटाण्डाद्यञ्जनम्।—

दक्षाण्डत्वक्शिलाशङ्ख काचचन्दनगैरिकैः।

तुल्यैरञ्जनयोगोऽयं पुष्पार्मादिविलेखनः॥ ७६॥

अव्रणशुक्रे शिरीषबीजादिप्रघर्षणम्।—

शिरीषबीजमरिच-पिप्पलीसैन्धवैरपि।

शुक्रे प्रघर्षणं कार्य्यमथवा सैन्धवेन च॥ ७७॥

अव्रणशुक्रे करञ्जबीजवर्त्तिः।—

बहुशः पलाशकुसुमस्वरसैः परिभाविता जयत्यचिरात्।

नक्ताह्वबीजवर्त्तिः कुसुमचयं हन्तु चिरजमपि॥ ७८॥

पिष्ट-शुक्रयोः सैन्धवादिवर्त्तिः।—

सैन्धवत्रिफलाकृष्णा-कटुकाशङ्खनाभयः।

सताम्ररजसो वर्त्तिः पिष्टशुक्रविनाशिनी॥ ७९॥

---

क्षुण्णेत्यादि।—क्षुण्णं शिलायां जर्जरीकृतं पुन्नागस्य नागकेशरस्य यत् पत्रं, तेन भावितं यद्वारि, तेन। श्यामा श्यामालता, तस्याः क्वाथरूपजलम्। कुसुमापहमिति—शङ्खेन्दुकुन्दवर्णं शुक्रमेव कुसुमं तन्नाशनम्॥ ७५॥

दक्षेत्यादि।—दक्षः कुक्कुटः, गोष्ठकुक्कुट इत्यन्ये। शिला मनःशिला। शङ्खः शङ्खनाभिः, एवं सर्व्वत्र। काचः स्वनामख्यातः॥ ७६॥

शिरीषेत्यादि।—शिरीषादिचूर्णैर्मस्वक्तशलाकाक्षितैर्घर्षणं कार्य्यम्। सैन्धवेनेति—केवलसैन्धवचूर्णेन; अन्ये तु मसृणसैन्धवखण्डेनेत्याहुः॥ ७७॥

बहुश इत्यादि।—बहुशः सप्ताहम्। नक्ताह्वबीजवर्त्तिरिति—करञ्जबीजस्य चूर्णं कृत्वा पलाशकुसुमस्वरसेन वर्त्तिः कार्य्या॥ ७८॥

सैन्धवेत्यादि।—कटुका कटुरोहिणी। ताम्ररजस्तु मारिततात्रचूर्णम्। पिष्टशुक्रविनाशिनीति—पिष्टाख्यनेत्ररोगः, "बिन्दुभिः पिष्टधवलैरुत्सन्नैः पिष्टकं वदेत्" (वा० उ० १० अ०) इत्युक्तलक्षणः॥ ७९॥

व्रणशुक्रादौ चन्दनादिचूर्णाञ्जनम् ।—

चन्दनं सैन्धवं पथ्या पलाशतरुशोणितम् ।
क्रमवृद्धमिदं चूर्णं शुक्रार्मादिविलेखनम् ॥ ८० ॥

व्रणशुक्रे दन्तवर्त्तिः ।—

दन्तैर्हस्तिवराहोष्ट्र-गवाश्वाजखरोद्भवैः ।
सशङ्खमौक्तिकाम्भोधि-फेनैर्मरिचपादिकैः ॥
क्षतशुक्रमपि व्याधिं दन्तवर्त्तिर्निवर्त्तयेत् ॥ ८१ ॥

शुक्रादौ शङ्खादिचूर्णाञ्जनम् ।—

शङ्खस्य भागाश्चत्वारस्ततोऽर्द्धेन मनःशिला ।
मनःशिलार्द्धं मरिचं मरिचार्द्धेन सैन्धवम् ॥ ८२ ॥
एतच्चूर्णाञ्जनं श्रेष्ठं शुक्रयोस्तिमिरेषु च ।
पिच्चटे मधुना योज्यमर्बुदे मस्तुना तथा ॥ ८३ ॥

व्रणशुक्रे ताप्याञ्जनाद्यञ्जनचतुष्टयम् ।—

ताप्यं मधूकसारो वा बीजमक्षस्य सैन्धवम् ।
मधुनाऽञ्जनयोगाः स्युश्चत्वारः शुक्रशान्तये ॥ ८४ ॥

व्रणशुक्रे कर्पूरचूर्णाञ्जनम् ।—

वटक्षीरेण संयुक्तं श्लक्ष्णं कर्पूरजं रजः ।
क्षिप्रमञ्जनतो हन्ति शुक्रञ्चापि घनोन्नतम् ॥ ८५ ॥

---

चन्दनमित्यादि ।—पलाशतरुशोणितं किंशुकवृक्षवेष्टकम् । रक्तचन्दन माषकः, सैन्धवस्य द्वौ, पथ्यायास्त्रय इति डल्हणः । एतच्चूर्णाञ्जनं कल्कशलाकया चक्षुषि देयम् ; एवं सर्वत्र चूर्णाञ्जने ॥ ८० ॥

दन्तैरित्यादि वाक्यद्वयम् ।—मरिचपादिकैरिति—सर्वोदितचूर्णापेक्षया मरिचस्य चतुर्थो भागः, पेषणञ्चात्र जलेन, वाग्भटसंवादात् ॥ ८१ ॥

शङ्खस्येत्यादि ।—शङ्खः शङ्खनाभिः । नाभिशङ्ख मा ४, मनःशिला मा २, मरिच मा १, सैन्धव र ५ । चूर्णाञ्जनमिति—अञ्जनशलाकया सङ्गृह्य शुक्रदेशे घर्षयेत्, ततः त्रिफलाक्वाथेन प्रक्षालनं कार्य्यमिति । शुक्रयोरिति—व्रणा-व्रणशुक्रयोः ॥ ८२।८३ ॥

सव्रणशुक्रादौ त्रिफलामज्जादिपूरणम्।—

त्रिफलामज्जमङ्गल्या मधुकं रक्तचन्दनम्।
पूरणं मधुसम्मिश्रं व्रणशुक्राजकाऽश्रुजित्॥ ८६॥

असाध्यशुक्रेषु क्षाराञ्जनम्।—

तालस्य नारिकेलस्य तथैवारुष्करस्य च।
करीरस्य च वंशानां कृत्वा क्षारं परिस्रुतम्॥ ८७॥
करभास्थिकृतं चूर्णं क्षारेण परिभावितम्।
सप्तकृत्वोऽष्टकृत्वो वा श्लक्ष्णं चूर्णन्तु कारयेत्॥ ८८॥
एतच्छुक्रेष्वसाध्येषु कृष्णीकरणमुत्तमम्।
यानि शुक्राणि साध्यानि तेषां परममञ्जनम्॥ ८९॥

---

ताप्यमित्यादि।—ताप्यं स्वर्णमाक्षिकम्। अक्षस्य बीजं विभीतकास्थि-मज्जा॥ ८४।८५॥

त्रिफलेत्यादि।—मङ्गल्या गोरोचना। मधुकं यष्टिमधु। एतैः समभागै-र्मधुना पूरणं कार्य्यम्॥ ८६॥

तालस्येत्यादि।—तालस्य जटा, नारिकेलस्य फलास्थि, अरुष्करः भल्लातः, तस्य फलं, वंशकरीरस्य तु पाखरी, एतत् सर्वं तिलनालाग्निना दग्ध्वा भस्म ग्राह्यं, तच्च भाव्यद्रव्यसमं गृहीत्वा अष्टगुणोदके षोड़शगुणोदके वा निःक्वाथ्य अर्द्धशेषं पादशेषं वैकविंशतिवारान् स्रावयेत्। अन्ये तु क्वाथमकृत्वा चतुर्गुणेन षड्गुणेन वा जलमात्रेण स्रावणमाहुः, वाग्भटसंवादात्। अपरे तु भाव्यद्रव्यसमं भस्म चतुर्गुणेन षड्गुणेन वा अम्बुना निःक्वाथ्य अर्द्धावशेषेण विस्रावणं वदन्ति; व्यवहारस्तु पूर्व्वेणैव; परिस्राव्य च गृहीतेन स्वच्छेन क्षारोदकेन सप्ताष्टौ वासरान् करभास्थिचूर्णं भाव्यम्; करभः उष्ट्रः, एतच्च प्रतिभावनमेव चूर्णीकर्त्तव्यं, तच्चूर्णं नध्वकशलाकया सङ्गृह्य शुक्रदेशं घर्षयेत्, ततश्च त्रिफलाक्वाथेनाक्षि-प्रक्षालनमिति क्रियापरिपाटी। क्षारेणेति—क्षारोदकेन। एतच्छुक्रेष्व-साध्येष्वित्यनेन शुक्रस्यासाध्यस्य वैवर्ण्यनाशनं परं क्रियते, न पुनः शुक्र-नाशनमिति दर्शयति। "यानि शुक्राणि साध्यानि" इत्यादिपाठो युक्तः, न तु "शुक्राण्यसाध्यानि" इति; यदुक्तं वाग्भटे—"नारिकेलास्थिभल्लात-तालवंशकरीरजम्। भस्माद्भिः स्रावयेत् ताभिर्भावयेत् करभास्थिजम्॥ चूर्णं शुक्रेष्वसाध्येषु तत् वैवर्ण्यघ्न-

शुक्रादौ पटोलाद्यं घृतम् ।—

पटोलं कटुकां दार्वीं निम्बं वासां फलत्रिकम् ।
दुरालभां पर्पटकं त्रायन्तीञ्च पलोन्मिताम् ॥ ९० ॥
प्रस्थमामलकानाञ्च क्वाथयेन्नल्वणेऽम्भसि ।
पादशेषे रसे तस्मिन् घृतप्रस्थं विपाचयेत् ॥ ९१ ॥
कल्कैर्भूनिम्बकुटज-मुस्तयष्ट्याह्वचन्दनैः ।
सपिप्पलीकैस्तत् सिद्धं चक्षुष्यं शुक्रयोर्हितम् ॥ ९२ ॥
घ्राणकर्णाक्षिवर्त्मत्वङ्मुखरोगव्रणापहम् ।
कामलाज्वरवीसर्प-गण्डमालाहरं परम् ॥ ९३ ॥

तिमिरादौ कृष्णाद्यं तैलम् ।—

कृष्णाविडङ्गमधुयष्टिकसिन्धुजन्म-
विश्वौषधैः पयसि सिद्धमिदं छगल्याः ।
तैलं नृणां तिमिरशुक्रशिरोऽक्षिशूल-
पाकात्ययान् जयति नस्यविधौ प्रयुक्तम् ॥ ९४ ॥

अजकायां जलस्रावणादिविधिः ।—

अजकां पार्श्वतो विद्ध्वा सूच्या विस्राव्य चोदकम् ।
व्रणं गोमांसचूर्णेन पूरयेत् सर्पिषा सह ॥ ९५ ॥

---

अञ्जनम् । साध्येषु साधनायालमिदमेव च शीलितम् ॥" ( उ० ११ अ० ) इति निश्चलेन पुनः "असाध्यानि" इति पठित्वा एतच्च न कदाचिदपि साध्यशुक्रगोचरतया प्रयोक्तव्यमिति यत् व्याख्यातं तदपास्तम्, उक्तवाग्भटवचनविरोधादेव ॥ ८७—८९ ॥

पटोलमित्यादि ।—पटोलं पटोलस्य फलम् । कुटजः इन्द्रयवः; तन्त्रान्तरे "पटोलकलिङ्गभूनिम्ब-पिप्पलीवनचन्दनैः । कल्कैर्मुस्ताग्निकैराज्य प्रस्थमात्रं प्रसाधितम् ॥" इत्युक्तत्वात्, अत एव वचनात् भूनिम्बादीनां पलमानता च बोध्या ॥ ९०—९३ ॥

कृष्णेत्यादि ।—कृष्णा पिप्पली । अक्षिशब्दस्य शूलपाकात्ययाभ्यां सम्बन्धः ॥९४॥

अजकामित्यादि सुश्रुतस्य ।—गोमयचूर्णेनेति पाठो लेखकदोषात्, सुश्रुते वाग्भटे च तत्तदाकारपुस्तकेषु "गोमांसचूर्णेन" इत्येव ( सु० उ० १२ अ०।वा० उ० ११ अ० ) हि पाठो दृश्यते, टीकाकारैश्च व्याख्यात इति ॥ ९५ ॥

अजकायां सैन्धवादिपूरणम्।—

सैन्धवं वाजिपादञ्च गोरोचनासमन्वितम्।
शेलुत्वग्रससंयुक्तं पूरणञ्चाजकापहम्॥ ९६॥

अजकायां शशक-घृतम्।—

शशकस्य शिरःकल्के शेषाङ्गक्वथिते जले।
घृतस्य कुड़वं पक्वं पूरणञ्चाजकापहम्॥ ९७॥

शुक्रादौ शशकाद्यं घृतम्।—

शशकस्य कषायेण सर्पिषः कुड़वं पचेत्।
यष्टीप्रपौण्डरीकस्य कल्केन पयसा समम्॥ ९८॥
कृगल्या: पूरणाच्छुक्र-क्षतपाकात्ययाजकाः।
हन्ति भ्रूशङ्खशूलञ्च दाहरागानशेषतः॥ ९९॥

चक्षुष्यवर्गः।—

त्रिफला घृतं मधु यवाः पादाभ्यङ्गः शतावरी मुद्गाः।
चक्षुष्यः सङ्क्षेपाद्वर्गः कथितो भिषग्भिरयम्॥ १००॥

---

सैन्धवमित्यादि।—वाजिपादः अश्वखुरः, अश्वगन्धामूलमिति केचित्; व्यवहारस्तु पूर्ववेव। शेलुः बहुवारः॥ ९६॥

शशकस्येत्यादि।—शशकमस्तकमात्रं कल्कः, शेषाङ्गस्यान्त्रादिहीनस्य क्वाथः; एतत्क्वाथार्थञ्च जलस्य षोड़श शरावाः, स्थाप्याश्चत्वारः शरावा इति। घृतस्य कुड़वोऽष्टौ पलानि॥ ९७॥

शशकस्य कषायेणेत्यादि।—आकृतिमानात् शशकगुड़कमेकम्। अत्रापि पूर्ववदेव क्वाथकरणम्। पयसा समं तुल्यम्। अतः पञ्चगुणः पाकः; अन्ये तु चतुर्गुणमाहुः; एतन्मते क्वाथार्थजलस्य द्वादश शरावाः, स्थाप्यास्तु त्रय इति क्षणजेषु॥ ९८-९९॥

त्रिफलेत्यादि।—अत्र त्रिफलेति छेदः, साऽपि क्वाथचूर्णादिविधयोपयोज्या। घृतञ्च यद्यपि सामान्यत एव चक्षुष्यं, तथाऽपि पुराणमतिशयेन बोध्यम्; अत एव सुश्रुते—"घृतं पुराणं त्रिफलां शतावरीं पटोलमुद्गामलकान् यवानपि। निषेव्यमाणस्य जनस्य यततो भयं सुघोरात् तिमिरान्न विद्यते॥" (उ० १७ अ०) इति॥ १००॥

तिमिरे त्रिफलाचूर्णप्रयोगः ।—

लिह्यात् सदा वा त्रिफलां सुचूर्णितां
घृतप्रगाढ़ां तिमिरेऽथ पित्तजे ।
समीरजे तैलयुतां कफात्मके
मधुप्रगाढ़ां विदधीत युक्तितः ॥ १०१ ॥

तिमिरे त्रिफलायाः कल्कस्य क्वाथस्य वा प्रयोगः ।—

कल्कः क्वाथोऽथवा चूर्णं त्रिफलाया निषेवितम् ।
मधुना हविषा वाऽपि समस्ततिमिरान्तकृत् ॥ १०२ ॥

तिमिरे सायं त्रिफलाचूर्णप्रयोगः ।—

यस्त्रैफलं चूर्णमपथ्यवर्जी सायं समश्नाति हविर्मधुभ्याम् ।
स मुच्यते नेत्रगतैर्विकारैर्भृत्यैर्यथा क्षीणधनो मनुष्यः ॥ १०३ ॥

तिमिरे त्रिफलाक्वाथप्रयोगः ।—

सघृतं वा वराक्वाथं शीलयेत् तिमिरामयी ॥ १०४ ॥

तिमिरे त्रिफलाधावनम् ।—

जाता रोगा विनश्यन्ति न भवन्ति कदाचन ।
त्रिफलायाः कषायेण प्रातर्नयनधावनात् ॥ १०५ ॥

तिमिरे कवलीकृतजलेन चक्षुःसिञ्चनम् ।—

जलगण्डूषैः प्रातर्बहुशोऽम्भोभिः प्रपूर्य मुखरन्ध्रम् ।
निर्दयमुत्सन्नाक्षि क्षपयति तिमिराणि ना सद्यः ॥ १०६ ॥

---

लिह्यादित्यादि सुश्रुतस्य ।—युक्तित इति—मात्रया ॥ १०१।१०२ ॥

य इत्यादि ।—अत्र "यस्त्रैफलं चूर्णम्" इत्यादेरनन्तरं "सघृतं वा वराक्वाथं शीलयेत् तिमिरामयी" इति पाठो न युक्तः, "कल्कः क्वाथोऽथवा चूर्णम्" इत्यादिनैवोक्तार्थत्वात् ॥ १०३।१०४ ॥

जाता इत्यादि ।—धावनादिति—प्रक्षालनात् ॥ १०५ ॥

जलगण्डूषैरित्यादि ।—निर्दयमुत्सन्नाक्षीति—अवगाढं सिञ्चन् । ना इति—पुरुषः । १०६ ॥

तिमिरे भुक्त्वा आचान्तजलसिक्तपाणितलेन चक्षुर्दर्शनम्।—

भुक्त्वा पाणितलं घृष्ट्वा चक्षुषोर्यत् प्रदीयते।
अचिरेणैव तद्वारि तिमिराणि व्यपोहति॥ १०७॥

तिमिरादौ सुखावती वर्त्तिः।—

कतकस्य फलं शङ्खं त्र्यूषणं सैन्धवं सिता।
फेनो रसाञ्जनं क्षौद्रं विडङ्गानि मनःशिला॥ १०८॥
कुक्कुटाण्डकपालानि वर्त्तिरेषा व्यपोहति।
तिमिरं पटलं काचमर्मं शुक्रं तथैव च॥
कण्डूक्लेदार्बुदं हन्ति मलञ्चाशु सुखावती॥ १०९॥

तिमिरादौ चन्द्रोदया वर्त्तिः।—

हरीतकी वचा कुष्ठं पिप्पली मरिचानि च।
विभीतकस्य मज्जा च शङ्खनाभिर्मनःशिला॥ ११०॥
सर्वमेतत् समं कृत्वा छागीक्षीरेण पेषयेत्।
नाशयेत् तिमिरं कण्डूं पटलान्यर्बुदानि च॥ १११॥
अधिकानि च मांसानि येन रात्रौ न दृश्यते।
अपि द्विवार्षिकं पुष्पं मासेनैकेन साधयेत्॥
वर्त्तिश्चन्द्रोदया नाम नृणां दृष्टिप्रसादनी॥ ११२॥

तिमिरादौ हरीतक्यादिवर्त्तिः।—

हरीतकी हरिद्रा च पिप्पल्यो लवणानि च।

---

भुक्त्वेत्यादि।—पाणितलमित्यनन्तरमाचान्तवारिपरिप्लुतमिति शेषः॥ १०७॥

कतकस्येत्यादि।—कतकस्य फलं जलप्रसादनफलम्। शङ्खं शङ्खनाभिः। सिता शर्करा। फेनः समुद्रफेनः। क्षौद्रमत्राञ्जनार्थं, पेषणञ्च जलेन। इयञ्च वर्त्तिः पित्ताश्रिते तिमिरे भद्रा॥१०८।१०९॥

हरीतकीत्यादि।—चन्द्रोदया वर्त्तिस्तु कफतिमिरे प्रशस्ता। अत्र जलेन चाञ्जनमिति श्रीकण्ठः। उत्सर्गसिद्धत्वाच्चक्षुष्यत्वाच्च मधुनाऽपि व्यवहरन्ति वृद्धाः॥ ११०—११२॥

हरीतकीत्यादि।—लवणशब्दः सैन्धववचनः, चक्षुष्यत्वात्, तच्च प्रथमभागादित्वात्

कण्डूतिमिरजिद्वर्त्तिर्न क्वचित् प्रतिहन्यते ॥ ११३ ॥

तिमिरे कुमारिका वर्त्तिः।—

अशीतिस्तिलपुष्पाणि षष्टिः पिप्पलितण्डुलाः।

जातीकुसुमपञ्चाशन्मरिचानि च षोड़श॥

एषा कुमारिका वर्त्तिर्गतं चक्षुर्निवर्त्तयेत्॥ ११४ ॥

तिमिरे त्रिफलाद्या वर्त्तिः।—

त्रिफला कुक्कुटाण्डत्वक् काशीशमयसो रजः।

नीलोत्पलं विड़ङ्गानि फेनञ्च सरितां पतेः॥ ११५ ॥

आजेन पयसा पिष्ट्वा भावयेत् ताम्रभाजने।

सप्तरात्रं स्थितं भूयः पिष्ट्वा क्षीरेण वर्त्तयेत्॥

एषा दृष्टिप्रदा वर्त्तिरन्धस्याभिन्नचक्षुषः॥ ११६ ॥

तिमिरे चन्दनाद्या वर्त्तिः।—

चन्दनत्रिफलापूग-पलाशतरुशोणितैः।

जलपिष्टैरियं वर्त्तिरशेषतिमिरापहा॥ ११७ ॥

सर्वनेत्ररोगे सौगतमञ्जनम्।—

निशाद्वयाभयामांसी-कुष्ठकृष्णा विचूर्णिताः।

सर्वनेत्रामयान् हन्यादेतत् सौगतमञ्जनम्॥ ११८ ॥

---

चतुर्थांशमित्याहुः। इयमपि कफे हिता। न क्वचित् प्रतिहन्यते इति—पित्तजेऽपि न बाध्यते इत्यर्थः॥ ११३ ॥

अशीतिरित्यादि।—"एषा कुमारिका वर्त्तिः" इत्यत्र "एषा कुसुमिका वर्त्तिः" इति वृन्दे पठ्यते॥ ११४ ॥

त्रिफलेत्यादि।—काशीशं धातुकाशीशम्। अयसो मारितपुटितस्य रजः। भावयेदिति—स्थापयेत्, लेपयेदिति वा। क्षीरेणेति—आजेनैवेत्याहुः। वर्त्तयेदिति—वर्त्तिं कुर्य्यात्। अभिन्नचक्षुष इति—अनष्टतारकस्य॥ ११५।११६ ॥

चन्दनेत्यादि।—पूगं गुवाकफलम्। पलाशतरुशोणितं किंशुकनेटकं, पलाश-पुष्पस्वरस इत्यन्ये॥ ११७ ॥

निशेत्यादि।—सुगतो बुद्धस्तन्निर्मितत्वात् सौगतम्॥ ११८ ॥

अर्बुदादौ व्योषाद्या वर्त्तिः।—

व्योषोत्पलाभयाकुष्ठ-तार्क्ष्यैर्वर्त्तिः कृता हरेत्।
अर्बुदं पटलं काचं तिमिरार्मांश्रुनिस्रुतिम्॥ ११९॥

क्लेदादौ त्र्यूषणाद्या वर्त्तिः।—

त्र्यूषणं त्रिफला वक्रं सैन्धवालमनःशिलाः।
क्लेदोपदेहकण्डूघ्नी वर्त्तिः शस्ता कफापहा॥ १२०॥

तिमिरादौ नयनसुखा वर्त्तिः।—

एकगुणा मागधिका द्विगुणा च हरीतकी सलिलपिष्टा।
वर्त्तिरियं नयनसुखा तिमिरार्मपटलकाचाश्रुहरी॥ १२१॥

अर्बुदादौ चन्द्रप्रभा वर्त्तिः।—

अञ्जनं श्वेतमरिचं पिप्पली मधुयष्टिका।
विभीतकस्य मध्यन्तु शङ्खनाभिर्मनःशिला॥ १२२॥
एतानि समभागानि अजाक्षीरेण पेषयेत्।
छायाशुष्कां कृतां वर्त्तिं नेत्रेषु च प्रयोजयेत्॥ १२३॥
अर्बुदं पटलं काचं तिमिरं रक्तराजिकाम्।
अधिमांसं मलञ्चैव यश्च रात्रौ न पश्यति॥
वर्त्तिश्चन्द्रप्रभा नाम जातान्ध्यमपि शोधयेत्॥ १२४॥

तिमिरादौ श्रीनागार्जुना वर्त्तिः।—

त्रिफलाव्योषसिन्धूत्थ-यष्टीतुत्थरसाञ्जनम्।
प्रपौण्डरीकं जन्तुघ्नं लोध्रं ताम्रं चतुर्दश॥ १२५॥

---

व्योषेत्यादि।—तार्क्ष्यं रसाञ्जनम्॥ ११९॥

त्र्यूषणेत्यादि।—वक्रं तगरपादुका। आलं हरितालम्॥ १२०॥

एकगुणेत्यादि।—अत्र "अर्मतिमिरपटलाश्रुकाचहरी" इति पठनीयम्, अन्यथा छन्दोभङ्गः स्यात्॥ १२१॥

अञ्जनमित्यादि।—अञ्जनं रसाञ्जनम्। श्वेतमरिचं शोभाञ्जनबीजम्, एवं सर्वत्र॥ १२२—१२४॥

त्रिफलेत्यादि।—जन्तुघ्नं विडङ्गम्। ताम्रञ्च मारितं ग्राह्यम्। चतुर्दशेति बहुत्र-

द्रव्याण्येतानि सञ्चूर्ण्य वर्त्तिः कार्य्या नभोऽम्बुना।
नागार्जुनेन लिखिता स्तम्भे पाटलिपुत्रके ॥ १२६ ॥
नाशिनी तिमिराणाञ्च पटलानां तथैव च।
सद्यः प्रकोपं स्तन्येन स्त्रिया विजयते ध्रुवम् ॥ १२७ ॥
किंशुकस्वरसेनाथ पिप्पलपुष्पकरक्तता:।
अञ्जनात्ताम्रतोयेन चासन्नतिमिरं जयेत् ॥ १२८ ॥
चिरमाच्छादिते नेत्रे वस्त्रसूत्रेण संयुता।
उन्मीलयत्यचक्रेण प्रसादञ्चाधिगच्छति ॥ १२९ ॥

तिमिरे पिप्पल्याद्या वर्त्तिः।—

पिप्पलीं सतगरोत्पलपत्रां वर्त्तयेत् समधुकां सहरिद्राम्।
एतया सततमञ्जयितव्यं यः सुपर्णसममिच्छति चक्षुः ॥ १३० ॥

तिमिरे कोकिला वर्त्तिका।—

व्योषायश्चूर्णसिन्धूत्थ-त्रिफलाऽञ्जनसंयुता।
वर्त्तिका जलपिष्टेयं कोकिला तिमिरापहा ॥ १३१ ॥

तिमिरादौ त्रिकट्वादिवर्त्तिः।—

त्रीणि कटूनि करञ्जफलानि द्वे रजनी सहसैन्धवकञ्च।
विल्वतरोर्वरुणस्य च मूलं वारिचरं दशमं प्रवदन्ति ॥ १३२ ॥
हन्ति तमस्तिमिरं पटलञ्च पिच्चिटशुक्रमथार्जुनकञ्च।
अञ्जनकं जनरञ्जनकञ्च दृक् च न नश्यति वर्षशतञ्च ॥ १३३ ॥

---

कथनेन अस्या वर्त्तेश्चतुर्दशाङ्गीति नामान्तरमपि सूचितं, वाग्भटवचनात्। स्तम्भे शिलास्तम्भे। किंशुकस्वरसेनेति—किंशुकपुष्पस्वरसेन ॥ १२५—१२९ ॥

पिप्पलीमित्यादि।—उत्पलपत्रम् उत्पलपुष्पस्य पत्रम्। वर्त्तयेदिति—वर्त्तिं कुर्य्यात् ॥ १३० ॥

व्योषेत्यादि।—अञ्जनं सौवीराञ्जनम्। कोकिलवत् कृष्णवर्णत्वात् कोकिलेति वर्त्तेः संज्ञा ॥ १३१ ॥

त्रीणीत्यादि।—अत्र "द्वे रजनी" इति स्त्रीलिङ्गनिर्देशात् स्त्रीलिङ्गी ह्रस्वेकारान्तोऽपि रजनीशब्दोऽस्तीति ज्ञेयम्। वारिचरः शङ्खनाभिः। "वारिधरः" इति

तिमिरे नीलोत्पलादिवर्त्तिः।—

नीलोत्पलं विड़ङ्गानि पिप्पली रक्तचन्दनम्।
अञ्जनं सैन्धवञ्चैव सद्यस्तिमिरनाशनम्॥ १३४॥

तिमिरे पत्रादिवर्त्तिः।—

पत्रगैरिककर्पूर-यष्टीनीलोत्पलाञ्जनम्।
नागकेशरसंयुक्तमशेषतिमिरापहम्॥ १३५॥

तिमिरादौ शङ्खादिवर्त्तिः।—

शङ्खस्य चतुरो भागास्तदर्द्धेन मनःशिला।
मनःशिलाऽर्द्धं मरिचं मरिचार्द्धेन पिप्पली॥ १३६॥
वारिणा तिमिरं हन्ति अर्वुदं हन्ति मस्तुना।
पिच्चिटं मधुना हन्ति स्त्रीक्षीरेण तदुत्तमम्॥ १३७॥

तिमिरादौ हरिद्रादिवर्त्तिः।—

हरिद्रा निम्बपत्राणि पिप्पल्यो मरिचानि च।
भद्रमुस्तं विड़ङ्गानि सप्तमं विश्वभेषजम्॥ १३८॥
गोमूत्रेण गुड़ी कार्य्या छागमूत्रेण चाञ्जनम्।
ज्वरांश्च निखिलान् हन्ति भूतावेशं तथैव च॥ १३९॥
वारिणा तिमिरं हन्ति मधुना पटलं तथा।
नक्तान्ध्यं भृङ्गराजेन नारीक्षीरेण पुष्पकम्॥
शिशिरेण परिस्रावमभ्रुषं पिच्चिटं तथा॥ १४०॥

---

पाठे—वारिधरः मुस्तकम्। हन्ति तमस्तिमिरमिति—अन्धकारत्वसाधर्म्यात् तमःसदृशं तिमिरं हन्तीति। अञ्जनकमिति संज्ञायां स्वार्थे कः। जनरञ्जनकं जनानुरागकारीत्यर्थः। दोधकाख्यच्छन्दः॥ १३२।१३३॥

नीलोत्पलमित्यादि।—अञ्जनं रसाञ्जनम्, एवं वक्ष्यमाणेऽपि॥ १३४॥

पत्रेत्यादि।—पत्रं तेजपत्रम्। गैरिकं स्वर्णगैरिकम्॥ १३५॥

शङ्खस्येत्यादि।—अत्र चतुरो भागा इति छान्दसत्वात्। एतैर्जलपिष्टैः वर्त्तिः कार्य्या। स्त्रीक्षीरेण तदुत्तममिति—उत्कृष्टशक्तिकमित्यर्थः॥ १३६।१३७॥

हरिद्रेत्यादि।—भद्रमुस्तः कान्तकामकः। भृङ्गराजेनेति—

दूरान्ध्यादौ गण्डूपदाद्यञ्जनम्।—

मङ्क्षूपरतानलक्तकरसेनासृज्य गण्डूपदान्
लाक्षारञ्जिततूलवर्त्तिनिहितान् यष्टीमधून्मिश्रितान्।
प्रज्वाल्योत्तमसर्पिषाऽनलशिखासन्तापजं कज्जलं
दूरासन्ननिशान्ध्यसर्वतिमिरप्रध्वंसकृच्चोदितम्॥ १४१॥

तिमिरादौ अङ्गुल्यञ्जनम्।—

भूमौ निघृष्टयाऽङ्गुल्या अञ्जनं शमनं तयोः।
तिमिरकाचार्महरं धूमिकायाश्च नाशनम्॥ १४२॥

तिमिरादौ नागशलाकाञ्जनम्।—

त्रिफलाभृङ्गमहौषधमध्वाज्यच्छागपयसि गोमूत्रे।
नागं सप्तनिषिक्तं करोति गरुडोपमं चक्षुः॥ १४३॥

---

शिशिरेणेति—अवश्यायजलेन। अभ्रंषं मुखरोगविशेषं प्रभावादेव हन्ति, ज्वरांश्च निखिलान् हन्ति इतिवत्। निश्चलस्तु "अर्बुदम्" इति पठति॥१३८—१४०॥

मङ्क्ष्वित्यादि।—उपरतानिति—मृतान्। आसृज्यालक्तकरसेन भावयित्वा इत्यर्थः। लाक्षारञ्जितं तूलम् अलक्तकम्। उत्तमसर्पिषा गव्यघृतेन। मृतगण्डूपदान् अलक्तकरसं दत्त्वा आतपे शोषयेत्, तदनु चूर्णीकर्त्तव्यं, तदनु तत् गण्डूपदचूर्णं यष्टिमधुचूर्णेन सह अलक्तकपत्रमध्ये कृत्वा सूत्रेण संवेष्ट्य वर्त्तिः कार्य्या; तया वर्त्त्या गव्यघृतमिश्रितया दीपं प्रज्वाल्य तद्दीपशिखोपरि निर्मलकांस्यादिपात्रं धृत्वा कज्जलपातनं कर्त्तव्यं, तेन कज्जलेन कटुतैलाञ्जनं कर्त्तव्यमिति क्रियामार्गः। आन्ध्यशब्दो दूरादिभिः प्रत्येकं सम्बध्यते॥ १४१॥

भूमावित्यादि।—तयोरिति—दूरान्ध्यासन्नान्ध्ययोर्निशान्ध्यदिवान्ध्ययोरिति वा। धूमिका धूमाकारावलोकनम्॥ १४२॥

त्रिफलेत्यादि।—त्रिफलायाः क्वाथः। भृङ्गराजस्य स्वरसः। महौषधं शुण्ठी, तस्याः क्वाथः। नागं सीसकम्, एतच्चाग्नावावर्त्त्य त्रिफलाक्वाथादावेकैकस्मिन् तत् सीसकं सप्तधा निर्वाप्य तेन सीसकेन शलाका कर्त्तव्या; तया तिमिराञ्जनलिप्तया केवलया वा प्रस्तरादिघृष्टया अञ्जनं कार्य्यमिति परिपाटी भाविप्रयोगदर्शनात्॥ १४३॥

अर्मादौ नागशलाकाञ्जनम्।—

त्रिफलसलिलयोगे भृङ्गराजद्रवे च
हविषि च विषकल्के चौर आजे मधूग्रे।
प्रतिदिनमथ तप्तं सप्तधा सीसमेकं
प्रणिहितमथ पश्चात् कारयेत् तच्छलाकाम् ॥ १४४ ॥
सवितुरुदयकाले साञ्जना व्यञ्जना वा
करकरिकसमेतानर्मपैच्छिल्यरोगान्।
असितसितसमुत्थान् सन्धिवर्त्माभिजातान्
हरति नयनरोगान् सेव्यमाना शलाका ॥ १४५ ॥

काचादौ गुञ्जामूलादिचूर्णाञ्जनम्।—

चिञ्चापत्ररसं निधाय विमले चौडुम्बरे भाजने
मूलं तत्र निघृष्टसैन्धवयुतं गौञ्जं विशोष्यातपे।
तच्चूर्णं विमलाञ्जनेन सहितं नेत्राञ्जने शस्यते
काचार्मार्जुनपिच्चिटे सतिमिरे स्रावञ्च निर्वापयेत् ॥ १४६ ॥

तिमिरे सैन्धवचूर्णाञ्जनम्।—

चिञ्चाषष्ठीयोगे सैन्धवममलं विचूर्ण्य तेनाक्षि।
सममञ्जनेन तिमिरं गच्छति वर्षादसाध्यमपि ॥ १४७ ॥

---

त्रिफलेत्यादि।—हविषि च विषकल्के इति—विषं मारकद्रव्यं कल्करूपं यत्र तादृशि हविषि; अत एव चन्द्रटे "हविषि च विषमिश्रे" इत्युक्तम्। वाग्भटेऽपि "सविषाज्यमजापयः" (उ० १३ अ०) इत्युक्तम्। मधूग्रे इति—प्रचुरे मधुनि। अन्ये तु मधुशब्देन यष्टिमधु वदन्ति; उक्तं हि वाग्भटे—"वराक्वाथं भृङ्गजलं सविषाज्यमजापयः। यष्टीरसश्च यत् सीसं सप्तकृत्वः पृथक् पृथक् ॥" (उ० १३ अ०) इति। साञ्जना तिमिराञ्जनेन सहिता। व्यञ्जना तद्रहिता। करकरिका वालुकाभिभूतनेत्रवेदनावत् वेदना ॥ १४४।१४५ ॥

चिञ्चेत्यादि।—औडुम्बरे भाजने ताम्रपात्रे। गौञ्जं मूलं काकणन्तिकामूलम्। विमलाञ्जनं सौवीराञ्जनम् ॥ १४६ ॥

चित्रेत्यादि।—चिञ्चाषष्ठीयोगे इति—चिञ्चानवयुक्तषष्ठ्याम् ॥ १४७ ॥ ...च।

तिमिरे कणादिरसक्रियाऽञ्जनम्।—

दद्यादुशीरनिर्य्यूहे चूर्णितं कणसैन्धवम्।
तत् स्रुते सघृते भूयः पचेत् क्षौद्रं क्षिपेत् घने॥
शीते तस्मिन् हितमिदं सर्वजे तिमिरेऽञ्जनम्॥ १४८॥

तिमिरादौ धात्र्यादिरसक्रियाऽञ्जनम्।—

धात्रीरसाञ्जनक्षौद्र-सर्पिभिस्तु रसक्रिया।
पित्तानिलाक्षिरोगघ्नी तैमिर्य्यपटलापहा॥ १४९॥

तिमिरे शृङ्गवेरादिनस्यम्।—

शृङ्गवेरं भृङ्गराजं यष्टीतैलेन मिश्रितम्।
नस्यमेतेन दातव्यं महापटलनाशनम्॥ १५०॥

कफजलिङ्गनाशे शस्त्रोपचारविधिः।—

लिङ्गनाशे कफोद्भूते यथावद्विधिपूर्वकम्।
विद्धा दैवकृते छिद्रे नेत्रं स्तन्येन पूरयेत्॥ १५१॥

---

दद्यादित्यादि वाग्भटस्य।—कणेति—पिप्पली, छान्दसत्वात् ह्रस्वत्वम्। स्रुते इति—वस्त्रपरिस्रुते, एतच्चोशीरनिर्य्यूहविशेषणम्। उशीरमूलस्य क्वाथः, कणासैन्धवघृतानि मिलित्वा पादिकानि अष्टमांशानि वा दत्त्वा पाकात् घनः कार्य्यः, शीते चास्मिन् पादिकं मधु प्रक्षेप्यम्। वैद्यप्रसारके त्वस्य विवरणं यथा—"उशीरस्य पलद्वयं, जलस्य चत्वारः शरावाः, क्वाथ्यस्तु शराव एकः, पूते तस्मिन् प्रत्येकं कणासैन्धवयोः प्रत्येकमष्टमाषकं, घृतस्य च कर्षः, पुनः पाकेन घनीभूते शीते च मधुनः कर्षः एकः॥ १४८॥

धात्रीत्यादि।—धात्रीक्वाथे रसाञ्जनचूर्णं घृतञ्च प्रक्षिप्य पुनः पाकात् रसक्रिया साध्या। रसक्रियेति घनीभूतक्वाथस्य संज्ञा। शीते च मधु प्रक्षेप्यम्। मानमेषां सर्वेषां पूर्ववदिति॥ १४९॥

शृङ्गवेरमित्यादि।—यष्टिमधुसाधितेन तैलेन मिश्रितं शृङ्गवेरभृङ्गराजचूर्णं नस्यं किंवा भृङ्गराजस्वरसे तैलमिश्रिते शृङ्गवेरयष्टिमधुचूर्णं प्रक्षिप्य नस्यं कार्य्यम्॥ १५०॥

लिङ्गनाशे इत्यादि।—लिङ्ग्यते ज्ञायतेऽनेनेति लिङ्गं दृष्टिः, तस्य नाशो लिङ्ग-[illegible]। कफोद्भूते इत्यनेन वातजः पित्तजश्च विद्धो न सिध्यतीति दर्शयति। यथा-
दर्शनात्॥ १[illegible]

तती दृष्टेषु रूपेषु शलाकामाहरेच्छनैः।
नयनं सर्पिषाऽभ्यज्य वस्त्रपट्टेन वेष्टयेत् ॥ १५२ ॥
ततो गृहे निराबाधे शयीतोत्तान एव च।
उद्गारकासक्षवथु-ष्ठीवनोत्कम्पनानि च ॥ १५३ ॥
तत्कालं नाचरेदूर्द्ध्वं यन्त्रणा स्नेहपीतवत्।
त्र्यहात् त्र्यहाच्च धावेत कषायैरनिलापहैः ॥ १५४ ॥
वायोर्भयात् त्र्यहादूर्द्ध्वं स्वेदयेदक्षि पूर्ववत्।
दशाहमेवं संयम्य हितं दृष्टिप्रसादनम् ॥
पश्चात् कर्म च सेवेत लघ्वन्नञ्चापि मात्रया ॥ १५५ ॥

---

सुविधिपूर्वकमिति—विधिश्च विदेह-सुश्रुताद्युक्तः, तत्रानुसन्धेयः, स च विस्तारभयान्न लिखितः। दैवकृते छिद्रे इति—अपाङ्गभागवर्त्तिनः शुक्लभागस्य मध्ये यत् दैवकृतं छिद्रमस्ति, तस्मिन्। तदुक्तं दृष्टिगतरोगप्रतिषेधाध्याये सौश्रुते—"मतिमान् शुक्लभागौ द्वौ कृष्णान्मुक्त्वा ह्यपाङ्गतः। उन्मील्य नयने सम्यक् शिराजालविवर्जिते ॥ नाधो नोर्द्ध्वं पार्श्वाभ्यां छिद्रे दैवकृते ततः। शलाकया ताम्रमय्या व्यधयेत् यववक्त्रया ॥" (उ० १७अ०) इत्यादि। अस्यार्थः,—कृष्णात् कृष्णमण्डलात् प्रभृति द्वौ शुक्लभागौ मुक्त्वा त्यक्त्वा मध्ये दैवकृतं छिद्रं यदस्ति, तस्मिन् विध्येदिति। व्यधश्च तथा कर्त्तव्यो यथा एकैव परं लग्नस्यते। सम्यक् व्यधलिङ्गञ्च सुश्रुतेनोक्तं, यथा—"वारिबिन्द्वागमः सम्यक् शब्दश्च व्यधने भवेत्" (उ० १७ अ०) इति। असम्यग्विद्धे तु शोणितागमः। वस्त्रपट्टेन वेष्टयेदिति—सद्यःक्षतरोपणलोध्ररक्तचन्दन-त्रिफलाचूर्णं दत्त्वा वस्त्रेण वेष्टनम्। अन्ये तु धुस्तूरपिण्डं दत्त्वा वस्त्रेण वेष्टयन्ति। निराबाधे इति—धूमातपादिरहितस्थाने। शयीतोत्तान एवेति एतच्च चक्षुर्द्वययोर्व्यधे ज्ञेयम्, एकतरस्य व्यधे तु विद्धात् चक्षुषोऽन्येन पार्श्वेन शयनं ज्ञेयम्। वाग्भटेऽप्येवमेवोक्तं लिङ्गनाशप्रतिषेधाध्याये—"घृताप्लुतं पिचुं दत्त्वा बद्धाऽक्षि शाययेत् ततः। विद्धादन्येन पार्श्वेन तमुत्तानं द्वयोर्व्यधे ॥" (उ० १४ अ०) इति। उद्गारेत्यादौ उत्कम्पनं कम्पनमेव। तत्कालमिति—सप्ताहम्; उक्तं हि वाग्भटे—"क्षवथुं कासमुद्गारं···सप्ताहं नाचरेत्" (उ० १४अ०) इति। ऊर्द्ध्वमिति—उत्तानशयनात् परम् उद्गारादीनि सप्ताहं परिहरेदित्यर्थः। यन्त्रणा स्नेहपीतवदिति—स्नेहपीतस्येव आहाराचारादिनियमः। पूर्ववत् इति—वस्त्रेणाच्छाद्य।

दुष्टवेधजा रोगाः।—

रागश्चोषोऽर्बुदं शोथो बुद्बुदं केकराक्षिता।
अधिमन्थादयश्चान्ये रोगाः स्युर्दुष्टवेधजाः॥ १५६॥

दुष्टवेधजरोगे चिकित्साविध्युपदेशः।—

अहिताचारतो वाऽपि यथास्वं तानुपाचरेत्।
रुजायामक्षिरागे वा भूयो योगान् निबोध मे॥ १५७॥

रुजादौ दूर्वादिलेपः।—

कल्किताः सघृता दूर्वा-यवगैरिकशारिवाः।
मुखालेपे प्रयोक्तव्या रुजारागोपशान्तये॥ १५८॥

रुजादौ पयस्यादिलेपः।—

पयस्याशारिवापत्र-मञ्जिष्ठामधुकैरपि।
अजाक्षीरान्वितैर्लेपः सुखोष्णः पथ्य उच्यते॥ १५९॥

रुजादौ काकोल्यादि घृतम्।—

वातघ्नसिद्धे पयसि सिद्धं सर्पिश्चतुर्गुणे।

---

कियन्तं कालमयं विधिः कार्यः? इत्याह, दशाहमेवमित्यादि। संयम्येति—एवमुत्तानशयनादिना आत्मानं नियम्य अनन्तरं दृष्टिप्रसादनादि हितं कर्म पश्चाल्लघ्वन्नञ्चापि सेवेतेत्यर्थः। दृष्टिप्रसादनम् अञ्जनादि। लघ्वन्नञ्चापीति चकाराद्दशाहाभ्यन्तरेऽपि लघ्वन्नविधिं समुच्चिनोति॥ १५१—१५५॥

राग इत्यादि सुश्रुतस्य।—चोषः उपतापः, चोषणवत् पीड़ा वा। अर्बुदम् अर्बुदाकारशोथः। बुद्बुदं बुद्बुदाकारशोथः। केकराक्षिता वक्रदृष्टिता, टेरनेवत्वमिति यावत्। "शूकराक्षिता" इति पाठान्तरे—शूकरस्येवाधोदृष्टितेत्यर्थः। यथास्वमिति—वातादिप्रत्यनीकादिभिः। रुजायामिति—चोषादिरूपपीड़ायाम्॥ १५६। १५७॥

कल्किता इत्यादि वाग्भटस्य।—मुखालेपे इति—एतैः समभागैश्चक्षुःसमीपे प्रलेप इति। रागः अक्षिलौहित्यम्॥ १५८॥

पयस्येत्यादि वाग्भटस्य।—पयस्या क्षीरकाकोली। पत्रं तेजपत्रम्। वाग्भटे—"सुखोष्णः पथ्य उच्यते" इत्यत्र "सुखोष्णः शस्यते परम्" (उ० १४ अ०) इति पाठः॥ १५९॥

काकोल्यादिप्रतीवापं प्रयुञ्ज्यात् सर्वकर्मसु ॥ १६० ॥

पूर्वक्रियाभिः शूलाशान्तौ पुनः रक्तमोक्षणाद्युपदेशः।—

शाम्यत्येवं न चेच्छूलं स्निग्धस्विन्नस्य मोक्षयेत्।
ततः शिरां दहेच्चापि मतिमान् कीर्त्तितां यथा ॥ १६१ ॥

दृष्टिप्रसादने मेषशृङ्गादिवर्त्तिः।—

दृष्टेरतः प्रसादार्थमञ्जने शृणु मे शुभे।
मेषशृङ्गस्य पत्राणि शिरीषधवयोरपि ॥ १६२ ॥
मालत्याश्चापि तुल्यानि मुक्तावैदूर्य्यमेव च।
अजाक्षीरेण सम्पिष्य ताम्रे सप्ताहमावपेत् ॥
प्रणिधाय तु तद्वर्त्तिं योजयेदञ्जने भिषक् ॥ १६३ ॥

दृष्टिप्रसादने रसाञ्जनादिवर्त्तिः।—

स्रोतोजं विद्रुमं फेनं सागरस्य मनःशिला।
मरिचानि च तद्वर्त्तिं कारयेत् पूर्ववद्भिषक् ॥ १६४ ॥

पित्तोपहते रसाञ्जनादिवर्त्तिः।—

रसाञ्जनं घृतं क्षौद्रं तालीशं स्वर्णगैरिकम्।
गोशकृद्रससंयुक्तं पित्तोपहतदृष्टये ॥ १६५ ॥

---

वातघ्नेत्यादि सुश्रुतस्य।—वातघ्नः भद्रदार्व्वादिः, तेन क्षीरसाधनपरिभाषया सिद्धे सर्पिषि चतुर्गुणे। सर्वकर्मस्विति—नस्यपानादिषु ॥ १६० ॥

शाम्यतीत्यादि सुश्रुतस्य।—शिरामिति—ललाटस्थां शिरां मोक्षयेत् दहेच्चापी-त्यन्वयः ॥ १६१ ॥

दृष्टेरित्यादि सुश्रुतस्य।—अत इति—शिराव्यधदाहानन्तरं, व्यधदाहाभ्यां दोष-शेषेण वा कलुषिताया दृष्टेः प्रसादनाय अञ्जनम्। अञ्जने इति—अञ्जनद्वयम्। मेषशृङ्गस्येत्यादौ मेषशृङ्गः मेषशृङ्गी, पुत्रञ्जीवकश्च इत्यन्ये। आवपेदिति—आलिप्य स्थापयेत् ॥ १६२।१६३ ॥

स्रोतोजमित्यादि सुश्रुतस्य।—स्रोतोजं रसाञ्जनम्। पूर्ववदिति—छागीक्षीरेण पिष्टा ताम्रपात्रे सप्ताहं स्थापयेदित्यर्थः ॥ १६४ ॥

दिनरात्र्यन्धयोः नलिनादिगुड़िकाऽञ्जनम्।—

नलिनोत्पलकिञ्जल्कं गोशकृद्रससंयुतम्।
गुड़िकाऽञ्जनमेतत् स्याद्दिनरात्र्यन्धयोर्हितम्॥ १६६॥

दिनरात्र्यन्धयोः सैन्धवाद्यञ्जनम्।—

नदीजशङ्खत्रिकटून्यथाञ्जनं
मनःशिला द्वे च निशे गवां यकृत्।
सचन्दनेयं गुड़िकाऽथ चाञ्जने
प्रशस्यते रात्रिदिनेष्वपश्यताम्॥ १६७॥

नक्तान्ध्ये पिप्पली-मरिचगर्भच्छागयकृदञ्जनद्वयम्।—

कणा च्छागयकृन्मध्ये पक्वा तद्रसपेषिता।
अचिरार्द्धन्ति नक्तान्ध्यं तद्वत् सक्षौद्रमूषणम्॥ १६८॥

नक्तान्ध्ये पिप्पलीगर्भगोधायकृदञ्जनम्।—

पचेत्तु गौधं हि यकृत् प्रकल्पितं
प्रपूरितं मागधिकाभिरग्निना।
निषेवितं तत् यकृदञ्जनेन च
निहन्ति नक्तान्ध्यमसंशयं खलु॥ १६९॥

---

नलिनेत्यादि।—नलिनं पद्मम्, उत्पलं नीलोत्पलं, तयोः किञ्जल्कः। गोशकृद्रसेति—गोशकृद्रसेन गुड़िकाः कार्य्या इत्याहुः॥ १६६॥

नदीजेत्यादि सुश्रुतस्य।—नदीजं सैन्धवम्। शङ्खं शङ्खनाभिः। शङ्खस्थाने "शिम्बी" इति पाठे—शिम्बी हरितमुद्गः। अञ्जनं रसाञ्जनम्। गवां यकृत् वृक्कायम्। "शकृत्" इत्यपि पाठान्तरम्॥ १६७॥

कणेत्यादि।—पक्वा उत्स्विन्ना। छागयकृत् विदार्य्य तन्मध्ये पिप्पलीं स्थापयित्वा उत्स्वेदयेत्। तद्रसपेषितेति—उत्स्वेदाम्बुना पिष्टा वर्त्तिः कार्य्येत्यर्थः। सक्षौद्र-मूषणमिति—ऊषणं मरिचम्। तद्वत् पूर्ववत् छागयकृत्पिण्डं विदार्य्य तन्मध्ये मरिचं स्थापयित्वा उत्स्वेदयेत्, तत आकृष्य उत्स्वेदनावशिष्टजलेन तन्मरिचं सम्पिष्य वर्त्तिः कार्य्येत्यर्थः॥ १६८॥

पचेदित्यादि।—पचेत् उत्स्वेदयेत्। गौधं गोधाभवं यकृत्। पिप्पलीपूरणार्थं

नक्ताान्ध्ये मरिचाञ्जनं खद्योतप्रयोगश्च।—

दध्ना निघृष्टं मरिचं रात्र्यान्ध्याञ्जनमुत्तमम्।
ताम्बूलयुक्तं खद्योत-भक्षणञ्च तदर्थकृत्॥ १७०॥

नक्तान्ध्ये शफरीमत्स्यचारादञ्जनचतुष्टयम्।—

शफरीमत्स्यचारो नक्तान्ध्यमञ्जनतो विनिहन्ति।
तद्वद्रामठटङ्कणकर्णमलञ्चैकशोऽञ्जनान्मधुना॥ १७१॥

नक्तान्ध्ये मत्स्याण्डप्रयोगः।—

केशराजान्वितं सिद्धं मत्स्याण्डं हन्ति भक्षितम्।
नक्तान्ध्यं नियतं नॄणां सप्ताहात् पथ्यसेविनाम्॥ १७२॥

तिमिरे त्रिफला घृतम्।—

त्रिफलाक्काथकल्काभ्यां सपयस्कं शृतं घृतम्।
तिमिराण्यचिराद्धन्यात् पीतमेतन्निशामुखे॥ १७३॥

सर्वनेत्ररोगे महात्रिफलाद्यं घृतम्।—

त्रिफलाया रसप्रस्थं प्रस्थं भृङ्गरसस्य च।
वृषस्य च रसप्रस्थं शतावर्य्याश्च तत्समम्॥ १७४॥

---

प्रक्षालितमिति—पाटितम्। अग्निनेत्यत्र "अम्बुना" इति पाठान्तरे—अम्बुना स्वेदनं बोध्यम्। अत्र "गोधायकृद्दह्यं पाटितम्" इत्यपि पाठः। निषेवितं तत् यकृदिति—तथाभूतं यकृत् खादितमित्यर्थः। पिप्पली त्वञ्जनविधिनैव देयेति कश्चित्। अन्ये तु उत्स्विन्नकणासहितं यकृत् भक्षणविधिना अञ्जनविधया च विहितं नक्तान्ध्यं हन्तीत्याहुः। अपरे तु उत्स्विन्नकणासहितं यकृत् अञ्जनविधया निषेवितं सनक्तान्ध्यं हन्तीति व्याचक्षते। खलुशब्द एवार्थे, असंशयमेवेत्यर्थः॥ १६९॥

दध्नेत्यादि।—योगोऽयं स्पष्टः॥ १७०॥

शफरीत्यादि।—शफरीमत्स्यमन्तर्धूमं दग्ध्वा मधुना सन्ध्यायामञ्जनं कार्य्यम्॥१७१॥

केशराजेत्यादि।—रोहितमत्स्यादीनामण्डं केशराजं दत्त्वा उपदेशात् काञ्जिकेन पक्वा भक्ष्यम्॥ १७२॥

इतः परं घृतान्युच्यन्ते, त्रिफलेत्यादि।—अत्र चतुर्गुणेन त्रिफलाक्काथेन व्यवहरन्ति। सपयस्कमिति—क्षीरं स्नेहसमम्॥ १७३॥

अजाक्षीरं गुडूच्याश्च आमलक्या रसं तथा ।
प्रस्थं प्रस्थं समाहृत्य सर्वैरेभिर्घृतं पचेत् ॥ १७५ ॥
कल्कः कणा सिता द्राक्षा त्रिफला नीलमुत्पलम् ।
मधुकं क्षीरकाकोली मधुपर्णी निदिग्धिका ॥ १७६ ॥
तत् साधुसिद्धं विज्ञाय शुभे भाण्डे निधापयेत् ।
ऊर्द्ध्वपानमधःपानं मध्ये पानञ्च शस्यते ॥ १७७ ॥
यावन्तो नेत्ररोगास्तान् पानादेवापकर्षति ।
सरक्ते रक्तदुष्टे च रक्ते वाऽतिस्रुतेऽपि च ॥ १७८ ॥
नक्तान्ध्ये तिमिरे काचे नीलिकापटलार्बुदे ।
अभिष्यन्देऽधिमन्थे च पक्ष्मकोपे सुदारुणे ॥ १७९ ॥
नेत्ररोगेषु सर्वेषु वातपित्तकफेषु च ।
अदृष्टिं मन्ददृष्टिञ्च कफवातप्रदूषिताम् ॥ १८० ॥
स्रवतो वातपित्ताभ्यां सकण्ड्वासन्नदूरदृक् ।
गृध्रदृष्टिकरं सद्यो बलवर्णाग्निवर्द्धनम् ॥
सर्वनेत्रामयं हन्यात् त्रिफलाद्यं महत् घृतम् ॥ १८१ ॥

सर्वनेत्ररोगे त्रैफलं घृतम् ।—

त्रिफला त्र्यूषणं द्राक्षा मधुकं कटुरोहिणी ।
प्रपौण्डरीकं सूक्ष्मैला विडङ्गं नागकेशरम् ॥ १८२ ॥
नीलोत्पलं शारिवे द्वे चन्दनं रजनीद्वयम् ।

---

त्रिफलाया इत्यादि ।—महात्रिफलाद्यघृते वक्ष्यति—वासकस्य पचरसः प्रस्थः। मधुपर्णी गुडूची। ऊर्द्ध्वपानादिविधिर्भोजनापेक्षया ज्ञेयः। वातपित्तकफेष्विति—वातपित्तकफोद्भूतेषु सर्वेषु नेत्ररोगेषु इत्यर्थः। तथा कफवातप्रदूषणात् जातामदृष्टिं मन्ददृष्टिञ्चापकर्षतीत्यर्थः। तथा वातपित्ताभ्यां स्रवतश्चक्षुषः, पथ्यमिति शेषः। तथा सकण्ड्वासन्नदूरदृक् यः तस्यापि गृध्रतुल्यदृष्टिकारकमिति सोपस्कारं व्याख्येयम्। पुनः सर्वनेत्रामयं हन्यादेवं कथनं सर्वनेत्रामयहरणस्यावश्यकत्वोपदर्शनार्थमिति ज्ञेयम् ॥ १७४—१८१ ॥

कार्षिकैः पयसा तुल्यं त्रिगुणं त्रिफलारसम् ॥ १८३ ॥
घृतप्रस्थं पचेदेतत् सर्वनेत्ररुजापहम् ।
तिमिरं दोषमास्रावं कामलाकाचमर्बुदम् ॥ १८४ ॥
वीसर्पं प्रदरं कण्डूं रक्तं श्वयथुमेव च ।
खालित्यं पलितञ्चैव केशानां पतनं तथा ॥
विषमज्वरमर्माणि शुक्रञ्चाशु व्यपोहति ॥ १८५ ॥
अन्ये च बहवो रोगा नेत्रजा ये च वर्त्मजाः ।
तान् सर्वान् नाशयत्याशु भास्करस्तिमिरं यथा ॥ १८६ ॥
न चैवास्मात् परं किञ्चिद्दृषिभिः काश्यपादिभिः ।
दृष्टिप्रसादनं दृष्टं यथा स्यात् त्रैफलं घृतम् ॥ १८७ ॥

तिमिरे फलत्रिकादिघृतम् ।—

फलत्रिकाभीरुकषायसिद्धं
कल्केन यष्टीमधुकस्य युक्तम् ।
सर्पिः समं क्षौद्रचतुर्थभागं
हन्यात् त्रिदोषं तिमिरं प्रवृद्धम् ॥ १८८ ॥

तिमिरे भृङ्गराजाद्यं तैलम् ।—

भृङ्गराजरसप्रस्थे यष्टीमधुपलेन च ।
तैलस्य कुड़वं पक्वं सद्यो दृष्टिं प्रसादयेत् ॥
नस्यात् वलीपलितघ्नं मासेनैतन्न संशयः ॥ १८९ ॥

---

त्रिफलेत्यादि ।—त्रिगुणं त्रिफलारसमिति घृतप्रस्थविशेषणम् । विषमज्वरमर्माणीति—विषमज्वरं तथा अर्माणीति विश्लेषः ॥ १८२—१८७ ॥

फलत्रिकेत्यादि ।—अभीरुः शतमूली । तत्र फलत्रिकस्य क्वाथः, शतमूल्यास्तु स्वरस इत्यर्थः । सममिति—साध्वित्यर्थः ; उक्तं हि मेदिनीकारकोषे—"सर्वसाधुसमानेषु समं स्यादभिधेयवत्" इति । अन्ये तु सममिति सहार्थे, यथोक्तकषायादिना सह सिद्धमित्यर्थः इत्याहुः ॥ १८८।१८९ ॥

तिमिरे गोपुरीषतैलं केवलघृताणुतैलप्रयोगोपदेशश्च ।—

गवां शकृत्क्वाथविपक्वमुत्तमं
हितञ्च तैलं तिमिरेषु नस्यतः ।
घृतं हितं केवलमेव पैत्तिके
तथाऽणुतैलं पवनात्मकेऽगुल्मयोः ॥ १९० ॥

तिमिरादौ नृपवल्लभं तैलं घृतञ्च ।—

जीवकर्षभकौ मेदे द्राक्षाऽंशुमती निदिग्धिका बृहती ।
मधुकं बला विडङ्गं मञ्जिष्ठा शर्करा रास्ना ॥ १९१ ॥
नीलोत्पलं श्वदंष्ट्रा प्रपौण्डरीकं पुनर्नवा लवणम् ।
पिप्पल्यः सर्वेषां भागैरक्षांशिकैः पिष्टैः ॥ १९२ ॥
तैलं यदि वा सर्पिर्दत्त्वा क्षीरं चतुर्गुणं पक्वम् ।
आत्रेयनिर्मितमिदं तैलं नृपवल्लभं सिद्धम् ॥ १९३ ॥

---

गवामित्यादि सुश्रुतस्य।—गवां शकृत्क्वाथविपक्वमिति—गोशकृतः क्वाथोऽत्राष्टगुणाम्बुना कार्यः; "स्नेहाच्चतुर्गुणं देयम्" इति परिभाषा व्यवहारबाधिता। घृतं हितं केवलमिति—असंस्कृतम्। नस्यत इति इहापि सम्बध्यते। अणुतैलञ्च सुश्रुते वातव्याधावुक्तम्। कस्मिंश्चित् सुश्रुतपुस्तके "घृतं हितं केवलमेव पैत्तिके" इत्यस्यानन्तरं "त्वजाविकं यन्मधुरैर्विपाचितम्। तैलं स्थिरादौ मधुरे च यद्गणे" (उ० १७ अ०) इति पाठो दृश्यते, स च पाठस्तथाविधाकारपुस्तकेषु न दृश्यते, टीकाकृद्भिश्च न व्याख्यातः, तथा चक्रस्वामिदत्तैश्च न प्रामाणिकैर्लिखित इति ज्ञात्वा अनार्ष इति ज्ञेयम् ॥ १९० ॥

जीवकेत्यादि।—अंशुमती शालपर्णी। अक्षांशिकैरिति—अक्षः कर्षस्तस्यांशश्चतुर्थो भागः माषकचतुष्टयं, तेन अंशिकैरित्यर्थः, तेन सर्वैर्मिलित्वा द्वादशमाषकाधिकं पलं भवति, अनेन तैलकुडवः साध्यः; नस्यार्थं हि तैलकुडवः पच्यते इति सम्प्रदायः। कुडवश्चाष्टौ पलानि। न च "कल्कास्तु स्नेहपादिकः" इत्यनेन विरोधः, कल्कनत्वेनापि तैलकुडवपाकदर्शनात्; यथा पूर्वोक्तभृङ्गराजाद्यतैले तथा वक्ष्यमाणेऽभिजितनाम्नि तैले च। किंवा अक्षांशिकैरिति—कार्षिकैः; अस्मिन् पक्षे कल्कस्य बहुत्वात् तैलप्रस्थः साध्यः। व्यवहारस्तु पूर्वेणैव। यदि वा

तिमिरं पटलं काचं नक्तान्ध्यमर्बुदं तथाऽऽन्ध्यञ्च।
श्वेतञ्च लिङ्गनाशं नाशयति च नीलिकां व्यङ्गम्॥ १९४॥
मुखनासादौर्गन्ध्यं पलितञ्चाकालजं हनुस्तम्भम्।
कासं श्वासं शोषं हिक्कां स्तम्भं तथाऽत्ययं नेत्रे॥ १९५॥
मुखजैह्म्यमर्द्धभेदं रोगं बाहुग्रहञ्च शिरःस्तम्भम्।
रोगानथोर्द्धजत्रोः सर्वानचिरेण नाशयति॥ १९६॥
पक्तव्यं कुड़वं तैलं नस्यार्थं नृपवल्लभे।
अन्यांशैः प्राणिकैः कल्कैरन्ये भृङ्गादितैलवत्॥ १९७॥

तिमिरे अभिजितं तैलम्।—

तैलस्य पचेत् कुड़वं मधुकस्य पलेन कल्कपिष्टेन।
आमलकरसप्रस्थं क्षीरप्रस्थेन संयुक्तम्॥ १९८॥
कृत्वाऽभिजितं नाम्ना तैलं तिमिरं हन्यान्मुनिप्रोक्तम्।
विमलां कुरुते दृष्टिं नष्टामप्यानयेच्च तथा॥ १९९॥
[इति दृष्टिजेषु]

अर्मणि शस्त्रोपचारविधिः।—

अर्म तु च्छेदनीयं स्यात् कृष्णप्राप्तं भवेत् यदा।
वड़िशविद्धमुन्नम्य त्रिभागञ्चात्र वर्जयेत्॥ २००॥

अर्मादौ पिप्पल्यादिगुड़िकाऽञ्जनम्।—

पिप्पलीत्रिफलाद्राक्षा-लोहचूर्णं ससैन्धवम्।
भृङ्गराजरसे पिष्टं गुड़िकाऽञ्जनमिष्यते॥ २०१॥

---

सर्पिरिति—पैत्तिके तिमिरे सर्पिः पक्तव्यम्। दृष्टिजेष्विति—दृष्टिमण्डल-रोगेषु १९१—१९९॥

अर्म त्वित्यादि।—अर्म "आमा" इति ख्यातोऽक्षिरोगविशेषः। अर्म तु छेदनीयमिति मण्डलाग्रेणेति शेषः। उन्नम्येति सूच्यग्रेणेति शेषः; सूच्यग्रेण उन्नम्य उत्तोल्य अनन्तरं वड़िशेन विद्ध्वा मण्डलाग्रेण छेदयेदित्यर्थः। त्रिभागमिति—तृतीयभागं कनीनिकां वर्जयेदित्यर्थः; उक्तं हि—"रक्षन् कनीनिकां छिन्द्या-च्चतुर्भागावशेषितम्" इति॥ २००॥

अर्मं सतिमिरं काचं कण्डूं शुक्रं तथाऽर्जुनम् ।
अजकां नेत्ररोगांश्च हन्यान्निरवशेषतः ॥ २०२ ॥

अर्मादौ काशीशादिरसक्रिया ।—

पुष्पाख्यताक्ष्यंजसितोदधिफेनशङ्ख-
सिन्धूत्थगैरिकशिलामरिचैः समांशैः ।
पिष्टैश्च माक्षिकरसेन रसक्रियेयं
हन्त्यर्मकाचतिमिरार्जुनवर्त्मरोगान् ॥ २०३ ॥

शुक्तिकायां कौम्भसर्पिःप्रयोगाद्युपदेशः ।—

कौम्भस्य सर्पिषः पानैर्विरेकालेपसेचनैः ।
स्वादुशीतैः प्रशमयेच्छुक्तिकामञ्जनैस्ततः ॥ २०४ ॥

शुक्तिकायां प्रवालाद्यञ्जनम् ।—

प्रवालमुक्तावैदूर्य्य-शङ्खस्फटिकचन्दनम् ।
सुवर्णरजतं चौद्रमञ्जनं शुक्तिकापहम् ॥ २०५ ॥

अर्जुने शङ्खनाभ्याद्यञ्जनत्रयम् ।—

शङ्खः चौद्रेण संयुक्तः कतकः सैन्धवेन वा ।
सितयाऽर्णवफेनो वा पृथगञ्जनमर्जुने ॥ २०६ ॥

अर्जुने पित्ताभिष्यन्दचिकित्साऽतिदेशः ।—

पैत्तं विधिमशेषेण कुर्य्यादर्जुनशान्तये ॥ २०७ ॥

---

पिप्पलीत्यादि ।—अत्र भृङ्गराजरसेनैव पेषणमञ्जनञ्चेत्याहुः । गुडिकाऽञ्जनं वर्त्तिरित्यर्थः । अजका अक्षिरोगभेदः ॥ २०१।२०२ ॥

पुष्पाख्येत्यादि ।—पुष्पाख्यं पुष्पकाशीशम् । तार्क्ष्यजं रसाञ्जनम् । सिता शर्करा । शङ्खः शङ्खनाभिः । गैरिकशिला गैरिकमेवेति श्रीकण्ठः । माक्षिकरसेनेति—मधुरूपद्रवेण । रसक्रियेयमिति—एतत् सर्वं चूर्णं प्रचुरतरमधुना समालोड्य वंशनलिकायां स्थाप्यम्, एतत् रसक्रियाविधानं वदन्ति, अत एव "पिष्टं चौद्रेण चालोड्य" इत्यादि वचनमपि पठन्ति ॥ २०३ ॥

कौम्भस्येत्यादि ।—कौम्भं सर्पिर्दशवर्षस्थितं घृतम् ॥ २०४ ॥

प्रवालेत्यादि ।—चौद्रेण पेषणमञ्जनञ्च ॥ २०५।२०६ ॥

अर्जुने वैदेह्याद्यञ्जनम्।—

वैदेही सितमरिचं सैन्धवं नागरं समम्।
मातुलुङ्गरसैः पिष्टमञ्जनं पिष्टकापहम्॥ २०८॥

[इति शुक्लजेषु]।

उपनाहे शस्त्रोपचारोपदेशः।—

भित्त्वोपनाहं कफजं पिप्पलीमधुसैन्धवैः।
विलिखेन्मण्डलाग्रेण प्रच्छयेद्वा समन्ततः॥ २०९॥

अक्षिकोपे पथ्यादिवर्त्तिः।—

पथ्याऽक्षधात्रीफलमध्यबीजै-
स्त्रिद्व्येकभागैर्विदधीत वर्त्तिम्।
तयाऽञ्जयेदश्रुमतिप्रगाढ-
मक्ष्णोर्हरेत् कष्टमपि प्रकोपम्॥ २१०॥

स्रावेषु त्रिफलाक्काथः शिरावेधोपदेशश्च।—

स्रावेषु त्रिफलाक्काथं यथादोषं प्रयोजयेत्।
क्षौद्रेणाज्येन पिप्पल्या मिश्रं विध्येच्छिरां तथा॥ २११॥

---

पैत्तमित्यादि।—पैत्तं विधिमिति—पित्ताभिष्यन्दोक्तविधिम्; उक्तं हि—"पित्ताभिष्यन्दशमनो विधिरर्जुनशान्तिकृत्" इति॥ २०७॥

वैदेहीत्यादि।—वैदेही पिप्पली। सितमरिचं शोभाञ्जनबीजम्। इति शुक्लजेषु॥ २०८॥

भित्त्वेत्यादि सुश्रुतस्य।—भित्त्वेति व्रीहिमुखेनेति शेषः। यद्यप्युपनाहः केवलं कफज एव, तथाऽपि कफजमिति स्वरूपपरं ज्ञेयम्। पिप्पलीमधुसैन्धवैरित्यनन्तरं प्रतिसारयेदिति शेषः। अत्र लेखनानन्तरं प्रतिसारणं ज्ञेयम्; उक्तं हि वाग्भटे—"उपनाहं भिषक् स्विन्नं भिन्नं व्रीहिमुखेन च। लेखयेत् मण्डलाग्रेण ततश्च प्रतिसारयेत्॥" (उ० ११ अ०) इति। अन्ये तु भेदनप्रतिसारणाभ्यामप्रशमे लेखनं प्रच्छानञ्च ज्ञेयमित्याहुः॥ २०९॥

पथ्येत्यादि।—फलमध्यबीजपदं पथ्यादिभिः प्रत्येकं सम्बध्यते। त्रिद्व्येकभागैरिति पथ्याबीजादिषु यथाक्रमं योज्यम्। अत्र पानीयेन पेषणं, मधुना त्वञ्जनमिति व्यवहरन्ति॥ २१०॥

क्रिमिग्रन्थौ त्रिफलादिरसक्रिया ।—

त्रिफलामूत्रकाशीश-सैन्धवैः सरसाञ्जनैः ।
रसक्रिया क्रिमिग्रन्थौ भिन्ने स्यात् प्रतिसारणम् ॥२१२॥

[ इति सन्धिजेषु ] ।

अञ्जननामिकायां शिलादिप्रतिसारणम् ।—

स्विन्नां भित्त्वा विनिष्पीड्य भिन्नामञ्जननामिकाम् ।
शिलैलानतसिन्धूत्थैः सक्षौद्रैः प्रतिसारयेत् ॥ २१३ ॥

अञ्जननामिकायां रसाञ्जनप्रतिसारणादिकम् ।—

रसाञ्जनमधुभ्याञ्च भिन्नां वा शस्त्रकर्मवित् ।
प्रतिसार्य्याञ्जनैर्युञ्ज्यादुष्णोदीपशिखोद्भवैः ॥
स्वेदयेत् घृष्टयाऽङ्गुल्या हरेद्रक्तं जलौकसा ॥ २१४ ॥

नगणे रोचनादिप्रतिसारणचतुष्टयम् ।—

रोचनाक्षारतुल्यानि पिप्पल्यः क्षौद्रमेव च ।
प्रतिसारणमेकैकं भिन्ने नगण इष्यते ॥ २१५ ॥

---

द्राक्षेत्यादि ।—अत्र प्रयोजयेदिति—पिबेत् । यथादोषमिति—क्षौद्रेण पित्तरक्ते, आज्येन वाते पित्ते रक्ते च, पिप्पल्या तु कफे । एभिरप्रशमे शिराव्यध इति ॥ २११ ॥

त्रिफलेत्यादि सुश्रुतस्य ।—त्रिफलाक्वाथगोमूत्रे मिलिला पलचतुष्टये काशीश-सैन्धवरसाञ्जनं मिलिला पलमानं प्रक्षिप्य, पुनःपाकेन घनतामापाद्य रसक्रिया विधेया, किन्तु काशीशरसाञ्जनापेक्षया सैन्धवमल्पमानं व्यवहरन्ति वृद्धाः । मूत्रस्थाने "तुल्य" इति निश्चलः पठति ; तन्मते त्रिफलाक्वाथस्यैव पलचतुष्टयं ग्राह्यम् ; किन्तु सुश्रुते बहुपुस्तकेषु च मूत्रपाठ एव दृश्यते । भिन्ने स्यात् प्रतिसारण-मिति—रसाञ्जनचूर्णमधुभ्यामेव प्रतिसारणं ज्ञेयम् । इति सन्धिजेषु ॥ २१२ ॥

स्विन्नामित्यादि ।—स्पष्टम् ॥ २१३ ॥

रसाञ्जनेत्यादि ।—प्रतिसार्य्याञ्जनैरिति—अञ्जनैः कज्जलैः ॥ २१४ ॥

रोचनेत्यादि सुश्रुतस्य ।—क्षारः यवक्षारः । रोचनादिषु प्रत्येकं क्षौद्रयोगः । प्रतिसारणमिह व्रणमुखे दानं, न तु घर्षणम् ॥ २१५ ॥

निमिषे घृतेन नस्यं पूरणञ्च।—

निमिषे नासया पेयं सर्पिस्तेन च पूरणम्॥ २१६॥

बिसवर्त्मनि स्वेदाद्युपदेशः।—

स्वेदयित्वा विसग्रन्थिं छिद्राण्यस्य निराश्रयम्।
पक्वं भित्त्वा तु शस्त्रेण सैन्धवेनावचूर्णयेत्॥ २१७॥

पिल्ले लेखनाद्युपदेशः।—

वर्त्मावलेखं बहुशस्तद्वच्छोणितमोक्षणम्।
पुनः पुनर्विरेकञ्च पिल्लरोगातुरो भजेत्॥ २१८॥

पिल्ले मनःशिलाद्यञ्जनादिकम्।—

पिल्ली स्निग्धो वमेत् पूर्वं शिराव्यधस्रुतेऽसृजि।
शिलारसाञ्जनव्योष-गोपित्तैश्चक्षुरञ्जयेत्॥ २१९॥

पिल्ले हरितालादिप्रतिसारणद्वयम्।—

हरितालवचादारु सुरसारसपेषितम्।
अभयारसपिष्टं वा तगरं पिल्लनाशनम्॥ २२०॥

---

निमिषे इत्यादि।—अत्र सर्पिस्त्रिफलासिद्धमिति केचित्, अन्ये तु अपक्वमित्याहुः। पूरणमिति—तेन सर्पिषा चक्षुःपूरणमित्यर्थः॥ २१६॥

स्वेदयित्वेत्यादि।—विसग्रन्थिमिति—विसवर्त्माख्याक्षिरोगम्। निराश्रयमिति—आश्रयः स्फोटकः निरवशिष्टं यथा स्यात् तथा भित्त्वेत्यर्थः; अल्पेऽप्याश्रये सति व्याधेरस्य पुनः सम्भवात्; उक्तं हि—"विसग्रन्थिं तथा भिन्द्यात् यथा स्यान्नाश्रयः क्वचित्। पुनः प्रवर्द्धते यस्मादल्पेऽप्यस्याश्रये स्थिते॥" इति॥ २१७॥

पिल्लरोगचिकित्सामाह, वर्त्मेत्यादि।—वर्त्मावलेखमिति—कर्कशशाखोटकादि-पत्रेण वर्त्मघर्षणम्। पिल्ललक्षणञ्च पूर्वमेवोक्तम्। वाग्भटेन तु कुकूणकादीना-मष्टादशानां पिल्लाख्या कृता; यथा—"एतेऽष्टादश पिल्लाख्या दीर्घकालानुबन्धिनः" (उ० १६ अ०) इति॥ २१८॥

पिल्लीत्यादि।—अत्र स्वेदोऽपि बोध्यः, वमनाङ्गत्वात्। शिरा ललाटी। शिलेत्यादौ गोपित्तस्याप्राप्तौ गोरोचनया सर्वत्र व्यवहारः॥ २१९॥

हरितालेत्यादि।—सुरसारसपेषितमिति—सुरसा पर्णासभेदः, सुवाबुलसीति लोके। प्रतिसारणमेतत्। अभयेत्यादौ तगरं तगरपादुका॥ २२०॥

पिल्ले देवदारुप्रतिसारणम् ।—

भावितं वस्तमूत्रेण सस्नेहं देवदारु च ॥ २२१ ॥

पिल्ले काकमाचीधूपः ।—

काकमाचीफलैकेन घृतयुक्तेन बुद्धिमान् ।
धूपयेत् पिल्लरोगार्त्तं पतन्ति क्रिमयोऽचिरात् ॥ २२२ ॥

प्रक्लिन्नवर्त्मनि रसाञ्जनाद्यञ्जनम् ।—

रसाञ्जनं सर्जरसो जातीपुष्पं मनःशिला ।
समुद्रफेनो लवणं गैरिकं मरिचानि च ॥ २२३ ॥
एतत् समांशं मधुना पिष्टं प्रक्लिन्नवर्त्मनि ।
अञ्जनं क्लेदकण्डुघ्नं पक्ष्मणाञ्च प्ररोहणम् ॥ २२४ ॥

पिल्लादौ चुल्लकीमस्तकास्थ्यञ्जनम् ।—

मस्तकास्थि चुल्लक्यास्तु तुषोदलवणान्वितम् ।
ताम्रपात्रेऽञ्जनं घृष्टं पिल्ले प्रक्लिन्नवर्त्मनि ॥ २२५ ॥

पिल्ले पृश्निपर्ण्याद्यञ्जनम् ।—

ताम्रपात्रे गुहामूलं सिन्धूत्थमरिचान्वितम् ।
आरनालेन सङ्घृष्टमञ्जनं पिल्लनाशनम् ॥ २२६ ॥

---

भावितमित्यादि ।—अत्र स्नेहः घृतं, चक्षुष्यत्वात् । एतदपि प्रतिसारणम् ॥ २२१ ॥

काकमाचीत्यादि ।—काकमाचीफलमेकमेव घृतलिप्तं धूपार्थम्; धूपनञ्च चक्षुर्वाससा आच्छाद्य कार्य्यम् । अन्ये तु एकेन केवलेन भावनादिरहितेन धूपनमित्याहुः ॥ २२२ ॥

रसाञ्जनमित्यादि ।—सर्जरसः यक्षधूपः । अत्र पेषणं मधुनैव ॥ २२३।२२४ ॥

मस्तकास्थीत्यादि ।—चुल्लकी शिशुमारः, तस्य मस्तकास्थि । तुषोदकं काञ्जिकम् ॥ २२५ ॥

ताम्रेत्यादि ।—गुहा पृश्निपर्णी, तस्या मूलं ताम्रपात्रे सप्ताहं घर्षयेदिति ज्ञेयम् । अन्ये तु गुहास्थाने "स्नुहा" इति पठित्वा स्नुहामूलमाहुः, तच्च प्रक्षालनेन क्षीररहितं कृत्वा अञ्जनविधौ प्रयोज्यमिति वदन्ति । व्यवहारस्तु पूर्व्वैव ॥ २२६ ॥

धूमदर्शनादौ हरिद्रादिवर्त्तिः।—

हरिद्रे त्रिफलां लोध्रं मधुकं रक्तचन्दनम्।
भृङ्गराजरसे पिष्ट्वा घर्षयेल्लौहभाजने ॥ २२७ ॥
तथा ताम्रे च सप्ताहं कृत्वा वर्त्तिं रजोऽथवा।
पिच्चिटौ धूमदर्शी च तिमिरोपहतेक्षणः ॥
प्रातर्निश्यञ्जयेन्नित्यं सर्वनेत्रामयापहम् ॥ २२८ ॥

पिल्लादौ मञ्जिष्ठादिवर्त्तिः चूर्णाञ्जनं वा।—

मञ्जिष्ठामधुकोत्पलोदधिकफत्वक्सेव्यगोरोचना-
मांसीचन्दनशङ्खपत्रगिरिमृत्तालीशपुष्पाञ्जनैः।
सर्वैरेव समांशमञ्जनमिदं शस्तं सदा चक्षुषोः
कण्डूक्लेदमलाश्रुशोणितरुजापिल्लार्मशुक्रापहम् ॥ २२९ ॥

पिल्लादौ तुत्थकाद्यञ्जनम्।—

तुत्थकस्य पलं श्वेत-मरिचानि च विंशतिः।
त्रिंशता काञ्जिकपलैः पिष्ट्वा ताम्रे निधापयेत् ॥ २३० ॥
पिल्लानपिल्लान् कुरुते बहुवर्षोत्थितानपि।
तत्सेकेनोपदेहाश्रु-कण्डूशोथांश्च नाशयेत् ॥ २३१ ॥

पक्ष्मोपरोधे रोमोद्धरण-लेखनाद्युपदेशः।—

याप्यः पक्ष्मोपरोधस्य रोमोद्धरणलेखनैः।
वर्त्मन्युपचितं लेख्यं स्राव्यमुत्क्लिष्टशोणितम् ॥ २३२ ॥

---

हरिद्रेत्यादि।—अत्र तथा इत्यनेन ताम्रपात्रे सप्ताहं घर्षयेदिति योज्यम्। अन्ये तु तथा ताम्रे चेति विकल्पार्थमेतद्वचनं, न समुच्चयार्थं, तेन लौहभाजने ताम्रभाजने वा घर्षयेदित्याहुः। रजोऽथवेत्यनेन चूर्णाञ्जनमप्युपदिशन्ति ॥२२७।२२८॥

मञ्जिष्ठेत्यादि।—उदधिकफः समुद्रफेनः। सेव्यम् उशीरम्। पत्रं तमालपत्रं, तेजपत्रमित्यन्ये। पुष्पं पुष्पकासीसम्। अञ्जनं रसाञ्जनम्। "तालीशपत्राञ्जनैः" इत्यपि पाठः। वर्त्तिरियं चूर्णाञ्जनं वा ॥ २२९ ॥

तुत्थकस्येत्यादि वाग्भटस्य।—श्वेतमरिचानि शोभाञ्जनबीजानि। विंशतिरित्याकृतिमानात्। उपदेहः पिच्चोडिका ॥ २३०।२३१ ॥

प्रवृद्धान्तर्मुखं रोम सहिष्णोरुद्धरेच्छनैः।
सन्दंशेनोद्धरेत् दृष्ट्यां पक्ष्मरोमाणि बुद्धिमान् ॥ २३३ ॥
रक्तस्रुच्चि दहेत् पक्ष्म तप्तहेमशलाकया।
पक्ष्मरोगे पुनर्नैवं कदाचिद्रोमसम्भवः ॥ २३४ ॥

लेख्यनेत्ररोगाणां निर्देशः।—

उत्सङ्गिनी बहलकर्दमवर्त्मनी च
श्यावञ्च यच्च पठितन्त्विह बद्धवर्त्म।
क्लिन्नञ्च पोथकियुतन्त्विह वर्त्म यच्च
कुम्भीकिनी च सह शर्करयाऽवलेख्याः ॥ २३५ ॥

भेद्यनेत्ररोगाणां निर्देशः।—

श्लेष्मोपनाहनगणौ च बिसञ्च भेद्या
ग्रन्थिश्च यः क्रिमिकृतोऽञ्जननामिका च ॥ २३६ ॥

कफानाहे सैन्धवप्रतिसारणादिकम्।—

घृतसैन्धवचूर्णेन कफानाहं पुनः पुनः।
विलिखेन्मण्डलाग्रेण प्रच्छयेद्वा समन्ततः ॥ २३७ ॥

---

याप्य इत्यादि।—रोमोद्धरणलेखनैरित्यनन्तरं कर्मभिरिति शेषः, पक्ष्मोपरोधो रोमोद्धरणलेखनैः कर्मभिर्याप्यः यापनीयः। लेखनैरित्यत्र "लक्षणैः" इत्यपि पाठान्तरम्। वर्त्मन्युपचितमिति पक्ष्मलोमेति शेषः। केन प्रकारेणोद्धरेदित्याह, सन्दंशेनेत्यादि। दृष्ट्यां पक्ष्मरोमाणि इति—दृष्ट्यभिमुखगतरोमाणीत्यर्थः। "हृष्टा पक्ष्मरोमाणि" इत्यपि पाठान्तरम्। रक्तस्रुत्यादौ पक्ष्मेति—उद्धृतपक्ष्म स्थानम्; उक्तं हि—"पक्ष्मरोगे हृते लोम्नि दाहं तत्स्थानके भिषक्। तप्तया हेमसूच्या तु युञ्ज्याद्दाऽप्यभयाष्टकम् ॥" इति ॥ २३२—२३४ ॥

इदानीं नेत्ररोगेषु मध्ये ये च लेख्या ये च भेद्यास्तानाह, उत्सङ्गिनीत्यादि सुश्रुतस्य।—बहलकर्दमवर्त्मनी चेति—बहलवर्त्म कर्दमवर्त्म चेत्यर्थः। श्यावञ्चेति—श्याववर्त्म, तथा क्लिन्नञ्च क्लिन्नवर्त्म ॥ २३५ ॥

श्लेष्मोपनाहेत्यादि।—बिसमिति—बिसग्रन्थिः ॥ २३६ ॥

घृतेत्यादि।—घृतमिश्रसैन्धवचूर्णेन विलिखेत् प्रतिसारयेत्। मण्डलाग्रेण तु प्रच्छयेदित्यर्थः ॥ २३७ ॥

पोथक्यां पटोलादि-फणिज्झकाश्च्योतनद्वयम्।—

पटोलामलकक्वाथैराश्च्योतनविधिर्हितः।

फणिज्झको रसोनस्य रसैः पोथकिनाशनः॥ २३८॥

आनाहपिडकायां स्वेदाद्युपदेशः।—

आनाहपिडकां स्विन्नां तिर्य्यक् भित्त्वाऽग्निना दहेत्॥२३९॥

छेद्यनेत्ररोगाणां निर्देशः।—

अर्शस्तथा वर्त्म नाम्ना शुष्कार्शोऽर्व्वुदमेव च।

मण्डलाग्रेण तीक्ष्णेन मूले छिन्द्याद्भिषक् शनैः॥ २४०॥

पोथक्यादौ सैन्धवादिवर्त्तिः।—

सिन्धूत्थपिप्पलीकुष्ठ-पर्णिनीत्रिफलारसैः।

सुरामण्डेन वर्त्तिः स्यात् श्लेष्माभिष्यन्दनाशिनी॥

पोथकीवर्त्मोपरोध-क्रिमिग्रन्थि-कुकूणके॥ २४१॥

[ इति वर्त्मजेषु ]।

इति नेत्ररोग-चिकित्सा।

---

## अथ शिरोरोग-चिकित्सा।

वातजे क्रियासूत्रम्।—

वातिके शिरसो रोगे स्नेहस्वेदान् सनावनान्।

---

पोथकीचिकित्सामाह, पटोलेत्यादि।—फणिज्झकः पर्णासः। रसैरित्यनन्तरं पिष्ट इति शेषः, फणिज्झकापदं रसोनस्य रसैः पिष्टमाश्च्योतनमित्यर्थः॥ २३८॥

आनाहपिडकामित्यादि।—अत्र दहेदिति छेदः॥ २३९॥

अर्श इत्यादि।—अर्शःप्रभृतीनान्तु छिन्द्यादित्यनेनान्वयः॥ २४०॥

सिन्धूत्थेत्यादि।—अत्र चतस्रः पर्णिन्यो गृह्यन्ते शालिपर्ण्यादयः। सिन्धूत्थादीनां प्रत्येकं समं चूर्णं गृहीत्वा त्रिफलारसेन भावयित्वा सुरामण्डेन वर्त्तिः कार्य्येत्यर्थः॥ २४१॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां नेत्ररोग-चिकित्सा-विवृतिः।

पानान्नमुपनाहांश्च कुर्य्याद्वातामयापहान् ॥ १ ॥

वातजे कुष्ठादि-मुचकुन्दलेपौ ।—

कुष्ठमेरण्डमूलञ्च लेपात् काञ्जिकपेषितम् ।
शिरोऽर्त्तिं नाशयत्याशु पुष्पं वा मुचुकुन्दजम् ॥ २ ॥

वातजे पञ्चमूलीक्षीरनस्यम् ।—

पञ्चमूलीशृतं क्षीरं नस्यं दद्याच्छिरोगदे ॥ ३ ॥

वातजे शिरोवस्तिविधिः ।—

आ-शिरोव्यायतं चर्म्म कृत्वाऽष्टाङ्गुलमुच्छ्रितम् ।
तेनावेष्ट्य शिरोऽधस्तान्माषकल्केन लेपयेत् ॥ ४ ॥
निश्चलस्योपविष्टस्य तैलैरुष्णैः प्रपूरयेत् ।
धारयेदा-रुजः शान्तेर्यामं यामार्द्धमेव वा ॥ ५ ॥
शिरोवस्तिर्जयत्येषा शिरोरोगं मरुद्भवम् ।
हनुमन्याऽक्षिकर्णार्त्तिमर्दितं मस्तकम्पनम् ॥ ६ ॥
तैलेनापूर्य्य मूर्द्धानं पञ्चमात्राशतानि च ।
तिष्ठेत् श्लेष्मणि पित्तेऽष्टौ दश वाते शिरोगदौ ॥ ७ ॥

---

शिरःसंश्रितकर्णनासानयनगतरोगाणां चिकित्सितमुक्त्वा सम्प्रति तदाश्रयस्य शिरसो रोगाणां चिकित्सामाह, वातिके इत्यादि।—स्वेदोऽत्र वातहरद्रव्यकृत-स्वरसादिभिः। उपनाहः स्वेदविशेषः। अन्ये तु उपनाहं शिरोवस्तिभेदमाहुः, यो मस्तिक्य उच्यते; तन्त्रान्तरे हि मस्तिक्य उपनाहः शिरोवस्तिविशेषत्वेनोक्तः; यथा—"मस्तिक्येऽष्टाङ्गुलं पट्टं वस्तौ तु द्वादशाङ्गुलम्" इति ॥१॥

कुष्ठमित्यादि।—मुचुकुन्दः स्वेतसिद्धः (?) इति निश्चलः; किन्तु पश्चिमे स्वनाम-ख्यात एव (?) ॥ २ ॥

पञ्चमूलीत्यादि।—पञ्चमूली वातपैत्तिके स्वल्पा, वातकफे तु महती ॥ ३ ॥

आ-शिर इत्यादि।—आ शिरोव्यायतमिति—यावता चर्म्मणा आयतेन शिरोवेष्टनं भवति तावन्मानं चर्म्म ग्राह्यमित्यर्थः। तैलैरिति यथाविधिसाधितैः। पूरयेदित्य-ङ्गुलाक्रमेण; "यावदङ्गुलं धारयेच्च तम्" इति तन्त्रान्तरदर्शनात्। आ-रुजः शान्तेः धारयेदिति वाते, यामं पैत्तिके, यामार्द्धं कफे। वक्ष्यमाणपञ्चमात्राशतानीत्यादि वचनं भिन्नकर्त्तृकत्वान्मतभेदादविरुद्धं बोध्यम्। मात्राऽत्र निमेषोन्मेषादिः; उक्तं

नेत्रकर्णरोगयोः पूरणे शिरोवस्त्यतिदेशः।—

एष एव विधिः कार्य्यस्तथा कर्णाक्षिपूरणे ॥ ८ ॥

पित्तजे क्रियासूत्रम्।—

पैत्ते घृतं पयः सेकाः शीता लेपाः सनावनाः।
जीवनीयानि सर्पींषि पानान्नञ्चापि पित्तनुत् ॥ ९ ॥

पित्तजे विरेचनम्।—

पित्तात्मके शिरोरोगे स्निग्धं सम्यग्विरेचयेत्।
मृद्वीकात्रिफलेक्षूणां रसैः क्षीरैर्घृतैरपि ॥ १० ॥

पित्तजे शतधौतघृताभ्यङ्गाद्युपदेशः।—

शतधौतघृताभ्यङ्गः शीतवातादिसेवनम्।
शीतस्पर्शाश्च संसेव्याः सदा दाहार्त्तिशान्तये ॥ ११ ॥

पित्तजे चन्दनादिलेपः परिषेचनञ्च।—

चन्दनोशीरयष्ट्याह्व-बलाव्याघ्रनखोत्पलैः।
क्षीरपिष्टैः प्रदेहः स्यात् शृतैर्वा परिषेचनम् ॥ १२ ॥

---

—"निमेषोन्मेषणे पुंसां स्फोटनं वाऽपि चाङ्गुलेः। अक्षरस्य लघोर्वाऽपि मात्रासूच्चारणं भवेत् ॥" इति। व्यवहारस्तु छोटिकयेति। कफजे तु शिरोवस्तिः नस्यादिभिरजिते कफे वातस्य चानुबन्धे सति ज्ञेयः, केवलकफे तस्यानौचित्यात् ॥ ४—७ ॥

एष एवेत्यादि।—विधिरिति मात्रारूपः ॥८ ॥

पैत्ते इत्यादि।—शीता इति सेकलेपयोर्विशेषणम्। जीवनीयानि सर्पींषीति—जीवनीयदशकक्वाथकल्कसाधितानि इत्यर्थः ॥ ९ ॥

पित्तात्मके इत्यादि।—मृद्वीकेत्यादौ मृद्वीकाक्वाथेक्षुरसौ त्रिवृच्चूर्णप्रक्षेपात् विरेककारकौ ज्ञेयौ, त्रिफलाक्वाथस्तु स्वत एवेत्याहुः। क्षीरघृते चापि त्रिवृदादिसिद्धे एव विरेचके ॥ १० ॥

शतधौतेत्यादि।—शतधौतघृताभ्यङ्ग इति—शतधौतेन घृतेन शिरसोऽभ्यङ्गो ज्ञेयः ; उक्तं हि—"सर्पिषः शतधौतस्य शिरसि धारणं हितम्" इति। शीतस्पर्शा इत्यादौ शीतस्पर्शाः कुमुदोत्पलपद्मादयः ॥ ११ ॥

पित्तजे मृणालाद्यामलकादिलेपौ ।—

मृणालबिसशालूक-चन्दनोत्पलकेशरैः ।
स्निग्धशीतैः शिरो दिह्यात् तद्वदामलकोत्पलैः ॥ १३ ॥

पित्तजे यष्ट्याह्वादि-शर्करादिघृतद्वयम् ।—

यष्ट्याह्व-चन्दनानन्ता-क्षीरसिद्धं घृतं हितम् ।
नावनं शर्करा-द्राक्षा-मधुकैर्वाऽपि पित्तजे ॥ १४ ॥

पित्तजे तेजपत्रादिनस्यद्वयम् ।—

त्वक्पत्रशर्करारास्ना नावनं तण्डुलाम्बुना ।
क्षीरसर्पिर्हितं नस्यं रसा वा जाङ्गलाः शुभाः ॥ १५ ॥

रक्तजे पित्तशिरःकल्पाऽतिदेशादिः ।—

रक्तजे पित्तवत् सर्वं भोजनालेपसेचनम् ।
शीतोष्णयोश्च व्यत्यासो विशेषो रक्तमोक्षणम् ॥ १६ ॥

---

चन्दनेत्यादि ।—व्याघ्रनखः नखीभेदः । शृतैरिति—चन्दनादिक्वाथैः; अन्ये तु चन्दनादिशृतैः क्षीरैरित्याहुः ॥ १२ ॥

मृणालेत्यादि ।—बिसं बालमृणालम् । उत्पलस्य केशरं किञ्जल्कः । स्निग्धशीतैरिति स्निग्धत्वं घृतयोगात् । तद्वदित्यनेन घृतयोगात् स्निग्धत्वमतिदिशन्ति ॥ १३ ॥

यष्ट्याह्वेत्यादि ।—अनन्ता अनन्तमूलम् । एषां कल्केन चतुर्गुणक्षीरेण घृतं पक्तव्यम् । एवं शर्करा-द्राक्षा यष्टिमधुकल्केन चतुर्गुणक्षीरेण घृतान्तरं पक्तव्यमित्यर्थः ॥ १४ ॥

त्वक्पत्रेत्यादि ।—त्वक्पत्रं तेजपत्रम् । क्षीरसर्पिरित्यादि सुश्रुतस्य ।—क्षीरोत्थं सर्पिः क्षीरसर्पिः । शुभा इति—प्रशस्ताः । "जाङ्गलाः शुभाः" इत्यत्र "जाङ्गलाण्डजाः" इति पाठान्तरं तन्त्रान्तरे तथाविधाकारसुश्रुतादिपुस्तकेष्वदर्शनात् उपेक्षणीयमिति ॥ १५ ॥

रक्तजे इत्यादि ।—शीतोष्णयोश्च व्यत्यास इति—शीतां क्रियां कृत्वा उष्णा, उष्णाञ्च कृत्वा शीतेत्यर्थः । रक्तजेऽप्येतदुष्णक्रियाविधानं यद्यपि हेतुप्रत्यनीकं न भवति, तथाऽपि प्रभावात् व्याधिप्रत्यनीकत्वमस्य बोध्यम् ॥ १६ ॥

कफजे क्रियासूत्रम्।—

कफजे लङ्घनं स्वेदो रूक्षोष्णैः पाचनात्मकैः।
तीक्ष्णावपीडा धूमाश्च तीक्ष्णोष्णकवड़ा हिताः॥ १७॥

कफजे पुराणघृतप्रयोगः शिरोविरेचनञ्च।—

स्वच्छञ्च पाययेत् सर्पिः पुराणं स्वेदयेत् ततः।
मधूकसारेण शिरः स्विन्नञ्चास्य विरेचयेत्॥ १८॥

कफजे कृष्णादिलेपः।—

कृष्णाऽब्दशुण्ठीमधुक-शताह्वोत्पलपाकलैः।
जलपिष्टैः शिरोलेपः सद्यः शूलनिवारणः॥ १९॥

कफजे देवदार्वादिलेपः।—

देवदारु नतं कुष्ठं नलदं विश्वभेषजम्।
लेपः काञ्जिकसम्पिष्टस्तैलयुक्तः शिरोऽर्त्तिनुत्॥ २०॥

त्रिदोषजे त्रिदोषहरक्रियाऽतिदेशः पुराणघृतप्रयोगश्च।—

सन्निपातभवे कार्य्या दोषत्रयहरी क्रिया।
सर्पिः पानं विशेषेण पुराणन्त्वादिशन्ति हि॥ २१॥

त्रिकटुकादिक्वाथः।—

त्रिकटुकपुष्करजनी-जीवकतुरङ्गगन्धानाम्।
क्वाथः शिरोऽर्त्तिजालं नासापीतो निवारयति॥ २२॥

---

कफजे इत्यादि।—पाचनात्मकैरिति—आमकफपाचनस्वभावैर्भेषजैर्दशमूलादिभिः॥ १७॥

स्वच्छञ्चेत्यादि।—पाययेत् सर्पिः पुराणमिति पुराणस्य सर्पिषः कालप्रकर्षकृतसंस्कारात् कफहरत्वं बोध्यम्; किंवा कफजे पुराणं वातानुबन्धे विधेयम्। मधूकसारेण मधूककाष्ठसारचूर्णेन उष्णोदकेनालोड़ितेन अवपीड़ः कार्य्यः॥ १८॥

कृष्णेत्यादि।—पाकलं कुष्ठम्॥ १९॥

देवदार्वित्यादि।—नलदं मांसी॥ २०॥

सन्निपातेत्यादि।—सर्पिः पानं पुराणमिति—पीयते इति पानं, कर्मणि ल्युट्, तदेव पुराणमिति विशेषेण गृह्यते॥ २१॥

त्रिकटुकेत्यादि।—जीवकः पीतशालः। शिरोऽर्त्तिजालमिति—नानादोषजं

नागरक्षीरम् ।—

नागरकल्कमिश्रं क्षीरं नस्येन योजितं पुंसाम् ।
नानादोषोद्भूतां शिरोरुजां हन्ति तीव्रतराम् ॥ २३ ॥

नतादिलेपः ।—

नतोत्पलं चन्दनकुष्ठयुक्तं
शिरोरुजायां सघृतः प्रदेहः ॥ २४ ॥

प्रपौण्डरीकादिलेपः ।—

प्रपौण्डरीकं सुरदारु कुष्ठं
यष्ट्याह्वमेला कमलोत्पले च ।
शिरोरुजायां सघृतः प्रदेहो
लोहैरकापद्मकचोरकैश्च ॥ २५ ॥

शताह्वाद्यं तैलम् ।—

शताह्वैरण्डमूलोग्रा-वक्राव्याघ्रीफलैः शृतम् ।
तैलं नस्यं मरुत्श्लेष्म-तिमिरोर्द्ध्वगदापहम् ॥ २६ ॥

जीवकाद्यं तैलम् ।—

जीवकर्षभकौ द्राक्षा-सितायष्टीबलोत्पलैः ।
तैलं नस्यं पयःपक्वं वातपित्तशिरोगदे ॥ २७ ॥

---

शिरोरोगम् । द्रव्याणां सोष्णवीर्य्यत्वात् पित्तजं विहाय योज्योऽयं योग इत्येके ॥ २२ ॥

नागरेत्यादि ।—अत्र गव्यदुग्धं पलैकं शुण्ठीचूर्णं माषकत्रयं प्रक्षिप्य नासया पेयमिति वृद्धाः ॥ २३ ॥

नतेत्यादि ।—नतं तगरपादुका, तदभावे शियलीछोपरः ॥ २४ ॥

प्रपौण्डरीकमित्यादि ।—लोहम् अगुरु । एरका होगलः । चोरकं चोरपुष्पी । प्रपौण्डरीकादिश्चोरकान्त एको योगः । निश्चलस्तु उत्पलान्त एको योगः, लोहेत्याद्यपर इत्याह, तन्न, द्वात्रिंशत्प्रदेहापेक्षया प्रदेहाधिकप्रसङ्गात् ॥ २५ ॥

शताह्वेत्यादि ।—उग्रा वचा । वक्रं तगरपादुका । व्याघ्री कण्टकारी, तस्याः फलम् । फलमिति—मदनफलमित्यन्ये ॥ २६ ॥

जीवकेत्यादि ।—जीवकाद्यतैले पयःपक्वमिति—चतुर्गुणदुग्धे सिद्धम् ॥ २७ ॥

बृहज्जीवकाद्यं तैलम्।—

जीवकर्षभकौ द्राक्षा मधूकं मधुकं बला।
नीलोत्पलं चन्दनञ्च विदारी शर्करा तथा॥ २८॥
तैलप्रस्थं पचेदेभिः शनैः पयसि षड्गुणे।
जाङ्गलस्य तु मांसस्य तुलार्द्धस्य रसेन तु॥ २९॥
सिद्धमेतद्भवेन्नस्यं तैलमर्द्धावभेदकम्।
बाधिर्य्यं कर्णशूलञ्च तिमिरं गलशुण्डिकाम्॥ ३०॥
वातिकं पैत्तिकञ्चैव शीर्षरोगं नियच्छति।
दन्तचालं शिरःशूलमर्दितञ्चापकर्षति॥ ३१॥

षड्विन्दु तैलम्।—

एरण्डमूलं तगरं शताह्वा
जीवन्ति रास्ना सहसैन्धवञ्च।
भृङ्गं विडङ्गं मधुयष्टिका च
विश्वौषधं कृष्णतिलस्य तैलम्॥ ३२॥
आजं पयस्तैलविमिश्रितञ्च
चतुर्गुणे भृङ्गरसे विपक्वम्।
षड्विन्दवो नासिकया विधेयाः
शीघ्रं निहन्युः शिरसो विकारान्॥ ३३॥
च्युतांश्च केशान् चलितांश्च दन्तान्,
दुर्बद्धमूलांश्च दृढ़ीकरोति।

---

बृहज्जीवकाद्यतैले।—मधूकं मधूकस्य पुष्पं फलं वा। जाङ्गलमांसं हरिणादिमांसं, तस्य तुलार्द्धस्य रसेनेति—"तुलाद्रव्ये जलद्रोणः" इति वचनात् तुलार्द्धे मांसेऽर्द्धद्रोणजलं दत्त्वा पादशेषो रसः प्रस्थद्वयमानो भवति। "स्नेहात्तुर्य्यं देयम्" इति परिभाषया क्वाथविधिरित्यन्ये। व्यवहारस्तु पूर्वव्याख्यया॥ २८—३१॥

एरण्डमूलमित्यादि।—षड्विन्दुतैले तगरं पिण्डतगरमूलम्। भृङ्गं गुड़त्वक्।

सुपर्णदृष्टिप्रतिमञ्च चक्षु-
र्बाह्वोर्बलञ्चाभ्यधिकं ददाति ॥ ३४ ॥

क्षयजे बृंहणादिक्रियोपदेशः ।—

क्षयजे क्षयमासाद्य कर्त्तव्यो बृंहणो विधिः ।
पाने नस्ये च सर्पिः स्याद्वातघ्नैर्मधुरैः शृतम् ॥ ३५ ॥

क्रिमिजे व्योषादिनस्यद्वयम् ।—

क्रिमिजे व्योषनक्ताह्व-शिग्रुबीजैश्च नावनम् ।
अजामूत्रयुतं नस्यं क्रिमिजे क्रिमिजित् परम् ॥ ३६ ॥

क्रिमिजे अपामार्गादितैलम् ।—

अपामार्गफलव्योष-निशादन्तीक्षवकरामठैः ।
सविडङ्गैः शृतं मूत्रे तैलं नस्यं क्रिमिं जयेत् ॥ ३७ ॥

विश्वादि-पिप्पल्यादिनस्यद्वयम् ।—

नावनं सगुडं विश्वं पिप्पली वा ससैन्धवा ।

---

अजाक्षीरन्तु तैलसममिति, किन्तु सामान्यतस्तैलतैलगर्भाचोरेणापि योगोऽयं, तन्त्रान्तर-संवादात् ॥ ३२—३४ ॥

क्षयज इत्यादि ।—क्षयजे क्षयमासाद्येति—यस्य रक्तादेः क्षयेण शिरोरोगो जातस्तस्य क्षयं बुद्ध्वा तत्प्रत्यनीको बृंहणो विधिः कार्य्य इत्यर्थः । वातघ्नैर्मधुरैः शृतमिति—वातघ्नो भद्रदार्व्वादिः, मधुरः काकोल्यादिः ; तत्र वातघ्नस्य क्वाथः, मधुरगणस्य तु कल्कः ; यदाह विदेहः,—"सिद्धं वातहरक्वाथे कल्के मधुरके घृतम् । पाने नस्ये विधातव्यं शिरोरोगे क्षयोद्भवे ॥" इति ॥ ३५ ॥

क्रिमिज इत्यादि ।—नक्ताह्वशिग्रुबीजैरिति—नक्ताह्वः करञ्जः ; बीजपदमुभयत्रापि सम्बध्यते । अजामूत्रयुतमित्यादि—क्रिमिजे शिरोरोगे यन्नस्यमुक्तं तदजामूत्र-युक्तं क्रिमिजित् स्यादित्यर्थः ; उक्तं हि—"मूत्रपिष्टाः समुद्दिष्टाः क्रियाः क्रिमिषु योजयेत्" इति । किंवा क्रिमिजित् विडङ्गम् अजामूत्रयुतं नस्यं परम् उत्कृष्टं स्यादित्यर्थः ॥ ३६ ॥

अपामार्गेत्यादि ।—अपामार्गफलमिति षष्ठीसमासः । क्षवकः छिक्किया, "लोकनाथ" इति लोके । रामठं हिङ्गु । मूत्रं गोमूत्रं, तच्च चतुर्गुणम् ॥ ३७ ॥

नावनमित्यादि ।—अत्र गुडमाषकाष्टौ, शुण्ठीचूर्णं माषकद्वयम्, उष्णोदकः

भुजस्तम्भादिरोगेषु सर्वेष्वूर्द्ध्वगदेषु च ॥ ३८ ॥

सूर्य्यावर्त्ते नस्याद्युपदेशः।—

सूर्य्यावर्त्ते विधातव्यं नस्यकर्मादि भेषजम्।
पाययेत् सगुड़ं सर्पिर्घृतपूरांश्च भक्षयेत् ॥ ३९ ॥

सूर्य्यावर्त्ते शिराविधाद्युपदेशः।—

सूर्य्यावर्त्ते शिराविधो नावनं क्षीरसर्पिषा।
हितः क्षीरघृताभ्यासस्ताभ्याञ्चैव विरेचनम् ॥ ४० ॥

सूर्य्यावर्त्ते तिलस्वेद-जीवनीयस्वेदौ।—

क्षीरपिष्टैस्तिलैः स्वेदो जीवनीयैश्च शस्यते ॥ ४१ ॥

सूर्य्यावर्त्तादौ कुङ्कुमादिनस्यम्।—

सशर्करं कुङ्कममाज्यभृष्टं नस्यं विधेयं पवनासृगुत्थे।
भ्रूशङ्खकर्णाक्षिशिरोऽर्द्धभूले दिनाभिवृद्धिप्रभवे च रोगे ॥४२॥

---

जलेकेन गालयित्वा वस्त्रपूतं कृत्वा नस्यं कार्य्यम्। अयं योगो वातानुबन्धे। तथा पिप्पलीचूर्णं माषकद्वयं, सैन्धवलवणम् एकमाषकम्, उष्णोदकं कर्षकं, पूर्ववन्नस्यं कफानुबन्धे ॥३८ ॥

सूर्य्यावर्त्ते इत्यादि सुश्रुतस्य।—नस्यकर्मादीति—हेतुभूतदोषविपरीतं नस्य-परिषेकशिरोवस्त्यादिकम्। पाययेदित्यादौ वातप्रबले घृतपलैके गुड़माषकाष्टकं प्रक्षिप्य पाययेदिति। घृतपूरः भक्ष्यविशेषः; यथा—"मर्दितां समितां क्षीर-नारिकेल-घृतादिभिः। अवगाह्य घृते पक्वा घृतपूरोऽयमुच्यते॥" इति ॥ ३९ ॥

सूर्य्यावर्त्ते इत्यादि।—सूर्य्यावर्त्ते यथोक्तक्रियाभिः पुनरप्रशमे शिराव्यधः कार्य्य इत्याहुः। क्षीरसर्पिषेति—क्षीरोत्थसर्पिषा। क्षीरघृताभ्यास इति—क्षीरघृतयो-रभ्यासः। ताभ्यामिति—क्षीरघृताभ्यां विरेचकद्रव्यसहिताभ्यां विरेचनम्; किंवा विरेचनमिह शिरोविरेचनम्, अत्रापि शिरोविरेचनान्यथाऽनुपपत्त्या शिरोविरेचन-द्रव्ययुक्ते क्षीरघृते बोध्ये ॥ ४० ॥

क्षीरपिष्टैरित्यादि।—जीवनीयैश्च क्षीरपिष्टैरित्यन्वयः ॥ ४१ ॥

सशर्करमित्यादि।—सशर्करं कुङ्कुमं घृते भृष्ट्वा घृतेनैव पिष्ट्वा समालोड्य च नस्यं विधेयम्। अस्य पक्षौ—घृत तो ४, शर्करा मा ४, कुङ्कुम मा ३, आलोड्याग्नौ किञ्चित् तप्तीकृत्य नस्यं देयम्। दिनाभिवृद्धिप्रभवो रोगः सूर्य्यावर्त्त इत्यर्थः ॥ ४२ ॥

सूर्य्यावर्त्ते अपामार्गनवनीतम्।—

कृतमालपल्लवरसे खरमञ्जरिकल्कसिद्धनवनीतम्।
नस्येन जयति नियतं सूर्य्यावर्त्तं सुदुर्वारम्॥ ४३॥

सूर्य्यावर्त्तादौ दशमूलीक्वाथः।—

दशमूलीकषायस्तु सर्पिःसैन्धवसंयुतः।
नस्येनार्द्धावभेदघ्नः सूर्य्यावर्त्तशिरोऽर्त्तिनुत्॥ ४४॥

सूर्य्यावर्त्ते शिरीषादि-वचाद्यवपीड़द्वयम्।—

शिरीषमूलकफलैरवपीड़ञ्च योजयेत्।
अवपीड़ो हितो वा स्याद्वचापिप्पलिभिः कृतः॥४५॥

सूर्य्यावर्त्ते जाङ्गलमांसोपनाहः।—

जाङ्गलानि च मांसानि कारयेदुपनाहनम्।
तेनास्य शाम्यति व्याधिः सूर्य्यावर्त्तः सुदारुणः॥ ४६॥

अर्द्धावभेदके सूर्य्यावर्त्तचिकित्साऽतिदेशः।—

एष एव विधिः कृत्स्नः कार्य्यश्चार्द्धावभेदके॥ ४७॥

सूर्य्यावर्त्तादौ शारिवादिलेपः।—

शारिवोत्पलकुष्ठानि मधुकञ्चाम्लपेषितम्।
सर्पिस्तैलयुतो लेपः सूर्य्यावर्त्तार्द्धभेदयोः॥ ४८॥

---

कृतमालेत्यादि।—कृतमालः शोनालुः, तस्य पल्लवस्वरसः प्रस्थ एकः, खरमञ्जरी अपामार्गः, तस्य बीजस्य पलद्वयं कल्कः, नवनीतस्याष्टौ पलानीत्याहुः॥ ४३॥

दशमूलीत्यादि।—दशमूलीक्वाथः पलं १, प्रक्षेपः घृतं मा ७, सैन्धवं मा १, नासया पेयम्॥ ४४॥

शिरीषेत्यादि।—शिरीषवल्कल-मूलकबीजयोः प्रत्येकं मा ४, पिष्टा वस्त्रेण निष्पीड्य नस्यं विधेयम्; एवं वचापिप्पलीभिरिति। एतच्चावपीड़द्वयमतितीक्ष्णत्वात् यद्यपि सूर्य्यावर्त्ते वातपित्तोत्तरे न युज्यते, तथाऽपि व्याधिप्रत्यनीकत्वात् स्थानिकफक्षयार्थं वा ज्ञेयमिदम्। अन्ये तु सूर्य्यावर्त्तविपर्य्यये योगद्वयमाहुः; सूर्य्यावर्त्तविपर्य्ययस्तु प्रत्यूषे सायञ्च महान्, मध्ये तु मन्द इति॥ ४५॥

जाङ्गलानीत्यादि।—अत्र वृद्धवैद्योपदेशात् वातहरद्रव्यैर्मांसमुत्स्विद्य सैन्धवं तैलञ्च दत्त्वा उष्णलेपः कार्य्यः॥ ४६।४७॥

सूर्य्यावर्त्तार्द्धावभेदयोः चीरशर्करादियोगचतुष्टयम् ।—

पिबेत् सशर्करं चीरं नीरं वा नारिकेलजम् ।
सुशीतं वाऽपि पानीयं सर्पिर्वा नस्ततस्तयोः ॥ ४९ ॥

अनन्तवाते सूर्य्यावर्त्तचिकित्साऽतिदेशः शिराव्यधोपदेशश्च ।—

अनन्तवाते कर्त्तव्यः सूर्य्यावर्त्तहितो विधिः ।
शिराव्यधश्च कर्त्तव्योऽनन्तवातप्रशान्तये ॥ ५० ॥

अनन्तवाते मधुमस्तकादिभक्ष्यप्रयोगोपदेशः ।—

आहारश्च विधातव्यो वातपित्तविनाशनः ।
मधुमस्तक-संयाव-हविःपूरैश्च यः क्रमः ॥ ५१ ॥

शङ्खके सूर्य्यावर्त्तचिकित्साऽतिदेशः चीरसर्पिर्नस्यञ्च ।—

सूर्य्यावर्त्ते हितं यत् तच्छङ्खके खेदवर्जितम् ।
चीरसर्पिः प्रशंसन्ति नस्तःपानञ्च शङ्खके ॥ ५२ ॥

शङ्खके शतावर्य्यादिलेपः ।—

शतावरीं कृष्णतिलान् मधुकं नीलमुत्पलम् ।
दूर्वां पुनर्नवाञ्चापि लेपं साध्ववचारयेत् ॥ ५३ ॥

---

आरिवेत्यादि ।—अम्लपेषितमिति—काञ्जिकपेषितम् ॥ ४८ ॥

पिबेदित्यादि ।—योगचतुष्टयं सशर्करमित्यनुवर्त्तयितुं युज्यते इति निश्चलः । तयोरिति—सूर्य्यावर्त्तार्द्धभेदकयोः ॥ ४९ ॥

अनन्तवाते इत्यादि सुश्रुतस्य ।—स्पष्टम् ॥ ५० ॥

आहारश्चेत्यादि ।—मधुमस्तकेति—मधुमस्तकादयो भक्ष्यविशेषाः सूदशास्त्रेऽनुसन्धेयाः । मधुमस्तः पोलिकाकारो मधुगर्भः सिताविष्टितो भक्ष्यविशेष इति चक्रः । मधुन ऊर्द्धमिति चक्रः । संयावो यथा—"समितामम्बुदुग्धेन मर्दयित्वा सुशोभनाम् । पचेद्घृतोत्तरे खण्डे चिपेद्वाण्डे नवे ततः ॥ संयावोऽसौ सिताचूर्णैः खण्डेलामरिचार्द्रकैः ॥" इति । हविःपूरः भक्ष्यविशेषः, घृतपूरेति लोके ; यथा —"मर्दितः समितापिण्डः चीरेणैव विलोड़ितः । अवगाह्य घृते पक्को घृतपूरोऽयमुत्तमः ॥" इति । क्रम इति—आहारक्रमः ॥ ५१ ॥

सूर्य्यावर्त्ते इत्यादि ।—चीरोत्थं सर्पिः चीरसर्पिः । नस्तःपानं नासिकया पानं,

शङ्खके चीरिवृक्षप्रलेपादिशीतक्रियाविधिः।—

शीततोयावसेकांश्च क्षीरसेकांश्च शीतलान्।
कल्कैश्च क्षीरिवृक्षाणां शङ्खकस्य प्रलेपनम् ॥ ५४ ॥

शङ्खके शिरावेधविधिः।—

क्रौञ्चकादम्बहंसानां शराव्याः कच्छपस्य च।
रसैः संबृंहितस्याथ तस्य शङ्खकसन्धिजाः ॥
ऊर्द्ध्वं तिस्रः शिराः प्राज्ञो भिन्द्यादेव न ताड़येत् ॥ ५५ ॥

शिरःकम्पे अमृतादिलेपादिः।—

शिरःकम्पेऽमृतारास्ना-बलास्नेहसुगन्धिभिः।
स्नेहस्वेदादि वातघ्नं शिरोवस्तिश्च शस्यते ॥ ५६ ॥

यष्ट्याद्यं घृतम्।—

यष्टीमधुबलारास्ना-दशमूलाम्बुसाधितम्।
मधुरैश्च घृतं सिद्धमूर्द्ध्वजत्रुगदापहम् ॥ ५७ ॥

---

किंवा नस्यं पानञ्च; उक्तञ्च सुश्रुते—"क्षीरसर्पिः प्रशंसन्ति नस्ये पाने च शङ्खके" (उ० २६ अ० ) इति ॥ ५२।५३ ॥

शीतेत्यादि।—क्षीरिवृक्षेति—क्षीरिवृक्षा वटादयः ॥ ५४ ॥

क्रौञ्चेत्यादि।—संबृंहितस्येति—प्राप्तमांसोपचयस्य। सन्धिजाः शिरा भिन्द्यादित्यत्र सूच्येति शेषः। न ताड़येदिति कुठारिकयेति शेषः, सन्धिभङ्गभयादिति भावः ॥ ५५ ॥

शिरःकम्पे इत्यादि।—स्नेहः घृतादिः। सुगन्धिः अगुर्वादिः। सुगन्धिभिरित्यनन्तरं लेप इति शेषः। शिरोवस्तिविधिः पूर्वमुक्त एव ॥ ५६ ॥

यष्टीमध्वित्यादि।—मधुरैः काकोल्यादिभिः कल्कैरित्यर्थः। घृतं प्रस्थैकम्; क्वाथार्थं यष्ट्यादिदशमूलान्तानां मिलित्वा चतुःषष्टिपलं, जलद्रोणैकं, शेषं शरावषोड़श; कल्कार्थं—काकोली यष्टिमधु कांकड़ाशृङ्गी मेदा जीवक ऋषभक पुण्डरीकाष्ठ द्राक्षा ऋद्धि वृद्धि वंशरोचना मुगानी माषाणी क्षीरकाकोली पद्मकाष्ठ गुडूची प्रत्येकं क. २ पलाद्धम् ॥ ५७ ॥

मयूराद्यं घृतम्।—

दशमूलबलारास्ना-मधुकैस्त्रिपलैः सह।
मयूरं पक्षपित्तान्त्र-शकृत्पादास्यवर्जितम्॥ ५८॥
जले पक्त्वा घृतप्रस्थं तस्मिन् क्षीरसमं पचेत्।
मधुरैः कार्षिकैः कल्कैः शिरोरोगार्दितापहम्॥ ५९॥
कर्णनासाऽक्षिजिह्वाऽऽस्य-गलरोगविनाशनम्।
मयूराद्यमिदं ख्यातमूर्द्ध्वजत्रुगदापहम्॥ ६०॥
दशमूलादिना तुल्यो मयूर इह गृह्यते।
अन्ये त्वाकृतिमानेन मयूरग्रहणं विदुः॥ ६१॥

आखु-कुक्कुट-हंस-शशकादिघृतचतुष्टयम्।—

आखुभिः कुक्कुटैर्हंसैः शशैश्चापि हि बुद्धिमान्।
कल्पेनानेन विपचेत् सर्पिरूर्द्ध्वगदापहम्॥ ६२॥

प्रपौण्डरीकाद्यं तैलम्।—

प्रपौण्डरीकमधुक-पिप्पलीचन्दनोत्पलैः।
सिद्धं धात्रीरसे तैलं नस्येनाभ्यञ्जनेन वा॥
सर्वानूर्द्ध्वगदान् हन्ति पलितानि च शीलितम्॥ ६३॥

---

दशमूलेत्यादि।—दशमूलस्य प्रत्येकं पलत्रयम्, एवं बलादीनां त्रयाणामपि, तेन मिलित्वा ऊनचत्वारिंशत्पलानि भवन्ति, तथा मयूरमांसमपि पक्षपादादिरहितम् ऊनचत्वारिंशत्पलं ग्राह्यम्, एवं मिलित्वा यावत् क्वाथ्यं भवति, तत्र "क्वाथ्याच्चतुर्गुणं वारि" इत्यादि परिभाषया जलादिव्यवस्था; एतदेवाह "दशमूलादिना तुल्यो मयूरः" इत्यादि। अन्ये तु दशमूलादिभिः प्रत्येकं त्रिपलमानैः सह तरुणमयूरगुडकमेकं पक्षादिवर्जितं जलद्रोणे एव पचेत्, जलद्रोणस्यात्र पादशेषः क्वाथ्यः, स च पचनीयघृतापेक्षया चतुर्गुणो भवतीत्याहुः; एतदेवाह—"अन्ये त्वाकृतिमानेन मयूरग्रहणं विदुः" इति; व्यवहारस्त्वनेनैव। मधुरैरिति—जीवनीयदशकैः; जीवनीयानि च मधुरत्व-मधुरविपाकत्वप्रकर्षान्मधुरशब्देनोच्यन्ते। एतन्मायूरघृतं तथा वक्ष्यमाणञ्च मयूरस्थाने मूषिकादीन् दत्त्वाऽपि कार्य्यमित्याहुः। आखुना मयूरापेक्षया अल्पमानेनापि अनेकेनैव लिङ्गसाधनं कर्त्तव्यमित्याहुः॥ ५८—६२॥

बृहन्मायूराद्यं घृतम् ।—

शतं मयूरमांसस्य दशमूलबलातुलाम् ।
द्रोणेऽम्भसः पचेत् तस्मिन् पादस्थिते ततः ॥ ६४ ॥
निषिच्य पयसो द्रोणं पचेत् तत्र घृताढ़कम् ।
प्रपौण्डरीकवर्गाद्यैर्जीवनीयैश्च भेषजैः ॥ ६५ ॥
मेधाबुद्धिस्मृतिकरमूर्द्ध्वजत्रुगदापहम् ।
मायूरमेतन्निर्दिष्टं सर्वानिलहरं परम् ॥ ६६ ॥
मन्याकर्णशिरोनेत्ररुजाऽपस्मारनाशनम् ।
विषवातामयश्वास-विषमज्वरकासनुत् ॥ ६७ ॥

इति शिरोरोग-चिकित्सा ।

---

## अथासृग्दर-चिकित्सा ।

वातजे सौवर्चलादिचूर्णम् ।—

दध्ना सौवर्चलाजाजी-मधुकं नीलमुत्पलम् ।
पिबेत् क्षौद्रयुतं नारी वातासृग्दरपीड़िता ॥ १ ॥

---

प्रपौण्डरीकेत्यादि वाग्भटस्य ।—चन्दनोत्पलैरित्यत्र काल्कैरिति शेषः । क्षीरं रसश्चात्र तैलापेक्षया चतुर्गुणः ॥ ६३ ॥

शतमित्यादि ।—अत्र दशमूलबलामूलयोर्मिलित्वा तुला । द्रोणे इति पदमावृत्त्य उभयत्रापि योज्य, तेन मयूरमांसशतपले एको जलद्रोणः, दशमूलबलातुलायाञ्चा-पर इति द्रोणद्वयमम्भसः । पयसो दुग्धस्य द्रोणं निषिच्य दत्त्वा पचेदिति, एतेन षड्गुणः पाकः । प्रपौण्डरीकवर्गाद्यैरिति—प्रपौण्डरीकमधुकपिप्पली-चन्दनोत्पलैरित्यर्थः । जीवनीयैरिति—जीवनीयदशकैः, तत्राऽत्र यष्टिमधुकस्य भागद्वयं ग्राह्यम् ॥ ६४—६७ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां शिरोरोग-चिकित्सा-विवृतिः ।

पित्तजे हरिणरक्तप्रयोगादियोगत्रयम्।—

पिबेदैणेयकं रक्तं शर्करामधुसंयुतम्।
वासकस्वरसं पैत्ते गुडूच्या रसमेव वा ॥ २ ॥

कफजे रोहीतकामलकप्रयोगौ।—

रोहीतकान्मूलकल्कं पाण्डरेऽसृग्दरे पिबेत्।
जलेनामलकाद्बीज-कल्कं वा ससितामधु ॥ ३ ॥

कफजे धातक्यादिप्रयोगद्वयम्।—

धातक्याश्चाक्षमात्रं वा आमलक्या मधुद्रवम् ॥ ४ ॥

कफजे काकजानुकादिप्रयोगद्वयम्।—

काकजानुकमूलं वा मूलं कार्पासमेव वा।
पाण्डुप्रदरशान्त्यर्थं पिबेत् तण्डुलवारिणा ॥ ५ ॥

अशोकक्षीरम्।—

अशोकवल्कलक्काथ-शृतं दुग्धं सुशीतलम्।
यथाबलं पिबेत् प्रातस्तीव्रासृग्दरनाशनम् ॥ ६ ॥

---

स्त्रीपुंसां साधारणव्याधीनां तथा पुंमात्रनियतानामप्युपदंशादीनां चिकित्सोक्ता, सम्प्रति स्त्रीनियतानां प्रदरादीनां चिकित्सितमभिधातुमुपक्रमते, दध्नेत्यादि।—दध्नः कर्षत्रयं, सौवर्चलस्य माषकमेकम्, अजाज्यादीनां प्रत्येकं माषकद्वयं, मधुनस्तु माषकचतुष्टयमित्याहुः ॥ १ ॥

अतिबहुस्रुतशोणितानां चिकित्सामाह, पिबेदित्यादि।—एणस्येदम् ऐणेयं, स्वार्थे कः। एणस्य रक्तं कुशमूलयोगेन मर्दयित्वा पेयं, तेन स्त्यानता न स्यादित्याहुः। शर्करामधुसंयुतमिति पदं वासकस्वरस-गुडूचीस्वरसयोरपि योज्यं, हारीतसंवादात् ॥ २ ॥

रोहीतकादित्यादि।—अत्रापि ससितामध्विति योज्यम् ॥ ३ ॥

धातक्या इत्यादि।—धातक्याः कल्कमक्षमात्रं मधुद्रवं, तथा आमलक्या वा कल्कमक्षमात्रं मधुद्रवं पिबेत्। मधु द्रवो यत्र कल्के तं मधुद्रवम् ॥ ४ ॥

काकजानुकेत्यादि।—काकजानुकः काकजङ्घा ॥ ५ ॥

अशोकेत्यादि।—षडङ्गपरिभाषया अर्द्धशृतमशोकवल्कलक्काथं गृहीत्वा तेन चतुर्गुणेन क्षीरं साध्यमित्यर्थः। वृद्धास्तु क्वाथमन्तरेण क्षीरसाधनपरिभाषया व्यवहरन्ति ॥ ६ ॥

दार्व्यादिक्वाथः ।—

दार्वीरसाञ्जनवृषाब्दकिराततिक्त-
भल्लातकैरवकृतो मधुना कषायः ।
पीतो जयत्यतिबलं प्रदरं सशूलं
पीतासितारुणविलोहितनीलशुक्लम् ॥ ७ ॥

रसाञ्जनयोगः ।—

रसाञ्जनं तण्डुलीयस्य मूलं क्षौद्रान्वितं तण्डुलतोयपीतम् ।
असृग्दरं सर्वभवं निहन्ति श्वासञ्च भार्गी सह नागरेण ॥ ८ ॥

कुशमूलप्रयोगः ।—

कुशमूलं समुद्धृत्य पेषयेत् तण्डुलाम्बुना ।
एतत् पीत्वा त्र्यहान्नारी प्रदरात् परिमुच्यते ॥ ९ ॥

कोठोडुम्बरप्रयोगः ।—

क्षौद्रयुक्तं फलरसं कोठोडुम्बरजं पिबेत् ।
असृग्दरविनाशाय सशर्करपयोऽन्नभुक् ॥ १० ॥

बलाप्रयोगः ।—

प्रदरं हन्ति बलाया मूलं दुग्धेन मधुयुतं पीतम् ॥ ११ ॥

श्वेतरक्तप्रदरयोः कुशादिप्रयोगौ ।—

कुशवाट्यालकमूलं तण्डुलसलिलेन हरति रक्ताख्यम् ।
शमयति मदिरापानं तदुभयमपि रक्तसंज्ञशुक्लाख्यौ ॥ १२ ॥

---

दार्व्यादि ।—वृषः वासकः । तिक्तं शुष्कबिल्वशलाटु । कैरवं कुमुदम् । "भल्लातकासहत्वे तु रक्तचन्दनमिष्यते" अनेन व्यवहरन्ति ॥ ७ ॥

रसाञ्जनमित्यादि ।—अत्र तण्डुलीयस्य मूलं लोहिततण्डुलीयस्य मूलं गृह्यते । योगद्वयमिदं प्रत्येकं मिलितञ्च बोध्यं, सिद्धसार-हारीतसंवादात् । सर्वभवमिति—वाताद्येकदोषभवं सर्वं, न तु सान्निपातिकं, तस्यासाध्यत्वात्; उक्तं हि—"सक्षौद्रसर्पिर्हरितालवर्णं मज्जप्रकाशं कुणपं त्रिदोषात् । तच्चाप्यसाध्यं प्रवदन्ति तज्ज्ञा न तत्र कुर्वीत भिषक् चिकित्साम् ॥" इति । "श्वासञ्च भार्गी सह नागरेण" इति तु सम्पूर्णश्लोकानुरोधाल्लिखितम् ॥ ८—११ ॥

कुशेत्यादि ।—रक्ताख्यमिति—रक्तप्रदरम् । मदिरापानमिति—मदिरया पीयते

बदर्य्यादिप्रयोगचतुष्टयम्।—

गुड़ेन बदरीचूर्णं मोचमामं तथा पयः।
पीता लाक्षा च सघृता पृथक् प्रदरनाशनाः॥ १३॥

रक्तपित्तचिकित्साऽतिदेशः कुटजाष्टकप्रयोगोपदेशश्च।—

रक्तपित्तविधानेन प्रदरांश्चाप्युपाचरेत्।
असृग्दरे विशेषेण कुटजाष्टकमाचरेत्॥ १४॥

पुष्यानुगं चूर्णम्।—

पाठाजम्ब्वाम्रयोर्मध्यं शिलाभेदं रसाञ्जनम्।
अम्बष्ठकीमोचरसः समङ्गापद्मकेशरान्॥ १५॥
वाह्लीकातिविषामुस्तं बिल्वं लोध्रं सगैरिकम्।
त्रिफलां मरिचं शुण्ठीं मृद्वीकां रक्तचन्दनम्॥ १६॥
कट्वङ्गवत्सकानन्ता-धातकीमधुकार्जुनम्।
पुष्येणोद्धृत्य तुल्यानि सूक्ष्मचूर्णानि कारयेत्॥ १७॥
तानि क्षौद्रेण संयोज्य पाययेत् तण्डुलाम्बुना।
असृग्दरातिसारेषु रक्तं यच्चोपवेश्यते॥ १८॥
दोषागन्तुकृता ये च बालानां तांश्च नाशयेत्।
योनिदोषं रजोदोषं श्वेतं नीलं सपीतकम्॥ १९॥
स्त्रीणां श्यावारुणं यच्च तत् प्रसह्य निवर्त्तयेत्।
चूर्णं पुष्यानुगं नाम हितमात्रेयपूजितम्॥
अम्बष्ठा दक्षिणे ख्याता पश्चात्ये तु लक्षणाम्॥ २०॥

---

कर्मणि ल्युट्, तेन मदिरापीतमित्यर्थः। तदुभयमिति— कुशवाश्मभेदयोर्मूलम्॥ १२॥

गुड़ेनेत्यादि।—योगचतुष्टयम्। गुड़ेन बदरीचूर्णमिति वातकफे। मोचमामम् आममोचम्, अपक्वकदलीफलचूर्णञ्च सर्वं एकः; एतच्च कफपित्ते। तथा पय इति—केवलं क्षीरं वातपित्ते॥ १३॥

मुद्गाद्यं घृतम् ।—

मुद्गमाषस्य निर्य्यूहे रास्नाचित्रकनागरैः ।
सिद्धं सपिप्पलीविल्वैः सर्पिः श्रेष्ठमसृग्दरे ॥ २१ ॥

शीतकल्याणकं घृतम् ।—

कुमुदं पद्मकोशीरं गोधूमो रक्तशालयः ।
मुद्गपर्णी पयस्या च काश्मरी मधुयष्टिका ॥ २२ ॥
बलाऽतिबलयोर्मूलमुत्पलं तालमस्तकम् ।
विदारी शतमूली च शालपर्णी सजीवका ॥ २३ ॥
फलं त्रपुषबीजानि प्रत्यग्रं कदलीफलम् ।
एषामर्द्धपलान् भागान् गव्यं क्षीरं चतुर्गुणम् ॥ २४ ॥
पानीयं द्विगुणं दत्त्वा घृतप्रस्थं विपाचयेत् ।
प्रदरे रक्तगुल्मे च रक्तपित्ते हलीमके ॥ २५ ॥
बहुरूपञ्च यत् पित्तं कामलावातशोणिते ।
अरोचके ज्वरे जीर्णे पाण्डुरोगे मदे भ्रमे ॥ २६ ॥
तरुणी चाल्पपुष्पा च या च गर्भं न विन्दति ।
अहन्यहनि च स्त्रीणां भवति प्रीतिवर्द्धनम् ॥
शीतकल्याणकं नाम परमुक्तं रसायनम् ॥ २७ ॥

---

"अन्तूामयोरथ" ( उ० ३४ अ० ) इत्युक्तम् । शिलाभेदः पाषाणभेदी । अम्बष्ठकी दक्षिणापथे ख्याता, तदभावे पाठामेव द्विगुणां गृह्णन्ति, लज्जालुमित्यन्ये । पद्मकेशरं पद्मकिञ्जल्कः । वाह्लीकं कुङ्कुमम् । विल्वं विल्वशलाटुः । केचित् कदलीकाम् इति स्थाने "माचीकम्" इति पठन्ति, तत्र माचीकं देवदारुवाचकम् इति । पुष्येणेति—पुष्यानक्षत्रेण ॥ १५—२० ॥

मुद्गेत्यादि ।—अत्र मुद्गमाषाभ्यां निर्य्यूहः क्वाथः । रास्नादिपञ्चकस्य कल्कः । विल्वं विल्वशुण्ठकम् ॥ २१ ॥

कुमुदमित्यादि ।—कुमुदं कह्लारपुष्पम् । पद्मकं पद्मकाष्ठम् । रक्तशालिस्तु मृतम् । पयस्या क्षीरकाकोली । काश्मरी गाम्भारी, तस्याः फलं, मूलमित्यन्ये । अतिबला गोरक्षतण्डुला । जीवकं जीवनीयगणमध्ये पठितं वणिग्द्रव्यम् ।

बृहच्छतावरीघृतम्।—

शतावरीरसप्रस्थं चोदयित्वाऽवपीड़येत्।
घृतप्रस्थसमायुक्तं चीरं द्विगुणितं भिषक्॥ २८॥
अत्र कल्कानिमान् दद्यात् स्थूलोड़ुम्बरसम्मितान्।
जीवनीयानि यान्यष्टौ यष्टीचन्दनपद्मकैः॥ २९॥
श्वदंष्ट्रा चात्मगुप्ता च बला नागबला तथा।
शालपर्णी पृश्निपर्णी विदारी शारिवाद्वयम्॥ ३०॥
शर्करा च समा देया काश्मर्य्याश्च फलानि च।
सम्यक् सिद्धन्तु विज्ञाय तत घृतञ्चावतारयेत्॥ ३१॥
रक्तपित्तविकारेषु वातपित्तकृतेषु च।
वातरक्तं चयं श्वासं हिक्कां कासञ्च दुस्तरम्॥ ३२॥
अङ्गदाहं शिरोदाहं रक्तपित्तसमुद्भवम्।
असृग्दरं सर्वभवं मूत्रकृच्छ्रं सुदारुणम्॥
एतान् रोगान् शमयति भास्करस्तिमिरं यथा॥ ३३॥

इत्यसृग्दर-चिकित्सा।

---

फलं त्रिफला। त्रपुषबीजं मायाम्बुबीजम्। प्रत्यग्रमिति—अभिनवम्, अपक्वमित्यर्थः॥ २२—२७॥

शतावरीत्यादि।—बृहच्छतावरीघृते शतावरीं चोदयित्वा रसप्रस्थमवपीड़येत् अवपीड्य गृह्णीयात् इत्यर्थः। स्थूलोड़ुम्बरसम्मितान् इति—प्रत्येकं कर्षसम्मितानित्यर्थः। जीवनीयानि यान्यष्टाविति—अष्टवर्गः इत्यर्थः, तानि च—जीवकर्षभकौ मेदामहामेदा-काकोलीचीरकाकोली-ऋद्धिवृद्धय इति। असृग्दरं सर्वभवमिति पूर्ववत् व्याख्येयम्॥ २८—३३॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायाम् असृग्दर-चिकित्सा-विवृतिः।

# अथ योनिव्यापच्चिकित्सा ।

वातलायां क्रियासूत्रम् ।—

योनिव्यापत्सु भूयिष्ठं शस्यते कर्म वातजित् ।
वस्त्यभ्यङ्गपरीषेक-प्रलेपाः पिचुधारणम् ॥ १ ॥

वचादिचूर्णम् ।—

वचोपकुञ्चिकाऽजाजी-कृष्णावृषकसैन्धवम् ।
अजमोदा यवक्षारं चित्रकं शर्करान्वितम् ॥ २ ॥
पिष्ट्वा प्रसन्नयाऽऽलोड्य खादेत् तत् घृतभर्जितम् ।
योनिपार्श्वार्त्तिहृद्रोग-गुल्मार्शोविनिवृत्तये ॥ ३ ॥

गुडूच्यादिपरिषेचनम् ।—

गुडूचीत्रिफलादन्ती-क्वाथैश्च परिषेचनम् ॥ ४ ॥

नतादितैलम् ।—

नतवार्त्ताकिनीकुष्ठ-सैन्धवामरदारुभिः ।
तैलात् प्रसाधिताद्धार्य्यः पिचुर्योनौ रुजापहः ॥ ५ ॥

पित्तलायां क्रियासूत्रम् ।—

पित्तलानान्तु योनीनां सेकाभ्यङ्गपिचुक्रियाः ।
शीताः पित्तहराः कार्य्याः स्नेहनार्थं घृतानि च ॥ ६ ॥

---

प्रदरोऽपि योनिव्यापद्विशेष इति योनिव्यापत्त्वसामान्यादनन्तरं योनिव्यापच्चिकित्सितमुच्यते, योनिव्यापत्स्वित्यादि ।—कर्म वातजिदिति—वस्त्युत्तरवस्तिश्च ॥ १ ॥

वचेत्यादि वाग्भटस्य ।—उपकुञ्चिका कृष्णजीरकम् । वृषकः वासकमूलम् । प्रसन्ना मदिराया उपरिस्थः फेनभागः । एभ्यो वचादिभ्यः समभागपिष्टेभ्यः तो २, प्रसन्ना पल २, आलोड्य घृतकर्षेण सन्तल्य पेयम् ॥ २—४ ॥

नतेत्यादि वाग्भटस्य ।—वार्त्ताकिनी कण्टकारी, गोडवार्त्ताकुरित्यन्ये । अमरदारु देवदारु । एभिर्नतादिभिः कल्कैः तैलं साध्यं, जलञ्च चतुर्गुणमिति । पिचुरिति—भेषजसाधितस्नेहाप्लुतः पिचुः ॥ ५ ६ ॥

श्लेष्मलायां क्रियासूत्रम्।—

योन्यां बलासदुष्टायां सर्वं रूक्षोष्णमौषधम् ॥ ७ ॥

योनिविशोधने पिप्पल्यादिवर्त्तिः।—

पिप्पल्या मरिचैर्माषैः शताह्वाकुष्ठसैन्धवैः।
वर्त्तिस्तुल्या प्रदेशिन्या धार्य्या योनिविशोधनी ॥ ८ ॥

योनिविशोधने वातलादिषु हिंस्रादिप्रयोगत्रयम्।—

हिंस्राकल्कन्तु वातार्त्तां कोष्णमभ्यज्य धारयेत्।
पञ्चवल्कस्य पित्तार्त्तां श्यामादीनां कफोत्तरा ॥ ९ ॥

योन्यर्शःसु मूषिकतैलं मूषिकादिस्वेदश्च।—

मूषिकमांससंयुक्तं तैलमातपभावितम्।
अभ्यङ्गाद्धन्ति योन्यर्शः स्वेदस्तन्मांससैन्धवैः ॥ १० ॥

अचरणायां भावितक्षौमादियोगत्रयम्।—

गोपित्ते मत्स्यपित्ते वा क्षौमं त्रिःसप्तभावितम्।
मधुना किण्वचूर्णं वा दद्यादचरणापहम् ॥
स्रोतसां शोधनं कण्डू-क्लेदशोथहरञ्च तत् ॥ ११ ॥

योन्यामित्यादि।—स्पष्टम् ॥ ७ ॥

पिप्पल्येत्यादि।—माषैरिति—माषकलायैः। वर्त्तिरिति वस्त्रेण, वस्त्रं विना वा। तुल्येति परिणाहेन दैर्घ्येण च ॥ ८ ॥

हिंस्रेत्यादि।—हिंस्रा कालाकडामूलम्। पञ्चवल्कस्य वटोडुम्बराश्वत्थप्लक्ष-वेतसस्य। श्यामादीनामिति—रोगभिषग्जितीये श्यामात्रिवृच्चतुरङ्गुलेत्यादिना उक्तानाम् ॥ ९ ॥

मूषिकेत्यादि।—मूषिकाणां मांसं तैलात् पादिकं, नात्र द्रवयोगः कार्य्यः। आतपभावितमिति सप्ताहम्। तन्मांसं मूषिकमांसं सैन्धवचूर्णावचूर्णितमेरण्डादिपत्रे कृत्वा योनिं स्वेदयेत् ॥ १० ॥

गोपित्ते इत्यादि।—क्षौमं सूक्ष्मसनवस्त्रम्। किण्वं सुराबीजम्। मधुना किण्वचूर्णमिति तृतीयो योगः। अचरणा नाम योनिव्यापत् ॥ ११ ॥

वामिन्युपप्लुतापरिप्लुतासु क्रियासूत्रम्।—

वामिन्यां पूतियोन्याञ्च कर्त्तव्यः स्वेदनो विधिः।
क्रमः कार्य्यस्ततः स्नेह-पिचुभिस्तर्पणं भवेत्॥ १२॥

विप्लुतायां शल्लक्यादितैलम्।—

शल्लकीजिङ्गिनीजम्बू-धवत्वक्पञ्चवल्कलैः।
कषायैः साधितः स्नेहः पिचुः स्याद्विप्लुतापहः॥ १३॥

कर्णिन्यां कुष्ठादिवर्त्तिः।—

कर्णिन्यां वर्त्तिका कुष्ठ-पिप्पल्यर्काग्रसैन्धवैः।
वस्तमूत्रकृता धार्य्या सर्वञ्च स्नेहमनुद्धितम्॥ १४॥

उदावर्त्ता-वातला-महायोनि-स्रस्तासु त्रैवृतस्नेहः।—

त्रैवृतं स्नेहनं स्वेद उदावर्त्तानिलार्त्तिषु।
तदेव च महायोन्यां स्रस्तायाञ्च विधीयते॥ १५॥

योनिकन्दे मूषिकादि तैलम्।—

आखोर्मांसं सपदि बहुधा खण्डखण्डीकृतं यत्
तैले पाच्यं द्रवति नियतं यावदेतन्न सम्यक्।
तत्तैलाक्तं वसनमनिशं योनिभागे दधाना
हन्ति क्रीड़ाकरभगफलं नात्र सन्देहबुद्धिः॥ १६॥

---

वामिन्यामित्यादि।—अत्र पूतियोनिशब्देन उपप्लुता परिप्लुता चोच्यते॥ १२॥

शल्लकीत्यादि।—शल्लकीजिङ्गिन्यौ स्वनामख्याते। त्वक्शब्दः शल्लक्यादिभिः प्रत्येकं सम्बध्यते। अत्र कषायश्चतुर्गुणः। अकल्क एवायं स्नेहः। पिचुरिति—एतत्तैलाप्लुतः पिचुः॥ १३॥

कर्णिन्यामित्यादि।—कुष्ठादिभिर्वर्त्तिः धार्य्या इति योज्यम्। अर्काग्रम् अर्कपल्लवः॥ १४॥

त्रैवृतमित्यादि।—त्रैवृतं स्नेहनमिति—सर्पिस्तैलवसामज्जरूपस्नेहः। उदावर्त्ता उदावर्त्ताख्या योनिव्यापत्। अनिलार्त्तिः वातिकी योनिव्यापदित्यर्थः। तदेवेति—त्रैवृतं स्नेहनम्। विधीयते इति अनुवासनोत्तरवस्तिविधयेत्यर्थः, चरकसंवादात्॥ १५॥

आखोरित्यादि।—सपदीति सद्यस्कमांसग्रहणार्थम्। एतन्मांसं यावत् खरल्-

विदीर्णायां शतपुष्पादिलेपत्रयम्।—

शतपुष्पातैललेपात् बदरीदलजात् तथा।
पेटिकामूललेपाच्च योनिर्भिन्ना प्रशाम्यति ॥ १७ ॥

अन्तःप्रविष्ट बहिर्निर्गतयोः सुषवीप्रयोगः मूषिकवसाप्रयोगश्च।—

सुषवीमूललेपेन प्रविष्टाऽन्तर्बहिर्भवेत्।
योनिर्मूषवसाभ्यङ्गान्निःसृता प्रविशेदपि ॥ १८ ॥

शिथिलायां लोध्रादिलेपः वेतसमूलक्षालनञ्च।—

लोध्रतुम्बीफलालेपो योनिदार्ढ्यं करोति च।
वेतसमूलनिःक्वाथ-क्षालनेन तथैव च ॥ १९ ॥

शिथिलायां मूषिका-वादुलीवसाप्रयोगौ।—

मूषिका-वादुलीवसा-म्रक्षणं योनिदार्ढ्यदम् ॥ २० ॥

शिथिलायां वचादिलेपः।—

वचा नीलोत्पलं कुष्ठं मरिचानि तथैव च।
अश्वगन्धा हरिद्रा च गाढ़ीकरणमुत्तमम् ॥ २१ ॥

शिथिलायां मदफलादि-पूरणम्।—

मदफलमधुकर्पूर-पूरितं भवति कामिनीजनस्य।
चिरविगलितयौवनस्य वराङ्गमतिगाढ़सुकुमारम् ॥ २२ ॥

---

कास्वाद न द्रवति द्रवतां न गच्छति तावदेव गालनीयमित्यर्थः। अगफलं कान्दरोगम ॥ १६ ॥

शतपुष्पेत्यादि।—योगत्रयम्। तैलपिष्टशतपुष्पया लेप इत्यर्थः। पेटिका कांपोटुपरीति ख्यातम्। भिन्नेति—विदीर्णा ॥ १७ ॥

सुषवीत्यादि।—सुषवीमूललेपेन कारवेल्लमूललेपेनेत्यर्थः। प्रविष्टेति—अन्तःप्रविष्टा, अन्तर्मुखा योनिर्बहिर्भवतीत्यर्थः। योनिरित्यादौ मूषः मूषिकः, तस्य वसा मांसस्नेहः। निःसृतेति—बहिर्निःसृता। इयमेव प्रस्रंसिनीत्युच्यते ॥ १८ ॥

लोध्रेत्यादि।—तुम्बी अलाबूः, तस्याः फलम्। तथैव चेति—दार्ढ्यं दद्यादित्यर्थः ॥ १९ ॥

मूषिकेत्यादि।—वादुली वादुर इति ख्यातो दिवान्धः पक्षी ॥ २० ॥

वचेत्यादि।—वचादि-हरिद्रान्त एको योगः। वचादिहरिद्रान्तैर्लेपोऽवचूर्णनं वा ॥ २१ ॥

योनिदौर्गन्ध्ये पञ्चपल्लवादिघृतम् ।—

पञ्चपल्लवयष्ट्याह्व-मालतीकुसुमैर्घृतम् ।
रविपक्वमन्यथा वा योनिगन्धविनाशनम् ॥ २३ ॥

आर्त्तवनाशे इक्ष्वाकुबीजादिवर्त्तिः ।—

इक्ष्वाकुबीजदन्तीचपलागुड़मदनकिण्वयष्ट्याह्वैः ।
सस्नुक्क्षीरैर्वर्त्तिर्योनिगता कुसुमसञ्जननी ॥ २४ ॥

आर्त्तवनाशे जवापुष्पादियोगद्वयम् ।—

सकाञ्जिकं जवापुष्पं भृष्टं ज्योतिष्मतीदलम् ।
दूर्वायाः पिष्टकं प्राश्य वनिता त्वार्त्तवं लभेत् ॥ २५ ॥

आर्त्तवहरणे धात्र्यादि-योगद्वयम् ।—

धात्र्यञ्जनाभयाचूर्णं तोयपीतं रजो हरेत् ।
शैलुच्छदमिश्रपिष्ट-भक्षणाच्च तदर्थकृत् ॥ २६ ॥

गर्भजनने लक्ष्मणाप्रयोगः ।—

पुष्योद्धृतं लक्ष्मणायाश्चक्राङ्कायास्तु कन्यया ।

---

मदेत्यादि ।—मदः कस्तूरी । फलं जातीफलम् ; किंवा मदफलं मदनफलमेव । एभिर्मधुना पिष्टैर्योनिप्रपूरणम् ॥ २२ ॥

पञ्चपल्लवेत्यादि ।—पञ्चानाम् आम्रजम्बूकपित्थबीजपूरकबिल्वानां पल्लवाः, एषां कल्कः । रविपक्वमिति द्रवं विनैव । अन्यथा वा इति—अग्निपक्वम्, अस्मिन् पक्षे जलं चतुर्गुणम् ॥ २३ ॥

इदानीमार्त्तवनाशे सति आर्त्तवोत्पादनविधिमाह, इक्ष्वाकुबीजेत्यादि ।—इक्ष्वाकुः तिक्तालाबूः । चपला पिप्पली । एषां प्र मा ८, स्नुहीचोर मा ८, अग्नौ पक्त्वा वर्त्तिः कार्या । कुसुमं रक्तं, तत्सञ्जननी कुसुमसञ्जननी ॥ २४ ॥

सकाञ्जिकमित्यादि ।—जवापुष्पम् ओड़पुष्पम् । ज्योतिष्मतीदलमपि भृष्टं बोध्यम् । दूर्वायाः पिष्टकमिति—दूर्वातण्डुलाभ्यां कृतं पिष्टकम् । योगत्रयमेतत् ॥ २५ ॥

इदानीमार्त्तवहरयोगानाह, धात्रीत्यादि ।—अञ्जनं रसाञ्जनम् । धात्र्यादीनां मिलितचूर्णानां तोलकैकं बोध्यम् । शैलुच्छदेति—शैलुर्बहुवारः, तस्य छदः पत्रं, शैलुपत्रतण्डुलचूर्णाभ्यां कृतं पिष्टकमित्यर्थः ॥ २६ ॥

पिष्टं मूलं दुग्धघृतस्तौ पीतं तु पुत्रदम् ॥ २७ ॥

गर्भजनने अश्वगन्धाक्षीरम् ।—

क्वाथेन हयगन्धायाः साधितं सघृतं पयः ।
ऋतुस्नाताऽबला पीत्वा धत्ते गर्भं न संशयः ॥ २८ ॥

गर्भजनने पिप्पल्यादियोगः ।—

पिप्पल्यः शृङ्गबेरञ्च मरिचं केशरं तथा ।
घृतेन सह पातव्यं वन्ध्याऽपि लभते सुतम् ॥ २९ ॥

गर्भजनने स्वर्णभस्मादियोगत्रयम् ।—

स्वर्णस्य रूप्यकस्य च चूर्णं ताम्रस्य चाज्यसम्मिश्रे ।
पीते शुद्धे क्षेत्रे भेषजयोगाद्भवेद्गर्भः ॥ ३० ॥

गर्भजनने श्वेतबलाप्रयोगः ।—

कृत्वा शुद्धौ स्नानं विलङ्घ्य दिवसान्तरे ततः प्रातः ।
स्नात्वा द्विजाय दत्त्वा भक्त्या सम्पूज्य लोकनाथेशम् ॥ ३१ ॥

---

इदानीमार्त्तवे पुत्रप्रदयोगानाह, पुष्येत्यादि ।—चक्राङ्गाया इति लक्ष्मणाया विशेषणं, तत्पत्रस्य चक्राङ्कितत्वात् । दुग्धघृतपीतमिति—दुग्धेन घृतेन वा ऋतुस्नानानन्तरं दिनत्रयं पिबेत्, अथवा नासापुटेन बिन्दुचतुष्टयं पिबेदित्यर्थः । अन्ये तु लक्ष्मणाया मूलं मा २, दुग्ध तो २, घृत तो २, ऋतुस्नानानन्तरं दिनत्रयं पिबेदित्याहुः ॥ २७ ॥

क्वाथेनेत्यादि ।—क्वाथेन यथा क्षीरसाधनं तत् प्रागेवोक्तं, घृतञ्च प्रक्षेप्यम् । हयगन्धा अश्वगन्धा, तस्या मूलं षडङ्गपरिभाषया जलं दत्त्वा अर्द्धशृतं क्षीराच्चतुर्गुणं पक्त्वा घृतं प्रक्षिप्य पिबेत् । अथवा अश्वगन्धामूल मा ८, जल पल ४, क्षीर पल २, घृत मा ८ । वृद्धास्तु क्षीरसाधनपरिभाषया व्यवहरन्ति ॥ २८ ॥

पिप्पल्य इत्यादि ।—शृङ्गबेरं शुण्ठी ॥ २९ ॥

स्वर्णस्येत्यादि ।—आज्यसम्मिश्रे इति सर्वत्र योज्यम् । मारितसुवर्णचूर्णस्य माषैकं, गव्यघृतस्य कर्षद्वयम् आलोड्य पेयम्; एवं रजतताम्रयोरपि । तद्भेषजयोगात् शुद्धे क्षेत्रे इति योज्यम् । केचित्तु सुवर्णादित्रयम् एकत्रावर्त्त्य ततो घृतेन घृष्ट्वा योनिमध्ये लेपयेदिति, तत्पानञ्चोपदिशन्ति; उक्तं हि—"हेम रूप्यं वरं ताम्रमेकत्रावर्त्त्य सर्पिषा । घृष्टाऽन्तर्लेपयेत् योनिं शोधनार्थं पिबेदपि ॥" इति ॥ ३० ॥

श्वेतबलाङ्घ्रिकयष्टिं कर्षं कर्षं फलन्तु शर्करायाः ।
पिष्टैकवर्णजीववत्साया गोस्तु दुग्धेन ॥ ३२ ॥
समधिकघृतेन पीतं नात्र दिने देयमन्नमन्यच्च ।
क्षुधिते सदुग्धमन्नं दद्यादा-पुरुषसन्निधेस्तस्याः ॥ ३३ ॥
समदिवसे शुभयोगे दक्षिणपार्श्वावलम्बिनो धीरा ।
त्यक्तास्वप्नान्तरसङ्ग-प्रहृष्टमनसोऽतिवृद्धधातोश्च ॥
पुरुषस्य सङ्गमात्राल्लभते पुत्रं ततो नियतम् ॥ ३४ ॥

पुंसवनक्रियायां वटशुङ्गादियोगः ।—

गोष्ठजातवटस्य प्रागुत्तरशाखजे शुभे ।
शुङ्गे माषौ तथा गौर-सर्षपौ दधियोजितौ ॥
पुष्यापीतौ द्रुतापन्न-गर्भायाः पुत्रकारकौ ॥ ३५ ॥

पुंसवनक्रियायां स्वर्णादिपुत्तलिकाप्रयोगत्रयम् ।—

काञ्चनान् राजतान् वाऽपि लौहान् पुरुषकानणून् ।
ध्मातान्निवर्णान् पयसो दध्नो वाऽप्युदकस्य वा ॥
क्षिप्त्वाऽञ्जलौ पिबेत् पुष्ये गर्भे पुत्रत्वकारकान् ॥ ३६ ॥

---

कृत्वेत्यादि ।—विलङ्घ्येति—यस्मिन् दिने शुद्धिस्नानं तस्मिन् दिने उपोष्येत्यर्थः । श्वेतबलाया अङ्घ्रिः मूलम् । समधिकघृतेनेति—दुग्धापेक्षया घृतभागोऽधिको देय इत्यर्थः । यस्मिन् दिने भेषजमिदमुपयुज्यते तस्मिन्नेव दिनेऽपरमन्नं नोपयोज्यं, दिनान्तरे तु क्षुधायां सत्यां क्षीरसहितमन्नं दद्यात् । समदिवसे इति—युग्म-दिने ॥ ३१—३४ ॥

गोष्ठेत्यादि ।—गोष्ठः पर्वतः, उपवनं वेति केचित् । माषाविति—माषकलायौ द्वौ, चरके "धान्यमाषाभ्याम्" ( शा० जातिसूत्री० ) इत्युक्तम् । तथा गौरसर्षपौ द्वाविति । दधियोजिताविति—दध्नि प्रक्षिप्ताविल्यर्थः । द्रुतापन्नगर्भाया इति यावत् स्त्रीत्वं पुंस्त्वं वा गर्भस्य न व्यक्तीभूतमस्ति तावदेव इदं कर्म कुर्यात् । चाङ्गाभिव्यक्तिस्तु तृतीये मासे भवतीति मासद्वयं यावत् पुंसवनकर्म कुर्यादिति भावः । इदं कर्म लिङ्गपरावृत्तिकारकं भवतीति ज्ञापनार्थं द्रुतापन्नगर्भाया इत्युक्तम् ॥ ३५ ॥

काञ्चनानित्यादि ।—पुरुषकानणूनिति—अणुपरिमाणान् पुरुषाकारान् । अञ्जला-

चतुर्विंशत्यङ्गं फलघृतम्।—

मञ्जिष्ठा मधुकं कुष्ठं त्रिफला शर्करा बला।
मेदा पयस्या काकोली मूलञ्चैवाश्वगन्धजम्॥ ३७॥
अजमोदा हरिद्रे द्वे हिङ्गुकं कटुरोहिणी।
उत्पलं कुमुदं द्राक्षा काकोल्यौ चन्दनद्वयम्॥ ३८॥
एतेषां कार्षिकैर्भागैर्घृतप्रस्थं विपाचयेत्।
शतावरीरसं क्षीरं घृताद्देयं चतुर्गुणम्॥ ३९॥
सर्पिरेतन्नरः पीत्वा नित्यं स्त्रीषु वृषायते।
पुत्रान् जनयते नारी मेधाढ्यान् प्रियदर्शनान्॥ ४०॥
या चैवास्थिरगर्भा स्यात् या वा जनयते मृतम्।
अल्पायुषं वा जनयेत् या च कन्यां प्रसूयते॥ ४१॥
योनिदोषे रजोदोषे परिस्रावे च शस्यते।
प्रजावर्द्धनमायुष्यं सर्वग्रहनिवारणम्॥ ४२॥
नाम्ना फलघृतं ह्येतदश्विभ्यां परिकीर्त्तितम्।
अनुक्तं लक्षणामूलं क्षिपन्त्यत्र चिकित्सकाः॥ ४३॥
जीवद्वत्सैकवर्णाया घृतमत्र प्रशस्यते।
आरण्यगोमयेनापि वह्निज्वाला प्रदीयते॥ ४४॥

त्रयोदशाङ्गं फलघृतम्।—

सहचरे द्वे त्रिफलां गुडूचीं सपुनर्नवाम्।
शुकनासां हरिद्रे द्वे रास्नां मेदां शतावरीम्॥ ४५॥
कल्कीकृत्य घृतप्रस्थं पचेत् क्षीरं चतुर्गुणम्।

---

बिल्वस्य पयस इत्यादिभिः सम्बन्धः। एतच्च दुग्धादि निःशेषं पेयं, चरक-संवादात्॥ ३६॥

मञ्जिष्ठेत्यादि।—पयस्या क्षीरविदारी। द्राक्षाकाकोल्याविति द्वन्द्वः, काकोली अत्र क्षीरकाकोली, काकोलीत्युपात्तत्वात्। शतावरीरस-क्षीरयोः प्रत्येकं चातुर्गुण्यम्। अत्र वृद्धवैद्योपदेशं सङ्ग्रहकल्लिखति—अनुक्तमित्यादि॥ ३७—४४॥

तत् सिद्धं प्रपिबेन्नारी योनिशूलनिपीड़िता ॥ ४६ ॥
पिच्छिता चलिता या च निःसृता विवृता च या ।
पित्तयोनिश्च विस्रस्ता षण्ढयोनिश्च या स्मृता ॥ ४७ ॥
प्रपद्यन्ते तु ताः स्थानं गर्भं गृह्णन्ति चासकृत् ।
एतत् फलघृतं नाम योनिदोषहरं परम् ॥ ४८ ॥

नीलोत्पलाद्यं घृतम् ।—

नीलोत्पलोशीरमधूकयष्टि-
द्राक्षाविदारीकुशपञ्चमूलैः ।
स्याज्जीवनीयैश्च घृतं विपक्वं
शतावरीक्षीरसदुग्धमिश्रम् ॥ ४९ ॥
तच्छर्करापादयुतं प्रशस्त-
मसृग्दरे मारुतरक्तपित्ते ।
क्षीणे बले रेतसि सम्प्रदुष्टे
कृच्छ्रे च पित्तप्रभवे च गुल्मे ॥ ५० ॥

बृहच्छतावरी घृतम् ।—

शतावरीमूलतुलाश्चतस्रः सम्प्रपीड़येत् ।
रसेन क्षीरतुल्येन पचेत् तेन घृताढ़कम् ॥ ५१ ॥
जीवनीयैः शतावर्या मृद्वीकाभिः परूषकैः ।
पिष्टैः पियालैश्चाक्षांशैर्द्वियष्टिमधुकैर्भिषक् ॥ ५२ ॥

---

सहचरे द्वे इत्यादि ।—सहचरे द्वे इति—सितपीतभेदेन झिण्टीद्वयम् । शुकनासा अलंकारवृक्षः । पिच्छितेत्यत्र योनिरिति शेषः ॥ ४५—४८ ॥

नीलोत्पलेत्यादि ।—अत्र मधूकस्य पुष्पं फलं वा । कुशपञ्चमूलं तृणपञ्चमूलम् । जीवनीयैरिति—जीवनीयदशकैः । शतावरीरसस्य त्रयः प्रस्थाः, दुग्धस्य चैकः प्रस्थः । अन्ये तु शतावरीरसस्य चत्वारः प्रस्था इत्याहुः । घृतप्रस्थापेक्षया शर्करायाः पादोऽत्रौ मतानि ॥ ४९।५० ॥

शतावरीमूलेत्यादि चरकस्य ।—जीवनीयैरिति—जीवनीयदशकैः, न पुनरष्ट-

सिद्धशीते च मधुन: पिप्पल्याश्च पलाष्टकम्।
दत्त्वा दशपलञ्चात्र सितायास्तद्विमिश्रितम्॥ ५३॥
ब्राह्मणान् प्राशयेत् पूर्वं लिह्यात् पाणितलं तत:।
योन्यसृक्शुक्रदोषघ्नं वृष्यं पुंसवनञ्च तत्॥ ५४॥
क्षतक्षयं रक्तपित्तं कासं श्वासं हलीमकम्।
कामलां वातरक्तञ्च वीसर्पं हृच्छिरोग्रहम्॥
उन्मादादीनपस्मारान् वातपित्तात्मकान् जयेत्॥ ५५॥

रोमशातने शङ्खभस्मादियोग:।—

दग्ध्वा शङ्खं क्षिपेद्रम्भा-स्वरसे तत्तु पेषितम्।
तुल्याऽऽलं लेपतो हन्ति रोम गुह्यादिसम्भवम्॥ ५६॥

रोमशातने रक्ताञ्जनाप्रयोग:।—

रक्ताञ्जनापुच्छचूर्ण-युक्तं तैलन्तु सार्षपम्।
सप्ताहं व्युषितं हन्ति मूलाद्रोमाण्यसंशयम्॥ ५७॥

रोमशातने कुसुम्भतैलप्रयोग:।—

कुसुम्भतैलाभ्यङ्गो वा रोम्णामुत्पाटितेऽन्तकृत्॥ ५८॥

---

वर्तै:, चरकोक्तत्वात्। द्वियष्टिमधुकैरिति—एकस्य मधुकभागो जीवनीयगणपठित:, अपरोऽपि मधुकस्यैको भागो देय इति द्वियष्टिमधुकै:; किंवा स्थलजल-भेदान्मधुकद्वययुक्तै:। वाग्भटे तु—द्वियष्टिमधुकैरित्यत्र "द्विबलामधुकै:" (उ० ३४ अ०) इति पठ्यते॥ ५१—५५॥

योनौ लोमबाहुल्येन वैरस्याद्रतिर्न स्यादित्यतो लोमशातनमाह, दग्ध्वेत्यादि।—रम्भास्वरसे कदलीवागुडास्वरसे। तुल्याऽऽलमिति—समहरितालम्॥ ५६॥

रक्ताञ्जनेत्यादि।—रक्ताञ्जना लोहितवर्णाञ्जननामिका, "आरजिला" इति लोके, तत्पुच्छं रौद्रे शोषयित्वा चूर्णं कुर्यात्, तच्च सार्षपतैलेऽनुरूपे प्रक्षिप्य सप्ताहं स्थाप्यमित्यर्थ:॥ ५७॥

कुसुम्भेत्यादि।—अत्र उत्पाटिते इत्यनन्तरं लोम्नीति शेष:, लोम्नि उत्पाटिते सति कुसुम्भबीजतैलाभ्यङ्गो लोम्नामन्तकृद्भवतीत्यर्थ:॥ ५८॥

रोमशातने आरग्वधाद्यं चूर्णम् ।—

आरग्वधमूलपलं कर्षद्वितयं शङ्खचूर्णस्य ।
हरितालस्य च खरजे मूत्रप्रस्थे तु कटुतैलम् ॥ ५९ ॥
पक्वं तैलं तदथ शङ्खहरितालचूर्णितं लेपात् ।
निर्मूलयति च रोमाण्यन्येषां सम्भवो नैव ॥ ६० ॥

रोमशातने कर्पूरादितैलम् ।—

कर्पूरभल्लातकशङ्खचूर्णं
क्षारो यवानाञ्च मनःशिला च ।
तैलं विपक्वं हरितालमिश्रं
रोमाणि निर्मूलयति क्षणेन ॥ ६१ ॥

रोमशातने क्षारतैलम् ।—

शुक्तिशम्बूकशङ्खानां दीर्घवृन्तात् समुष्ककात् ।
दग्ध्वा क्षारं समादाय खरमूत्रेण गालयेत् ॥ ६२ ॥
क्षाराष्टभागं विपचेत् तैलञ्च सार्षपं बुधः ।
इदमन्तःपुरे देयं तैलमात्रेयपूजितम् ॥ ६३ ॥
बिन्दुरेकः पतेत् यत्र तत्र रोमापुनर्भवः ।
मदनादिव्रणे देयमश्विभ्यामिव निर्मितम् ॥ ६४ ॥

---

आरग्वधेत्यादि ।—कर्षद्वितयमिति हरितालस्य चेत्यनेनापि सम्बध्यते । कटुतैलञ्चावाष्टौ पलानि । अथ इति—आनन्तर्य्ये, तैलपाकानन्तरं शङ्खचूर्णं हरितालचूर्णं मिलित्वा तैलात् पादिकं प्रक्षिप्य लेपो देय इत्यर्थः । किंवा शङ्खचूर्णहरितालचूर्णयोरनियतमानेन तैलेन सम्मिश्य लेपो देय इति ॥ ५९ ६० ॥

कर्पूरेत्यादि ।—कर्पूरादीनां कल्कः । क्षारो यवानामिति—यवक्षारः । तैलमिति—कटुतैलम् । हरितालमिश्रमिति पूर्ववत् व्याख्येयम ॥ ६१ ॥

शुक्तीत्यादि ।—क्षारतैले शुक्तिः शुक्तिरेव मुक्तास्फोटी वा । दीर्घवृन्तः श्योनाकः । मुष्कक. घण्टापारुली । एतानि समभागानि दग्ध्वा चतुर्विंशतिपलक्षारो ग्राह्यः, तस्य स्रावणार्थं गर्दभमूत्रं षड्गुणम् अष्टादशशरावपरिमितं गृहीत्वा एकविंशतिवारान् परिस्राव्य क्षारोदकस्य षोडश शरावा ग्राह्याः, कटुतैलन्तु शरावचतुष्टयम् ।

अर्शसां कुष्ठरोगाणां पामादद्रुविचर्चिनाम्।
क्षारतैलमिदं श्रेष्ठं सर्वक्लेदहरं परम्॥ ६५॥

इति योनिव्यापच्चिकित्सा।

---

## अथ स्त्रीरोग-चिकित्सा।

गर्भस्रावे सप्तसु मासेषु मधुकादि सप्त योगाः।—

मधुकं शाकबीजञ्च पयस्या सुरदारु च।
अश्मन्तकः कृष्णतिलास्ताम्रवल्ली शतावरी॥ १॥
वृक्षादनी पयस्या च तथैवोत्पलशारिवा।
अनन्ता शारिवा रास्ना पद्मा मधुकमेव च॥ २॥
बृहतीद्वयकाश्मर्य्य-क्षीरिशुङ्गास्त्वचो विसम्।
पृथक्पर्णी बला शिग्रुः श्वदंष्ट्रा मधुयष्टिका॥ ३॥
शृङ्गाटकं विसं द्राक्षा कशेरु मधुकं सिता।
मासेषु सप्त योगाः स्युरर्द्धश्लोकास्तु सप्तसु॥
यथाक्रमं प्रयोक्तव्या गर्भस्रावे पयोयुताः॥ ४॥

---

क्षाराष्टभागमिति—तैलापेक्षयाऽष्टमो भागः क्षारस्य कल्कत्वेन प्रदेय इत्यर्थः, तेन क्षारस्य पलचतुष्टयं कल्क इत्यर्थः। अन्ये तु क्षारोदकं तैलापेक्षयाऽष्टगुणमित्याहुः। मदनादिकल्के इति—उपदंशादौ॥ ६२—६५॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां योनिव्यापच्चिकित्सा विवृतिः।

---

अवशिष्टस्त्रीरोगचिकित्साऽभिधानार्थं स्त्रीरोगचिकित्सामाह, मधुकमित्यादि सुश्रुतस्य।—शाकः महावृक्षकः, तस्य बीजम्। पयस्या क्षीरकाकोली। अश्मन्तकः अम्लवाटकः, मालुया वा। ताम्रवल्ली मञ्जिष्ठा। वृक्षादनी वन्दाकः। तथैवोत्पल-शारिवेत्यत्र "लता चोत्पलशारिवा" इति पाठः सुश्रुते (शा० १०अ०) वाग्भटे च (शा० २अ०) तट्टीकाकृतोऽपि लता दूर्वा प्रियङ्गुर्वेति व्याख्यानयन्ति, उत्पलशारिवा

अष्टममासे कपित्थादिक्षीरम्।—

कपित्थबृहतीबिल्व-पटोलेक्षुनिदिग्धिकाः।
मूलानि क्षीरसिद्धानि दापयेद्भिषगष्टमे ॥ ५ ॥

नवममासे मधुकादिक्षीरम्।—

नवमे मधुकानन्ता-पयस्याशारिवाः पिबेत् ॥ ६ ॥

दशममासे शुण्ठीक्षीरं शुण्ठ्यादिक्षीरञ्च।—

पयस्तु दशमे शुण्ठ्या शृतशीतं प्रशस्यते।
सक्षीरा वा हिता शुण्ठी मधुकं देवदारु च ॥
एवमाप्याय्यते गर्भस्तीव्रा रुक् चोपशाम्यति ॥ ७ ॥

गर्भशूले कुशादिक्षीरम्।—

कुशकाशोरुबूकाणां मूलैर्गोक्षुरकस्य च।
शृतं दुग्धं सितायुक्तं गर्भिण्याः शूलनुत् परम् ॥ ८ ॥

---

अनन्तमूलम्। अनन्ता अनन्तमूलम्। शारिवा श्यामालता। पद्मा ब्रह्मयष्टिः। काश्मर्य्यं गाम्भारीफलम्। क्षीरिणां वटादीनां शुङ्गास्त्वचश्चेति। बिसं मृणालम्। एते च सप्त योगाः कल्कविषये उपयोज्याः। अपरे तु क्षीरसाधनपरिभाषयेत्याहुः ॥ १—४ ॥

कपित्थेत्यादि सुश्रुतस्य।—कपित्थादीनां सर्वेषां मूलम्। निश्चलस्तु कपित्थस्य फलं, पटोलस्य फलं पत्रं वा, अन्येषाञ्च मूलमित्याह, किन्तु सुश्रुत-वाग्भटटीकाकृद्भिर्न व्याख्यातोऽयमर्थः ॥ ५ ॥

नवमे इत्यादि सुश्रुतस्य।—"क्षीरसिद्धानि" इति पदं लिङ्गविपरिणामेनात्रापि सम्बध्यते, डल्लनेन व्याख्यातोऽयमर्थः। अन्ये तु मधुकानन्तेति योगं क्वाथेन किंवा मधुकादीनां कल्कं क्षीरेण पिबेदित्याहुः ॥ ६ ॥

पयस्त्वित्यादि सुश्रुतस्य।—डल्लनस्तु "क्षीरं शुण्ठीपयस्याभ्यां सिद्धं स्यात् दशमे हितम्" (शा० १० अ०) इति पठति, व्याचष्टे च—दशमे मासि शुण्ठ्या क्षीरविदार्य्या वा क्षीरपाककल्पनया सिद्धं क्षीरं दशमे हितमिति। वाग्भटेऽप्युक्तं—"योजयेत् दशमे मासि क्षीरं सिद्धं पयस्यया। अथवा यष्टिमधुक-नागरामरदारुभिः॥" (शा० २ अ०) इति। एतद्वचनसंवादादेव सक्षीरा वा हिता शुण्ठीत्यादावपि शुण्ठीमधुकदेवदारुभिः सिद्धं क्षीरं दशमे मासि प्रशस्यते इत्यर्थो ज्ञेयः ॥ ७ ॥

कुशेत्यादि।—स्पष्टम् ॥ ८ ॥

गर्भशूले कशेर्वादिक्षीरम्।—

कशेरुशृङ्गाटकजीवनीय-पद्मोत्पलैरण्डशतावरीभिः।
सिद्धं पयः शर्करया विमिश्रं संस्थापयेत् गर्भमुदीर्णशूलम्॥ ९॥

गर्भशूले कशेर्वादिचूर्णम्।—

कशेरुशृङ्गाटकपद्मकोत्पलं समुद्गयष्टीमधुकं सशर्करम्।
सशूलगर्भस्रुतिपीड़िताङ्गना पयोविमिश्रं पयसाऽन्नभुक् पिबेत्॥ १०॥

गर्भशोषे मधुकादिक्षीरम्।—

गर्भे शुष्के तु वातेन बालानाञ्चापि शुष्यताम्।
सितामधुककाश्मर्य्यैर्हितमुत्थापने पयः॥ ११॥

गर्भशोषे आमगर्भादिप्रयोगोपदेशः।—

गर्भशोषे त्वामगर्भाः प्रसहाश्च सदा हिताः॥ १२॥

सुखप्रसवे पाठादियोगचतुष्टयम्।—

पाठालाङ्गलिसिंहास्य-मयूरकजटैः पृथक्।
नाभिवस्तिभगालेपात् सुखं नारी प्रसूयते॥ १३॥

---

कशेर्वित्यादि।—जीवनीयः जीवनीयदशकम्। शर्करया विमिश्रमिति—शर्करा प्रक्षेप्या॥ ९॥

कशेर्वित्यादि।—अत्र पद्मकं पद्मकेशरमित्याहुः। उत्पलं नीलोत्पलम्। समुद्ग-यष्टीमधुकमिति—मुद्गः मुद्गपर्णी। समुद्गयष्टीमधुकमित्यत्र "समुद्गपर्णीमधुकम्" इत्यपि पाठान्तरम्॥ १०॥

गर्भे इत्यादि।—गर्भे शुष्के तु वातेनेत्यादि पूर्वं वातव्याधावेव पठितमिति नेह पठनीयम्॥ ११॥

गर्भशोषे इत्यादि।—आमगर्भा इति—हंसकूर्मादीनामण्डानि। प्रसहाः कुक्कुटादयः॥ १२॥

पाठेत्यादि।—अत्र श्रीकण्ठो लाङ्गलीस्थाने "सुरसां" पठति, व्याचष्टे च—सुरसा निर्गुण्डी। सिंहास्यः वासकः। मयूरकः अपामार्गः। एषां जटा मूलं, कृत्स्नं कान्दसत्वात्। श्रीकण्ठस्तु मयूरकजटैः इत्यत्र "मयूरकुटजैः" इति पठति, व्याचष्टे च—"कुटजः खनामख्याततरुः" इति॥ १३॥

सुखप्रसवे परूषकादियोगत्रयम् ।—

परूषकस्थिरामूल-लेपस्तद्वत् पृथक् पृथक् ।
वासामूले ध्रुवं तद्वत् कटिबद्धे सूते द्रुतम् ॥ १४ ॥

सुखप्रसवे पाठाधारणम् ।—

पाठायास्तु शिफा योनौ या नारी सम्प्रधारयेत् ।
उर.प्रसवकाले तु सा सुखेन प्रसूयते ॥ १५ ॥

सुखप्रसवे लाङ्गलीलेपः ।—

तुषाम्बुपरिपिष्टेन मूलेन परिलेपयेत् ।
लाङ्गल्याश्चरणौ सूते क्षिप्रमेतेन गर्भिणी ॥ १६ ॥

सुखप्रसवे अटरूषकलेपः गृहधूमप्रयोगश्च ।—

अटरूषकमूलेन नाभिवस्तिभगालेपः ।
गृहाम्बुना गेहधूम-पानं गर्भापकर्षणम् ॥ १७ ॥

सुखप्रसवे मातुलुङ्गादियोगः ।—

मातुलुङ्गस्य मूलानि मधुकं मधुसंयुतम् ।
घृतेन सह पातव्यं सुखं नारी प्रसूयते ॥ १८ ॥

सुखप्रसवे सर्पनिर्मोकभस्माञ्जनम् ।—

पुटदग्धसर्पकञ्चुक-मसृणमसीकुसुमसाराञ्जिताक्षी ।
झटिति विशल्या जायेत गर्भवती मूढ़गर्भाऽपि ॥ १९ ॥

सुखप्रसवे हिङ्ग्वादिप्रयोगः ।—

गृहाम्बुना हिङ्गुसिन्धु-पानं गर्भापकर्षणम् ॥ २० ॥

---

परूषकेत्यादि ।—स्थिरा शालपर्णी । परूषकस्थिरयोर्मूलम् ॥ १४—१६ ॥

अटरूषकेत्यादि ।—गृहाम्बु काञ्जिकम् । गेहधूमः कलम्भूमः ॥ १७ ॥

मातुलुङ्गस्येत्यादि ।—मधुकं यष्टिमधु । एतदुभयमपि मधुसंयुक्तं घृतेन सह पातव्यमित्यर्थः ॥ १८ ॥

पुटेत्यादि ।—पुटपाकविधया दग्धा या सर्पनिर्मोकमसी, तया मधुरञ्जितया अञ्जितलोचना सती विगतगर्भशल्या भवेदित्यर्थः ॥ १९ ॥

गृहाम्बुनेत्यादि ।—सिन्धुः सैन्धवम् ॥ २० ॥

सुखप्रसवे च्यवनमन्त्रम्।—

"इहामृतञ्च सोमश्च चित्रभानुश्च भाविनि!।
उच्चैःश्रवाश्च तुरगो मन्दिरे निवसन्तु ते॥ २१॥
इदममृतमपां समुद्धृतं वै तव लघुगर्भमिमं विमुञ्चतु स्त्रि!।
तदनलपवनार्कवासवास्ते सहलवणाम्बुधरैर्दिशन्तु शान्तिम्॥२२॥
मुक्ताः पाशा विपाशाश्च मुक्ताः सूर्य्येण रश्मयः।
मुक्तः सर्वभयाद्गर्भ एह्येहि मारिच! स्वाहा॥" २३॥
जलं च्यवनमन्त्रेण सप्तवाराभिमन्त्रितम्।
पीत्वा प्रसूयते नारी—" ॥ २४॥

सुखप्रसवे उभयत्रिंशकमुभयपञ्चदशकञ्च।—

"—दृष्ट्वा चोभयत्रिंशकम्।
तथोभयपञ्चदश-दर्शनं सुखसूतिकृत्॥ २५॥
वसुगुणाब्धीशकबाण-नवषट्सप्तयुगैः क्रमात्।
सर्वं पञ्चदश द्विस्तु त्रिंशकं नवकोष्ठके॥ २६॥
नारीऋतुऋतुवसुभिः सह पञ्चदिगष्टादशभिरेव च।
अर्कभुवनाब्धिसहितैरुभयत्रिंशकमिदमाश्चर्य्यम्॥ २७॥

अमरापातने कटुतुम्ब्यादि धूपः।—

कटुतुम्ब्यहिनिर्मोक-कृतवेधनसर्षपैः।
कटुतैलान्वितो धूमो योनेः पातयतेऽमराम्॥ २८॥

---

इहेत्यादि स्वाहान्तोऽयं मन्त्रश्च सुश्रुतस्य।—अयमेव गर्भच्यवनमन्त्रः। जलं च्यवन-मन्त्रेण सप्तवाराभिमन्त्रितं पीत्वेति वृद्धवैद्यव्यवहारः सङ्ग्रहकाद्भिर्लिख्यते, न तु सुश्रुतेन, सुश्रुते तु "च्यवनमन्त्रान् गर्भिणीम् उपश्रावयात्" (चि० १५ अ०) इत्युक्तम्॥२१—२४॥

उभयपञ्चदशकमुभयत्रिंशकञ्चाह, दृष्ट्वेत्यादि।—वस्वित्यादौ वसवोऽष्टौ। गुणास्त्रयः। अब्धयश्चत्वारः। बाणाः पञ्च। युगं द्वयम्। एतद्द्वैगुण्यादुभयत्रिंशकं भवति। एते अङ्का नव कोष्ठान् कृत्वा तदभ्यन्तरे लेख्याः। वृन्दे तु उभय-त्रिंशकमप्युक्तम्। एतद्द्वयं शरावमध्ये लिखित्वा सम्पूज्य दर्शयितव्यम्॥ २५—२७॥

कटुतुम्बीत्यादि।—कटुतुम्बी तिक्तालाबूफलम्। कृतवेधनं घोषकभेदः, तस्य

अमरापातने कण्ठे कचवेष्टिताङ्गुलीघर्षणम्।—

कचवेष्टितयाऽङ्गुल्या घृष्टे कण्ठे सुखं पतत्यमरा ॥ २९ ॥

अमरापातने अभिमन्त्रितजलम्।—

"एरण्डस्य वने काको गङ्गातीरमुपागतः।
इतः पिबति पानीयं विशल्या गर्भिणी भवेत् ॥"
अनेन सप्तधाऽऽमन्त्र्य जलं देयं विशल्यकम् ॥ ३० ॥

अमरापातने लाङ्गलीमूलप्रयोगः।—

मूलेन लाङ्गलिक्याः वै संलिप्ते पाणिपादके ॥ ३१ ॥

अमरापातने पिप्पल्यादिचूर्णं शालिमूलप्रयोगश्च।—

अमरापातनं मद्यैः पिप्पल्यादिरजः पिबेत्।
शालिमूलाचमात्रं वा मूलेनाम्लेन वाऽन्वितम् ॥ ३२ ॥

योनिशूले मदिराप्रयोगः।—

उपकुञ्चीं पिप्पलीञ्च मदिरां लाभतः पिबेत्।
सौवर्चलेन संयुक्तां योनिशूलनिवारणीम् ॥ ३३ ॥

मक्कल्लशूललक्षणम्।—

सूताया हृच्छिरोवस्ति-शूलं मक्कल्लसंज्ञितम् ॥ ३४ ॥

मक्कल्लशूले यवक्षारप्रयोगः पिप्पल्यादिक्वाथश्च।—

यवक्षारं पिबेत् तत्र सर्पिषोष्णोदकेन वा।
पिप्पल्यादिगणक्वाथं पिबेद्वा लवणान्वितम् ॥ ३५ ॥

---

फलम्। सर्षपः श्वेतसर्षपः। एतैर्धूपं कृत्वा योनिमुखे दद्यात्; उक्तं हि सुश्रुते—"योनिमुखं धूपयेत्" (शा० १० अ०) इति ॥ २८—३१ ॥

अमरापातनमित्यादि।—अत्र पिप्पल्यादिरज इति—सुश्रुतस्य पिप्पल्यादिगणचूर्णम्। अम्लेन काञ्जिकेन, मद्येनेत्यन्ये ॥ ३२ ॥

उपकुञ्चीमित्यादि।—उपकुञ्चीं कृष्णजीरकम्। पिप्पलीमित्यनन्तरं प्रक्षिप्येति शेषः ॥ ३३ ॥

गर्भपातज-रक्तस्रावे पारावतशकृत्प्रयोगः ।—

पारावतशकृत् पीतं शालितण्डुलवारिणा ।
गर्भपातानन्तरोत्थ-रक्तस्रावनिवारणम् ॥ ३६ ॥

किक्किशरोगे बदरपत्रादिचन्दनलेपौ ।—

जलपिष्टबदरपत्रैः सघृतैश्चन्दनेनालेपौ तु ।
किक्किशरोगं हरतो गोमयघर्षादथो विहितौ ॥ ३७ ॥

सूतिकाऽतिसारादौ ह्रीवेरादिक्वाथः ।—

ह्रीवेरारलुरक्तचन्दनबलाधन्याकवत्सादनी-
मुस्ताशीरयवासपर्पटविषाक्वाथं पिबेद्गर्भिणी ।
नानादोषयुतातिसारकगदे रक्तस्रुतौ वा ज्वरे
योगोऽयं मुनिभिः पुरा निगदितः सूत्यामयेषूत्तमः ॥ ३८ ॥

सूतिकाज्वरादौ अमृतादिक्वाथः ।—

अमृतानागरसहचर-भद्रोत्कटपञ्चमूलजलदजलम् ।
मधुसंयुक्तं निवारयति सज्वरं सूतिकातङ्कम् ॥ ३९ ॥

सूतिकाज्वरादौ सहचरादिक्वाथः ।—

सहचरपुष्करवेतसमूलं विकङ्कतदारुकुलत्थसमम् ।
जलमत्र ससैन्धवहिङ्गुयुतं सद्योज्वरसूतिकरोगहरम् ॥ ४० ॥

---

सूताया इत्यादि ।—सुश्रुतेऽप्युक्तं—प्रसूतायास्तु वस्त्युदरशिरोयोनिशूलं रक्तं संरुध्य वायुः करोति, स मक्कल्लसंज्ञितः इति ॥ ३४—३६ ॥

जलपिष्टेत्यादि ।—किक्किशरोगः गर्भोत्पीडनेन वस्त्यादिदेशे मनाक् चर्मविदरणम् । अथो अनन्तरं गोमयघर्षणानन्तरं विहितावित्यर्थः ॥ ३७।३८ ॥

अमृतेत्यादि ।—भद्रोत्कटः "भादलेड़" इति राढ़ायां ख्यातस्तरुः । अन्ये तु भद्रं भद्रमुस्तकम्, उत्कटः "इकड़" इति ख्यातं, तस्य मूलमित्याहुः । पञ्चमूलं स्वल्पपञ्चमूलम् । जलदं मुस्तकम् । जलं क्वाथः ॥ ३९ ॥

सहचरेत्यादि ।—विकङ्कतः "वैंचर" इति लोके, तस्य मूलम् । कुलत्थ. समो यस्य तत् तथा कुलत्थसमम् । जलं क्वाथः ॥ ४० ॥

सूतिकारोगे दशमूलप्रयोगोपदेशः।—

दशमूलीकृतः क्वाथः सद्यः सूतिरुजापहः॥ ४१॥

मक्कल्लशूलादौ वज्रकाञ्जिकम्।—

पिप्पली पिप्पलीमूलं चव्यं शुण्ठी यमानिका।
जीरके द्वे हरिद्रे द्वे विड़सौवर्चलं तथा॥ ४२॥
एतैरेवौषधैः पिष्टैरारनालं विपाचितम्।
आमवातहरं वृष्यं कफघ्नं वह्निदीपनम्॥ ४३॥
काञ्जिकं वज्रकं नाम स्त्रीणामग्निविवर्द्धनम्।
मक्कल्लशूलशमनं परं क्षीराभिवर्द्धनम्॥
क्षीरपाकविधानेन काञ्जिकस्यापि साधनम्॥ ४४॥

पञ्चजीरकगुड़ः।—

जीरकं हवुषा धान्यं शताह्वा वदराणि च।
यमानी वराष्टकी हिङ्गु-पत्रिका कासमर्दकम्॥ ४५॥
पिप्पली पिप्पलीमूलमजमोदाऽथ वाष्पिका।
चित्रकञ्च पलांशानि तथाऽन्यच्च चतुःपलम्॥ ४६॥
कशेरुकं नागरञ्च कुष्ठं दीप्यकमेव च।
गुड़स्य च शतं दद्यात् घृतप्रस्थं तथैव च॥ ४७॥

---

दशमूलीत्यादि।—आमशूलादिपीड़ायां पुनर्धान्यशुण्ठीयुक्तस्य धान्यपञ्चकयुक्तस्य वा दशमूलस्य क्वाथमुपदिशन्ति वृद्धाः॥ ४१॥

पिप्पलीत्यादि।—वज्रकाञ्जिके पिप्पल्यादिद्रव्यस्य मिलित्वा कर्षत्रयं, काञ्जिकस्य शराव एकः, पानीयमप्यल्पम्, एवमेव प्रायशो व्यवहरन्ति वृद्धाः, सकल्ककाञ्जिकपानमुपदिशन्ति च। चक्रस्त्वाह—"क्षीरपाकविधानेन काञ्जिकस्यापि साधनम्" इति॥ ४२—४४॥

जीरकमित्यादि।—पञ्चजीरकगुड़े जीरकं सूक्ष्ममुखकृष्णजीरकं गुर्जरप्रसिद्धम्। वराष्टकः राजिका। हिङ्गुपत्रिका वंशपत्रिका। अजमोदा वनयमानी, अन्तःपरिमार्जकत्वात् यमान्या एव भागद्वयम्। वाष्पिका क्षुद्रराजिका। तथाऽन्यच्च चतुःपलमिति—वक्ष्यमाणकशेरुकादिचतुष्टयं प्रत्येकं चतुःपलमित्यर्थः। दीप्यकं

क्षीरद्विप्रस्थसंयुक्तं शनैर्मृद्वग्निना पचेत्।
पञ्चजीरक इत्येष सूतिकानां प्रशस्यते ॥ ४८ ॥
गर्भार्थिनीनां नारीणां बृंहणीये समारुते।
विंशतिं व्यापदो योनेः कासं श्वासं ज्वरं क्षयम् ॥ ४९ ॥
हलीमकं पाण्डुरोगं दौर्गन्ध्यं मूत्रकृच्छ्रताम्।
हन्ति पीनोन्नतकुचाः पद्मपत्रायतेक्षणाः ॥
उपयोगात् स्त्रियो नित्यमलक्ष्मीमलवर्जिताः ॥ ५० ॥

स्तन्यवर्द्धने वनकार्पासिकादि-विदारीकन्दप्रयोगौ।—

वनकार्पासिकेक्षूणां मूलं सौवीरकेण वा।
विदारिकन्दं सुरया पिबेद्वा स्तन्यवर्द्धनम् ॥ ५१ ॥

स्तन्यवर्द्धने शालितण्डुलप्रयोगः।—

दुग्धेन शालितण्डुल-चूर्णपानं विवर्द्धयेत्।
स्तन्यं समाहृतः क्षीर-सेविन्यास्तु न संशयः ॥ ५२ ॥

स्तन्यशोधने हरिद्रादि-वचादिगणद्वयप्रयोगोपदेशः।—

हरिद्रादिं वचादिं वा पिबेत् स्तन्यविशुद्धये ॥ ५३ ॥

वातदुष्टस्तन्ये दशमूलप्रयोगोपदेशः।—

तत्र वातात्मके स्तन्ये दशमूलीजलं पिबेत् ॥ ५४ ॥

---

स्थूलजीरकम्। आदौ गुडघृतं क्षीरेण पक्त्वा सिद्धे सति जीरकादिचूर्णप्रक्षेपः। पञ्चपलजीरकयोगात् पञ्चजीरक इति संज्ञा। समारुते इत्यत्र गर्भे इति शेषः; कुपितमारुतयोगात् क्षीयमाणे इत्यर्थः ॥ ४५—५० ॥

सम्प्रति स्तन्यवर्द्धनयोगानाह, वनकार्पासिकेत्यादि।—सौवीरकेण काञ्जिकेन। विदारीकन्दं भूमिकुष्माण्डम् ॥ ५१।५२ ॥

हरिद्रादिमित्यादि।—हरिद्रादि वचादिगणौ सौश्रुतौ; यथा—"हरिद्रादारु-हरिद्राकलशीकुटजबीजानि मधुकञ्च" (सू० ३८ अ०) इति। कलशी पृश्निपर्णी। "वचामुस्ताऽतिविषाऽभयाभद्रदारूणि नागकेशरञ्च" (सू० ३८ अ०) इति। भद्रदारु देवदारु ॥ ५३।५४ ॥

पित्तदुष्टस्तन्ये अमृतादिक्वाथः।—

पित्तदुष्टेऽमृताभीरु-पटोलं निम्बचन्दनम्।
धात्री कुमारस्य पिबेत् क्वाथयित्वा सशारिवम्॥ ५५॥

कफदुष्टस्तन्ये त्रिफलादिक्वाथः।—

कफे वा त्रिफलां मुस्तं भूनिम्बं कटुरोहिणीम्॥ ५६॥

स्तन्यशोधने भार्ग्यादिक्वाथः।—

भार्गीदारुवचापाठाः पिबेत् सातिविषाः शृताः।
धात्री स्तन्यविशुद्ध्यर्थं मुद्गयूषरसाशिनी॥ ५७॥

स्तनविद्रधौ नागबलाप्रयोगः।—

कुक्कुरमिञ्चुकामूलं चर्वितमास्ये विधारितं जयति।
सप्ताहात् स्तनकीलं स्तन्यञ्चैकान्ततः कुरुते॥ ५८॥

स्तनविद्रधौ विद्रधिचिकित्साऽतिदेशादिः।—

शोथं स्तनोत्थितमवेक्ष्य भिषग्विदध्यात्
यत् विद्रधावभिहितन्त्विह भेषजं तत्।
आमे विदह्यति तथैव गते च पाकं
तस्याः स्तनौ सततमेव च निर्दुहीत॥ ५९॥

स्तनविद्रधौ विशाला-निशादिलेपौ।—

विशालामूललेपस्तु हन्ति पीड़ां स्तनोत्थिताम्।
निशाकनकफलाभ्यां लेपश्चापि स्तनार्त्तिहा॥ ६०॥

स्तनशोषे शूकरादिमांसचूर्णाभ्यङ्गः।—

मूषिकवसया शूकरगजमहिषमांसचूर्णसंयुतया।
अभ्यङ्गमर्दनाभ्यां सुकठिनपीनस्तनौ भवतः॥ ६१॥

---

पित्तेत्यादि।—अभीरुः शतावरी। शारिवा अनन्तमूलम्। सशारिवमित्यत्र "सशर्करम्" इति पाठान्तरम्। अमृतादिशारिवान्तस्य क्वाथः॥ ५५—५७॥

स्तनविद्रधिचिकित्सामाह, कुक्कुरेत्यादि।—कुक्कुरमिञ्चुका गोरक्षतण्डुला। स्तनकीलं स्तनविद्रधिम्॥ ५८।५९॥

विशालेत्यादि।—निशेत्यादौ कनकफलं धुस्तूरफलम्॥ ६०॥

स्तनशोषे कुष्ठादिमर्दनम्।—

महिषीभवनवनीतं व्याधिवलोग्रा तथैव नागबला।
पिष्ट्वा मर्दनयोगात् पीनौ कठिनौ स्तनौ कुरुते॥ ६२॥

स्तनोत्थापने श्रीपर्णीतैलम्।—

श्रीपर्णीरसकल्काभ्यां सिद्धं तैलं तिलोद्भवम्।
तूलकेनैव तत् तैलं स्तनस्योपरि धारयेत्॥
पतितावुत्थितौ स्त्रीणां भवेयातां पयोधरौ॥ ६३॥

स्तनादिवर्द्धने काशीशाद्यं तैलम्।—

काशीशतुरगगन्धा-शाबरगजपिप्पलीविपक्केन।
तैलेन यान्ति वृद्धिं स्तनकर्णवराङ्गलिङ्गानि॥ ६४॥

स्तनस्थैर्य्ये तण्डुलोदकनस्यम्।—

प्रथमर्त्तौ तण्डुलाम्भो नस्यं कुर्य्यात् स्तनौ स्थिरौ॥ ६५॥

स्तनोत्थापने श्यामादियमकस्नेहः।—

गोमहिषीघृतसहितं तैलं श्यामाकृताञ्जलिवचाभिः।
सकटुकानिशाभिः सिद्धं नस्यं स्तनोत्थापनं परम्॥६६॥

---

स्तनशोषचिकित्सामाह, मूषिकवसयेत्यादि।—मूषिकावसायां शूकरादिमांसचूर्णं प्रक्षिप्य स्तनयोरभ्यङ्गमर्दनम् आद्यपुष्पोत्सवे॥ ६१॥

महिषीत्यादि।—व्याधिः कुष्ठम्। उग्रा वचा॥ ६२॥

श्रीपर्णीत्यादि।—श्रीपर्णी गाम्भारी, तस्यास्त्वचो रसः स्वरसः। स्तनस्योपरि कुचाग्रे॥ ६३॥

काशीशेत्यादि।—काशीशं धातुकाशीशम्। शाबरं लोध्रम्। एषां कल्कः, जलं चतुर्गुणम्। कर्णः कर्णपाली। वराङ्गं स्त्रीगुह्यम्॥ ६४॥

प्रथमर्त्तावित्यादि।—प्रथमर्त्तौ आद्यपुष्पोत्सवे॥ ६५॥

गोमहिषीत्यादि।—गोमहिषीघृतयोर्मिलित्वा एको भागः, अपरश्च तैलस्य। श्यामा प्रियङ्गुः। कृताञ्जलिः सूर्य्यभक्ता, अञ्जलिकारिकेति ख्यातं, लाजालुया इत्यन्ये, लज्जावतीति कुत्रचित्। कटुका कटुरोहिणी। एषां कल्कः, जलं चतुर्गुणम्॥ ६६॥

कटिक्षीणीकरणे माधवीप्रयोगः योनिदार्ढ्ये सुरगोपप्रयोगश्च ।—

सुतनूकरोति मध्यं पीतं मथितेन माधवीमूलम् ।
स्याच्छिथिलाऽपि च गाढ़ा सुरगोपाज्याभ्यक्ता योनिः ॥ ६७॥

भर्त्तरि विद्वेषशमने उपायनिर्देशः ।—

शवदहनस्थितबन्धनरज्ज्वा सन्ताड़नाद्धि दयितेन ।
नश्यत्यबलाद्वेषः पत्यौ सहजः कृतोऽथवा योगैः ॥ ६८ ॥

भर्त्तरि विद्वेषशमने श्वेतबलाप्रयोगः ।—

दत्त्वैव दुग्धभक्तं विप्रायोत्पाट्य सितबलामूलम् ।
पुष्ये कन्यापिष्टं दत्तमनिच्छाहरं भक्ते ॥ ६९ ॥

इति स्त्रीरोग-चिकित्सा ।

---

## अथ बालरोग-चिकित्सा ।

वर्णादिजनने कुष्ठादिचूर्णम् ।—

कुष्ठं वचाऽभया ब्राह्मी कनकं क्षौद्रसर्पिषा ।
वर्णायुःकान्तिजननं लेहं बालस्य दापयेत् ॥ १ ॥

---

सुतनूकरोतीत्यादि ।—मध्यं स्त्रिया मध्यदेशः । मथितेन घोलेन । माधवीमूलं माधवीलतामूलम् । सुरगोप इति—इन्द्रगोपाख्यः कीटः, "सिन्दुरिया पोका" इति लोके । आज्यं घृतम्, अनयोरभ्यङ्गात् ॥ ६७ ॥

शवदहनेत्यादि ।—शवः मृतः, तद्दहनाय स्थिता या बन्धनरज्जुस्तया । दयितेन भर्त्रा ॥ ६८ ॥

दत्त्वेत्यादि ।—विप्राय दुग्धभक्तं दत्त्वा इति पूर्वेण योज्यम । भक्ते भक्तादौ ॥ ६९॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां स्त्रीरोग-चिकित्सा-विवृतिः ।

---

दुष्टस्तन्यपानादिना बालानां रोगसम्भवादनन्तरं बालरोगाधिकारः । तत्र बालरोगाधिकारे वक्तव्ये प्रथमतः बालस्य सुस्थवृत्तमाह, कुष्ठमित्यादि ।—कनकं

स्तन्याभावे दुग्धान्तरप्रयोगोपदेशः।—

स्तन्याभावे पयश्छागं गव्यं वा तद्गुणं पिबेत् ॥२॥

कण्ठस्थ-श्लेष्मणि तैलविशेषपानम्।—

तर्कांधी-गुड़िकां तप्तां निर्वाप्य कटुतैलके।
तत् तैलं पानतो हन्ति बालानामुल्वमुद्धतम् ॥ ३ ॥

कण्ठस्थश्लेष्मणि व्योषादिकल्कः।—

व्योषशिवोग्रारजनीकल्कं स्तन्येन पीतमथ पयसा।
उल्वं निःशेषं कुरुते पटुतां बालस्य चात्यन्तम् ॥ ४ ॥

नाभिशोथे मृत्पिण्डस्वेदः।—

मृत्पिण्डेनाग्नितप्तेन क्षीरसिक्तेन सोष्मणा।
स्वेदयेदुत्थितां नाभिं शोथस्तेनोपशाम्यति ॥ ५ ॥

नाभिपाके निशादितैलं निशाद्यवचूर्णनञ्च।—

नाभिपाके निशालोध्रप्रियङ्गुमधुकैः शृतम्।
तैलमभ्यञ्जने शस्तमेभिर्वाऽप्यवचूर्णनम् ॥ ६ ॥

---

मारितमारितस्वर्णचूर्णम्। तत्र सुवर्णमारणविधिर्यथा—कण्टकवेधयोग्यसुवर्णपत्रं जम्बीररसमेन स्थापयित्वा शोधालुफलस्थितगुडप्रायस्नेहभागेन लिप्त्वा गोरच-कर्कटीमूलपिण्डमध ऊर्द्धञ्च दत्त्वा शरावसम्पुटे निक्षिप्य प्रलिप्य च गोमयाग्नौ वारद्वयं त्रयं वा प्रपुटेत्, ततश्चूर्णयित्वा दृढ़घनवस्त्रेण छानयेदिति। लेहोऽयं जातदिने तदुपरि च प्रचरति। तन्त्रान्तरे च वर्षादिकरलेहान्तरस्य संवत्सरं यावदुपयोगः इत्युक्तः; यथा—"ब्राह्मानन्ताहेमचूर्णं समं कृत्वा निधापयेत्। घृतेन धावयेन्मात्रां तस्य संवत्सरं शिशुम्॥" इति ॥ १ ॥

स्तन्याभावे इत्यादि।—तद्गुणमिति—संस्काराल्लघूकृतम् ॥ २ ॥

तर्कांध इत्यादि।—तर्कुः "टाकुया" इति ख्यातं, तस्या अधोगुड़िका बाटुलीति ख्यातम्। उल्वं बालकस्य कण्ठगतश्लेष्माणम् ॥ ३ ॥

व्योषेत्यादि।—शिवा हरीतकी। उग्रा वचा। स्तन्येन पयसेति—नारीक्षीरेणेत्यर्थः ॥ ४।५ ॥

नाभीत्यादि।—मधुकं यष्टिमधुकम् ॥ ६ ॥

अहिण्डिकायां मयूरशिखामूलधारणम् ।—

सोमग्रहणे विधिवत् केकिशिखामूलमुद्धृतं बद्धम् ।
जघनेऽथ कन्धरायां क्षपयत्यहिण्डिकां नियतम् ॥ ७ ॥

अहिण्डिकायां सप्तदलादियोगद्वयम् ।—

सप्तदलपुष्पमरिचं पिष्टं गोरोचनासहितम् ।
पीतं तद्वत् तण्डुलभक्तकृतो दग्धपिष्टकप्रायः ॥ ८ ॥

अहिण्डिकायां जम्बूकनासादि सप्तयोगाः ।—

जम्बूकनासा वायसजिह्वा नाभिर्वराहसम्भूता ।
कांस्यं रसोऽथ गरलं प्रावृड्भेकस्य वामजङ्घाऽस्थि ॥९॥
इत्येकशोऽथ मिलितं विधृतं ग्रीवादिकटिदेशे ।
अहिण्डिकाप्रशमनमभ्यङ्गो नातिपथ्यविधिः ॥ १० ॥

अनामके घुर्घुरिकावुक्कादियोगः ।—

अनामके घुर्घुरिका-वुक्कामरिचरोचनाः ।
नवनीतञ्च सम्मिश्र्य खादेत् तद्रोगनाशनम् ॥ ११ ॥

---

सोमग्रहणे इत्यादि ।—अत्र विधिवत् उद्धृतमित्यन्वयः ; विधिश्च मुक्तकच्छ-शिखेन पुंसा उद्धरणम् । केकिशिखा मयूरशिखा । "उद्धृता बद्धा" इति पाठे—आमूलमुद्धृतेति योज्यम् । अत्र भिक्षुप्रार्थितकपर्दककुहरे पारदं पूरयित्वा सिक्थकेन संरुध्य कुमारी धत्ते इत्युपदिशन्ति वृद्धाः ॥ ७ ॥

सप्तदलेत्यादि ।—सप्तदलः सप्तच्छदः, तस्य पुष्पम् । पीतमित्यत्र जलेनेति शेषः । तद्वदिति—अहिण्डिकां क्षपयतीत्यर्थः । तण्डुलेत्यादि योगान्तरम् । भक्त-सहिततण्डुलान् पिष्ट्वा पत्रेणावेष्ट्य कुशेन बद्ध्वा अङ्गारैर्दग्ध्वा भक्षणीयमित्यर्थः ॥ ८ ॥

जम्बूकेत्यादि ।—जम्बुकः शृगालः, तस्य नासा । वायसः काकः, तस्य जिह्वा । रसः पारदः । गरलं विषम् । प्रावृड्भेकः वर्षाकालजमण्डूकः, स च पीतच्छविः "सोनाबेङ्" इति ख्यातः, तस्य वामपदास्थि । एतत् सर्वं प्रत्येकं मिलितं वा ग्रीवायां कट्यां वा धारणीयम् । नातिपथ्यविधिरिति व्याधिप्रभावादेवायम् ॥ ९।१० ॥

अनामके इत्यादि ।—अनामक इति—निर्नामरोग इति ख्यातं, केचिच्च घुञ्जिकारोग "पुञ्जिया" इत्याहुः । घुर्घुरिका कीटविशेषः, तस्य वुक्का वुक्कभाग इत्यर्थः ॥ ११ ॥

अनामके हरिद्राप्रयोगः ।—

तैलाक्तशिरस्तालुनि सप्तदलार्कस्नुहीभवं चीरम् ।
दत्त्वा रजनीचूर्णं दत्ते नश्येदनामकाभिख्यः ॥ १२ ॥

अनामके कुक्कुरेण लेहनादिकम् ।—

लेहयेच्च शुना बालं नवनीतेन लेपितम् ।
स्फुटकपत्रजरसोद्वर्त्तनञ्च हि तद्धितम् ॥ १३ ॥

अनामके चतुरङ्गतैलम् ।—

तैलस्य भागमेकं मूत्रस्य द्वौ च शिम्बीदलरसस्य ।
गव्यं पयश्चतुर्गुणमेवं दत्त्वा पचेत् तैलम् ॥
तेनाभ्यङ्गः सततं रोगमनामकाख्यमपहरति ॥ १४ ॥

अनामकार्त्तौ आर्कतूलकादि कज्जलम् ।—

आर्कं तूलकमाविकरोमाण्यादाय केशराजस्य ।
स्वरसेनाक्ते वस्त्रे कृत्वा वर्त्तिञ्च तैलाक्ताम् ॥ १५ ॥
तज्जातकज्जलाञ्चितलोचनयुगलोऽप्यलङ्कृतो बालः ।
कष्टमनामकरोगं चपयति भूतादिकञ्चापि ॥ १६ ॥

अनामके स्नानविशेषः ।—

चालनिकातलसंस्थितपोतं संप्लाव्य गव्यमूत्रेण ।
शोकोदशालिकायां रजकक्षारोदकस्नानम् ॥ १७ ॥

---

तैलाक्तेत्यादि ।—तैलाभ्यक्तशिरस्तालुनि सप्तदलार्कस्नुहीचीरं दत्त्वा तदुपरि हरिद्राचूर्णं दद्यादित्यर्थः ॥ १२ ॥

लेहयेदित्यादि ।—नवनीताक्तगात्रं शिशुं कृत्वा शुना कुक्कुरेण लेहयेत्, ततः स्फुटकस्वरसेनोद्वर्त्तयेत ॥ १३ ॥

तैलस्येत्यादि ।—शिम्बीदलं शिम्बीपत्रम् ॥ १४ ॥

आर्कमित्यादि ।—अर्कस्य तूलकम्, आविकरोमाणि मेषरोमाणि चेति भागद्वयं केशराजस्वरसरञ्जितवस्त्रेणावेष्ट्य तैलाक्तवर्त्तिकां कृत्वा ज्वालयेत्, तच्छिखोपरि पत्रं धृत्वा पातितकज्जलेन चक्षुषोरञ्जनं कार्य्यम् ॥ १५।१६ ॥

चालनीत्यादि ।—शोकोदशालिकायां चालनिकातलसंस्थितबालकं चालनिकारन्ध्रपतितगोमूत्रेण स्नापयित्वा रजकक्षारजलेन स्नापयेत् ॥ १७ ॥

अनामके पारदपूर्णकपर्दकधारणम्।—

दासक्रयणश्रावण( श्रमण? )वटिका रसेन्द्रपूरिता धृता कण्ठे।
नलिनीदले च शयनं सुकष्टमनामकाख्यरोगघ्नम्॥१८॥

औषधमात्रानिर्देशः।—

भैषज्यं पूर्वमुद्दिष्टं नराणां यज्ज्वरादिषु।
कार्य्यं तदेव बालानां मात्रा त्वस्य कनीयसी॥ १९॥
प्रथमे मासि जातस्य शिशोर्भेषजरक्तिका।
अवलेह्या तु कर्त्तव्या मधुक्षीरसिताघृतैः॥ २०॥
एकैकां वर्द्धयेत् तावत् यावत् संवत्सरो भवेत्।
तदूर्द्ध्वं माषवृद्धिः स्यात् यावदा-षोड़शाब्दकात्॥ २१॥

ज्वरातीसारादौ हरिद्रादिः।—

हरिद्राद्वययष्ट्याह्व-सिंहीशक्रयवैः कृतः।
शिशोर्ज्वरातिसारघ्नः कषायः स्तन्यदोषजित्॥२२॥

---

दासेत्यादि।—श्रावणः (श्रमणः?) पाषण्डविशेषः, भिक्षुवेशधारी योगीति लोके, तस्य वटिका वराटिका, कपर्दिकेति यावत्, दासेन दासद्वारा क्रयणं यस्याः सा तथा, ततः कर्मधारयः। रसेन्द्रेण पारदेन पूरिता सा कण्ठे धृतेत्यर्थः। नलिनीदलं पद्मिनीपत्रम्॥ १८॥

भैषज्यमित्यादि।—मात्रा त्वस्य कनीयसीति यदुक्तम्, अतस्तामेव मात्रां प्रतिपादयितुं परिभाषामाह, प्रथमे इत्यादि। मध्विति मध्वादिविकल्पो दोषप्रकृत्यादिभेदात्। एकैकामिति—मासि मासि एकैकां रक्तिकां कृत्वा वर्द्धयेदित्यर्थः। तदूर्द्ध्वमिति—वर्षादूर्द्ध्वं वर्षे वर्षे माषेण माषेण वृद्धिर्माषवृद्धिः। एतत्परिभाषाशेषो यथा—"प्रतिमासं प्रयोक्तव्यं वृद्धिरेषा भिषग्वरैः। मानमेतत् प्रयोक्तव्यं सर्वमानविधावपि॥ षोडशाब्दाद्भवेदूर्द्ध्वं यावदा-सप्ततेरिति। एष एव विभागोऽयं तदूर्द्ध्वं बालवत् क्रिया॥" इति॥ १९—२१॥

हरिद्रेत्यादि।—सिंही पृश्निपर्णी। यत्र हरिद्रादिगण एवायं श्लोकेन निबद्धः, तत्र च कलसीति पठितम्; निश्चलस्तु सिंही वाकुच इत्याह। यस्तु क्षीरपो बालः कषायं पातुमसमर्थस्तस्य धात्रीं पाययेत्। सुश्रुतेन कषायोक्तद्रव्यकल्केन लिप्तयोः स्तनयोः पानमपि दर्शितम्; यथा—"येषां गदानां ये योगाः

ज्वरातीसारादौ बालचातुर्भद्रिका।—

घनकृष्णाऽरुणाशृङ्गी-चूर्णं क्षौद्रेण संयुतम्।
शिशोर्ज्वरातिसारघ्नं कासश्वासवमीहरम्॥ २३॥

ज्वरातीसारादौ धातक्यादिलेहः।—

धातकीबिल्वधन्याक-लोध्रेन्द्रयवबालकैः।
लेहः क्षौद्रेण बालानां ज्वरातीसारवान्तिजित्॥ २४॥

ग्रहण्यादौ रजन्यादिलेहः।—

रजनीदारुसरल-श्रेयसीबृहतीद्वयम्।
पृश्निपर्णी शताह्वा च लीढं माक्षिकसर्पिषा॥ २५॥
ग्रहणीदीपनं हन्ति मारुतार्त्तिं सकामलाम्।
ज्वरातीसारपाण्डुघ्नं बालानां सर्वरोगनुत्॥ २६॥

छर्द्यादौ मधुरिकादिलेहः।—

मिषीकृष्णाऽञ्जनं लाजा-शृङ्गीमरिचमाक्षिकैः।
लेहः शिशोर्विधातव्यश्छर्दिकासज्वरापहः॥ २७॥

कासादौ शृङ्ग्यादिलेहः अतिविषालेहश्च।—

शृङ्गीं समुस्तातिविषां विचूर्ण्य लेहं विदध्यान्मधुना शिशूनाम्।
कासज्वरच्छर्दिभिरर्दितानां समाक्षिकाञ्चातिविषां तथैकाम्॥ २८॥

स्तन्यवमने पञ्चकोलावलेहः।—

पीतं पीतं वमेत् यस्तु स्तन्यं तं मधुसर्पिषा।
द्विवार्त्ताकीफलरसं पञ्चकोलञ्च लेहयेत्॥ २९॥

---

प्रवत्स्यन्तोऽगदङ्कराः। तेषु तत्कल्कसंलिप्तौ कुमारं पाययेत् स्तनौ॥" (अ० १० अ०) इति॥ २२॥

घनेत्यादि।—घनं मुस्तकम्। अरुणा अतिविषा॥ २३।२४॥

रजनीत्यादि वाग्भटस्य।—श्रेयसी गजपिप्पली। बालानां सर्वरोगनुदित्यत्र "बालानां सर्वशोथनुत्" इत्यपि पाठो वाग्भटे चन्द्रटेऽपि दृश्यते॥ २५।२६॥

मिषीत्यादि।—मिषी मधुरिका। कृष्णा पिप्पली। अञ्जनं रसाञ्जनम्। शृङ्गी कर्कटशृङ्गी॥ २७।२८॥

छर्द्यां च आम्रास्थ्यादिलेहः।—

आम्रास्थिलाजसिन्धूत्थैर्लेहः क्षौद्रेण छर्दिनुत् ॥ ३० ॥

हिक्कादौ पिप्पल्यादिलेहः।—

पिप्पलीमरिचानान्तु चूर्णं समधुशर्करम्।
रसेन मातुलुङ्गस्य हिक्काच्छर्दिनिवारणम् ॥ ३१ ॥

छर्द्यादौ पेटिमूलधारणादियोगचतुष्टयम्।—

पेटीपाठामूलाज्जम्ब्वाः सहकारवल्कलतः कल्कः।
इत्येकशश्च पिण्डो विधृतो ह्यन्नाभिमध्यतात्वादौ ॥
छर्द्यतिसारजवेगं प्रबलं धत्ते तदेव च नियमेन ॥ ३२ ॥

अतिसारे विल्वादिक्वाथावलेहौ।—

विल्वञ्च पुष्पाणि च धातकीनां जलं सलोध्रं गजपिप्पली च।
क्वाथावलेहौ मधुना विमिश्रौ बालेषु योज्यावतिसारितेषु ॥ ३३ ॥

अतीसारे समङ्गादिक्वाथः।—

समङ्गाधातकीलोध्र-शारिवाभिः शृतं जलम्।
दुर्द्धरेऽपि शिशोर्देयमतीसारे समाक्षिकम् ॥ ३४ ॥

---

पीतमित्यादि वाग्भटस्य।—दिवार्त्ताकी बृहतीद्वयं, तस्य फलरसमिति। दिवार्त्ताकीफलरसं पञ्चकोलञ्चेत्येको योग इति श्रीकण्ठः। निश्चलस्तु च-शब्दो विकल्पे, अतो योगद्वयम्; यदुक्तमायुर्वेदसारे—"पीत्वा यो वमति स्तन्यं भृशं तं मधुसर्पिषा। कोलीफलरसं यद्वा पञ्चकोलं प्रलेहयेत् ॥" इति। अयञ्च व्यवस्थितो विकल्पः, तेन पित्तोत्तरे कफे बृहतीद्वयफलरसं, कफोत्तरे वातश्लेष्मणि च पञ्चकोलचूर्णमित्याह ॥ २९।३० ॥

पिप्पलीत्यादि।—रसेन मातुलुङ्गस्येत्यत्र लिह्यादिति शेषः ॥ ३१ ॥

पेटीत्यादि।—पेटी "पेटारी" इति ख्यातं, "झाँपीटूपरी" इति लोके, तस्याः मूलम्। च-कारान्मिलित्वा प्रत्येकञ्च योगः ॥ ३२ ॥

विल्वमित्यादि।—बालं बालकम्। क्वाथावलेहाविति—क्वाथो वा अवलेहो वेत्यर्थः। अवलेहपक्षे—सर्वं सचूर्णं अनुरूपमधुना लेह्यम् ॥ ३३ ॥

अतीसारे नागरादिक्वाथः।—

नागरातिविषामुस्त-बालकेन्द्रयवैः शृतम्।
कुमारं पाययेत् प्रातः सर्वातीसारनाशनम्॥ ३५॥

अतिसारे समङ्गादियवागूः।—

समङ्गा धातकी पद्मं वयःस्था कच्छुरा तथा।
पिष्टैरेतैर्यवागूः स्यादतीसारविनाशिनी॥ ३६॥

छर्द्यादौ विल्वादिक्वाथः।—

विल्वचूतकषायेण लाजाश्चैव सशर्करा:।
आलोड्य पाययेत् बालं छर्द्यतीसारनाशिनीः॥ ३७॥

छर्द्यादौ प्रियङ्ग्वादिलेहः।—

कल्कः प्रियङ्गुकोलास्थि-मध्यमुस्तरसाञ्जनैः।
क्षौद्रलीढ़ः कुमारस्य छर्दितृष्णाऽतिसारनुत्॥ ३८॥

रक्तातीसारे मोचरसादि यवागूः।—

मोचरसः समङ्गा च धातकी पद्मकेशरम्।
पिष्टैरेतैर्यवागूः स्याद्रक्तातिसारनाशिनी॥ ३९॥

रक्तप्रवाहिकायां तिलादिलेहः।—

लेहस्तैलसिताक्षौद्र-तिलयष्ट्याह्वकल्कितः।
बालस्य रुन्ध्यान्नियतं रक्तस्रावं प्रवाहिकाम्॥ ४०॥

---

समङ्गेत्यादि।—समङ्गा वराहक्रान्ता। पद्मं पद्मकेशरम्। वयःस्था गुडूची। कच्छुरा शूकशिम्बीमूलम्। कल्कसाध्या इयम्॥ ३४—३६॥

विल्वेत्यादि।—अत्र कषायः षडङ्गतः। अत एव निर्देशात् लाजशब्दः स्त्रीलिङ्गोऽप्यस्तीति। योगोऽयं छर्दतिसारनाशनो बोध्य इति॥ ३७॥

कल्क इत्यादि।—कोलास्थिमध्यं वदरास्थिमज्जा॥ ३८॥

मोचरस इत्यादि।—मोचरसः शाल्मलीवेष्टकः॥ ३९॥

लेह इत्यादि।—रक्तस्रावं प्रवाहिकामिति—प्रवाहिकायामेव यत्र रक्तस्रुतिस्तत्रायं योगः, न तु केवलरक्तस्रावे, तेनातिसारयोरुपयोग्यत्वेन तत्रानर्हत्वात्॥ ४०॥

प्रवाहिकायां लाजादिचूर्णम् ।—

लाजा सयष्टिमधुकं शर्करा क्षौद्रमेव च ।
तण्डुलोदकसंयुक्तं क्षिप्रं हन्ति प्रवाहिकाम् ॥ ४१ ॥

अतीसारादौ अङ्कोठ-वटजमूलप्रयोगौ ।—

अङ्कोठमूलमथवा तण्डुलसलिलेन वटजमूलं वा ।
पीतं हन्त्यतिसारं ग्रहणीरोगञ्च दुर्वारम् ॥ ४२ ॥

आमरक्तशूले जीरकादिचूर्णं श्वेतसर्जप्रयोगश्च ।—

सितजीरकसर्जचूर्णं विल्वदलोत्थाम्बुमिश्रितं पीतम् ।
हन्त्यामरक्तशूलं गुड़सहितः श्वेतसर्जो वा ॥ ४३ ॥

ग्रहण्यां द्विरुत्तरमरिचादिचूर्णम् ।—

मरिचमहौषधकुटजं द्विगुणीकृतमुत्तरोत्तरं क्रमशः ।
गुड़तक्रयुक्तमेतत् ग्रहणीरोगं निहन्त्याशु ॥ ४४ ॥

रक्तग्रहण्यां विल्वादिक्षीरम् ।—

विल्वशक्राम्बुमोचाब्द-सिद्धमाजं पयः शिशोः ।
समांसरक्तां ग्रहणीं पीतं हन्यात् त्रिरात्रतः ॥ ४५ ॥

रक्तग्रहण्यां जम्बूत्वक्प्रयोगः ।—

तद्वदजाक्षीरसमो जम्बूत्वगुद्भवो रसः ॥ ४६ ॥

गुदपाके रसाञ्जनप्रयोगादिः ।—

गुदपाके तु बालानां पित्तघ्नीं कारयेत् क्रियाम् ।
रसाञ्जनं विशेषेण पानालेपनयोर्हितम् ॥ ४७ ॥

---

लाजा इत्यादि ।—संयुक्तमित्यनन्तरं पीतमिति शेषः । लाजादिचूर्णं यथायोग्यं गृहीत्वा तण्डुलोदकेन पेयम् ॥ ४१ ॥

अङ्कोठेत्यादि ।—अङ्कोठः आङ्कोड़ इति ख्यातस्तरुः । योगद्वयेऽपि तण्डुलोदकं सम्बध्यते । वटजमूलं वटजातमूलं, मूलाकारं हस्तप्रमाणं 'व' इति ख्यातम्, अत एवोक्तं वटजमूलमिति, न तु वटमूलम् ॥ ४२ ॥

सितेत्यादि ।—विल्वदलोत्थाम्बु विल्वपत्रस्वरसः ॥ ४३ ॥

मरिचेत्यादि ।—गुड़ेन मधुरीकृतं तक्रं गुड़तक्रम् ॥ ४४ ॥

मूत्ररोधे कणादिलेहः।—

कणोषणसिताक्षौद्र-सूक्ष्मैलासैन्धवैः कृतः।
मूत्रग्रहे प्रयोक्तव्यः शिशूनां लेह उत्तमः॥ ४८॥

आनाहादौ सैन्धवादिचूर्णम्।—

घृतेन सिन्धुविल्वैला-हिङ्गुभार्गीरजो लिहन्।
आनाहं वातिकं शूलं जयेत् तोयेन वा शिशुः॥ ४९॥

तालुपाके हरीतक्यादिकल्कः।—

हरीतकीवचाकुष्ठ-कल्कं माक्षिकसंयुतम्।
पीत्वा कुमारः स्तन्येन मुच्यते तालुपातनात्॥ ५०॥

मुखपाके आम्रसारादिलेपः।—

मुखपाके तु बालानां साम्रसारमयोरजः।
गैरिकं क्षौद्रसंयुक्तं भेषजं सरसाञ्जनम्॥ ५१॥

मुखपाके अश्वत्थत्वगादि दार्व्यादिलेपौ।—

अश्वत्थत्वग्दलक्षौद्रैर्मुखपाके प्रलेपनम्।
दार्वीयष्ट्यभयाजाती-पत्रक्षौद्रैस्तथाऽपरम्॥ ५२॥

मुखपाके स्नुहीपत्रप्रयोगः।—

सह जम्बीररसेन स्नुग्दलरसघर्षणं सद्यः।

---

बिल्वेत्यादि।—शक्रम् इन्द्रयवम्। अम्बु बालकम्। मोचः शाल्मलीवेष्टकः। सिद्धमिति—क्षीरपरिभाषया पक्वम्॥ ४५—४८॥

घृतेनेत्यादि।—सिन्धु सैन्धवम्। एषां चूर्णं घृतेन लेह्यम्। तोयेन वेत्यनन्तरं पिबन्निति शेषः, तेन तोयेन कोष्णजलेन वा पिबेदित्यर्थः॥ ४९॥

हरीतकीत्यादि वाग्भटस्य।—तालुपातनं तालुप्रदेशस्य निम्नता। "तालुकण्टकात्" इत्यपि पाठः॥ ५०॥

मुखपाके इत्यादि।—आम्रसारः आम्रसदृशपत्रः स्वनामख्यातो राढ़ायामिति केचित्; अन्ये तु आम्रसारः आम्रफलास्थिमज्जेत्याहुः। आम्रसारादि-रसाञ्जनान्त एक एव प्रलेपः॥ ५१॥

अश्वत्थेत्यादि।—अश्वत्थस्य त्वक् पत्रञ्च। अपरमित्यत्र प्रलेपनमित्यन्वयः॥ ५२॥

क्षतमुपहन्ति हि पाकं मुखजं बालस्य चाश्वेव ॥ ५३ ॥

दन्तोत्थापने लावादिचूर्णम्।—

लावतित्तिरिवल्लूर-रजः पुष्परसान्वितम्।
द्रुतं करोति बालानां दन्तकेशरवन्मुखम् ॥ ५४ ॥

दन्तोद्भेदजरोगस्य स्वयमेवोपशाम्यतानिर्देशः।—

दन्तोद्भेदोत्थरोगेषु न बालमतियन्त्रयेत्।
स्वयमप्युपशाम्यन्ति जातदन्तस्य ते गदाः ॥ ५५ ॥

हिक्कायां पञ्चमूलीक्षीरम्।—

पञ्चमूलीकषायेण सघृतेन पयः शृतम्।
सशृङ्गबेरं सगुडं शीतं हिक्कार्दितः पिबेत् ॥ ५६ ॥

हिक्कायां सुवर्णगैरिकप्रयोगः।—

सुवर्ण-गैरिकस्यापि चूर्णानि मधुना सह।
लीढ्वा सुखमवाप्नोति क्षिप्रं हिक्कार्दितः शिशुः ॥ ५७ ॥

---

महेत्यादि।—अम्बीरः पर्णासभेदः। स्नुग्दलं स्नुहीपत्रं, तस्य स्वरसः पुटपाकविधिनैव ग्रहीतुं शक्यते ॥ ५३ ॥

लावेत्यादि वाग्भटस्य।—लावतित्तिर्योर्वल्लूरं शुष्कमांसम्। पुष्परसः मधु। एतन्मांसचूर्णं मधुना लेह्यमिति केचित्। अन्ये तु मधुनैतच्चूर्णेन दन्तपालिं प्रतिसारयेदित्याहुः। किन्त्वयं योगो वाग्भटे प्रतिसारणप्रकरणे पठितः। दन्तकेशरमिति—दन्ता एव केशरं सुकुमारत्वात् ॥ ५४ ॥

दन्तोद्भेदोत्थेत्यादि वाग्भटस्य।—दन्तोद्भेदः दन्तोद्भवः; उक्तं हि—"दन्तोद्भेदश्च रोगाणां सर्वेषामपि कारणम्। विशेषाज्ज्वरविड्भेद-कासच्छर्दिशिरोरुजाम् ॥" (वा० उ० २ अ०) इत्यादि। न बालमतियन्त्रयेदिति आहाराचारनियमेनेत्यर्थः ॥५५॥

पञ्चमूलीत्यादि।—पञ्चमूली महती, वातकफप्रधानहिक्काहरत्वात्। अत्र क्वाथ्यात् पादिकं घृतम् अष्टमांशं वा, दुग्धाच्चतुर्गुणः क्वाथः, एतत् सर्वमेकीकृत्य पक्त्वा क्वाथं शोषयित्वा सघृतं दुग्धं स्थाप्यं, तत्र शुण्ठीचूर्णं गुडञ्चानुरूपं प्रक्षिप्य यथार्हं पिबेदित्याहुः। अन्ये तु घृतस्यापि पानकाले प्रक्षेप्यत्वमिति वदन्ति ॥ ५६ ॥

सुवर्णेत्यादि।—सुवर्णगैरिकस्य अत्यन्तलोहितगैरिकस्य ॥ ५७ ॥

श्वासादौ चित्रकादिचूर्णम्।—

चित्रकं शृङ्गवेरञ्च तथा दन्ती गवाच्यपि।
चूर्णं कृत्वा तु सर्वेषां सुखोष्णेनाम्बुना पिबेत्॥
श्वासं कासमथो हिक्कां कुमाराणां प्रणाशयेत्॥ ५८॥

श्वासादौ द्राक्षादिचूर्णम्।—

द्राक्षायासाभयाकृष्णा-चूर्णं सक्षौद्रसर्पिषा।
लीढ़ं श्वासं निहन्त्याशु कासञ्च तमकं तथा॥ ५९॥

कासे पुष्करादिचूर्णम्।—

पुष्करातिविषाशृङ्गी-मागधीधन्वयासकम्।
चूर्णितं मधुना लीढ़ं शिशूनां पञ्चकासनुत्॥ ६०॥

तृष्णायां दाड़िमादिचूर्णम्।—

दाड़िमस्य च वीजानि जीरकं नागकेशरम्।
चूर्णितं शर्कराक्षौद्र-लीढ़ं तृष्णानिवारणम्॥ ६१॥

तृष्णायां मायूरपक्षादिभस्मजलम्।—

मायूरपक्षभस्मव्युषितजलं तेन भावितं पेयम्।
तृष्णाघ्नं वटकाष्ठजभस्मजलं वक्त्रशोषजिद्धृतं वक्त्रे॥ ६२॥

नेत्ररोगे दार्व्यादिलेपः।—

पिष्टैश्छागेन पयसा दार्वीमुस्तकगैरिकैः।
बहिरालेपनं शस्तं शिशोर्नेत्रामयापहम्॥ ६३॥

---

चित्रकमित्यादि।—गवाची गोरक्षकर्कटी। सविबन्धे वातकफेऽयं योगः॥ ५८॥

द्राक्षेत्यादि।—कफपित्ते अयं योगः। यासः दुरालभा। तमकं श्वासमित्यर्थः॥ ५९।६०॥

दाड़िमस्येत्यादि।—चूर्णितमित्यत्र "कृष्णा च" इति पाठान्तरम्॥ ६१॥

मायूरेत्यादि।—मयूरपक्षभस्मस्रावितजलेन व्युषितेन भावितवटकाष्ठभस्म-स्रावितजलं पेयमित्यर्थः। मयूरपक्षभस्म पलं १, जलं पलं ६, एतद्बहुधा वस्त्रे परिस्राव्य गृहीतजले व्युषिते षष्ठांशेन वटकाष्ठभस्म प्रक्षिप्य बहुधा परिस्राव्य यथार्हं पिबेत्॥ ६२।६३॥

नेत्ररोगे मनःशिलादिवर्त्तिः ।—

मनःशिला शङ्खनाभिः पिप्पल्योऽथ रसाञ्जनम् ।
वर्त्तिः क्षौद्रेण संयुक्ता बाले सर्वाक्षिरोगनुत् ॥ ६४ ॥

नेत्ररोगे अलक्तकस्वेदः ।—

मातुः स्तन्यकटुस्नेह-काञ्जिकैर्भावितो जयेत् ।
स्वेदाद्दीपाग्निखोत्तप्तो नेत्रामयमलक्तकः ॥ ६५ ॥

कुकूणके शुण्ठ्याद्याश्च्योतनम् ।—

शुण्ठीभृङ्गनिशाकल्कः पुटपाकः ससैन्धवः ।
कुकूणकेऽक्षिरोगेषु भद्रमाश्च्योतनं हितम् ॥ ६६ ॥

कुकूणकादौ विडङ्गादिचूर्णाञ्जनम् ।—

क्रिमिघ्नालशिलादार्वी-लाक्षाकाञ्चनगैरिकैः ।
चूर्णाञ्जनं कुकूणे स्यात्क्रिमीणां पोथकीषु च ॥ ६७ ॥

कुकूणके सुदर्शनाचूर्णाञ्जनम् ।—

सुदर्शनामूलचूर्णादञ्जनं स्यात् कुकूणके ॥ ६८ ॥

शिध्मादौ गृहधूमादिलेपः ।—

गृहधूमनिशाकुष्ठ-राजिकेन्द्रयवैः शिशोः ।

---

मनःशिलेत्यादि ।—क्षौद्रेण संयुक्ता मधुपृष्टेत्यर्थः ॥ ६४ ॥

मातुः स्तन्येत्यादि ।—कटुस्नेहः कटुतैलम् । एतैर्मातुः स्तन्यादिभिः प्रत्येकशः सप्ताहं भावितोऽलक्तकरसः अनन्तरं दीपाग्निखातप्तः सन् स्वेदविधिना नेत्रामयं जयेदित्यर्थः ॥ ६५ ॥

शुण्ठीत्यादि ।—भृङ्गः भृङ्गराजः । शुण्ठ्यादीनां पिष्टानां प्रत्येकं माषकद्वयं, सैन्धवं रक्तिपञ्चकम्, एतत् सर्वं पुटपाकविधिना पक्त्वा तत आकृष्य वस्त्रे पोट्टलीं बद्ध्वा चक्षुषि आश्च्योतनं कार्य्यम् । "कुकूलके" इति पाठे—कुकूलकः तुषाग्निः, तस्मिन् पुटपाक इत्यन्वयः; उक्तं हि वाग्भटे—"शृङ्गवेरं निशा भृङ्गं कल्कितं वटपल्लवैः । बद्ध्वा गोशकृता लिप्तं कुकूलैः स्वेदयेत् ततः ॥ रसेन स्विन्नेत् तत्तास्यं नेत्रे च परिषेचयेत् ॥" (उ० २ अ० ) इति ॥ ६६ ॥

क्रिमिघ्नेत्यादि ।—आलं हरितालम् । शिला मनःशिला । काञ्चनगैरिकं स्वर्णगैरिकम् । चूर्णाञ्जनमिति—मधुसञ्चितशलाकया चूर्णाञ्जनं कार्य्यम् ॥ ६७ ॥

लेपस्तक्रेण हन्त्याशु सिध्मपामाविचर्च्चिकाः ॥ ६९ ॥

पुष्ट्यादिकरणे अश्वगन्धाघृतम्।—

पादकल्केऽश्वगन्धायाः क्षीरे दशगुणे पचेत्।
घृतं पेयं कुमाराणां पुष्टिकृद्बलवर्द्धनम् ॥ ७० ॥

अतीसारादौ बालचाङ्गेरीघृतम्।—

चाङ्गेरीस्वरसे सर्पिश्छागक्षीरसमे पचेत्।
कपित्थव्योषसिन्धूत्थ-समङ्गोत्पलबालकैः ॥ ७१ ॥
सविल्वधातकीमोचैः सिद्धं सर्वातिसारनुत्।
ग्रहणीं दुस्तरां हन्ति बालानान्तु विशेषतः ॥ ७२ ॥

बलजननादौ कुमारकल्याणकं घृतम्।—

शङ्खपुष्पी वचा ब्राह्मी कुष्ठं त्रिफलया सह।
द्राक्षा सशर्करा शुण्ठी जीवन्ती जीवकं बला ॥ ७३ ॥
शटी दुरालभा विल्वं दाड़िमं सुरसः स्थिरा।
मुस्तं पुष्करमूलञ्च सूक्ष्मैला गजपिप्पली ॥ ७४ ॥
एषां कर्षसमैर्भागैर्घृतप्रस्थं विपाचयेत्।
कषाये कण्टकार्य्याश्च क्षीरे तस्मिंश्चतुर्गुणे ॥ ७५ ॥
एतत् कुमारकल्याणं घृतरत्नं सुखप्रदम्।
बलवर्णकरं धन्यमग्निपुष्टिविवर्द्धनम् ॥ ७६ ॥
छायासर्वग्रहालक्ष्मी-क्रिमिदन्तगदापहम्।
सर्वबालामयहरं दन्तोद्भेदं विशेषतः ॥ ७७ ॥

---

सुदर्शनेत्यादि।—सुदर्शना विशुरीति ख्यातं जीवपर्णेति च ख्यातम् ॥ ६८।६९ ॥

पादकल्के इत्यादि।—पेयं कुमाराणामिति—कुमारैः पेयमित्यर्थः। "कृत्यानां कर्त्तरि वा" इति षष्ठी ॥ ७० ॥

चाङ्गेरीत्यादि।—अत्र अजाक्षीरचाङ्गेरीस्वरसौ प्रत्येकं घृताद्द्विगुणौ, पाक-साधनत्वेन चतुर्गुणद्रवस्योत्सर्गसिद्धत्वात् ॥ ७१।७२ ॥

शङ्खपुष्पीत्यादि।—जीवकं जीवनीयवर्गमध्ये पठितद्रव्यम्। सुरसः पर्णासः।

नेत्ररोगे मनःशिलादिवर्त्तिः ।—

मनःशिला शङ्खनाभिः पिप्पल्योऽथ रसाञ्जनम् ।
वर्त्तिः क्षौद्रेण संयुक्ता बाले सर्वाक्षिरोगनुत् ॥ ६४ ॥

नेत्ररोगे अलक्तकस्वेदः ।—

मातुः स्तन्यकटुस्नेह-काञ्जिकैर्भावितो जयेत् ।
स्वेदाद्दीपशिखोत्तप्तो नेत्रामयमलक्तकः ॥ ६५ ॥

कुकूणके शुण्ठ्याद्याश्च्योतनम् ।—

शुण्ठीभृङ्गनिशाकल्कः पुटपाकः ससैन्धवः ।
कुकूणकेऽक्षिरोगेषु भद्रमाश्च्योतनं हितम् ॥ ६६ ॥

कुकूणकादौ विडङ्गादिचूर्णाञ्जनम् ।—

क्रिमिघ्नालशिलादार्वी-लाक्षाकाञ्चनगैरिकैः ।
चूर्णाञ्जनं कुकूणे स्यात्क्रिशूलां पोथकीषु च ॥ ६७ ॥

कुकूणके सुदर्शनाचूर्णाञ्जनम् ।—

सुदर्शनामूलचूर्णादञ्जनं स्यात् कुकूणके ॥ ६८ ॥

शिश्वादौ गृहधूमादिलेपः ।—

गृहधूमनिशाकुष्ठ-राजिकेन्द्रयवैः शिशोः ।

---

मनःशिलेत्यादि ।—क्षौद्रेण संयुक्ता सङ्घृष्टेत्यर्थः ॥ ६४ ॥

मातुः स्तन्येत्यादि ।—कटुस्नेहः कटुतैलम् । एतैर्मातुः स्तन्यादिभिः प्रत्येकशः सप्ताहं भावितोऽलक्तकरसः अनन्तरं दीपशिखातप्तः सन् स्वेदविधिना नेत्रामयं जयेदित्यर्थः ॥ ६५ ॥

शुण्ठ्यौत्यादि ।—भृङ्गः भृङ्गराजः । शुण्ठ्यादीनां पिष्टानां प्रत्येकं माषकद्वयं, सैन्धवं रक्तिपञ्चकम्, एतत् सर्वं पुटपाकविधिना पक्त्वा तत आकृष्य वस्त्रे पोट्टलीं बद्ध्वा चक्षुषि आश्च्योतनं कार्य्यम् । "कुकूलके" इति पाठे—कुकूलकः तुषाग्निः, तस्मिन् पुटपाक इत्यन्वयः ; उक्तं हि वाग्भटे—"शृङ्गवेरं निशा भृङ्गं कल्कितं वटपल्लवैः । बद्ध्वा गोशकृता लिप्तं कुकूलैः स्वेदयेत् ततः ॥ रसेन लिम्पेत् ताल्वास्यं नेत्रे च परिषेचयेत् ॥" ( उ० २ अ० ) इति ॥ ६६ ॥

क्रिमिघ्नेत्यादि ।—आलं हरितालम् । शिला मनःशिला । काञ्चनगैरिकं स्वर्णगैरिकम् । चूर्णाञ्जनमिति—मधुसिक्तशलाकया चूर्णाञ्जनं कार्य्यम् ॥ ६७ ॥

लेपस्तक्रेण हन्त्याशु सिध्मपामाविचर्च्चिकाः ॥ ६९ ॥

पुष्ट्यादिकरणे अश्वगन्धाघृतम् ।—

पादकल्केऽश्वगन्धायाः क्षीरे दशगुणे पचेत् ।
घृतं पेयं कुमाराणां पुष्टिकृद्बलवर्द्धनम् ॥ ७० ॥

अतीसारादौ बालचाङ्गेरीघृतम् ।—

चाङ्गेरीस्वरसे सर्पिश्छागक्षीरसमे पचेत् ।
कपित्थव्योषसिन्धूत्थ-समङ्गोत्पलबालकैः ॥ ७१ ॥
सबिल्वधातकीमोचैः सिद्धं सर्वातिसारनुत् ।
ग्रहणीं दुस्तरां हन्ति बालानान्तु विशेषतः ॥ ७२ ॥

बलजननादौ कुमारकल्याणकं घृतम् ।—

शङ्खपुष्पी वचा ब्राह्मी कुष्ठं त्रिफलया सह ।
द्राक्षा सशर्करा शुण्ठी जीवन्ती जीवकं बला ॥ ७३ ॥
शटी दुरालभा बिल्वं दाड़िमं सुरसः स्थिरा ।
मुस्तं पुष्करमूलञ्च सूक्ष्मैला गजपिप्पली ॥ ७४ ॥
एषां कर्षसमैर्भागैर्घृतप्रस्थं विपाचयेत् ।
कषाये कण्टकार्य्याश्च क्षीरे तस्मिंश्चतुर्गुणे ॥ ७५ ॥
एतत् कुमारकल्याणं घृतरत्नं सुखप्रदम् ।
बलवर्णकरं धन्यमग्निपुष्टिविवर्द्धनम् ॥ ७६ ॥
छायासर्वग्रहालक्ष्मी-क्रिमिदन्तगदापहम् ।
सर्व्वबालामयहरं दन्तोद्भेदं विशेषतः ॥ ७७ ॥

---

सुदर्शनेत्यादि ।—सुदर्शना विशुरीति ख्यातं जीवपत्रेति च ख्यातम् ॥ ६८।६९ ॥

पादकल्के इत्यादि ।—पेयं कुमाराणामिति—कुमारैः पेयमित्यर्थः । "कृत्यानां कर्त्तरि वा" इति षष्ठी ॥ ७० ॥

चाङ्गेरीत्यादि ।—अत्र अजाक्षीरचाङ्गेरीस्वरसौ प्रत्येकं घृताद्द्विगुणौ, पाकसाधनत्वेन चतुर्गुणद्रवस्योत्सर्गसिद्धत्वात् ॥ ७१।७२ ॥

शङ्खपुष्पीत्यादि ।—जीवकं जीवनीयवर्गमध्ये पठितद्रव्यम् । सुरसः पर्णासः ।

मेधाजननादौ अष्टमङ्गलघृतम् ।—

वचा कुष्ठं तथा ब्राह्मी सिद्धार्थकमथापि च ।
शारिवा सैन्धवञ्चापि पिप्पली घृतमष्टमम् ॥ ७८ ॥
मेध्यं घृतमिदं सिद्धं पातव्यञ्च दिने दिने ।
दृढ़स्मृतिः क्षिप्रमेधाः कुमारो बुद्धिमान् भवेत् ॥ ७९ ॥
न पिशाचा न रक्षांसि न भूता न च मातरः ।
प्रभवन्ति कुमाराणां पिबतामष्टमङ्गलम् ॥ ८० ॥

ज्वरादौ लाक्षादितैलम् ।—

लाक्षारससमं सिद्धं तैलं मस्तु चतुर्गुणम् ।
रास्नाचन्दनकुष्ठाब्द-वाजिगन्धानिशायुगैः ॥ ८१ ॥
शताह्वादारुयष्ट्याह्व-मूर्वातिक्ताहरेणुभिः ।
बालानां ज्वररक्षोघ्नमभ्यङ्गात् बलवर्णकृत् ॥ ८२ ॥

ग्रहावेशे सहादिक्वाथस्नानं सप्तच्छदाद्यनुलेपनञ्च ।—

सहामुण्डितिकोदीच्य-क्वाथस्नानं ग्रहापहम् ।
सप्तच्छदनिशाकुष्ठ-चन्दनैश्चानुलेपनम् ॥ ८३ ॥

ग्रहावेशे सर्पनिर्मोकादिधूपः ।—

सर्पत्वक् लसुनं मूर्वा-सर्षपारिष्टपल्लवाः ।
वैड़ालविड़जालोम मेषशृङ्गी वचा मधु ॥
धूपः शिशोर्ज्वरघ्नोऽयमशेषग्रहनाशनः ॥ ८४ ॥

---

कण्टकारीकषायः क्षीरञ्च प्रत्येकं घृताच्चतुर्गुणम् । भूतादिकृतं मुखादिवैवर्ण्यं छाया ॥ ७३—७७ ॥

वचेत्यादि ।—वचादीनां कल्कः, जलं चतुर्गुणमिति ॥ ७८—८० ॥

लाक्षेत्यादि ।—लाक्षातैले "कुष्ठाब्दचन्दनैः" (उ० २ अ०) इत्येव पाठो वाग्भट-पुस्तकेषु दृश्यते, न तु कृष्णाब्दचन्दनैरिति । तिक्ता कटुरोहिणी, न तु लताकस्तूरी, "समूर्वारोहिणीरास्ना-शताह्वामधुकैः समैः" इति सिद्धसारदर्शनात् ॥ ८१।८२ ॥

सहेत्यादि ।—सहा माषपर्णी । क्वाथोऽनाद्र्धृतः ॥ ८३ ॥

ग्रहावेशे दैवव्यपाश्रयचिकित्सोपदेशः।—

बलिशान्तीष्टकर्माणि कार्य्याणि ग्रहशान्तये।
मन्त्रश्चायं प्रयोक्तव्यस्तत्रादौ सार्वकामिकः॥ ८५॥

गरुड़ाय बलिदानमन्त्रः।—

ओँ नमो भगवते गरुड़ाय त्र्यम्बकाय सद्यस्तवस्तुतः स्वाहा। ओँ कं पं टं शं वैनतेयाय नमः। ओँ ह्रीँ ह्रं क्षः॥ ८६॥

बलिदानविधिः।—

बालदेहप्रमाणेन पुष्पमालान्तु सर्वतः।
प्रगृह्य सुच्छिकाभक्तं बलिर्देयस्तु शान्तिकः॥ ८७॥

बालकस्य रक्षामन्त्रः।—

"ओँ कारी सुवर्णपक्षीश! बालकं रक्ष रक्ष स्वाहा" इति गरुड़बलिः॥ ८८॥

## अथ, रावणकृत-कुमारतन्त्रम्।

नन्दामातृकायहणे दैवचिकित्साविधिः।—

ओँ नारायणाय नमः। प्रथमे दिवसे मासि वर्षे वा

---

सर्पत्यादि।—सर्पत्वक् निर्मोकः। अरिष्टः निम्बः। सर्षपः श्वेतसर्षपः। मेषशृङ्गाः पत्रम्। "मेषशृङ्गम्" इति पाठे—मेषस्य गड्डरस्य शृङ्गम्॥ ८४॥

बलीत्यादि।—तत्रादावित्यत्र "सूत्रादौ" इति पाठान्तरे—कुमारस्य हस्ते कण्ठाद्य सूत्रबन्धनादौ इत्यर्थः॥ ८५॥

ओँमित्यादि।—ओँम् इत्यादिस्वाहान्त एको मन्त्रः। ओँम् इत्यादिबीजाक्षरात्मको द्वितीयः। एवम् ओँम् इत्यादि च इत्यन्तस्तृतीयः। किंवा मिलिता एक एव बलिदानमन्त्रः। बालदेहेत्यादौ पुष्पमाला शुक्ला। सर्वत इति—सर्वासु दिक्षु। सुच्छिकाभक्तं शरावकोपरिस्थभक्तं चतुष्पार्श्वस्थभक्तं वा। सुच्छिकाः स्वल्पशरावाः। अत्र मत्स्यमांसव्यञ्जनधूपदीपदानमप्युपदिशन्ति वृद्धाः। अयं गरुड़बलिः सन्ध्यायां दिनत्रयं दीयते वृद्धैरिति। बालकरक्षामन्त्रमाह, ओँ कारीत्यादिस्वाहान्तः मन्त्रः॥ ८६—८८॥

गृह्णाति नन्दा नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। अशुभं शब्दं मुञ्चति, आत्कारञ्च करोति, स्तन्यं न गृह्णाति।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

नद्युभयतटमृत्तिकां गृहीत्वा पुत्तलिकां कृत्वा शुक्लौदनः, शुक्लपुष्पं, शुक्लसप्तध्वजाः, सप्त प्रदीपाः, सप्त स्वस्तिकाः, सप्त वटकाः, सप्त शष्कुलिकाः, सप्त जम्बुड़िकाः, सप्त मुक्तकाः, गन्धं, पुष्पं, ताम्बूलं, मत्स्यं, मांसं, सुराऽग्रभक्तञ्च पूर्वस्यां दिशि चतुष्पथे मध्याह्ने बलिर्दातव्यः। ततः अश्वत्थपत्रं जलकुम्भे निक्षिप्य शान्त्युदकेन स्नापयेत्। रसोनसिद्धार्थकमेषशृङ्गनिम्बपत्रशिवनिर्माल्यैर्बालकं धूपयेत्। "ओँ नमो रावणाय, अमु-

---

इदानीं प्रसिद्धफलं रावणकृतकुमारतन्त्रमाह, ओँ नारायणाय नम इत्यादि।— ननु प्रथमे दिवसे इत्यादौ प्रथमे मासि वर्षे वेत्यादि' कथम्? यतो वक्ष्यमाण-द्वितीयतृतीयदिवसादिना प्रथममासस्य बाधितत्वात्? एवं प्रथमवर्षस्यापि द्वितीय-तृतीयमासादिद्वादशमासान्तेन परिभूतत्वादिति? अत्रोच्यते—द्वादशदिनात् परतोऽस्त्येव प्रथममासस्यावकाशः, एवं वर्षस्यापि। तथा हि, यदि कुमारो माघे जातस्तदा माघादिगणनया पौषे मासि द्वादशमासाः भवन्ति, तत्र प्रथमद्वितीयादि-मासविधिरेव, तत ऊर्द्ध्वं द्वादशमासि वर्षवृद्धिदिनं यावत् प्रथमसंवत्सरविधिर्विधेय इति युक्तिमुत्पश्यामः। मासेनात्र गणना, न तु चन्द्रादित्यगत्या दिनविभागं कृत्वा मासादिगणना कार्य्या, इह द्वादशमासवर्षयोर्विषयत्वाभावप्रसङ्गात्। किंवा आदित्यगत्या दिनगणनयाऽपि जन्मदिने एव प्रथमवर्षविधेश्चरितार्थत्वमिति। नन्दादिनामकीर्त्तनञ्च तदुद्देशेन बलिदानार्थम्; यथा—"अमुकस्य व्याधिं हन हन मुञ्च मुञ्च स्वाहा, नन्दायै नमः" इति बलिदानम्। अशुभशब्दममङ्गलवाक्यं, मुञ्चति विरौति। आत्कारः छर्दिः। स्वस्तिकाः वेदिकाः। जम्बुड़िकाः उत्स्विन्नमाषाः। अश्वत्थपत्रं जलकुम्भे प्रक्षिप्य गायत्रीं पठित्वा द्विजेन शान्त्युदकं कर्त्तव्यं, किंवा बलिदानमन्त्रेणैव सप्तधा आवर्त्त्य भिषजा कार्य्यमित्याहुर्वृद्धाः। मेषस्य गड्डरस्य शृङ्गम्। यत्र धूपो नोक्तस्तत्रायमेव धूपो विधेयः, तथा यत्र शान्त्युदकं

कस्य व्याधिं हन हन मुञ्च मुञ्च क्रीं फट् स्वाहा"। एवं दिनत्रयं बलिं दत्त्वा चतुर्थे दिवसे ब्राह्मणं भोजयेत्, ततः सम्पद्यते शुभम्॥ ८९॥

सुनन्दामातृकाग्रहणे दैवचिकित्साविधिः।—

द्वितीये दिवसे मासे वर्षे वा गृह्णाति सुनन्दा नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। चक्षुः उन्मीलयति, गात्रमुद्वेजयति, न शेते, क्रन्दति, स्तन्यं न गृह्णाति, आत्कारश्च भवति।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

तण्डुलहस्तपृष्ठैकं गृहीत्वा दधिगुड़घृतञ्च मिश्रितं शरावैकं, गन्धताम्बूलं, पीतपुष्पं, पीतसप्तध्वजाः, चत्वारः प्रदीपाः, दश स्वस्तिकाः, मत्स्यमांससुराऽग्रभक्ततिलचूर्णानि पश्चिमायां दिशि चतुष्पथे बलिर्दातव्यः दिनानि त्रीणि सन्ध्यायां, ततः शान्त्युदकेन स्नापयेत्। शिवनिर्माल्य-सिद्धार्थ-मार्जाररोमोशीर-बालक-घृतैः धूपं दद्यात्। "ओँ नमो रावणाय, अमुकस्य व्याधिं हन हन मुञ्च मुञ्च क्रीं फट् स्वाहा"। चतुर्थे दिवसे ब्राह्मणं भोजयेत्। ततः सम्पद्यते शुभम्॥ ९०॥

पूतनामातृकाग्रहणे दैवचिकित्साविधिः।—

तृतीये दिवसे मासे वर्षे वा गृह्णाति पूतना नाम मातृका।

---

गीतं तत्र इदमेव शान्त्युदकमुपदिशन्ति। ओँ नम इत्यादि मन्त्री ध्रुवः, येऽत्र विशेषास्ते प्रतिमातृकं वाच्याः कुमारस्य नामोच्चारणपूर्वकं पठनीयाः; यथा—"अमुकस्य व्याधिं हन हन मुञ्च मुञ्च" इति॥ ८९॥

द्वितीये इत्यादि।—उन्मीलयति उपरि भ्रमयुरिक्षपति। तण्डुलहस्तपृष्ठैकमिति—एकवारपरिमितहस्तपृष्ठे तण्डुलान् गृहीत्वेत्यर्थः। ध्वजाः पताकाः। अग्रभक्तमिति—ओदनपूर्णस्थालीमध्यात् यत् प्रथममाकृष्यते भक्तं तदग्रभक्तम्। शान्त्युदकेनेति शान्त्युदकमिदं कुशेन कार्य्यम्, एवं सर्वत्र विशेषोक्तिं विना। अत्र मन्त्रे "क्रीँ फट्" इति विशेषः॥ ९०॥

तया गृहीतमात्रेण प्रथमं भवति ज्वरः। गात्रमुद्वेजयति, स्तन्यं न गृह्णाति, मुष्टिं बध्नाति, क्रन्दति, ऊर्द्ध्वं निरीक्षते।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

नद्युभयतटमृत्तिकां गृहीत्वा पुत्तलिकां कृत्वा गन्ध-ताम्बूलं, रक्तपुष्पं, रक्तचन्दनं, रक्तसप्तध्वजाः, सप्त प्रदीपाः, सप्त स्वस्तिकाः, पञ्चिमांससुराऽग्रभक्तञ्च दक्षिणस्यां दिशि अपराह्णे चतुष्पथे बलिर्दातव्यः। शिवनिर्माल्यगुग्गुलुसर्षपनिम्बपत्रमेष-शृङ्गैर्दिनत्रयं धूपयेत्। "ओँ नमो रावणाय, अमुकस्य व्याधिं हन हन मुञ्च मुञ्च ह्रासय ह्रासय स्वाहा"। एवं दिनत्रयं कार्य्यम्। चतुर्थे दिवसे ब्राह्मणान् भोजयेत्। ततः सम्पद्यते शुभम्॥ ९१॥

मुखमुण्डितिकामातृकायस्ते दैवचिकित्साविधिः।—

चतुर्थे दिवसे मासे वर्षे वा गृह्णाति मुखमुण्डितिका नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। ग्रीवां नमयति, चक्षुरुन्मीलयति, स्तन्यं न गृह्णाति, रोदिति, स्वपिति, मुष्टिं बध्नाति।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

नद्युभयतटमृत्तिकां गृहीत्वा पुत्तलिकां कृत्वा उत्पल-पुष्पं, गन्धं, ताम्बूलं, दश ध्वजाः, दीपाश्चत्वारः, त्रयोदश स्वस्तिकाः, मत्स्यमांससुराऽग्रभक्तञ्च उत्तरस्यां दिशि अपराह्णे बलिर्देयश्चतुष्पथे। "ओँ नमो रावणाय, अमुकस्य व्याधिं हन हन मुञ्च मुञ्च स्वाहा"। एवं दिनत्रयं कार्य्यम्। चतुर्थे दिवसे ब्राह्मणान् भोजयेत्। ततः सम्पद्यते शुभम्॥ ९२॥

---

तृतीये इत्यादि।—अग्रभक्तमिति—ओदनपूर्णस्थालीमध्यात् यत् प्रथममाकृष्यते तत् अग्रभक्तम्॥ ९१॥

चतुर्थे इत्यादि।—दश ध्वजा इति शुक्लाः, विशेषाभावात्॥ ९२॥

कटपूतनामातृकायहणे दैवचिकित्साविधिः।—

पञ्चमे दिवसे मासे वर्षे वा गृह्णाति कटपूतना नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। गात्रमुद्वेजयति, स्तन्यं न गृह्णाति, मुष्टिञ्च बध्नाति।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

कुम्भकारचक्रस्य मृत्तिकां गृहीत्वा पुत्तलिकां विधाय गन्धताम्बूलं, शुक्लपुष्पं, शुक्लौदनं, पञ्च ध्वजाः, पञ्च प्रदीपाः, पञ्च वटकाः ऐशान्यां दिशि बलिर्दातव्यः; शान्त्युदकेन स्नापयेत्; शिवनिर्माल्य-सर्पनिर्मोक-गुग्गुलु-निम्बपत्र-वालक-घृतैर्धूपं दद्यात्। "ओँ नमो रावणाय, अमुकस्य व्याधिं चूर्णय चूर्णय हन हन स्वाहा"। एवं दिनत्रयं कुर्य्यात्। चतुर्थे दिवसे ब्राह्मणान् भोजयेत्। ततः सम्पद्यते शुभम्॥ ९२॥

शकुनिमातृकायहणे दैवचिकित्साविधिः।—

षष्ठे दिवसे मासे वर्षे वा यदि गृह्णाति शकुनिका नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। गात्रभेदं दर्शयति, मुष्टिं बध्नाति, दिवारात्रावुत्थानं भवति, ऊर्द्धं निरीक्षते।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

पिष्टकेन पुत्तलिकां कृत्वा शुक्लौदनं, शुक्लपुष्पं, पीतपुष्पं, रक्तपुष्पं, गन्धताम्बूलानि, दश दीपाः, दश पीतध्वजाः, दश स्वस्तिकाः, दश वटकाः, क्षीरजम्बुड़िकाः, मत्स्यमांससुराः आग्नेय्यां दिशि निष्क्रान्ते मध्याह्ने बलिर्दातव्यः; ततः शान्त्युदकेन स्नापयेत्; शिवनिर्माल्यरसोनगुग्गुलुसर्पनिर्मोक-निम्बपत्रघृतैर्धूपं दद्यात्। ओँ नमो रावणाय, अमुकस्य

पञ्चमे इत्यादि।—कुम्भकारचक्रमृत्तिका कुम्भकारचक्रसंलग्नमृत्तिका॥ ९२॥

व्याधिं चूर्णय चूर्णय हन हन स्वाहा"। एवं दिनत्रयं कुर्य्यात्। चतुर्थे दिवसे ब्राह्मणान् भोजयेत्। ततः सम्पद्यते शुभम् ॥९४॥

शुष्करेवतीमातृकाग्रहणे दैवचिकित्साविधिः।—

सप्तमे दिवसे मासे वर्षे वा यदा गृह्णाति शुष्करेवती नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। गात्रमुद्वेजयति, मुष्टिं बध्नाति, रोदिति।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

रक्तपुष्पं, शुक्लपुष्पं, गन्धताम्बूलं, रक्तौदनं, कृशराः, त्रयोदश स्वस्तिकाः, त्रयोदश शष्कुलिकाः, जम्बुड़िकाः, मत्स्यमांससुराः, त्रयोदश ध्वजाः, पञ्च प्रदीपाः पश्चिमायां दिशि ग्रामनिष्क्राशेऽपराह्णे वृक्षमाश्रित्य बलिर्दातव्यः; ततः शान्त्युदकेन स्नापयेत्; गुग्गुलुमेषशृङ्गीसर्षपोशीरबालकघृतैर्धूपं दद्यात्। "ओँ नमो रावणाय दीप्ततेजसे, अमुकस्य व्याधिं हन हन मुञ्च मुञ्च स्वाहा"। एवं दिनत्रयं कुर्य्यात्। चतुर्थे दिवसे ब्राह्मणान् भोजयेत्। ततः सम्पद्यते शुभम् ॥ ९५ ॥

अर्य्यकामातृकाग्रहणे दैवचिकित्साविधिः।—

अष्टमे दिवसे मासे वर्षे वा यदि गृह्णाति अर्य्यका नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। रक्तगन्धः, पूतिगन्धश्च जायते, आहारं न गृह्णाति, गात्रमुद्वेजयति।

बलिं तस्य प्रवक्ष्यामि यतः सम्पद्यते शुभम्।

रक्तपीतध्वजाः, चन्दनं, पीतपुष्पं, शष्कुल्यः, पर्पटिकाः, मत्स्यमांससुराः, जम्बुड़िकाः प्रत्यूषे बलिं दद्यात् प्रान्तरे।

---

षष्ठे इत्यादि।—चौरजम्बुड़िकाः चौरमिश्रिताः खिन्नमाषाः ॥ ९४ ॥

सप्तमे इत्यादि।—रक्तौदनं रक्तशाल्यादिभक्तम्, अलक्तकादिरञ्जितभक्तं वा। कृशरा तिलतण्डुलनिर्मितयवागूः। ग्रामनिष्क्राशे ग्रामप्रान्ते ॥ ९५ ॥

"ओं नमो रावणाय त्रैलोक्यविद्रावणाय चतुर्दिग्मोत्तणाय, अमुकस्य व्याधिं हन हन मुञ्च मुञ्च दह दह ओँ क्रौँ फट् स्वाहा"। एवं दिनत्रयं कुर्य्यात्। चतुर्थे दिवसे ब्राह्मणान् भोजयेत्। ततः सम्पद्यते शुभम् ॥ ८६ ॥

सूतिकामातृकायहणे दैवचिकित्साविधिः ।—

नवमे दिवसे मासे वर्षे वा यदि गृह्णाति सूतिका नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। नित्यं छर्दयति, गात्रभेदं दर्शयति, मुष्टिं बध्नाति, निद्राऽतितरां स्यात्।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

नद्युभयतटमृत्तिकां गृहीत्वा पुत्तलिकां निर्माय शुक्ल-वस्त्रेण वेष्टयेत्। शुक्लपुष्पं, शुक्लौदनं, गन्धताम्बूलं, शुक्लत्रयो-दशध्वजाः, त्रयोदश प्रदीपाः, त्रयोदश स्वस्तिकाः, त्रयोदश पुत्तलिकाः, मत्स्यमांससुराः उत्तरदिग्विभागे ग्रामनिष्काशे बलिं दापयेत्; शान्त्युदकेन स्नापयेत्; गुग्गुलुनिम्बपत्रगोधूम-गोशृङ्गश्वेतसर्षपघृतैर्धूपं दद्यात्। "ओँ नमो रावणाय चतुर्भुजाय, अमुकस्य व्याधिं हन हन मुञ्च मुञ्च स्वाहा"। एवं दिनत्रयं कुर्य्यात्। चतुर्थे दिवसे ब्राह्मणान् भोजयेत्। ततः सम्पद्यते शुभम् ॥ ८७ ॥

निर्ऋतामातृकायहणे दैवचिकित्साविधिः ।—

दशमे दिवसे मासे वर्षे वा यदि गृह्णाति निर्ऋता नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। गात्र-मुद्वेजयति, आत्कारं करोति, रोदिति, बध्नाति मूत्रं, पुरीषञ्च भवति।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

पारावारमृत्तिकां गृहीत्वा पुत्तलिकां निर्माय, गन्ध-

ताम्बूलं, रक्तपुष्पं, रक्तचन्दनं, पञ्चवर्णपञ्चध्वजाः, पञ्च प्रदीपाः, पञ्च स्वस्तिकाः, पञ्च पुत्तलिकाः, मत्स्यमांससुराः वायव्यां दिशि बलिं दद्यात्, शान्त्युदकेन स्नापयेत्; काकविष्ठा-गोमांस-गोशृङ्ग-रसोन-मार्जाररोम-निम्बपत्र-घृतैर्धूपयेत्। "ओँ नमो रावणाय चूर्णितहस्ताय, अमुकस्य व्याधिं हन हन मुञ्च मुञ्च स्वाहा"। एवं दिनत्रयं कुर्य्यात्। चतुर्थे दिवसे ब्राह्मणान् भोजयेत्। ततः सम्पद्यते शुभम्॥ ९८॥

पिलिपिच्छिकामातृकाग्रहणे दैवचिकित्साविधिः।—

एकादशे दिवसे मासे वर्षे वा यदि गृह्णाति पिलिपिच्छिका नाम मातृका; तया गृहीतमात्रेण प्रथमं भवति ज्वरः। आहारं न गृह्णाति, ऊर्द्ध्वदृष्टिर्भवति, गात्रभङ्ग आक्कारश्च भवति।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

पिष्टकेन पुत्तलिकां कृत्वा रक्तचन्दनरक्तञ्च तस्या मुखं दुग्धेन सिञ्चेत्। पीतपुष्पं, गन्धताम्बूलं, सप्त पीतध्वजाः, सप्त प्रदीपाः, अष्टौ वटकाः, अष्टौ शष्कुलिकाः, अष्टौ पूपिकाः, मत्स्यमांससुराः पूर्वस्यां दिशि बलिर्दातव्यः, शान्त्युदकेन स्नापयेत्, शिवनिर्माल्यगुग्गुलुगोशृङ्गसर्पनिर्मोकघृतैर्धूपयेत्। "ओँ नमो रावणाय, अमुकस्य व्याधिं मुञ्च मुञ्च स्वाहा"। एवं दिनत्रयं कुर्य्यात्। चतुर्थे दिवसे विप्रान् भोजयेत्। तेन सम्पद्यते शुभम्॥ ९९॥

कामुकामातृकाग्रहणे दैवचिकित्साविधिः।—

द्वादशे दिवसे मासे वर्षे वा यदि गृह्णाति कामुका नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। विहस्य

अष्टमे इत्यादि।—अष्टमनवमदशमैकादशाः स्पष्टाः॥ ९६—९९॥

वादयति, अङ्गुल्या तर्जयति, उल्लाति, क्रामति, निःश्वसिति, मुहुर्मुहुश्छर्दयति, आहारं न करोति।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

चौरेण पुत्तलिकां कृत्वा शुक्लकुसुमं, गन्धताम्बूलं, शुक्लाः सप्तध्वजाः, सप्त शष्कुलिकाः, सप्त प्रदीपाः करम्भकेण सर्वकर्मबलिं दद्यात्; शान्त्युदकेन स्नापयेत्; श्वेतसर्षपगुग्गुलुशिवनिर्माल्यघृतैर्धूपयेत्। "ओँ नमो रावणाय, अमुकस्य व्याधिं मुञ्च मुञ्च हन हन स्वाहा"। एवं दिनत्रयं कुर्यात्। चतुर्थे दिवसे विप्रान् भोजयेत्। तेन सम्पद्यते शुभम्॥ १००॥

इति रावणकृतं कुमारतन्त्रं समाप्तम्।

इति बालरोग-चिकित्सा।

---

## अथ विष-चिकित्सा।

अरिष्टाबन्धनाद्युपदेशः।—

अरिष्टाबन्धनं मन्त्र-प्रयोगश्च विषापहः।
दंशनं दंशकस्याहेः फलस्य मृदुनोऽपि वा॥ १॥

---

वादय इत्यादि।—वादयतीति—सम्भाषते, "रोदिति" इति पाठान्तरम्। चौरेणेति—पाकात् पिण्डीभूतेन चौरेणेत्यर्थः। करम्भकेण दधिमिश्रितभक्तेन॥१००॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां बालरोग-चिकित्सा-विवृतिः।

---

इदानीमातुरहितचिकित्सापारिशेष्यात् विषचिकित्सामाह, अरिष्टेत्यादि।—अरिष्टाबन्धनं धमनीबन्धः, स च दंशदेशादूर्द्ध्वे चतुरङ्गुले; यदाह वाग्भटः,—"दंशस्योपरि बध्नीयादरिष्टां चतुरङ्गुले। क्षौमादिभिर्वेणिकया सिद्धैर्मन्त्रैश्च मन्त्रवित्॥" (उ० ३६ अ०) इति। दंशकस्याहेरिति—दंशकर्त्तुः सर्पस्य दंशनं दन्तपङ्क्तिद्वयेनातिपीड़नम्, एवं मृदुफलस्यापि। एतच्च सुकुमारद्रव्योपलक्षणं, तेन रम्भाद्दणाद-

कण्टकीशिरीषमूलप्रयोगः।—

मूलं तण्डुलवारिणा पिबति यः प्रत्यङ्गिरासम्भवं
निष्पिष्टं शुचिभद्रयोगदिवसे तस्याहिभीतिः कुतः?।
दर्पादेव फणी यदा दशति तं मोहान्वितो मूलपं
स्थाने तत्र स एव याति नियतं वक्त्रं यमस्याचिरात्॥२॥

भाविदंशननिवारणे मसूरादिप्रयोगः।—

मसूरं निम्बपत्राभ्यां खादेन्मेषगते रवौ।
अब्दमेकं न भीतिः स्याद्विषात् तस्य न संशयः॥३॥

भाविदंशननिवारणे श्वेतपुनर्नवाप्रयोगः।—

धवलपुनर्नवजटया तण्डुलजलपीतया च पुष्यर्क्षे।
अपहरति विषधरविषोपद्रवमा-वत्सरं पुंसाम्॥४॥

गृहधूमादियोगः।—

गृहधूमो हरिद्रे द्वे समूलं तण्डुलीयकम्।
अपि वासुकिना दष्टः पिबेद्दधिघृताप्लुतम्॥५॥

कुलिकामूलनस्यम्।—

कुलिकामूलनस्येन कालदष्टोऽपि जीवति॥६॥

---

काष्ठाद्यपि बोध्यं, तत्र सर्वत्र विषसङ्क्रमणं भवतीति भावः; यदुक्तं वृन्दे— "धर्म्मे दंशविधौ न भोगिनमसौ प्राप्नोति दष्टो यदा, तस्याखण्डमृणालकोमलफलं दन्तैर्दशत्याशु यत्। गच्छेत् तत्क्षणमेव तस्य गरलं तद्दृष्टवल्लन्तरं, दंशे नीरसतां नयेत्त बहुधा सम्मर्द्य हस्तेन वा॥" इति॥१॥

मूलमित्यादि।—प्रत्यङ्गिरा कण्टकीशिरीषः। शुचिराषाढ़स्तस्य भद्रयोगदिवसे शुभयोगनक्षत्रादियुक्तदिने, पुष्यानक्षत्रादियुक्तदिने इत्यन्ये॥२॥

मसूरमित्यादि।—मसूरगुड़कमेकं, निम्बस्य द्वे पत्रे, तृतीया सहार्थे। मेषगते रवौ वैशाखे॥३॥

धवलेत्यादि।—स्पष्टम्॥४॥

गृहधूम इत्यादि।—तण्डुलीयकमिति—केवलतण्डुलीयकमूलमपि बोध्यम्; तदुक्तं विन्दुसारे—"तण्डुलीयकमूलन्तु पीतं तण्डुलवारिणा। तक्षकेणापि सन्दष्टं निर्विषं कुरुते नरम्॥" इति॥५॥

कफलेपादियोगत्रयम्।—

श्लेष्मणः कर्णगूथस्य वामानामिकया कृतः।

लेपो हन्याद्विषं घोरं नृमूत्रसेचनं तथा ॥ ७ ॥

भावितश्वेतमरिचप्रयोगः।—

शिरीषपुष्पस्वरसे भावितं मरिचं सितम्।

सप्ताहं सर्पदष्टानां नस्यपानाञ्जने हितम् ॥ ८ ॥

नतादियोगः।—

द्विपलं नतकुष्ठाभ्यां घृतक्षौद्रं चतुःपलम्।

अपि तक्षकदष्टानां पानमेतत् सुखावहम् ॥ ९ ॥

वन्ध्यकर्कोटकनस्यम्।—

वन्ध्यकर्कोटजं मूलं छागमूत्रेण भावितम्।

नस्यं काञ्जिकसंयुक्तं विषोपहतचेतसः ॥ १० ॥

महाऽगदः।—

त्रिवृद्विशल्या मधुकं हरिद्रे

मञ्जिष्ठवर्गो लवणञ्च सर्वम्।

---

कुलिकेत्यादि।—कुलिकः कालाकड़भेदः स्वल्पफलः, कुड़कारिया इति ख्यातम्। उपदेशात् तण्डुलोदकेन नस्यं कार्य्यम्; केचित् पानं वदन्ति ॥ ६ ॥

श्लेष्मण इत्यादि।—योगत्रयमिदम्। श्लेष्मण इति—मुखस्थितश्लेष्मण इत्येकः, कर्णगूथस्येति द्वितीयः। वामानामिकया कृत इति—कनिष्ठाङ्गुलीसमीपे या अङ्गुली, सा अनामिकेत्युच्यते, वामहस्तस्य अनामिकाङ्गुल्या कृत इत्यर्थः। नृमूत्रसेचनं दंशदेशे स्वीयमूत्रसेकः; उक्तं हि—"सर्पदष्टप्रदेशे तु स्वयमेव विचक्षणः। मूत्रयेत् तत्क्षणादेव निर्विषत्वमवाप्नुयात् ॥" इति। अयं तृतीयो योगः ॥ ७ ॥

शिरीषेत्यादि वाग्भटस्य।—मरिचं सितमिति—शोभाञ्जनबीजम्। अयमेव पाठश्चन्द्राटादौ दृश्यते, अतः श्वेतसर्षपमिति पाठान्तरमयुक्तम् ॥ ८ ॥

द्विपलमित्यादि वाग्भटस्य।—षट्पलीयं मात्रा सर्पदष्टविषये विशेषविहितत्वात् न दोषावहेति ॥ ९ ॥

वन्ध्येत्यादि।—वन्ध्यः फलरहितः कर्कोटकः ॥ १० ॥

कटुत्रिकञ्चैव विचूर्णितानि
शृङ्गे निदध्यान्मधुसंयुतानि ॥ ११ ॥
एषोऽगदो हन्त्युपयुज्यमानः
पानाञ्जनाभ्यञ्जननस्ययोगैः ।
अवार्य्यवीर्य्यो विषवेगहन्ता
महाऽगदो नाम महाप्रभावः ॥ १२ ॥

पीतविषे त्वक्स्थविषे च वमनाद्युपदेशः ।—

पीते विषे स्यात् वमनञ्च त्वक्स्थे
प्रदेहसेकादि सुशीतलञ्च ॥ १३ ॥

कण्ठामाशयगतविषयोः कपित्थ-नतप्रयोगौ ।—

कपित्थमांसं ससिता-क्षौद्रं कण्ठगते विषे ।
लिह्यादामाशयगते ताभ्यां चूर्णपलं नतात् ॥ १४ ॥

पक्वाशयगतविषे पिप्पल्यादियोगः ।—

विषे पक्वाशयगते पिप्पलीरजनीद्वयम् ।

---

त्रिवृदित्यादि सुश्रुतस्य ।—विशल्या दन्ती, काष्ठपाटला वा ; "विशाला" इति पाठे—गोरक्षकर्कटी । मञ्जिष्ठवर्गः मञ्जिष्ठासहितोऽयमेव त्रिवृदादिवर्ग इत्यर्थः । अन्ये तु मञ्जिष्ठावर्गं पृथगेव पठन्ति, तच्च टीकाकारेणं व्याख्यातम् । डल्लनस्तु—"त्रिवृद्विशल्या मधुकं हरिद्रे रक्ता नरेन्द्रो लवणश्च वर्गः" ( सु० क० ५ अ० ) इति पठति, व्याचष्टे च—विशल्या दन्ती, काष्ठपाटला वा । रक्ता मञ्जिष्ठा । नरेन्द्रः स्वर्णालुः । लवणवर्गः लवणपञ्चकमिति । शृङ्गे इति—गोशृङ्गे । निदध्यादिति—पक्षमेकं स्थापयेत् । एतच्च गोशृङ्गे पक्षैकं स्थापनं सौश्रुतवक्ष्यमाणयोगे तथा दर्शनात् ; यथा—"शृङ्गे गवां शृङ्गमये च चैव प्रच्छादितः पक्षमुपेक्षितश्च" ( क० ५ अ० ) इति ॥ ११।१२ ॥

पीते इत्यादि ।—वमनमिति—गोमयस्वरसेन मधुयुक्तेन वान्तिः कार्य्या ; उक्तं हि—"समधुर्विषपीतस्य वमनं गोमयाद्रसः" इति । त्वक्स्थे तु विषे शीतलं प्रदेहसेकादि कार्य्यम् ॥ १३ ॥

कपित्थेत्यादि ।—कपित्थस्य मांसं त्वगस्थ्यादिरहितं मध्यम् । लिह्यादित्यादौ ताभ्यामिति—सिताक्षौद्राभ्याम् । नतादिति—तगरपादिकातः ॥ १४ ॥

मञ्जिष्ठाञ्च समं पिष्ट्वा गोपित्तेन नरः पिबेत् ॥ १५ ॥

मूलविष-दिग्धविद्धयोः रजन्यादियोगः।—

रजनीसैन्धवक्षौद्र-संयुक्तं घृतमुत्तमम्।

पानं मूलविषार्त्तस्य दिग्धविद्धस्य चेष्यते ॥ १६ ॥

संयोगजविषे ताम्र-स्वर्णप्रयोगौ।—

सितामधुयुतं चूर्णं ताम्रस्य कनकस्य वा।

लेहः प्रशमयत्युग्रं सर्वं संयोगजं विषम् ॥ १७ ॥

गरविषे अङ्कोठरसक्रिया।—

अङ्कोठमूलनिःक्वाथं फाणितं सघृतं लिहेत्।

तैलाक्तः स्विन्नसर्वाङ्गो गरदोषविषापहः ॥ १८ ॥

कीटादिविषे कटभ्यादियोगः।—

कटभ्यर्जुनशैरीय-शेलुक्षीरिद्रुमत्वचः।

कषायकल्कचूर्णाः स्युः कीटलूताव्रणापहाः ॥ १९ ॥

मूषिकविषे आगारधूमादिलेपः।—

आगारधूममञ्जिष्ठा-रजनीलवणोत्तमैः।

लेपो जयत्याखुविषं कर्णिकायाश्च पातनम् ॥ २० ॥

वृश्चिकविषे कासमर्दप्रयोगः।—

यः कासमर्दपत्रं वदने प्रक्षिप्य कर्णे फुत्कारम्।

---

विषे इत्यादि।—अत्र पिप्पलीद्वयं रजनीद्वयञ्च। सममिति—समभागम्। जलेन पेषणं पानञ्चेत्याहुः ॥ १५ ॥

रजनीत्यादि।—उत्तमं घृतं गव्यघृतम्। दिग्धः विषाक्तशरः, तेन विद्धस्य ॥१६॥

सितेत्यादि।—ताम्रस्य कनकस्य वेति—मारितस्य ताम्रस्य तथा मारितस्य सुवर्णस्येत्यर्थः ॥ १७ ॥

अङ्कोठेत्यादि।—अङ्कोठमूलक्वाथमेव पुनः पाकात् फाणिताकारं कुर्य्यात् ॥१८॥

इदानीं कीटादिविषचिकित्सामाह, कटभीत्यादि।—शैरीयः झिण्टी। शेलुः बहुवारः। क्षीरिद्रुमाः वटोडुम्बरादयः ॥ १९ ॥

आगारधूमेत्यादि।—कर्णिका मांसकन्दी वरटादिकीटदंशजा ग्रन्थिर्वा ॥ २० ॥

मनुजो दधाति शीघ्रं जयति विषं वृश्चिकानां सः ॥ २१ ॥

वृश्चिकविषे तुलसीमूलगुड़िका-अर्कपत्रलेपश्च।—

दंशे भ्रामणविधिना वृश्चिकविषहृत् कुठेरपादगुड़िका।
पुरधूपपूर्वमर्कच्छदमिव पिष्ट्वा कृतो लेपः ॥ २२ ॥

वृश्चिकविषे जीरकादिलेपः।—

जीरकस्य कृतः कल्को घृतसैन्धवसंयुतः।
सुखोष्णो वृश्चिकार्त्तानां सुलेपो वेदनापहः ॥ २३ ॥

गोधादिविषे कुङ्कुमादिगुड़िका।—

कुङ्कुमकुनटीकर्कटपललहरितालैः कुसुम्भसम्मिलितैः।
कृतगुड़िका भ्रामणतो विदष्टगोधाशरटादिविषजित् ॥२४॥

मीनविषे अङ्कोठपत्रधूमः शरटादिविषे कुड़कराणिमूललेपश्च।—

अङ्कोठपत्रधूमो मीनविषं झटिति विघट्टयेच्छृङ्गी।
गोधावरटीविषमिव लेपेन कुड़कराणिजटा ॥ २५ ॥

कुक्कुरविषे धुस्तूरादियोगद्वयम्।—

कनकोडुम्बरफलमिव तण्डुलजलपिष्टं पीतमपहरति।
कनकदलद्रवघृतगुड़-दुग्धपलैवं शुनां गरलम् ॥ २६ ॥

य इत्यादि।—नितं मूलम्। प्रक्षिप्य सद्धव्यं ॥ २१ ॥

दंशे इत्यादि।—दंशे वृश्चिकदंशे। कुठेरपादगुड़िका पर्णासमूलकृतगुड़िका।
पुरधूपपूर्वमिति—गुग्गुलुना पूर्वं धूपयित्वा अर्कपत्रकृतो लेपः ॥ २२।२३ ॥

गोधादिविषचिकित्सामाह, कुङ्कुमित्यादि।—कुनटी मनःशिला। कर्कटस्य
पललं मांसम्। कुसुम्भं कुसुम्भपुष्पम्। शरटादीत्यादिशब्दादञ्जननामिकाज्येष्ठी-
प्रभृतीनां ग्रहणम् ॥ २४ ॥

अङ्कोटेत्यादि।—अङ्कोति छेदः, अन्यथा छन्दोभङ्गः स्यादिति। कुड़कराणिः
स्वनामख्याता, तस्या जटा मूलम् ॥ २५ ॥

कुक्कुरविषचिकित्सामाह, कनकेत्यादि।—कनकः धुस्तूरः, उडुम्बरः यज्ञोडुम्बरः,
तयोः फलम्। कनकदलेत्यादि योगान्तरम्। कनकदलद्रवः धुस्तूरपत्रस्वरसः।
एषां पलं मिलिता ॥ २६ ॥

भेकविषे शिरीषबीजलेपः अङ्कोठादिक्वाथश्च।—

लेप इव भेकगरलं शिरीषबीजैः स्नुहीपयःसिक्तैः।
हरति गरलं त्र्यहमशिताऽङ्कोठजटा कुष्ठसम्मिलिता ॥२७॥

मक्षिकाविषे मरिचादिलेपः लालाविषे पटोलमूलादिलेपश्च।—

मरिचमहौषधबालकनागाह्वैर्मक्षिकाविषे लेपः।
लालाविषमपनयतो मूले मिलिते पटोलनीलिकयोः ॥२८॥

नखदन्तविषे सोमवल्कादिलेपः।—

सोमवल्कोऽश्वकर्णश्च गोजिह्वा हंसपाद्यपि।
रजन्यौ गैरिकं लेपो नखदन्तविषापहः ॥ २९ ॥

सर्वकीटविषे दशाङ्गागदम्।—

वचाहिङ्गुविडङ्गानि सैन्धवं गजपिप्पली।
पाठाप्रतिविषाव्योषं काश्यपेन विनिर्मितम् ॥
दशाङ्गमगदं पीत्वा सर्वकीटविषं जयेत् ॥ ३० ॥

जलौकोविषे कीटविषचिकित्साऽतिदेशः।—

कीटदष्टक्रियाः सर्वाः समानाः स्युर्जलौकसाम् ॥ ३१ ॥

मृतसञ्जीवनोऽगदः।—

पृक्काप्लवस्थौणेयकाक्षीशैलेयरोचनातगरम्।
ध्यामककुङ्कुममांसीसुरसाद्येलाऽऽलकुष्ठघ्नम् ॥ ३२ ॥

---

भेकविषचिकित्सामाह, लेप इत्यादि।—अशिता भक्षिता। क्वाथविधया कल्कविधया वा योज्यमेतत् ॥ २७ ॥

मरिचेत्यादि।—नागाह्वं नागकेशरम्। लालाविषमिति—लालेव विषं लालाविषम्। नीलिका रञ्जनद्रव्यविशेषः ॥ २८ ॥

सोमवल्क इत्यादि।—सोमवल्कः कट्फलम्। अश्वकर्णः शालभेदः, गर्दभाण्डो वा। गोजिह्वा दार्वीशाकः। हंसपादी हंसपादाकृतिः स्वनामख्याता ॥ २९ ॥

कीटविषचिकित्सामाह, वचेत्यादि वाग्भटस्य।—पीत्वेति क्वाथविधया कल्कविधया वा योज्यम् ॥ ३० ॥

अतिदेशेन जलौकोविषचिकित्सामाह—कीटदष्टेत्यादि ॥ ३१ ॥

बृहतीशिरीषपुष्पश्रीवेष्टकपद्मचारटीविशालाः।
सुरदारुपद्मकेशरशावरकमनःशिलाकौन्त्यः॥ २३॥
जात्यर्कपुष्पसर्षपरजनीद्वयहिङ्गुपिप्पलीलाक्षाः।
जलमुद्गपर्णीचन्दनमधुकमदनसिन्धुवाराश्च॥ २४॥
सम्पाकलोध्रमयूरकगन्धफलीनाकुलीविडङ्गाश्च।
पुष्येणोद्धृत्य समं पिष्ट्वा गुड़िका विधेयाः स्युः॥ २५॥
जन्तुविषघ्नो जयकृत् विषमृतसञ्जीवनो ज्वरनिहन्ता।
श्रेयविलेपनधारणधूमग्रहणैर्गृहस्थश्च॥ २६॥
भूतविजयस्त्वलक्ष्मीकार्मणमन्त्राग्न्यशन्यरीन् हन्यात्।
दुःस्वप्नस्त्रीदोषानकालमरणाम्बुचौरभयम्॥ २७॥
धनधान्यकार्य्यसिद्धिश्रीपुष्ट्यायुर्विवर्द्धनो धन्यः।
मृतसञ्जीवन एष प्रागमृतात् ब्रह्मणाऽभिहितः॥२८॥

इति विष-चिकित्सा।

---

पृक्केत्यादि।—स्थौणेयं ग्रन्थिपर्णम्। काची सौराष्ट्रमृत्तिका। ध्यामकं गन्धतृणम्। सुरसाऽग्रं निर्गुण्डीमञ्जरी। आलं हरितालम्। कुष्ठघ्नम् एडगजः। श्रीवेष्टकः नवनीतखोटी। पद्मचारटी कुष्माण्ड़लता। पद्मस्य केशरं किञ्जल्कः। शावरकः लोध्रः। कौन्ती रेणुका। जात्यर्कपुष्पमिति—जात्यर्कयोः पुष्पम्। जलं बालकम्। निर्गुण्ड्याकारः शुक्लपुष्पः सिन्धुवारः। सम्पाकः आरग्वधः, तस्य फलं ग्राह्यम्। लोध्रं लोहितलोध्रम। मयूरः अपामार्गः। गन्धफली प्रियङ्गुः। नाकुली रास्ना। पुष्ये पुष्यानक्षत्रयुक्तकाले। जन्तवः क्रिमयः। कार्मणं परद्रोहोपायः। मन्त्रः अभिचारमन्त्रः। अशनिः वज्रम्। स्त्रीदोषाः सौभाग्यार्थकृतगरादिदोषाः॥ २२—२८॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां विष-चिकित्सा-विवृतिः।

# अथ रसायनाधिकारः ।

रसायनस्य लक्षणं प्रयोगकालश्च ।—

यज्जराव्याधिविध्वंसि भेषजं तद्रसायनम् ।
पूर्वे वयसि मध्ये वा शुद्धकायः समाचरेत् ॥ १ ॥

रसायनादौ देहशुद्धेरावश्यकता —

अविशुद्धशरीरस्य युक्तो रासायनो विधिः ।
न भाति वाससि क्लिष्टे रङ्गयोग इवार्पितः ॥ २ ॥

---

भेषजं तावद्द्विविधम्, आतुरहितं सुस्थहितञ्च । सुस्थहितमपि द्विविधं, रसायन-वाजीकरणभेदात् । तत्रातुरहितं तावदुक्तमेव, सम्प्रति सुस्थहितं वाच्यं, तत्रापि वाजीकरणापेक्षया रसायनस्य वर्णबलायुष्यादिजनकतया महाफलकतया च प्रथमतो रसायनमाह, यदित्यादि ।—जराव्याधिविध्वंसि जरारूपव्याध्युत्पत्ति-प्रतिबन्धकम्; एतेन विशिष्टरसजनकत्वे सति जरानिवर्त्तकत्वं रसायनत्वमिति लक्षणं सूचितम् । अत्र रसशब्देन रसकार्यत्वात् सप्तानामेव धातूनां ग्रहणम् । अत्राथविशेषणसन्निवेशात् (?) कपालरञ्जनयोगादिषु नातिव्याप्तिः । ननु वृद्धो न रसायनाधिकारी, वक्ष्यति च—"पूर्वे वयसि" इत्यादि । तथा अन्यत्राप्युक्तं—"जरा-पक्वशरीरस्य व्यर्थमेव रसायनम्" इति, तत् कथं जराप्रशमकत्वं रसायनस्य ? नैवं, जराशब्देनात्र अकालपलितं कालिकञ्च आविपलितमुच्यते, अतो नोक्तदोषः । यत्तु च्यवनप्राशादौ "सुवृद्धोऽभूत् पुनर्युवा" ( च० चि० अभयामलकीयरसा० ) इत्यनेन वृद्धस्यापि रसायनप्रयोगात् जराप्रशमनमुक्तं, तत् तपःप्रभावेणानुगृहीतरसायनस्य फलं, न रसायनमात्रस्येति । सुदान्तस्त्वाह—"रसायनञ्च सुस्थातुरविषयम् । जरा च व्याधिश्च तद्विध्वंसितुं शीलं यस्य तद्रसायनम् । जराविध्वंसित्वेन न पूर्वापर-विरोधः, अकालजराहरत्वात् रसायनस्य । यत् तु च्यवनप्राशादौ "सुवृद्धोऽभूत् पुनर्युवा" इति, तत् तपःप्रभावानुगृहीतत्वेनाचिन्त्यसामर्थ्यात् । भेषजपदेन ध्यान-मन्त्रादिकं व्यवच्छिनत्ति । जरेति ज्वरातिसारादिभेषजं वाजीकरणञ्च व्यवच्छिनत्ति । व्याधीति कपालरञ्जनकर्णीकरणादिकञ्च व्यवच्छिनत्ति" इति । पूर्वे इत्यादौ पूर्वे इति —यौवनप्रवेशे एव । मध्ये इति—यौवनशेषे । बालवृद्धौ तु रसायनाविषयौ भेषजवीर्य्यासहत्वात् जरापक्वशरीरत्वाच्च । शुद्धकाय इति—वमनविरेचनाभ्यां शुद्धशरीरः ॥ १ ॥

पञ्चविधहरीतकीरसायनम् ।—

गुडेन मधुना शुण्ठ्या कृष्णया लवणेन वा ।
द्वे द्वे खादन् सदा पथ्ये जीवेद्वर्षशतं सुखी ॥ ३ ॥

ऋतुभेदे हरीतकीरसायनम् ।—

सिन्धूत्थशर्कराशुण्ठी-कणामधुगुडैः क्रमात् ।
वर्षादिष्वभया सेव्या रसायनगुणैषिणा ॥ ४ ॥

त्रिफलारसायनम् ।—

त्रैफलेनायसीं पात्रीं कल्केनालेपयेन्नवाम् ।
तमहोरात्रिकं लेपं पिबेत् क्षौद्रोदकाप्लुतम् ॥ ५ ॥
प्रभूतस्नेहमशनं जीर्णे तस्मिन् प्रयोजयेत् ।
अजरोऽरुक् समाऽभ्यासाज्जीवेच्चापि समाः शतम् ॥ ६ ॥

पिप्पलीरसायनम् ।—

पञ्चाष्टौ सप्त दश वा पिप्पलीः क्षौद्रसर्पिषा ।
रसायनगुणान्वेषी समामेकां प्रयोजयेत् ॥ ७ ॥

---

अविशुद्धे तथा फलं नाप्नोति मत्वा आह, अविशुद्धशरीरस्येत्यादि सुश्रुतस्य ।— युक्त इति—प्रयुक्तः । क्लिष्ट इति—मलिने ॥ २ ॥

प्रथमतः हरीतकीरसायनमाह, गुडेनेत्यादि ।— सिन्धूत्थेत्यादौ वर्षासु हरीतकी मा ६, सैन्धव मा २ गिलनीया । शरदि हरीतकी मा ५, शर्करा मा ४ खाद्यं शीतलजलं पेयम् । हेमन्ते हरीतकी मा ३, शुण्ठी मा २, तप्तजलं पेयम् । शिशिरे हरीतकी मा ३, पिप्पली मा २, तप्तजलं पेयमिति ॥ ३।४ ॥

त्रैफलेनेत्यादि ।—आयसीं पात्रीमिति—कान्तादिलौहपात्रीम् । नवामित्यनेन निर्मलत्वमपि सूच्यते । कल्केनेति कर्षमितेन । अम्लपित्ते त्विदं क्रियते इत्याहुर्वृद्धाः । केचित् उदकस्थाने "घृतम्" इति पठन्ति ॥ ५।६ ॥

पञ्चाष्टावित्यादि ।—सप्तेति छेदः । सङ्ख्याव्यतिक्रमेणानुक्तपिप्पलीनामुपयोगं सूचयतीति चक्रः । यद्यपि "त्रीणि द्रव्याणि नात्युपयुञ्जीत पिप्पली क्षारं लवणम्" ( च० वि० रसवि० ) इति, तथाऽपि इह द्रव्यान्तरसंयुक्तानां पिप्पलीनामभ्यासो न विरुद्धः, किंवा उक्तपिप्पलीरसायनव्यतिरिक्तेषु उत्सर्गापवादन्यायात् स निषेधो ज्ञेयः। रसायनगुणाश्चरकोक्तवृंहणबलवत्त्वलादयः ॥ ७ ॥

वैकालिक-पिप्पलीरसायनम्।

तिस्रस्तिस्रस्तु पूर्वाह्ने भुक्त्वाऽग्रे भोजनस्य च।
पिप्पल्यः किंशुकक्षार-भाविता घृतभर्जिताः॥ ८॥
प्रयोज्या मधुसम्मिश्रा रसायनगुणैषिणा।
जेतुं कासं क्षयं शोषं श्वासं हिक्कां गलामयम्॥ ९॥
अर्शांसि ग्रहणीदोषं पाण्डुतां विषमज्वरम्।
वैस्वर्य्यं पीनसं शोथं गुल्मं वातबलासकम्॥ १०॥

त्रैकालिक-त्रिफलारसायनम्।—

जरणान्तेऽभयामेकां प्राग्भुक्ताद्द्वे बिभीतके।
भुक्त्वा तु मधुसर्पिर्भ्यां चत्वार्य्यामलकानि च॥ ११॥
प्रयोजयेत् समामेकां त्रिफलाया रसायनम्।
जीवेद्वर्षशतं पूर्णमजरोऽव्याधिरेव च॥ १२॥

मण्डूकपर्ण्यादिरसायनचतुष्टयम्।—

मण्डूकपर्ण्याः स्वरसः प्रयोज्यः
क्षीरेण यष्टीमधुकस्य चूर्णम्।
रसो गुडूच्यास्तु समूलपुष्प्याः
कल्कः प्रयोज्यः खलु शङ्खपुष्प्याः॥ १३॥
आयुःप्रदान्यामयनाशनानि
बलाग्निवर्णस्वरवर्द्धनानि।
मेध्यानि चैतानि रसायनानि
मेध्या विशेषेण तु शङ्खपुष्पी॥ १४॥

तिस्र इत्यादि।—किंशुकः पलाशः। क्षारमिति—क्षारोदकम्। भाविता इति सप्ताहम्॥ ८—१०॥

जरणान्ते इत्यादि।—जरणान्ते इति—प्रातः। प्राग्भुक्तादिति—भोजनादौ। मधुसर्पिर्भ्यामित्यभयादिभिस्त्रिभिरेव सम्बध्यते॥ ११।१२॥

मण्डूकपर्ण्या इत्यादि।—मण्डूकपर्ण्या इत्यादिना शङ्खपुष्प्या इत्यन्तेन चतुर्द्दो योगानाह। समूलपुष्प्या इति गुडूच्याः शङ्खपुष्प्या वा विशेषणम्॥ १३।१४॥

अश्वगन्धारसायनम्।—

पीताऽश्वगन्धा पयसाऽर्द्धमासं घृतेन तैलेन सुखाम्बुना वा।
कृशस्य पुष्टिं वपुषो विधत्ते बालस्य शस्यस्य यथाऽम्बुवृष्टिः॥१५॥

धात्र्यादिरसायनम्।—

धात्रीतिलान् भृङ्गरजोविमिश्रान् ये भक्षयेयुर्मनुजाः क्रमेण।
ते कृष्णकेशा विमलेन्द्रियाश्च निर्व्याधयो वर्षशतं भवेयुः॥१६॥

वृद्धदारकरसायनम्।—

वृद्धदारकमूलानि श्लक्ष्णचूर्णानि कारयेत्।
शतावर्य्या रसेनैव सप्तरात्राणि भावयेत्॥ १७॥
अक्षमात्रन्तु तच्चूर्णं सर्पिषा सह योजयेत्।
मासमात्रोपयोगेन मतिमान् जायते नरः॥
मेधावी स्मृतिमांश्चैव वलीपलितवर्जितः॥ १८॥

हस्तिकर्णरसायनम्।—

हस्तिकर्णरजः खादेत् प्रातरुत्थाय सर्पिषा।
यथेष्टाहारचेष्टोऽपि सहस्रायुर्भवेन्नरः॥ १९॥
मेधावी बलवान् कामी स्त्रीशतानि व्रजत्यसौ।
मधुना त्वश्ववेगः स्यात् बलिष्ठः स्त्रीसहस्रगः॥ २०॥

हस्तिकर्णरसायनस्य रक्षामन्त्रः।—

मन्त्रश्चायं प्रयोक्तव्यो भिषजा चाभिमन्त्रणे॥
"ओँ नमो महाविनायकाय अमृतं रक्ष रक्ष, मम फल-
सिद्धिं देहि रुद्रवचनेन स्वाहा"॥ २१॥

---

पीतेत्यादि वाग्भटस्य।—अश्वगन्धायाश्चूर्णं पयसा पित्ते, घृतेन वातपित्ते, तैलेन वाते, उष्णोदकेन वातकफे इत्याहुः॥ १५॥

धात्रीत्यादि।—तिलाश्च कृष्णाः, प्रशस्तत्वात्। भृङ्गरज इति निर्देशात् सान्तो भृङ्गरजःशब्दोऽपि भृङ्गराजवचनोऽस्तीत्युन्नीयते। क्रमेणेति—रसायनक्रमेण॥ १६—१८॥

हस्तिकर्णेति।—हस्तिकर्णः हस्तिकर्णपलाशमूलम्॥ १९।२०॥

पाटिकशर्करधात्र्यादिरसायनम् ।—

धात्रीचूर्णस्य कंसं स्वरसपरिगतं चौद्रसर्पिः समांशं
कृष्णामानीसिताष्टप्रसृतयुतमिदं स्थापितं भस्मराशौ।
वर्षान्ते तत् समश्नन् भवति विपलितो रूपवर्णप्रभावै-
र्निर्व्याधिर्बुद्धिमेधास्मृतिबलवचनस्थैर्यसत्त्वैरुपेतः ॥ २२ ॥

श्लोकसहस्राध्यासचमतापदरसायनम् ।—

गुडूच्यपामार्गविडङ्गशङ्खिनी-
वचाभयाकुष्ठशतावरी समा।
घृतेन लीढा प्रकरोति मानवं
त्रिभिर्दिनैः श्लोकसहस्रधारिणम् ॥ २३ ॥

सारस्वत( ब्राह्मी )घृतम् ।—

समूलपत्रामादाय ब्राह्मीं प्रक्षाल्य वारिणा।
उदूखले क्षोदयित्वा रसं वस्त्रेण गालयेत् ॥ २४ ॥
रसे चतुर्गुणे तस्मिन् घृतप्रस्थं विपाचयेत्।
औषधानि तु पेष्याणि तानीमानि प्रदापयेत् ॥ २५ ॥
हरिद्रा मालती कुष्ठं त्रिवृता सहरीतकी।
एतेषां पलिकान् भागान् शेषाणि कार्षिकाणि तु ॥ २६॥

---

मन्त्रस्येत्यादि।—ओँ नम इत्यादिमन्त्रो हस्तिकर्णेत्यादियोगस्यैवाभिमन्त्रणाय ॥२१॥

धात्रीत्यादि।—कंसं चतुःषष्टिपलानि। स्वरसपरिगतमिति—आमलकफल-स्वरसस्वरसेन भावितं, भावना च एकविंशतिवारम्। चौद्रसर्पिःसमांशमिति—धात्रीचूर्णापेक्षया प्रत्येकं समभागमित्यर्थः, तेन मधुघृतयोः प्रत्येकं चतुःषष्टिपलानि। कानीति—अष्टौ पलानि। सितायाः शर्करायाः अष्टौ प्रसृतानि षोड़श पलानीत्यर्थः। स्थापितं भस्मराशाविति, प्रावृड़ारम्भे इति शेषः। वर्षान्ते इति—प्रावृट्कालस्यान्ते, शरदीत्यर्थः ॥ २२ ॥

गुडूचीत्यादि।—शङ्खिनी शङ्खपुष्पी। क्वचित् वचास्थाने “हया” इति पठ्यते, किन्तु वाग्भटे वचैव पठिता ॥ २३ ॥

पिप्पल्योऽथ विड़ङ्गानि सैन्धवं शर्करा वचा।
सर्वमेतत् समालोड्य शनैर्मृद्वग्निना पचेत् ॥ २७ ॥
एतत्प्राशितमात्रेण वाग्विशुद्धिश्च जायते।
सप्तरात्रप्रयोगेण किन्नरैः सह गीयते ॥ २८ ॥
अर्द्धमासप्रयोगेण सोमराजीवपुर्भवेत्।
मासमात्रप्रयोगेण श्रुतमात्रन्तु धारयेत् ॥ २९ ॥
हन्त्यष्टादश कुष्ठानि अर्शांसि विविधानि च।
पञ्च गुल्मान् प्रमेहांश्च कासं पञ्चविधं जयेत् ॥ ३० ॥
बन्ध्यानाञ्चैव नारीणां नराणामल्परेतसाम्।
घृतं सारस्वतं नाम बलवर्णाग्निवर्द्धनम् ॥ ३१ ॥

उषसि जलपानम्।—

कासश्वासातिसारज्वरपिड़ककटीकुष्ठकोठप्रकारान्
मूत्राघातोदरार्शःश्वयथुगलशिरःकर्णशूलाक्षिरोगान्।
ये चान्ये वातपित्तक्षतजकफकृता व्याधयः सन्ति जन्तो-
स्तांस्तानभ्यासयोगादपनयति पयः पीतमन्ते निशायाः ॥ ३२ ॥

उषसि नासया जलपानम्।—

व्यङ्गवलीपलितघ्नं पीनसवैस्वर्य्यकासशोथघ्नम्।
रजनीक्षयेऽम्बुनस्यं रसायनं दृष्टिजननञ्च ॥ ३३ ॥

---

समूलेत्यादि।—ब्राह्मीघृतं स्पष्टम् ॥ २४—३१ ॥

कासेत्यादि।—पिड़कः पिड़का। "मञ्चाः क्रोशन्ति" इतिवत् कटीशब्देन कटीगता गृध्रस्यादय उच्यन्ते। पय इति—दुग्धं, पानीयं वा; सुश्रुते प्रातः क्षीरपानस्य जलपानस्यापि दर्शितत्वात्; यथा—"शीतोदकं पयः क्षौद्रं सर्पिरित्येकशो द्विशः। त्रिशः समस्तमथवा प्राक् पीतं स्थापयेद्वयः ॥" (चि० २७ अ०) इति। प्रागिति—प्रातः। अत्र चतुर्गुणजलशृतगव्यदुग्धस्य धारोष्णस्य वा एकाद्विकर्षपलादि षोड़शपलं यावदित्यर्थः ॥ ३२ ॥

व्यङ्गेत्यादि।—अम्बुनस्यमिति—अत्र नासिकया जलपानमष्टमाषकादूर्द्ध्वं षट्पलं यावदित्याहुः; उक्तञ्चान्यत्र—"प्रसृतत्रयन्तु पातव्यं नासया नाधिकं मतम्" इति ॥३३॥

लौहस्य साध्यसाधनपरिमाणं वक्तुं प्रतिज्ञा।—

नागार्जुनो मुनीन्द्रः शशास यल्लोहशास्त्रमतिगहनम्।
तस्यार्थस्य स्मृतये वयमेतद्विशदाक्षरैर्ब्रूमः॥ ३४॥

पक्तव्यलौहस्य परिमाणनिर्देशः।—

मेने मुनिः स्वतन्त्रे यः पाकं न पलपञ्चकादर्वाक्।
सुबहुप्रयोगदोषादूर्द्ध्वञ्च पलत्रयोदशकात्॥ ३५॥

लौहपाकार्थं क्वाथ्यपरिमाणम्।—

तत्रायसि पचनीये पञ्चपलादौ त्रयोदशपलकान्ते।
लौहात् त्रिगुणा त्रिफला ग्राह्या षड्भिः पलैरधिका॥३६॥

---

यद्यपि सर्वरसायनश्रेष्ठत्वात् प्रथममेवाऽत्रतत्सारलौहाभिधानमुचितं, तथाऽपि सूचीकटाहन्यायेन रसायनान्तराण्यभिधाय बहुप्रपञ्चतया सम्प्रत्यन्नतत्सारलौहमाह,—नागार्जुन इत्यादि॥ ३४॥

तत्र मारणादिविधेरप्रशस्तत्वेन प्रथमं तदभिधानमनुचितं, तथा दुरूहप्रमेयत्वेन साध्यसाधनपरिमाणविधेरेव गरीयस्त्वम्, अतः प्रथमं साध्यसाधनपरिमाणविधिर्वक्तव्यः। तत्र कियन्मानलौहः पक्तव्यः इत्याह, मेने मुनिरित्यादि।—पलपञ्चकादर्वागित्यत्र संस्कारस्याल्पकालव्यापकतया बहुगुणत्वं न स्यादित्येव हेतुरूह्यः। ननु "पलादर्वाक् न पक्तव्यः ऊर्द्ध्वञ्चापि पलाष्टकात्" इति योगरत्नाकरैरभिहितं, तत् कथं पलपञ्चकादर्वागित्यत्राभिहितम्? इत्यत आह, स्वतन्त्रे इति—स्वतन्त्रे स्वीयशास्त्रे एव, नान्यत्र; तेनाशक्तौ न्यूनमानमपि शास्त्रान्तरोक्तं न विरोधमावहतीति भावः। अत एवाग्रे स्वयमपि पञ्चपलादिसङ्ख्यानियमभङ्गं वक्ष्यति, एतेन यथा यथा मानस्यापकर्षस्तथा तथा वीर्य्यस्यापकर्षः; यथा यथा च परिमाणोत्कर्षस्तथा तथा च वीर्य्योत्कर्षः इति भावः॥ ३५॥

लौहसंस्कारकषायसाधनार्थं क्वाथ्यपरिमाणमाह, तत्रायसीत्यादि।—पचनीयेऽयसीति—पञ्चपलादित्रयोदशपलान्तलौहे यावत्परिमाणं लौहं पुरुषस्य पक्तुं शक्यं, तावत्परिमितलौहापेक्षया मिलित्वा त्रिगुणा त्रिफला ग्राह्या। किंवा पचनीये इति पाकार्हे, तेन पाण्डिवज्रादीनां ग्रहणं, न तु फालकुद्दालादीनाम्। षड्भिः पलैरधिकेति—एतेन लौहापेक्षया त्रिगुणीकृत्य गृहीता या त्रिफला सा त्रिफला षट्पलैरधिका ग्राह्या; तेन पञ्चपले लौहे साध्ये लौहापेक्षया

मारणपुटनादिषु त्रिफलायाः परिमाणनिर्देशः।—

मारणपुटनस्थालीपाकास्त्रिफलैकभागसम्पाद्याः।
त्रिफलाभागद्वितयं ग्रहणीयं लौहपाकार्थम्॥ ३७॥

मारणादिषु त्रिफलाक्वाथार्थं जलपरिमाणनिर्देशः।—

सर्वत्रायःपुटनाद्यर्थैकांशे शरावसङ्ख्यातम्।
प्रतिपलमेव त्रिगुणं पाथः क्वाथार्थमादेयम्॥ ३८॥
सप्तपलादौ भागे पञ्चदशान्तेऽम्भसां शरावैश्च।
त्र्याद्येकादशकान्तैरधिकं तद्वारि कर्त्तव्यम्॥ ३९॥

त्रैगुण्येन त्रिफलायाः पञ्चदश पलानि ध्रुवषट्पलेन सह मिलित्वा एकविंशति पलानि भवन्ति। एवं षट्पललौहे साध्ये लौहापेक्षया त्रैगुण्येन त्रिफलाया अष्टादशपलानि ध्रुवषट्पलेन सह चतुर्विंशतिपलानि भवन्ति। एवं सप्तपलादिष्वपि बोध्यम्॥ ३६॥

ननु लौहस्य तावन्मारण-स्थालीपाक-पुटपाक-निष्पत्तिपाकाः सन्ति, ततश्च कुत्र कियत् त्रिफलापरिमाणं कर्त्तव्यम्? इत्यतो विभज्य त्रिफलापरिमाणं दर्शयति, मारणपुटनेत्यादि।—लौहमपेक्ष्य कृतत्रिगुणत्रिफलाद्रव्यं ध्रुवषट्पल-सहितमेव त्रिभागं कृत्वा तत्र भागद्वयं प्रधाननिष्पत्तिपाकार्थमवस्थाप्यम्। अपरैक-भागेन लौहमारण-स्थालीपाक-पुटनानि कर्त्तव्यानीत्यर्थः॥ ३७॥

तदिह लौहमारण-पुटन-स्थालीपाकार्थगृहीतैकभागत्रिफलाक्वाथार्थं कियज्जलं देयमित्याह, सर्वत्रेत्यादि।—सर्वत्रेति—पञ्चपलादित्रयोदशपलान्तनिखिलमाने। पुटनाद्यर्थैकांशे इति—पुटन-मारण-स्थालीपाकार्थगृहीतत्रिफलैकभागे प्रतिपलं शरावैरेव त्रिगुणं वारि देयमित्यर्थः। आदिशब्दान्मारण-स्थालीपाकौ ग्राह्यौ। तत्र पञ्चपललौहे पुटनादिकर्मत्रयार्थस्थापितत्रिफलैकभागः सप्तपलो भवति, तत्र जलस्यैकविंशतिशरावा इत्यर्थः; एवं षट्पलादिलौहेऽपि त्रिफलैकभागा अष्टौ पलादयः, तथा जलस्यापि चतुर्विंशतिशरावादय ऊह्याः। किन्तु त्रिगुणताया अधिकमपि जलं देयं, तदर्थमाह, सप्तपलादावित्यादि। अस्यार्थः,—पचनीयपञ्चपललौहादारभ्य त्रयोदशपलान्तलौहापेक्षया त्रैगुण्येन ध्रुवषट्पलाधिकतया फलत्रयस्यैकविंशतिपलरूपं चतुर्विंशतिपलरूपं मानं वा; तस्य तृतीयभागैः पुटनादिकर्मत्रयार्थस्थापितैः सप्तपलाष्टपलादिक्रमगणनया लौहत्रयो-

**तत्राष्टमो विभागः शेषः क्वाथस्य यत्नतः स्थाप्यः।**
**तेन हि मारणपुटनस्थालीपाका भविष्यन्ति ॥ ४० ॥**

---

दशपलान्तेन त्रिफलायाः पञ्चदश पलानि भवन्ति, तेषां क्वाथं प्रतिशराव-सङ्ख्यया यत् त्रिगुणं वारि देयं तत् त्रिफलासप्तपलादारभ्य त्रिफलापञ्चदशपल-पर्य्यन्तं क्रमेण जलशरावत्रयमारभ्य एकादशपर्य्यन्तजलशरावैरधिकं विधेय-मित्यन्वयः। तेन सप्तपले त्रिफलाद्रव्ये जलशरावत्रयमधिकम्, अष्टपले च शरावचतुष्टयम्, एवं-क्रमेण त्रयोदशपलान्तं ज्ञेयम्। एतद्वचनं स्पष्टीकरणार्थं पत्रिका लिख्यते—लौहपल ५, मारणादिकर्मत्रयार्थस्थापितत्रिफलैकभाग पल ७, पा पा श २१, अधिक श ३, मिलित्वा श २४। एवं षट्पललौहमारणादिकर्म-त्रयार्थस्थापितत्रिफलैकभाग पल ८, पा पा श २४, अधिक श ४, मिलित्वा श २८। सप्तपललौहमारणादिकर्मत्रयार्थस्थापितत्रिफलैकभाग पल ९, पा पा श २७, अधिक श ५, मिलित्वा श ३२। अष्टपललौहे त्रिफलैकभाग पल १०, पा पा श ३०, अधिक श ६, मिलित्वा श ३६। नवपललौहे त्रिफलैकभाग पल ११, पा पा श ३३, अधिक श ७, मिलित्वा श ४०। दशपललौहे त्रिफलैकभाग पल १२, पा पा श ३६, अधिक श ८, मिलित्वा श ४४। एकादशपललौहे त्रिफलैकभाग पल १३, पा पा श ३९, अधिक श ९, मिलित्वा श ४८। द्वादशपललौहे त्रिफलैकभाग पल १४, पा पा श ४२, अधिक श १०, मिलित्वा श ५२। त्रयोदशपललौहे त्रिफलैक-भाग पल १५, पा पा श ४५, अधिक श ११, एवं मिलित्वा श ५६। इदानीमेतज्जलं क्वाथ्यमानं कियदवशिष्टम्? इत्याह, तत्रेत्यादि।—तत्रेति—त्रिफलैकभागस्य क्वाथार्थं दत्ते जले, तेन पञ्चपललौहे त्रिफलैकभागक्वाथार्थं जलशराव २४, शेष श ३। एवं षट्पललौहे त्रिफलैकभागक्वाथार्थं जल श २८, शेषं सार्द्धशरावत्रयमित्यादि ज्ञेयम्। यत्नत इति तृणधूल्यादिनिवारणार्थं न्यूनाधिकतापरिहारार्थञ्च; उक्तं हि योग-रत्नाकरे—"क्वाथेन मन्दपाकेन वह्निमान्द्यं भवेत् ध्रुवम्। क्वाथस्याधिकपाकस्य मन्द-माप्यते फलम् ॥" इति। हि हेतौ, यतो मारणपुटनादि महत् कर्मत्रयं तेन क्वाथेन कर्त्तव्यमस्ति, तेन तत्र यत्नः कर्त्तव्य इत्यर्थः। ननु एकस्मिन् दिने मारणादि-कर्मत्रयं कर्त्तुमशक्यं, यदि पुनरेकस्मिन् दिने मारणम्, अपरैर्दिनैः पुटनादिकं क्रियते, तदा क्वाथस्य पर्य्युषितत्वेनाम्लत्वं स्यात्? सत्यम; प्रत्यहं तत्क्वाथस्य उष्णी-करणात् नाम्लता। यद्यपि तापादल्पचाम्लत्वं क्वाथस्य, तदपि सूक्ष्मत्वात् बह्वान्ताधिक-शीघ्रत्वाच्च तन्न दोषमावहति। एवमेव वृद्धा अपि व्यवहरन्ति; लौहशास्त्रेऽप्युक्तं

निष्पत्तिपाकार्थं त्रिफलायाः क्वाथविधिः।—

पाकार्थं तु त्रिफलाभागद्वितये शरावसङ्ख्यातम्।
प्रतिपलमम्बु समं स्यादधिकं द्वाभ्यां शरावाभ्याम्॥ ४१॥
तत्र चतुर्थो भागः शेषो निपुणैः प्रयत्नतो ग्राह्यः।
श्रयसः पाकार्थत्वात् स च सर्वस्मात् प्रधानतमः॥ ४२॥

लौहपाकार्थं दुग्धपरिमाणनिर्देशः।—

पाकार्थमश्मसारे पञ्चपलादौ त्रयोदशपलान्ते।
दुग्धशरावद्वितयं पादैरेकादिकैरधिकम्॥ ४३॥

—"पथ्यात्रिकटुकाश्मभिन्माचिकलेपो निहन्त्यथः सुतराम्। पर्य्युषितः परिशोषात् ग्राह्यः क्वाथः पटात् गलितः॥" इति। भव्यदत्तादयस्तु त्रिफलायास्तृतीयभाग-मपि त्रिधा समभागेन विभज्य मारणपुटनस्थालीपाकरूपकर्मत्रयार्थं क्वाथः प्रत्यहमेव कार्य्य इत्याहुः॥ ३८—४०॥

इदानीं प्रधाननिष्पत्तिपाकार्थस्थापितत्रिफलाभागद्वयस्य क्वाथविधिमाह, पाकार्थं त्वित्यादि।—पाकार्थं इति—प्रधाननिष्पत्तिपाकार्थं। त्रिफलाभागद्वितये इति—पूर्वोक्तरीत्या लौहपञ्चपलादौ त्रयोदशपलान्ते क्रमेण त्रिफलाया भागद्वयं चतुर्दश-पलषोड़शपलाष्टादशपलादयस्त्रिंशत्पलान्ता भवन्ति, तत्र त्रिफलायाः प्रतिपलम् एकशरावं जलं दातव्यं, किन्तु सर्वत्रैव शरावद्वयमधिकं प्रयत्नेन देयं, तेन त्रिफलायाश्चतुर्दशपले षोड़श वारिशरावाः क्वाथार्थं देयाः, षोड़शपले अष्टादश-जलशरावा इत्यादिक्रमेण बोद्धव्याः। स च क्वाथः कियदवशिष्टः स्थाप्यः? इत्याह, तत्रेत्यादि। प्रयत्नतो ग्राह्य इत्यत्र हेतुमाह, अयसः पाकार्थत्वात् इति—चतुर्था-वशिष्टक्वाथस्य निखिलकर्मप्रधाननिष्पत्तिपाकार्थत्वादित्यर्थः। स चेति—निष्पत्तिपाकः। सर्वस्मादिति—मारणपुटनादेः॥ ४१।४२॥

प्रधाननिष्पत्तिपाकार्थं हि लौहे यथा त्रिफलाक्वाथो दीयते तथा दुग्धमपि, तच्च दुग्धं पञ्चपलादित्रयोदशपलान्तलौहेषु कुत्र कियन्मानं देयम्? इत्याह, पाकार्थमित्यादि।—अत्र एक आदिर्येषां पादानां शरावचतुर्थांशानां ते पादद्वयत्रयादयः एकादिकाः पादाः, तैरधिकं दुग्धशरावद्वयं पुटनात्तशोधिते-ऽश्मसारे लौहचूर्णे पञ्चपलादि-त्रयोदशपलान्ते पक्तव्ये यथाक्रमं पक्तव्यमित्यर्थः, तेन पञ्चपललौहे पक्तव्ये सति सपाददुग्धशरावद्वयम्। षट्पले तु पादद्वयाधिकं दुग्ध-

पक्तव्यलौहस्य न्यूनाधिकमात्रानिर्देशः।—

**पञ्चपलादिर्मात्रा तदभावे तदनुसारतो ग्राह्यम्।**
**चतुरादिकमेकान्तं शक्तावधिकं त्रयोदशकात्॥ ४४॥**

शरावद्वयम्। सप्तपले पादत्रयाधिकं दुग्धशरावद्वयमित्यादिक्रमेण त्रयोदशपलपर्यन्तमुन्नेयमिति॥ ४३॥

अथ लौहस्य पञ्चपलादिमात्राकरणे यदि शक्तिर्नास्ति, तदा पञ्चपलादर्वागपि एकपलादिचतुःपलपर्यन्तं लौहपाकः कर्त्तव्यः, तथा यथाशक्तिसम्भवे त्रयोदशपलादुपर्य्यपि चतुर्दशपलादिलौहस्य पाकः कर्त्तव्य इत्यर्थमाह, पञ्चपलादिरित्यादि।—नन्वेवं सत्येकपलादिचतुःपलान्ते लौहे, तथा त्रयोदशपलादूर्द्धञ्च चतुर्दशपलादौ लौहे मारणादिकर्मत्रयार्थं, तथा प्रधाननिष्पत्तिपाकार्थञ्च कीदृशं क्वाथ्यत्रिफलाया मानग्रहणम्? एतत्क्वाथार्थं जलदानं वा कीदृशम्? क्वाथ्यः शेषो वा कीदृशः? प्रधाननिष्पत्तिपाकार्थं दुग्धदानं वा कीदृशम्? तदर्थमाह, तदनुसारतो ग्राह्यमिति—पञ्चपलादिलौहमारणाद्यर्थक्वाथादिमानानुसारत इत्यर्थः। चतुरादिकमेकान्तमिति—चतुस्त्रिद्व्येकम्। इदानीं तदनुसारत इत्यस्य विवरणाय पन्था लिख्यते—तत्रैकपले लौहे मारणादिकर्मत्रयार्थं ध्रुवषट्पलसहितत्रिफलायास्तृतीयभागः पलत्रयं भवति, प्रतिपलञ्च जलशरावत्रयवृद्धिरुक्ता, ततस्तदनुसारात् प्रतिपलञ्च जलशरावत्रैगुण्यात् क्वाथार्थमपि नव जलशरावा भवन्ति; तथा "सप्तपलादौ भागे" इत्यनेन त्रिफलासप्ताष्टपलादिभागेषु च क्रमात् त्रिचतुरादिजलशरावबृद्धिरुक्ता, अतस्तदनुसारात् पञ्चपलादर्वागपि क्रमेण पादद्वयं ह्रासयेत्, तेनैकपललौहस्य मारणादिकर्मत्रयार्थं गृहीतत्रिफलायास्तृतीयभागे अपरोऽपि जलशराव एको ध्रुवत्वेन देयो भवति, अतः पूर्वोक्तनवजलशरावैर्मिलित्वा दश शरावा इति सिद्धम्। तथा द्विपललौहे कर्मत्रयार्थं ध्रुवषट्पलसहितत्रिफलायास्तृतीयो भागः पलचतुष्टयो भवति, प्रतिपलञ्च जलशरावत्रैगुण्यात् द्वादश जलशरावाः, तथा "सप्तपलादौ भागे" इति वचनानुसारेणापरोऽपि पादद्वयाधिकजलशराव एको ध्रुवत्वेन देयो भवति, अतो मिलित्वा सार्द्धत्रयोदश जलशरावा भवन्ति। एवं त्रिपललौहे कर्मत्रयार्थं ध्रुवषट्पलसहितत्रिफलायास्तृतीयभागे पञ्च पलानि भवन्ति, प्रतिपलञ्च जलशरावत्रैगुण्यात् पञ्चदशजलशरावाः, "सप्तपलादौ भागे" इति वचनानुसारादपरमपि जलशरावद्वयमधिकं ध्रुवत्वेन देयं, तेन मिलित्वा सप्तदशजलशरावाः। चतुःपललौहेऽपि कर्मत्रयार्थं ध्रुवषट्पलसहितत्रिफलायास्तृतीयभागे पलषट्कं भवति, प्रतिपलञ्च जलशरावत्रैगुण्यादष्टादश जलशरावाः, "सप्तपलादौ भागे" इत्यनुसारादपरः

पक्वलौहे प्रक्षेपार्थं द्रव्यनिर्देशः।—

## त्रिफलात्रिकटुकचित्रककान्तक्रामकविडङ्गचूर्णानि।

---

मपि पादद्वयाधिकजलशरावद्वयमधिकं ध्रुवत्वेन देयं भवति, तेन मिलित्वा जलस्य सार्द्धविंशतिशरावा भवन्ति। पञ्चपलादिलौहे च यत् क्वाथ्यादिमानं तत् पूर्वमेव विवृतम्। त्रयोदशलौहपलादुपरि चतुर्दशपलादौ "त्र्याद्येकादशकान्तैः" इत्याद्यनुसारात् पूर्वपूर्वापेक्षया शरावेणैव जलस्य वृद्धिः कर्त्तव्या, क्वाथस्याष्टमांशः शेषः, एवं सर्वत्रैव। प्रधाननिष्पत्तिपाकार्थमपि एकपललौहे च त्रिफलाया भागद्वये षट्पलानि, "प्रतिपलमम्बु समं स्यात्" इत्युक्तेश्च त्रिफलायाः क्वाथार्थं जलस्य षट् शरावाः, ते च द्वाभ्यां शरावाभ्यामधिकाः कर्त्तव्याः, इति मिलित्वा अष्टौ जलशरावाः, चतुर्थभागावशेषादव स्थाप्यं शरावद्वयम्। पञ्चपललौहस्य प्रधानपाके तु सपाददुग्धशरावद्वयोक्तेश्च एकपले तु लौहे क्रमात् पादह्रासेन सपाददुग्धशराव एको भवति। प्रधानपाकार्थं घृतमपि द्विगुणं त्रिगुणं चतुर्गुणं लौहापेक्षया यथाप्रकृतिदोषभेदेन, तेन वातप्रकृतौ घृतं लौहाच्चतुर्गुणं, पित्तप्रकृतौ त्रिगुणं, श्लेष्मप्रकृतौ द्विगुणमिति; एवं द्विपले लौहे। द्विपललौहस्य प्रधानपाके त्रिफलाया भागद्वयेऽष्टौ पलानि; "प्रतिपलमम्बु समं स्यात्" इत्युक्तेश्च जलस्याष्टौ शरावाः, ते च द्वाभ्यां शरावाभ्यामधिकाः कर्त्तव्याः, इति मिलित्वा दश जलशरावाः, चतुर्थभागावशेषात् स्थाप्यं सार्द्धशरावद्वयम्। पञ्चपललौहस्य प्रधानपाके तु सपाददुग्धशरावद्वयोक्तेश्च द्विपले तु क्रमात् पादह्रासेन दुग्धञ्च सार्द्धशरावैकं भवति, घृतञ्च प्रकृत्याद्यपेक्षया पूर्ववदेव ज्ञेयम्। त्रिपललौहस्य प्रधानपाके तु त्रिफलाया दश पलानि; "प्रतिपलमम्बु समं स्यात्" इत्युक्तेश्च जलस्य दश शरावाः, ते च द्वाभ्यां शरावाभ्यामधिकाः कर्त्तव्याः, इति मिलित्वा द्वादश जलशरावाः, चतुर्थभागावशेषात् स्थाप्यं शरावत्रयं, पूर्वोक्तरीत्या दुग्धञ्च पादोनशरावद्वयं, घृतञ्च प्रकृत्याद्यपेक्षया पूर्ववदेव ज्ञेयम्। चतुःपललौहस्य प्रधानपाके तु त्रिफलाया द्वादश पलानि; "प्रतिपलमम्बु समं स्यात्" इत्युक्तेश्च जलस्य द्वादश शरावाः, ते च द्वाभ्यां शरावाभ्यामधिकाः कर्त्तव्या इति मिलित्वा चतुर्दश जलशरावाः, चतुर्थभागावशेषात् स्थाप्यन्तु सार्द्धशरावत्रयं, दुग्धञ्च शरावद्वयं, घृतञ्च पूर्ववदिति। त्रयोदशपलादुपरि चतुर्दशपलादिलौहस्य प्रधानपाके स्थापितत्रिफलाया भागद्वये पूर्ववदेव जलं देयं, स्थाप्यञ्च चतुर्थभागं, पूर्वपूर्वापेक्षया दुग्धस्य एकैकशरावपादवृद्धिः स्पष्टतरैव, घृतमपि प्रकृत्याद्यपेक्षया द्विगुणत्रिगुणादिकमेवेति तदनुसारत इति पन्थो विवृतः ॥ ४७ ॥

जातीफलस्य जातीकोषैलाकक्कोललवङ्गानाम् ॥
सितकृष्णजीरकयोरपि चूर्णान्ययसा समानि स्युः ॥ ४५ ॥
त्रिफलात्रिकटुविडङ्गा नियताऽन्ये ते यथाप्रकृति बोध्याः ।
कालायसदोषहृतेर्जातीफलादेर्लवङ्गकान्तस्य ॥ ४६ ॥
क्षेपः प्राप्त्यनुरूपः सर्वस्योनस्य चैकाद्यैः ।
कान्तक्रामकमेकं निःशेषं दोषमपहरत्ययसः ॥ ४७ ॥

लौहपाके घृतपरिमाणनिर्देशः ।—

द्विगुणत्रिगुणचतुर्गुणमाज्यं ग्राह्यं यथाप्रकृति ॥ ४८ ॥

---

पक्वा अवतारितमात्रे लौहे प्रक्षेपार्थं चूर्णमाह, त्रिफलेत्यादि ।—कान्तक्रामकं—काञ्जिकामुस्तकम् । सितकृष्णेति इयं जीरकाविशेषणम् । अयसा समानीति—यावल्लौह-चूर्णं, तावदेव मिलित्वा त्रिफलादिचूर्णानित्यर्थः । इदानीमेतेषु त्रिफलादिषु मध्ये यदवश्यं प्रक्षेप्यं तदाह, त्रिफलेत्यादि । अन्ये इति—जातीफलादयः । कालायसदोष हृतेः इति छेदः । उक्तत्रिफलादिद्रव्यकस्य नियतत्वे हेतुमाह, कालायसदोषहृतेरित्यादि । कालायसः वङ्गपाण्ड्यादिलौह एव, कालत्वञ्चास्य प्रशस्तत्वेन कीर्त्यते; यदुक्तं पातञ्जले—"कज्जलाभाः शिरोजाते रसायनविधौ मताः" इति । शिरोजा इति—पतितदानवशिरसि जाता इत्यर्थः; उक्तं हि पातञ्जले—"कफपित्तानिलप्राया देहावत् महीतले । पतिता दानवास्तत्र प्रदेशाश्चापि तादृशाः ॥ गिरिसाराः तेतो जाता उत्तमाधममध्यमाः । कफक्षेत्रं शिरः प्रोक्तं हृदयं पित्तमण्डलम् ॥ वायोर्नाभिरधः चेत्र-मिति देहविदो विदुः । वक्षोजा व्याधिनाशार्थं कट्टिजा धातुकर्मणि ॥ शिरोजा देहसिद्ध्यर्थमित्येवं त्रिविधा मताः ॥" इत्यादि । अयोभवो दोषः आयसः, स चाकर-दुष्टिवशात्, तस्य हृतिः हरणं, प्रशम इति यावत् । यद्यपि कान्तक्रामकस्यापि लौह-दोषहरणत्वेनावश्यप्रक्षेप्यत्वोपवर्णनमिहैव युज्यते, तथाऽपि तस्यैकस्यापि निःशेषदोष-हरणत्वकथनार्थं पृथगभिधानं कान्तक्रामकमित्यादिना अग्रे करिष्यति, तेन कान्त-क्रामकस्यापि नियतं प्रक्षेप्यत्वमिति ज्ञेयम् । जातीफलादीनां प्राप्त्यनुरूपं प्रक्षेप्यत्वमाह, जातीफलादेरित्यादि । प्राप्त्यनुरूप इत्यस्यार्थमाह, सर्वस्योनस्य चैकाद्यैरिति । एतदुक्तं, जातीफलादिलवङ्गान्तं यदा सर्वमेव प्राप्यते, तदा सर्वस्यैव प्रक्षेपः, यदा सर्वं न लभ्यते तदा एकद्वित्र्यादिभिर्जातीफलादिद्रव्यैरूनस्यापि जातीफलादेः प्रक्षेपः इत्यर्थः । कान्तक्रामकस्यापि अवश्यप्रक्षेप्यत्वमाह, कान्तक्रामकमेकमित्यादि ॥ ४५—४७ ॥

किन्तु यदा लौहस्य निष्पत्तिपाकः कर्त्तव्यः, तदा प्रथमतो घृतं देयं,

प्रक्षेप्यद्रव्याणामल्पत्वेऽधिकत्वे च परिमाणनिर्देशः।—

यदि भेषजभूयस्त्वं स्तोकत्वं वा तथाऽपि चूर्णानाम्।
अयसा साम्यं सङ्ख्या भूयोऽल्पत्वे न भूयोऽल्पा ॥ ४९ ॥

दोषानुसारेण निर्दिष्टप्रक्षेप्यद्रव्याणां हेयत्वोपादेयत्वनिर्देशः।—

एवं धात्वनुसारात् तत्तत् कथितौषधस्य बाधेन।

---

ततो लौहचूर्णं, ततस्त्रिफलाक्वाथः, ततो दुग्धं, तत्र एकीकृत्य लौहः पच्यते, घृतव्यतिरेकेण च सर्वत्र लौहपाकानुपलम्भ इति स्थितिः, अतः परिमाणपूर्वकं घृतमाह, द्विगुणेत्यादि।—द्विगुणत्वादिकञ्च लौहचूर्णमपेक्ष्य। यथाप्रकृतीति—कफपित्तवातप्रकृतिषु यथाक्रमं द्विगुणत्वादि बोद्धव्यमिति, द्वन्द्वप्रकृतौ च मिश्रविधिः, समप्रकृतौ च मध्यविधिः, तेन द्विगुणमित्युन्नेयम् ॥ ४८ ॥

ननु त्रिफलादि लवङ्गान्तसमग्रभेषजप्राप्तिर्यदि भवति, तदा प्रक्षेप्यचूर्णस्य भूयस्त्वं, यदि तु समग्रं न लभ्यते, तदाऽल्पीयस्त्वम्, अतः कथमयसा सह साम्यम्? इत्याह, यदीत्यादि।—भूयोऽल्पा सङ्ख्येति सम्बन्धः, भूयसी अल्पा वा सङ्ख्येत्यर्थः। भूयोऽल्पत्वे इति—प्रक्षेप्यचूर्णानां भूयस्त्वेऽल्पत्वे वेत्यर्थः, तेनायमर्थः,—अत्र भेषजानां भूयसी अल्पा वा सङ्ख्या प्रक्षेप्यचूर्णानां भूयस्त्वे अल्पत्वे वा न, प्रयोजिकेति शेषः, तेन यदा भेषजानां सामग्र्येण प्राप्तौ सङ्ख्याकृतभूयस्त्वं, तदा भागह्रासेन, यदा तु असमग्रभेषजप्राप्तौ सङ्ख्याकृतं स्तोकत्वं स्यात्, तदा भागवृद्ध्या मिलितचूर्णानां लौहचूर्णेन सार्द्धं समत्वं विधेयमिति भावः। यद्यपि नानाऽऽचार्य्यैस्तेषु लौहप्रयोगेषु प्रक्षेप्यचूर्णानां लौहसमत्वं, तदर्द्धमानत्वं, तच्चतुर्थमानत्वञ्चाभिहितं, तथाऽप्यमृतसारलौहे प्रक्षेप्यचूर्णानां मिलित्वा लौहचूर्णसमत्वमेवेति वचनादेवावसीयते ॥ ४९ ॥

इदानीमुक्तौषधमध्ये यत् यत् दोषाद्यननुरूपं, तत्तदौषधमपनेयं, यत् तदोचितं तदपि विधेयमित्याह, एवमित्यादि।—पूर्वन्तु तत्तद्वचनव्याख्यानाभिव्यक्तिनिमित्तं स्थाने स्थाने पाकक्रमो लिखितः, इदानीं तत् सर्वमेकीकृत्य एकपलादित्रयोदशपलपर्य्यन्तं पाकक्रमेण लिख्यते—तत्र एकपललौहे मारणादिकर्मार्थं मिलित्वा त्रिफला पल ३, पा पा श १०, शेष श १, पल २; तथा निष्पत्तिपाकार्थं मिलित्वा त्रिफला पल ६, पा पा श ८, शेष श २, दुग्ध श १, पल २, घृतञ्च

सर्वत्रेव विधेयस्तत्तत् कथितस्यौषधस्योहः ॥ ५० ॥

इति साध्यसाधनपरिमाणविधिः ।

---

यथाप्रकृत्येव, चूर्णमानन्तु स्पष्टमेव। अथ त्रिपललौहे मारणादिकर्मवयार्थं त्रिफला मिलित्वा पल ४, पा पा श १३, पल ४, शेष श १, पल ५, कर्ष २; निष्पत्तिपाकार्थं त्रिफला मिलित्वा पल ८, पा पा श १०, शेष श २, पल ४, दुग्ध श १, पल ४, घृतञ्च यथाप्रकृत्येव, चूर्णमानन्तु स्पष्टमेव। अथ त्रिपललौहे मारणादिकर्मवयार्थं मिलित्वा त्रिफला पल ५, पा पा श १७, शेष श २, पल १; निष्पत्तिपाकार्थं त्रिफला पल १०, पा पा श १२, शेष श ३, दुग्ध श १, पल ६, घृतं चूर्णमानञ्च स्पष्टमेव। चतुःपललौहे मारणादिकर्मवयार्थं त्रिफला पल ६, पा पा श २०, पल ४, शेष श २, पल ४, कर्ष २; प्रधानपाकार्थं त्रिफला मिलित्वा पल १२, पा पा श १४, शेष श ३, पल ४, दुग्ध श २, घृतं चूर्णमानञ्च स्पष्टमेव। पञ्चपललौहे मारणादिकर्मवयार्थं त्रिफला पल ७, पा पा श २४, शेष श ३; प्रधानपाकार्थं त्रिफला पल १४, पा पा श १६, शेष श ४, दुग्ध श २, पल २, घृतादि स्पष्टमेव। षट्पललौहे मारणादिकर्मवयार्थं त्रिफला पल ८, पा पा श २८, शेष श ३, पल ४; प्रधानपाकार्थं त्रिफला पल १६, पा पा श १८, शेष श ४, पल ४, दुग्ध श २, पल ४, घृतं चूर्णमानञ्च स्पष्टमेव। सप्तपललौहे मारणादिकर्मवयार्थं त्रिफला पल ९, पा पा श ३२, शेष श ४; प्रधानपाकार्थं त्रिफला पल १८, पा पा श २०, शेष श ५, दुग्ध श २, पल ६, घृतं चूर्णमानञ्च स्पष्टम्। अष्टपललौहे—मारणादिकर्मवयार्थं त्रिफला पल १०, पा पा श ३६, शेष श ४, पल ४; प्रधानपाकार्थं त्रिफला पल २०, पा पा श २२, शेष श ५, पल ४, दुग्ध श ३, घृतं चूर्णमानञ्च स्पष्टम्। नवपललौहे मारणादिकर्मवयार्थं त्रिफला पल ११, पा पा श ४०, शेष श ५; प्रधानपाकार्थं त्रिफला पल २२, पा पा श २४, शेष श ६, दुग्ध श ३, पल २, घृतं चूर्णमानञ्च स्पष्टम्। दशपललौहे मारणादिकर्मवयार्थं त्रिफला पल १२, पा पा श ४४, शेष श ५, पल ४; प्रधानपाकार्थं त्रिफला पल २४, पा पा श २६, शेष श ६, पल ४, दुग्ध श ३, पल ४, घृतं चूर्णमानञ्च स्पष्टम्। एकादशपललौहे मारणादिकर्मवयार्थं त्रिफला पल १३, पा पा श ४८, शेष श ६; प्रधानपाकार्थं त्रिफला पल २६, पा पा श २८, शेष श ७, दुग्ध श ३, पल ६, घृतं चूर्णमानञ्च स्पष्टम्। द्वादशपललौहे मारणादिकर्मत्रयार्थं त्रिफला पल १४, पा पा श ५२, शेष श ६, पल ४; प्रधानपाकार्थं

लौहमारणविधिं वक्तुं प्रतिज्ञा ।—

**कान्तादिलौहमारणविधानसर्वस्वमुच्यते तावत् ॥ ५१ ॥**

लौहमारणसिद्धये दैवक्रियोपदेशः ।—

**यस्य कृते तल्लौहं पक्तव्यं तस्य शुभदिवसे ।**
**समृदङ्गारकरालितनतभूभागे शिवं समभ्यर्च्य ॥ ५२ ॥**
**वैदिकविधिना वह्निं निधाय दत्त्वाऽऽहुतीस्तत्र ।**
**धर्मात् सिध्यति सर्वं श्रेयस्तद्धर्मसिद्धये किमपि ॥**
**शक्त्यनुरूपं दद्याद्द्विजाय सन्तोषिणे गुणिने ॥ ५३ ॥**

त्रिफला पल २८, पा पा श ३०, शेष श ७, पल ४, दुग्ध श ४, पल २, घृतं चूर्णमानञ्च स्पष्टम् । त्रयोदशपललौहे मारणादिकर्मत्रयार्थं त्रिफला पल १५, पा पा श ५६, शेष श ७; प्रधानपाकार्थं त्रिफला पल ३०, पा पा श ३२, शेष श ८, दुग्ध श ४, पल २, घृतं चूर्णमानञ्च स्पष्टम् । तदेवमेकादित्रयोदशपलान्तलौहस्य साध्यसाधनपरिमाणविधौ पत्रिका लिखिता; एवमुक्तरीत्या च चतुर्दशपलादिलौहेऽपि साध्यसाधनपरिमाणमुन्नेयमिति । साध्यसाधनपरिमाणविधिरिति—साध्यं लौहं, साधनं त्रिफलादि, तयोः परिमाणविधिरित्यर्थः ॥ ५० ॥

इति साध्यसाधनपरिमाणविधिः ।

इदानीं लौहमारणविधिमाह, कान्तादीत्यादि ।—आदिशब्दात् पाण्डवज्रादयोऽपि गृह्यन्ते; एषां लक्षणानि लौहप्रदीपस्य चतुर्थपरिच्छेदेऽनुसन्धेयानि । लौहमारणविधानमेव सर्वस्वं, तदधीनत्वात् पुटादिकर्मणां, किन्तु सुमृतमेव लौहं गुणकृत; यदुक्तं—"सुमृतञ्च यतो लौहममृतेन समं नृणाम् । दुर्मृतं शूलविष्टम्भौ शरीरस्थितिसंशयम् ॥ भवेदयोवधे तस्मात् यत्नं कुर्य्याद्भिषग्वरः ॥" ॥ ५१ ॥

यस्येत्यादि ।—यस्य कृते इति—यस्यातुरस्य निमित्तम् । लौहमारणाय भूमिसंस्कारपूर्विकामितिकर्त्तव्यतामाह, समृदित्यादि—शुष्कमृदा सह अङ्गारमेकीकृत्य सञ्चूर्ण्य तेन करालिते दन्तुरिते, लिप्ते इति यावत्, एतेनातितापान्मृत्तिका न दलति; नतभूभागे मध्यनिम्नभूभागे । शिवमित्युपलक्षणम्; तदुक्तं योगरत्नसमुच्चये—"अर्चयित्वा विधानेन हेरम्बं गुरुभास्करौ । लोकपालान् ग्रहांश्चैव क्षेत्रपालानथौषधम् ॥ आदित्यदेवताश्रेष्ठौ धन्वन्तरि-पतञ्जली । दद्याद्बलिञ्च सर्वेभ्यो नानाभक्ष्योपचारतः ॥" इति । वह्निमिति—वन्यदिव्यानलं, तदभावे दारुद्वयसङ्घट्टनजमग्निम्; यदाह पतञ्जलिः,—"दिव्यं दावं समादाय लौहकर्म समाचरेत् । यदि

मारणीयलौहस्य संस्कारकरणोपदेशः।—

**सन्तोष्य कर्मकारं प्रसादपूगादिदानसम्मानैः।**
**आदौ तदश्मसारं निर्मलमेकान्ततः कुर्य्यात्॥ ५४॥**

---

दिव्यानलाभावस्ततो घर्षणसम्भवम्॥ आरोप्य कर्मशालायामग्निं यत्नेन पूजयेत्॥" इति। यद्यपि दृष्टादृष्टरूपेण कारणचक्रेण कार्य्यं सिध्यति, तथाऽपि दृष्टमप्यदृष्टवशादेव उपतिष्ठते इत्यदृष्टस्यैव बलीयस्त्वं मन्यमान आह, धर्मादित्यादि। श्रेय इति—अभिमतप्रशस्तफलम्। किमपीति—धान्यहिरण्याच्छादनाद्यन्यतमं यथाशक्ति दद्यादित्यर्थः॥ ५२।५३॥

मारणार्थं लौहसंस्कारमेव प्रथममाह, सन्तोष्येत्यादि।—आदावित्यादौ अश्मसारं लौहम्। निर्मलमिति शोधनविधिना कार्य्यम्। तत्र शोधनविधिर्यथा—प्रथमं लौहं शिलादिना निर्मलीकृत्य पत्तलं कार्य्यं, तदनु चाङ्गेरीमातुलुङ्गाम्लवेतसेनाम्लयित्वा सप्तवारं प्रत्येकेन आतपे संशोष्य ततः काञ्जिकादौ दिनद्वयं त्रयं वा स्थाप्यम्; एवमम्लभावनां विधाय तदनु गोमूत्रपिष्टत्रिफलाकल्केनालिप्य आतपे शोषणीयं, ततश्च मनःशिलावल्मीकमृत्तिकाकुठारिकामूलचाङ्गेरीश्वेतदूर्वासैन्धवैश्च जलपिष्टैः क्रमेण प्रलिप्य आतपे शोषणीयम्; तदुक्तं—"पत्तलं निर्मलं कृत्वा लौहमम्लीकृतं पुनः। मूत्रपिष्टत्रिफलया वारिपिष्टमनोह्वया॥ भावितं भावयेत् तद्वत् वल्मीकस्य मृदा मनाक्। परशुच्छिन्ना चाङ्गेरी गण्डदूर्वा ससैन्धवा॥ एभिर्लिप्तं यथाप्राप्ति शोष्यं सूर्य्यातपे क्रमात्॥" गण्डदूर्वा श्वेतदूर्वेति नाममञ्जरी। तदेवं भावनां विधाय तदनु भस्त्रया वह्नौ आपयित्वा नातितप्तं कृत्वा लौहापेक्षया द्विगुणेषु गव्यदुग्धकाञ्जिकगोमूत्रत्रिफलाक्वाथेषु वारत्रयं कृत्वा निर्वापणीयम्; उक्तं हि—"क्षीरारनालगोमूत्र-त्रिफलाक्वाथवारिणि। प्रतिद्रव्यं निषेक्तव्यं त्रिधा त्रिधा विधानतः॥" इति। निषेकमात्रा च—"लौहपत्रं मनाक् तप्तं द्विगुणे तद्रसे क्षिपेत्। निषेक एष निर्दिष्टो निषेकार्थैकवादिभिः॥" इति। निषेकार्थं त्रिफलाक्वाथविधानञ्च यथा—"सिद्धार्थं त्रिफला लौहात् कर्त्तव्या द्विगुणा सदा। चतुर्गुणं फलात् तोयमर्द्धभागावशेषितम्॥" इति। दोषविशेषे च निषेकविशेषो यथा—"विशेषतः कफे तीक्ष्णैः कटुतिक्तकषायकैः। वाते तु मधुरस्निग्धैः पित्ते मधुरशीतलैः॥ सर्वाभावे तु सर्वत्र क्षीरतैलाद्यगोजलैः। निषेकः शस्यते नित्यं सर्वदोषापनायकः॥" तदेवमुक्तक्रमेण निषेकं विधाय रात्रिमेकां विश्राम्य लौहं

मारणार्थं द्रव्याणि ।—

तदनु कुठारच्छिन्नात्रिफलागिरिकर्णिकाऽस्थिसंहारैः ।
करिकर्णच्छदमूलशतावरीकेशराजाख्यैः ॥ ५५ ॥
शालिञ्चमूलकाशीमूलशावृज्जभृङ्गराजैश्च ।
लिप्ता दग्धव्यं तद्दृष्टक्रियलौहकारेण ॥ ५६ ॥

मारणादिषु योजयेत् ; उक्तं हि—"विश्राम्य रजनीमेकां ततः कर्म समारभेत्" इति ॥ ५४ ॥

इदानीं लौहमारणार्थं भेषजान्याह, तदन्वित्यादि ।—तदन्विति—शोधनानन्तरं, किन्तु लौहमारणसमीपकाले पुनरपि स्वच्छकाञ्जिकमात्रे लौहस्य निषेकं कृत्वैव लौहमारणं कर्त्तव्यम् ; उक्तं हि पातञ्जले—"क्वाथं पर्य्युषितं कृत्वा बलिं दत्त्वा चतुष्टये । अपरोऽपि च दातव्यो निषेको वधसन्निधौ ॥ अम्लस्वच्छारनाले च ततो वधमुपक्रमेत् ॥" इति । कुठारच्छिन्ना कुठारिका । गिरिकर्णी श्वेतापराजिता । अस्थिसंहारः हाड़जः । करिकर्णच्छदमूलं हस्तिकर्णपलाशमूलम् । काशी स्वनामख्याता । शावृज्जः वर्षाभूः, पुनर्नवेति यावत् । यद्यपि एतैरेव भेषजराजैर्लिप्ता सुदग्धे सति नियतमेव लौहस्य मारणं भवति, तथाऽपि वृद्धा वैद्याः लौहार्द्धभागपरिमितं लौहापेक्षया षोड़शांशेन परिमितं वा शोधितस्वर्णमाक्षिकचूर्णं त्रिफलाक्वाथेनालोड्य तेन लौहं लिप्ता तदनु लौहचतुर्थांशाम्लपिष्टमनःशिलया च लौहं लिप्ता तदनन्तरम् उक्तकुठारच्छिन्नादिभेषजैर्लौहापेक्षया षोड़शांशैरालिप्य ततोऽस्य ध्मापनमुपदिशन्ति ; उक्तार्थे पतञ्जलिवाक्यं यथा—"एतदर्द्धेन विख्यातः प्रलेपो माक्षिकेण च । माक्षिकाऽर्द्धगुणा प्रोक्ता कुनटी चाम्लपेषिता ॥ मारकद्रव्यसंयुक्तं षोड़शांशेन धीमता ॥" केचिन्माक्षिकस्यापि षोड़शांशमित्याहुः ; यथा—"त्रिफलावाड़िवीह्लिङ्गु-भवपादरजोऽन्वितम्" ; तत्र वाड़िवीह्लिङ्गुभवं स्वर्णमाक्षिकं, पादश्च षोड़शांश इति व्याख्यानयन्ति । तथा ह्यन्यत्रापि—"लौहं लौहार्द्धमानेन षोड़शांशेन वा पुनः । त्रिफलाक्वाथपिष्टेन माक्षिकेण प्रलेपयेत् ॥ ततो लौहात् चतुर्थांश-कुनट्या चाम्लपिष्टया ॥" इति । कुनटी मनःशिला । अत्र लौहमारणाङ्गीभूतस्वर्णमाक्षिकस्य शोधनं लक्षणञ्च लिख्यते,—"भङ्गे सुवर्णसङ्काशो मनाक् कृष्णच्छविर्बहिः । ब्रह्मवर्णं इति ख्यातो माक्षिकोऽत्र प्रशस्यते ॥" एवंविधमाक्षिकचूर्णं क्षुद्रमारिषशालिञ्चक्वाथमध्ये पत्तलिकायां स्थापयेत्, पत्तलिकास्थापितक्वाथे तत् स्वर्णमाक्षिकचूर्णं वस्त्रे पोट्टलिकां बद्ध्वा निक्षिप्य दोलापाकक्रमेण पचेत् । पत्तलिका-

मारणार्थं वह्निप्रज्वालनविधिः।—

चिरजलभावितनिर्मलशालाङ्गारेण परित आच्छाद्य।
कुशलाध्मापितभस्त्राऽनवरतमुक्तेन पवनेन॥ ५७॥
वह्नेर्वाह्यज्वाला बोद्धव्या जातु नैव कुञ्चिकया।
मृल्लवणसलिलभाजा किन्तु स्वच्छाम्बुसंप्लुतया॥ ५८॥
द्रव्यान्तरसंयोगात् स्वां शक्तिं भेषजानि मुञ्चन्ति।
मलधूलीमत् सर्वं सर्वत्र विवर्जयेत् तस्मात्॥ ५९॥

मारणार्थं वह्निमध्ये स्थापनविधिः।—

सन्दंशेन गृहीत्वाऽन्तःप्रज्वालिताग्निमध्यमुपनीय।
गलति यथायथमग्नौ तथैव मृदु वर्द्धयेन्निपुणः॥ ६०॥

द्रवीभूतलौहस्य त्रिफलाक्काथे निक्षेपविधिः।—

तलनिहितोर्द्धमुखाङ्कुशलग्नं त्रिफलाजले विनिक्षिप्य।
निर्वापयेदशेषं शेषं त्रिफलाऽम्बु रक्षेच्च॥ ६१॥

---

ऽभ्यन्तरे क्काथमध्ये पीठरिकायां यत् तोयवद्गलति तत् ग्राह्यम्; तदुक्तं—"स्वर्ण-माक्षिकचूर्णञ्च वस्त्रबद्धं विपाचयेत्। कालमारिषशालिञ्च-क्काथे दोलाविधानतः॥ तदधःपतितं ग्राह्यमेवं शुध्यति माक्षिकम्॥" इति॥ ५५।५६॥

इदानीं लौहपाकाय यादृशोऽङ्गारो ग्राह्यस्तमाह, चिरेत्यादि।—चिरं पञ्च-मासादिकम्। भावितं स्थापितम्। निर्मलं तृणधूल्यादिविरहात्। कुशलोऽत्र स्थिरोऽनलस्य। कुञ्चिका वंशशाखा, "कञ्ची" इति ख्यातम्। विपक्षे दोषमाह, द्रव्यान्तरेत्यादि—मृदादिसंसर्गे सति यस्माल्लौहसंसृष्टभेषजानि हीनशक्तिकानि भवन्ति, तस्मात् मृदादिकर्बुरितसलिलयुक्तकुञ्चिकया वह्निज्वाला न बोद्धव्या, किन्तु निर्मलजलयुक्तकुञ्चिकयैवेत्यर्थः॥ ५७—५९॥

इदानीं तल्लौहं येन प्रकारेण वह्निमध्ये प्रवेशनीयं तदाह, सन्दंशेनेत्यादि।—सन्दंशः "सँड़ाशी" इति ख्यातम्। मृदु वर्द्धयेदिति—क्रमशस्तल्लौहखण्डं वह्निमध्ये प्रवेशयेदित्यर्थः॥ ६०॥

गलितञ्च लौहं यथा गृहीत्वा त्रिफलाक्काथे देयं तदाह, तलेत्यादि।—पाकेन यथा यथा गलति, तथा तथा तलनिहितोर्द्धमुखाङ्कुशेन जतुवल्लग्नं वह्नितः समुद्धृत्य सन्दंशेन पीडयित्वा यथोक्तत्रिफलाजले शनैःशनैर्निर्वापयेत्। शेषं

कृतेऽपि मारणे अमृतलौहस्य पुनः पाकविधिः।—

यल्लौहं न मृतं तत् पुनरपि पक्तव्यमुक्तमार्गेण।
यन्न मृतं तथाऽपि तत् त्यक्तव्यमलौहमेव हि तत्॥ ६२॥

मारितलौहस्य चूर्णीकरणार्थं भानुपाकविधिः।—

तदनु घनलौहपात्रे कालायसमुद्गरेण सञ्चूर्ण्य।
दत्त्वा बहुशः सलिलं प्रक्षाल्याङ्गारमुद्धृत्य॥ ६३॥
तदथः केवलमग्नौ शुष्कीकृत्याथवाऽऽतपे पश्चात्।
लौहशिलायां पिंष्यादसितेऽश्मनि वा तदप्राप्तौ॥ ६४॥

[ इति लौहमारणविधिः ]

---

त्रिफलाम्बु रचेचेति—पुटपाकार्थं स्थालीपाकार्थञ्च स्थापितत्रिफलाक्वाथभागद्वयमेव शेषशब्दवाच्यम्; उक्तार्थे पतञ्जलिः यथा—"हस्तिकर्णसमीरेण अङ्गाराध्मापितं भ्रमम्। उत्तोलितं त्रिधा लीनं स्फुलिङ्गैः परिवर्जितम्॥ ततोऽङ्कुशमुखे लग्नं सन्दंशपीड़ितं यथा। उद्धृत्य त्रिफलातोये प्रचेतव्यं शनैः शनैः॥" इति॥ ६१॥

त्रिचतुर्वारमङ्गारध्मयात् तावत् सर्वमेव लौहं म्रियते, तथाऽपि यन्न मृतं तत् किं कर्त्तव्यम्? तदाह, यल्लौहमित्यादि।—उक्तमार्गेणेति—उक्तभेषजलेपादिक्रिया-वर्त्मना। तथाऽपि यन्न मृतं तत् त्याज्यमेवेत्याह, यन्न मृतमित्यादि। तथाऽपीति—सप्तभिरङ्गारैः सप्तवारपाकेनापीत्यर्थः; उक्तं हि—"सप्त वारान् तथा लौहं पूर्ववत् पूर्वभेषजैः। ध्मात्वा ध्मात्वा समुत्थाप्य निक्षिपेत् त्रिफलाऽम्भसि॥ एवं नामात्र यो लौहो न मृतस्त्याज्य एव सः॥" इति। अमरणे हेतुमाह, अलौह-मित्यादि। उक्तौषधलिप्तानेकवारध्मातमरणव्याप्तं हि सुलौहत्वम्। तन्मारणं निवर्त्तमानं सुव्याप्तं लौहस्याश्लोदितसुलौहत्वमादायैव निवर्त्तते इति भावः। मृत-लौहलक्षणञ्च यथा—"लौहगूथसमाकार-स्पर्शग्राह्यः प्रतीयते। यदा लौहस्तदा ज्ञेयः सुमृतो वैद्यसत्तमैः॥" इति॥ ६२॥

इदानीं मारणानन्तरं प्रक्षालनञ्च तथा त्रिफलाक्वाथावसिक्तस्य सूर्य्यातपे शोषण-रूपो भानुपाकश्च यथा कर्त्तव्यस्तदाह, तदन्वित्यादि।—घनं दृढ़ं, छिद्राद्यभावयुक्तम्। लौहपात्रे इति—लौहोदूखलादावित्यर्थः। कालायसमुद्गरं तीक्ष्णलौहघटित-मुद्गरम्। एतदुभयमप्युपलक्षणं, तेन दृढ़दृषदादिकञ्च बोध्यम्। सञ्चूर्ण्येत्यत्र मुद्गरनिमर्मिति शेषः। सलिलमित्युपलक्षणं, तेन त्रिफलाक्वाथोऽपि बोध्यः।

स्थालीपाकविधिः।—

अथ कृत्वाऽयोभाण्डे दत्त्वा त्रिफलाम्बु शेषमन्यद्वा।
प्रथमं स्थालीपाकं दद्यादा-तत्क्षयात् तदनु ॥ ६५ ॥
गजकर्णपत्रमूलशतावरीभृङ्गकेशराजरसैः।
प्राग्वत् स्थालीपाकं कुर्य्यात् प्रत्येकमेकं वा ॥ ६६ ॥

इति स्थालीपाकविधिः।

---

शुष्कीकृत्येति—त्रिफलाक्वाथेनैव सप्तधा सूर्य्यातपे संशोष्येत्यर्थः। उक्तार्थे पतञ्जलिः यथा—"अयोघनेन तत् पिष्टं शिलया दृढयाऽथवा। अयोमलसमं पिण्डं कृत्वा सुक्ष्मसमं पुनः॥ त्रिफलावारिणा धौतं विशुष्कं चूर्णितं पुनः॥" इत्यादि। योगरत्नाकरेऽप्युक्तं—"मृतन्तोदूखले लौहे मुषलेनापि ताड़्येत्। सच्चूर्ण्य त्रिफलाऽम्भोभिः सप्तधा सूर्य्यपाचितम्॥ शुष्कः पुटविधौ योग्यो विज्ञेयो भिषजां वरैः॥" इत्यादि। अत्र लौहप्रक्षालनार्थं भानुपाकार्थञ्च त्रिफलाक्वाथविधिर्यथा उक्तं योगरत्नाकरे—"शुद्ध्यर्थं त्रिफला लौहात् कर्त्तव्या द्विगुणा सदा। चतुर्गुणं फलात् तोयमष्टभागावशेषितम्॥ एष एव विधिर्नित्यं क्षालनेऽपि च शस्यते॥" इति। तथा "भानुपाकार्थमिच्छन्ति त्रिफलामयसा समाम्। सलिलं द्विगुणं तत्र चतुर्भागावशेषितम्॥" इति ॥ ६३।६४ ॥

इति मारणविधिः।

स्थालीपाकमाह, अथेत्यादि।—अयोभाण्डे लौहपात्रिकायाम्। शेषं त्रिफलाम्बु त्रिफलैकभागकृतक्वाथस्य ध्मातलौहनिर्वापणावशिष्टम्। अथ यदि कथमपि तद्विनष्टं स्यात् तदा का गतिः? इत्याह, अन्यद्वेति—तत्प्रक्रययैव क्वाथान्तरं कार्य्यमिति भावः। प्रथमं स्थालीपाकं दद्यादिति—प्रथमं स्थाल्यां लौहचूर्णं त्रिफलाक्वाथेनालोड्य वह्निना पाकं विधाय त्रिफलाक्वाथक्षयः कर्त्तव्यः इत्येष स्थालीपाकविधानक्रमः। आ-तत्क्षयादिति—त्रिफलाक्वाथशोषपर्य्यन्तम्। तदन्विति—प्रथमं त्रिफलाक्वाथेन स्थालीपाकं विधाय अनन्तरं हस्तिकर्णपलाशादीनां व्यस्तानां समस्तानां वा स्वरसैरपि पूर्ववत् स्थालीपाकः कार्य्य इत्याह, गजकर्णेत्यादि। गजकर्णपत्रोऽत्र हस्तिकर्णपलाशः। राजशब्दो भृङ्गकेशाभ्यां सम्बध्यते। प्राग्वदित्यनेनैव यावती त्रिफलाक्वाथस्य स्थालीपाके मात्रा द्रवक्षयान्तश्च पाकस्तथा गजकर्णादिस्वरसादीनामपीत्यर्थः; किन्तु यत्र व्याध्यनुरूपस्थालीपाकीयद्रव्याणामन्तरे यदि स्वरसप्राप्तिर्नास्ति तदा तत्र स्थालीपाकार्थं त्रिफलाक्वाथानुसारेणैव क्वाथ्यमलादिकं कृत्वा क्वाथं विधाय स्थालीपाको विधेय इत्यधिगन्तव्यम् ॥ ६५।६६ ॥

इति स्थालीपाकविधिः।

पुटपाकविधिः ।—

हस्तप्रमाणवदनं श्वभ्रं हस्तैकखातसममध्यम् ।
कृत्वा कटाहसदृशं तत्र करीषं तुषञ्च काष्ठञ्च ॥ ६७ ॥
अन्तर्घनतरमर्द्धशुषिरं परिपूर्य्य दहनमायोज्यम् ।
पश्चादयसश्चूर्णं श्लक्ष्णं पङ्कोपमं कुर्य्यात् ॥ ६८ ॥
त्रिफलाऽम्बुभृङ्गकेशरशतावरीकन्दमाणसहजरसैः ।
भल्लातककरिकर्णच्छदमूलपुनर्नवास्वरसैः ॥ ६९ ॥
क्षिप्त्वाऽथ लोहपात्रे मार्दे वा लौहमार्दपात्राभ्याम् ।
तुल्याभ्यां पृष्ठेनाच्छाद्यान्ते रन्ध्रमालिप्य ॥ ७० ॥
तत्पुटपात्रं तत्र श्वभ्रज्वलने निधाय भूयोभिः ।
काष्ठकरीषतुषैस्तत् सञ्छाद्याहर्निशं दहेत् प्राज्ञः ॥ ७१ ॥

---

पुटपाकविधिमाह, हस्तप्रमाणेत्यादि ।—श्वभ्रं खातम् । हस्तैकखातसममध्यमिति—हस्तैकप्रमाणं खातं खननं यस्य, सर्वतो हस्तैकमात्रपरिमाणमित्यर्थः ; समोऽनुन्नतो मध्योऽभ्यन्तरभूभागो यस्य तत् सममध्यम् । कटाहसदृशमित्यनेनैव वर्त्तुलाकारत्वमुक्तं, तेन चतुष्कोणं न कार्य्यमित्यर्थः । तत्र श्वभ्रे । अन्तरिति—मध्ये । घनतरं बहुतरं, निविड़तरमिति यावत् । अर्द्धशुषिरं परिपूर्य्येति—करीषादिभिः श्वभ्रस्यार्द्धभागं परिपूर्य्येत्यर्थः । कैर्द्रवैः पङ्कोपमं कुर्य्यात् ? इत्याह, त्रिफलेत्यादि । त्रिफलाम्बु त्रिफलाक्वाथः । भृङ्गकेशरौ भृङ्गराजकेशराजौ । कन्दः शूरणः । एषां भृङ्गादीनां सहजरसः स्वरसः । भल्लातकस्य पुनः क्वाथ एव, स च भल्लातकसहत्वे सत्येव बोध्यः । अयश्चूर्णं त्रिफलाक्वाथादिभिः पङ्कोपमं कृत्वा किं कर्त्तव्यम् ? तदाह, क्षिप्त्वेत्यादि । मार्दे इति—कृष्णमृत्तिकाभवपात्रे, एतच्च मृत्पात्रं सर्वथा लौहपात्राभावे हि बोध्यम् ; किन्तु दक्षिणराढ़ायां सममसृणे मृत्सम्पुटे लौहं कृत्वा वस्त्रमृत्तिकाभिरालिप्य पुटपाको दीयते इति व्यवहारः ; अयञ्च पक्षः साधीयान् भवति, यतो लौहसम्पुटपक्षेऽधमलौहघटितसम्पुटपात्रस्यापि पुटपाकौषधसंसर्ग-जीर्णतया तद्दोषरजसोऽनुप्रवेशो दुर्निवार इति । पृष्ठेनाच्छाद्येति—यस्य पात्राभ्यन्तरे पङ्कोपमं लौहचूर्णमस्ति तन्मुखमपरतत्तुल्यपात्रस्य कटीभागेन पिधायेत्यर्थः । अन्ते रन्ध्रमालिप्येति, पिष्टमृद्वस्त्रादिभिरिति शेषः । भूयोभिरिति—प्रचुरैः । इदञ्च

एवं नवभिरमीभिर्भेषजराजैः पचेत्तु पुटपाकम्।
प्रत्येकमेकमेभिर्मिलितैर्वा त्रिचतुरान् वारान्॥ ७२॥

काष्ठादिकं पुटपाकोपदर्शनार्थम्, अतो न पौनरुक्त्यम्। भूयोभिरित्यनेन गर्त्तपूरणं कृत्वा तदुपर्य्यपि करीषसमुच्चयः कार्य्य इति दर्शयति। अहर्निशमित्यनेन दिवसे रात्रौ वा पुटो देय इति दर्शयति। अन्ये तु पुटपाकस्याष्टप्रहरव्यापनार्थमहर्निशमिति वचनमाहुः, तन्न; पुटपाकस्य चतुःप्रहरसम्पाद्यत्वात्; उक्तं हि पतञ्जलौ —"चतुर्भिः प्रहरैर्देयः पुटपाकश्चणो बुधैः"। तथा योगरत्नाकरसमुच्चयेऽपि— "चतुर्भिः प्रहरैरेव पुटपाकः प्रकीर्त्तितः। पुटपाके चणादूर्द्ध्वं स्थितो भवति भस्मसात्॥ अधस्तादपकृष्टस्तु मन्दो भवति वीर्य्यतः। कुण्डस्थो भस्मनाऽऽच्छन्न आकृष्टव्यः सुशीतलः॥ सनाकृष्टस्य तप्तस्य गुणहानिः प्रजायते॥" इति। तत्र सङ्क्षेपात् पुटपाकपरिपाटी लिख्यते। त्रिफलाक्वाथादिभिः पङ्कोपमं लौहं विधाय सम्पुटाकृतिलौहपात्रस्थं कृत्वा वस्त्रादिभिरवगुण्ठ्य पिट्टितवस्त्रमृत्तिकया पात्रयोरवकाशमालिप्य आयामपरिणाहाभ्यां हस्तमात्रपरिमितसमतलभूगर्त्ते करीषकाष्ठतुषैः शुष्कगोमयमात्रेण वा खातस्यार्द्धं प्रपूर्य्य तत्र तल्लौहसम्पुटं पिधाय वह्निं नियोज्य तदुपरि अपरकरीषादिभिः शुष्कगोमयमात्रेण वा श्वभ्रं परिपूरयेत्; एवं चतुर्भिः प्रहरैरेकः पुटो देयः, शीतीभूतमाकृष्टव्यम्। इदानीमुक्तैस्त्रिफलादिभिः पुनर्नवान्तरवान्तैः प्रत्येकं मिलित्वा वा पुटो देयः, इत्याह, एवमित्यादि। नवभिरिति—इह त्रिफलास्तु एकत्वेनैव गणनीयम्; तेन न सङ्ख्यातिरेकः। योगरत्नाकरे तु पुटनद्रव्याणां गण एवोक्तः; तद्यथा,—"त्रिफला-गिरिकर्णिका-कान्तकामक-कुठारच्छिन्ना-करिकर्णपलाशमूल-शतमूली-मार्कव-भृङ्गराज-काशीश-शालिञ्च-तालमूली वर्षाभू-माण-शूरणारुष्कराश्वि-संहार-दाडिमी-खण्डकर्णगोजिह्वा गिरिसन्तानकः प्रागुक्ताः"। त्रिफलेत्यनेन त्रिफलादिगणमिच्छन्ति केचित्; तद्यथा—"त्रिफलात्रिवृतादन्ती-विकटुतालमूलिकाः। हङ्दारश्च वशीर-वृषपत्रकत्रिवकाः॥ शृङ्गवेरविडङ्गौ च भृङ्गभल्लातकौषधम्। दाडिमस्य च पत्राणि शतपुष्पी पुनर्नवा॥ कुठारकामकौ कन्दलन्ती भेकस्य पर्णिका। हस्तिकर्णपलाशश्च कुलिशः केशराजकः॥ माणः खण्डितकर्णश्च गोजिह्वा लोहमारकः। गिरिसन्तानकः प्रोक्तस्त्रिफलादिरयं गणः॥ सामान्यपुटपाकार्थमेतानिच्छन्ति सूरयः॥" इति। दोषभेदे तु गणविशेषा विस्तारभयान्न लिखिताः, ते च लौहप्रदीपे प्रथमपरिच्छेदस्यान्तेऽनुसन्धेया इति। किञ्च, यस्मिन् यस्मिन् व्याधौ ये ये योगा अभिहितास्तस्मिन् तस्मिन् व्याधौ तत्तत्क्वाथैरपि पुटो देयः; उक्तं हि—"ये ये

प्रतिपुटं पेषणस्य कर्त्तव्यता तदर्थं पात्रनिर्देशश्च ।—

प्रतिपुटनं तत् पिंष्यात् स्थालीपाकं विधाय तथैव तत् ।
तादृशि दृषदि न पिंष्यात् विगलद्रजसा तु युज्यते तत्र ॥ ७३ ॥

यत्र गदे योगास्तेषां तेषाञ्च वारिणा । विधिना क्वथितेनैव पुटो रोगेषु सम्मतः ॥” इति । विधिनेति—साध्यसाधनपरिमाणोक्तपुटपाकार्थत्रिफलाक्वाथविधिना ; अथवा यत्र त्रिफलाव्यतिरिक्तक्वाथ्यद्रव्यान्तराण्युक्तमानानि सन्ति, देयजल-स्थाप्यशेषजल-मानञ्च नोपात्तं, तत्र योगरत्नाकरोक्तव्यवस्थैवानुसर्त्तव्या ; यदुक्तं क्वाथविधौ तत्रैव—“अन्यानि यानि वस्तूनि योक्तव्यानि पुटादिषु । तानि लोहसमान्येव जलं प्रागेव कीर्त्तितम् ॥ लभ्यते स्वरसो येषां तेषां क्वाथस्तु नेष्यते । त्रिफलाव्यतिरिक्तेन मतमेतत् पतञ्जलेः ॥” इति । जलं प्रागेव कीर्त्तितमिति—मृदौ क्वाथार्थं चतुर्गुणं जलं देयं, स्थाप्यश्चतुर्थो भागः । मध्यद्रव्येऽष्टगुणं जलं देयं, स्थाप्यश्चाष्टमो भागः । कठोरद्रव्ये षोडशगुणं जलं देयं, स्थाप्यश्च षोडशो भाग इति । ननु पुटेन किमत्र क्रियते ? उच्यते, दोषनाशगुणोदय इति ; यदुक्तं—“पुटाद्दोषविनाशः स्यात् पुटादेव गुणोदयः । म्रियते हि पुटाल्लोहः पुटांस्तस्मात् समाचरेत् ॥ यथा यथा प्रदीयन्ते पुटाः सुबहवो यदि । तथा तथाऽभिवर्द्धन्ते गुणा एक सहस्रशः ॥ तावल्लोहं पुटेद्धीमान् यावच्चूर्णीकृतं जले । निस्तरङ्गे लघुत्वेन समुत्तरति हंसवत् ॥ तावच्च चूर्णयेदेनं यावत् कज्जलसन्निभम् । करोति निहितो नेत्रे नैव पीड़ां मनागपि ॥” इति । पुटानां कर्मभेदेन सङ्ख्याभेदो यथा—“शतादिस्तु सहस्रान्तः पुटो देयो रसायने । दशादिशतपर्य्यन्तो गदे पुटविधिर्मतः ॥ वाजिकर्माणि विज्ञेयः पुटः पञ्चशताधिकः । दशोत्तरशतान्तस्तु पुटः पुटविचक्षणैः ॥” इति । यदा तु चुल्लिकाभावे लोहे पुटा देयास्तदा एतावत् भूयःसङ्ख्यका अपि पुटा दीयन्ते । यदा तु प्रतिपुटान्ते पेषणं वस्त्रपूतत्वञ्च तदा समाष्टावेव विशिष्टफलदा भवन्तीत्युपदिशन्ति वृद्धाः ॥ ६७—७२ ॥

प्रतिपुटनं पेषणमाह, प्रतीति ।—एतेन पेषण-वक्ष्यमाणवस्त्रपूतत्वाभ्यां भस्मीभूत-पुटार्थदत्तभेषजनिरासोऽपरदेयभेषजद्रव्यसंस्काराधानञ्चेति भावः । कोमलशिलायां पेषणं न कार्य्यमित्याह, तादृशीत्यादि । एतेन निर्मलदृषदि पेषणं कार्य्यमिति भावः ॥ ७३ ॥

सम्यक् भस्मीभूतस्य सामान्यलक्षणम्।—

तदयश्चूर्णं पिष्टं घृष्टं घनसूक्ष्मवाससि श्लक्ष्णम्।
यदि रजसा सदृशं स्यात् केतक्यास्तर्हि तद्भद्रम्॥ ७४॥

उक्तपुटनद्रव्येषु हेयोपादेयतानिर्देशः।—

पुटने स्थालीपाकेऽधिकृतपुरुषे स्वभावसगधिगमात्।
कथितमपि हेयमौषधमुचितमुपादेयमन्यदपि॥ ७५॥

इति पुटपाकविधिः।

पाकविधिं वक्तुं प्रतिज्ञा।—

अभ्यस्तकर्मविधिभिर्बालकुशाग्रीयबुद्धिभिरलक्ष्यम्।
लोहस्य पाकमधुना नागार्जुनशिष्टमभिदध्मः॥ ७६॥

पाकार्थं पात्रेन्धनादिनिर्देशः।—

लोहारकूटताम्रकटाहे दृढमृन्मये प्रणम्य शिवम्।
तदयः पचेदचपलः काष्ठेन्धनेन वह्निना मृदुना॥ ७७॥

---

पिष्टा च वस्त्रपूतं कार्य्यमित्याह, तदय इत्यादि।—घनं निविड़ं, सूक्ष्मञ्च यद्वासः, तत्र घृष्टं पूतमित्यर्थः॥ ७४॥

इदानीमातुरस्य प्रकृत्यादिकं निरूप्य उक्तभेषजेषु यदनुचितं तस्यापकर्षः कार्य्यः, अनुक्तस्याप्युचितस्यावापः कार्य्य इत्याह, पुटने इत्यादि।—अधिकृतेति—अधिकृतपुरुषश्चिकित्स्यत्वेन प्रकृत इत्यर्थः॥ ७५॥

इति पुटपाकविधिः।

इदानीं लौहस्य प्रधाननिष्पत्तिपाकमाह, अभ्यस्तेत्यादि।—अभ्यस्तकर्मविधिभिः दृष्ट-कृतलौहपाकैः। बालकुशाग्रमतीव तीक्ष्णं सूक्ष्मञ्च, तेन बालकुशाग्रमिव तीक्ष्णा सूक्ष्मा च बुद्धिर्येषां, दुरूहत्वार्थस्य तीक्ष्णसूक्ष्मबुद्धिग्राह्यत्वात् तैरप्यलक्ष्यं ज्ञातुमशक्यम्। नागार्जुनशिष्टमिति—नागार्जुनेन कथितम्। लौहपाकारम्भेऽपि मङ्गलं कार्य्यम्; उक्तं हि पातञ्जले—"मातृकां पूजयेत् सर्वां नायिकाञ्च विनायकम्। अन्यत् स्वस्त्ययनं कुर्य्यात् सदा हितमनाः सुधीः॥ पच एव भवेदेव त्रिवर्गफलदो नृणाम्॥" इति॥ ७६॥

लौहपाकार्थं पात्रमाह, लोहेत्यादि।—आरकूटं पित्तलम्। काष्ठेन्धनेनेति काष्ठपदं तृणतुषादिव्युदासार्थम्। वह्निनेति—अधोवह्निना; उक्तं हि—"मृदुनाऽधोऽड्डतामेन पक्तव्यमवधानतः" इति॥ ७७॥

पाकविधिः ।—

निक्षिप्य त्रिफलाजलमुदितं यत् तद्घृतञ्च दुग्धञ्च ।
सञ्चाल्य लौहमय्या दर्व्या लग्नं समुत्पाट्य ॥ ७८ ॥

वातादिदोषभेदेन मृद्वादित्रिविधपाकनिर्देशः ।—

मृदुमध्यमखरभावैः पाकस्त्रिविधोऽत्र वक्ष्यते पुंसाम् ।
पित्तसमीरणश्लेष्मप्रकृतीनां मध्यमस्तु समः ॥ ७९ ॥

त्रिविधपाकानां लक्षणम् ।—

अभ्यक्तदर्वि लौहं सुखदुःखस्खलनयोगि मृदु मध्यम् ।
उज्झितदर्वं खरं परिभाषन्ते केचिदाचार्य्याः ॥ ८० ॥

त्रिविधपाकानां लक्षणान्तरम् ।—

अन्ये विहीनदर्वीप्रलेपमाखूत्कराकृति ब्रुवते ।

---

स्थापितत्रिफलाभागद्वयकृतक्वाथादिप्रक्षेपार्थमाह, निक्षिप्येत्यादि ।—उदितमिति—उक्तपरिमाणम् । घृतादिदानक्रमश्च भोजराजोक्तः ; यथा—"घृतेन लौहमालोड्य क्षीरेण समनन्तरम् । ततः क्वाथेन संयोज्य मन्देऽग्नौ शनकैः पचेत् ॥ ततः सञ्चालयेल्लौहं लौहदर्व्याऽतिदीर्घया ॥" इति ॥ ७८ ॥

इदानीं पित्तवातकफप्रकृतिषु क्रमात् पाकत्रयमाह, मृद्वित्यादि ।—मध्यमपाको वातप्रकृतौ हित एव, किन्तु प्रकृत्यन्तरेऽपि योज्य इत्याह, मध्यमस्तु सम इति—सर्वप्रकृतिसेव्यत्वेन सर्वास्वेव प्रकृतिषु उचित इत्यर्थः ; अमोघोऽप्याह—"दर्वीमाश्लिष्यते यत्तु खैरं स्खलति वा न वा । मृदुपाकं विजानीयात् पित्ते तु विहितं सदा ॥ सितापुञ्जोपमं यत्तु मूषिकोत्करसन्निभम् । तदयः खरपाकं स्यात् श्लेष्मण्येव प्रकीर्त्तितम् ॥ एकैकगुणयोगत्वान्न तमिच्छन्ति तद्विदः । सर्वप्रकृतिसेव्यत्वान्मध्यमं बहुपूजितम् ॥" इति ॥ ७९ ॥

एकीयमते मृदुमध्यखरपाकाणां क्रमाल्लक्षणमाह, अभ्यक्तेत्यादि ।—अभ्यक्ता कमपङ्कवत् संश्लिष्टा दर्वी येन ईदृशं लौहं मृद्विति—मृदुपाकं ब्रुवते । "अत्यक्तदर्वि" इत्यपि पाठः । तथा सुखदुःखस्खलनयोगीति—कदाचित् दर्वीं त्यजति, कदाचित् न त्यजति इत्यर्थः, एतादृशं यल्लौहं तन्मध्यमिति—मध्यमपाकं ब्रुवते । तथा उज्झितदर्वीति—यल्लौहं कदाचिदपि दर्वीं न भजति, तत् खरपाकं ब्रुवते इति ॥ ८० ॥

मृदु मध्यमर्द्धचूर्णं सिकतापुञ्जोपमन्तु खरम् ॥ ८१ ॥

पाकवैविध्यस्य फलनिर्देशः।—

त्रिविधोऽपि पाक ईदृक् सर्वेषां गुणकृदेव न तु विफलः।
प्रकृतिविशेषे सूक्ष्मौ गुणदोषौ जनयतीत्यल्पम् ॥ ८२ ॥

पाकानन्तरं कर्त्तव्यनिर्देशः।—

विज्ञाय पाकमेवं द्रागवतार्य्य क्षितौ क्षणान् कियतः।
विश्राम्य तत्र लौहे त्रिफलादेः प्रक्षिपेच्चूर्णम् ॥ ८३ ॥
यदि कर्पूरप्राप्तिर्भवति ततो विगलिते तदुष्णत्वे।
चूर्णीकृतमनुरूपं क्षिपेन्न वा न यदि तल्लाभः ॥ ८४ ॥

---

तथा अन्यतममतमाह, अन्ये इत्यादि।—विशेषेण क्षीनस्यक्तौ दर्व्वीप्रलेपो येन ईदृशं, तथा आखूत्कराकृति इन्दुरर्न्मृत्तिकासदृशञ्च यल्लौहं तन्मृदिति—मृदुपाकं ब्रुवते। तथा अर्द्धचूर्णलौहं मध्यमिति—मध्यपाकं ब्रुवते। अर्द्धचूर्णमिति—अर्द्धं चूर्णम् अपरमर्द्धञ्च आखूत्कराकारमित्यर्थः। तथा सिकतापुञ्जोपमं बालुकाराशिसदृशं यल्लौहं चक्षुषा गृह्यते न तु स्पर्शेन, तत् खरपाकं ब्रुवते। पातञ्जले तु स्पर्शादिनाऽपि पाकज्ञानमुक्तं—"तावल्लौहं पचेद्वह्नौ यावद्धस्तेन पीड़ितम्। समुद्रं जायते व्यक्तं न निःसरति सन्धिभिः॥ अङ्गुलिभ्यां निघृष्टन्तु यदा चूर्णत्वमागतम्। तदा सिद्धं विजानीयाल्लौहं लौहविशारदः॥ वार्त्तिनी वर्त्तितो वर्त्ति-स्वरूपत्वं व्रजेदिति। ताभ्यामेव शनैर्घृष्टं सिद्धं विद्याच्चिकित्सकः॥ मन्दमाहुस्तथा लौहमलव्याखिल-लक्षणम्। आतपाकेन तज्ज्ञेयं खरमुज्झितलक्षणम्॥" इति। जीवनाख्यो-ऽप्याह—"अञ्जनाभं घनं स्निग्धं श्लथमूलमथोद्धरेत्। अक्लिन्नमपि क्षिप्तं सम्यक् पाकस्य लक्षणम्॥" इति॥ ८१॥

त्रिविधोऽप्ययं पाको न विफल इत्याह—त्रिविध इत्यादि॥ ८२॥

लौहपाकानन्तरं त्रिफलादिचूर्णप्रक्षेपार्थमाह, विज्ञायेत्यादि।—द्राक् शीघ्रम्। क्षितौ नाकाशे। कियतः क्षणान् विश्राम्येत्यनेन सर्व्वथा तापनिवृत्तिर्न प्रतिपद्यते, किन्तर्हि? मनाक् तप्तत्वम्; यदाह पतञ्जलिः,—"अवतार्य्य मनाक् तप्ते" इति। इतिकर्त्तव्यता त्विह योगरत्नाकरसमुच्चयोक्ताऽनुसर्त्तव्या; यदुक्तं तत्रैव—"अवतार्य्य ततो दर्व्या परिघट्य पुनःपुनः। यदा पाणिसहो भूतो निक्षिपेदौषधं तदा॥ सावकाशेन दर्व्यैव परिघट्य निरन्तरम्॥" इति। लाभे सति सौगन्ध्यार्थं

पक्वलौहस्थापनार्थे पात्रनिर्देशः।—

पक्वं तदश्मसारं सुचिरघृतस्थित्यभाविरूक्षत्वे।
गोदोहनादिभाण्डे लौहभाण्डाभावे सति स्थाप्यम्॥ ८५॥

उद्‌वृत्तस्य घृतस्य पात्रान्तरे स्थापनोपदेशः।—

यदि तु परिप्लुतिहेतोर्घृतमीक्षेताधिकं ततोऽन्यस्मिन्।
भाण्डे निधाय रक्षेद्भाव्युपयोगो ह्यनेन महान्॥ ८६॥

उद्‌वृत्तघृताभावे घृतान्तरेण लौहस्य सिञ्चनोपदेशः।—

अयसि विरूक्षीभूते स्नेहस्त्रिफलाघृतेन सम्पाद्यः।

---

कान्तकामकीयदोषहरणार्थञ्च कर्पूरप्रक्षेपमाह, यदीत्यादि। विगलिते इति—अपगते। अनुरूपमित्यनेन यावताऽनुत्कटगन्धस्वादोपलम्भो भवति तावन्मानमित्यर्थः। न वा न यदि तल्लाभः इति—यदि कर्पूरलाभो न स्यात् तदा न वा क्षिपेदित्यन्वयः। पक्वलौहं दिनान्तरे वारत्रयमतिश्लक्ष्णं पेष्टव्यम्; उक्तं हि योगरत्नाकरे—"विश्राम्य रजनीमेकां पेष्टव्यं शीतलीकृतम्। त्रिधा शिलातले श्लक्ष्णं शिलापुत्रेण तादृशा॥" इति॥ ८३।८४॥

अथ सिद्धस्य लौहस्य स्थापनार्थं पात्रमाह, पक्वमित्यादि।—सुचिरकालं घृतस्थित्या अभाविरूक्षत्वं यस्य तस्मिन्, बहुदिनं व्याप्य घृतभावितं यत् पात्रं तस्मिन्नित्यर्थः। गोदोहनादिभाण्डं दधिदुग्धादिभावितं पात्रम्। लौहभाण्डाभावे इति—कान्तादिलौहपात्राभावे; तदुक्तं—"कान्तादिलौहभाण्डे तु तद्वत् ताम्रमये शुभे। चिराज्यभाविते वार्द्रे लौहतास्राद्यसम्भवे॥" इति॥ ८५॥

इदानीमयःपाकार्थं दत्तं घृतमधिकं यद्युपलभ्यते, तदा तदाकृष्य भाविलौहरूक्षत्वनिवृत्त्यर्थं पात्रान्तरे स्थाप्यमित्याह, यदि त्वित्यादि।—घृतस्याधिक्यमेव कथं ज्ञातव्यम्? इत्याह, परिप्लुतिहेतोरिति। परिप्लुतिः पात्रादुच्छलितत्वम्। ईक्षेत उपलभ्येत। किमर्थं तत् घृतं रक्षणीयम्? इत्याह, भाव्युपयोग इत्यादि। हि यतोऽनेन लौहपात्रोच्छलितघृतेन महान् उपयोगो महत् प्रयोजनं भावि वर्त्तते, तच्च रूक्षीभूतलौहस्नेहनादिरूपम्; उक्तं हि—"भवेद्यदि क्वचिल्लौहे प्लवनादधिकं हविः। पृथक्पात्रेऽपि तत् स्थाप्यं स्नेहनार्थं विरूक्षिते॥ अथवा मर्दनं लौहे यन्मधुसर्पिषोच्यते। तदनेनैव कर्त्तव्यमिति कश्चिद्व्यवस्थितः॥" इति॥ ८६॥

यदि पुनर्लौहपात्रोच्छलितं घृतं न लभ्यते, तदा त्रिफलाक्वाथकल्काभ्यामन्यत् घृतं

एतत् ततो गुणोत्तरमित्यमुना स्नेहनीयं तत् ॥ ८७ ॥

उद्धृतघृतस्य प्रयोजननिर्देशः।—

अत्यन्तकफप्रकृतेर्भक्षणमयसोऽमुनैव शंसन्ति।

केवलमपीदमशितं जनयत्ययसो गुणान् कियतः ॥ ८८ ॥

पित्तदुष्टौ लौहेन सह अभ्रस्य पाकविधिनिर्देशः।—

अथवा वक्ष्यविधिसंस्कृतकृष्णाभ्रकचूर्णमादाय।

लौहचतुर्थार्द्धसमद्वित्रिचतुःपञ्चगुणभागम् ॥ ८९ ॥

प्रक्षिप्यायः प्राग्वत् पचेदुभाभ्यां भवेद्रजो यावत्।

तावन्मानानुस्मृतेः स्यात् त्रिफलादिद्रव्यपरिमाणम् ॥ ९० ॥

---

पक्वा रूक्षितलौहस्य स्नेहनं कार्य्यमित्याह, अयसोत्यादि।—किन्तु उक्तत्रिफलाघृतात् लौहपाकोच्छलितं घृतमेवोत्कृष्टगुणमित्याह, एतदित्यादि। एतदिति—लौह-पाकोच्छलितं घृतम्। तत इति—त्रिफलाघृतात्। गुणोत्तरम् उत्कृष्टगुणमिति अमुना घृतेन तदयः स्नेहनीयमिति ॥ ८७ ॥

तस्यैव घृतस्य प्रयोजनान्तरमाह, अत्यन्तेत्यादि।—अमुनैवेति—लौहपाकोच्छलित-घृतेनेत्यर्थः। लौहोच्छलितघृतस्योत्कृष्टगुणत्वमप्याह, केवलमित्यादि। केवलं लौहपाकोच्छलितघृतम्। जनयत्ययसो गुणान् कियत इति लौहसम्बन्धेन लौहगुणानु-विधानादिति भावः ॥ ८८ ॥

इदानीं पित्तदुष्टिं प्रति अत्रैव लौहचतुर्थार्द्धसमादिमानतोऽभ्रकप्रवेशेन लौहा-भ्रकं पक्तुं विधिमाह, अथवेत्यादि।—वक्ष्यविधिनेति —अत्रानन्तरमेव "कृष्णाभ्रक-मभेकवपुः" इत्यादिना ग्रन्थेन योऽभ्रकसंस्कारस्य विधिरभिधास्य वक्ष्यते तेन विधिना संस्कृतमभ्रकचूर्णं निश्चन्द्रीकृतमादाय अयो लौहचूर्णञ्च प्रक्षिप्य पचेदिति। कियन्मानम् अभ्रकचूर्णं ग्राह्यम्? इति जिज्ञासायामस्यैव भागक्रममाह, लौहचतुर्थेत्यादि। लौहचूर्णमपेक्ष्य निश्चन्द्रीकृताभ्रकचूर्णस्य चतुर्थो भागः पादिक इत्यर्थः। तथा पचनीयैकपलादितयोदशपलान्तलौहचूर्णस्य भागद्वयम्, अभ्रक-चूर्णस्य पुनरेको भागः, तेन लौहस्य भागद्वयम्, अभ्रस्य तदर्द्धमेको भाग इति अभ्रस्यार्द्धभागत्वम्। तथा एको भागो लौहस्य, अपर एको भागोऽभ्रस्येति लौहसमत्वमभ्रकस्येति। एवमेको भागो लौहस्य, भागद्वयन्तु अभ्रकस्येति द्विगुणत्व-मभ्रकस्य। एवमेको भागो लौहस्य, अभ्रस्य भागत्रयमिति अभ्रस्य त्रिगुणत्वम्।

ईदृशपक्वलौहाभ्रकस्य गुणाः ।—

इदमाप्यायकमिदमतिपित्तनुदिदमेव कान्तिबलजननम् ।
स्तम्भाति तट्टुधौ परमधिकाधिकमात्रया चिरम ॥ ९१॥

इति पाकविधिः ।

अभ्रकशोधनविधिः ।—

कृष्णाभ्रमनेकवपुर्वज्राख्यञ्चैकपलकं कृत्वा ।
काष्ठमयोदूखलके चूर्णं मुषलेन कुर्वीत ॥ ९२ ॥

तथा लौहस्य एको भागः, भागचतुष्टयन्तु अभ्रकस्येति चतुर्गुणत्वमभ्रकस्य । तथा एको भागो लौहस्य, पञ्चभागास्तु अभ्रस्येति पञ्चगुणत्वमभ्रकस्य ज्ञेयम् । एवं-क्रमेण लौहाभ्रकाभ्यां मिलित्वा एकपलादिवयोदशपलान्तमानव्यवस्थया तत्पाकः कार्य्य इत्याह, प्राग्वदित्यादि । एवञ्च सति अभ्रकप्रवेशेन प्रधाननिष्पत्तिपाकार्थं त्रिफलाक्वाथदुग्धघृतप्रक्षेप्यचूर्णपरिमाणं कीदृशम् ? इति निर्णयार्थमाह, उभाभ्यां भवेदित्यादि । अयमर्थः,—उभाभ्यां लौहाभ्रकाभ्यां मिलित्वा यावत् रजो भवेत्, तावदेव लौहमानं परिकल्प्य तन्मानानुसारेण त्रिफलादिमानं कल्पनीयं, पूर्वं केवल-लौहपाके त्रिफलादीनां यावन्मानमुक्तम्, इदानीं मिलितलौहाभ्रकपाकेऽपि तावदेवेत्यर्थः ; अत एव लौहरसाभ्रकयोगमपेक्ष्य योगरत्नाकरेऽप्यभिहितं—"यावल्लौहरजस्तस्मात् भवेदर्द्धेन पारदः । तदर्द्धेन घनं प्रोक्तं मतमेतत् पतञ्जलेः ॥ मानेन त्रितयस्यास्य नित्यं ग्राह्यं पलत्रयम् ॥" इति ॥ ८८।९० ॥

ननु किमर्थं पुनरुत्तरोत्तरमधिकाधिकमात्रया लौहे अभ्रकोपयोगः ? इत्येतदर्थ-माह, इदमाप्यायकमित्यादि ।—इदमभ्रकं लौहे अधिकाधिकमात्रया समुपयुक्तं सत् विधिना आप्यायकत्वादिगुणविशिष्टं भवतीत्यर्थः । आप्यायकम् अमृतसिक्तमिव पुरुषं बलोत्कृष्टं करोतीत्यर्थः । स्तम्भाति तट्टुधौ परमिति—अधिकाधिकमात्रया लौहे चिरमभ्रकं समुपयुक्तं सत् विनाऽप्याहारकरणममृतसिक्तमिव पुरुषं बलोत्कृष्टं करोतीति तट्टुधे पुरुषस्य बाधां न जनयत इत्यर्थः ; किंवा आहारजातमविकल-मखिलं परिणमयत्येव, तथाबुभुक्षे तु न पुरुषमबलं कुरुतः इत्यर्थः ॥ ९१ ॥

इति पाकविधिः ।

"वक्ष्यविधिसंस्कृतकृष्णाभ्रकचूर्णम्" इत्युक्तम्, अतस्तामेवाभ्रकशुद्धिमाह, कृष्णाभ्र-मित्यादि ।—अनेकवपुरिति—भेकस्य वपुः हरितपीतादिवर्णवत् भवति, तेन यदभ्रकं वर्णेन भेकस्य वपुरिव एकदेशेऽपि न भवति तत् समीचीनं, तदेव च वज्राख्यं, वज्रोति

भूयो दृषदि च पिष्टं वासःसूक्ष्मावकाशतलगलितम्।
मण्डूकपर्णिकायाः प्रचुररसे स्थापयेत् त्रिदिनम् ॥ ९३ ॥
उद्धृत्य तद्रसादथ पिंष्याद्धैमन्तिकधान्यभक्तस्य।
अच्छोदात्यन्ताम्लस्वच्छजलेन प्रयत्नेन ॥
मण्डूकपर्णिकायाः पूर्वरसेनैव मोदनं कुर्य्यात् ॥ ९४ ॥

स्थालीपाकपुटपाकार्थद्रव्यनिर्देशः।—

स्थालीपाकं पुटनञ्चाद्यैरपि भृङ्गराजाद्यैः॥ ९५ ॥

शोधिताभ्रस्य मारणविधिः।—

ताड़ादिपत्रमध्ये कृत्वा पिण्डं निधाय भस्त्राऽग्नौ।

---

यस्य प्रसिद्धिः; तदुक्तं योगरत्नाकरे—„सुप्रशस्तं कठोराङ्गं गुरु कज्जलसन्निभम्। यच्च शब्दायते वह्नौ नैवोच्छूनं भवेदपि ॥ सदाकरसमुद्भूतं वज्रीति प्रथमं घनम् ॥” इति। तदभ्रकं अनेकपत्रघटितमेव स्वभावतः, तत् प्रयत्नात् नखादिभिस्त्रोटयित्वा एकपत्रं कर्त्तव्यं, ततो मुषलेन चूर्णं कुर्वीत, भूयः पुनः दृषदि शिलायां पिष्टं चूर्णीकृतं घनतर-वाससा छानयित्वाऽधो यद्गलितं तत् ग्राह्यम्। मण्डूकपर्णी “थानकुनी” इति ख्यातम्। तद्रसादिति—मण्डूकपर्णीस्वरसात्। अच्छोदेति—चोदोऽत्र शीर्णभक्तसिक्थकम्, अच्छोदत्वञ्च तद्विरहात्। पेषणानन्तरं यत् कर्त्तव्यं तदाह, मण्डूकपर्णिकाया इत्यादि। पूर्वरसेनेति—यत्रैव मण्डूकपर्णीरसे दिनत्रयं स्थापितमासीत् तेनैव रसेन विमर्द्य. मोदनमिति—मोदकाकारं कुर्य्यात्। मोदयतीति मोदन इति मोदनशब्दोऽपि मोद-कार्थे द्रष्टव्यः। क्वचित्तु “मोदकम्” इति पाठः, स च तत्तदाकारपुस्तकेषु न दृश्यते। मोदकाकारञ्च कृत्वा दिनैकं स्थापयित्वा शुष्कीकुर्य्यादित्युपदेशो बोद्धव्यः। अथ-मभ्रकशोधनप्रकारः अमोघाचार्य्यमतानुसारेण निबद्धः। तत्र मण्डूकपर्णीरसेन, पुनर्मोदककरणं यद्यपि नास्ति, तथाऽपि केनापि षट्कर्मणा प्रतिसंस्कृत्योपदेशादिदं लिखितमिति बोध्यम् ॥ ९३—९४ ॥

तदनु चास्य अभ्रकस्य चूर्णीकृतस्य स्थालीपाकपुटपाके कर्त्तव्ये, तदर्थं द्रव्याण्याह, स्थालीपाकमित्यादि।—आद्यैर्भृङ्गराजाद्यैरिति—लौहपुटनविधौ पूर्वोक्तैः भृङ्गराज-केशराजशतावरीकन्दमाषादिरसैरित्यर्थः। आद्यैरित्यत्र “अन्यैः” इत्यपि पाठः, किन्तु पूर्वपाठ एव टीकाकारसम्मतः ॥ ९५ ॥

एवं-पुटादिशोधितस्याभ्रकस्य वह्नौ धापनं कार्य्यं, तत्सुविधिमाह, ताड़ादि-

तावद्दहेन्न यावन्नीलोऽग्निर्दृश्यते सुचिरम् ॥ ९६ ॥
निर्वापयेच्च दुग्धेन दुग्धं प्रक्षाल्य वारिणा तदनु।
पिष्ट्वा घृष्ट्वा वस्त्रे चूर्णं निश्चन्द्रकं कुर्य्यात् ॥ ९७ ॥

इति अभ्रकविधिः।

भक्षणार्थं लौहस्य मात्रानिर्देशः।—

नानाविधरुक्शान्त्यै पुष्ट्यै कान्त्यै शिवं समभ्यर्च्य।
सुविशुद्धेऽहनि पुण्ये तदमृतमादाय लौहाख्यम् ॥ ९८ ॥
दशकृष्णलपरिमाणं शक्तिवयोभेदमाकलय्य पुनः।
इयदधिकं तदधिकतरमियदेव न मात्रमोदकवत् ॥ ९९ ॥

---

पत्रेत्यादि।—ताड़ा स्वनामख्याता। आदिशब्दात् केतुकादिपत्रं बोध्यम्। किन्त्विदानीं ताड़ादिपत्रपिहितस्याभ्रस्य ध्मापनं न व्यवहरन्ति। पिण्डीकरणञ्चास्य भृङ्गराजादिद्रवालोड़नादधिगन्तव्यम्। दुग्धं प्रक्षाल्येति—दुग्धनिर्वापितोत्थापिताभ्रकसंलग्नं यत् दुग्धम्। यद्यपीदानीं ताड़ादिपत्रपिहितस्य ध्मापनमभ्रकस्य न व्यवहरन्ति, किन्तु पुटैरेवास्य निश्चन्द्रकत्वं क्रियते, तथाऽप्यस्मात् बहुधा कृतत्वात् आ सम्यक् निश्चन्द्रकत्वमनेनास्य भवतीत्यवधारितम्; यतोऽभ्रकस्य निश्चन्द्रीकरणमेव यथोक्तगुणकरणे प्रयोजकमिति, तच्च येन केनापि भेषजेन भवतु। अपरापरेऽप्यभ्रकमारणप्रकारा नानाऽऽचार्य्योक्ताः सन्ति, ते च योगरत्नाकरसमुच्चयादधिगन्तव्याः। तत्रैकं प्रसिद्धमतं यथा—"धान्याभ्रकीकृतैः पिष्टमभ्रकं तत्र संस्थितम्। कन्दमाणास्थिसंहार-खण्डकर्णरसैरथ ॥ वृद्धदारकपिण्डेन कालमारिषजेन च। वृषीरवृहतीभृङ्ग-लज्जालुकेशराजकैः ॥ पेषणं भावनं कुर्य्यात् पुटपाकमनेकधा। यावन्निश्चन्द्रकत्वं स्यात् ततो मोचारसेन च ॥ कालमारिषजेनापि स्थालीपाकं प्रदापयेत्। यावद्रक्तत्वमायाति शुद्धिरेवं विहायसः ॥" अत्र वृषीरः श्वेतपुनर्नवा। लज्जा स्वनामख्याता। मोचा रम्भा। व्यक्तमन्यत्। किन्त्वयमेव प्रकारः वृद्धवैद्यैः प्रायः क्रियते ॥ ९६।९७ ॥

इत्यभ्रकविधिः।

इदानीं निष्पन्नस्य लौहस्य भक्षणविधिमाह, नानेत्यादि।—नानाविधव्याधयः पुराणज्वरातीसारग्रहणीरक्तपित्तराजयक्ष्मप्रभृतयः। अमृतमिति—अमृतमिवामृतम्। तच्च किं मानमुपयोज्यम्? तत्राह, दशेत्यादि। कृष्णला रक्तिः, तेन चरक-

भक्षणार्थं लौहस्य मर्दनविधिः।—

सममश्मणामलपात्रे लौहे लौहेन मर्दयेच्च पुनः।
दत्त्वा मध्वनुरूपं तदनु घृतं योजयेदधिकम् ॥ १०० ॥
बन्धं गृह्णाति यथा मध्वपृथक्त्वेन पङ्कमविश्लिंषत्।
इदमिह दृष्टोपकरणमेतददृष्टन्तु मन्त्रेण ॥ १०१ ॥
स्वाहान्तेन विमर्दो भवति फडन्तेन लौहबलरक्षा।
सनमस्कारेण बलिर्भक्षणमयसो हुमन्तेन ॥ १०२ ॥

मर्दनमन्त्रम्।—

"ओँ अमृतोद्भवाय स्वाहा" ॥ १०३ ॥

रक्षणमन्त्रम्।—

"ओँ अमृते हुं फट्" ॥ १०४ ॥

---

मामान्साधकमित्यर्थः। अयञ्च दशरक्तिपरिमाणारम्भः उत्तमपुरुषबलवयोऽपेक्षया-ऽभिहितः, तेन मध्यमाधमपुरुषशक्तिवयोऽपेक्षया इदं दशरक्तिपरिमाणं यथाक्रमं मध्यमाधमयोरधिकमधिकतरञ्च भवतीति वयोबलाद्यपेक्षया उक्तपरिमाणादल्पाल्प-तरपरिमाणेनाप्यारम्भः। वर्द्धने कर्त्तव्ये न पुनर्दशरक्तिपरिमाणं युक्तमिति कृत्वा तावत्परिमाणमेव कर्त्तव्यमिति मात्मोदकवन्निबन्धो न कार्य्य इत्यर्थः; तेन "आरम्भो वर्द्धनस्यापि पञ्चद्वित्र्येकगुञ्जया" तथा "पञ्चसप्तनवेतरा रक्तिकाः प्रथमे दिने" तथा "रक्तिमेकामुपक्रम्य यावत् स्युर्नवरक्तिकाः" इत्यादि यत् तन्त्रान्तरेषूक्तं, तत् सर्वमनेन सङ्गृहीतं ज्ञेयम् ॥ ९८।९९ ॥

लौहमर्दनार्थं पात्रमाह, समेत्यादि।—उत्तानवामकरतलस्थापनार्थं तत् पात्रं आननाकारं करणीयम्। लौहेनेति—लौहदण्डेन। मधु तदुचितं दत्त्वा अधिक-मिति—मध्वपेक्षया किञ्चिदधिकं घृतं मिश्रणीयम्। मर्दनविध्यर्थं लक्षणमाह, बन्धमित्यादि। अविश्लिंषदिति—स्वतन्त्रं मधु अपृथक्त्वेन एकत्वेनाविश्लिंषत् विश्लेषमकुर्वत्, अत एव पङ्कं पङ्कमिवेत्यर्थः। दृष्टादृष्टाभ्यां हि कार्य्यसिद्धिरतो दृष्टमुक्त्वा मन्त्रजन्यादृष्टार्थमाह, इदमित्यादि ॥ १००—१०२ ॥

तत्र प्रथमं लौहमर्दनमन्त्रमाह, ओँ अमृतोद्भवायेत्यादि।—अयं स्वाहान्तो मर्दनमन्त्रः ॥ १०३ ॥

लौहरक्षणमन्त्रमाह—ओँ अमृते हुं फट् इति ॥ १०४ ॥

बलिदानमन्त्रम्।—

"ओँ नमश्चण्डवज्रपाणये महायक्षसेनाधिपतये
सुरगुरुविद्यामहाबलाय स्वाहा" ॥ १०५ ॥

भक्षणमन्त्रम्।—

"ओँ अमृते हूं" ॥ १०६ ॥

लौहस्य अनुपानादिनिर्देशः।—

जग्ध्वा तदमृतसारं नीरं वा क्षीरमेवानुपिबेत्।
कान्तक्रामकममलं सञ्चर्व्य रसं पिबेद्धिमे न तु तत् ॥
आचम्य च ताम्बूलं लाभे घनसारसहितमुपयोज्यम् ॥ १०७ ॥

भक्षणानन्तरम् आचारविधिः।—

नात्युपविष्टो नाप्यतिभाषो नातिस्थितस्तिष्ठेत्।
अत्यन्तवातशीतातपयानस्नानवेगरोधादीन् ॥ १०८ ॥
जह्याच्च दिवानिद्रामहितञ्चाकालभुक्तञ्च।

---

बलिदानमन्त्रमाह—ओँ नम इत्यादि ॥ १०५ ॥

भक्षणमन्त्रमाह—ओँ अमृते हूमिति ॥ १०६ ॥

लौहभेषजपाकार्थमनुपानमाह, जग्ध्वेत्यादि।—नीरञ्चामलम् आकाशगुणबहुभूयिष्ठभूभागाश्रयम्। क्षीरञ्च गव्यं सर्वत्र ; उक्तञ्च—"सर्वत्र गव्यमेवेति मतमाह पतञ्जलिः" इति। अनुपानञ्च लौहापेक्षया चतुःषष्टिगुणं षष्टिगुणं वा कार्य्यम ; तदुक्तं योगरत्नाकरे—"अनुपानं चतुःषष्टि-गुणं प्राहुः सदा बुधाः" इति। तथा अन्यत्रोक्तम्—"अनुपानं प्रयोक्तव्यं लौहात् षष्टिगुणं पयः" इति। अनुपानं कृत्वा लौहदोषनिरासाय निस्तुष: कान्तक्रामकस्य स्वरसमात्रं पेयमित्याह, कान्तक्रामकमित्यादि। अनुपानादनन्तरं यद्विधेयं तदाह, आचम्येत्यादि। आचमनञ्च शृतशीतजलेन हंसोदकेन वा ; यदुक्तं—"कृत्वाऽनुपानमाचम्य शृतशीतजलेन वा। यद्वा हंसोदकेनैव—" इत्यादि ॥ १०७ ॥

अनुपानादिकं कृत्वा यथा स्थातव्यं तदाह, नात्युपविष्ट इत्यादि।—नातिस्थित इति—तुष्णीभूतः दण्डायमानः सन् अति न तिष्ठेत्, चिरं न तिष्ठेदित्यर्थः। अपरं परिवर्जनीयमाह, अत्यन्तेत्यादि। अत्यन्तेति वातादिभिः सम्बध्यते। यानम् अश्वादियानम्। आदिशब्दादीर्ष्याचिन्ताविषमाङ्गन्यासादीनां ग्रहणम्। अकालभुक्तम्

वातकृतः पित्तकृतः सर्वान् कट्वम्लतिक्तकषायान् ॥
तत्त्वणविनाशहेतून् मैथुनकोपश्रमान् दूरे ॥ १०९ ॥

लौहोपयोगानन्तरं भोजनकालनिर्देशः।—

अशितं तदयः पश्चात् पततु न वा पाटवं कुरु प्रथताम्।
आर्त्तिर्भवतु न वाऽन्त्रे कूजति भोक्तव्यमव्याजकम् ॥११०॥

भोजनविधिः।—

प्रथमं पीत्वा दुग्धं शाल्यन्नं विशदसिद्धमक्लिन्नम्।
घृतसंप्लुतमश्नीयान्मांसैर्वैहङ्गमैः प्रायः ॥ १११ ॥
उत्तममूषरभूचरविष्किरमांसं तथाऽऽजसैणादिकम्।
अन्यदपि जलचराणां पृथुरोमापेक्षया ज्यायः ॥ ११२ ॥

---

अजीर्णादौ भोजनम्। वर्जनीयरसानाह, वातकृत इत्यादि। वातकृत इत्यादिकं हेतुगर्भमेव विशेषणम्; किंवा वातकृतः पित्तकृत इत्यनेन कट्वम्लतिक्तकषायाः पिप्पल्यामलकगुडूचीहरीतक्यादयो वातपित्ते न कुर्वन्ति, तेषामुपयोगो न विरुध्यते इति दर्शयति। विशेषेण वर्जनीयविहारमाह, तत्क्षणेत्यादि। अत्रापि वर्ज्यादिति पूर्वोक्तं सम्बध्यते ॥ १०८।१०९ ॥

प्रातरुपयुक्तं लौहचेत् ततः कस्यामवस्थायां भोक्तव्यम्? इत्याह,अशितमित्यादि। —अशितं तदयः पश्चादिति—गुदेन पततु प्रवर्त्ततां, न वा, तथा आर्त्तिरिति—बुभुक्षा पीड़ा भवतु वा न वा, तथाऽपि पाटवम् आलस्यादिराहित्यं कुरु भवतु, तथा लौहसम्भाविसदेहे सम्यक् वायोः सञ्चरणेनान्त्र कूजनञ्च कुरु भवतु, तदेव अव्याजं निःशङ्कं भोक्तव्यम्। कुरु इति—अङ्गीकारविश्रामे। एतेन पाटवमन्त्रकूजन-मेतदुभयमेव भोजनं प्रति प्रयोजकमित्यर्थः ॥ ११० ॥

इदानीं भोजनं येन विधिना कर्त्तव्यं तदाह, प्रथममित्यादि।—विशदं शुभ्रम्। अक्लिन्नमिति—नान्योऽन्यसंलग्नम्। दुग्धमिति—जीवद्वत्सशुक्लायाः कृष्णाया वा प्रवृद्धवत्साया ग्राह्यम्। वैहङ्गमैरिति—लावतित्तिरादिविहङ्गसम्भूतैः। प्रायःशब्दादाजै-णादिकं बोद्धव्यम्। एतदेवाह, उत्तममित्यादि। उत्तममिति—बालस्थविरव्याधितादि-वर्जितानाम्, ऊषरभूचराः जाङ्गलदेशचराः लावतित्तिरिशशकादयः, विष्किराः कुक्कुटादयः, तेषां मांसम्। आदिशब्दात् कृष्णसारगोधादयः। अन्यदपीति—

मांसालाभे मत्स्या अदोषलाः स्थूलसङ्गणा ग्राह्याः ।
मद्गुररोहितशकुला दग्धास्तु पललान्मनाङ्न्यूनाः ॥ ११३ ॥
शृङ्गाटकफलकशेरु-कदलीफलतालनारिकेलादि ।
अन्यदपि यच्च वृष्यं मधुरं पनसादिकं ज्यायः ॥ ११४ ॥
केबुकताड़ककरीरान् वार्त्ताकुपटोलफलदलशमठान् ।
मुद्गमसूरेक्षुरसान् शंसन्ति निरामिषेष्वेतान् ॥ ११५ ॥
शाकं प्रहेयमखिलं स्तोकं रुचये तु वास्तूकं दद्यात् ।
विहितनिषिद्धादन्यन्मध्यमकोटिस्थितं विद्यात् ॥ ११६ ॥

बद्धकोष्ठस्य अनुपाननिर्देशः ।—

तप्तदुग्धानुपानं प्रायः सारयति बद्धकोष्ठस्य ।
अनुपीतमम्बु यद्वा कोमलशस्यनारिकेलस्य ॥ ११७ ॥
यस्य च न तथा सरति सयवक्षारं जलं पिबेत् कोष्णम् ।
कोष्णं त्रिफलाक्काथं सनाथं क्षारं ततोऽप्यधिकम् ॥ ११८ ॥

विष्किरादिव्यतिरिक्तमित्यर्थः । जलचराः हंसादयः । पृथुरोमापेक्षया ज्यायः इति—मत्स्यापेक्षया श्रेष्ठमित्यर्थः । अन्ये तु पृथुरोमा शूकर इत्याहुः । मांसाप्राप्तौ मत्स्यविशेषोपयोगमाह, मांसालाभे इत्यादि । के ते स्थूलसङ्गणाः ? इत्याह मद्गुरेत्यादि । एतेन मद्गुरादयो दग्धाः सन्तः पललादिति—मांसात्, मनाङ्न्यूनाः किञ्चिद्धीना इत्यर्थः । इदानीमवोचितं फलकन्दमाह, शृङ्गाटकेत्यादि । आदिशब्दात् दाक्षखर्जूरादिकम् । निरामिषव्यञ्जनार्थमाह, केबुकेत्यादि । ताड़करीराः ताड़काङ्कुराः । पटोलफलदलेति—पटोलस्य फलदलम् । शाकं पुनः सकलमेव वर्जनीयमित्याह, शाकमित्यादि । प्रहेयमिति—अवश्यत्याज्यम् । शाकसात्म्याय रुच्यर्थं पुनर्वास्तूकमेवाल्पप्रमाणं दद्यात् । विहितनिषिद्धव्यतिरिक्तं यत् द्रव्यं तत् साधारणं ज्ञेयमित्याह, विहितेत्यादि ॥ १११—११६ ॥

इदानीं बद्धकोष्ठं प्रति अनुपानविशेषमाह, तप्तेत्यादि ।—तप्तक्षीरानुपानेन न व्यवहरन्ति वृद्धाः, क्षीरे मधुरः सत्वात् तत्क्षीणविरोधीत्यभिसन्धाय; नारिकेलोदकञ्च प्रसरति । एवमपि कृते यदा यस्य न प्रवृत्तिस्तदा तस्य किं कर्त्तव्यम् ? इत्याह, यस्येत्यादि । उपयुक्ते कोष्ठानुरूपं यवक्षारं प्रक्षिप्य पिबेदित्यर्थः । प्रयोगान्तरमुत्तरमाह,

वृद्धिक्रमनिर्देशः।—

त्रीणि दिनानि समं स्यादह्नि चतुर्थे तु वर्द्धयेत् क्रमशः।
यावच्चाष्टममाषं न वर्द्धयेत् पुनरितोऽप्यधिकम्॥ ११९॥
आदौ रक्तिद्वितयं द्वितीयवृद्धौ तु रक्तिकात्रितयम्।
रक्तिपञ्चकं पञ्चकमत ऊर्द्ध्वं वर्द्धयेन्नियतम्॥ १२०॥

संवत्सरकर्त्तव्ये लौहरसायने ह्रासक्रमनिर्देशः।—

वात्सरिककल्पपक्षे दिनानि यावन्ति वर्द्धितं प्रथमम्।
तावन्ति वर्षशेषे प्रतिलोमं ह्रासयेत् तदयः॥ १२१॥

---

त्रीणामित्यादि। चारं यवक्षारम्। सनाथमिति—सहितमित्यर्थः। यवक्षारप्रक्षेपश्च "प्रक्षेपः पादिकः ख्यात्" इति परिभाषयैव। तत इति—उक्तयोगात्॥११७।११८॥

लौहप्रमाणवृद्धिर्हि क्रमेणैव कार्य्या, अतस्तमेव वृद्धिक्रमं दर्शयति, त्रीणि दिनानीत्यादि।—येन परिमाणेन लौहभक्षणारम्भः कृतः, तेनैव परिमाणेन दिनत्रयं कार्य्यं, ततः चतुर्थदिनमारभ्य पुनरपि दिनत्रयं यावत् समवृद्ध्यैव वर्द्धयेत्, ततोऽपि सप्तमदिने या रक्तिवृद्धिः कृता, तयैव वृद्ध्या पुनरपि दिनत्रयं यावत् वर्द्धयेत्, "त्रीणि दिनानि समं स्यात्" इत्युक्तेरित्यादि बोध्यम्। एवं-क्रमेणाष्टमाषकपर्य्यन्तं वृद्धिः कार्य्या, इतोऽधिकवृद्धिर्न कार्य्येत्याह, यावच्चाष्टममाषमित्यादि। "क्रमशो वर्द्धयेत्" इत्युक्तम्, अतस्तमेव क्रममाह, आदावित्यादि। आदौ लौहप्रयोगारम्भे रक्तिद्वयं कृत्वा त्र्यहमुपयोज्यं, ततः प्रथमवृद्धौ चतुर्थदिनमारभ्य रक्तिद्वयं कृत्वा त्र्यहं वृद्धिः कार्य्या, तेन द्वितीयत्र्यहे प्रतिदिनं रक्तिकाचतुष्टयं भवति, ततो द्वितीयवृद्धौ रक्तित्रयं कृत्वा त्र्यहं वृद्धिः, तेन तृतीयत्र्यहे प्रतिदिनं सप्तरक्तिका भवन्ति, अत ऊर्द्ध्वं चतुर्थपञ्चमादित्र्यहेषु "त्रीणि दिनानि समं स्यात्" इत्युक्तरीत्या क्रमेण रक्तिपञ्चकं कृत्वा अष्टमाषकं यावत् वर्द्धयेत्, तेन चतुर्थत्र्यहे द्वादशरक्तिः, पञ्चमत्र्यहे सप्तदशरक्तिः, षष्ठे द्वाविंशतिः, सप्तमे सप्तविंशतिरित्यादि ज्ञेयम्, एतेन पञ्चदिनाधिकसप्तसप्ताहे दशरक्तिकमाषेण द्विरक्तिकाधिका अष्टौ माषका भवन्ति। अत्र चतूरक्तिकावृद्धिं त्यक्त्वा यथोक्तवृद्धौ च वृद्धाः यथा कुर्वन्ति स उपाय इत्येव सिद्धान्तः॥ ११९।१२०॥

इदानीं संवत्सरं यावत् यदि कर्त्तव्यमिदं रसायनं स्यात्, तदा वर्षावशेषदिनानि यावन्ति भवन्ति, तावन्त्येव प्रतिलोमं पञ्चरक्तिकादिक्रमेण ह्रासः कार्य्य इत्याह—वात्सरिकेत्यादि॥ १२१॥

संवत्सरकार्त्स्न्यें लौहरसायने दैनिकमात्राविधिः।—

तेष्वष्टमाषकेषु प्रातर्माषकत्रयमश्नीयात्।
सायञ्च तावदह्नो मध्ये माषद्वयं शेषम्॥ १२२॥

इति भक्षणविधिः॥

अन्ततसारलौहस्य गुणादिनिर्देशः।—

एवं तदमृतमश्नन् कान्तिं लभते चिरस्थिरं देहम्।
सप्ताहत्रयमात्रात् सर्वरुजो हन्ति किं बहुना॥ १२३॥

उपसंहारः।—

आर्याभिरिह नवत्या सप्तविधिना यथावदाख्यातम्।
अमतिविपर्य्ययसंशयशून्यमनुष्ठानमुन्नीतम्॥ १२४॥

---

इदानीं पञ्चदिनाधिकसप्तसप्ताहैरष्टमाषकप्रमाणे सञ्जाते सति वत्सराभ्यन्तरे एव केन प्रकारेण तल्लौहमुपयोज्यम्? इत्याह, तेष्वित्यादि।—अष्टमाषकेषु मध्ये माषकत्रयं प्रातः। तावदिति—माषकत्रयं सायाह्ने। अह्नो मध्ये भोजन-समये शेषं माषद्वयम्; अन्यत्राप्युक्तं—"प्रातर्माषत्रयं कार्य्यं मध्याह्ने माषक-द्वयम्। माषत्रयं दिनाशेषे माषकाष्टकभक्षणम्॥" इति। इदानीन्तु रक्तिकाद्वय-मारभ्य रोगिणं प्रति रक्तिकाद्वयवृद्ध्यैव चिसप्ताहपञ्चसप्ताहादिभिः किञ्चिदधिक-माषकद्वयं यावत् वृद्धिः, ततो द्विसप्ताहादिभिः रक्तिकाद्वयेनैव ह्रास इति प्रायो व्यवहरन्ति वृद्धाः। उत्तरक्रिया चात्र द्विगुणा कार्य्या; यदुक्तं पातञ्जले—"इति मुख्यक्रियायाः स्यात् द्विगुणा चोत्तरक्रिया"। उत्तरक्रियाऽत्र "नात्युपविष्टो नात्यति-भाषी नातिस्थितस्तिष्ठेत्" इत्यादिना उक्तैव॥ १२२॥

इति भक्षणविधिः।

इदानीमस्य लौहस्य फलमाह—एवमित्यादि॥ १२३॥

उपसंहरति, आर्याभिरित्यादि।—सप्तविधत्वञ्च साध्यसाधनपरिमाणविधिः, लौहमारणविधिः, स्थालीपाकविधिः, पुटनविधिः, प्रधाननिष्पत्तिपाकविधिः, अमृतविधिः, भक्षणविधिश्चेति। यथावदाख्यातमित्यत्र पूर्वाचार्य्यैरिति शेषः। अमतिः सर्वथाऽज्ञानं, ज्ञानाज्ञानराहित्यम, अतस्मिंस्तद्बुद्धिर्भ्रमः, स च द्विधा—एक-कोटिकोऽनेककोटिकश्च, तत्राद्यो विपर्य्ययः, द्वितीयस्तु संशय इति। अनुष्ठीयते इत्यनुष्ठानं ग्रन्थसन्दर्भ एव। उन्नीतमिति—गुरुपरम्परया उपदेशपूर्वकं कथित-

मुनिरचितशास्त्रपारं गत्वा सारं ततः समुद्धृत्य ।
निबबन्ध बान्धवानामुपकृतये कोऽपि षट्कर्मा ॥ १२५ ॥

अमृतसारं लौहं समाप्तम् ।

नागार्जुनीयं लौहरसायनम् ।—

यत्र तत्रोद्भवं लौहं निःशेषं मारितं यदि ।
त्रिफलाव्योषसंयुक्तं भक्षयेत् बलिनाशनम् ॥ १२६ ॥

विभिन्नलौहानामुत्कर्षापकर्षनिर्देशः ।—

सामान्याद्द्विगुणश्चौड्रं कलिङ्गोऽष्टगुणस्ततः ।
तस्माच्छतगुणं भद्रं भद्राद्वज्रं सहस्रधा ॥ १२७ ॥
वज्रात् षष्टिगुणः पाण्डिर्निरविर्दशभिर्गुणैः ।
ततः कोटिसहस्रं वा अयस्कान्तं महागुणम् ॥ १२८ ॥

---

मित्यर्थः । मुनिरचितेत्यत्र मुनिः नागार्जुनः । बान्धवानामिति—मनुष्याणाम् । एषां चतुर्द्वांश्रयत्वेनावश्योपकर्त्तव्यतया च बन्धुत्वम्, एतेनास्य निबन्धस्य भ्रमाति-विपर्य्यासंशयनिरासः सङ्क्षेपश्चेति गुणद्वयमुक्तम् । कोऽपीति—अनिर्दिष्टनामधेयः पुरुषः उत्कृष्टरूपः । षट्कर्मा श्रोत्रियः; उक्तं हि—"याजनं यजनं दानं विशिष्टाच्च परिग्रहः । अध्यापनमध्ययनं श्रोत्रियः षड्भिरेव च ॥" इति । एषामनुष्ठानं नवत्या आर्य्याभिः कोऽपि षट्कर्मा भ्रमातिविपर्य्ययसंशयशून्यं यथा स्यात् तथा निबबन्ध इत्यर्थः ॥ १२४।१२५ ॥

अमृतसारलौहं समाप्तम् ।

इदानीं नागार्जुनोक्तं टेश्वरसायनलौहमाह, यत्र तत्रेत्यादि ।—यत्र तत्रोद्भवमिति—औड्रकलिङ्गादियत्किञ्चिद्देशभवं वज्रपाण्ड्यादिकमेव । निःशेषं सर्वथैव मृतम् । निःशेषमित्यत्र "निरुत्थम्" इति पाठे—टङ्कणक्षारादियोगेनापि वह्नौ ध्मापनान्नोत्तिष्ठते पुनर्लौहभावं नापद्यते इत्यर्थः । त्रिफलेत्यादि । व्योषं त्रिकटुकम् । त्रिफला-त्रिकटुचूर्णञ्च मिलित्वा लौहसमं बोध्यम् । संयुक्तं सम्यक् युक्तं, तेन मधुघृताभ्यां लौहपात्रे लौहदण्डेन विमर्द्य भक्षणीयं रक्तिकादिक्रमेणेति वदन्ति वृद्धाः । अन्ये त्वादौ माषकमेकमुपयोज्यमित्याहुः । वृद्धौ मध्ये वा अग्निबलमपेक्ष्य यथा-शक्ति कुर्वन् सार्द्धसंवत्सरात् बलीं नाशयेदिति टेश्वरसायनटीकायामुक्तम् ॥ १२६ ॥

लौहानां गुणमाह, सामान्यादित्यादि ।—दण्डभुक्तिपर्य्यन्तदेशदक्षिणोत्तरदिक्सम्भवं

रसतस्ताम्रं द्विगुणं ताम्रात् कृष्णाभ्रकं द्विगुणम् ।
पृथगेवैषां शुद्धिस्ताम्रशुद्धिस्ततो द्विविधा ॥ १२९ ॥
पत्रीकृतस्य गन्धकयोगाद्वा मारणं तथा लवणैः ।
आर्द्रे ध्मापितताम्रे निर्गुण्डीकल्ककाञ्जिकमग्ने ॥ १३० ॥
यत् पतति गैरिकाभं तत् पिष्टमर्द्धगन्धकं तदनु ।
पुटपाकेन विशुद्धं शुद्धं स्यादभ्रकन्तु पुनः ॥ १३१ ॥
ह्विलमोचिमूलपिण्डे क्षिप्तं तदनु मार्दसम्पुटे लिप्ते ।
तीक्ष्णं दग्धं पिष्टमम्लाम्भसा साधु चन्द्रिकाविरहितम् ॥ १३२ ॥
रेचितताम्रेण रसः खल्वशिलायां घृष्टः पिण्डिका कार्य्या ।

---

लौहं सामान्यम् । द्विगुणमिति—सामान्यलौहात् द्विगुणगुणकारकम् । औड्रमिति—उड्रदेशोद्भवम् । भद्रमिति—भद्रदेशोद्भवम् । एषाञ्च भेदो लक्षणञ्चोक्तटीकायामनुसन्धेयम्, इह तु विस्तरभयान्न लिखितम् ॥ १२७।१२८ ॥

सम्प्रति ताम्रयोगमाह, रसत इत्यादि ।—रसत इति—शोधितात् पारदात् ताम्रं वक्ष्यमाणक्रमेण मारितचूर्णावस्थं द्विगुणं ग्राह्यम् । कृष्णाभ्रञ्च वक्ष्यमाणरीत्या मारितं चूर्णावस्थं ताम्राद्द्विगुणं ग्राह्यम् । कृष्णेति अभ्रकविशेषणात् भेकवपुषो निरासः । एषां रसादीनां पृथगेव शुद्धिः, कार्य्येति शेषः । तत इति—तेषु मध्ये ताम्रशुद्धिं द्विधा आह, किं तत् प्रकारद्वयम् ? इत्याह, पत्रीकृतस्येत्यादि । मारणमिति छेदः । एतच्च "तनुपत्रीकृतं ताम्रम्" इत्यादि अनन्तरमेव वक्ष्यमाणताम्रयोगमभिधास्यमानं सूचितवान् । द्वितीयां शुद्धिमाह, तथा लवणैरित्यादि । लवणैः सैन्धवादिभिः पञ्चभिरेव । आर्द्रे इति—लिप्ते । निर्गुण्डी सिन्धुवारः, तदीयमूलपत्रकल्कयुक्तकाञ्जिकमग्ने इत्यर्थः । अत्र द्रुतरूपं यत् ताम्रं पतति तत् गैरिकवर्णाभमितमित्यर्थः । ताम्रादर्द्धं गन्धकं दत्त्वा तावदेकीकृत्य पेषणं, ततः स्थाल्यामारोप्य तुषवर्त्तिकया लिप्ता लौहवत् पुटो देयः इति ताम्रशुद्धिः । अभ्रकशुद्धिमाह, अभ्रकन्त्वित्यादि । प्रथमतोऽभ्रकम् अम्लाम्भसा काञ्जिकेन पिष्टं, तदनु ह्विलमोचिकामूलपिण्डं कृत्वा एकस्मिन् मृत्पात्रे निधाय अपरेण पिधाय तदनु मृत्तिकापात्रसम्पुटमध्ये छिद्रं कृत्वा तुषवर्त्तिकया प्रालिप्य तीक्ष्णमिति—बहुलं यथा स्यात् तथा दग्धं पुटितं सत् चन्द्रिकारहितं भवति, तदनु पुटादाकृष्य शिलायां पिष्ट्वा चूर्णीकृत्य तत् ग्राह्यमित्यर्थः ।

उत्स्वेद्या गृहसलिलेन निर्गुण्डीकल्केनासकृच्छुद्धौ ॥१२३॥
एतत् सिद्धं त्रितयं चूर्णिततात्राद्विकैः पृथग्युक्तम् ।
पिप्पलीविडङ्गमरिचैः सूक्ष्मं द्विनिमाषिकं भक्ष्यम् ॥१२४॥
शूलाम्लपित्तक्षयथुग्रहणीयक्ष्मादिकुक्षिरोगेषु ।
रसायनं महदेतत् परिहारो नियमतो नात्र ॥ १२५ ॥

सप्ताङ्गताम्रयोगः ।—

तनुपत्रीकृतं ताम्रं नैपालं गन्धकं समम् ।
दत्त्वा चोर्द्ध्वमधो मध्ये स्थालिकामध्यसंस्थितम् ॥१२६॥

---

अथ मारितताम्रचूर्णमिलितस्य रसस्य शुद्धिप्रकारमाह, रेचितेत्यादि। रेचित-ताम्रेण मारितताम्रेण सह रसः खल्वशिलायां मेलयित्वा घृष्ट्वा पिण्डिका कार्य्या, अन्योऽन्यविमर्दनेन एकीभावः कर्त्तव्य इत्यर्थः। तदनु निर्गुण्डी-कल्कमिश्रितेन गृहसलिलेन काञ्जिकेन सा पिण्डिका असकृदिति—अनेकवारमुत्-स्वेद्या। शुद्धाविति—शुद्ध्यर्थम्। उत्स्वेदनप्रकारश्चायं—सूतनियामकभार्ग्यादिगणान्य-तमद्रवे रसपिण्डितं मिलितरसताम्रचूर्णं दोलापाकेन निर्गुण्डीकल्कमिश्रितकाञ्जि-केनाधोज्वालया ताप्यमानेन उत्स्वेदनीयमसकृदित्यर्थः। सूतनियामकश्च भार्ग्यादिगणो योगरत्नाकरे यथा—“भार्गी शरपुङ्खा कुठारच्छिन्ना ब्राह्मी मूषिकपर्णिका पुनर्नवा अपराजिता अवाक्पुष्पी मेघनादा रुदन्ती मयूरशिखा चेति। भार्ग्यादिरेष विख्यातो गणः सूतनियामकः॥” इति। अग्नितापेनापि रसं क्वचिदपि च लिङ्गं (चलितुं ?) न ददातीत्यर्थः। सूतनियामकौषधमध्यगं रसं सकाञ्जिकदोलायन्त्रे पचेत्, तदनु त्रितयमिदं रसाभ्रताम्रचूर्णं पिप्पल्यादित्रयञ्च प्रत्येकं ताम्रचूर्णादर्द्ध-मानं गृहीत्वा संयोजनीयं, तत एकीकृत्य अग्निबलाद्यपेक्षया द्विनिमाषकादिक-मुपयोज्यम्। आदिशब्देन अर्शःप्रभृतयः। कुक्षिरोगेष्विति—अग्निमान्द्यादिष्वपी-त्यर्थः॥ १२३—१२५॥

ताम्रयोगान्तरमाह, तनुपत्रीकृतमित्यादि।—तनुपत्रीकृतमिति—पत्तलं यथा स्यात् तथा पत्रीकृतम्; पत्तलता च कण्टकवेध्यावस्थोपादानेन लभ्यते इति। नैपालमिति—नेपालदेशोद्भवं ताम्रम्। तानि च तनूनि ताम्रपत्राणि अनेकानि कृत्वा जम्बीराद्यम्लरसेन सम्मर्द्य प्रक्षाल्य संशोष्य च, तदनु ताम्रसममेव शोधितगन्धकं सञ्चूर्ण्य, तदनन्तरं स्थालिकायां कियदपि गन्धकचूर्णं दत्त्वा तदुपरि कियदपि तत्

कृत्वा स्वल्पशरावेण स्थालीमध्ये पिधाय च।
शर्कराभक्तलेपेन लिप्ता सन्धिं तदूर्द्ध्वतः ॥ १३७ ॥
वालुकापूरितस्थाल्यां पिहितायां पुनस्तया।
सुलिप्तायाञ्च यामैकमधोज्वालां प्रदापयेत् ॥ १३८ ॥
तत आकृष्टताम्रस्य मृतस्य क्रियते योजना।
अथ कर्षं गन्धकस्य वह्निस्थलौहपात्रगम् ॥१३९॥
शिलापुत्रेण सम्मर्द्य द्रुतं घृष्टं पुनः पुनः।
कृत्वा देयं मृतं ताम्रं कर्षमानं ततः पुनः ॥ १४० ॥
रसोऽम्लमथितः शुद्धस्तावन्मात्रः प्रदीयते।
ततस्तथैव सम्मर्द्य पुनराज्यं प्रदापयेत् ॥ १४१ ॥
अष्टविन्दुकमात्रञ्च मर्दयेन्मूर्च्छितं तथा।
सर्वं स्यात् तत आकृष्य शिलापुत्रादिसङ्गतम् ॥१४२॥

---

ताम्रपत्रं निवेश्य पुनस्तदुपरि गन्धकचूर्णं देयमित्येवं-क्रमेण सर्वाणि तानि ताम्रपत्राणि गन्धकचूर्णसहितानि उपर्य्यधोभावेन निवेश्य, ततोऽल्पशरावेण स्थाल्यन्तरनिवेश-योग्येन तत् ताम्रपुञ्जं पिधाय, तच्छरावप्रान्तञ्च शर्करासहितभक्तलेपेन लिप्ता तस्य शरावस्योपरिभागे तत् स्थालीपात्रं वालुकापूर्णं कृत्वा शरावान्तरेण तस्याः स्थाल्याः मुखं पिधाय तत्रापि भक्तलेपेन लिप्ता प्रहरमेकमविच्छेदेनाधो ज्वालां प्रदापयेत् इति ताम्रमारणम्। ततस्तत् मृतताम्रं स्थाल्याः समाकृष्य चूर्णयित्वा शोधित-गन्धकादिभिः सह योजनीयमित्याह, तत इत्यादि। कथं योजना कर्त्तव्येत्याह, अथेत्यादि। अथ ताम्रमारणानन्तरं शोधितगन्धकस्यापरचूर्णं कर्षमेकं ज्वलदङ्गारस्थ-लौहपात्रे कृत्वा शिलापुत्रेण सम्मर्द्य पौनःपुन्येन घृष्टा द्रवीभूते तस्मिन् तत् मृतताम्र-चूर्णं कर्षमानं देयं, दत्त्वा तथैव शिलापुत्रेण घर्षणीयम्। ततः पुनरिति—ततोऽनन्तरम् अग्नितापद्रुते एव तस्मिन् रसः पारदोऽपि तावन्मात्रः कर्षमान एव देयः, पुनस्तेनैव मर्दनीयः, किन्तु शिष्टो रसः अम्लमथितः शुद्धः चाङ्गेरीजम्बीराद्यम्ल-रसमथनाच्च शुद्धः; तदनु अष्टविन्दुपरिमितं घृतं दत्त्वा पुनर्मर्दयेत् शिलापुत्रेणैव तथा तेन प्रकारेण सर्वं गन्धकताम्रादिकं मूर्च्छितमेकीभूतं स्यात्। तत-स्तस्माल्लौहपात्रात् निःशेषमाकृष्य तथा शिलापुत्रादिसङ्गतं शिलापुत्रादिघर्षितं

संहृत्यालम्बुषरस-प्रस्रुतेन विलोड़ितम् ।
पुनस्तथैव वह्निस्थ-लौहपात्रे विमर्दयेत् ॥ १४३ ॥
यावत् द्रवक्षयं पश्चादाकृष्य सम्प्रपेषितम् ।
अलम्बुषरसेनैव गुड़कं सम्प्रकल्पयेत् ॥१४४॥
तत् पिण्डं वस्त्रविस्तीर्णे पिण्डे त्रिकटुजे पुनः ।
वसनान्तरिते दत्त्वा पोट्टलीं कारयेत् बुधः ॥१४५॥
ततस्तां पोट्टलीमाज्य-मग्नां कृत्वा विधारिताम् ।
सूत्रेण दण्डसंलग्नां पाचयेत् कुशलो भिषक् ॥१४६॥
यदा निष्फेनता चाज्ये पुटिका च दृढ़ा भवेत् ।
तदा पक्वं तमाकृष्य पञ्चगुञ्जातुलाघृतम् ॥ १४७ ॥
त्रिकटुत्रिफलाचूर्णं तुल्य प्रातः प्रयोजयेत् ।
तक्रं स्यादनुपानन्तु अम्लपित्तोपद्रुते पुनः ॥ १४८ ॥
त्रिफलैव समा देया कोष्णं वारि पिबेदनु ।
सप्तमे दिवसे रक्ति-वृद्धिस्ताम्रात्तु माषकम् ॥१४९॥

सुदृढ़मपि भूतं संहृत्य वर्त्तुलीकृत्य पलद्वयेनालम्बुषरसेन विलोड्य रसक्षयपर्य्यन्तं पुनर्वह्निस्थलौहपात्रे मर्दयेत्, तत आकृष्य अलम्बुषरसेनैव शिलायां पिष्ट्वा गुड़िकां कल्पयेत्। तदनन्तरं किं विधेयम्? इत्याह, तत् पिण्डमित्यादि। ततः कतिपयाङ्गुलवस्त्रखण्डे पिण्डानुरूपं त्रिकटुकं दत्त्वा विस्तार्य्य तदुपरि अपरवितताति-निर्मलवस्त्रखण्डे तं ताम्रौषधगुड़कं निधाय ततो दृढ़ां पोट्टलिकां बद्ध्वा, घृत-पूर्णमार्त्तिकस्थालीपात्रे सूत्रेण दण्डसंलग्नतया दोलापाकविधिना तां पोट्टलीं तत्रारोप्य घृतनिमग्नां कृत्वा पचेत्। पाकज्ञानार्थमाह, यदेत्यादि। पुटिका च दृढ़ा भवे-दिति—पुटिका पोट्टलिका, तस्या दृढ़ता च दण्डिकया ताड्य ज्ञेया। त्रिकटुत्रिफला-चूर्णयोस्र मिलित्वैव पञ्चगुञ्जेति ताम्रतुल्यम्। प्रातरिति—अर्द्धप्रहरे। अनुपानमाह, तक्रं स्यादित्यादि। अम्लपित्ते तु त्रिकटुचूर्णं परित्यज्य त्रिफलैव ताम्रतुल्या देया, तथा तक्रञ्च परित्यज्य उष्णजलमेवानुपेयमित्याह, अम्लपित्तोपद्रुते इत्यादि। त्रिफलैव समा देया इति—त्रिफलैव ताम्रतुल्या देयेत्यर्थः। तथा कोष्णजलम् अनुपिबेदिति। वृद्धिक्रममाह, सप्तमे इत्यादि। सप्तमे इत्यत्र वीप्सा ज्ञेया, तेन सप्तमे सप्तमे दिवसे

यावत् प्रयोगस्य तथैवापकर्षः पुनर्भवेत्। —
योगोऽयं ग्रहणीयक्ष्म-पित्तशूलाम्लपित्तहा ॥ १५० ॥
रसायनञ्चैतदिष्टं गुदकीलादिनाशनम्।
न चात्र परिहारोऽस्ति विहाराहारकर्मणि ॥ १५१ ॥

इति ताम्रयोगः।

शिलाजतुस्वरूपम्।—

हेमाद्याः सूर्य्यसन्तप्ताः स्रवन्ति गिरिधातवः।
जत्वाभं मृदु मृत्स्नाच्छं यन्मलं तच्छिलाजतु ॥ १५२ ॥

शिलाजतुनः सामान्यलक्षणम्।—

अनम्लञ्चाकषायञ्च कटुपाकि शिलाजतु।
नात्युष्णशीतं धातुभ्यश्चतुर्भ्यस्तस्य सम्भवः ॥
हेम्नोऽथ रजतात् ताम्राद्वरं कृष्णायसादपि ॥ १५३ ॥

---

र्द्धनं कर्त्तव्येत्यर्थः। येनैव क्रमेण वृद्धिः कार्य्या तेनैव क्रमेण ह्रासोऽपीत्याह, तथैवापकर्षः पुनर्भवेदिति। केचित्तु वृद्धवैद्याः त्रिफलाव्यतिरेकेण द्विविरक्तिकमिदमौषधं मधुना समालोड्य ददति, तेनैव महान् विशेषो दृश्यते। गुदकीलादिनाशनमित्यादिशब्दात् पाण्डुरोगादयः ॥ १२६—१५१ ॥

इति ताम्रयोगः।

इदानीं चरकोक्तशिलाजतुरसायनमाह, हेमाद्या इत्यादि।—गिरिगता धातवो गिरिधातवः, हेमाद्या इति तद्विशेषणम्। आद्यशब्दात् लौहरूप्यताम्रत्रपुसीसगैरिकमनःशिलादीनामपि ग्रहणम्; अत एवोक्तं हारीते—"सुवर्णरूप्यत्रपुसीसताम्रलौहादिकस्यापि मनःशिला च" इत्यादि। हेमादिशब्देनेह हेमादिसम्भवस्थानभूताः शिला उच्यन्ते, यतो न साक्षात् सुवर्णादिभ्य एव शिलाजतु भवति। शिलाजतुसामान्यलक्षणमाह, जत्वाभमित्यादि। मृत्स्नं मसृणम्। अच्छं स्वच्छम् ॥ १५२ ॥

अनम्लमित्यादि।—अत्रानम्लमित्यादि विशिष्टप्रतिषेधस्य शेषाद्यनुज्ञाफलकं, तथा रसचतुष्टयस्यात्र विधिः। नात्युष्णशीतमिति शीतोष्णयोर्बलवत्त्वं निषिध्यते, तेन किञ्चिदुष्णं किञ्चिच्छीतलं वा शिलाजतु भवतीत्यर्थः। धातुभ्यश्चतुर्भ्य इति रसायनाधिक्यात्, तेन "सुवर्णरूप्यत्रपुसीस" इत्यादिना हारीतेन यदेवं विविधधातुसम्भवत्व-

सुवर्णनिस्रुतशिलाजतुलक्षणम् ।—

मधुरश्च सतिक्तश्च जवापुष्पनिभश्च यत् ।
विपाके कटु शीतश्च तत् सुवर्णस्य निःस्रवम् ॥१५४॥

रजतताम्रनिस्रुतशिलाजतुद्वयलक्षणम् ।—

राजतं कटुकं श्वेतं स्वादु शीतं विपच्यते ।
ताम्राद्बर्हिणकण्ठाभं तिक्तोष्णं पच्यते कटु ॥१५५॥

लौहनिस्रुतशिलाजतुलक्षणम् ।—

यत्तु गुग्गुलुसङ्काशं तिक्तकं लवणान्वितम् ।
विपाके कटु शीतञ्च सर्वश्रेष्ठं तदायसम् ॥१५६॥

एतेषु यस्य यत्र उपयोगिता तन्निर्देशः ।—

गोमूत्रगन्धि सर्वेषां सर्वकर्मसु यौगिकम् ।
रसायनप्रयोगेषु पश्चिमन्तु विशिष्यते ॥१५७॥

---

क्रमेण हेमादिसम्भवानां चतुर्णां लक्षणमाह मधुरमित्यादि ।—च-कारात् स्निग्धत्वादिकं बोध्यम् ; यदाह हारीतः,—"स्निग्धं घनं काञ्चनगैरिकाभं सतिक्तशीतं मधुरं सुवर्णात्" इति । अत्र शिलाजतुसामान्यगुणकथने अम्लकषायव्यतिरिक्तरस-चतुष्टयमुक्तं, तथा कटुपाकीत्यप्युक्तं, तेन विशिष्टगुणकथने पुनर्यो रसोऽभिधीयते तदोत्कर्षवानिति ज्ञेयं, सामान्यगुणोक्तरसोऽनुक्तोऽपि लभ्यते एव । यस्तु रौप्यभवे कटुरसे विरुद्धो मधुरपाक उक्तः, स उत्सर्गापवादन्यायेन समर्थनीयः । अन्ये तु स्वादु विपच्यते इत्यस्य मधुरविरुद्धं पच्यते इत्यर्थः, तेन कटु पच्यते इत्याहुः ; अत एव हारीते विदाहित्वमस्य यदुक्तं तदप्युपपद्यते ; यथा—"रौप्याकरोत्थन्तु मृणालवर्णं सक्षारकं तत् कटुकं विदाहि" इति युक्तिमुपवर्णयन्ति । अत्र वीर्य्यं ताम्रभवस्योष्ण-मुक्तं, तथाऽऽयसानाञ्च शीतमुक्तं, तेन नात्युष्णशीतवीर्य्यतयोः सामान्यगुणोक्तयोरव-काशो नास्तीति केचिदाहुः, तन्न युक्तम् ; यतो नात्युष्णशीतपदेन नात्युष्णशीतत्वं विधीयते, किन्तु शीतोष्णयोर्बलवत्त्वमात्रं निषिध्यते, तेन किञ्चिच्छिलाजतु शीतम् उष्णञ्च किञ्चिच्छिलाजतु भवतीति प्रागेव व्याख्यातम् । ताम्रभवशिलाजतुगुण-कथने तिक्तोष्णमित्यत्र "तीक्ष्णोष्णम्" इति केचित् पठन्ति, तन्मते ताम्रजे यद्यपि रसो नोक्तस्तथाऽपि सामान्योक्तचतूरसत्वमेव सानुभवरसभावेन ज्ञेय-मित्यर्थमाहुः ॥ १५४—१५६ ॥

गोमूत्रगन्धीत्यादि ।—पश्चिममिति—आयसम् ॥ १५७ ॥

यस्मिन् दोषे यस्य उपयोगिता तन्निर्देशः।—

यथाक्रमं वातपित्ते श्लेष्मपित्ते कफे त्रिषु।
विशेषेण प्रशस्यन्ते मला हेमादिधातुजाः॥ १५८॥

उत्कृष्टशिलाजतुलक्षणम्।—

लोहकिट्टायते वह्नौ विधूमं दह्यतेऽम्भसि।
तृणाद्यग्रे कृतं श्रेष्ठमधो गलति तन्तुवत्॥१५९॥

शिलाजतुशोधनम्।—

मलिनं यद्भवेत् तच्च क्षालयेत् केवलाम्भसा।
लौहपात्रेषु विधिना ऊर्द्ध्वीभूतञ्च संहरेत्॥१६०॥

---

यथाक्रममित्यादि।—यथाक्रममिति—वातपित्ते सौवर्णं, श्लेष्मपित्ते रौप्यजं, कफे ताम्रजं, त्रिदोषजे लौहजमित्यर्थः॥ १५८॥

श्रेष्ठशिलाजतुनो लक्षणमाह, लोहकिट्टायते इत्यादि।—यत् शिलाजतु वह्नौ विगतधूमं सत् सन्दह्यते, लौहमलवच्च भवति तच्छ्रेष्ठम्। परीक्षान्तरमाह, अम्भसी-त्यादि। अम्भसि कृतं जले क्षिप्तं सत् अग्रे प्रथमतः तृणाति प्लवते, ततः तन्तुवत् गलति अधस्तात् तन्तुवल्लम्बते, तत् शिलाजतु श्रेष्ठमित्यर्थः॥ १५९॥

शिलाजतुशोधनमाह, मलिनमित्यादि।—अम्भसा उष्णोदकेन। लौहपात्रेषु भाजनाकारलौहपात्रेषु। विधिनेति—हारीतोक्तशिलाजतुशोधनविधिना। ऊर्द्ध्वीभूतं सरवदूर्द्धमुत्थितं यत् तत्, संहरेत् सङ्गृह्णीयात्,: काचादिनिर्मलपात्रे स्थापयेदित्यर्थः। तत्रायं शोधनविधिः,—प्रथमं केवलं शिलाजतु जले धौतं कृत्वा तदनु कीटादिदुष्टी-क्षितदोषविनाशाय अगुरुतुवरीनिम्बपत्रयवगुडूचीघृतैर्धूपयित्वा, तदनु शुष्कं चूर्णीकृत्य, तदनु भाजनाकारलौहपात्रे कृत्वा दशमूलकषायं त्रिफलाक्वाथं वा केवलोष्णोदकं वा प्रक्षिप्य विमर्द्य लौहमुषलिकया तरलीकृत्य प्रचण्डातपे स्थापनीयं, तत्र च प्रचण्डातपावस्थानेन सरवदूर्द्धं यदुत्तिष्ठति तत् पुनर्गृहीत्वा काचादिनिर्मलपात्रे स्थाप्यम्, एवमशुद्धं शिलाजतु भावनायां योज्यम्; उक्तं हि हारीते—"तत् ग्राहयित्वा कनकसी विसृज्य देशे शुचौ मङ्गलसिद्धियुक्ते। तिथौ च पुण्ये सुदिने च युक्ते नक्षत्रयोगेन शिवेन चापि॥ लौहाढकीनिम्बगुडूचीसर्पिर्यवैर्यथावत् परिधूपयेच्च। सत्त्वात्रिकाकीटपतङ्गदंशक्षुद्रौषधीदोषविनाशनं तत्॥" इति॥ १६०॥

चरकोक्तभावनाविधिः।—

वातपित्तकफघ्नैस्तु निर्य्यूहैस्तत् सुभावितम्।
वीर्य्योत्कर्षं परं याति सर्वैरेकैकशोऽपि वा॥ १६१॥
प्रक्षिप्योद्धृतमावानं पुनस्तत् प्रक्षिपेद्रसे।
कोष्णे सप्ताहमेतेन विधिना तस्य भावना॥१६२॥

तन्त्रान्तरीयभावनाविधिः।—

तुल्यं गिरिजेन जले चतुर्गुणे भावनौषधं क्वाथ्यम्।
ततः क्वाथे पादांशे पूतोष्णे प्रक्षिपेद्गिरिजम्॥ १६३॥
तत् समरसतां यातं संशुष्कं प्रक्षिपेद्रसे भूयः॥ १६४॥

शिलाजतुरसायनम्।—

पूर्वोक्तेन विधानेन लोहैश्चूर्णीकृतैः सह।
तत् पीतं पयसा दद्यात् दीर्घमायुः सुखान्वितम्॥१६५॥
जराव्याधिप्रशमनं देहदार्ढ्यकरं परम्।
मेधास्मृतिकरं धन्यं क्षीराशी तत् प्रयोजयेत्॥ १६६॥

---

इदानीं चरकोक्तभावनाविधिमाह, वातपित्तेत्यादि।—निर्य्यूहः क्वाथः। सुभावितमिति सप्ताहम्। सर्वैरिति—वातघ्नादिक्वाथैः। भावनातः किं स्यात्? इत्याह, वीर्य्योत्कर्षमित्यादि। प्रक्षिप्येत्यादि। रसे वातघ्नादिक्वाथे कोष्णे तच्छिलाजतु प्रक्षिप्य पश्चादावानं तपने शुष्कं तत् पुनरपि तद्रसे प्रक्षिपेत्। वानं शुष्कं, "शुष्के वानमुभे त्रिषु" इत्यमरः॥ १६१।१६२॥

इदानीं भावनार्थं द्रव्यमानादिकमाह, तुल्यमित्यादि तन्त्रान्तरस्य।—गिरिजेन शिलाजतुना तुल्यं भावनौषधं दशमूलादिद्रव्यं क्वाथ्यम्। तत् समरसतां यातमिति—तत् शिलाजतु क्वाथेन सह समरसतामिति—आलोड़नेन एकीभूय सत् तुल्यरसतां गतमित्यर्थः॥ १६३।१६४॥

एवं-शुद्धं भावितञ्च शिलाजतु लोहचूर्णेन सार्द्धमेकीकृत्य दुग्धेन पातव्यमित्याह, पूर्वोक्तेनेत्यादि चरकस्य।—पूर्वोक्तेनेति—चरके एव करप्रचितिके रसायनपादे पूर्वोक्तो विधिः। अत्र भागानुक्त्या शिलाजतुलोहचूर्णयोः समत्वं कश्चिदाह, तन्न; शिलाजतुनोऽधिकृतत्वात् प्राधान्यात् तदपेक्षयैव पादिकस्य लोहचूर्णस्य न्याय्यत्वात्; हारीतेऽप्येवमेवोक्तम्. "अयश्चूर्णैश्चतुर्थभागैः" इत्यादि। क्षीराशी क्षीरप्रधान-भोजनकारी॥ १६५।१६६॥

प्रयोगवैविध्यनिर्देशः ।—

प्रयोगः सप्त सप्ताहास्त्रयश्चैकश्च सप्तकः ।
निर्दिष्टस्त्रिविधस्तस्य परो मध्योऽवरस्तथा ॥ १६७ ॥

मात्रानियमः ।—

मात्रा पलन्त्वर्द्धपलं स्यात् कर्षन्तु कनीयसी ॥ १६८ ॥

वर्जनीयानि ।—

शिलाजतुप्रयोगेषु विदाहीनि गुरूणि च ।
वर्जयेत् सर्वकालञ्च कुलत्थान् परिवर्जयेत् ॥ १६९ ॥

शिलाजतुनः आलोड़नीयद्रव्याणि ।—

पयांसि शुक्तानि रसाः सयूषा-
स्तोयं समूत्रं विविधाः कषायाः ।
आलोड़नार्थे गिरिजस्य शस्ता-
स्ते ते प्रयोज्याः प्रसमीक्ष्य कार्य्यम् ॥ १७० ॥

---

इदानीमेतत्प्रयोगस्य कालभेदेन वैविध्यमाह, प्रयोग इत्यादि ।—सप्त सप्ताहाः एकोनपञ्चाशदहानि, तद्व्यापकप्रयोग इत्यर्थः; एवं त्रयश्चैकश्च सप्तक इति बोध्यम ॥ १६७ ॥

भक्षणार्थं विविधां मात्रामाह—मात्रेत्यादि ॥ १६८ ॥

अस्मिन् प्रयोगे वर्ज्यमाह, शिलाजतुप्रयोगेष्वित्यादि ।—विदाहीनि वंशकरीर-मरिचराजिकादीनि । शिलाजतुप्रयोगे गुरुद्रव्यनिषेधेऽपि गुरुचीरादिप्रयोगाभिधानम् उत्सर्गापवादन्यायेन न विरुद्धमिति । केचित् कुलत्थानिति—कुलत्थादीन्, तेन काकमाची-कपोतयोरपि ग्रहणम्; उक्तं हि वाग्भटे—"कुलत्थान् काकमाचीञ्च कपोतांश्च सदा त्यजेत्" (उ० ३९ अ०) इत्याहुः । सर्वकालमिति—यावद्रसायनहिता गुणास्तिष्ठन्ति । केचित्तु, यावज्जीवनं कुलत्थवर्जनमाहुः; कुलत्थस्य सर्वकालवर्जने उपपत्तिश्चरकेणैव उक्ता, यथा—"ते ह्यत्यन्तविरुद्धत्वादश्मनो भेदनाः परम् । लोके दृष्टास्ततस्तेषां प्रयोगः प्रतिषिध्यते ॥" (चि० करप्रचितीयरसा०) इति ॥ १६९ ॥

यैर्द्रव्यैरालोड्य शिलाजतु पेयं तान्याह—पयांसीत्यादि चरकस्य ॥ १७० ॥

उपसंहारः।—

चरकोक्तशिलाजतुविधानं सोपस्कारमेतत्॥ १७१॥

शिवागुड़िका।—

काले तु रवितापाढ्ये कृष्णायसजं शिलाजतुप्रवरम्।
त्रिफलारससंयुक्तं त्र्यहञ्च शुष्कं पुनः शुष्कम्॥ १७२॥
दशमूलस्य गुडूच्या रसे बलायास्तथा पटोलस्य।
मधुकरसैर्गोमूत्रे त्र्यहं त्र्यहं भावयेत् क्रमशः॥ १७३॥
एकाहं क्षीरेण तु तत् पुनर्भावयेच्छुष्कम्।
सप्ताहं भाव्यं स्यात् क्वाथेनैषां यथालाभम्॥ १७४॥
काकोल्यौ द्वे मेदे विदारीयुग्मं शतावरी द्राक्षा।
ऋद्धियुगर्षभवीरामुण्डितिका जीरकोऽश्मत्यौ च॥ १७५॥

---

चरकोक्तेत्यादि।—सोपस्कारमिति चरके शिलाजतुपरीक्षादिकं नोक्तम्, अत्र पुनः "लोहकिट्टायते" इत्यादिना तदप्युक्तमिति सोपस्कारत्वम्॥ १७१॥

चरकोक्तशिलाजतुविधिमभिधाय शैवतन्त्रोक्तप्रसिद्धशिलाजतुप्रयोगं शिवागुड़िकामाह, काले इत्यादि।—रवितापाढ्ये इति विशेषणात् ग्रीष्मे इति यावत्; अन्ये तु शरदमप्याहुः। शिलाजतुनोऽत्र षोड़शपलमात्रा, वक्ष्यति च "पलानि दश षट् च" इति, तेन तन्मानसम मिलितत्रिफलाद्रव्यं गृहीत्वा क्वाथयित्वा त्र्यहं भावना कर्त्तव्येत्याह, त्रिफलेत्यादि। त्रिफलारससंयुक्तं तच्छुष्कं पुनस्त्रिफलारससंयुक्तं तच्छुष्कम्, एवं त्र्यहं भावयेदित्यर्थः। अत्र "तुल्यं गिरिजेन जले" इत्यादि पूर्वोक्तवचनानुसारेण त्रिफलाक्वाथं कृत्वा त्र्यहं भावना कार्य्येत्यर्थः। एवं दशमूलक्वाथादिभिर्गोमूत्रान्तैरपि त्र्यहं त्र्यहं क्रमेण भावयेदित्याह, दशमूलस्येत्यादि। क्षीरेण पुनरेकाहमिति—क्षीरेण एकाहमेव भावयेदित्यर्थः। वक्ष्यमाणकाकोल्यादिक्वाथेन पुनः सप्ताहं भावना कर्त्तव्येत्याह, सप्ताहं भाव्यं स्यादिति। एषामिति—वक्ष्यमाणकाकोल्यादीनाम्। यथालाभमिति वचनात् इन्द्रयवकटुरोहिण्यादिव्यतिरेकेणापि। विदारीयुग्ममिति—विदारी-क्षीरविदार्य्यौ। क्षीरविदार्य्याश्च लक्षणं—"क्षीरशुक्ला दीर्घकन्दा चातिमधुरा क्षीरविदारी" इति भग्नचिकित्सोक्तगन्धतैलव्याख्यायां गदाधरेणोक्तम्; सा हि सुगन्धा दुर्गन्धा च। ऋद्धियुगं ऋद्धिवृद्धी। वीरा मांसीति त्रिविक्रमः, जलजम्बूकमिति रत्नप्रभा।

रास्नापुष्कारादित्रकदन्तीभल्लातकलिङ्गवत्साह्वाः ।
कटुका शृङ्गीपाठे तानि पलांशिकानि कार्य्याणि ॥ १७६ ॥
अब्द्रोणे साधितानां रसेन पादांशिकेन भाव्यानि ।
गिरिजस्यैवं भावितशुद्धस्य पलानि दश षट् च ॥ १७७ ॥
द्विपलञ्च विश्वमागधिकाकटुककर्कटाख्यमरिचानाम् ।
चूर्णं पलञ्च विदार्य्यास्तालीशपलानि चत्वारि ॥ १७८ ॥
षोड़श सितापलानि चत्वारि घृतस्य माक्षिकस्याष्टौ ।
तिलतैलस्य द्विपलं चूर्णाद्द्विपलानि पञ्चानाम् ॥ १७९ ॥
त्वक्क्षीरिपत्रत्वङ्नागैलानां मिश्रयित्वा तु ।
गिरिजस्य षोड़शपलैर्गुड़िकाः कार्य्यास्ततोऽक्षसमाः ॥१८०॥

---

काकोल्यौ इति—क्षीरकाकोली। अंशुमत्यौ शालपर्णीपृश्निपर्ण्यौ। इभकणा गजपिप्पली। कटुका कटुरोहिणी। एतान्यष्टाविंशतिद्रव्याणि लिखितानि। वाग्भटे तु रसायनतन्त्रपठितशिवागुड़िकापाठे ऋद्धिऋषभकादिषड्द्रव्याणि पठ्यन्ते; तत् यथा—"ऋद्धिऋषभकौ मुण्डिरीन्द्रयवौ कटुरोहिणी कर्कटशृङ्गी च" (?) इति। तदेवमुभयाचार्य्यप्रामाण्यादुभयथैव प्रयोगसङ्गतिरभ्युपेया। अस्याः पिप्पल्यादिवत् गणत्वविवक्षया यथालाभवचनादेतानि षोड़शद्रव्याणि न गृह्यन्तेऽपीति केचित्। एषाञ्चाष्टाविंशतिद्रव्याणां प्रत्येकं पलिकानां क्वथनार्थदेयजलद्रोणसाधितशेषक्वाथषोड़शशरावैः सप्तधा विभक्तैः सप्त दिनानि भावनाः सप्त कर्त्तव्याः, किन्तु सप्तदिनैः क्वाथस्याम्लता भवति, ततश्चैषामष्टाविंशतिद्रव्याणां प्रत्येकं पलिकानां सप्तदिनविभागेन पलचतुष्टयं मिलित्वा ग्राह्यं, तेन प्रतिदिनं पलचतुष्टयविभागेन काकोल्यादीनां प्रत्येकं माषा ६, रक्तिका २ ग्राह्यम्, एवं जलद्रोणस्यापि सप्तदिनविभागेन देयजलशराव ९, पल १, माषा ९, रति १, अस्य पादावशिष्टतया क्वाथ्य जल श २, पल २, कर्ष १, माषा २; अस्मिन् क्वाथे पूतोष्णे प्रतिदिनं शिलाजतुभावना, एवं सप्ताहं कर्त्तव्यम्। दश षट् चेति—षोड़शेत्यर्थः। यद्यपि निर्देशस्य मानप्रधानत्वात् विश्वादीनां मरिचान्तानां मिलितेन पलद्वयं युज्यते, तथाऽपि वाग्भटप्रामाण्यात् प्रत्येकमेव द्विपलं ग्राह्यम्। पञ्चानामिति—त्वक्क्षीर्य्यादीनागान्तानां प्रत्येकमर्द्धपलं वाग्भटदर्शनादेव। त्वक्क्षीरी वंशलोचना। गिरिजस्य षोड़श-

ताः शुष्का नवकुम्भे जातीपुष्पाधिवासिते स्थाप्याः।
तासामेका काले भक्ष्या पेयाऽपि वा सततम्॥ १८१॥
क्षीररसदाड़िमरसाः सुरासवं मधु च शिशिरतोयानि।
आलोड़नानि तासामनुपाने वा प्रशस्यन्ते॥ १८२॥
जीर्णे लघ्वन्नपयोजाङ्गलौनिर्य्यूहयूषभोजी स्यात्।
सप्ताहं यावदतः परं भवेत् सर्वं सामान्यम्॥ १८३॥
भुक्ताऽपि भक्षितेयं यदृच्छया नावहेद्भयं किञ्चित्।
निरुपद्रवा प्रयुक्ता सुकुमारकैः कामिभिश्चैव॥ १८४॥
संवत्सरप्रयुक्ता हन्त्येषा वातशोणितं प्रबलम्।
बहुवार्षिकमपि गाढ़ं यक्ष्माणञ्चाढ्यवातञ्च॥ १८५॥
ज्वरयोनिशुक्रदोषप्लीहार्शःपाण्डुहृद्ग्रहणीरोगान्।
अश्मरिगुल्मपीनसहिक्काकासारुचिश्वासान्॥ १८६॥
जठरं श्वित्रं कुष्ठं षाण्ड्यं क्लैव्यं मदं क्षयशोषम्।
उन्मादापस्मारौ वदनाक्षिशिरोगदान् सर्वान्॥ १८७॥
आनाहमतीसारं सासृग्दरं कामलाप्रमेहांश्च।
यकृदर्बुदानि विद्रधिभगन्दरं रक्तपित्तञ्च॥ १८८॥
अतिकार्श्यमतिस्थौल्यं स्वेदमथ श्लीपदञ्च विनिहन्ति।

---

मलैर्मिश्रयित्वेति योज्यम्। इह सर्वेष्वेव शिलाजतुप्रयोगेषु कर्त्तव्येषु प्रथमं शोधनं विधाय तिक्तकघृतं द्व्यहं त्र्यहं वाऽपि बलानुरूपप्रमाणं दातव्यं, यथा स्निग्धो भवति; तदुक्तं तन्त्रप्रदीपे—"संशुद्धकायो विमलेन्द्रियश्च प्रशस्तनक्षत्रमुहूर्त्तयोगे। पिबेत् घृतं तिक्तकषायसिद्धं द्व्यहं त्र्यहं वाऽपि बलानुरूपम्॥" इति; "यथा हि शस्त्रं कवचावृताङ्गं मर्त्यं न हन्याद्बहुधा प्रयुक्तम्। स्नेहाधिकस्यापि शिलाजमेवं देहं न हन्यात् बलवर्णदायि॥" इति च। अक्षसमा आत्युत्तममात्रा, अतस्तदनुसारेण मध्यमाधमपुरुषापेक्षया मात्रोह्या। यदृच्छया इति—अनियमेन, तेन कदाचित् भुक्ताऽपि भक्षिता सती विकारं न जनयेदित्यर्थः। आढ्यवातः ऊरुस्तम्भः। सहज-हेतुजक्लैव्यद्वयपरिग्रहार्थं षाण्ड्यं क्लैव्यमित्युभयपदोपादानं बोध्यम्। यद्यपि बीजदोषोत्पन्नसहजक्लैव्यमसाध्यत्वेनोक्तं, तथाऽपि प्रयोगमाहात्म्यसूचनार्थमिदमुक्तम्।

दंष्ट्राविषं समौलं गराणि च बहुप्रकाराणि ॥ १८९ ॥
मन्त्रौषधिप्रयोगान् विप्रयुक्तान् भौतिकांस्तथा भावान् ।
पापालक्ष्मी चेयं शमयेद्गुडिका शिवा नाम्ना ॥ १९० ॥
बल्या वृष्या धन्या कान्तियशःश्रीप्रजाकरी चेयम् ।
दद्यान्नृपवल्लभतां जयं विवादे सुखस्था च ॥ १९१ ॥
श्रीमान् प्रकृष्टमेधाः स्मृतिबुद्धिबलान्वितोऽतुलशरीरः ।
पुष्ट्योजोऽतिविमलेन्द्रियतेजोबलसम्पदुपेतः ॥ १९२ ॥
वलीपलितरोगरहितो जीवेच्छरदां शतद्वयं पुरुषः ।
संवत्सरप्रयोगात् द्वाभ्यां शतानि चत्वारि ॥
सर्वामयजित् कथितं मुनिगणभक्ष्यं रसायनरहस्यम् ॥ १९३ ॥

शिलाजतुनः प्रागुत्पत्तिनिर्देशः ।—

समुद्रभूवामृतमन्थनोत्थः स्वेदः शिलाभ्योऽमृतवद्गिरेः प्राक् ।
यो मन्दरस्यात्मभुवा हिताय न्यस्तः स शैलेषु शिलाजरूपी ॥ १९४ ॥

शिवागुडिकाया व्युत्पत्तिः ।—

शिवागुडिकेति रसायनमुक्तं गिरीशेन गणपतये ।
शिववदनविनिर्गता यस्मान्नाम्ना तस्माच्छिवा गुडिका ॥ १९५ ॥

इति शैवसिद्धान्तोक्ता शिवागुडिकेयम् ।

इति शिलाजतुविधानम् ।

अमृतभल्लातकी ।—

सुपक्वभल्लातफलानि सम्यक् द्विधा विदार्य्याढकसम्मितानि ।

गराणि संयोगजविषाणि । भौतिकान् भावानिति—भूतकृताः पीड़ाः । संवत्सर-प्रयोगादिति पूर्वेण सम्बध्यते । द्वाभ्यामिति—संवत्सरद्वयेनेत्यर्थः ॥ १७२—१९२ ॥

शिलाजतुनः प्रागुत्पत्तिमाह, समुद्रभूवेत्यादि ।—अमृतमन्थनोत्थ इति—अमृत-मन्थनसमयजः । हितायेत्यादि । हितायेत्यत्र जगतामिति शेषः ॥ १९४ १९५ ॥

इति शिवागुडिका ।

इति शिलाजतुविधानम् ।

अमृतभल्लातकीमाह, सुपक्वेत्यादि ।—भल्लातकान्यत्र हारीतोक्तामृतभल्लातकी-स्वरसरीत्या ग्राह्याणि ; यथा—"भल्लातकानां पवनोद्धृतानां वृन्तच्युतानामिह आढ़कं

विपाच्य तोयेन चतुर्गुणेन चतुर्थशेषे व्यपनीय तानि ॥ १९६ ॥
पुनः पचेत् क्षीरचतुर्गुणेन
घृतांशयुक्तेन घनं यथा स्यात्।

स्यात्। तच्चेष्टकाचूर्णकणैर्विघृष्य प्रक्षाल्य धीरो विधिवत् प्रभाते ॥ शुष्कं पुनः खण्डितानि ततः पचेदप्सु चतुर्गुणासु। पादावशिष्टं परिपूतशीतं क्षीरेण तुल्येन पुनः पचेत्तु ॥ तत् पादशिष्टं पुनरेव शीतं घृतेन तुल्येन पचेत् सुशीतम्। तदर्द्धया शर्करयाऽवकीर्य्य ततः खजेनोन्मथितं विधाय ॥ भाण्डे विशुद्धे त्वथ धान्यराशौ संस्थापयेत् सप्त दिनानि चैव। तत् सप्तरात्रात् परिजातवीर्य्यम्—" इत्यादि। अत्र भल्लातकानां चतुःषष्टिपलानि, तदपेक्षया चतुर्गुणं जलं गृह्यमाणं द्रवद्वैगुण्यात् चतुःषष्टिशरावपरिमितं यद्यपि भवति, तथाऽपि वक्ष्यमाणतन्त्रान्तरीयवाक्यैकवाक्यताऽनुरोधात् आढ़के पलविवक्षां विधाय पलोल्लेखागतत्वेन द्वैगुण्यं न विधेयं, तथा क्वचित् पलोल्लेखविधानेऽपि तन्त्रान्तरीयवाक्यैकवाक्यताऽनुरोधात् पलोल्लेखागते द्रव्येऽपि कुड़वादिविवक्षायां द्वैगुण्यं भवति। तथाऽपि चरके क्षतक्षीणचिकित्सिते—"मधुकाष्टपलं द्राक्षाप्रस्थक्वाथः" (चि०) इत्यादिना यः प्रयोग उक्तः, स जतूकर्णे "द्राक्षाप्रस्थः मधुकार्द्धप्रस्थक्वाथः" इत्यादि ग्रन्थेन पठितः, तेन जतूकर्णे मधुकस्यार्द्धप्रस्थोल्लेखपाठात् कृतद्वैगुण्यमेव जलं भवति, तत्प्रत्ययाच्चरकेऽपि मधुकाष्टपलोल्लेखविहितेऽपि क्वाथ्ये कुड़वद्वयविवक्षया कृतद्वैगुण्यमेव जलं दीयते; तद्वदत्रापि आढ़के पलविवक्षां विधाय द्वैगुण्यं न कार्य्यम्। तदेव तन्त्रान्तरीयवाक्यं यथा—"भल्लातकाढ़कं चूर्णं जलाढ़कद्वये शृतम्। पादशेषे रसे तस्मिन् घृतप्रस्थसमन्विते ॥ क्षीराढ़कं ततो दत्त्वा सितायाः प्रस्थमेव च। तावच्च साधयेद्धीमान् यावल्लेहत्वमागतम् ॥ अर्शसां नाशनं श्रेष्ठं दीपनं कुष्ठनाशनम्। अम्लपित्तापहं प्रोक्तं वाजीकरणमुत्तमम् ॥ अग्निवृद्धिकरञ्चैव बलकृत पुष्टिवर्द्धनम् ॥" इति। केचित्तु "क्षीराढ़कं ततो दत्त्वा" इत्यत्र "क्षीरप्रस्थद्वयम्" इति पठित्वा अस्य प्रयोगस्य योगान्तरत्वं मन्यमानाः सुपक्वभल्लातकेत्यादि चक्रसङ्गृहीतयोगे जलस्य द्वैगुण्यमिच्छन्ति; किन्तु परमेश्वररचितादिसङ्ग्रहे क्षीराढ़कमित्येव पाठो दृश्यते, एकवाक्यता च तदेव सङ्गच्छते। वृद्धवैद्यव्यवहारश्चाद्वैगुण्येन दृश्यते, तेनायमेव पाठः साधीयान्; हारीतमतन्तु मतान्तरमेवेति न्याय्यं, यतस्तत्र परिमाणे इतिकर्त्तव्यतायाञ्च महदेवान्तरम्। घृतांशमिति—घृतप्रस्थम्। चतुर्भागावशिष्टं क्वाथमपेक्ष्य घृतस्यार्द्धांशता; उक्तेन क्वाथेन घृतस्यार्द्धांशं पचेदिति योज्यम्। क्षीरस्य चातुर्गुण्यं घृतापेक्षया, अत एव

खितोपलाषोड़शभिः पलैस्तु
विमिश्र्य संस्थाप्य दिनानि सप्त ॥ १९७ ॥
ततः प्रयोज्याग्निबलेन मात्रां
जयेत् गुदोत्थानखिलान् विकारान्।
कचान् सुनीलान् घनकुञ्चिताग्रान्
सुपर्णदृष्टिं सुकुमारताञ्च ॥ १९८ ॥
जवं हयानाञ्च बलं द्विपानां स्वरं मयूरस्य हुताशदीप्तिम्।
स्त्रीवल्लभत्वं लभते प्रजाञ्च नीरोगमब्दद्विशतानि चायुः ॥१९९॥
न चान्नपाने परिहार्य्यमस्ति न चातपे चाध्वनि मैथुने च।
प्रयोगकाले सकलामयानां राजा ह्ययं सर्वरसायनानाम् ॥२००॥
भल्लातकस्य संशुद्धिः प्रागिष्टचूर्णगुण्डनात्।
घृताच्चतुर्गुणं क्षीरं घृतस्य प्रस्थ इष्यते ॥ २०१ ॥

इति अमृतभल्लातकी।

इति रसायनाधिकारः।

---

# अथ वृष्याधिकारः।

छागाण्डप्रयोगः।—

पिप्पलीलवणोपेतौ बस्ताण्डौ क्षीरसर्पिषा।

---

वक्ष्यति—"घृताच्चतुर्गुणं क्षीरम्" इत्यादि। क्षीरचतुर्गुणेनेति—चतुर्गुणेन क्षीरेणे-त्यर्थः; पूर्वनिपातं प्रत्यनियमात्। ततश्च युक्तेनेति न पाठः, सम्बन्धाभावात्, ततश्च घृतं पक्त्वा पूत्वा च शर्कराप्रचेन इत्यर्थः; किन्तु लेहोऽपि पच्यते, तदा क्वाथशर्करा-दिकमेकीकृत्य सर्वं पक्तव्यम् ॥ १९६—२०१ ॥

इत्यमृतभल्लातकी।

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां रसायनाधिकारविवृतिः।

---

अथ योगस्वारस्यसामान्याद्रसायनानन्तरं वाजीकरणमुच्यते। वाजीकरणशब्दार्थस्तु

साधितौ भक्षयेत् यस्तु स गच्छेत् प्रमदाशतम् ॥ १ ॥

भाविततिलप्रयोगः।—

वस्ताण्डसिद्धे पयसि भावितानसकृत् तिलान्।
यः खादेत् स नरो गच्छेत् स्त्रीणां शतमपूर्ववत् ॥ २ ॥

भावितविदारीकन्दप्रयोगः।—

चूर्णं विदार्य्याः सुकृतं स्वरसेनैव भावितम्।
सर्पिःक्षौद्रयुतं लीढ्वा शतं गच्छेद्वराङ्गनाः ॥ ३ ॥

---

चरकेणोक्तो यथा—"येन नारीषु सामर्थ्यं वाजीवत् लभते नरः। व्रजेच्चाप्यधिकं येन वाजीकरणमेव तत् ॥" (चि० पुमान् जातबलादि०) इति। व्रजेच्चाप्यधिकमिति—पुनःपुनर्गच्छेत्। "व्यज्यते" इति पाठे—नारीषु पुंस्त्वं येन व्यज्यते इत्यर्थः। शब्दसिद्धिस्तु पृषोदरादित्वात्। अन्ये तु, वाजः शुक्रं सोऽस्यास्तीति वाजी, अवाजी वाजी क्रियते येन तद्वाजीकरणमित्याहुः; किंवा वाजः मैथुनम्; उक्तं हि हारीते—"वाजो नाम प्रकाशत्वात् तच्च मैथुनसंज्ञितम्। वाजीकरणसंज्ञाभिः पुंस्त्वमेव प्रपद्यते ॥" तच्च त्रिधा; यदुक्तं चरके (?)—"शुक्रस्रुतिकरं किञ्चित् किञ्चिच्छुक्रविवर्द्धनम्। स्रुतिवृद्धिकरं किञ्चित् त्रिविधं वृष्यमुच्यते ॥" यथा—कामिनीस्पर्शादिकं स्रुतिकरं, क्षीरादि वृद्धिकरं, माषादि स्रुतिवृद्धिकरमिति ॥ वृष्ययोगानाह, पिप्पलीत्यादि सुश्रुतस्य।—तत्र पिप्पलीलवणयोः संस्कारत्वादल्पमानता। वस्ताण्डौ छागाण्डकोषौ। क्षीरसर्पिषा क्षीरोत्थसर्पिषा, न तु क्षीरञ्च घृतञ्चेत्येकवद्भावः, क्षीरपक्वलवणस्य संयोगविरुद्धत्वात्। प्रमदाशतमिति वनिताबहुत्वोपलक्षणम्। भक्षणप्रकारो यथा—छागाण्डद्वयं जले दत्त्वा उत्स्विद्य क्षीरोत्थघृतेन भर्जयित्वा अनुरूपसैन्धवपिप्पलीचूर्णाभ्यां संस्कार्य्य उपयोज्यम् ॥ १ ॥

वस्ताण्डसिद्धे इत्यादि।—क्षीरपरिभाषया वस्ताण्डेन क्षीरसाधनं, तेन भावितान्। यद्यपि अजाविकमांसेत्यादिना वस्तमांसस्य क्षीरेण सह विरोधो दर्शितस्तथाऽपि तत् सामान्यवचनम्, इदं पुनरपवादरूपं विशिष्टवस्ताण्डविषयतया न विरोधमावहति। असकृदिति—सप्तधा। अपूर्ववदिति— अकृतपूर्वस्त्रीसङ्गमवत् ॥ २ ॥

चूर्णमित्यादि सुश्रुतस्य।—स्वरसोऽपि विदार्य्या एव ॥ ३ ॥

भावितामलकप्रयोगः।—

एवमामलकं चूर्णं स्वरसेनैव भावितम्।
शर्करामधुसर्पिर्भिर्युक्तं लीढ्वा पयः पिबेत्॥
एतेनाशीतिवर्षोऽपि युवेव परिहृष्यति॥ ४॥

विदारीकन्दप्रयोगः।—

विदारीकन्दकल्कन्तु घृतेन पयसा नरः।
उडुम्बरसमं खादन् वृद्धोऽपि तरुणायते॥ ५॥

स्वयङ्गुप्तादि चूर्णम्।—

स्वयङ्गुप्तेक्षुरकयोर्बीजचूर्णं सशर्करम्।
धारोष्णेन नरः पीत्वा पयसा न क्षयं व्रजेत्॥ ६॥

उच्चटाप्रयोगः शतावर्य्यादिचूर्णञ्च।—

उच्चटाचूर्णमप्येवं क्षीरेणोत्तममुच्यते।
शतावर्य्युच्चटाचूर्णं पेयमेवं सुखार्थिना॥ ७॥

मधुकप्रयोगः।—

कर्षं मधुकचूर्णस्य घृतक्षौद्रसमन्वितम्।
पयोऽनुपानं यो लिह्यान्नित्यवेगः स ना भवेत्॥ ८॥

---

एवमित्यादि।—अत्र स्वरसभावितस्याप्युक्तत्वात् एवमित्यतिदेशस्य वैयर्थ्यं स्यात्, तेन विदारीचूर्णवत् क्षौद्रघृताभ्यामामलकचूर्णस्य तत्स्वरसभावितस्य प्रयोग इति कश्चित्; तेन आमलकचूर्णस्य द्विधा प्रयोगः, एकः घृतक्षौद्राभ्याम्, अन्यश्च शर्करामधुघृतपयोऽनुपानेश्चेति। अन्ये तु, एवमित्यतिदेशः सुकृतत्वविधानार्थमित्याहुः॥ ४॥

विदारीत्यादि सुश्रुतस्य।—अत्र घृतेनेत्यत्र "शृतेन" इति पाठे—केवलं जलशृतेनेत्यर्थः। खादन्नित्यत्र "पीत्वा" इति च पाठः; तथैव सुश्रुतदर्शनात्॥ ५॥

स्वयङ्गुप्तेत्यादि सुश्रुतस्य॥ ६॥

उच्चटेत्यादि।—उच्चटेत्याद्यपि तस्यैव। एवमित्यनेन पयसेति बोध्यते। सुखार्थिनेत्यत्र "बलार्थिना" इति सुश्रुते पठ्यते॥ ७॥

कर्षमित्यादि चरकस्य।—मधुकं यष्टिमधु। नित्यवेग इति—नित्यशुक्रवेगाभिभूतः॥ ८॥

गोक्षुरकादिचूर्णम्।—

गोक्षुरकः क्षुरकः शतमूली वानरि नागबलाऽतिबला च।
चूर्णमिदं पयसा निशि पेयं यस्य गृहे प्रमदाशतमस्ति॥ ९॥

माषपायसः।—

घृतभृष्टो दुग्धमाष-पायसो वृष्य उत्तमः॥ १०॥

दधिसरप्रयोगः।—

दध्नः सरं शरच्चन्द्र-सन्निभं दोषवर्जितम्।
शर्कराक्षौद्रमरिचैः तुगाक्षीर्य्या च बुद्धिमान्॥ ११॥
युक्त्या युक्तं ससूक्ष्मैलं नवे कुम्भे शुचौ पटे।
मार्जिते प्रक्षिपेच्छीते घृताढ्यं षष्टिकौदनम्॥ १२॥
तदद्यादुपरिष्टाच्च रसालां मात्रया पिबेत्।
वर्णस्वरबलोपेतः पुमांस्तेन वृषायते॥ १३॥

---

गोक्षुरक इत्यादि।—क्षुरकः कोकिलाक्षः। वानरी शूकशिम्बी। शतमूली च वानरी चेति समाहारद्वन्द्वः। अत्र षष्ठीबहुवचनान्तः पाठ एव साधुः। एषां गोक्षुरक्षुरकवानरीणां फलबीजं ग्राह्यम्; यदुक्तमन्यतन्त्रान्तरे—"गोकण्टकक्षुरककपिकच्छूफलशतावरीकुशीबलाचूर्णयुतेन। पयसा रात्रिसमये—" इत्यादि। अत्र कुशी गोरचतण्डुला॥ ९॥

घृतेत्यादि।—दुग्धमाषपायसो माषविदलैर्दुग्धेन कृतः पायसः, स च घृतभृष्टो घृतेन सन्तलितः॥ १०॥

दध्न इत्यादि चरकस्य।—दोषवर्जितमिति—मलिनत्वादिदोषवर्जितम्। युक्त्या युक्तमिति—यथाऽतिमाधुर्य्यं न स्यात्, कटुत्वाधिक्यं न भवति, तथा शर्करामरिचादि योज्यमित्यर्थः। "मार्जितम्" इति पाठे—पटे घृष्टम्। तदिति—षष्टिकौदनम्। निश्चलस्तु "मार्जिते प्रक्षिपेच्छीते घृताढ्यं षष्टिकौदनम्" इति पठित्वा, व्याचष्ट च,—तस्मिन् मार्जिते पूते रसे इत्यर्थात्, ततोऽव शीते शीतवीर्य्यं षष्टिकभक्तं प्रक्षिपेत्, ततोऽद्यादिति। उपरिष्टादिति—भुक्तोत्तरम्। रसालालक्षणं यथा—"सचातुर्जातकाजाजी सगुडार्द्रकनागरम्। रसाला स्याच्छिखरिणी सुघृष्टं ससरं दधि॥" इति। अन्यत्र यथा—"अर्द्धाढ़कं सुचिरपर्य्युषितस्य दध्नः खण्डस्य षोड़श पलानि शशिप्रभस्य। सर्पिःपलं मधुपलं मरिचार्द्धकर्षं शुण्ठ्याः तथाऽर्द्धपलमर्द्धपलं

मत्स्यप्रयोगः।—

आर्द्राणि मत्स्यमांसानि शफरीर्वाज्यभर्जिताम्।
तप्ते सर्पिषि यः खादेत् स गच्छेत् स्त्रीषु न क्षयम्॥ १४॥

नारसिंहचूर्णम्।—

शतावरीरजःप्रस्थं प्रस्थं गोक्षुरकस्य च।
वाराह्या विंशतिपलं गुडूच्याः पञ्चविंशतिः॥ १५॥
भल्लातकानां द्वात्रिंशच्चित्रकस्य दशैव तु।
तिलानां शोधितानाञ्च प्रस्थं दद्यात् सुचूर्णितम्॥ १६॥
त्र्यूषणस्य पलान्यष्टौ शर्करायाश्च सप्ततिः।
माक्षिकं शर्करार्द्धेन मरिचकार्द्धेन वै घृतम्॥ १७॥
शतावरीसमं देयं विदारीकन्दजं रजः।
एतदेकीकृतं चूर्णं स्निग्धे भाण्डे निधापयेत्॥ १८॥
पलार्द्धमुपयुञ्जीत यथेष्टञ्चापि भोजनम्।
मासैकमुपयोगेन जरां हन्ति रुजामपि॥ १९॥

---

चतुर्णाम्॥ शुक्ले पटे खलनया मृदुपाणिघृष्टा कर्पूरगन्धसुरभिर्नवभाण्डसंस्था। एषा वृकोदरकृता सरसा रसाला याऽऽस्वादिता भगवता मधुसूदनेन॥" इति॥ ११—१३॥

आर्द्राणीत्यादि चरकस्य।—आर्द्राणि सद्यस्कानीत्यर्थः। मत्स्योऽत्र प्रधान-कल्पनया रोहितः॥ १४॥

शतावरीत्यादि चन्द्रटस्य।—वाराह्या इति—वराहकन्दस्य; तल्लक्षणं यथा—"ताम्बूलसदृशैः पत्रैर्ग्रन्थिभिः समलङ्कृतम्। सर्जार्जुननिभैः पुष्पैः शोभते च सुगन्धिभिः॥ वराहच्छविवर्णेन पिच्छिलेन सुवर्चसा। कन्देन कटुतिक्तेन नीलोत्पलसुगन्धिना॥ जायते सा गिरौ रम्ये विन्ध्ये श्रीपर्वते तथा॥" इति। वृन्दे तु, "वराहमूलवत् कन्दो वाराहीकन्दसंज्ञितः। भिषजां तदभावे च चर्मकारालुको मतः॥" इत्युक्तम्; किन्तु वाराहीकन्दापेक्षया चर्मकारालुकस्यातिहीनगुणत्वेन नास्य तत्प्रतिनिधित्वं युक्तम्। गुडूच्याः पञ्चविंशतिरित्येव पाठः; तन्त्रान्तरे—"भल्लातकप्रस्थयुगं तत् सप्तपलानि गुडूच्याश्च" इत्युक्तत्वात्, यतः प्रस्थयुगमेव सप्तपलानि सह पञ्चविंशतिपलानि भवन्ति। त्र्यूषणस्य मिलिता पलान्यष्टौ विदारी भूमि-

वलीपलितखालित्य-मेहपाण्ड्वाढ्यपीनसान्।
हन्त्यष्टादशकुष्ठानि तथाऽष्टावुदराणि च ॥ २० ॥
भगन्दरं मूत्रकृच्छ्रं गृध्रसीं सहलीमकम्।
क्षयञ्चैव महाश्वासान् पञ्च कासान् सुदारुणान् ॥२१॥
अशीतिं वातजान् रोगांश्चत्वारिंशच्च पैत्तिकान्।
विंशतिं श्लैष्मिकांश्चैव संसृष्टान् सान्निपातिकान् ॥
सर्वानर्शोगदान् हन्ति वृक्षमिन्द्राशनिर्यथा ॥ २२ ॥
स काञ्चनाभो मृगराजविक्रमस्तुरङ्गमञ्चाप्यनुयाति वेगतः।
स्त्रीणां शतं गच्छति सोऽतिरेकं प्रकृष्टदृष्टिश्च यथा विहङ्गः ॥२३॥
पुत्रान् सञ्जनयेद्वीरान् नरसिंहनिभांस्तथा।
नारसिंहमिदं चूर्णं सर्वरोगहरं नृणाम् ॥ २४ ॥

वाराहीकन्दस्वरूपम्।—

वाराहीकन्दसंज्ञस्तु चर्मकारालुको मतः।
पश्चिमे दृष्टिशब्दाख्यो वराहलोमवानिव ॥ २५ ॥

गोधूमाद्यं घृतम्।—

पलं शतञ्च गोधूमात् निःक्वाथ्य सलिलाढके।
पूते पादावशेषे च द्रव्याणीमानि दापयेत् ॥ २६ ॥
मुञ्जातफलगोधूमं माषद्राक्षापरूषकम्।
काकोली चीरकाकोली जीवन्ती सशतावरी ॥ २७ ॥

---

कुष्माण्डः। पलार्द्धमिति पूर्वयुगाभिप्रायेण, इदानीमष्टमाषकेण व्यवहारः। श्वाद्य इति—श्वाद्यमारुतः, यथा भीमो भीमसेनः ॥ १५—२४ ॥

वाराहीत्यादि।—वाराहीकन्दस्य दुर्लभतया चर्मकारालुकमेव गौडीयैर्वाराही-कन्दसंज्ञया गृह्यते; वस्तुतस्तु वराहकन्दश्चर्मकारालुकं द्रव्यान्तरमेव तल्लक्षणा-भावात् ॥ २५ ॥

पलं शतञ्च गोधूमादित्यादि।—गोधूमो धवलवर्णो ग्राह्यः, उत्कृष्टत्वात्। अत्र सलिलाढके पादावशेषे इति योज्यम्, अतो गोधूमशतपले जलद्रोणो देय इति चक्रः।

अश्वगन्धा सखर्जूरं मधुकं त्रापषं सिता।
भल्लातमात्मगुप्ता च समभागानि कारयेत् ॥ २८ ॥
घृतप्रस्थं पचेदेवं क्षीरं दत्त्वा चतुर्गुणम्।
मृद्वग्निना च संसिद्धे द्रव्याण्येतानि निक्षिपेत् ॥ २९ ॥
त्वगेलापिप्पलीधान्य-कर्पूरं नागकेशरम्।
यथालाभं विनिक्षिप्य सिताक्षौद्रपलाष्टकम् ॥ ३० ॥
दद्यादिक्षुदण्डेनालोड्य विधिवद्विनियोजयेत्।
शाल्योदनेन भुञ्जीत पिबेन्मांसरसेन वा ॥ ३१ ॥
केवलस्य पिबेदस्य पलमात्रां प्रमाणतः।
न तस्य लिङ्गशैथिल्यं न च शुक्रक्षयो भवेत् ॥ ३२ ॥
वातहरं परं बल्यं शुक्रसञ्जननं परम्।
शमनं मूत्रकृच्छ्रस्य वृद्धानाञ्चापि शस्यते ॥ ३३ ॥
पलद्वयं तदश्नीयाद्द्वशरात्रमतन्द्रितः।
भजते स्त्रीशतञ्चापि पीत्वा चानुपिबेत् पयः ॥ ३४ ॥
अश्विभ्यां निर्मितञ्चैतत् गोधूमाद्यं रसायनम्।
जलद्रोणे तु गोधूम-क्वाथे तच्छेषमाढकम् ॥ ३५ ॥
मुञ्जातकस्य स्थाने तु तद्गुणं तालमस्तकम्।
कल्कद्रव्यसमं मानं त्वगादेः साहचर्य्यतः ॥ ३६ ॥

बकुलस्तु निःक्वाथ्येष्वनेनैव सम्बध्यते, तथैव निर्दिष्टत्वात्, पादावशिष्टस्य ग्रहण इति व्याचष्टे; किन्तु चक्रपाद एव प्रचरति। मुञ्जातफलम् औत्तरापथिकं, तदप्राप्तौ तालमस्तकं वक्ष्यति। हारावल्यान्तु मुञ्जातकं तालमस्तकमित्येवास्ति। पञ्चषकं पञ्चषकस्य फलम्। खर्जूरं पिण्डखर्जूरम्। मधुकं यष्टिमधु; अन्ये तु, "मधूकम्" इति पठित्वा मधूकस्य फलमाहुः। सिता शर्करा। आत्मगुप्ताया मूलमिति निश्चलः, फलमित्यन्ये। संसिद्धे इत्यनन्तरं पूते चेति शिवः। त्वगादीनाञ्च मानं कल्कतुल्यं वक्ष्यति। ततः शीतीभूते शर्करामधुनोर्मिलित्वाऽष्टौ पलानि। पूर्वं "पलमात्रां पिबेत्" इति यदुक्तं तत् प्रथमतः, अनन्तरं सात्म्यीभावे सति पलद्वयम्, न पुनरितोऽधिकमिति ॥ २६—३६ ॥

शतावरीघृतम्।—

घृतं शतावरीगर्भं क्षीरे दशगुणे पचेत्।
शर्करापिप्पलीक्षौद्र-युक्तं तत् वृष्यमुत्तमम्॥ ३७॥

गुडकुष्माण्डकम्।—

कुष्माण्डकात् पलशतं सुस्विन्नं निष्कुलीकृतम्।
प्रस्थं घृतस्य तैलस्य तस्मिंस्तप्ते प्रदापयेत्॥ ३८॥
त्वक्पत्रधान्यकव्योष-जीरकैलाद्वयानलम्।
ग्रन्थिकं चव्यमातङ्ग-पिप्पलीविश्वभेषजम्॥ ३९॥
शृङ्गाटकं कशेरुञ्च प्रलम्बं तालमस्तकम्।
चूर्णीकृतं पलांशञ्च गुड़स्य च तुलां पचेत्॥ ४०॥
शीतीभूते पलान्यष्टौ मधुनः सम्प्रदापयेत्।
कफपित्तानिलहरं मन्दाग्नीनाञ्च शस्यते॥ ४१॥
कृशानां बृंहणं श्रेष्ठं वाजीकरणमुत्तमम्।
प्रमदासु प्रसक्तानां ये च स्युः क्षीणरेतसः॥ ४२॥
क्षयेण च गृहीतानां परमेतद्भिषग्जितम्।
कासं श्वासं ज्वरं हिक्कां हन्ति च्छर्दिमरोचकम्॥ ४३॥

---

घृतमित्यादि चरकस्य।—इह "प्रक्षेपः पादिकः काथ्यात् स्नेहे कल्कसमो मतः" इत्युक्तेः शर्करापिप्पलीक्षौद्राणां कल्कसमत्वं ज्ञेयम्॥ ३७॥

कुष्माण्डकादित्यादि।—घृततैलयोर्मिलित्वा प्रस्थम्। अत्र खण्डकुष्माण्डवत् त्वग्बीजादिवर्जितसुस्विन्नगालितनिष्टकुष्माण्डभर्जनं कार्य्यं यावन्मधुनिभः पाको भवति, ततो द्रवार्थं गालितकुष्माण्डद्रवमेव प्रस्थचतुष्टयं गृहीत्वा तेन द्रवेण पुराणगुड़पलशतमेकीकृत्य पूत्वा कुष्माण्डं पचेत्। ततोऽवतारिते कोष्णे त्वक्पत्रादिचूर्णप्रक्षेपः। जीरकैलाद्वयेति—जीरकद्वयमेलाद्वयञ्चेति। मातङ्गपिप्पली गजपिप्पली। प्रलम्बं तालाङ्कुरं, तालखण्ड इत्यन्ये; आद्य एव पक्षो युक्तः, वृष्यत्वात्। मन्दाग्नीनाम्, अल्पमात्रयेति शेषः। प्रमदासु प्रसक्तानां वाजीकरण-मुत्तमम् इत्यन्वयः, तथा ये क्षीणरेतसस्तेषामुत्तममेतद्भिषग्जितमिति योज्यम्।

गुड़कुष्माण्डकं ख्यातमश्विभ्यां समुदाहृतम् ।
खण्डकुष्माण्डवत् पाकं खिन्नकुष्माण्डकद्रवः ॥ ४४ ॥

अनुक्तवृष्यानि ।—

यत्किञ्चिन्मधुरं स्निग्धं जीवनं बृंहणं गुरु ।
हर्षणं मनसश्चैव सर्वं तत् वृष्यमुच्यते ॥ ४५ ॥

शिश्नवर्द्धने भल्लातकादितैलम् ।—

भल्लातकबृहतीफलदाडिमफलवल्कसाधितं कुरुते ।
लिङ्गं मर्द्दनविधिना कटुतैलं वाजिलिङ्गाभम् ॥ ४६ ॥

शिश्नवर्द्धने धुस्तूरादितैलम् ।—

कनकरसमस्तणवर्त्तित-हयगन्धामूलमत्र पर्य्युषितम् ।
माहिषमिह नवनीतं गतवीजे च तत्फलमध्ये ॥ ४७ ॥
गोमयगाढ़ोद्वर्त्तितपूर्वं पश्चादनेन संलिप्तम् ।
भवति हयलिङ्गसदृशं कठिनाङ्गनादयितम् ॥ ४८ ॥

स्तनादिवर्द्धने अश्वगन्धातैलम् ।—

अश्वगन्धावचाकुष्ठ-मांसीसिंहीफलान्वितम् ।
चतुर्गुणेन दुग्धेन तिलतैलं विपाचयेत् ॥
स्तनलिङ्गकर्णपालि-वर्द्धनं म्रक्षणादिदम् ॥ ४९ ॥

---

खण्डकुष्माण्डकश्च रक्तपित्तोक्तम् । पाकमिति—पाढ़कम् । "गुड़कुष्माण्डके द्रवः" इति पाठे—द्रवश्च खिन्नकुष्माण्डकस्यैव ज्ञेयः ॥ ३८—४४ ॥

अनुक्तवाजीकरणसङ्ग्रहार्थमाह—यत्किञ्चिदित्यादि ॥ ४५ ॥

इदानीं लिङ्गमूलत्वादपत्यस्य तद्वृद्धियोगानाह, भल्लातकेत्यादि ।—अयं योगो भल्लातकासह्याय न देयः । कल्कस्तैल चतुर्गुणं वाध्यम् ॥ ४६ ॥

कनकेत्यादि ।—कनकं धुस्तूरं, तस्य पत्रस्वरसः । तत्फलमिति—धुस्तूरस्यैव । गोमयेन सद्यस्केन लिङ्गे गाढ़मुद्वर्त्तनं कृत्वा ततोऽनेन लेपः इति । कठिनाङ्गना इति—कठिनाङ्गनाः प्रायेण द्राविड़लाटमालवदेशगाः, तास्तु प्रायशो बहुतरसुरतैर्विना नैव तुष्यन्तीति तासां कठिनत्वम् ॥ ४७।४८ ॥

शिश्नदार्ढ्ये वराहवसाप्रलेपः।—

मेदसा क्षौद्रयुक्तेन वराहस्य प्रलेपितम्।
सम्यक् शिश्नं रतान्तेऽपि स्तब्धतां न विमुञ्चति॥ ५०॥

शुक्रस्तम्भने करञ्जवीजादिप्रयोगः।—

वीजं वृहत्करञ्जस्य कृतमन्तः सपारदम्।
हेम्ना सुवेष्टितं न्यस्तं वदने वीजधृङ्मतम्॥ ५१॥

शुक्रस्तम्भने छागक्षीरादिपादलेपः।—

आजन्तूष्ट्रीक्षीरं गव्यघृतं चरणयुगललेपोक्तम्।
स्तम्भयति पुरुषवीजं योगोऽयं यामिनीं सकलाम्॥ ५२॥

शिश्नवर्द्धने भल्लातकादिलेपः।—

भल्लातकवृहतीफल-नलिनीदलसिन्धुजन्मजलशूकैः।
माहिषनवनीतेन तु करम्बितैः सप्तदिनमुषितैः॥ ५३॥
मूले हयगन्धाया पूर्वं महिषीमलमथितमथ लिङ्गम्।
लिप्तं भवति लघुकृतं रासभलिङ्गं ध्रुवं पुंसाम्॥ ५४॥

शुक्रस्तम्भने नीलोत्पलादिलेपः।—

नीलोत्पलसितपङ्कजकेशरमधुकशर्कराऽवलिप्तेन।
सुरते सुचिरं रमते दृढ़लिङ्गो भवति नाभिविवरेण॥ ५५॥

---

अश्वगन्धेत्यादि।—अश्वगन्धातैले सिंहीफलं वृहतीफलम्। कर्णपालिः कर्ण-पालिका॥ ४९—५२॥

भल्लातकेत्यादि।—करम्बिताः मिश्रितास्तैः। अनन्तरं हयगन्धाया मूले विवरं कृत्वा सप्तदिनमुषितैर्भल्लातकादिभिर्लिप्तं लिङ्गमित्यन्वयः। कीदृशं लिङ्गम? महिषीमलेन मथितं पूर्वं मर्दितम्; एतेनादौ महिषीमलेन लिङ्गं सम्मर्द्य पश्चात् भल्लातकादिभिर्लिप्तं लिङ्गं लघुकृतगर्दभलिङ्गं भवतीति॥ ५३।५४॥

इदानीं वाजीकरणप्रसङ्गात् वीर्य्यस्तम्भनमाह, नीलोत्पलेत्यादि।—नीलोत्पल-श्वेतपद्मयोः केशरम्। एभिः सर्वैः पिष्टैर्नाभिं लिप्त्वा चिरकालं कामुको रमते इत्यर्थः। "नातिविवरेण" इति पाठे—अतिविवरेण अतिक्रान्तच्छिद्रेण॥ ५५॥

शुक्रस्तम्भने कुसुम्भतैलम् ।—

सिद्धं कुसुम्भतैलं भूमिलताचूर्णमिश्रितं कुरुते ।
चरणाभ्यङ्गेन रते वीर्यस्तम्भात् दृढं लिङ्गम् ॥ ५६ ॥

शुक्रस्तम्भने करभवारुणीप्रयोगः ।—

सप्ताहं छागसलिलसंस्थं वै करभवारुणीमूलम् ।
गाढ़ोद्वर्त्तनविधिना लिङ्गस्तम्भं रते कुरुते ॥ ५७ ॥

कुप्रयोगजध्वजभङ्गे गोशृङ्गधूपः ।—

गोरेकोन्नतशृङ्गत्वग्भवचूर्णेन धूपितं वस्त्रम् ।
परिधाय भजन् ललनां नैकाण्डो भवति हर्षार्त्तः ॥ ५८ ॥

कुप्रयोगजध्वजभङ्गे तिलाद्युत्कारिका ।—

समतिलगोक्षुरचूर्णं छागीक्षीरेण साधितं हि समधु ।
भुक्तं व्यपनयति षाण्ढ्यं यज्जनितं कुप्रयोगेण ॥ ५९ ॥

कुप्रयोगजध्वजभङ्गे लिङ्गचालनं गोशृङ्गलेपश्च ।—

योगजवराङ्गवङ्गं मथितेन क्षालितं हरति ।
उन्मुखगोशृङ्गोद्भवलेपो योगजध्वजभङ्गहारी ॥ ६० ॥

---

सिद्धमित्यादि ।—भूमिलता किञ्चुलुकः, तया मिश्रितं कुसुम्भवीजस्य तैलं, सिद्धमिति—पक्वमित्यर्थः ॥ ५६ ॥

सप्ताहमित्यादि ।—छागभवसलिलं छागमूत्रम् । करभवारुणी उष्ट्रकण्टकः इति हरमेखलानिर्घण्टः; गङ्गापालङ्केति केचित् ॥ ५७ ॥

इदानीं कुप्रयोगकृतध्वजभङ्गचिकित्सामाह, गोरित्यादि ।—यस्या धेनोरेकं शृङ्गमुन्नतं भवति तस्याः तत्-शृङ्गत्वक्चूर्णेन धूपितं वस्त्रं पिधायेत्यर्थः । यः पुरुषो नियमेन एकस्त्रीगामी स्त्र्यन्तरगमने तु ध्वजोत्थानं न भवति स एकाण्ड उच्यते; यदुक्तं तत्त्वकलिकायां—"यस्य हि काञ्चिल्ललनां प्रति नो भवतीह हर्षलेशोऽपि । एकाण्ड इति कथितोऽसौ योगैः प्रायः कृतः स्त्रीभिः ॥" इति ॥ ५८ ॥

समेत्यादि ।—अत्र निस्तुषतिलगोक्षुरवीजचूर्णं छागदुग्धेनोत्कारिकां साधयित्वा शीते च मधु दत्त्वा भक्षयेत् । षाण्ढ्यं लिङ्गानुत्थानम् ॥ ५९ ॥

कुप्रयोगेण लिङ्गानुत्थानं यत् तच्चिकित्सामाह, योगजेत्यादि ।—मथितेन घोलेन । उन्मुखेत्यादि—ऊर्द्धं मुखं यद्धेनोः शृङ्गं, न तु बलीवर्दस्य; ऊर्द्धमुखस्त्रीगवीशृङ्गेण लेपनं लिङ्गस्य ॥ ६० ॥

मुखदुर्गन्धे कुष्ठादिकवलः।—

कुष्ठैलवालुकैलामुस्तकधन्याकमधुकृतः कवलः।
अपहरति पूतिगन्धं रसोनमदिरादिजं गन्धम्॥ ६१॥

अधोवायुदुर्गन्धे वीजपूरत्वग्लेहः।—

क्षौद्रेण वीजपूरत्वक् लीढ़ाऽधोवातगन्धनुत्॥ ६२॥

इति वृष्याधिकारः।

---

# अथ स्नेहाधिकारः।

चतुर्विधस्नेहाः तेषु श्रेष्ठस्नेहश्च।—

सर्पिस्तैलं वसा मज्जा स्नेहेषु प्रवरं मतम्।
तत्रापि चोत्तमं सर्पिः संस्कारस्यानुवर्त्तनात्॥ १॥

---

कुष्ठेत्यादि।—मधु यष्टिमधु; यदुक्तं लोकव्यवहाराख्यकामशास्त्रे—"कुष्ठैलवालुकैलामुस्तकधन्याकयष्टिमधुकवलः। हरति मुखपूतिगन्धं रसोनमदिरादिगन्धञ्च॥" दम्पत्योरन्यतरस्य मुखपूतिगन्धेन सम्भोगभङ्गप्रसङ्गः स्यादतस्तद्गन्धापनयनद्वारा अस्य योगस्य वृष्याङ्गत्वं ज्ञेयम्; एवं वक्ष्यमाणयोगेऽपि बोध्यम्॥ ६१॥

क्षौद्रेणेत्यादि।—वीजपूरः "मोखर" इति ख्यातम्। अयञ्च लेहः शयनसमये देयः। अधोवातः गुदवायुः। वीजपूरत्वग्लेहस्तु अधोवातनिरोधं जनयति; यदुक्तं तत्रैव—"यो लेढ़ि शयनकाले मधुमिश्रं वीजपूरदलचूर्णम्। स क्रीड़ाकरवातप्रसरावरोधात् सुखं स्वपिति॥" इति॥ ६२॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां वृष्याधिकारविवृतिः।

---

रसायनवाजीकरणे पञ्चकर्मविशुद्धस्यैव कर्त्तव्ये, अतः पञ्चकर्माणि वाच्यानि; पञ्चकर्मणाञ्च स्वेदपूर्वकत्वात्, स्वेदस्य च पुनः स्नेहपूर्वकत्वात् प्रथमं स्नेहविधिमाह; सर्पिरित्यादि वाग्भटस्य।—एतत् सर्पिरादिचतुष्टयं स्नेहेषु स्नेहकारकद्रव्येषु दधिक्षीरादिषु मध्ये प्रवरं श्रेष्ठं, स्नेहनप्रकर्षादित्यर्थः। तत्रापीति—तेष्वपि सर्पिरादिषु मध्ये सर्पिरुत्तमं श्रेष्ठम्। संस्कारो गुणान्तरारोपणमिति तस्यानुवर्त्तनमनुविधानम्। तैलादयो हि द्रव्यान्तरसंस्कृताः सन्तः स्वगुणं विहायैव संस्कारकद्रव्यगुणान् वहन्ति, सर्पिस्तु स्वगुणान् संस्कारकद्रव्यगुणांश्च वहति; अत एवोक्तं—

दोषविशेषे घृतस्य प्रयोगविशेषः घृतप्रयोगार्हश्च।—

केवलं पैत्तिके सर्पिर्वातिके लवणान्वितम्।
देयं बहुकफे चापि व्योषक्षारसमायुतम्॥
तथा धीस्मृतिमेधाग्नि-काङ्क्षिणां शस्यते घृतम्॥ २॥

तैलप्रयोगार्हाः।—

ग्रन्थिनाड़ीक्रिमिश्लेष्म-मेदोमारुतरोगिषु।
तैलं लाघवदार्ढ्यार्थं क्रूरकोष्ठेषु देहिषु॥ ३॥

वसामज्जप्रयोगार्हाः।—

वातातपाध्वभारस्त्री-व्यायामक्षीणधातुषु।
रूक्षक्लेशक्षमात्यग्नि-वातावृतपथेषु च॥
शेषौ—" ॥ ४॥

---

"नान्यः स्नेहस्तथा कश्चित् संस्कारमनुवर्त्तते। यथा सर्पिरतः सर्पिः सर्वस्नेहोत्तमं मतम्॥" इति। अत्र संस्कारकद्रव्यचित्रकादेर्गुणाधानेऽपि सर्पिर्न स्वगुणान् स्नेहशैत्यादीन् जहाति, किन्तु स्वगुणांस्तद्गुणांश्च वहति, यतोऽनुशब्देन पश्चाद्वाचिना स्वगुणवर्त्तनस्य पश्चात् संस्कारकगुणवर्त्तनमुच्यते। "स्नेहाद्वातं शमयति पित्तं माधुर्य्यशैत्यतः। घृतं तुल्यगुणं दोषं संस्कारात्तु जयेत् कफम्॥" इति। न च वाच्यं रूक्षोष्णचित्रकादिसंस्कारात् रूक्षोष्णं सर्पिर्भवति, ततश्च सर्पिषः स्नेहशैत्ये तद्विरुद्धे कथमव तिष्ठतः? इति; यतः सर्पिःसम्बद्धचित्रकावयवानुगतं हि रूक्षोष्णत्वं, सर्पिर्गते च स्नेहशैत्ये इति भिन्नाश्रयत्वान्न विरोधः। इदमेव च सर्पिषः संस्कारानुवर्त्तनं यत् स्वगुणविरुद्धस्यापि गुणानुपघातेन धारणमित्यादि व्याख्यान्तरमस्मदीयचरकतत्त्वप्रदीपिकायामेवानुसन्धेयम्। केचित्तु संस्कारः स्वीयगुणः शीतत्वादिः, अनुशब्दः सहार्थे, तेन विरुद्धवीर्य्याणामौषधानां संयोगेऽपि संस्कारोऽनुवर्त्तते, तैलादीनान्तु दाहज्वरे चन्दनादितैलोपदेशात् तैलस्योष्णत्वं शीतवीर्य्यचन्दनादिद्रव्ययोगान्निवर्त्तते, नैतद्रूपं घृतस्येत्याहुः॥ १॥

घृतविषयमाह, केवलमित्यादि।—केवलं द्रव्यान्तरसंयोगरहितम्॥ २॥

तैलविषयमाह—ग्रन्थीत्यादि वाग्भटस्य॥ ३॥

वसामज्जविषयमाह, वातातपेत्यादि वाग्भटस्य।—शेषाविति छेदः। वातादिभिः क्षीणा धातवो येषां ते तथा। क्लेशसहः क्लेशक्षमः। क्लेशसह इत्यत्र

केवलवसाप्रयोगार्हाः।—

*—वसा तु सन्ध्यस्थि-मर्मकोष्ठरुजासु च।
तथा दग्धाहतभ्रष्ट-योनिकर्णशिरोरुजि॥ ५॥

ऋतुविशेषे स्नेहविशेषस्योपयोगिता।—

तैलं प्रावृषि वर्षान्ते सर्पिरन्यौ तु माधवे।
साधारण-ऋतौ स्नेहं पिबेत् कार्य्यवशात्तु तत्॥ ६॥

दोषविशेषे स्नेहप्रयोगकालः।—

वातपित्ताधिको रात्रावुष्णे चापि पिबेन्नरः।

---

"श्लेष्मणश्च" इति पाठो लेखकदोषात्। वातावृतपथेष्विति—वातावृतस्रोतःसु। शेषा-विति—वसामज्जानौ॥ ४॥

वसायास्त्वन्यदपि विषयान्तरमाह, वसा त्वित्यादि।—रुजाशब्दः सन्ध्यादिभिः सम्बध्यते। आहतः शस्त्रेण। भ्रष्टयोनिः स्वस्थानात् प्रच्युतयोनिः॥ ५॥

इदानीं स्नेहानामुपयोगकालमाह, तैलमित्यादि वाग्भटस्य।—साधारण-ऋतौ स्नेहं पिबेदित्युत्सर्गः। साधारणश्च प्रावृट्शरद्वसन्ताख्यं शोधनमधिकृत्योक्त-ऋतुत्रयम्; यदाह दृढ़बलः,—"अत्युष्णवर्षशीता हि ग्रीष्मवर्षाहिमागमाः। तद-न्तरे प्रावृडाद्या ज्ञेयाः साधारणास्त्रयः॥ प्रावृट् शुक्रनभौ ज्ञेयौ शरदूर्ज्जसहौ पुनः। तपस्यश्च मधुश्चैव वसन्तः शोधनं प्रति॥" (च० सि० वमनविरेचनव्यापत्०) इति। अत साधारणा इति—अनुद्भूतोष्णशीतवर्षा इत्यर्थः। शुक्रनभाविति—आषाढ़श्रावणौ प्रावृडित्युक्तम्, अत एव निर्देशात् शुक्रशब्द आषाढ़वचनोऽपि ज्ञेयः; किंवा "शुचिनभौ" इति पाठः। ऊर्जसहौ कार्त्तिकमार्गशीर्षौ। तपस्यः फाल्गुनः। मधुश्चैव इति। वर्षान्ते इति—शरदि। अन्यौ वसामज्जानौ। माधवे इति—वैशाखे। यद्यपि वैशाखो न साधारण-ऋतुमध्ये पठितः, किन्तु फाल्गुनचैत्ररूपो वसन्त एव, तथाऽपि प्रभूतकफतया स्नेहपानाविषयत्वेनात्र नोक्तः; वैशाखस्तु बलक्षय-धातुक्षयकारक इति अत्र बल्यो धातुकारकः वसामज्जप्रयोगो युक्त एवेत्यर्थः। "अन्यौ" इत्यपि पाठः। कुतः पुनरुक्तसमये एव स्नेहं पिबेदित्यत आह, कार्य्यवशात्तु तदिति—संशोधनरूपप्रयोजनवशात्। संशोधनं हि साधारण-ऋतौ उत्सर्गतो विधीयते, तेन तदङ्गविशेषस्नेहपानमपि तत्रैवेत्यर्थः॥ ६॥

इदानीमात्ययिकात्ययिकगृहीतेनात्युष्णशीतेऽपि यथा स्नेहपानं विधेयं, तथा दोष-

श्लेष्माधिको दिवा शीते पिबेच्चामलभास्करे ॥ ७ ॥

स्नेह्याः।—

स्वेद्यसंशोध्यमद्यस्त्री-व्यायामासक्तचिन्तकाः।
वृद्धबालाबलकृशा रूक्षाः क्षीणास्त्ररेतसः ॥ ८ ॥
वातार्त्तस्यन्दतिमिर-दारुणप्रतिबोधिनः।
स्नेह्याः—" ॥ ९ ॥

स्नेहानर्हाः।—

"—न त्वतिमन्दाग्नि-तीक्ष्णाग्निस्थूलदुर्बलाः।
ऊरुस्तम्भातिसाराम-गलरोगगरोदरैः ॥ १० ॥
मूर्च्छाच्छर्द्यरुचिश्लेष्म-तृष्णामद्यैश्च पीड़िताः।
आमप्रसूता युक्ते च नस्ये वस्तौ विरेचने ॥ ११ ॥

---

विशेषे च यथा स्नेहपानं तदाह, वातपित्ताधिकः इत्यादि।—वातश्च पित्तञ्च वातपित्तं, तदधिकं यत्र स वातपित्ताधिकः। रात्राविति—सायम्। उष्णे ग्रीष्मे। श्लेष्माधिकग्रहणमत्यन्तशीतविकारगृहीतपुरुषोपलक्षणार्थं, तेन वातश्लेष्माधिकः श्लेष्माधिकश्च गृह्यते; अत एव सुश्रुतेऽप्युक्तं—"वातपित्ताधिको रात्रौ वातश्लेष्माधिको दिवा" (चि० ३१ अ०) इति। केवलवाताधिकस्य तथा पित्ताधिकस्य तथा श्लेष्माधिकस्य साधारणे च शरदादौ काले उत्सर्गसिद्ध एव पानकालो वक्ष्यमाणो भवति; वक्ष्यति हि—"पिबेत् संशमनं स्नेहमन्नकाले प्रकाङ्क्षितः" (च० सू० स्नेहाध्या०) इत्यादि। व्याख्यान्तरञ्च अस्मदीयचरकतत्त्वप्रदीपिकायामनुसन्धेयम्। अमलभास्करे इति दुर्दिनव्युदासार्थं मध्याह्नग्रहणार्थं वा ॥ ७ ॥

इदानीं स्नेह्यानाह, स्वेद्येत्यादि वाग्भटस्य।—स्वेद्या इति—स्वेदार्हाः। एवं संशोध्या इति—वमनादिसंशोधनयोग्याः। मद्येत्यादि—मद्यादिष्वासक्ताः। चिन्तकाः चिन्ताबहुलाः। अबल इति—अकृशोऽपि यो बलरहितः। कृश इति—मांसोपचयहीनः। क्षीणे असृग्रेतसी रक्तशुक्रे येषां ते क्षीणास्त्ररेतसः। वातार्त्ताः वातरोगिणः। स्यन्दः अभिष्यन्दः, स च पुराणोऽभिप्रेतः। दारुणः दुःसाध्यः, प्रतिबोधः जागरणम्, अत्यन्तजागरणशील इत्यर्थः; अन्ये तु अक्षोन्मीलनयुक्त इत्यर्थः। स्नेह्या इति छेदः ॥ ८.९ ॥

अस्नेह्यानाह, न त्वित्यादि।—अतिशब्दो दुर्बलान्तेषु प्रत्येकं योज्यः,

अच्छस्नेहपानार्हाः।—

स्नेहसात्म्यः क्लेशसहो दृढः काले च शीतले।
अच्छमेव पिबेत् स्नेहमच्छपानं हि शोभनम्॥ १२॥

शमनशोधनस्नेहपानकालः।—

पिबेत् संशमनं स्नेहमन्नकाले प्रकाङ्क्षितः।
शुद्ध्यर्थं पुनराहारे नैशे जीर्णे पिबेन्नरः॥ १३॥

---

अत एवाल्पबलाः स्नेह्या न त्वतिदुर्बला इति न पूर्वापरविरोधः। आमप्रसूता इति—अपरिणतगर्भस्रावयुक्ता इत्यर्थः। वाग्भटे तु "अपप्रसूता" (सू० १६ अ०) इत्यत्र पठति, व्याचष्टे च—स्रुतगर्भेति। सुश्रुतेन—"अकाले च प्रसूता स्त्री" (चि० ३१ अ०) इत्युक्तम्। युक्ते इति—तत्कालप्रयुक्ते॥ १०।११॥

अच्छस्नेहपानविषयमाह, स्नेहेत्यादि सुश्रुतस्य।—दृढ इति—बलवान्। काले च शीतले इति—यद्यपि पूर्वोक्तसाधारणकाल एव स्नेहविषयः, तथाऽप्यात्ययिकविकारवशात् यदि शीतले काले स्नेहोपयोगः कर्त्तव्यः स्यात्, तदाऽच्छमेव पिबेदित्यर्थः। अन्ये तु "दृढः" इति पदं दूरीकृत्य "काले चानतिशीतले" इति पठन्ति। अच्छमित्यादिनाऽस्य सम्बन्धः॥ १२॥

सम्प्रति संशमनस्नेहस्य संशोधनार्थस्नेहस्य च पानकालमाह, पिबेदित्यादि।—संशमनमिति—"न शोधयति यद्दोषान्" तथा संशोधनमिति—"संशोधयति यद्दोषान्" इत्याद्युक्तलक्षणम्। अन्नकाले द्विप्रहरादिलक्षणे। तत्र बुभुक्षा कदाचिन्न स्यादिति तदर्थं प्रकाङ्क्षितः इति विशेषणम्। शुद्ध्यर्थन्तु स्नेहं बिन्दुघृतादिकम्। नैशे निशान्तरकृते ("नैशे दिनान्तरकृते" इति आयुर्वेददीपिका। "दिवान्तभक्षिते" इति व्याख्याकुसुमावली। इति प्रकाशकः) चाहारे जीर्णे सति प्रातरेव पिबेदित्यर्थः। अयमत्राभिसन्धिः,—संशमनार्थः स्नेहो यदि जरणान्ते प्रातरेव क्रियते, तदा कोष्ठोपलेपकदोषस्याभावात् तेन दोषेण सह स तु दुःस्नेहो दोषोत्क्लेशं कुर्य्यात्, न तु दोषसंशमनम्, अत एव संशमनोऽन्नकालेऽभिहितः। संशोधनार्थस्तु स्नेहो दोषोत्क्लेशकर एवापेक्षित इति दोषशेषावस्थायामेव प्रातःकाले तत्पानं युक्तमिति। एतच्च कालकथनमुत्सर्गतः, तेन "वातपित्ताधिको रात्रौ" इत्यपवादविषयव्यतिरिक्त एवास्य विषयो ज्ञेयः॥ १३॥

परिपाककालभेदेन स्नेहस्य त्रिविधमात्रानिर्देशः ।—

अहोरात्रमहः कृत्स्नं दिनार्द्धञ्च प्रतीक्षते ।
उत्तमा मध्यमा ह्रस्वा स्नेहमात्रा जरां प्रति ॥ १४ ॥

वृद्धव्यवहारानुसारेण मात्रानिर्देशः ।—

उत्तमस्य पलं मात्रा त्रिभिश्चाक्षैश्च मध्यमे ।
जघन्यस्य पलार्द्धेन स्नेहक्वाथ्यौषधेषु च ॥ १५ ॥

स्नेहविशेषे अनुपाननिर्देशः ।—

जलमुष्णं घृते पेयं यूषस्तैलेऽनु शस्यते ।
वसामज्ज्ञोस्तु मण्डः स्यात् सर्वेषूष्णमथाम्बु वा ॥ १६ ॥

भल्लातकादिस्नेहे अनुपाननिर्देशः ।—

भाल्लाते तौवरे स्नेहे शीतमेव जलं पिबेत् ॥ १७ ॥

पीतस्नेहस्य तृष्णाधिक्ये प्रतीकारनिर्देशः ।—

स्नेहपीतस्तु तृष्णायां पिबेदुष्णोदकं नरः ।
एवञ्चानुपशाम्यन्त्यां स्नेहमुष्णाम्बुनोद्धरेत् ॥ १८ ॥

---

स्नेहमात्रायास्त्रैविध्यमाह, अहोरात्रमित्यादि ।—अहोरात्रमिति—अष्टप्रहरीक-लक्षणम् । एवमहः कृत्स्नमिति—तत्प्रहरचतुष्टयम् । दिनार्द्धमिति—तत्प्रहरद्वय-मुपलक्षयति ; अत एवोक्तं वाग्भटे—"द्वाभ्यां चतुर्भिरष्टाभिर्यामैर्जीर्य्यन्ति याः क्रमात्" ( सू० १६ अ० ) इत्यादि । तेन प्रहराद्यतीतेऽपि दिने पीता मात्रा यथोक्तप्रहरादि-कालप्राप्त्या दिनान्तरे रात्रौ वा जीर्य्यमाणा मन्तव्या । यदा पुनरहोरात्रपरिणामिनी मात्रा क्रियते, तदा तदहराहारो न कार्य्यः ; अत एव चरके उत्तममात्रा स्नेहपान-विषयपुरुषमभिधायोक्ता "क्षुत्पिपासासहाः" ( सू० स्नेहाध्या० ) इति ॥ १४ ॥

अनया तु चरकपरिभाषया प्रायो न व्यवहरन्ति वृद्धाः, तेन उत्तमादिपुरुषाणां स्नेहमात्रां प्रति वृद्धव्यवहारसम्मतमाह—उत्तमस्येत्यादि ॥ १५ ॥

अनुपानमाह, जलमित्यादि ।—अन्विति—अनुपाने ॥ १६ ॥

"सर्वेषूष्णमथाम्बु वा" इति यदुक्तं तदपवादमाह, भाल्लाते इत्यादि ।—भल्लाततुवरयोः स्नेहे इति विग्रहः । तुवरः वृक्षविशेषः, तत्फलभवस्नेहे इत्यर्थः ; उक्तं हि सुश्रुते—"पत्रैस्तु कशराकारैः फलैः सर्षपसन्निभैः । वृक्षस्तुवरको नाम पश्चिमार्णव-तीरजः ॥" ( चि० १३ अ० ) इति ॥ १७ ॥

पीतस्नेहे यदि तृष्णा स्यात् तदा तत्र प्रतीकारमाह, स्नेहपीत इत्यादि ।—स्नेहपीतः पीतस्नेह इत्यर्थः । उद्धरेदिति—वमेत् ॥ १८ ॥

स्नेहव्यापदि प्रतीकारनिर्देशः ।—

मिथ्याचारात् बहुत्वाद्वा यस्य स्नेहो न जीर्य्यति ।
विष्टभ्य वाऽपि जीर्य्यन् तं वारिणोष्णेन वामयेत् ॥
ततः स्नेहं पुनर्दद्यात् लघुकोष्ठाय देहिने ॥ १९ ॥

जीर्णाजीर्णाशङ्कायां प्रतीकारनिर्देशः ।—

जीर्णाजीर्णविशङ्कायां पिबेदुष्णोदकं नरः ।
तेनोद्गारो भवेच्छुद्धो रुचिश्चान्नं भवेत् प्रति ॥ २० ॥

स्नेहपाने कालत्रयोपयोगिभोज्यनिर्देशः ।—

भोज्योऽन्नं मात्रया पास्यन् श्वः पिबन् पीतवानपि ।
द्रवोष्णमनभिष्यन्दि नातिस्निग्धमसङ्करम् ॥ २१ ॥

पञ्चकर्माङ्गस्नेहप्रयोगावधिकालनिर्देशः ।—

त्र्यहावरं सप्तदिनं परन्तु स्निग्धो नरः स्वेदयितव्य इष्टः ।

---

अविधिपीतस्नेहजन्यापदः प्रतीकारमाह, मिथ्याऽऽचारादित्यादि सुश्रुतस्य ।— मिथ्याऽऽचारादिति—शीततोयादिसेवनात् यथाविध्यनुपयोगात् । बहुत्वादिति—अतिमात्रत्वात् । विष्टभ्य मलादिरोधं कृत्वा ॥ १९ ॥

जीर्णेत्यादि ।—जीर्णाजीर्णशङ्का चाल्पस्नेहावशेषेण ज्ञेया ॥ २० ॥

इदानीं स्नेहमपेक्ष्य कालत्रयहितमाहारमाह, भोज्य इत्यादि वाग्भटस्य ।— अद्य स्नेहमिति शेषः ; श्व इति—आगामिदिने स्नेहं पास्यन्, तथा तस्मिन्नेव दिने स्नेहं पिबन्, तथा पीतवानपि यः पुरुषः स मात्रया अन्नं भोज्यः भोजयितव्य इति । कीदृशमन्नं भोजयितव्यम् ? इत्याह, द्रवोष्णमित्यादि । अनभिष्यन्दीति—न स्रोतोऽवरोधकम् । असङ्करमिति—न संयोगविरुद्धम् । निश्चलस्तु पास्यन्नित्यत्र "पाय्यम्" इति पठित्वा पाययितव्यं, स्नेहमिति शेषः इत्याह ; किन्तु चरके—"द्रवोष्णमनभिष्यन्दि भोज्यमन्नं प्रमाणतः । नातिस्निग्धं न सङ्कीर्णं श्वः स्नेहं पातुमिच्छता ॥" ( सू० स्नेहाध्या० ) इति । तथा वाग्भटपुस्तकेष्वपि बहुषु "पास्यन्" ( सू० १६ अ० ) इत्येव पाठः टीकाकृद्भिश्च व्याख्यात इति ॥ २१ ॥

पञ्चकर्माङ्गस्नेहप्रयोगावधिकालमाह, त्र्यहावरमित्यादि ।—त्र्यहेण त्र्यहं व्याप्य क्रियमाणस्नेहनेनावरम् अधमं यथा स्यात् तथा स्निग्धो नरः स्वेदयितव्यो भवति, एतच्च मृदुकोष्ठविषयकम् ; उक्तञ्च—"मृदुकोष्ठस्त्रिरात्रेण स्निह्यति" ( च० सू० स्नेहाध्या० ) इति । तथा सप्तदिनं व्याप्य परं सप्तदिनरूपं वा अपर-

नातः परं स्नेहनमादिशन्ति सात्म्यीभवेत् सप्तदिनात् परन्तु ॥२२॥

मृदुक्रूरकोष्ठयोः स्नेहक्रियाया दिनावधिनिर्देशः।—

मृदुकोष्ठस्त्रिरात्रेण स्निह्यत्यच्छोपसेवया।
स्निह्यति क्रूरकोष्ठस्तु सप्तरात्रेण मानवः ॥ २३ ॥

सुतरां यथा स्यात् तथा स्निग्धो नरः स्वेदयितव्यः। एतच्च क्रूरकोष्ठविषयम्; उक्तञ्च—"स्निह्यति क्रूरकोष्ठस्तु सप्तरात्रेण मानवः" ( च० सू० स्नेहाध्या० ) इति। मध्यकोष्ठं प्रति तु स्नेहनप्रकर्षकालो यद्यपि नोक्तस्तथाऽपि चतुरहादिना मध्यकोष्ठस्य स्नेहनं ज्ञेयम्; यदाह सुश्रुतः,—"पिबेत् त्र्यहं चतुरहं पञ्चाहं षडहं तथा" ( चि० ३१ अ० ) इति। उक्तसप्तदिनरूपस्नेहनकालानतिक्रमं सोपपत्तिकमाह, नातः परमित्यादि। अतः परमिति—सप्तदिनात् परम्। कुतो नादिशन्तीत्यत आह, सात्म्यीभवेदिति; सुश्रुतेऽप्युक्तं—"सप्तरात्रात् परं स्नेहः सात्म्यीभावाय कल्पते" ( चि० ३१ अ० ) इति। सप्तरात्रात् परेण क्रियमाणः स्नेहः सप्तरात्रप्रयोगेण सात्म्यीभूतत्वात् न स्नेहनमधिकं करोतीत्यर्थः; तेन यावन्मात्रस्नेहप्रयोगेण सप्ताहोपयुक्तेन स्नेहनं न भूतं मात्राया अल्पत्वात्, सा मात्रा सप्तदिनात् परं न प्रयोक्तव्यैव, तस्याः स्नेहमात्रायाः सात्म्यीभूतत्वात्। या पुनरधिका मात्रा सात्म्यतां न गता, सा सप्ताहात् परमपि स्नेहनार्थं कर्त्तव्यैव। वृद्धास्तु यदि सप्तरात्रेणापि पुरुषः स्निग्धो न भवति, तदा किञ्चित् विश्रामं कृत्वा पुनरधिकमात्रया स्नेह प्रयुञ्जते। ननु यदि क्रूरकोष्ठः सप्तरात्रेण स्निह्यतीति व्यवस्था, तत् कथमिह नातः परं स्नेहनमादिशन्तीत्यनेन सप्तरात्रेणाप्यस्नेहनमुच्यते इति? ब्रूमः—क्रूरकोष्ठः सप्तरात्रेणैव स्निह्यति, परन्तु क्रूरकोष्ठतामपेक्ष्य कृतया स्नेहमात्रया स्निह्यति, यदा तु हीनमात्रया प्रयुज्यते, तदा सप्तरात्रेणापि न स्निह्यतीति। यत्तु तन्त्रान्तरे—"तत् त्रि-पञ्च-नवरात्राणि स्नेहपानं विधीयते" इत्यनेन सप्तरात्रादूर्द्धमपि स्नेहनं विहितं, तदपि सात्म्यीभूतहीनमात्रापेक्षयैवाधिकमात्राभिप्रायेण ज्ञेयम्। अत्र च सप्तरात्रादूर्द्धं स्नेहप्रयोगस्य निषेधात् त्र्यहादर्वाक् प्रयोगस्य चानिषेधात् सद्यःस्नेहप्रयोगे एकदिनेनापि स्नेहनमनुजानाति। यस्तु कश्चिन्मृदुकोष्ठं प्रति त्र्यहादूर्द्धं न स्नेहनं कर्त्तव्यं सात्म्यीभावादिति चार्थोऽत्र लभ्यते इति व्याख्यानयति, तन्न; यतः सात्म्यीभावः सप्तदिनानिवर्त्तित्वयैवाचार्य्येणोक्तः, तेनात्यल्पमात्राप्रयुक्तेन स्नेहेन त्र्यहात् यदि न स्निह्यति मृदुकोष्ठस्तदाऽधिकदिनान्यपि तत्र स्नेहः कर्त्तव्य एवेत्यर्थः ॥ २२ ॥

मृदुकोष्ठादिलक्षणमाह, मृदुकोष्ठ इत्यादि।—यस्त्रिरात्रेण स्निह्यति स मृदुकोष्ठ

विरेचनाङ्गस्नेहपानविधिः।—

स्निग्धद्रवोष्णमन्वाद्य रसभुक् स्नेहमाचरन्।
स्निग्धस्त्र्यहं स्थितः कुर्य्याद्विरेकं—" ॥ २४ ॥

वमनाङ्गस्नेहपानविधिः।—

"—वमनं पुनः।
एकाहं दिनमन्यच्च कफमुत्क्लेश्य तत्करैः ॥ २५ ॥

सम्यक् स्निग्धस्य रूक्षस्य च लक्षणम्।—

वातानुलोम्यं दीप्ताग्निवर्चः स्निग्धमसंहतम्।
स्नेहोद्वेगः क्लमः सम्यक् स्निग्धे रूक्षे विपर्य्ययः ॥ २६ ॥

अतिस्निग्धस्य लक्षणम्।—

अतिस्निग्धे तु पाण्डुत्वं घ्राणवक्त्रगुदस्रवाः ॥ २७ ॥

---

इत्यादि व्याख्येयम्। मध्यकोष्ठलक्षणन्तु यद्यपि नोक्तं, तथाऽपि मध्यविधेन चतुरहादिना यः स्निह्यति स मध्यकोष्ठ इति ज्ञेयः ॥ २३ ॥

इदानीं संशोधनस्नेहपाने कर्त्तव्ये यद्विधेयं तदाह, स्निग्धेत्यादि वाग्भटस्य।—स्निग्धस्त्र्यहं स्थित इति—स्निग्धो भूत्वा त्रिदिनं परित्यक्तस्नेहपानः सन् विरेकं कुर्यात् विरेचनौषधं पिबेदित्यर्थः। इदानीं स्नेहोपरमदिवस एव यद्विधेयं तदाह, स्निग्धद्रवोष्णेत्यादि। स्नेहमाचरन्नित्यत्र "स्वेदमाचरन्" (वा० सू० १६ अ०) इत्यपि पाठः, स्नेहोपरमदिवसे स्नेहपाननिषेधस्योक्तत्वात्; चरकेऽप्युक्तं—"स्नेहात् प्रस्कन्दनं जन्तुस्त्रिरात्रोपरतः पिबेत्। स्नेहवत् द्रवमुष्णञ्च त्र्यहं भुक्त्वा रसौदनम् ॥" (सू० स्नेहाध्या०) इति ॥ २४ ॥

वमनमित्यादि।—एकाहमित्यत्रापि स्थित इति योज्यं, तेन स्निग्धो भूत्वा एकाहं स्थित इति—परित्यक्तस्नेहपानः सन् दिनान्तरञ्च कफकरैर्ग्राम्यानूपरसादिभिः कफमुत्क्लेश्य प्रच्छर्द्यनुखं कारयित्वा वमनं कुर्यादित्यर्थः। अत्रापि पूर्ववत् स्नेहोपरमदिवसे स्निग्धद्रवोष्णेत्यादिभुक् स्यात्; यदाह चरकः—"एकाहोपरतस्तद्वत् भुक्त्वा प्रच्छर्दनं पिबेत् ॥" (सू० स्नेहाध्या०) इति ॥ २५ ॥

सम्यक् स्निग्धस्य तथा रूक्षस्य तथाऽतिस्निग्धस्य च लक्षणान्याह, वातानुलोम्यमित्यादि वाग्भटस्य।—असंहतमिति—अकठिनम्। स्नेहोद्वेगः अनिच्छा। क्लमः ग्लानिः; सुश्रुते—"ग्लानिः सदनमङ्गानाम्" (चि० ३१ अ०) इत्युक्तम् ॥ २६।२७ ॥

रूक्षातिस्निग्धयोः चिकित्सा ।—

रूक्षस्य स्नेहनं कार्य्यमतिस्निग्धस्य रूक्षणम् ।
श्यामाककोरदूषान्न-तक्रपिण्याकसक्तुभिः ॥ २८ ॥

सद्यः स्नेहनार्हाः ।—

बालवृद्धादिषु स्नेह-परिहारासहिष्णुषु ।
योगानिमाननुद्वेगान् सद्यः स्नेहान् प्रयोजयेत् ॥ २९ ॥

सद्यः स्नेहनी मांसरससिद्धा यवागूः ।—

भृष्टा मांसरसे स्निग्धा यवागूः स्वल्पतण्डुला ।
सक्षौद्रा सेव्यमाना तु सद्यः स्नेहनमुच्यते ॥ ३० ॥

सद्यः स्नेहनी पाञ्चप्रसृतिकी पेया ।—

सर्पिस्तैलवसामज्ज-तण्डुलप्रसृतैः शृता ।
पाञ्चप्रसृतिकी पेया पेया स्नेहनमिच्छता ॥ ३१ ॥

सद्यः स्नेहनी बहुतिला यवागूः ।—

सर्पिष्मती बहुतिला तथैव स्वल्पतण्डुला ।
सुखोष्णा सेव्यमाना तु सद्यः स्नेहनमुच्यते ॥ ३२ ॥

---

रूक्षस्येत्यादि ।—रूक्षणं श्यामाकादिभिरित्यन्वयः ॥ २८ ॥

इदानीं विषयाभिधानपूर्वकं सद्यःस्नेहनयोगानाह, बालेत्यादि वाग्भटस्य ।—अनुद्वेगानिति—अवैराग्यजनकानित्यर्थः ॥ २९ ॥

भृष्टेत्यादि सुश्रुतस्य ।—भृष्टा इति—सन्तलिता । मांसरसे इत्यनन्तरं सिद्धा इति शेषः । स्वल्पतण्डुलेत्यत्र "सूपकल्पिता" ( सु० चि० ३१ अ० ) इति पाठान्तरम् ॥ ३० ॥

सर्पिरित्यादि ।—प्रसृतं पलद्वयम् । पेयेति—पातव्या ॥ ३१ ॥

सर्पिष्मतीत्यादि सुश्रुतस्य ।—बहुतिलेत्यनेन निस्तुषतिलानां त्रयो भागाः, एकः तण्डुलानामिति । इयञ्च सुखोष्णा सेव्या, सुश्रुते तथैवोक्तत्वात्, चक्रेण प्रतिसंस्कृत्य लिखितमेतत् । तत्र हि तथैवेत्यत्र "यवागूः" ( चि० ३१ अ० ) इति पठ्यते ॥ ३२ ॥

सद्यः स्नेहनं धारोष्णदुग्धम् ।—

शर्कराघृतसंसृष्टे दुह्यात् गां कलसेऽथवा ।
पाययेद्रूक्षमेनं हि सद्यः स्नेहनमुच्यते ॥ २३ ॥

कुष्ठादौ स्नेहने वर्जनीयानि ।—

ग्राम्यानूपौदकं मांसं गुडं दधि पयस्तिलान् ।
कुष्ठी शोथी प्रमेही च स्नेहने न प्रयोजयेत् ॥ २४ ॥

कुष्ठादौ स्नेहने प्रयोज्यानि ।—

स्नेहैर्यथास्वं तान् सिद्धैः स्नेहयेदविकारिभिः ।
पिप्पलीभिर्हरीतक्या सिद्धैस्त्रिफलया सह ॥ २५ ॥

संशोधने क्रमनिर्देशः ।—

स्नेहमग्रे प्रयुञ्जीत ततः स्वेदमनन्तरम् ।
स्नेहस्वेदोपपन्नस्य संशोधनमथान्तरम् ॥ २६ ॥

इति स्नेहाधिकारः ।

---

शर्करेत्यादि सुश्रुतस्य ।—रूक्षमिति पुरुषविशेषणम् ॥ २३ ॥

येषु व्याधिषु स्नेहनार्थं यानि द्रव्याणि न प्रयोज्यानि तान्याह, ग्राम्येत्यादि ।—स्नेहने इति—स्नेहनिमित्तम् ॥ २४ ॥

तर्हि ते के स्नेहाः? इत्याह, स्नेहैरित्यादि ।—यथास्वमिति—यो यत्र स्नेहो युज्यते सर्पिरादिः । सिद्धैरिति—तत्तद्व्याधिहरत्वेन प्रसिद्धैः । द्वितीय सिद्धैरिति पदं पिप्पल्यादिभिः प्रत्येकं योज्यम् । पिप्पल्यादिसिद्धाः स्नेहाः कुष्ठादिषु यथासङ्ख्यमिति केचित्, तन्न; वाग्भटे व्यतिक्रमेणाभिधानात्; यथा—"गुडानूपामिषक्षीर-तिलमाषसुरादधि । कुष्ठशोथप्रमेहेषु स्नेहनार्थं न कल्पयेत् ॥ त्रिफलापिप्पलीपथ्या-गुग्गुल्वादिविपाचितान् । स्नेहान् यथास्वमेतेषां योजयेदविकारिणः ॥" ( सू० १६ अ० ) इति ॥ २५ ॥

स्नेहादिषु क्रमस्य प्राधान्यमाह, स्नेहमित्यादि ।—स्पष्टम् ॥ २६ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां स्नेहाधिकार-विवृतिः ।

# अथ स्वेदाधिकारः ।

दोषविशेषे स्वेदस्य कल्पनाभेदः ।—

वातश्लेष्मणि वाते वा कफे वा स्वेद इष्यते ।
स्निग्धरूक्षस्तथा स्निग्धो रूक्षश्चाप्युपकल्पितः ॥ १ ॥

व्याधि-शरीरापेक्षया महास्वेदादिनिर्देशः ।—

व्याधौ शीते शरीरे च महान् स्वेदो महाबले ।
दुर्बले दुर्बलः स्वेदो मध्यमे मध्यमो मतः ॥ २ ॥

आशयविशेषगतदोषे स्वेदविधिः ।—

आमाशयगते वाते कफे पक्वाशयाश्रये ।
रूक्षपूर्वो हितः स्वेदः स्नेहपूर्वस्तथैव च ॥ ३ ॥

अवयवविशेषे स्वेदविधिः ।—

वृषणौ हृदयं दृष्टी स्वेदयेन्मृदु वा न वा ।
मध्यमं वङ्क्षणौ शेषमङ्गावयवमिष्टतः ॥ ४ ॥

---

"स्नेहमग्रे प्रयुञ्जीत ततः स्वेदमनन्तरम्" इत्युक्तेः स्नेहानन्तरं स्वेदमाह ; तत्र दोषविशेषापेक्षया स्वेदस्य कल्पनाभेदमाह, वातेत्यादि ।—अत्र यथासङ्ख्यमन्वयः । स्निग्धरूक्ष इति स्निग्धरूक्षद्रव्यकृतत्वात् ॥ १ ॥

रोगाद्यपेक्षयाऽपि स्वेदस्य कल्पनाभेदमाह, व्याधावित्यादि ।—व्याधौ महाबले शीते शीतकृते शीतले तथा शरीरे च महाबले महानिति मृदुमध्यस्वेदापेक्षया प्रचण्डतापत्वेन कालबाहुल्येन च । एवं दुर्बले इति मध्यमे इति च व्याख्येयम् ॥२॥

"वाते स्निग्धः कफे रूक्षः" इति यदुक्तं, तस्य देशविशेषापेक्षया व्यभिचारमाह, आमाशयेत्यादि वाग्भटस्य ।—आमाशय इति कफस्थानोपलक्षणम् । अत्रापि यथासङ्ख्यमन्वयः, तेन कफस्थानापेक्षया पूर्वं रूक्षस्वेदं कृत्वा पश्चाद्वातापेक्षः स्निग्धस्वेदः कार्यः ; यदुक्तं—"स्थानं जयेद्धि पूर्वम्" इति । एवं पक्वाशयगते स्नेहपूर्वं इति व्याख्येयम् ॥ ३ ॥

अस्वेद्यदेशानाह, वृषणावित्यादि ।—यदि वृषणे स्वेदः क्रियते, तदा तत्र प्रत्यासन्नशुक्रवहस्रोतस उपघातात् क्लीबत्वं स्यात्, हृदयस्याप्योजःक्षयप्रसङ्गात्, दृष्ट्यां तर्पकश्लेष्मक्षयात् तिमिरमान्ध्यं वा भवेदिति । मृदु वा न वेति—स्वेदैकसाध्ये वृषणादिगते व्याधौ मृदु स्वेदयेत्, स्वेदव्यतिरिक्तोपायान्तरसम्भवे तु न वेति बोध्यः । इष्टत इति—आतुरेच्छातो वैद्येच्छातश्च । इष्टेति भावे क्तः ॥ ४ ॥

स्वेदानर्हाः।—

न स्वेदयेदतिस्थूल-रूक्षदुर्बलमूर्च्छितान्।
स्तम्भनीयक्षतक्षीण-विषमद्यविकारिणः॥ ५॥
तिमिरोदरवीसर्प-कुष्ठशोषाढ्यरोगिणः।
पीतदुग्धदधिस्नेह-मधून् कृतविरेचनान्॥ ६॥
भ्रष्टदग्धगुदग्लानि-क्रोधशोकभयार्दितान्।
क्षुत्तृष्णाकामलापाण्डु-मेहिनः पित्तपीड़ितान्॥
गर्भिणीं पुष्पितां सूतां मृदुर्वाऽऽत्ययिके गदे॥ ७॥

अनाग्नेयस्वेदविषयः।—

स्वेदो हितस्त्वनाग्नेयो वाते मेदःकफावृते॥ ८॥

अनाग्निस्वेदाः।—

निवातं गृहमायासो गुरुप्रावरणं भयम्।

---

अस्वेद्यानाह, न स्वेदयेदित्यादि वाग्भटस्य।—अतिस्थूलरूक्षदुर्बलक्षीणानां स्वेदासहत्वात् प्राणोपरोधः। मूर्च्छितानां पित्तवृद्ध्या मूर्च्छैव भवति। स्तम्भनीयाः अत्यतिसारपीड़िताद्यः; एषां स्वेदात पित्तवृद्ध्या रोगवृद्धिः स्यात्। क्षतस्य स्वेदाद्रक्तातिप्रवृत्तिः। विषमद्यविकारिणामपि पित्तवृद्ध्या तयोरपि महान् वेगः। तिमिरे सर्पकश्लेष्मक्षयः। उदरे अत्यम्बादिनिदानत्वेन तद्वृद्धिरेव। विसर्पकुष्ठयो रक्तदुष्टिः। एवमाढ्यरोगे; आढ्यरोगी वातरक्तम्। शोषे रसादिक्षयः। पीतदुग्धादौ उत्क्लेशादयः। कृतविरेके पित्तवृद्ध्या तदतियोगः। भ्रष्टगुदो गुदभ्रंशी, दग्धगुदः क्षाराग्न्यादिभिः, गुदभ्रंशदाहयोः पित्तवृद्ध्या अरत्वेन क्रमेण तयोरेव वृद्धिः। क्षुधायां वह्निवृद्ध्या धातुपाकः। तृष्णायां पित्तवृद्धिः। कामलापाण्ड्वोश्च पित्तवृद्ध्या तद्वृद्धिः। गर्भिण्याः गर्भव्यापत्तिः। पुष्पितायां रजोऽतियोगः। सूतामिति—अप्रसूतां, प्रसूतगर्भामिति यावत, अस्यास्तु स्वेदात रक्तातिप्रवृत्तिः स्यादिति भावः। सम्यक्प्रसूतायास्तु स्वेदविधानमग्रे वक्ष्यति। एषु च मेदस्यादिषु यदि स्वेदैकसाध्यः सन्न्यासादिर्भवति तदा महाप्रत्यवायभयादल्पप्रत्यवायमुपेक्ष्यापि मृदुस्वेदो विधेय इत्याह, मृदुर्वाऽऽत्ययिके गदे इति॥ ५—७॥

अनाग्नेयस्वेदस्य विषयमाह—स्वेदो हित इत्यादि वाग्भटस्य॥ ८॥

उपनाहाहवक्रोध भूरिपानक्षुधातपाः ॥
स्वेदयन्ति दशैतानि नरमग्निगुणादृते ॥ ९ ॥

सम्यक् स्वेदस्य लक्षणम् ।—

शीतशूलव्युपरमे स्तम्भगौरवनिग्रहे ।
सञ्जाते मार्दवे स्वेदे स्वेदनाद्विरतिर्मता ॥ १० ॥

स्वेदातियोगस्य लक्षणं चिकित्सा च ।—

स्फोटोत्पत्तिः पित्तरक्तप्रकोपो
मूर्च्छा भ्रान्तिर्दाहतृष्णे क्लमश्च ।
खिन्नेऽत्यर्थं सन्धिपीडा विदाहः
कृत्याः शीतास्तत्र कुर्याद्विधिज्ञः ॥ ११ ॥

स्वेदस्य स्थान कालानिर्देशः ।—

सर्वान् स्वेदान् निवाते तु जीर्णेऽन्ने चावचारयेत् ॥ १२ ॥

पूर्वं स्वेद्याः ।—

येषां नस्यं विधातव्यं वास्तश्चापि हि देहिनाम् ।
शोधनीयास्तु ये केचित् पूर्वं स्वेद्यास्तु ते मताः ॥ १३ ॥

---

अनग्निस्वेदानाह, निवातमित्यादि वाग्भटस्य ।—उपनाहः बहलो लेपः, स हि बहलत्वेन शरीरोष्मरोध कृत्वा स्वेदयति । भूरिपानं मद्यस्य ॥ ९ ॥

स्वेदस्य सम्यग्योगलक्षणमाह, शीतेत्यादि ।—स्वेदे घर्मे । स्वेदनादिति—प्रस्वेदद्रव्यात् (?) । अत्र शीताद्युपहारस्य स्वेदस्य सम्यग्योगलक्षणत्वेन शीतादेरर्थतोऽनुपरमस्य स्वेदासम्यग्योगलक्षणत्वमुक्तं भवति ; सुश्रुतेऽप्युक्तं—"स्वेदास्रावो व्याधिहानिर्लघुत्वं शीतार्थित्वं मार्दवञ्चातुरस्य । सम्यक्स्विन्ने लक्षणं प्राहुरेतत् मिथ्यास्विन्ने व्यत्ययेनैतदेव ॥" ( चि० ३२ अ० ) इति ॥ १० ॥

स्वेदातियोगलक्षणं चिकित्साञ्चाह —स्फोटेत्यादि सुश्रुतस्य ॥ ११ ॥

स्वेदा यत्र यथा च प्रयोज्यास्तानाह, सर्वानित्यादि सुश्रुतस्य ।—जीर्णेऽन्ने इत्युत्सर्गस्तेन विरूक्षशोषादौ यत्र स्वेदविधानं "विरूक्ष्य स्वेदनं कार्यम्" ( सु० सू० ४६ अ० ) इत्यादिनोक्तं तदपवादतया न दुष्यतीति ॥ १२ ॥

इदानीं ये च पूर्वं स्वेदविषयास्तथा पश्चात् ये स्वेदविषयाः, ये च कालद्वयेऽपि स्वेदविषयास्तान् क्रमेणाह—येषामित्यादि सुश्रुतस्य ॥ १३ ॥

पश्चात् स्वेद्याः ।—

पश्चात् स्वेद्या हृते शल्ये मूढगर्भाऽनुपद्रवा ।
सम्यक् प्रजाता काले च पश्चात् स्वेद्या विजानता ॥ १४ ॥

पूर्वं पश्चाच्च स्वेद्याः —

स्वेद्याः पश्चाच्च पूर्वञ्च भगन्दर्य्यर्शसस्तथा ॥ १५ ॥

चतुर्विधस्वेदोपयोगिद्रव्याणि ।—

तप्तैः सैकतपाणिकांस्यवसनैः स्वेदोऽथवाऽङ्गारकै-
र्लेपाद्वातहरैः सहाम्ललवणस्नेहैः सुखोष्णैर्भवेत् ।
एवं तप्तपयोऽम्लवातशमनक्वाथादिसेकादिभि-
स्तप्तैस्तोयनिषेचनोद्भवबहुद्बाष्पैः शिलाद्यैः क्रमात् ॥
तापोपनाहद्रवबाष्पपूर्वाः स्वेदाः—" ॥ १६ ॥

---

पश्चादित्यादि ।—शल्ये इति—गर्भरूपशल्ये । अनुपद्रवा गर्भस्रावाद्युपद्रवरहिता । सम्यक् प्रजाता सम्यक् प्रसूता ॥ १४ ॥

स्वेद्या इत्यादि ।—पूर्वं पश्चाच्च स्वेद्या इति—भगन्दरेऽर्शसि च पूर्वं स्वेदस्तप्तलौह-शलाकया दाहरूपः, पश्चात् स्वेदस्तु दाहानन्तरमुष्णोदकोपवेशनरूपो ज्ञेयः ॥ १५ ॥

सुश्रुते तापबाष्पोपनाहद्रवभेदेन चतुर्विधस्वेद उक्तः, तप्तैरित्यादिना बाष्पपूर्वा इत्यन्तेन तानाह, तप्तैरित्यादि ।—तत्र तप्तैरित्यादिना अङ्गारकैरित्यन्तेन तापस्वेदः । सिकतैव सैकतम् ; सुश्रुतेऽप्युक्तं—"तत्र तापस्वेदो नाम यः पाणिकांस्य-कन्दुकपालकवालुकावस्त्रैः प्रयुज्यते शयानस्य चाङ्गतापो बहुशः खादिराङ्गारैः" (चि० ३२ अ०) इति । लेपादित्यादिना भवेदित्यन्तेन उपनाहस्वेदः । लेपमाह, वातहरैर्वराहादीनां तैलैर्देवदार्वादिभिश्च काञ्जिकादियुक्तैः सुखोष्णैर्लेपात् यः स्वेद उक्तः स उपनाह इत्यर्थः । एवमित्यादिना सेकादिभिरित्यन्तेन द्रवस्वेदः । पयः दुग्धम् । अम्लं काञ्जिकम् ; सुश्रुतेऽपि—"द्रवस्वेदश्च वातहरद्रव्यक्वाथपूर्णे कोष्ठ-कटाहे द्रोण्यां वाऽवगाह्य स्वेदयेत् । एवं पयोमांसरसयूषतैलधान्याम्लघृतवसामूत्रेष्ववगाहेत, एतैरेव सुखोष्णैः कषायैश्च परिषिञ्चेत्" (चि० ३२ अ०) इति । तप्तैरित्यादिना शिलाद्यैरित्यन्तेन बाष्पस्वेदः । शिलाद्यैरित्याद्यशब्दात् कपालेष्टकालोहपिण्डादीनां ग्रहणम्, अस्यैव विशेषणं तप्तैरित्यादि ; सुश्रुते तु—"बाष्पस्वेदस्तु कपालपाषाणे-ष्टकालोहपिण्डानामग्निवर्णानामद्भिरासिच्येत्" (चि० ३२ अ०) इत्याद्युक्तम् ॥ १६ ॥

दोषविशेषे स्वेदचतुष्टयानां विषयनिर्देशः ।—

“—ततोऽन्त्यप्रथमौ कफे स्तः ।
वायौ द्वितीयः पवने कफे च पित्तोपसृष्टे विहितस्तृतीयः ॥१७॥

इति स्वेदाधिकारः ।

---

## अथ वमनाधिकारः ।

वमनस्य विषयः विधिश्च ।—

स्निग्धस्विन्नं कफे सम्यक् संयोगे वा कफोल्बणे ।
श्वो वम्यमुत्क्लिष्टकफं मत्स्यमांसतिलादिभिः ॥ १ ॥
यथाविकारविहितां मधुसैन्धवसंयुताम् ।
कोष्ठं विभज्य भैषज्य-मात्रां मन्त्राभिमन्त्रिताम् ॥ २ ॥
“ब्रह्मदक्षाश्विरुद्रेन्द्र-भूचन्द्रार्कानिलानलाः ।
ऋषयः सौषधिग्रामा भूतसङ्घास्तु पान्तु ते ॥ ३ ॥

---

एषां स्वेदानां विषयमाह, तत इत्यादि ।—तत इति सप्तम्यन्तात् तसिः । तेषु स्वेदेषु मध्ये चाद्यन्तौ स्वेदौ तापस्वेद-वाष्पस्वेदौ कफे स्तः । द्वितीय इति—उपनाहो वायौ । तृतीय इति—द्रवस्वेदः पित्तोपसृष्टे वाते कफे च भवति; सुश्रुतेऽप्युक्तं —“तत्र तापोष्मस्वेदौ विशेषतः श्लेष्मघ्नौ । उपनाहस्वेदो वातघ्नः । अन्यतरस्मिन् पित्तसंसृष्टे द्रवस्वेदः” ( चि० ३२ अ० ) इति । ननु पित्तोपसृष्टे कथं स्वेदो वातश्लेष्मणि वाते वेत्यनेनैव विरोधात ? उच्यते—पित्तयुक्तेऽपि द्रवस्वेदविधानात् वातश्लेष्मणोरित्यादिवचनं प्रायिकं ज्ञेयमिति ॥ १७ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां स्वेदाधिकार-विवृतिः ।

---

इदानीं स्नेहस्वेदानन्तरीयत्वात् पञ्चकर्माणि वक्तव्यानि; तत्र यद्यपि पञ्च-कर्मसु वस्तेरेव प्राधान्यम्; यदुक्तम्—“उपक्रमाणां सर्वेषां सोऽग्रणीः” इति, तथाऽपि पञ्चकर्मणामौत्सर्गिकप्रवृत्तौ वमनविरेचनपूर्विकैव वस्तिप्रवृत्तिर्भवतीति कृत्वा वमन-विरेचने एव प्रथममभिधातव्ये; तत्रापि वमनपूर्वकत्वात् विरेचनस्य विरेचनात् प्राक् वमनमाह, स्निग्धेत्यादि ।—सम्यक् स्निग्धस्विन्नं पुरुषं भैषज्यमात्रां पूर्वाह्णे पाययेत्

रसायनमिवर्षीणां देवानाममृतं यथा।
सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते॥" ४॥
पूर्वाह्णे पाययेत् पीतो जानुतुल्यासने स्थितः।
तन्मना जातहृल्लास-प्रसेकश्छर्दयेत् ततः॥
अङ्गुलीभ्यामनायस्त-नालेन मृदुनाऽथवा॥ ५॥

कृष्णादिकल्कः।—

कृष्णेन्द्रयवसिन्धूत्थ-वचाकल्कयुतं पिबेत्।
यष्टीकषायं सक्षौद्रं तेन साधु वमत्यलम्॥ ६॥

वमने क्वाथविधिः।—

क्वाथ्यद्रव्यस्य कुडवं श्रपयित्वा जलाढके।

---

इति वक्ष्यमाणेनान्वयः। वमनस्य विषयमाह, कफे इत्यादि। कफे केवलकफे। कफोल्बणे इति—कफप्रधाने। श्वो वम्यमित्यादि। श्व इति—आगामिदिवसे। यदि पुरुषो वम्यो वमनार्हो भवति, तदा तत्पूर्वदिवसे मत्स्यादिभिः कफ उत्क्लेशनीय इत्यर्थः, उत्क्लिष्टकफाय दीयमानं वमनं न दुःखमावहति; उक्तं हि—"कफो-ऽस्यच्छर्दयति ह्यदुःखम्" (च० सि० कल्पनासि०) इति। मधुसैन्धवसंयुतामित्यनेन सर्वस्मिन्नेव वमनयोगे मधुसैन्धवयोर्देयतां बोधयति। कोष्ठं विभज्येति—कोष्ठाद्यपेक्षया मधु सैन्धवञ्च स्तोकं बहु वा देयमित्यर्थः। मात्रामिति—अनपायिपरिमाणम्। मन्त्राभि-मन्त्रितामित्युक्तम्, अतो मन्त्रमाह, ब्रह्मेत्यादि। वमनौषधपानानन्तरीयविधिमाह, पीत इत्यादि। तन्मना इति—वान्तिमनाः। अङ्गुलीभ्यामित्यत्र परिकर्त्तितनखाभ्यां कण्ठमभिस्पृशन्निति शेषः; चरकेऽपि—"सुपरिलिखितनखाभ्यामङ्गुलीभ्यां कण्ठमभि-स्पृशन्" (सू० उपकल्पनीय०) इत्युक्तम्। अनायस्तेति—ऋजुः। मृदुना नालेनेति —उत्पलनालेन॥ १—५॥

वमनविधिमभिधाय वमनयोगानाह, कृष्णेत्यादि।—अत्र कृष्णादीनां मिलित्वा कर्षः। यष्टीकषायं यष्टीमधुकषायम्। कषायश्च "क्वाथ्यद्रव्यस्य कुडवं श्रपयित्वा जलाढके। चतुर्भागावशिष्टन्तु वमनेष्ववचारयेत्॥" इति परिभाषया कार्य्यः। नन्वत्र चतुर्भागावशिष्टः कषायः प्रस्थमात्रो भवति; चरके तु—"पूर्णं शरावं पिबेत्" (क० मदनकल्प०) इत्युक्तम्, अतो विरोधः? नैवं, चरके तु "पूर्णं शरावम्" इति यदुक्तं तद्द्विशरावपानाभिप्रायेण; तेनेह प्रस्थमाने कषाये शरावमेकं पीत्वा शेषकषायभागो

चतुर्भागावशिष्टन्तु वमनेष्ववचारयेत् ॥ ७ ॥

प्रियङ्गुकल्कप्रयोगः।—

तण्डुलजलनिष्पिष्टं यः पीत्वा तथा वमति पूर्वाह्णे।
फलिनीवल्कलमुग्रां हरति गरं सकफपित्तरुजम् ॥ ८ ॥

ताम्रप्रयोगः।—

क्षौद्रलीढं ताम्ररजो वमनं गरदोषनुत् ॥ ९ ॥

पञ्चकषायः।—

अटरूषं वचा निम्बं पटोलं फलिनीत्वचम्।
क्वाथयित्वा पिबेत् तोयं वान्तिकृन्मदनान्वितम् ॥ १० ॥

प्रियङ्ग्वादिकल्कः।—

निम्बकषायोपेतं फलिनीगदमदनमधुकसिन्धूत्थम्।

---

रल्पवीर्योऽयोगे सति पुनः पानार्थमित्यभिप्रायः। एतच्च मात्राकथनं मन्दबुद्धेरवबोधकत्वायस्य (बुद्धिवर्द्धनार्थं महाबुद्धेरपि अनुत्तरङ्गार्थम् इति प्रकाशकः) स्यात्, इत्येवं कथं क्रियते (?) इति, वस्तुतस्तु कोष्ठाद्यपेक्षयैव मात्रा कल्पनीयेति सिद्धान्तः, अत एव कोष्ठं विभज्य भैषज्यमात्राम् इत्युक्तम्। सर्वत्रैव वमनयोगे द्रवीकरणं मधु सैन्धवञ्च ज्ञेयं, न चोष्णे मधु विरुध्यते इति वाच्यं, वमनस्यापक्वस्यैव ऊर्द्ध्वगमनात्; जठराग्निपाके हि विरोधो भवति। वृद्धवैद्यास्तु अयोगे कदाचित् पाकसम्भावनया मधु न प्रक्षिपन्त्येव ॥ ६।७ ॥

तण्डुलजलेत्यादि।—अत्र पानमपि तण्डुलजलेनैव। फलिनी प्रियङ्गुः, तद्वल्कलं कर्षमात्रं, मधुसैन्धवे अपि कर्षमाने। एतच्च दिङ्मात्रं, तेन कोष्ठाद्यपेक्षया स्तोकं बहु वा क्रियते। पानार्थं तण्डुलसलिलमपि शरावमात्रं "पूर्णं शरावम्" (च० क० मदनकल्प०) इत्युक्तेः ॥ ८ ॥

क्षौद्रेत्यादि।—अत्र रसायनाधिकारोक्तताम्रयोगवन्मारितपुटितनेपालताम्रचूर्णं रक्तिपञ्चकं मधुना सम्मर्द्य लेह्यम्। अस्य ताम्रयोगस्य वमनकारकत्वं वमनौषधभावितत्वादेवेति ज्ञेयम् ॥ ९ ॥

अटरूषमित्यादि।—अत्रापि पूर्वोक्तपरिभाषयैव क्वाथः करणीयः, मदनफलन्तु कर्षमात्रं प्रक्षेप्यमित्याहुः ॥ १० ॥

निम्बकषायोपेतमित्यादि।—अत्र गदः कुष्ठम्। फलिनीकुष्ठमधुकानां मिलित्वा

मधुयुतमेतद्वमनं खलु कफपूर्णाशये शस्तम् ॥ ११ ॥

वामकद्रव्याणि ।—

फलजीमूतकेक्ष्वाकु-कुटजाः कृतवेधनः ।
धामार्गवश्च संयोज्याः सर्वथा वमनेष्वमी ॥ १२ ॥

सम्यग्योगलक्षणेनान्तिकी-लैङ्गिकीशुद्धिनिर्देशः ।—

क्रमात् कफः पित्तमथानिलश्च यस्यैति सम्यक् वमितः स इष्टः ।
हृत्पार्श्वमूर्द्धेन्द्रियमार्गशुद्धौ तनोर्लघुत्वेऽपि च लक्ष्यमाणे ॥ १३ ॥

अयोगातियोगलक्षणम् ।—

दुश्छर्दिते स्फोटककोठकण्डू-हृत्खाविशुद्धिर्गुरुगात्रता च ।
तृण्मोहमूर्च्छाऽनिलकोपनिद्रा-बलादिहानिर्वमितेऽति
विद्यात् ॥ १४ ॥

---

कर्षः, मदनफलस्य च कर्षः, सैन्धवस्य माषकचतुष्टयं, मधुनोऽष्टौ माषका इति प्रक्षेपव्यवस्था इत्याहुः ॥ ११ ॥

वमनयोगेषु यौगिकद्रव्याण्याह, फलमित्यादि ।—फलं मदनफलम् । जीमूतकः देवदाली, घोषकभेदः । इक्ष्वाकुः तिक्ततुम्बी । कृतवेधनः ज्योत्स्निका । धामार्गवः पीतघोषः । एषां जीमूतादीनाञ्च फलम् । एते च दोषाद्यपेक्षया कल्क-क्वाथादिकल्पनया वमनयोगेषु योज्या इत्यर्थः ॥ १२ ॥

इदानीं वमनस्य सम्यग्योगलक्षणमाह, क्रमादित्यादि ।—क्रमादिति वचनेन यथोक्तक्रमलङ्घनेन कफाद्यागमनं न सम्यग्योगलक्षणमिति बोधयति, यतः कफादूर्द्ध्वं यदा पित्तं गतं स्यात् तदा तत्पित्तागमनेऽपि सति न शुद्धिः, किन्तु यदैवामाशयाधोभागगतं पित्तं वमनमानयति तदैव शुद्धिः, तच्च पित्तानयनं कफानयनानन्तरमेव भवति । इयमेवान्तिकी शुद्धिरव्यभिचारिणी । हृत्पार्श्वेत्यादिना वमनस्य लैङ्गिकीं शुद्धिमाह । सम्यक् वमित इष्ट इत्यन्वयः ॥ १३ ॥

अर्द्धश्लोकेनायोगकृतवमनलक्षणमाह, दुश्छर्दिते इत्यादि ।—हृत्खाविशुद्धिरिति —हृदयस्य तथा खानामिन्द्रियाणां स्रोतसामशुद्धिरित्यर्थः । अतियोगलक्षणमाह, तृण्मोहेत्यादि । आदिशब्देन वर्णस्वरादिग्रहणम् । "बलातिहानिः" इत्यपि पाठः । अति वमिते इत्यन्वयः ॥ १४ ॥

वमनानन्तरं पथ्य-तत्कालनिर्देशः।—

ततः सायं प्रभाते वा क्षुद्वान् पेयादिकं भजेत्॥ १५॥

शोधनस्य प्रधानादिभेदेन पथ्यक्रमनिर्देशः।—

पेयां विलेपीमकृतं कृतञ्च यूषं रसं त्रिर्द्विरथैकशश्च।
क्रमेण सेवेत विशुद्धकायः प्रधानमध्यावरशुद्धिशुद्धः॥ १६॥

---

एतदनन्तरं कदा किं पथ्यं देयमित्याह, तत इत्यादि।—यस्य सम्यग्योगः क्षुधा च स्यात् तस्य सायम्, अन्यथा तु प्रातः पेयादिकं भजेदित्यर्थः; भेलेऽप्युक्तं—"वमितं लङ्घयेत् सम्यक् शुद्धिलिङ्गान्यलक्षयन्। तानि दृष्ट्वा तु पेयादि-क्रमं कुर्य्यान्न लङ्घयेत्॥" इति॥ १५॥

तमेव पेयादिक्रममाह, पेयामित्यादि।—पेयादिलक्षणञ्च ज्वराधिकारे एवोक्तं व्याख्यातञ्च। विलेपीशब्दो विलेपीवचनम् (?)। अकृतो यूषः स्नेहाद्यसंस्कृतः, कृतस्तु स्नेहलवणादिसंस्कृतः। एवं रसेऽपि कृताकृतव्यवस्था; उक्तञ्च सूदशास्त्रे—"अस्नेहलवणं सर्वमकृतं कटुकैर्विना। विज्ञेयं लवणस्नेह-कटुकैः संस्कृतं कृतम्॥" इति। अस्नेह-लवणमिति—ईषत्स्नेहलवणयुक्तम्; अत एवोपकल्पनीये "तनुना तनुस्नेहलवणोप-पन्नेन मुद्गयूषेण" (च० सू०) इत्युक्तम्। संस्कृतमिति वचनाच्च समयसाधनं यावता भवति तावदेव लवणादिकं कृते देयमिति बोधयति। अकृतकृतयोर्मध्ये अकृतो लघुर्भवति; उक्तं हि—"अकृताख्यो लघुस्तत्र तनुरिष्टो यतः स हि" इति। अकृतं कृतञ्चेति चकारोऽयमन्वाचयशिष्टः, तेन कृतस्यानैयत्यं बोधयति, ततश्चाकृतावेव यूषरसौ लाघवादग्निसन्धुक्षणार्थं देयौ, कृतौ पुनरवस्थाविशेषादिति; अत एवोप-कल्पनीये "तनुना तनुस्नेहलवणोपपन्नेन" (च० सू०) इत्यनेन "औदकलावणिकेन" (च० सू०) इत्यनेन च अकृतयोरेव यूषरसयोर्दानं साक्षादुक्तं, कृतौ पुनरवस्थाविशेष-नियतत्वान्न साक्षादुक्तौ। त्रिरिति—अन्नकालत्रयं, द्विरिति—अन्नकालद्वयम्, एकश इति—एकान्नकालम्। एतच्च त्रिरित्यादि प्रत्येकं पेयादिभिः सम्बध्यते, तथा त्रिरित्यादि पदत्रयञ्च प्रधानशुद्ध्यादिशुद्धेषु त्रिषु यथाक्रमं योज्यं, तेन प्रधानशुद्धिशुद्धे पेयादिक्रमः प्रत्येकं त्रिः कर्त्तव्यः, तेनान्नकालत्रये पेया, ततः परेष्वान्नकालत्रये विलेपी, ततः परेष्वान्नकालत्रये कृताकृतयूषयोरन्यतरेण सहितमन्नं, ततोऽपि च परेष्वान्नकालत्रये कृताकृतरसयोरन्यतरेण सहितमन्नं देयमिति द्वादशभिरन्नकालैर्वमनदिनसायाह्नात् प्रभृति सप्तरात्रेण पेयादिक्रमः समाप्यते। अन्नकालस्तु चक्रगंसिद्धः सायं प्रातश्चेति।

वमनविरेचनयोः वैगिकी शुद्धेः विरेचनस्य च मानिकी-शुद्धेर्निर्देशः।—

जघन्यमध्यप्रवरे तु वेगाश्चत्वार इष्टा वमने षड़ष्टौ।
दशैव ते द्वित्रिगुणा विरेके प्रस्थस्तथा द्वित्रिचतुर्गुणश्च॥ १७॥

वमनविरेचनयोरान्तिकी-शुद्धेः वमनस्य च मानिकी-शुद्धेर्निर्देशः।—

पित्तान्तमिष्टं वमनं विरेकादर्द्धं कफान्तञ्च विरेकमाहुः।
द्वित्रान् सविट्कानपनीय वेगान् मेयं विरेके वमने तु पीतम्॥ १८॥

---

अयमेव च क्रम उपकल्पनीयेऽपि "ततः सायाह्ने लोहितशालितण्डुलानाम्" इत्यादिना यावत् "द्वादशे चान्नकाले" (च० सू०) इत्यन्तेनोक्तः। एवं मध्यशुद्धिशुद्धे द्विः पेयादिक्रमः। अवरशुद्धिशुद्धे चैकैकशः पेयादिक्रमो व्याख्येयः; एवञ्च मध्यशुद्धिशुद्धेऽष्टान्नकालिकः, अवरशुद्धिशुद्धे तु चतुरन्नकालिकः क्रमो भवतीति। व्याख्यान्तरञ्च अस्मदीयचरकतत्त्वप्रदीपिकायामनुसन्धेयम्। यद्यपि प्रधानशुद्ध्या निःशेषदोषहरणादौदर्य्यः पावको निरपवाद एव भवति, तथाऽपि तत्र भूरिदोषनिर्हरणेन तात्कालिकाशयशोभादग्निमान्द्यं महदेव सम्भवतीति तेनात्र पेयादिक्रमश्चिरं क्रियते इति ज्ञेयम्॥ १६॥

इदानीं प्रधानशुद्ध्यादिज्ञानार्थं तल्लक्षणमाह, जघन्येत्यादि।—जघन्यमध्यप्रवरे वमने यथाक्रमं चत्वारः षड़ष्टौ वेगा उक्ताः, तेन चतुर्भिर्वेगैर्यच्च वमनं तज्जघन्यं, यत् तु षड़्भिस्तन्मध्यमं, यत् त्वष्टाभिस्तत् प्रवरम्। तथा विरेकेऽपि जघन्ये दश वेगाः, मध्ये तु विरेचने द्विगुणा दश विंशतिरित्यर्थः, प्रवरे तु विरेचने त्रिगुणा दश त्रिंशदित्यर्थः। वेगसङ्ख्यादिभेदेन जघन्यादिभेदमभिधाय दोषमानभेदेनापि विरेचनस्य जघन्यमध्यप्रवरतां क्रमेणाह, प्रस्थस्तथा द्वित्रिचतुर्गुणश्चेति। जघन्ये विरेके द्विगुणः प्रस्थः, मध्ये तु त्रिगुणः, प्रवरे च चतुर्गुणः इति॥ १७॥

वमनविरेचनयोर्दोषप्रवृत्त्यन्तोपलक्षितामान्तिकीं शुद्धिं तथा वमनस्य तु दोषमानभेदोपलक्षितां मानिकीं शुद्धिमाह, पित्तान्तमित्यादि।—पित्तप्रवृत्तिरन्ते यस्य तत् पित्तान्तम्, एवं कफान्तमपि ज्ञेयम्। विरेकादर्द्धमित्यनेन वमनस्य दोषप्रमाणोपलक्षिता मानिकी शुद्धिरुक्ता; जघन्यमध्यप्रवरे विरेके प्रस्थस्तथेत्यादिना यद्दोषमानमुक्तं तदपेक्ष्य वमनेऽर्द्धमित्यर्थः; तेन वमने जघन्ये प्रस्थ एकः, मध्ये तु सार्द्धप्रस्थः, प्रवरे तु द्वौ प्रस्थाविति। एतेन वैगिकी मानिकी चान्तिकी चेति शुद्धित्रयमुक्तं, हृत्पार्श्वेत्यादिना च लैङ्गिकी शुद्धिः पूर्वमेवोक्ता, एतेन चतुर्विधा शुद्धिश्चरकेण वमने विरेचने चोक्ता। प्रपञ्चस्तस्य वचनस्य चरकतत्त्वप्रदीपिकायामनुसन्धेय इति। वमने

वमनादौ प्रस्थमानस्य विशेषपरिभाषा ।—

वमने च विरेके च तथा शोणितमोक्षणे ।
सार्द्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः ॥ १९ ॥

वमनायोगे कर्त्तव्यनिर्देशः ।—

अयोगे लङ्घनं कार्य्यं पुनर्वाऽपि विशोधनम् ॥ २० ॥

वमनातियोगे कर्त्तव्यनिर्देशः ।—

अतिवान्तं घृताभ्यक्तमवगाह्य हिमे जले ।
उपाचरेत् सिताक्षौद्र-मिश्रैर्लेहैश्चिकित्सकः ॥ २१ ॥

वमनातियोगे कर्त्तव्यान्तरनिर्देशः ।—

वमनेऽतिप्रवृत्ते तु हृद्यं कार्य्यं विरेचनम् ॥ २२ ॥

वमनानर्हाः ।—

न वामयेत्तैमिरिकं न गुल्मिनं न चापि पाण्डूदररोगपीड़ितम् ।
स्थूलक्षतक्षीणकृशातिवृद्धानर्शोऽर्दिताक्षेपकपीड़ितांश्च ॥ २३ ॥
रूक्षे प्रमेहे तरुणे च गर्भे गच्छत्यथोर्द्ध्वं रुधिरे च तीव्रे ।
दुष्टे च कोष्ठे क्रिमिभिर्मनुष्यं न वामयेत् वर्चसि चातिबद्धे ॥२४॥

वमनानर्हादीनामवस्थाविशेषे वमनविधिः ।—

एतेऽप्यजीर्णव्यथिता वाम्या ये च विषातुराः ।

---

विरेचने च यथा दोषमानं कार्य्यं तदाह, द्विवानित्यादि । द्वौ वा त्रयो वा परिमाणमेषां द्विवाः । द्विवानित्यव्यवस्थितपरिभाषया मलभागस्यानियतत्वं दर्शयति । वमने तु पीतमिति—वमने तु पीतमौषधं वर्जयित्वा शेषो मेयः ॥ १८ ॥

पूर्व्वन्तु विरेके प्रस्थ इत्युक्तम्, अतस्तत्स्वरूपमाह—वमने चेत्यादि ॥ १९ ॥

क्रमेण वमनायोगातियोगचिकित्सामाह, अयोगे इत्यादि ।—विशोधनं वमनं विरेचनञ्च ॥ २० ॥

अतिवान्तमित्यादि ।—लेहैरिति—शक्तूनां मन्थैः ॥ २१ ॥

वमने इत्यादि ।—अतिवान्तौ च विरेचनं प्रतिमार्गहरणकल्पत्वात् ॥ २२ ॥

अवाम्यानाह—न वामयेदित्यादि ॥ २३।२४ ॥

अत्युल्बणकफा ये च ते च स्युर्मधुकाम्बुना ॥ २५ ॥

इति वमनाधिकारः ।

---

## अथ विरेचनाधिकारः ।

विरेचनविधिः ।—

स्निग्धस्विन्नाय वान्ताय दातव्यन्तु विरेचनम् ।
अन्यथा योजितं ह्येतत् ग्रहणीगदकृन्मतम् ॥ १ ॥

दोषभेदेन मृद्वादिकोष्ठनिर्देशः ।—

पित्तेन मृदुकोष्ठः स्यात् क्रूरो वातकफाश्रयात् ।
मध्यमः समदोषत्वान्मात्रा योज्याऽनुरूपतः ॥ २ ॥

त्रिवृतादिचूर्णम् ।—

शर्कराक्षौद्रसंयुक्तं त्रिवृच्चूर्णावचूर्णितम् ।

---

अवान्यत्वेनोक्तानामप्यात्ययिकव्याधौ वमनमाह—एतेऽपीत्यादि ॥ २५ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां वमनाधिकार-विवृतिः ।

---

वमनानन्तरमेव विरेचनस्य विधानात् वमनमभिधाय विरेचनमाह, स्निग्धेत्यादि ।—स्निग्धस्विन्नायेति—वमनानन्तरमपि पुनः स्निग्धस्विन्नाय ; तदुक्तं—"कर्मणां वमनादीनामन्तरे त्वन्तरे पुनः । स्नेहस्वेदौ प्रयुञ्जीत संशोधनमनन्तरम् ॥" संशोधनमनन्तरमित्यत्र "स्नेहमन्ते प्रयोजयेत्" (च० सि० वमनविरेचनव्यापत्०) "स्नेहमन्ते बलाय च" (वा० सू० १८ अ०) इति पाठद्वयं युक्तिसङ्गतम् इति प्रका०) इति । अन्यथेति—वमनं विना ; सुश्रुतेऽप्युक्तम्—"अवान्तस्य हि सम्यक् विरिक्तस्यापि सतोऽधः स्रस्तः श्लेष्मा ग्रहणीं छादयेत्" (चि० ३३ अ०) इति । अयञ्च विरेचनयोगः पूर्वाह्णमतिक्रम्यैव देयः ; उक्तं हि वाग्भटे—"श्लेष्मकाले गते ज्ञात्वा कोष्ठं सम्यक् विरेचयेत्" (सू० १८ अ०) इति ॥ १ ॥

मात्राविध्यर्थं कोष्ठक्रममाह, पित्तेनेत्यादि ।—मात्रा योज्याऽनुरूपत इति—मृदौ मृद्वी, क्रूरे तीक्ष्णा, मध्यमे मध्यमेत्यर्थः ॥ २ ॥

शर्करेत्यादि सुश्रुतस्य ।—त्रिवृच्च श्वेतत्वादरुणमूला ग्राह्या, एवमन्यत्रापि ; तदाह

रेचनं सुकुमाराणां त्वक्पत्रमरिचांशिकम् ॥ ३ ॥

त्रिवृत्प्रयोगः ।—

त्रिवृच्चूर्णं सितायुक्तं पिबेच्छ्रेष्ठं विरेचनम् ॥ ४ ॥

पित्तरोगे पुटपक्वत्रिवृत्प्रयोगः ।—

छित्त्वा द्विधेत्तु परिलिप्य कल्कैस्त्रिभण्डिजातैः परिवेष्ट्य रज्ज्वा ।
पक्वान्तु सम्यक् पुटपाकयुक्त्या खादेत्त तत् पित्तगदी सुशीतम् ॥ ५ ॥

कफरोगे पिप्पल्यादिचूर्णम् ।—

पिप्पलीनागरक्षारं श्यामा त्रिवृतया सह ।
लेहयेन्मधुना सार्द्धं कफव्याधौ विरेचनम् ॥ ६ ॥

हरीतक्यादिचूर्णम् ।—

हरीतकी विडङ्गानि सैन्धवं नागरं त्रिवृत् ।
मरिचानि च तत् सर्वं गोमूत्रेण विरेचनम् ॥ ७ ॥

---

सुश्रुतः,—"सकषाये त्रिवृन्मूलं श्रेष्ठं मूलविरेचने" (चि० ४४ अ०) इति। अत्र शर्करा त्रिवृच्चूर्णसमा, त्रिवृच्चूर्णमपि कोष्ठाद्यपेक्षया ग्राह्यं, लेहत्वमात्रकारकं क्षौद्रम्। त्वक्पत्रमरिचांशिकमिति—त्रिवृच्चूर्णापेक्षया त्वक्पत्रादि मिलित्वा पादिकमित्यर्थः। "त्वक्पत्रसुरभीकृतम्" इति पाठान्तरे—यावता सौरभ्यं स्यात् तावदेव त्वक्पत्रं देयमिति। त्रिवृच्चूर्णं मा ८, शर्करा मा ८, गुडत्वक्तेजपत्रमरिचं प्र र ७ ॥३॥

त्रिवृदित्यादि चरकस्य।—पूर्ववदेवात्रापि त्रिवृन्मानं ज्ञेयम् ॥ ४ ॥

छित्त्वेत्यादि चरकस्य।—त्रिभण्डी त्रिवृताभेदः। पुटपाकयुक्त्येति—काश्मर्यादिपत्राच्छादन-कुशवेष्टन-मृदावलेपन-निर्धूमाङ्गारदाहाद्यादिना ॥ ५ ॥

पिप्पलीत्यादि।—क्षारः यवक्षारः। श्यामेति—श्यामामूला त्रिवृत्। त्रिवृदिति—अरुणमूला। अत्र पिप्पलीनागरयोः कटुत्वमात्रकारिका मात्रा, तेन पिप्पलीचूर्णं माषा २, शुण्ठीचूर्णं माषा २, क्षारादित्रयस्य प्रत्येकं माषकचतुष्टयं, ततो मिलित्वा कर्षो लेह्यः; एवमन्यत्राप्युक्तमित्याहुः ॥ ६ ॥

हरीतकीत्यादि।—एषां चूर्णं गोमूत्रेण पेयमित्यर्थः। हरीतकी मा ४, विडङ्गादित्रयस्य प्र मा २, त्रिवृत् मा ५, मरिचं मा १, एवं मिलित्वा कर्षमात्रं गोमूत्रपलेनालोड्य पेयमित्यर्थः ॥ ७ ॥

त्रिवृदादिगुडिका।—

त्रिवृत्कृष्णात्रयसमा त्रिफला तत्समानि च।
क्षारकृष्णाविडङ्गानि तच्चूर्णं मधुसर्पिषा ॥ ८ ॥
लिह्याद्गुडेन गुडिकां कृत्वा वाऽप्युपयोजयेत्।
कफवातकृतान् गुल्मान् प्लीहोदरभगन्दरान् ॥
हन्त्यन्यानपि चाप्येतन्निरपायं विरेचनम् ॥ ९ ॥

अभयाद्यो मोदकः।—

अभया पिप्पलीमूलं मरिचं नागरं तथा।
त्वक्पत्रपिप्पलीमुस्त-विड़ङ्गामलकानि च ॥ १० ॥
कर्षः प्रत्येकमेषान्तु दन्त्याः कर्षत्रयं तथा।
षट्कर्षाश्च सितायास्तु द्विपलं त्रिवृतो भवेत् ॥ ११ ॥
सर्वं सुचूर्णितं कृत्वा मधुना मोदकं कृतम्।
खादेत् प्रतिदिनञ्चैकं शीतञ्चानुपिबेज्जलम् ॥ १२ ॥
तावद्विरिच्यते जन्तुर्यावदुष्णं न सेवते।
पाण्डुरोगं विषं कासं जङ्घापार्श्वरुजां तथा ॥ १३ ॥
पृष्ठार्त्तिं मूत्रकृच्छ्रञ्च दुर्नाम सभगन्दरम्।
अश्मरीमेहकुष्ठञ्च दाहशोथोदराणि च ॥ १४ ॥
यक्ष्माणं चक्षुषो रोगं क्रमं वैद्येन जानता।
योजितोऽयं निहन्त्याशु अभयाद्यो हि मोदकः ॥ १५ ॥

हरीतक्यादि मोदकः।—

हरीतक्यास्तु कर्षार्द्धं तदर्द्धं त्रिवृतस्तथा।
सिताम्बुना समं पिष्टा घृते तु भर्जयेत् मनाक् ॥ १६ ॥

---

त्रिवृत्कृष्णात्रयेत्यादि।—त्रिवृताचूर्णं मा १२, त्रिफलाचूर्णं प्र मा ४, यवक्षारादीनाञ्च प्र मा ५, मिलितचूर्णात् कर्षमेकं गृहीत्वा घृतमधुभ्यां लेह्यम्। गुडिकापक्षे तु पुराणगुड़ः तो ९, एतत्त्रिवृतादिचूर्णेन समं विमर्द्य कर्षप्रमाणा गुड़िका कार्य्या, ततोदकमनुपेयम् ॥ ८।९ ॥

अल्पमलप्रवृत्तौ कर्त्तव्यनिर्देशः।—

उत्थानेऽल्पे दिने तस्मिन् भुक्त्वाऽन्येद्युः पुनः पिबेत् ॥२६॥

असम्यक् स्निग्धकोष्ठे कर्त्तव्यनिर्देशः।—

अदृढ़स्नेहकोष्ठस्तु पिबेदूर्द्ध्वं दशाहतः।
भूयोऽप्युपस्कृततनुः स्नेहस्वेदैर्विरेचनम् ॥
यौगिकं सम्यगालोच्य स्मरन् पूर्वमनुक्रमम् ॥ २७ ॥

दुर्बलादिषु विरेचनप्रयोगविधिः।—

दुर्बलः शोधितः पूर्वमल्पदोषः कृशो नरः।
अपरिज्ञातकोष्ठस्तु पिबेन्मृद्वल्पमौषधम् ॥ २८ ॥

रूक्षादिकोष्ठे विरेचनप्रयोगविधिः।—

रूक्षबह्वनिलक्रूर-कोष्ठव्यायामसेविनाम्।
दीप्ताग्नीनाञ्च भैषज्यमविरिच्यैव जीर्य्यति ॥
तेभ्यो वस्तिं पुरा दद्यात् ततः स्निग्धं विरेचनम् ॥ २९ ॥

अस्निग्धादिपुरुषे विरेचनप्रयोगविधिः।—

अस्निग्धे रेचनं स्निग्धं रूक्षं स्निग्धेऽति शस्यते।

---

अत्यल्पाल्पप्रवृत्ते दोषे अपरस्मिन्नहनि विरेकमाह, उत्थाने इत्यादि।—उत्थानं मलप्रवर्त्तनम्। पुनः पिबेदित्यत्र विरेचनमिति शेषः॥ २६॥

यदि पुनरसम्यक्स्निग्धकोष्ठो भवति पुमान् तदा दशाहादूर्द्ध्वं विरेचनं पिबेदित्याह, अदृढ़स्नेहकोष्ठ इत्यादि।—अदृढ़स्नेहकोष्ठ इति—असम्यक्स्निग्धकोष्ठ इत्यर्थः। स्मरन् पूर्वमनुक्रममिति—येन मात्राऽभियोगेन पूर्वमयोगोऽभूत् तत् स्मृत्वा परिहर्त्तव्यमिति भावः॥ २७॥

दुर्बलादिषु यादृशरेचनं प्रयोक्तव्यं तदाह, दुर्बल इत्यादि।—दुर्बलः अन्तःशक्तिहीनः। कृशः क्षीणमांसः। मृद्विति—मृदुवीर्य्यम्॥ २८॥

अत्यन्तवातविष्टब्धकोष्ठादौ यथा विरेचनं कार्य्यं तदाह, रूक्षेत्यादि।—रूक्षादयः कोष्ठेन सार्द्धं सम्बध्यन्ते। अविरिच्यैवेति—विरेकमकृत्वा। वस्तिर्निरूह इति केचित्; अन्ये तु निरूहापेक्षया स्नेहवस्तेर्वातप्रशमकत्वेनानुवासनमत्र वस्तिशब्दार्थ इत्याहुः; अन्ये तूभयमपीत्याहुः॥ २९॥

ईदृशो यत् यस्मिन् प्रयोज्यं तदाह, अस्निग्धे इत्यादि।—अस्निग्धे इति—ईषत्

विरूक्ष्य स्नेहसात्म्यन्तु भूयः स्निग्धं विरेचयेत् ॥ ३० ॥

विरेचनातियोगे पद्मकादिः।—

पद्मकोशीरनागाह्व-चन्दनानि प्रयोजयेत्।
अतियोगे विरेकस्य पानालेपनसेचनैः ॥ ३१ ॥

विरेचनातियोगे आम्रवल्कललेपः।—

सौवीरपिष्टाम्रवल्क-नाभिलेपोऽतिसारहा ॥ ३२ ॥

विरेचनानर्हाः।—

अविरेच्या बालवृद्ध-श्रान्तभीतनवज्वराः।
अल्पाग्न्यधोगपित्तास्र-क्षतपायुनिमारिणः ॥ ३३ ॥
सशल्यास्थापितक्रूर-कोष्ठातिस्निग्धशोषिणः।

---

स्निग्धे रूक्षम्। स्निग्धेऽति शस्यते इति—अतिस्निग्धे रूक्षं विरेचनं शस्यते इत्यर्थः ॥ ३० ॥

इदानीं विरेचनातियोगचिकित्सामाह, पद्मकेत्यादि।—ननु अयोगातियोगवत् विरेकमिथ्यायोगचिकित्सा कुतो नोक्ता? सत्यम्; दोषाणां हि प्रवृत्तौ चतुर्विधैव गतिर्भवति, सम्यक्प्रवृत्तिरतिप्रवृत्तिरप्रवृत्तिरल्पप्रवृत्तिश्चेति। तत्राल्पप्रवृत्तिरप्रवृत्तिश्चेति तु अयोगगृहीत एव। या अपि प्रातिलोम्येन प्रवृत्तिर्मिथ्यायोगत्वेन वाच्या, सा आंग्न-अपेक्षितस्य दोषस्याप्रवर्त्तकत्वादयोगान्तर्भूतैव; अत एवोक्तं चरके—"अयोगः प्रातिलोम्येन न चाल्पं वा प्रवर्त्तनम्" (सि० वमनविरेचनव्यापत्०) इति। अतो वमनविरेचनयोर्मिथ्यायोगं नेच्छन्तीति कृत्वा मिथ्यायोगचिकित्सितस्यानुपादानं बोध्यम् ॥ ३१।३२ ॥

निषिद्धविरेकानाह, अविरेच्या इति।—आस्थापितो निरूढः। अयञ्च निरूहानन्तरं विरेकनिषेध औत्सर्गिकः, तेन "तेभ्यो बस्तिं पुरा दत्त्वा" (च० क० दन्तीद्रवन्ती०) इत्यादि विशेषविधिना तदपवादो युज्यते एव। किंवा निरूहानन्तरं हि विरेकनिषेधः सप्ताहा-भ्यन्तरे एव ज्ञेयः, सप्ताहादूर्द्ध्वन्तु विरेको विहित एवेति विधिनिषेधयोः कालभेदेन न विरोधः; उक्तं हि चरके—"नरो विरिक्तस्तु निरूहदानं विवर्जयेत् सप्तदिना-न्यवश्यम्। शुद्धो विरेकेण निरूहदानम्—" (सि० कल्पनासि०) इति वदन्ति। अन्ये

गर्भिणी नवसूता च तृष्णार्त्तोऽजीर्णवानपि ॥ २४ ॥

इति विरेचनाधिकारः।

---

# अथानुवासनाधिकारः।

वस्तेर्विषयः अनुवासनविधिश्च।—

वातोल्वणेषु दोषेषु वाते वा वस्तिरिष्यते।
यथोचितात् पादहीनं भोजयित्वाऽनुवासयेत् ॥ १ ॥
न चाभुक्तवते स्नेहः प्रणिधेयः कथञ्चन।

---

स्तद्विरोधभियैव "तेभ्यो वस्ति पुरा दत्त्वा" ( च० क० दन्तीद्रवन्ती० ) इत्यत्र वस्ति-शब्दस्यानुवासनार्थमाहुरिति प्रागेवोक्तम् ॥ २३।२४ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां विरेचनाधिकार-विवृतिः।

---

"विरेचनात् सप्तरात्रे गते जातबलाय वै। कृतान्नायानुवास्याय सम्यगष्टैयोऽनुवासनः॥" ( सु० चि० ३७ अ० ) इत्यनेनानुवासनस्य विरेचनानन्तरीयत्वमुक्तम्, अतो विरेचनाधिकारमनु स्नेहवस्तिविचारः प्रस्तूयते। "अनुवसन्नपि न दुष्यति अनुदिवसं वा दीयते" (चि० ३५ अ०) इत्यनुवासननिरुक्तिः सुश्रुतोक्ता ज्ञेया। अत्र सामान्यतो वस्ति-विषयमाह, वातेत्यादि वाग्भटस्य।—यद्यपि सुश्रुते—"वस्तिर्वाते च पित्ते च कफे रक्ते च शस्यते" ( चि० ३५ अ० ) इत्यनेन पित्तकफरक्तानामपि वस्तिविषयत्वमुक्तं, तथाऽपि "वस्तिर्वातहराणाम्" ( च० सू० यज्जःपुरुषीय० ) इति वचनात् प्राधान्येन वायोरेव वस्तिविषयत्वं, पित्तकफयोस्तु वातस्थानगतयोस्तथा स्वस्थानस्थितयोर्वातानुबन्धयोर्वा वस्तिविषयता ; यदाह चरकः,—"पित्तं वा कफपित्तं वा पित्ताशयगतं हरेत्। स्रंसनं त्रीन् मलान् वस्तिः पक्काशयगतान् हरेत् ॥" ( चि० ज्वर० ) इति ; तथा—"एको-ऽपकर्षत्यनिलं स्वमार्गात् पित्तं द्वितीयस्तु कफं तृतीयः" ( सि० वस्तिसूत्रीय० ) इति। रक्तमपि दुष्टं रक्तप्रसादनद्रव्यैर्दत्तवस्तिः प्रसादयति दोषहरणेनानुलोमयति। अत्र निरूहाङ्गस्यानुवासनस्य विधानं तावदाह, यथेत्यादि। उचिताद्भक्तात् पादहीनं चतुर्भागहीनम्। वस्तिर्हि द्विविधा, अनुवासननिरूहभेदात्, तत्र स्नेहवस्तिरनुवासनं, कषायवस्तिर्निरूहः ; अत्र निरूहाङ्गस्यानुवासनस्य विधानम्। अभुक्तवते

सूक्ष्मत्वाच्छून्यकोष्ठस्य क्षिप्रमूर्द्ध्वमथोत्पतेत् ॥ २ ॥

त्रिविधमात्रानिर्देशः ।—

षट्पली च भवेत् श्रेष्ठा मध्यमा त्रिपली भवेत् ।
कनीयस्यध्यर्द्धपला त्रिधा मात्राऽनुवासने ॥ ३ ॥

त्रिविधमात्रायाः प्रयोगक्रमः ।—

प्रागदेयमाद्ये द्विपलं पलार्द्ध-वृद्धिर्द्वितीये पलमत्र वृद्धिः ।
कर्षद्वयं वा वसुमाषवृद्धिर्वस्तौ तृतीये क्रम एष उक्तः ॥ ४ ॥

---

ऽनुवासनवस्तिर्न देय इत्याह, न चेत्यादि । स्नेह इति—स्नेहवस्तिः । अत्रैव उपपत्तिमाह, सूक्ष्मत्वादित्यादि । विदग्धान्ने तु वस्तिर्न देयः; उक्तं हि—"सदाऽनुवासयेच्चैनं भोजयित्वाऽऽर्द्रपाणिकम् । ज्वरं विदग्धभुक्तस्य कुर्यात् स्नेहः प्रयोजितः ॥" ( सु० चि० ३७ अ० ) इति ॥ १।२ ॥

उत्तममध्यमाधमनरापेक्षया त्रिविधामनुवासनमात्रामाह, षट्पलीत्यादि ।—अध्यर्द्धपलीति—सार्द्धपलमेकमित्यर्थः ॥ ३ ॥

एतच्च षट्पलादिमात्राविधानं क्रमेणैव विधेयं, न त्वेकदिने एवेत्याह, प्रागित्यादि ।—आद्ये षट्पलस्नेहे गुरुमात्राकल्पे प्रथमं पक्वस्नेहस्य द्विपलं, ततो दिनैकं विश्राम्य पलार्द्धेन वृद्धिः, एवं-क्रमेण नवभिः स्नेहदानदिनैः षट्पलानि स्युः, अन्तरालदिनसाम्याष्टावतो मिलित्वा सप्तदश वासरा भवन्ति । द्वितीये मध्यमे त्रिपले इति यावत्, तत्पलमादौ देयं, तत एकैकदिनं विश्राम्य अर्द्धकर्षेण वृद्धिः; अत्रापि नवभिः स्नेहदानदिवसैः पलत्रयं पूर्य्यते । तृतीये कनीयसि सार्द्धपले आदौ कर्षद्वयं, तथैव एकैकदिनं विश्राम्य वसुपरिमितैरिति—अष्टाभिर्माषकैः वृद्धिः कार्य्या; अत्रापि तावद्भिरेव स्नेहदानदिवसैः सार्द्धपलमानं पूर्य्यते । इयमेव हि कनीयसी मात्रा निरपाया सार्वलौकिकी सार्वकालिकी वृद्धव्यवहारसिद्धा च; उक्तं हि चरके—"कर्मव्यायामभाराध्व-यानस्त्रीकर्षितेषु च । दुर्बले वातभग्ने च मात्रावस्तिः सदा हितः ॥ ह्रस्वायाः स्नेहमात्राया मात्रावस्तिः समो भवेत् ॥" ( सि० स्नेहव्यापत्सिद्धि० ) ह्रस्वायाः स्नेहमात्राया योजितो वस्तिर्मात्रावस्तिरित्यर्थः । एतानि स्नेहदानदिनानि नवेत्युत्सर्गः; तेन नवदिनादर्वागपि यदि स्नेहलक्षणं भवति दिनत्रयेण चतुष्टयेन वा, तदा तावतैवानुवासनं समाप्यते अनुवासनान्तरञ्च न दीयते ॥ ४ ॥

प्रक्षेप्यस्य तत्फलस्य च निर्देशः ।—

स तु सैन्धवचूर्णेन शताह्वेन च संयुतः ।
भवेत् सुखोष्णश्च तथा निरेति सहसा सुखम् ॥ ५ ॥

विरेचनानुवासनयोः मध्यवर्त्तिकालनिर्देशः ।—

विरिक्तश्चानुवास्यश्चेत् सप्तरात्रात् परं तदा ॥ ६ ॥

बस्तिनेत्रस्य उपकरणानि ।—

सुवर्णरूप्यत्रपुताम्ररीति-
कांस्यायसास्थिद्रुमवेणुदन्तैः ।
नलैर्विषाणैर्मणिभिश्च तैस्तैः
कार्य्याणि नेत्राणि सुकर्णिकानि ॥ ७ ॥

वयोभेदेन बस्तिनेत्रस्य परिमाणादिनिर्देशः ।—

षड्द्वादशाष्टाङ्गुलसम्मितानि षड्विंशतिद्वादशवर्षजानाम् ।

---

ननु स्नेहः केवलो देयः ? किंवा केनाप्युपहितः ? इत्याह, स त्वित्यादि सुश्रुतस्य ।—चूर्णमानञ्च छन्देन लिखितं यथा—"चूर्णमाषः पले स्नेहे सिन्धुजन्मशताह्वयोः" इति । चक्रस्तु भानुमत्यां सैन्धवशताह्वयोः प्रत्येकमङ्गुलीद्वयावयवसन्दंशग्राह्यं मानमित्याह । सहसेति । यद्यपि स्नेहस्य शीघ्रागमनं दोषायैव ; यदुक्तं—"योऽयः शीघ्रं निवर्त्तेऽन्यः स्नेहोऽतिष्ठन्न कार्य्यकृत्" ( वा० सू० १९ अ० ) इति, तथाऽपि वक्ष्यमाणस्नेहनिर्गमनकालाधिककालनिरासार्थं सहसेत्युक्तं, तेन सहसेत्यस्य यामत्रयानन्तरमेवेत्यर्थः । सुखमिति—ऊषादिकं विना ॥ ५ ॥

विरेचनानन्तरं कियद्भिरहोभिरनुवास्यः ? इत्याह—विरिक्त इत्यादि ॥ ६ ॥

इदानीं बस्तिनलिका यैर्द्रव्यैर्विधेया तान्याह, सुवर्णेत्यादि चरकस्य ।—त्रपु सीसकम् । रीतिः पित्तलम् । अस्थि हस्त्यादीनाम् । दन्तश्च हस्तिनः । विषाणैः महिषादिशृङ्गैः । मणिभिः गोमेदकादिभिः । नेत्रं नलिका । बस्तिगतस्नेहकषायादिद्रव्यनेतृत्वान्नेत्रमिति संज्ञा । सुकर्णिकानीत्यत्र "विकर्णिकानि" इति केचित् पठन्ति ; विकर्णिकात्वञ्चाग्रे वक्ष्यति ॥ ७ ॥

इदानीं तन्नेत्रप्रमाणं वयोभेदाद्भिन्नमाह, षडित्यादि ।—तत्र षड्वर्षबालस्याङ्गुलेन षडङ्गुलं नेत्रं कार्य्यम्, एवं विंशतिवर्षस्य द्वादशाङ्गुलं, तथा द्वादशवर्षस्याष्टाङ्गुलमिति यथासङ्ख्यमन्वयः । ननु एकवर्षादारभ्य पञ्चवर्षं, तथा षड्वर्षात्

स्युर्मुद्गकर्कन्धुसतीनवाहि-च्छिद्राणि वर्त्त्या पिहितानि चापि ॥८॥
यथावयोऽङ्गुष्ठकनिष्ठिकाभ्यां मूलाग्रयोः स्युः परिणाहवन्ति ।
ऋजूनि गोपुच्छसमाकृतीनि श्लक्ष्णानि च स्युर्गुडिकामुखानि ॥९॥

---

दूर्ध्वमेकादशवर्षं, तथा द्वादशवर्षादूर्द्ध्वं विंशतिवर्षं, ततोऽपि सप्ततिं यावत् कियन्मानं नेत्रं कार्य्यम ? अत्राहुः,—एकवर्षात् प्रभृति षड्वर्षं यावत् षडङ्गुलमेव नेत्रं, तथा सप्तवर्षादूर्द्ध्वमेकोनविंशतिवर्षं यावत् अष्टाङ्गुलं नेत्रम्, एवं विंशतिवर्षादूर्द्ध्वं द्वादशाङ्गुलमेव नेत्रं कार्य्यं सप्ततिवर्षं यावदिति। अयञ्चार्थः व्युत्क्रमाभिधानसामर्थ्यादेव लभ्यते, यतः षट्सङ्ख्यां निवेश्याष्टसङ्ख्यानिवेशो युज्यते, ततो द्वादशसङ्ख्येति, अतो व्युत्क्रमाभिधानबलादेव तदर्थस्योपलम्भ इति। अस्मादेव व्युत्क्रमाभिधानात् षड्वर्षादर्वाक् विंशतिवर्षादूर्द्ध्वं नेत्रमानविकल्पो नास्ति किन्तु षड्वर्षादूर्द्ध्वमेकादशवर्षं यावत्, तथा द्वादशवर्षादूर्द्ध्वं विंशतिवर्षं यावत् नेत्रप्रमाणं प्रति विकल्पोऽस्त्येवेति निदर्शयति ; तेन सप्तवर्षादौ प्रतिवर्षमेवाङ्गुलतृतीयभागवृद्ध्या द्वादशवर्षादष्टाङ्गुलं भवति, तथा द्वादशवर्षादूर्द्ध्वमपि प्रतिवर्षमर्द्धाङ्गुलवृद्ध्या विंशतिवर्षे द्वादशाङ्गुलं भवतीति ज्ञेयम् ; वाग्भटेऽप्युक्तं—"—वीक्ष्य वर्षान्तरेषु च ॥ वयोबलशरीराणि प्रमाणमभिवर्द्धयेत् ॥" (सू० १९ अ०) इति। वर्षान्तरेष्विति— षड्द्वादशादिवर्षान्तरालस्थितेषु सप्तमाष्टमादिवर्षेष्वित्यर्थः। सुश्रुते तु "सांवत्सरिकाष्टद्विरष्टवर्षाणां षडष्टदशाङ्गुलं प्रमाणानि, पञ्चविंशतिवर्षादूर्द्ध्वं द्वादशाङ्गुलम्" (चि० ३५ अ०) इत्यनेन, तथा वाग्भटेऽपि—"ऊनेऽब्दे पञ्च पूर्णेऽस्मिन्ना-सप्तभ्योऽङ्गुलानि षट्। सप्तमे सप्त तान्यष्टौ द्वादशे षोडशे नव ॥" ( सू० १९ अ० ) इत्यनेन च यो नेत्रमानभेद उक्तः, सोऽप्यदूरान्तरत्वान्न विरोधमावहतीति। एषाञ्च नेत्राणामग्ररन्ध्रं कीदृशं कार्य्यमित्याह, स्युर्मुद्गेत्यादि। षड्द्वादशाष्टाङ्गुलानि यथासङ्ख्यं मुद्गकर्कन्धुसतीनवाहिच्छिद्राणि कार्य्याणि स्युः। कर्कन्धुशब्देनेह तदस्थि गृह्यते ; उक्तं हि सुश्रुते—"कोलास्थिमात्रच्छिद्रम्" (चि० ३५ अ०) इति। कर्कन्धुः शृगालकोलिः। बृहद्बदरास्थिग्रहणे तु कनिष्ठाप्रमाणाग्रे तद्ग्रहणं नार्हति। अन्ये तु एवं विरोधं पश्यन्तो बदरास्थिमज्जानमिह कर्कन्धुशब्देन ग्राहयन्ति। सतीनः वर्त्तुलकलायः। वर्त्त्या पिहितानीति—द्रव्यान्तरप्रवेश-वस्तिद्रव्यनिर्गमननिरासार्थं वस्त्रादीनां वर्त्त्या पिहितमुखानि कार्य्याणि। यथावय इति—यस्मिन् वयसि यन्नेत्रं विहितं तद्वयःस्थस्यैव वृद्धाङ्गुष्ठकनिष्ठाभ्यां यथासङ्ख्यं मूले अग्रे च तुल्यपरिणाहं नेत्रं कार्य्यमित्यर्थः। अङ्गुष्ठं वृद्धाङ्गुष्ठम्। ऋजूनीत्यादिना नेत्राकृतिमाह। गोपुच्छा-

कर्णिकाव्यवस्था चर्मपुटकस्योपकरणानि च।—

स्यात् कर्णिकैकाग्रचतुर्थभागे मूलाश्रिते वस्तिनिबन्धने द्वे।
जारद्गवो माहिषहारिणो वा स्याच्छौकरो वस्तिरजस्य वाऽपि ॥ १० ॥

चर्मपुटकस्य स्वरूपादिकम्।—

दृढस्तनुर्नष्टशिरो विगन्धः कषायरक्तः सुमृदुः सुशुद्धः।
नृणां वयो वीक्ष्य यथाऽनुरूपं नेत्रेषु योज्यस्तु सुबद्धसूत्रः ॥ ११ ॥

अनुवासनमात्रानिर्देशार्थं वयोभेदेन निरूहमात्रा।—

निरूहमात्रा प्रथमे प्रकुञ्चो वत्सरे परम्।
प्रकुञ्चवृद्धिः प्रत्यब्दं यावत् षट् प्रसृतास्ततः ॥ १२ ॥

---

कनिष्ठचेषां मूले स्थौल्यादग्रे तनुत्वादिति। श्लक्ष्णानीति—चक्कणानि। गुडिका-मुखानीति—गुडिकाकारवर्तुलं मुखं येषां, तेन वर्तुलमुखतया अतीक्ष्णमुखानि, कुण्ठमुखानीत्यर्थः ॥ ८-९ ॥

सुकर्णिकानीति पूर्वमुक्तम, अतः कर्णिकाव्यवस्थामाह, स्यादित्यादि।—नेत्रस्याग्रप्रदेशे यश्चतुर्थो भागस्तत्र एका कर्णिका कर्त्तव्या, नेत्रस्यातिप्रवेशनिरासार्थ-मिति भावः। मूलाश्रिते वस्तिनिबन्धने द्वे इति—नेत्रस्य मूले तु चर्मपुटकबन्धनार्थं कर्णिकाद्वयं कार्यमित्यर्थः। वस्त्यर्थं येषां मूत्रपुटकं ग्राह्यं तदाह, जारद्गव इत्यादि। जारद्गव इति—वृद्धगोभवः। वस्तिरिति—मूत्रपुटकं, कोषावरकचर्मेति केचित ॥ १० ॥

दृढ इत्यादि।—नष्टशिर इति—समुद्धृतशिरासन्ततिः। कषायरक्त इति—त्रिफलादिकषायद्रव्यभावनया रञ्जितः, अत एव विगन्धः विगतपूतिगन्धः। वयो वीक्ष्य यथाऽनुरूपमिति—वयोभेदेन वत्सरादिकमपेक्ष्य यथोक्तेन यथा वस्तिर्वयसानुरूप-द्रवितप्रमाणो भवति स तस्य नेत्रे बन्धनीयः। सुबद्धसूत्र इति—सुदृढबन्धनसूत्र इत्यर्थः ॥ ११ ॥

यद्यपि "षट्पली तु भवेच्छ्रेष्ठा" इत्यादिना अनुवासनमात्रा उक्तैव, तथाऽप्यनुक्त-विशेषार्थं पुनरप्यनुवासनमात्रा वक्तव्या, सा च निरूहमात्राऽतिदेशेन वाच्या अतो-ऽनुवासनाधिकारे एव प्रथमं निरूहमात्रामाह, निरूहमात्रेत्यादि वाग्भटस्य।—प्रथमे वत्सरे निरूहमात्रा प्रकुञ्चः पलमित्यर्थः। परमिति—वत्सरात् ऊर्ध्वं प्रत्यब्दं प्रकुञ्चेन पलेन वृद्धिः कार्या, यावत् षट् प्रसृता द्वादश पलानि भवन्तीति।

**प्रसृतं वर्द्धयेदूर्द्ध्वं द्वादशाष्टादशस्य तु ।**
**आ-सप्ततेरिदं मानं दशैव प्रसृताः परम् ॥ १३ ॥**

निरूहमात्राऽतिदेशेन वयोविशेषे अनुवासनमात्रा ।—

**यथायथं निरूहस्य पादो मात्राऽनुवासने ॥ १४ ॥**

निरूहानुवासनयोः प्रयोगविधिः ।—

**कृतचङ्क्रमणं मुक्त-विण्मूत्रं शयने सुखे ।**

---

"प्रसृतन्तु पलद्वयम्" इति संज्ञा । एतेन प्रत्यब्दं प्रकुञ्चवृद्ध्या द्वादशभिर्वर्षैः षट् प्रसृता भवन्तीत्यर्थः । तत इति—द्वादशवर्षादूर्द्ध्वं प्रत्यब्दमेकैकं प्रसृतं कृत्वा वर्द्धयेत् यावत् द्वादश प्रसृता भवन्ति; द्वादशेति छेदः ; एतेन द्वादशवर्षानन्तरं त्रयोदशवर्ष-मारभ्य अष्टादशवर्षपर्य्यन्तं प्रतिवर्षमेकैकप्रसृतवृद्ध्या द्वादशप्रसृतपूरणं भवति । अष्टादशस्येति—अष्टादशवर्षदेशीयस्य पुंसः, आ-सप्ततेरिति—सप्ततिवर्षं यावत् इदं द्वादशप्रसृतस्वरूपमेव मानं ज्ञेयमित्यर्थः । दशैव प्रसृताः परम् इति—प्रत्यब्दं प्रसृतवृद्ध्या अष्टादशस्य अष्टादशवर्षस्य द्वादश प्रसृता भवन्ति, ततः सप्ततिवर्षपर्य्यन्तं द्वादश प्रसृता एव, परं सप्ततिवर्षादूर्द्ध्वं दश प्रसृता एवेत्यर्थः । इदानीं पुनरर्द्ध-मानिकेण व्यवहारः, तेन महत्यपि पुंसि षट् प्रसृता एव दीयन्ते वृद्धवैद्यैरिति ज्ञेयम् ॥ १२।१३ ॥

इदानीमुक्तनिरूहमात्राऽतिदेशेन प्रकृतानुवासनमात्रामाह, यथायथमित्यादि ।— यस्मिन् वयसि यन्निरूहमानमुक्तं, तस्मिन् वयसि अनुवासनमानं तन्निरूहाच्चतुर्थांश-मित्यर्थः । एतेन प्रथमवर्षीयस्य बालस्य उत्कृष्ट निरूहमानं पलमुक्तं, तस्य चतुर्थांशः कर्षोऽनुवासनमात्रेत्यर्थः । एवं द्वित्रिवार्षिकबालादौ च द्वित्रिकार्षिकं बोध्यम् । ननु "षट्पली तु भवेच्छ्रेष्ठा" इत्यादिना पूर्वं त्रिविधानुवासनमात्रोक्ता, अत्र पुनरन्यथै-वेति विरोधः ? उच्यते, अष्टादशवर्षं यावत् द्वादशप्रसृतो निरूह उक्तः, तस्य चतुर्थो-ऽंशः षट्पल एव ; तथा द्वादशवर्षं प्रति षट् प्रसृता उक्ताः, एषां चतुर्थो भागस्त्रि-पल एव ; तथा षड्वर्षस्य षट्पलमित्यस्य पादः सार्द्धपलमिति । अवान्तरे एकद्वित्रि-वर्षादौ चतुर्दशवर्षादौ च ये मानभेदाः सन्ति, तेषाञ्चोक्तमानानुसारेणोहः कार्य्य इत्येक-वाक्यतया न पूर्वापरवचनविरोधः । किञ्च षट्पलीत्यादि वाक्यमुत्तममध्यमाधमबला-नलशरीरभेदभिन्नमुत्सर्गसिद्धं त्रिविधं मानमाश्रित्योक्तं, तेन तत्रैकवर्षादिवयोभेद-भिन्नमानाभिधानान्न न्यूनतादोष इति ज्ञेयम् ॥ १४ ॥

इदानीं किम्भूतस्य तदनुवासनं देयम् ? इत्याह, कृतेत्यादि वाग्भटस्य ।—शयने

नात्युत्क्षिप्ते न चोत्क्षिप्ते संविष्टं वामपार्श्वतः ॥ १५ ॥
सङ्कोच्य दक्षिणं सक्थि प्रसार्य्य च ततोऽपरम्।
वस्तिं सव्ये करे कृत्वा दक्षिणेनावपीड़येत् ॥ १६ ॥
तथाऽस्य नेत्रं प्रणयेत् स्निग्धे स्निग्धमुखं गुदे।
उत्क्षिप्य वस्तेर्वदनं बद्ध्वा हस्तमकम्पयन् ॥ १७ ॥
पृष्ठवंशं प्रति ततो नातिद्रुतविलम्बितम्।
नातिवेगं न वा मन्दं सकृदेव प्रपीड़येत् ॥ १८ ॥
सावशेषं प्रकुर्वीत वायुः शेषे हि तिष्ठति।
निरूहदानेऽपि विधिरयमेव समीरितः ॥ १९ ॥

स्नेहप्रयोगानन्तरं कर्त्तव्यनिर्देशः।—

ततः प्रणिहिते स्नेहे उत्तानो वाक्शतं भवेत्।
प्रसारितैः सर्वगात्रैस्तथा वीर्य्यं प्रसर्पति ॥ २० ॥

इति—अत्यायाम्। वामपार्श्वत इति—वामपार्श्वेन, संविष्टं सुप्तम्। वामपार्श्वे शयनप्रयोजनञ्च चरकेणोक्तं यथा—"वामाश्रयोऽग्निर्ग्रहणी गुदञ्च तत्पार्श्वसंस्थस्य सुखोपलब्धिः। लीयन्त एवं वलयश्च तस्मात् सव्यं शयानोऽर्हति वस्तिदानम् ॥" (सि० वस्तिसूत्रीय०) इति। सक्थीति—जङ्घा। अपरमिति—वामम्। सव्ये इति—वामे। वस्तिमिति—बद्धचर्मपुटादिकस्नेहयुक्तं नेत्रमेव। दक्षिणेनेति—दक्षहस्तेन। उत्क्षिप्य वस्तेर्वदनं बद्धेति—वस्तेश्चर्मपुटकस्य मुखम्, उत्क्षिप्य उद्घाट्य पश्चात् बद्धेत्यर्थः। वस्तिमुखोत्क्षेपणञ्च द्रवाभिघातजनितवातस्य निर्गमनार्थम्। "उत्क्षिप्य वस्तेर्वदने निबद्धः" इति पाठः। पृष्ठवंशं प्रतीति—पृष्ठवंशं लक्षीकृत्य, तेन पृष्ठवंशानुसारेण ऋजु यथा स्यात् तथा नेत्रं प्रणयेदित्यर्थः। चरकेऽपि "ऋजुपृष्ठवंशम्" (सि० वस्तिसूत्रीय०) इत्युक्तम्। सकृदिति—एकवारमेव। वस्तिपुटकान्तर्गतद्रवभागस्तु न निःशेषो देय इत्याह, सावशेषमित्यादि। वायुः शेषे हि तिष्ठति इति निःशेषदाने हि पुटकान्तर्गतो वायुर्गुदं प्रविश्य वस्तिमाध्मापयेदिति भावः। इदानीमुक्तानुवासनदानविधिं निरूहेऽप्यतिदिशति, निरूहदानेऽपीत्यादि ॥ १५—१९ ॥

दत्ते च स्नेहे यादृशेन स्थातव्यं, यच्च कर्त्तव्यं, तदाह, तत इत्यादि सुश्रुतस्य।—वाक् अक्षरं, तदुच्चारणं यतथा यावत्क्षणेन भवति तावत्क्षणमुत्तानो भूत्वा तिष्ठेदित्यर्थः। अन्ये तु वाक्शतं छोटिकाशतमित्याहुः। प्रसारितैः सर्वगात्रैः

आकुञ्चयेच्छनैस्त्रिस्त्रिः सक्थिबाहू ततः परम् ।
ताड़येत् तलयोरेनं त्रींस्त्रीन् वारान् शनैः शनैः ॥ २१ ॥
स्फिचोश्चैनं ततः श्रोणिं शय्यां त्रिरुत्क्षिपेत्ततः ।
एवं प्रणिहिते वस्तौ मन्दायासोऽथ मन्दवाक् ॥ २२ ॥
आस्तीर्णे शयने काममासीताचारिके रतः ।

बाहुजङ्घादिभिरित्युपलक्षणे तृतीया। एवं कृते किं स्यात्? इत्याह, तथेति॥ आकुञ्चयेदित्यादि। सक्थि जङ्घाद्वयं, तथा बाहू च त्रिस्त्रिराकुञ्चयेत्, वैद्य इति शेषः। आकुञ्चनान्यथाऽनुपपत्त्यैव प्रसारणमपि लभ्यते, तेन पादाङ्गुष्ठद्वयं पादतलद्वयं वा विधृत्य ततः सङ्कोच्य शनैः प्रसारयेदित्यर्थः; उक्तं हि चरके—"ईषच्च पादाङ्गुलियुग्ममाञ्छेत" (सि० बस्तिसूत्रीय०) इति। आञ्छेत् प्रसारयेदित्यर्थः। तत्र तु प्रसारणान्यथाऽनुपपत्त्याऽऽकुञ्चनं लभ्यते इत्येकवाक्यता च ज्ञेया। ततः परं बाहू च पादाङ्गुष्ठद्वयञ्च विधृत्य ततः सङ्कोच्य प्रसारयेदिति। चरके तु बाहुसङ्कोचप्रसारणे नाक्ते इति विशेषः। ताड़येदित्यादि। स्फिचोश्चैनमिति छेदः। एनम् आतुरं तलयोः पादतलकरतलयोः, तथा स्फिचोश्च त्रींस्त्रीन् वारान् शनैः शनैस्ताड़येदिति—मुष्टिना हन्यादिति। एतच्च ताड़नम् अनुवासनस्नेहस्य शीघ्रनिःसरणं यथा न भूयादित्येतदर्थं क्रियते; यदाह दृढ़बलः,—"दत्त्वा स्फिचौ पाणितलेन हन्यात् स्नेहस्य शीघ्रागमरक्षणार्थम्" (च० सि० बस्तिसूत्रीय०) इति। ततः श्रोणीं शय्यां त्रिरुत्क्षिपेत्ततः इत्यत्र शय्यामित्यनन्तरं प्रतीति शेषः, तेन शय्यां प्रति श्रोणीं त्रिरुत्क्षिपेदित्यर्थ इति श्रीकण्ठः। वयन्तु शय्यामित्यनन्तरं तत्पार्ष्णिभ्यामिति शेषः, तेन तत्पार्ष्णिभ्याम् आतुरपार्ष्णिभ्यां शय्यां ताड़येदिति योज्यम्; उक्तं हि—"दत्ते तूत्तानदेहस्य पाणिना ताड़येत् स्फिचौ। तत्पार्ष्णिभ्यां तथा शय्यां पादतश्च त्रिरुत्क्षिपेत्॥" (वा० सू० १९ अ०) इति व्याचक्ष्महे। श्रोणीं त्रिरुत्क्षिपेदिति—पादयोर्विधृत्य श्रोणीं त्रिरुत्क्षिपेदित्यर्थः। एतदपि पार्ष्णिभ्यां शय्याताड़नं श्रोण्युत्क्षेपणं स्नेहशीघ्रागमनरक्षणार्थमेव ज्ञेयम्। एतच्च शीघ्रागमनरक्षणार्थं कर्म यद्यपि पश्चादुक्तं, तथाऽपि स्नेहशीघ्रागमनेन वस्तेर्निष्प्रयोजनता स्यादिति कृत्वा प्रथममेव कार्य्यम्; अत एव भानुमत्यां चक्रोऽप्याह, "स्फिचोश्चैनमिति यद्यपि पश्चादुक्तं तथाऽप्यभिधानक्रमतन्त्रं कृत्वा प्रथममेव ज्ञेयमिति। मन्दायास इति—अल्पप्रत्यवायकरविक्षेपणादिशरीरचेष्टः। काममासीतेत्यनेन दृढ़बलोक्तशयनदंष्ट्रा ङ्कुलीस्फोटादिकमिच्छतः कार्य्यमिति सूच्यते; उक्तं हि—"स्नेहेन

योज्यः शीघ्रं निवृत्तेऽन्यः स्नेहोऽतिष्ठन् कार्य्यकृत् ॥२३॥

सम्यग्योगलक्षणम्।—

सानिलः सपुरीषश्च स्नेहः प्रत्येति यस्य वै।
विना पीड़ां त्रियामस्थः स सम्यगनुवासितः ॥ २४ ॥

स्नेहपरिपाकार्थं कर्त्तव्यनिर्देशः।—

क्वाथार्द्धमात्रया प्रातर्धान्यशुण्ठीजलं पिबेत्।
पित्तात्तरे कदुष्णाम्भस्तावन्मात्रं पिबेदनु ॥
तेनास्य दीप्यते वह्निर्भक्ताकाङ्क्षा च जायते॥ २५ ॥

---

पार्ष्णिरङ्गुलिपिण्डिकाश्च ये चान्ये गात्रावयवा रुजार्त्ताः। तांश्चावमृज्यात् ससुखं ततश्च निद्रामुपासीत कृतोपधानः॥" (च० सि० बस्तिसूत्रीय०) इति। आचारिके रत इति—क्रोधादिवर्जनाद्याचारतत्परः। यदि तु स्नेहो दत्तमात्र एवातिमात्रत्वादिदोषेण निःसरति, तदा किं कार्य्यम्? इत्याह, योज्य इत्यादि वाग्भटस्य। शीघ्रमिति—त्रियामादर्वाक्। अत्र द्वितीयस्नेहदानमल्पमात्रयैव विधेयं, प्रथमस्नेहदानेनैव कोष्ठावलेपसिद्धत्वात्; सुश्रुतेऽप्युक्तं—"तस्यान्योऽल्पतरो देयः" (चि० ३७ अ०) इति; पूर्वदत्तस्नेहादल्पतर इति ॥ २०—२३ ॥

सौश्रुतानुवासनसम्यग्योगलक्षणमाह, सानिल इत्यादि।—विना पीड़ां त्रियामस्थः इत्यत्र "ऊषाचोषौ विना शीघ्रम्" इति पाठे—ऊषा दाहः। चोषः पिपासा। शीघ्रमिति—यामत्रयानन्तरमेवेत्यर्थः ॥ २४ ॥

कोष्ठावलेपस्नेहपाकार्थमाह, क्वाथार्द्धमात्रयेत्यादि।—यस्य पुरुषस्याग्न्याद्यपेक्षया यावान् संशमनक्वाथः समर्हति, तस्यार्द्धं धान्यशुण्ठीजलं पिबेदित्यर्थः। एतच्च धान्य-शुण्ठीजलं षड़ङ्गविधिना कर्त्तव्यमिति चक्रः। ततश्च धान्यस्य दश द्वादश वा माषकाः, शुण्ठ्याश्च षट् चत्वारो वेति मिलित्वा कर्षमानत्वं ज्ञेयम्। एतच्च धान्यशुण्ठीजलं न प्रत्यहं देयं, किन्त्वेकान्तरमिति; तदुक्तम्—"एकान्तरोपयोगेन धान्यशुण्ठीजलं पिबेत्" इति। तस्मादेतस्यापदेकान्तरमेवानुवासनदानं, यस्मिन् दिवसे अनुवासनं न दीयते, तस्मिन्नेव दिने धान्यशुण्ठीजलं देयम्, अनुवासनदिने तु न देयम्; यदाह चरकः,—"भुक्तस्नेहं द्रवोष्णञ्च लघुपथ्योपसेवनम्। भुक्तवान् मात्रया योज्य-मनुवास्यस्त्र्यहात् त्र्यहात्॥ धान्यनागरसंसिद्धं तोयं दद्याद्विचक्षणः। व्युषिताय निशां कल्यमुष्णं वा केवलं जलम्॥" (सि० स्नेहव्यापादिका०) इति।

अनिःसृतस्नेहस्य गुणनिर्देशः।—

अहोरात्रादपि स्नेहः प्रत्यागच्छन् न दुष्यति।
कुर्य्यात् वस्तिगुणांश्चापि जीर्णस्त्वल्पगुणो भवेत्॥ २६॥

अनिःसृतस्नेहस्य अवस्थाविशेषे निःसारणनिषेधः।—

यस्य नोपद्रवं कुर्य्यात् स्नेहवस्तिरनिःसृतः।
सर्वोऽल्पो वाऽऽवृतो रौक्ष्यादुपेक्ष्यः स विजानता॥ २७॥

व्युषितायेति—अनुवासनस्नेहं दत्त्वा निशां व्युषितायेत्यर्थः। एतेन यस्मिन् दिने अनुवासनस्नेहो न दीयते, तस्मिन्नेव दिने धान्यनागरसिद्धं जलं देयमिति बोधयतीति। कल्यमिति—प्रातः। पित्तोल्वणे तु दोषे धान्यशुण्ठीजलं हित्वा कोष्णजलं देयमित्याह, पित्तोत्तरे इत्यादि। तावन्मात्रमिति—क्वाथप्रमाणम्॥ २५॥

निर्गमनस्नेहस्य सम्यगनुवासनलिङ्गत्वं यदुक्तं तदपवादमाह, अहोरात्रादित्यादि सुश्रुतस्य।—अहोरात्रादिति वस्तिप्रणिधानदिनरात्र्यभिप्रायेण, तेन यामत्रयात् परतोऽपि याममेकमनागच्छन्नपि स्नेहो न दुष्यति न व्यापदं करोतीत्यर्थः। वस्तिगुणानिति—स्नेहनबृंहणादीन्। जीर्ण इति—परिणतः। अल्पगुण इति—वाय्वग्निभ्यां भूयः पाकं नीतत्वात् न सम्यक् स्नेहनादिकं करोति, वीर्य्येण देहं भावयित्वा प्रत्यागच्छन्नेव स्नेहो यथोक्तगुणकारक इति भावः। पक्काशयस्थस्यापि स्नेहस्य पाकोऽग्निप्रत्यासत्त्या देहतेजसा च सङ्गच्छते एव; अत एवोक्तं चरके—"एषामाशु व्रजेत् स्नेहो यात्यन्तु सिकतास्विव। एभ्योऽन्येषां व्रजेत् प्रायः स्नेहं पचति पावकः॥" (सि० स्नेहव्यापादिका०) इति॥ २६॥

इदानीं यः स्नेहः सर्वथाऽनिःसृतः समुदायेनैकदेशेन वा यदि व्यापदं न करोति तदा तत्प्रवर्त्तनाय यत्नो न विधेय इत्याह, यस्येत्यादि दृढबलस्य।—अनिः-सृतोऽपि स्तम्भरुगादिकमुपद्रवं न कुर्य्यादिति। अल्पो वाऽऽवृत इति—स्तोकनिःसृतः स्तोकश्चावृत इत्यर्थः। आवृतस्यापि सम्यगुपद्रवाकरणे हेतुमाह, रौक्ष्यादित्यादि। शरीरस्यातिरूक्षतया तिष्ठन्नपि स्नेहो रूक्षशरीरं भावयन्नेव न व्यापदं करोतीत्यर्थः। अन्ये तु "सर्वोऽल्पो वा धृतः" इति पठन्ति; रौक्ष्याच्छरीरोद्गतवायुना धृतः प्रतिबद्धः स्नेहोऽनिःसृतोऽपि व्यापदजनकत्वादुपेक्ष्य इत्याहुः। उपेक्ष्य इति—न तत्र वातायाः स्नेहप्रवर्त्तनी चिकित्सा कार्य्येत्यर्थः॥ २७॥

अनिःसृते सोपद्रवस्नेहे कर्त्तव्यविधिः ।—

अनायान्तमहोरात्रात् स्नेहं सोपद्रवं हरेत् ।
स्नेहवस्तावनायाते नान्यः स्नेहो विधीयते ॥ २८ ॥

अनिःसृते स्नेहे व्यापत्तिनिर्देशः ।—

अशुद्धस्य मलोन्मिश्रः स्नेहो नैति यदा पुनः ।
तदाऽङ्गसदनाध्मान-शूलाः श्वासश्च जायते ॥
पक्वाशयगुरुत्वञ्च—" ॥ २९ ॥

व्यापत्तौ कर्त्तव्यनिर्देशः ।—

"—तत्र दद्यान्निरूहणम् ।
तीक्ष्णं तीक्ष्णौषधैरेव सिद्धञ्चाप्यनुवासनम् ॥ ३० ॥

अशोधितस्य स्नेहवस्तिदाननिषेधः ।—

स्नेहवस्ति विधेयस्तु नाविशुद्धस्य देहिनः ।
स्नेहवीर्य्यं तथा दत्ते स्नेहे नानुविसर्पति ॥ ३१ ॥

अवस्थाविशेषे अशोधितस्यापि अनुवासननिर्देशः ।—

अशुद्धमपि वातेन केवलेनाभिपीड़ितम् ।

---

अनायान्तमित्यादि सुश्रुतस्य ।—हरेदिति शोधनवस्तिभिरिति शेषः; अत एवाह, स्नेहवस्तावित्यादि सुश्रुतस्य । नान्यः स्नेहो विधीयते इति स्नेहातियोगभयात । शोधनवस्तिस्तु दीयते एवेत्यर्थः ॥ २८ ॥

अचिकित्सितां व्यापदमाह, अशुद्धस्येत्यादि ।—अशुद्धस्येति वमनेन विरेचनेन वा ॥ २९ ॥

तत्रेत्यादि ।—तीक्ष्णमित्यनुवासनविशेषणम्; अन्ये तु निरूहणमित्यस्य विशेषणमित्याहुः ॥ ३० ॥

वमनविरेकाभ्यां शुद्धस्यैव स्नेहवस्तिर्देयो न पुनरविशुद्धस्येत्याह, स्नेहवस्तिरित्यादि ।—कुतो न विधेयः ? इत्याह, स्नेहवीर्य्यमित्यादि । तथा दत्ते स्नेहे अविशुद्धदेहे स्नेहे प्रयुक्ते सति स्नेहवीर्य्यं यस्मान्नानुविसर्पति, देहमिति शेषः । स्नेहे इत्यत्र "देहम्" इति पाठे—तथा दत्ते इत्यत्र स्नेहवस्ताविति शेषो बोध्यः ॥ ३१ ॥

अशुद्धस्य स्नेहवस्तिर्न देय इति यदुक्तं तदपवादमाह, अशुद्धमपीत्यादि ।—

अहोरात्रस्य कालेषु सर्व्वेष्वेवानुवासयेत् ॥ ३२ ॥

प्रथमानुवासनदानानन्तरं पुनरनुवासनदानस्य कालनिर्देशः।—

अन्वासयेत् तृतीयेऽह्नि पञ्चमे वा पुनश्च तम्।
यथा वा स्नेहपक्तिः स्यादतोऽप्युल्वणमारुतान् ॥
व्यायामनित्यान् दीप्ताग्नीन् रूक्षांश्च प्रतिवासरम् ॥३३॥

अनुवासनस्य सङ्ख्यानिर्देशादिः।—

इति स्नेहैस्त्रिचतुरैः स्निग्धे स्रोतोविशुद्धये।

---

केवलेनेति—निरावरणेन। अहोरात्रस्य कालेष्विति—अह्नो रात्रेर्वा ये कालाः पूर्वाह्णपूर्वरात्रादयस्तेष्वित्यर्थः ॥ ३२ ॥

एकमनुवासनं दत्त्वा कियता कालेन पुनरनुवासनं देयमित्याह, अन्वासयेदित्यादि वाग्भटस्य।—स्नेहपक्तिः स्यादिति छेदः। तमिति—प्रथममनुवासितं तृतीये पञ्चमे वाऽहनि अनुवासयेत्; अत्र अतिवृद्धवाते त्र्यहेऽनुवासनं देयं, मन्दाग्नौ शुद्धकफपित्ते तु पञ्चमदिनेऽनुवासनमिति व्यवस्था। यथा वा स्नेहपक्तिः स्यादित्यनेनाग्न्यपेक्षया उक्तकालातिक्रमोऽपि कार्य्य इति बोधयति। उल्वणवातादीन् प्रति तु प्रत्यहमेवानुवासनं देयमित्याह, अतोऽपीत्यादि। अतोऽपीति—त्र्यहादिदेयानुवासनापेक्षयाऽपीत्यर्थः; हारीतोऽप्याह—"दृष्टाऽतिवृद्धं पवनस्य रूपं दिने दिने वस्तिमुदाहरन्ति" इति। सुश्रुतेऽप्युक्तं—"रूक्षाय बहुवाताय स्नेहवस्तिं दिने दिने। दद्यात् वैद्यस्ततोऽन्येषामग्न्याबाधभयात् त्र्यहात् ॥" (चि० ३७ अ०) इति। अनयैव रीत्या निरूहानन्तरमनुवासनकालोऽप्यूहनीयः; यदाह दृढ़बलः,—"त्र्यहे त्र्यहे वाऽप्यथ पञ्चमे वा दद्यान्निरूहादनुवासनञ्च" (च० सि० कल्पना०) इति। एवं यस्मिन् दोषे यावन्त्यनुवासनानि देयानि तदपि चरकादावेवानुसर्त्तव्यानि ॥ ३३ ॥

कियन्तः स्नेहवस्तयः प्रयोज्याः? इत्याह, इतीत्यादि वाग्भटस्य।—ननु त्रिचतुरैः स्नेहैरित्यनेन चतुःसङ्ख्यावस्तिदानं विधीयते, तथा च विरोधः; उक्तं हि चरके—"वस्तीनयुग्मान् कुशलो विदध्यात्" (सि० कल्पना०) इति। अयुग्मवस्तिदानञ्च प्रभावादेवोपकारीति महर्षिवचनादुन्नीयते; यथा "युग्मेष्वहःसु पुत्रकामौ संवसेताम्" इति। अयुग्मदानोपपत्तिस्त्वावातिप्रसङ्गभीत्या न कथिता आचार्य्येण। यत्तु अत्र त्रिचतुरैरित्यनेन युग्मवस्तिदानमुक्तं, तन्निरूहाङ्गतया स्नेहनार्थक्रियमाणानुवासनविषयम्, अयुग्मवस्तिदानन्तु स्वतन्त्रक्रियमाणानुवासनविषयम्, अतो भिन्नविषयतया न

निरूहं शोधनं युञ्ज्यादस्निग्धे स्नेहनं तनोः ॥ ३४ ॥

अयोगातियोगलक्षणम्।—

विष्टब्धानिलविण्मूत्रः स्नेहो हीनेऽनुवासने।
दाहज्वरपिपासार्त्तिकरश्चात्यनुवासने ॥ ३५ ॥

निरूहानुवासनयोरतिप्रयोगे दोषनिर्देशः।—

स्नेहबस्तिं निरूहं वा नैकमेवातिशीलयेत्।
उत्क्लेशाग्निवधौ स्नेहात् निरूहात् पवनाद्भयम् ॥ ३६ ॥

अनुवास्यानर्हाः।—

अनास्थाप्या येऽभिहिता नानुवास्याश्च ते मताः।
विशेषतस्त्वमी पाण्डु-कामलामेहपीनसाः ॥ ३७ ॥

---

विरोधः। किंवा चरके अयुग्मानित्यस्य सान्तरानित्यर्थः; तेन यथानुरूप्याऽनुवासनं देयं तथायुग्मकं निरूहान्तरितं कर्त्तव्यम्; तेन नवसु एकादशसु वाऽनुवासनेषु दत्तेषु यदि वायुर्न शाम्यति, तदा तस्य मार्गविशोधनार्थं निरूहं दत्त्वा पुनर्यथोक्तसङ्ख्ययाऽनुवासनं देयमित्यर्थः। स्निग्धे इत्यत्र देहे इति शेषः; एवमस्निग्धे इत्यत्रापि। शोधनमिति निरूहविशेषणम्। स्नेहनमिति—अनुवासनम् ॥ ३४ ॥

अनुवासनायोगातियोगलक्षणमाह, विष्टब्धेत्यादि सुश्रुतस्य।—विष्टब्धान्यनिल-विण्मूत्राणि यस्मात् स्नेहात् स तथा, अनिलादिसम्बन्धकर इत्यर्थः ॥ ३५ ॥

निरूहानुवासनयोः परस्पराव्यवधानेन दाने दोषमाह, स्नेहबस्तिमित्यादि चरकस्य।—एकमेवेति—परस्परानन्तरितम्। उत्क्लेशः पित्तकफोत्क्लेशः। केचित्तु "स्नेहात् पित्तकफोत्क्लेशः" इत्येवं पठन्ति। निरूहात् पवनाद्भयम् इति—निरन्तर-निरूहेण शरीरस्य शोधनातियोगात् पवनाद्भयं स्यादिति भावः। अनुवासनार्थञ्च तैलं पक्वमेव ग्राह्यं, नापक्वम्; यदाह दृढबलः,—"न चामं प्रणयेत् स्नेहं यदभिष्यन्दयेत् गुदम्" (च० सि० स्नेहव्यापत्सिद्धौ०) इति। अनुवासनार्थञ्च तैलं यद्यप्यस्मिन् प्रकरणे नोक्तं, तथाऽपि वातव्याध्युक्तमेव नारायणतैलादिक-मिहाप्यनुसरणीयम् ॥ ३६ ॥

येषामनुवासनं न देयं तानाह, अनास्थाप्या इत्यादि।—आस्थापनं निरूहः, अनास्थाप्या अनिरूह्या इत्यर्थः। अतिदेशेनाननुवासनीयानभिधाय विशेषतो ये

निरन्नप्लीहविड्भेदि-गुरुकोष्ठकफोदराः।
अभिष्यन्दभृशस्थूल-क्रिमिकोष्ठाढ्यमारुताः॥
पीते विषे गरेऽपच्यां श्लीपदी गलगण्डवान्॥ ३८॥

आस्थापनानर्हाः।—

अनास्थाप्यास्त्वतिस्निग्धः क्षतोरस्को भृशं कृशः।
आमातिसारी वमिमान् संशुद्धो दत्तनावनः॥ ३९॥
श्वासकासप्रसेकार्शो-हिक्काऽऽध्मानाल्पवर्चसः।
शूनपायुः कृताहारो बद्धच्छिद्रदकोदरी॥
कुष्ठी च मधुमेही च मासान् सप्त च गर्भिणी॥ ४०॥

अवस्थानुसारात् चिकित्सायाः कर्त्तव्यतानिर्देशादिः।—

न चैकान्तेन निर्दिष्टेऽप्यत्राभिनिविशेत् बुधः।
भवेत् कदाचित् कार्य्याऽपि विरुद्धाऽपि मता क्रिया॥ ४१॥

---

नानुवासनीयास्तान् शब्देनाह, विशेषत इत्यादि वाग्भटस्य। कृताहारोऽप्यना-स्थाप्यत्वेन वक्तव्यः, ततश्च "अनास्थाप्या येऽभिधेया नानुवास्याश्च ते मताः" इत्युक्तेः कृताहारस्यानुवास्यत्वं स्यादतस्तन्निरासार्थमत्र निरन्न इत्युक्तम्। आढ्यमारुतः ऊरु-स्तम्भः। एषाञ्च पाण्डादीनामनुवासनेन ये दोषास्ते चरके पञ्चकर्मीयसिद्धावनुसन्धेयाः, इह तु विस्तरभयान्नोक्ताः॥ ३७।३८॥

अनास्थाप्यानाह, अनास्थाप्या इत्यादि वाग्भटस्य।—अत्राप्यतिस्निग्धादीना-मास्थापनदोषास्तत्रैवानुसन्धेयाः। मासान् सप्त च गर्भिणी इत्यत्यन्तसंयोगे द्वितीया, तेनैकमासात् प्रभृति सप्तममासपर्य्यन्तं वस्तिनिषेध इति॥ ३९।४०॥

इदानीं वमनविरेचनवस्त्यधिकारे वमनाद्यविषयत्वेन तथा वमनादिविषयत्वेन च प्रतिपादितेषु वमनादिनिवृत्तिप्रवृत्तिनियमं निषेधयन्नाह, न चैकान्तेनेत्यादि दृढ़बलस्य।—निर्दिष्टेऽप्यर्थे एकान्तेन नाभिनिविशेत् यथोक्त एवार्थः कार्य्य इति निर्बन्धं न कुर्य्यादित्यर्थः। अथ किमर्थं यथोक्तार्थस्यैवावधारणं न क्रियते? इत्याह, भवेदित्यादि। यतो विरुद्धाऽपि शास्त्रानभिमताऽपि क्रिया कदाचिदवस्थावशेन कार्य्या भवेत्; चरकेऽप्युक्तम्—"उत्पद्यते हि साऽवस्था देशकालबलं प्रति। यस्यां कार्य्यमकार्य्यं स्यात् कर्म कार्य्यञ्च वर्जयेत्॥" (सि० पञ्चकर्मीय०) इति॥ ४१॥

अवस्थानुसारात् निषिद्धाया अपि कर्त्तव्यत्वे दृष्टान्तः ।—

छर्दिहृद्रोगगुल्मार्त्ते वमनं स्वे चिकित्सिते ।
अवस्थां प्राप्य निर्दिष्टं कुष्ठिनां वस्तिकर्म च ॥ ४२ ॥

इत्यनुवासनाधिकारः ।

---

## अथ निरूहाधिकारः ।

निरूहदानस्य दिनकालादिनिर्देशः ।—

अनुवास्य स्निग्धतनुं तृतीयेऽह्नि निरूहयेत् ।
मध्याह्ने किञ्चिदावृत्ते प्रयुक्ते बलिमङ्गले ॥
अभ्यक्तस्वेदितोत्सृष्ट-मलं नातिबुभुक्षितम् ॥ १ ॥

---

इदानीं निषिद्धमप्यवस्थावशेन क्रियते इत्युदाहरणमुपन्यस्य दर्शयति, छर्दिहृद्रोगेत्यादि वाग्भटस्य ।—अवस्थानामपि छर्द्यर्शादीनां वमनं स्वे चिकित्सिते छर्द्यादिचिकित्साध्याये अवस्थां प्राप्य निर्दिष्टमित्यर्थः । अवस्थां प्राप्य निर्दिष्टमित्यनेनावस्थाविशेषे एवं निषिद्धविधानं, सामान्यतस्तु निषेध इति उत्सर्गापवादतया निषेधनिषिद्धकरणयोर्नविरोध इति दर्शयति । एवमन्यत्रापि निषेधविषये वमनादिविधानमवस्थाविशेषपरतया समाधेयम् ॥ ४२ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायामनुवासनाधिकार-विवृतिः ।

---

अनुवासनेन स्निग्धस्य निरूहविधानादनुवासनाधिकारमनु निरूहाधिकारमाह, अनुवास्येत्यादि ।—तृतीयेऽह्नीति—अनुवासनदिनमारभ्य तृतीयदिने इत्यर्थः; तृतीयेऽह्नीति प्रायिकं ज्ञेयं, पञ्चमेऽपि तद्विधानात्; यदाह वाग्भटः.—"पञ्चमेऽथ तृतीये वा दिवसे साधके शुभे" ( सू० १९ अ० ) । निरूहनिरुक्तिश्च सुश्रुते यथा—"दोषनिर्हरणाच्छरीररोहणाद्वा निरूहः" ( चि० ३५ अ० ) इति; शरीररोहणन्तु वयःस्थापनेन शरीरस्य पुनर्नवीकरणम्, अत एवास्थापनमपि निरूहस्य संज्ञान्तरं "वयःस्थापनादायुःस्थापनाद्वा" ( सु० चि० ३५ अ० ) इति । निरूहदानसमयमाह, मध्याह्ने इत्यादि वाग्भटस्य । किञ्चिदावृत्ते इति—अपवृत्ते । अभ्यक्तस्वेदितो-

दोषभेदेन निरूहाङ्गानां माननिर्देशः।—

**मधुस्नेहनकल्काख्य-कषायावापतः क्रमात्।**
**त्रीणि षड् द्वे दश त्रीणि पलान्यनिलरोगिषु ॥ २ ॥**
**पित्ते चत्वारि चत्वारि द्वे द्विपञ्च चतुष्टयम्।**
**षट् त्रीणि द्वे दश त्रीणि कफे चापि निरूहणम् ॥ ३ ॥**

---

स्वेदो यद्यपि पञ्चकर्मपूर्वकतया अनुक्तोऽपि गम्यते एव; यदुक्तम्—"अनुपस्थित-दोषाणां स्नेहस्वेदोपपादनैः। पञ्चकर्माणि कुर्वीत—" इति, तथाऽप्यभ्यङ्गक्रियमाण-स्नेहसहचरितत्वेऽपि स्वेदविधानार्थं स्वेदितेत्युक्तम्। उत्सृष्टमलमिति—त्यक्तपूर्व-पुरीषम्। नातिबुभुक्षितमिति अतिबुभुक्षितस्य हि निरूहोऽतियोगायोर्द्धगमनाय च स्यादिति भावः॥ १॥

निरूहोऽपि पञ्चाङ्गी भवति, अतो मध्वादेरङ्गपञ्चकस्य दोषभेदेन मानभेदार्थं परिभाषामाह, मध्वित्यादि।—स्नेहनं पक्वतैलम्, आमस्य निषिद्धत्वात्; किंवा स्नेहशब्देनात्र मज्जानं वर्जयित्वा स्नेहत्रयस्य ग्रहणम्; यदुक्तं—"विज्ञेयस्त्रिविधः स्नेहो वस्त्यर्थं मज्जवर्जितः" इति। कल्कशब्देन मदनफलशतपुष्पादीनां ग्रहणम्। आवापशब्देन तु मधुस्नेहकल्कक्वाथव्यतिरिक्तं क्षीरमूत्रकाञ्जिकजम्बीरमांसरसादि-द्रव्यमुच्यते; घृतादौ पुनरावापशब्देन प्रक्षेपः, कल्को वाऽप्यभिधीयते इति। अनिलरोगिषु क्रमात् यथासङ्ख्यं मधुनस्त्रीणि पलानि, स्नेहस्य षट्, कल्कस्य द्वे, कषायस्य दश, त्रीणि चावापस्येति, एवं मिलित्वा द्वादशप्रसृतो निरूहो भवति, प्रसृतन्तु पलद्वयमिति। एवं पित्ते श्लेष्मणि च व्याख्येयम्। द्विपञ्चेति—दश इत्यर्थः। इदन्तु यत् द्वादशप्रसृतमानं निरूहस्योक्तं, तदष्टादशवर्षमारभ्य सप्ततिवर्षपर्य्यन्तं बोध्यम्; तेन वयोभेदेन निरूहमात्राभेदश्चरकादावनुसरणीयः। एतेन यत्र द्वादशप्रसृतापेक्षया हीनमात्रो निरूहः कर्त्तव्यो भवति, तत्र मधुस्नेहादीनामुक्त-मात्राऽनुसारेण मात्रा कल्पनीया, द्वादशप्रसृताधिकमात्रा च न कर्त्तव्येव; उक्तं हि चरके—"द्वादशतः परं स्युः" (सि० बस्तिसूत्रीय०) इति, परं-शब्दोऽवधारणे, द्वादशैव प्रसृताः स्युरित्यर्थः। एतच्च चरकवचनं परमतप्रक्षेपणार्थं ज्ञेयम्; तेन सुश्रुते—"द्वादशप्रसृतं केचित् विंशत्पलमथापरे" (चि० ३७ अ०) इत्यनेन यदेकीयमतमुपन्यस्तं तत् प्रतिक्षिपति, द्वादशप्रसृताधिकमानस्य महात्ययत्वादिति। हारीतेऽप्युक्तम्—"अर्द्धाढकं परमतप्रमाणम्" इति॥ २।३॥

अङ्गानां मिश्रणक्रमनिर्देशः ।—

दत्त्वाऽऽदौ सैन्धवस्याक्षं मधुनः प्रसृतद्वयम् ।
विनिर्मथ्य ततो दद्यात् स्नेहस्य प्रसृतद्वयम् ॥ ४ ॥
एकीभूते ततः स्नेहे कल्कस्य प्रसृतं क्षिपेत् ।
सम्मूर्च्छितं कषायं तं पञ्चप्रसृतसम्मितम् ॥ ५ ॥
वितरेत्तु यथाऽऽवापमन्ते द्विप्रसृतोन्मितम् ।
वस्त्रपूतं तथोष्णाम्बु कुम्भीवाष्पेण तापितम् ॥
एवं प्रकल्पितो वस्तिर्द्वादशप्रसृतो भवेत् ॥ ६ ॥

सम्यङ्मिश्रणस्य लक्षणम् ।—

न धावत्यौषधं पाणिं न तिष्ठत्यवलिप्य च ।
न करोति च सीमन्तं स निरूहः सुयोजितः ॥ ७ ॥

प्रयोगविधिः ।—

पूर्वोक्तेन विधानेन गुदे वस्तिं निधापयेत् ।

---

निरूहे द्रव्यसंयोजनाक्रममाह, दत्त्वेत्यादि सुश्रुतस्य ।—प्रथमं शिलादिगम्भीरमसृणभाजने यथोक्तमानं मधु सैन्धवचूर्णञ्च स्थापयित्वा चिरं घर्षणं कार्य्यं यावदेकीभवति, तदनु स्नेहप्रसृतद्वयमपि मधुना सार्द्धं मथ्नीयात् यावदेकीभवति, एकीभूते च स्नेहे कल्कस्य प्रसृतं कषायस्य च पञ्च प्रसृतानि दत्त्वा आलोडयेत्, तदनु प्रसृतद्वयमावापं वितरेत् दद्यादित्यर्थः । अयञ्च निरूहद्रव्यसंयोजनक्रमः "पित्ते चत्वारि चत्वारि" इत्याद्युक्तमानसंवादात् पित्तोक्तनिरूहमानमधिकृत्य यद्यप्युक्तस्तथाऽपि 'एकत्रोक्तो विधिरन्यत्राप्युपतिष्ठते' इति न्यायात् कफवातोक्तनिरूहेऽपि ज्ञेयः । द्वादशप्रसृत इति । यद्यप्यत्र सैन्धवाक्षमधिकं भवति, तथाऽप्यल्पत्वादविगणय्योक्तं द्वादशप्रसृत इति ॥ ४—६ ॥

इदानीं सम्यग्योजितस्य निरूहस्य लक्षणमाह, न धावतीत्यादि ।—औषधं मिलितमधुस्नेहकषायकल्करूपं निरूहौषधं, पाणिं न धावति तनुतया प्रक्षालितप्रायं हस्तं न करोतीत्यर्थः, तथाऽतिघनतया पाणिमवलिप्य यदौषधं न तिष्ठति, एवं यदौषधं सीमन्तं तैलादिरेखां न करोति न दर्शयति । सुयोजित इति—सम्यग्योजितः ॥ ७ ॥

औषधसंयोजनानन्तरं यत् विधेयं तदाह, पूर्वोक्तेनेत्यादि ।—पूर्वोक्तेनेति—अनु-

त्रिंशन्मात्रास्थितो वस्तिस्ततस्तूत्कटुको भवेत् ॥ ८ ॥
जानुमण्डलमावेष्ट्य दत्तं दक्षिणपाणिना।
अङ्गुष्ठेनेव च्छोटाशब्दशतं तिष्ठेदवेगवान् ॥ ९ ॥
द्वितीयं वा तृतीयं वा चतुर्थं वा यथाऽर्थतः।
सम्यङ्निरूहलिङ्गे तु प्राप्ते वस्तिं निवारयेत् ॥ १० ॥

सम्यग्योगलक्षणम्।—

प्रसृष्टविण्मूत्रसमीरणत्वं
रुच्यग्निवृद्ध्याशयलाघवानि।
रोगोपशान्तिः प्रकृतिस्थता च
बलञ्च तत् स्यात् सुनिरूढलिङ्गम् ॥ ११ ॥

वासनोक्तेन। वस्तिमिति—निरूहम्। स च वस्तिः कियन्तं कालं गुदे स्थाप्य इत्याह, त्रिंशन्मात्रेत्यादि। मात्रास्वरूपञ्चाग्निवेशेनोक्तम्; यथा—"यावत् पर्य्येति हस्ताग्रं दक्षिणं जानुमण्डलम्। निमेषोन्मेषकालो वा सा मात्रा परिकीर्त्तिता॥" (वा० सू० २२ अ०) इति। उत्कटुकः "उकड़ी" इति लोके। एतच्च त्रिंशन्मात्रोपस्थापनं मृदुकोष्ठं वेगवन्तञ्च प्रति बोध्यम्। अवेगवन्तं क्रूरकोष्ठञ्च प्रति यत् विधेयं तदाह, जानुमण्डलमित्यादि। अङ्गुष्ठेनेव इति—आकुञ्चनलिकः। दत्तं छोटाशब्दशतमित्यन्वयः; छोटा "तुड़ी" इति लोके। कियत्यः छोटा देया इत्याह, शतमिति। द्वितीयमित्यादि। अत्र दद्यादिति शेषः। चतुर्थं वा यथाऽर्थतः इति—निरूहसाध्यप्रयोजनानुरोधात् चतुर्थमपि पुटकं दद्यादित्यर्थः। ननु दृढ़बलेन चतुर्थवस्तिदानं न मन्यते; यथा—"स्निग्धोष्ण एकः पवने समांसो द्वौ स्वादुशीतौ पयसा च पित्ते। त्रयः समूत्राः कटुकोष्णतीक्ष्णाः कफे निरूहा न परं विधेयाः॥" (च० सि० वस्तिसूत्रीय०) तथा वाग्भटेऽप्युक्तं—"त्रिभ्यः परं वस्तिमतो नेच्छन्त्यन्ये चिकित्सकाः। न हि दोषश्चतुर्थोऽस्ति पुनर्दीयेत यं प्रति॥" (सू० १९ अ०) इति; नैवम्; निषेधोऽपि बहुपुरुषविषयतया प्रायिकः, चतुर्थपुटकदानन्तु क्वचित् क्रूरकोष्ठे बलीयसि दोषे च पुरुषे इति भिन्नविषयतया न विरोधः, अत एव यथाऽर्थत इत्युक्तम्। वस्तिनिवारणविधिमाह, सम्यगित्यादि ॥ ८—१० ॥

तदेव सम्यक् लिङ्गमाह, प्रसृष्टेत्यादि दृढ़बलस्य।—प्रसृष्टं सम्यक् प्रवृत्तम्। आशयलाघवानीत्यत्र "आमयलाघवानि" इति पाठे—रोगोपशान्तिरित्यनन्तरं 'वा'

अयोगातियोगयोरातिदेशिकलक्षणम्।—

अयोगस्यातियोगस्य निरूहस्य विरिक्तवत्॥ १२॥

दोषभेदेन निरूहदानसङ्ख्यानिर्देशः।—

स्निग्धोष्ण एकः पवने समांसो
द्वौ स्वादुशीतौ पयसा च पित्ते।
त्रयः समूत्राः कटुकोष्णतीक्ष्णाः
कफे निरूहा न परं विधेयाः॥ १३॥

निर्दिष्टसङ्ख्यकनिरूहप्रयोगस्य फलनिर्देशः।—

एकोऽपकर्षत्यनिलं स्वमार्गात्
पित्तं द्वितीयस्तु कफं तृतीयः॥ १४॥

---

शब्दो ज्ञेयः, तेन निरूहसाध्यानां विकाराणां लाघवमुपशान्तिर्वा भवतीत्यर्थः। रोगोपशान्तिरिति वचनं रोगिविषयकं, प्रकृतिस्थतेति तु सुस्थविषयकं, तेनात्र पौनरुक्त्यं नाशङ्कनीयम्॥ ११॥

अनुवासनायोगातियोगलक्षणं निरूहेऽप्यतिदिशति—अयोगस्येत्यादि॥ १२॥

इदानीं दोषभेदेन वस्तिपुटकसङ्ख्यां नियमयन्नाह, स्निग्धोष्ण इत्यादि।—एक इति—एकपुटकः। समांस इति—मांसरससहितः; उक्तं हि वाग्भटे—"वस्तिरेकोऽनिले स्निग्धः स्वाद्वम्लोष्णो रसान्वितः" (सू० १९ अ०) इति। वाते स्निग्धोष्णस्तथा मांसरससहितस्तथा एक एव निरूहपुटको देयो न त्वधिकः। समांस इत्यत्र "निरूहः" इति केचित् पठन्ति, निरूहोऽत्र पुटकाभिधायी। पयसा चेत्युपलक्षणे तृतीया, पयसा युक्तावित्यर्थः। कटूष्णतीक्ष्णत्वञ्च कट्वादिद्रव्ययोगादेव ज्ञेयम्। न परं विधेया इत्यनेन सुश्रुतोक्तचतुर्थवस्तिदानमत्यर्थशरीरहिंसकं निषेधयति। वाग्भटेऽप्युक्तं—"त्रिभ्यः परं वस्तिमतो नेच्छन्त्यन्ये चिकित्सकाः। न हि दोषश्चतुर्थोऽस्ति पुनर्दीयेत यं प्रति॥" (सू० १९ अ०) इति॥ १३॥

अस्यैव दोषभेदेनोक्तस्य वस्तिपुटकसङ्ख्याभेदस्य फलमाह, एकोऽपकर्षतीत्यादि।—स्वमार्गादिति—स्वस्थानात्; एतच्चानिलादिषु सर्वत्रैव योज्यम्। अनिलस्य हि पक्वाशयः स्थानं, तस्य प्रत्यासन्नत्वादेकपुटकोऽप्यनिलमपकर्षति, द्वितीयादिपुटकदानं तत्र निष्फलमिति भावः। एवं पित्ते तृतीयपुटकदानं, कफे चतुर्थपुटकदानं न कार्यं, फलाभावात्। पक्वाशयापेक्षया पित्ताशयस्य व्यवहितत्वात्

अनिःसृतनिरूहे कर्त्तव्यनिर्देशः।—

अनायान्तं मुहूर्त्तान्तं निरूहं शोधनैर्हरेत्।
निरूहैरेव मतिमान् क्षारमूत्राम्लसंयुतैः॥ १५॥

अनिःसृतनिरूहे दोषनिर्देशः।—

विगुणानिलविष्टब्धं चिरं तिष्ठन्निरूहणम्।
शूलारतिज्वराटोपान् मरणं वा प्रयच्छति॥ १६॥

कृताहारस्य निरूहप्रयोगनिषेधः।—

न तु भुक्तवते देयमास्थापनमिति स्थितिः।
आमं तद्धि हरेद्भुक्तं छर्दिं दोषांश्च कोपयेत्॥ १७॥

अवस्थाविशेषे क्रमव्यभिचारस्य कर्त्तव्यतानिर्देशः।—

आवस्थिकः क्रमश्चापि मत्वा कार्य्यो निरूहणे॥ १८॥

---

द्वितीयः पुटकः पित्तं स्वाशयादपकर्षति, ततोऽपि कफाशयस्य व्यवहितत्वात् तृतीयः पुटकः कफमपकर्षतीति। स्वमार्गादित्यनेन यदि दोषाः स्वस्थानस्था भवन्ति, तदैवायं नियम इति बोधयति, तेन यदि पित्तकफौ पक्वाशयस्थौ भवतः, तदा प्रथमपुटकोऽपि तत्स्थानगतपित्तकफप्रशमनं करोति, तथा द्वितीयतृतीयावपि पित्तकफस्थानगतवायुप्रशमनं कुरुत इति ज्ञेयम्। पित्तकफयोस्तु यद्यपि मुख्यं चिकित्सितं वस्तिदानं न भवति, तथाऽपि वातावरके वातानुबन्धे वा पित्तकफे चैतद्वस्तिदानं ज्ञेयम्; तदुक्तं सुश्रुते—"वस्तिर्वाते च पित्ते च कफे रक्ते च शस्यते" (चि० ३५ अ०) इति। वस्तेस्तु प्राधान्यतो वस्तिगतदोषहरत्वमेवौत्सर्गिकं, तेन पित्तादिस्थानेऽपि विशिष्टवस्तिविधानसामर्थ्यात् पित्तादिस्थानगतदोषहरणमप्यपवादरूपतया न विरुध्यते॥ १४॥

यद्युक्तकालान्निरूहो न प्रवर्त्तते, तदा किं कर्त्तव्यम? तदाह, अनायान्तमित्यादि सुश्रुतस्य।—मुहूर्त्तं नाडिका। शोधनैरिति—शोधनद्रव्यकृतैः। निरूहस्य चिरस्थानगतदोषहरणमप्यपवादरूपतया न विरुध्यते॥ १५।१६॥

भुक्तवतो निरूहदाननिषेधमाह, न त्वित्यादि।—स्थितिरिति—आयुर्वेदनिश्चयः। हरेदित्यधो हरेत्, छर्दिमित्यूर्द्धं जनयेदिति शेषः॥ १७॥

अवस्थावशेन यथोक्तक्रमव्यभिचारं दर्शयन्नाह, आवस्थिक इत्यादि तस्यैव।—मत्वेति—अवस्थां बुद्ध्वा, निरूहणे आवस्थिक इति—अवस्थोचितः क्रमः कार्य्यः,

वस्तिनेत्रस्य अतिपीड़ने दोषनिर्देशः।—

अतिप्रपीड़ितो वस्तिरतिक्रम्याशयं ततः।
वातेरितो नासिकाभ्यां मुखतो वा प्रपद्यते॥
छर्दिहृल्लाससम्मूर्च्छादीन् प्रकुर्य्याद्दाहमेव च॥ १९॥

अतिपीडनजदोषे कर्त्तव्यनिर्देशः।—

तत्र चूर्णं गलापीड़ं कुर्य्याच्चाप्यवधूननम्।
शिरःकायविरेकौ च तीक्ष्णौ सेकांश्च शीतलान्॥ २०॥

सम्यक्निरूहानन्तरं कर्त्तव्यनिर्देशः।—

सुनिरूढ़मथोष्णाम्बु-स्नातं भुक्तरसौदनम्।

---

तेनावस्थाविशेषे निषिद्धनिरूहेऽपि प्रतिकारं चिन्तयित्वा निरूहो देय एवेत्यर्थः; यथा शूलवतो निषिद्धोऽपि निरूहोऽत्यर्थशूलवेदनायां वैतरणवस्तिरूपो दीयते, तथा उदरादिषु। निषिद्धनिरूहावस्थायां किमिति निरूह एव क्रियते? चिकित्सान्तरमेव कथं न क्रियते? इति न वाच्यम्; वस्तिगतदोषे हि मलावृते वस्तिरेव प्रधानं चिकित्सितं मलापहरणेन दोषान् जयति, न तत्र चिकित्सान्तरं प्रभवति, अतस्तस्यामवस्थायामनर्हनिरूहाणामपि दोषमलहरो निरूहो देय एवेति॥ १८॥

वस्तेरतिप्रपीड़नेन दोषमाह, अतिप्रपीड़ित इत्यादि सुश्रुतस्य।—आशयमिति—पक्वाशयादिकम्। नासिकाभ्यामिति—नासापुटाभ्याम्। आदिशब्दात् दाहादयः॥ १९॥

अत्र यत् प्रतिविधेयं तदाह, तत्रेत्यादि।—गलापीड़मिति—गलपीड़नम्; एतच्च तथा कार्य्यं यथा न म्रियते; उक्तं हि—"वस्त्रपाणिग्रहैः कण्ठं रुन्ध्यान्न म्रियते यथा" (च० सि० वस्तिव्यापत्०) इति। अवधूननमित्यत्र केशेष्वाकृष्येति शेषः; उक्तं हि—"केशेष्वालम्ब्य चाकाशे धुनुयात्" (च० सि० वस्तिव्यापत्०) इति। एतच्च वस्तिव्यापच्चिकित्सितं लेशत एवोक्तं, विस्तरस्तु चरकादावनुसन्धेय इति॥ २०॥

निरूहसम्यग्योगानन्तरं यत् विधेयं तदाह, सुनिरूढ़मित्यादि सुश्रुतस्य।—उष्णाम्बुस्नानमिति शिरो विहाय ज्ञेयं, शिरसि तु शीतजलेनेति वृद्धा व्यवहरन्ति। अत्र केचित् षडङ्गविधिना नागरसाधितसुखोष्णोदकं पानार्थमुपदिशन्ति; यदुक्तं—"ततः प्रत्यागते वस्तौ वार्य्युष्णं नागरैः शृतम्। पाययेत् क्लमशोषघ्नं स्नापयेदुष्ण-

यथोक्तेन विधानेन योजयेत् स्नेहवस्तिना ॥ २१ ॥

मांसरसादिप्रयोगे हेतुनिर्देशः।—

तदहस्तस्य पवनाद्भयं बलवदिष्यते।

रसौदनस्तेन शस्तस्तदहश्चानुवासनम् ॥ २२ ॥

अर्द्धमात्रिकवस्तिः।—

दशमूलीकषायेण शताह्वाच्चं प्रयोजयेत्।

---

चारिणा ॥" इति। स्नेहवस्तिनेति। स्नेहवस्तिदानन्तु दृढ़बलेनोक्तं यथा—"प्रत्यागते कोष्णजलाभिषिक्तः शाल्यन्नमद्यात् तनुना रसेन। जीर्णे तु सायं लघु चाल्पमात्रं भुक्ताऽनुवास्यः परिबृंहणार्थम् ॥ निरूहपादांशसमेन तैलेनाम्लानि लघ्वौषधसाधितेन ॥" (च० सि० वस्तिसूत्रीय०) इति। निरूहपादांशसमेनेति—निरूहपादप्रमाणेन, चतुर्विंशतिपले निरूहे षट्पलेन स्नेहेनेत्यर्थः; इयञ्चोत्तममात्राऽनुवासनस्य; उक्तञ्च—"उत्तमा षट्पली मात्रा मध्यमा त्रिपली भवेत्। कनीयस्यध्यर्द्धपला त्रिधा मात्राऽनुवासने ॥" इति। एषा च षट्पली मात्रा प्रबलाग्निं प्रत्येव बोध्या। अन्ये त्वाहुः, निरूहदानदिने यः स्नेहवस्तिर्दीयते सोऽल्पमात्र एव, न तु षट्पलः, निरूहव्याकुलिताग्नित्वात्; अत एवाह भोजः,—"सम्यक् निरूढं तैलाक्तं जलेनोष्णेन सेचितम्। योजयेदल्पमात्रेण तत्क्षणं स्नेहवस्तिना ॥" इति। अत्र तत्क्षणमिति तद्दिनोपलक्षणं, तेन सायं दीयते स्नेहवस्तिः; तस्मादत्र सार्द्धपलरूपा अवरमात्रा स्नेहस्य ज्ञेया, न चैवं चरकविरोधः; चतुर्विंशतिपलस्य निरूहस्य पादः षट्पलं, तस्यांशश्चतुर्थो भागः सार्द्धैकपलं, तत्समं तैलमिति हि तदर्थः। वृद्धास्तु सार्द्धकर्षेण स्नेहेनानुवासनं कुर्वन्ति ॥ २१ ॥

अथ कृतनिरूहस्य मन्दाग्नित्वात् तदहरेव कुतो मांसरसः स्नेहवस्तिश्च तत्रोपदिश्यते? इत्यत आह, तदहरित्यादि।—निरूहकृतमलदोषस्य (निरूहव्याकुलदोषस्य (?) इति प्रका०) दुर्बलेन वातात् भीतिरिति भावः ॥ २२ ॥

इदानीं निरूहयोगा वाच्याः; तत्र प्रथमं प्रसिद्धत्वादर्द्धमात्रिकवस्तिमाह, दशमूलीत्यादि चक्रटीका।—तन्त्रान्तरस्य उत्सर्गसिद्धचतुर्विंशतिपलनिरूहापेक्षया मात्राऽर्द्धमस्येति कृत्वा द्वादशपलोऽयं निरूहः अर्द्धमात्रिक इत्युच्यते; अत एव मधुस्नेहनकाथ्येत्यादिपरिभाषया यत् द्रव्यमानमुक्तं, तदर्द्धमानमेवात्र ज्ञेयं, तेन द्वादशभिः पलैरेकः प्रकुञ्चः, एवं त्रयः प्रकुञ्चा देयाः। अत्र प्रकुञ्चत्रयार्थे दश-

सैन्धवाच्चाच्च मधुनो द्विपलं द्विपलं तथा ॥ २३ ॥
तैलस्य फलमेकन्तु फलस्यैकत्र योजयेत् ।
अर्द्धमात्रिकसंज्ञोऽयं वस्तिर्देयो निरूहवत् ॥ २४ ॥
न च स्नेहो न च स्वेदः परिहारविधिर्न च ।
आत्रेयानुमतो ह्येष सर्वरोगनिवारणः ॥ २५ ॥

---

मूलस्य प्रत्येकं कर्षत्रयम्, अतः सार्द्धसप्तपलानि, तत्र क्वाथपरिभाषया जलस्यापि सार्द्धसप्तशरावाः, एभिः षष्टिः पलानि भवन्ति, एषां चतुर्थांशशेषात् पञ्चदश-पलानि दशमूलकषायस्य भवन्ति, तत्रैकपुटकार्थं पञ्चपलानि ग्राह्याणि, अपर-पुटकयोर्द्वयोरपि दशपलं विभज्य देयम्। शताह्वा शतपुष्पा, तस्या अक्षं कर्षः, एतत्पेषणमपि दशमूलक्वाथेनैव विधेयम्। वृद्धास्तु जलेनापि पेषणं कुर्वन्ति। एत-न्मात्रमानमेकैकपुटकं प्रत्येव बोध्यम्; एवं सैन्धवाद्यादिकमप्येकस्मिन्नेकस्मिन् पुटके देयं, तैलस्यापि द्विपलमित्यर्थः। फलस्येति—मदनफलस्य, फलमेकम् आकृति-मानात्। संयोजनपरिपाटी च "दत्त्वाऽऽदौ सैन्धवस्याक्षम्" इत्यादि वाक्येनैवोक्ता; एवं सर्वत्र। सर्वत्रैव निरूहे अनुक्तगोमूत्रकाञ्जिकादिद्रव्यदानार्थं "स्नेहं गुडम्" इति परिभाषामनन्तरमेव वक्ष्यति; तेषाञ्च द्रव्याणां माननिर्णयार्थं वृन्दवचनमेवानुसर्त्त-व्यम्; तद्यथा—"कर्षं सिन्धुजन्मनो द्विपलं मधुनः पलद्वयं तैलात्। करतल-मथितं पात्रे गूढस्नेहं भवेत् यावत् ॥ दशमूलस्य कषायं दत्त्वा पलपञ्चकं मदन-मेकम्। गुडशतपुष्पाम्लीनां कर्षं कर्षं तथा कर्षम् ॥ माषकपञ्चकसहितं पूरक-जम्बीरमांसरसपयसाम्। तुषजलगोजलयोरपि प्रत्येकञ्चैकपुटमाहुः ॥" इति। अम्लीति—पक्वतिन्तिडीफलं, तदपि सास्थि ग्राह्यमित्युपदेशः। पूरकजम्बीरादीनां माषकपञ्चसहितं कर्षमित्यर्थः। पूरकः मातुलुङ्गम्, अस्य पक्वफलरसो गृह्यते; एवं जम्बीरस्यापि माषकपञ्चसहितं कर्षम्। क्षीरकर्षन्तु उष्णीकृतस्य मिलितनिरूहस्य चर्मपुटकप्रवेशनसमये प्रक्षेप्तव्यम्, अन्यथा "न भावयेदौषधं पायसम्" इत्यादि लक्षणं न स्यादित्याहुर्वृद्धवैद्याः। अनेन प्रकारेण पुटकत्रयमुत्सर्गः; एतेन पुटकद्वयेनैव यत्र सम्यङ्निरूहलक्षणं, तत्र तावन्मात्रमेवेति। सुखग्रहणार्थमर्द्धमात्रिकवस्तेः पत्रिका लिख्यते—पुटकत्रयार्थं दशमूल प्र क ३, पा पा श ७, पल ४, शेष पल १५; एतत् भागत्रयं कृत्वा एकपुटकार्थं दशमूलकषाय पल ५. प्रक्षेपार्थं सुपिष्ट-शतपुष्पा क १, सैन्धव क १, मधु प २, पक्वतैल प २, पिष्टमदनफल गो १, पुराण-

यक्ष्मघ्नश्च शूलघ्नश्च क्रिमिघ्नश्च विशेषतः।
शुक्रसञ्जननो ह्येष वातशोणितनाशनः॥
बलवर्णकरो वृष्यो वस्तिः पुंसवनः परः॥ २६॥

निरूहे अवश्यप्रक्षेप्याणि।—

स्नेहं गुड़ं मांसरसं पयश्च अम्लानि मूत्रं मधुसैन्धवे च।
एतान्यनुक्तानि च दापयेच्च निरूहयोगे मदनात् फलञ्च॥२७॥

लवणमदनयोर्मानर्निर्देशः दोषविशेषे प्रक्षेपनिर्देशश्च।—

लवणं कार्षिकं दद्यात् फलमेकन्तु मादनम्।
वाते गुड़ः सिता पित्ते कफे सिद्धार्थकादयः॥ २८॥

---

गुड़ क १, सास्थिसुपक्वतिन्तिड़ीफल क १, सुपक्वमातुलुङ्गरस, सुपक्वजम्बीररस, मांसरस, काञ्जिक, गोमूत्र प्र क १, मा ५; एतत् सर्वं पूर्वोक्तसंयोजनपरिपाट्या मेलयित्वा वस्त्रे घृत्वा वाष्पस्वेदेन कदुष्णीकृत्य ग्राह्यं, तदनु गव्यदुग्ध क १, मा ५, प्रक्षिप्यालोड्य चर्मपुटके प्रक्षेप्यमिति। एतदेव विधानं द्वितीये तृतीयेऽपि ज्ञेयम्। इत्यष्टमाविकः॥ २३—२६॥

इदानीं सर्वेष्वेव निरूहेषु अनुक्तान्यपि यानि द्रव्याणि अवश्यप्रक्षेप्याणि, तानि दापयितुं हारीतवचनमुपन्यस्यति, स्नेहं गुड़मित्यादि।—सुश्रुतस्त्वेतदधिकमप्याह—"क्षीराण्यम्लानि मूत्राणि स्नेहाः क्वाथा रसास्तथा। लवणानि फलं क्षौद्रं शताह्वा सर्षपं वचा॥ एला त्रिकटुकं रास्ना सरलं देवदारु च। रजनी मधुकं हिङ्गु कुष्ठं संशोधनानि च॥ कटुका शर्करा मुस्तमुशीरं चन्दनं शटी। मञ्जिष्ठा मदनं चण्डा त्रायमाणा रसाञ्जनम्॥ बिल्वमध्यं यमानी च फलिनी शक्रजा यवाः। काकोली क्षीरकाकोली जीवकर्षभकावुभौ॥ तथा मेदा महामेदा ऋद्धिर्वृद्धिर्मधूलिका। निरूहेषु यथालाभमेष वर्गो विधीयते॥" (चि० ३८ अ०) इति॥ २७॥

सैन्धवमदनफलयोर्मिलितनियतमानमाह, लवणमित्यादि।—फलमेकमित्याकृतिमानात्। दोषभेदेन गुड़ादीनां प्रक्षेप्यत्वमाह, वाते इत्यादि। आदिशब्दात् सुश्रुतोक्तवचात्रिकटुकादीनां ग्रहणम्। अत्रान्तरे चरकोक्त एरण्डबस्तिर्दृष्टफलो बोध्यः; सोऽप्यष्टमाविकोक्तकल्पनानुसारेणाष्टमाविकयैव वृद्धैः प्रयुज्यते, स चात्र विस्तरभयान्न विवृत इति तत्रैवानुसन्धेयः॥ २८॥

क्षारवस्तिः।—

सैन्धवाक्षं समादाय शताह्वाक्षं तथैव च।
गोमूत्रस्य पलान्यष्टावम्लिकायाः पलद्वयम्॥ २९॥
गुडस्य द्वे पले चैव सर्वमालोड्य यत्नतः।
वस्त्रपूतं सुखोष्णञ्च वस्तिं दद्याद्विचक्षणः॥ ३०॥
शूलं विट्सङ्गमानाहं मूत्रकृच्छ्रञ्च दारुणम्।
क्रिम्युदावर्त्तगुल्मादीन् सद्यो हन्यान्निषेवितः॥ ३१॥

वैतरणवस्तिः।—

पलशुक्तिकर्षकुडवैरम्लीगुडसिन्धुजन्मगोमूत्रैः।
ईषत्तैलयुतोऽयं वस्तिः शूलानाहामवातहरः॥

---

क्षारवस्तिमाह, सैन्धवाक्षमित्यादि।—वस्तिरयमेतावन्मात्र एव दीयते; इयञ्च मात्रा एकपुटकस्य। अम्लिकाया इति—साम्प्रतिकान्तिडीफलस्य। "निरूहयोगे मदनात् फलञ्च" इत्युक्तत्वात् एकं मदनफलमप्यत्र वक्ष्यन्ति; अत एव वङ्गसेनोऽप्याह,—"गोमूत्रस्य पलान्यष्टौ द्वे गुडाम्लिकयोः पले। कर्षञ्च शतपुष्पायास्तथाऽक्षं सैन्धवस्य च॥ मदनस्य फलञ्चैकं सर्वेण सुविलोडितम्। वस्त्रपूतं सुखोष्णञ्च वस्तिं दद्याद्विचक्षणः॥ वातविट्सङ्गमानाहं मूत्रकृच्छ्रञ्च दारुणम्। शूलोदावर्त्तगुल्मादीन् सद्यो हन्यात् प्रयोजितः॥ गोमूत्रवस्तिरित्येष विज्ञेयः शोधनः परः। हितः वातार्त्ते रूक्षः शुद्धे तु तैलसंयुतः॥ बलवर्णकरः पुंसामग्निसन्दीपनः परः॥" इति। अस्मादेव वचनात् गोमूत्रवस्तिरित्यपि संज्ञान्तरमस्य बोध्यम्। तथा निरामवाते तु तैलमपि देयं, तैलञ्च पलमात्रं बोध्यम्; तदुक्तमायुर्वेदसारे—"अष्टौ पलानि मूत्रस्य गुडस्य तु पलद्वयम्। तद्वदम्लीफलं दत्त्वा मिश्रितं सैन्धवस्य च॥ कर्षं सामेऽनिले शुद्धाच्छुद्धे तैलपलान्वितम्। क्षारवस्तिरिमं सिद्धं वातोदावर्त्तनाशनम्॥" इति। इदानीं क्षारवस्तेः पत्रिका लिख्यते—सैन्धवचूर्णं का १, शतफाकल्क का १, गोमूत्र पल ८, सुपिष्टास्थिरहितपक्वतिन्तिडीफल पल २, पुराणगुड पल २, सुपक्वमदन गो १, निरामवाते तु पक्वतैल पल १; एतत् सर्वं पूर्ववन्मर्दयित्वा वस्त्रपूतं कृत्वा कदुष्णीकृत्य देयम्। इति क्षारवस्तिः॥ २९—३१॥

वैतरणवस्तिमाह, पलशुक्तीत्यादि।—शुक्तिः अर्द्धपलम्। अम्लीति—तिन्तिडीफलम्। पलादिमानञ्च क्रमात् अम्लीगुडादिषु योज्यम्। कुडवोऽत्र द्रवद्वैगुण्यादष्टौ

वैतरणः क्षारवस्तिर्भुक्ते चापि प्रदीयते ॥ ३२ ॥

पिच्छिलवस्तिः।—

बदर्य्यैरावतीशेलु-शाल्मलीधन्वनाङ्कुराः।
क्षीरसिद्धाः सुसिद्धाः स्युः सास्राः पिच्छिलसंज्ञिताः ॥३३॥
वाराहमाहिषौरभ्र-वैड़ालैणेयकौक्कुटम्।
सद्यस्कमसृगाजं वा देयं पिच्छिलवस्तिषु ॥ ३४ ॥

वस्त्यन्तरानुक्तौ हेतुनिर्देशः।—

चरकादौ समुद्दिष्टा वस्तयो ये सहस्रशः।
व्यवहारो न तैः प्रायो निबद्धा नात्र तेन ते ॥ ३५ ॥

वस्तिगुणाः।—

वस्तिर्वयःस्थापयिता सुखायु-
र्बलाग्निमेधास्वरवर्णकृच्च।

---

पलानि। ईषत्-शब्देन तैलपलमिति व्यवहरन्ति वृद्धाः। अत्रापि मदनफलमेकं देयमित्याहुः। इयमपि वैतरणीक्तमात्रा एकपुटकस्यैव ज्ञेया। अत्यन्तशूलपीड़ायां वस्तिद्वयमिदं भुक्तेऽपि दीयते इत्याह, वैतरण इत्यादि। अत्यन्तशूलपीड़ावस्थाया-मावस्थिकमिदं विधानं बोध्यं, न तु सार्वकालिकं, भुक्ते निरूहस्यातिदोषलत्वात्। किन्तु भुक्ते क्षारवस्तिर्न प्रचरति, वैतरणस्तु चरत्येव। एतदपि दुर्बलविषयमेव ज्ञेयम्; तदुक्तं—"भोजयित्वाऽथ सायाह्ने दुर्बलस्य प्रशस्यते। अथ चेत् बलवान् जन्तुः अभुक्तोऽपि तदा क्वचित् ॥" इति। इति वैतरणवस्तिः ॥ ३२ ॥

पिच्छिलवस्तिमाह, बदरीत्यादि सुश्रुतस्य।—ऐरावती नागबला। शेलुः बहुवारः। धन्वनः धामनिरिति प्रसिद्धस्तरुः। एषामङ्कुराः अभिनवपल्लवाः। अत्र दुग्धस्य एको भागः, त्रयो भागा जलस्येत्याहुः। सास्राः सरक्ताः। रक्तञ्च येषां ग्राह्यं तानाह, वाराहेत्यादि। एतच्च शोणितं मर्दित्वैव वस्तौ देयं, "सद्यस्कैर्मृदितै-र्वास्रः" (सि० वस्तिसिद्धि०) इति चरकवचनात्। अयञ्च वस्तिर्यथोक्तद्रव्यमानेनैव कार्य्यः, मात्रा चास्याऽर्द्धमात्रिकवस्तिवत्, माधुतैलिकवस्तिवदित्याहुः। इति पिच्छिलवस्तिः ॥ ३३।३४ ॥

इदानीं चरकाद्युक्तानामन्येषां वस्तीनामनभिधाने उपपत्तिमाह, चरकादावित्यादि। —प्राय इति वचनात् तेऽप्यवस्थायां प्रयोज्या इति सूचयति ॥ ३५ ॥

सर्वार्थकारी शिशुवृद्धयूनां
निरत्ययः सर्वगदापहश्च ॥ २६ ॥

इति निरूहाधिकारः ।

---

## अथ नस्याधिकारः ।

पञ्चविधनस्यम् ।—

प्रतिमर्शोऽवपीड़श्च नस्यं प्रधमनं तथा ।
शिरोविरेचनञ्चेति नस्तः कर्म च पञ्चधा ॥ १ ॥

प्रतिमर्शलक्षणम् ।—

ईषदुच्छिङ्घनात् स्नेहो यावान् वक्त्रं प्रपद्यते ।
नस्तो निषिक्तस्तं विद्यात् प्रतिमर्शं प्रमाणतः ॥ २ ॥

---

वस्तिसामान्यगुणमाह, वस्तिरित्यादि ।—सर्वगदापह इति—मिलितसर्वदोषापहः, किंवा वैदोषिकव्याधिहर इति चरकव्याख्या; अन्यथा-व्याख्याने तु—"श्लेष्मपित्तानिलाकर्षी" (च० सि० कल्पना०) इत्यनेन, तथा "सर्वान् विकारान् शमयेत्" (च० सि० कल्पना०) इत्यनेन च तत्र पौनरुक्त्यं स्यात्। इदमप्यत्र सुश्रुतवचनं बोध्यं—"नरस्योत्तमसत्त्वस्य तीक्ष्णं वस्तिं प्रयोजयेत्। मध्यं मध्यमसत्त्वस्य हीनसत्त्वस्य वै मृदुम् ॥ अपि हीनक्रमं कुर्य्यान्न तु कुर्य्यादतिक्रमम्। विशेषात् सुकुमाराणां हीन एव क्रमो हितः ॥" (चि० ३८ अ०) इति ॥ २६ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां निरूहाधिकार-विवृतिः ।

---

पञ्चकर्मपारिशेष्यान्नस्यमाह,—प्रतिमर्श इत्यादि ॥ १ ॥

प्रतिमर्शलक्षणमाह, ईषदित्यादि सुश्रुतस्य ।—ईषदुच्छिङ्घनादिति—ऊर्द्ध्वाक्षेपणात्। ननु चरके "न चोच्छिङ्घेत्" (सि० त्रिमर्मीया०) इत्युक्तम्, अत्र तु ईषदुच्छिङ्घनम् उक्तम्, अतो विरोधः? अत्र केचिदीषदुच्छिङ्घनमनुच्छिङ्घनमेवेति समादधति; अन्ये तु चरकोक्तप्रतिमर्शः स्वल्पप्रमाणोऽनुच्छिङ्घनः सार्वकालिको ज्ञेयः,

प्रतिमर्शप्रयोजनम् ।—

**प्रतिमर्शश्च नस्यार्थं करोति न च दोषवान् ॥ ३ ॥**

प्रतिमर्शप्रयोगविधिः ।—

**नस्तः स्नेहाङ्गुलिं दद्यात् प्रातर्निशि च सर्वदा ।**
**न चोच्छिङ्घेदरोगाणां प्रतिमर्शः स दार्ढ्यकृत् ॥ ४ ॥**

प्रतिमर्शस्य प्रयोगकालः मात्रा च ।—

**निशाहर्भुक्तवान्ताहः-स्वप्नाध्वश्रमरेतसाम् ।**
**शिरोऽभ्यञ्जनगण्डूष-प्रस्रावाञ्जनवर्चसाम् ॥**
**दन्तकाष्ठस्य हास्यस्य योज्योऽन्तेऽसौ द्विबिन्दुकः ॥ ५ ॥**

---

अत एव तत्र "प्रातर्निशि च सर्वदा" ( सि० विमर्शीया० ) इत्युक्तम् ; यत्तु सुश्रुतोक्तः, स भूरिभावः, नासौ सार्वकालिकः इत्यभिधेयम्, अतः प्रतिमर्शः ईषदुच्छिङ्घन इत्याहुः । नस्तो निषिक्त इति—नासापुटद्वये निषिक्तः । प्रमाणत इति—परिमाणतः, परिमाणद्वारकमेतल्लक्षणमित्यर्थः ॥ २ ॥

प्रतिमर्शकर्माह, प्रतिमर्शश्चेत्यादि चरकस्य ।—नस्यार्थमिति—नस्यस्य स्नेहन-शोधनरूपप्रयोजनद्वयम् ; उक्तं हि—"स्नेहनं शोधनञ्चैव द्विविधं नस्यमुच्यते" ( च० सि० विमर्शीया० ) । न च दोषवानिति—न व्यापत्तिकृत् ॥ ३ ॥

प्रकारान्तरेणापि प्रतिमर्शमात्रामाह, नस्तः स्नेहाङ्गुलिमित्यादि चरकस्य ।—नस्त इति—नासायाम् । स्नेहाङ्गुलिमिति—स्नेहपूरिताङ्गुलीं दद्यात् ; एतेन स्नेह-मग्नाङ्गुलीतो यावान् स्नेहः पतति सैव प्रतिमर्शमात्रा । सर्वदेति—सर्वेष्वेव ऋतुषु । न च नावनादिवदवोच्छिङ्घनं कर्त्तव्यमित्याह, न चोच्छिङ्घेदित्यादि । अरोगाणामित्यनेन स्वस्थविषयत्वमस्योक्तम् । दार्ढ्यकृदिति—दन्तशिरःकपालादि-दार्ढ्यकृत् ॥ ४ ॥

सर्वदेत्यस्यार्थमाह, निशेत्यादि वाग्भटस्य ।—असौ प्रतिमर्शः बिन्दुद्वयपरि-मितो निशादीनामन्ते समाप्तौ वैद्येन योज्यः । निशान्ते इति—प्रातः । अह्नोऽन्ते इति—सायम् । सुश्रुतेऽपि "तल्पोत्थितेन" ( चि० ४० अ० ) इत्यनेन प्रातःकाल उक्तः । अध्वेति—पथश्रमः । श्रमशब्देनाध्वव्यतिरिक्तो व्यायाम उच्यते । सुश्रुतेऽपि "व्यायामाध्वपरिश्रान्तेन" ( चि० ४० अ० ) इत्युक्तम् । रेतःशब्देन रेतःक्षरणोप-लक्षितव्यायाम उच्यते । प्रस्राव इति—मूत्रोत्सर्गः । वर्चः पुरीषोत्सर्गः । एषु पञ्चदशसु

अवपीड़स्य द्वैविध्यं निरुक्तिश्च ।—

शोधनः स्तम्भनश्च स्यादवपीड़ो द्विधा मतः ।
अवपीड्य दीयते यस्मादवपीड़स्ततस्तु सः ॥ ६ ॥

नस्यभेदस्नैहिकनस्यस्य प्रयोगविषयः ।—

स्नेहार्थं शून्यशिरसां ग्रीवास्कन्धोरसां तथा ।
बलार्थं दीयते स्नेहो नस्तःशब्दोऽत्र वर्त्तते ॥ ७ ॥

कालेषु प्रतिमर्शदानप्रयोजनं वाग्भटेनैवोक्तमनुसर्त्तव्यम्; तद्यथा—"निशाहर्भुक्तवान्ताहः-स्वप्नाध्वश्रमरेतसाम् । शिरोऽभ्यञ्जनगण्डूष-प्रस्रावाञ्जनवर्चसाम् ॥ दन्तकाष्ठस्य हास्यस्य योज्योऽन्तेऽसौ द्विबिन्दुकः । पञ्चसु स्रोतसां शुद्धिः क्लमनाशस्त्रिषु क्रमात् ॥ दृग्बलं पञ्चसु ततो दन्तदार्ढ्यं मरुच्छमः ॥" (सू० २० अ०) इति । निशाहर्भुक्तवान्ताहःस्वप्नेषु पञ्चसु प्रतिमर्शदानात् स्रोतसां शुद्धिर्भवति । त्रिष्विति—अध्वश्रमरेतःसु क्लमनाशः स्यात् । शिरोऽभ्यञ्जनादिषु वर्चोऽन्तेषु तु पञ्चसु प्रतिमर्शदानात् दृग्बलं स्यात् । ततोऽनन्तरं दन्तकाष्ठस्य हास्यस्य चान्ते योजितः प्रतिमर्शः क्रमात् दन्तदार्ढ्यं मरुतो वायोः प्रशमनं करोतीत्यर्थः ॥ ५ ॥

अवपीडमाह, शोधन इत्यादि चरकस्य ।—अत्र संशमनमित्यवपीड़स्य कर्मेच्छन्ति, तत् पुनरिह स्तम्भने एवान्तर्भवति । छन्दोऽनुरोधात् अवपीड्येत्यत्र वपीड्येति कथितम् ॥ ६ ॥

नस्यमाह, स्नेहार्थमित्यादि ।—ग्रीवास्कन्धोरसां बलार्थमित्यन्वयः । नस्तःशब्दो नस्यपर्य्यायः; नासाभ्यां दीयते इति नस्यं, नासाशब्दात् "शरीरावयवात् यत्" इति यत्प्रत्ययेन नसादेशे रूपम्; अत एवाह सुश्रुतः,—"औषधमौषधपक्वो वा स्नेहो नासिकाभ्यां दीयते इति नस्यम्" (चि० ४० अ०) । अनया च निरुक्त्या यद्यपि सामान्यवचन एवायं नस्यशब्दस्तथाऽपि नस्तःशब्दोऽत्र वर्त्तते इत्यभिधानात् विशेषवृत्तितामपि नस्यशब्दस्य बोधयति; एतेन यथा निदानशब्दो निदानपञ्चके तथा निदानविशेषे च वर्त्तते, तथाऽयं नस्यशब्दोऽपि नस्य-शिरोविरेचन-प्रतिमर्शावपीड़-प्रधमनेषु तथा नस्यविशेषे च स्नेहार्थं शून्यशिरसामित्यादिनोक्ते वर्त्तते । सुश्रुतेनापि "ततो नस्यशब्दः पञ्चधा निपातितः" (चि० ४० अ०) इत्यादिनाऽयमर्थ उक्तः । एतेन नासास्रोतसि दोषोपशमनार्थं यद्दीयते तन्नस्यमिति नस्यादिपञ्चकसामान्यलक्षणम्; तथा प्रतिमर्शाभिन्नत्वे सति स्नेहनार्थं यद्दीयते तन्नस्यमिति तु नस्यविशेषलक्षणं बोध्यमित्याहुः ॥ ७ ॥

नस्यभेदस्नैहिकनस्यस्य विविधमात्रानिर्देशः।—

नस्यस्य स्नैहिकस्याथ देयास्त्वष्टौ तु बिन्दवः।
प्रत्येकशो नस्तकयोर्नृणामिति विनिश्चयः॥
शुक्तिश्च पाणिशुक्तिश्च मात्रास्तिस्रः प्रकीर्त्तिताः॥ ८॥

शुक्तिपाणिशुक्त्योरर्थः।—

द्वात्रिंशद्बिन्दवश्चात्र शुक्तिरित्यभिधीयते।
द्वे शुक्ती पाणिशुक्तिश्च देयाऽत्र कुशलैर्नरैः॥ ९॥

दोषविशेषे स्नेहविशेषः।—

तैलं कफे च वाते च केवले पवने वसाम्।
दद्यान्नस्तः सदा पित्ते सर्पिर्मज्जां समारुते॥ १०॥

---

स्नैहिकनस्यार्थं स्नेहस्य प्रमाणमाह, नस्यस्येत्यादि।—स्नेहाप्लुतप्रदेशिनीपर्व-द्वयात् यावान् स्नेहः स्रवति तावान् स्नेहो बिन्दुरित्युच्यते; उक्तं हि वाग्भटे—"प्रदेशिन्यङ्गुलीपर्व-द्वयान्मग्नसमुद्धृतात्। यावान् पतत्यसौ बिन्दुः" (सू० २० अ०) इति। नस्तकयोरिति—नासापुटयोः। एषा प्रथमा मात्रा। द्वितीयां तृतीयाञ्च मात्रामाह, शुक्तिश्च पाणिशुक्तिश्चेति। शुक्तिर्द्वितीया, पाणिशुक्तिस्तृतीयेत्यर्थः। एताश्च तिस्रो मात्रा यथाबलं प्रयोज्याः; सुश्रुतेऽप्युक्तं—"तस्य प्रमाणमष्टौ बिन्दवः, प्रदेशिनीपर्वद्वयनिःसृता प्रथमा मात्रा, द्वितीया तु शुक्तिस्तृतीया पाणिशुक्तिरित्येतास्तिस्रो मात्रा यथाबलं प्रयोज्याः" (चि० ४० अ०) इति॥ ८॥

शुक्ति-पाणिशुक्तिशब्दयोरर्थमाह, द्वात्रिंशद्बिन्दव इति।—द्वे शुक्तीति—चतुःषष्टि-बिन्दव इत्यर्थः। इदञ्च शुक्तिपाणिशुक्त्याख्यमात्राद्वयं मिलित्वैव नासापुटाभ्यां प्रयोज्यं, न तु प्रथममात्रावत् प्रत्येकश इत्याहुः। एतच्च स्नेहनस्यं न गिलेत् किन्तु त्यजेदेव; उक्तं हि सुश्रुते—"स्नेहनस्यं न चोपगिलेत् कथञ्चिदपि" (चि० ४० अ०) इति॥ ९॥

इदानीं यस्मिन् दोषे यः स्नेहः प्रयोज्यस्तमाह, तैलमित्यादि।—चकारात् वातकफसंसर्गे च तैलं देयमित्यर्थः। केवले इति—निरावरणे वाते। मज्जा तु समारुतपित्ते॥ १०॥

प्रधमनस्य स्वरूपं प्रयोगविधिश्च।—

ध्मापनं रेचनश्चूर्णो युञ्ज्यात्तं मुखवायुना।
षडङ्गुलद्विमुखया नाड्या भेषजगर्भया॥
स हि भूरितरं दोषं चूर्णत्वादपकर्षति॥ ११॥

शिरोविरेचनस्य स्वरूपं विषयश्च।—

शिरोविरेचनद्रव्यैः स्नेहैर्वा तैः प्रसाधितैः।
शिरोविरेचनं दद्यात् रोगेषु तेषु बुद्धिमान्॥ १२॥
गौरवे शिरसः शूले जाड्ये स्यन्दे गलामये।
शोथगण्डक्रिमिग्रन्थि-कुष्ठापस्मारपीनसे॥ १३॥

शिरोविरेचनस्य प्रयोगविधिः।—

स्निग्धस्विन्नोत्तमाङ्गस्य प्राक्कृतावश्यकस्य च।
निवातशयनस्थस्य जत्रूर्द्ध्वं स्वेदयेत् पुनः॥ १४॥
अथोत्तानोर्द्ध्वदेहस्य पाणिपादे प्रसारिते।
किञ्चिदुन्नतपादस्य किञ्चिन्मूर्द्धनि नामिते॥ १५॥

---

प्रधमनमाह, ध्मापनमित्यादि वाग्भटस्य।—रेचन इति—शिरोविरेचनद्रव्यकृतः, किंवा देहस्रोतोविशोधन इत्यर्थः। स इति—चूर्णः। चूर्णत्वादिति सूक्ष्मस्रोतोऽनुसारित्वादित्यभिसन्धिः। एतच्च प्रधमनं चूर्णं प्रतनुवस्त्रे बद्ध्वा जिघ्रेदित्यपि वृद्धवैद्यव्यवहारसिद्धो विधिर्बोध्यः॥ ११॥

शिरोविरेचनमाह, शिरोविरेचनेत्यादि।—शिरोविरेचनद्रव्यैरिति—अपामार्गबीजादिभिः। तैः कल्कीकृतैः एतैः शिरोविरेचनद्रव्यैः सह प्रसाधितैः स्नेहैर्वा इत्यर्थः। अत्र च मात्रार्थे निश्चलो यथा—"चत्वारो बिन्दवः षड् वा तथाऽष्टौ वा यथाबलम्। शिरोविरेचने योज्या ऊर्द्ध्वजत्रुविकारिणाम्॥" इति। जाड्यं ग्रीवादिस्तम्भः। स्यन्दोऽभिष्यन्दरोगः। पीनसे इति—पुराणपीनसे॥ १२।१३॥

येन विधिना तच्छिरोविरेचनं कर्त्तव्यं तदाह, स्निग्धेत्यादि वाग्भटस्य।—प्राक्कृतावश्यकस्य चेति—प्राक् पूर्वं कृतमावश्यकम् अवश्यकरणीयं मलमूत्रविसर्गमुखधावनादिकं येन तस्य।—जत्रूर्द्ध्वमिति—ग्रीवामूलादिकम्। स्वेदयेत् पुनरित्यनेन उत्सर्गविहितपञ्चकर्माङ्गभूतस्वेदापेक्षया भिन्न एव नस्यान्यवहितपूर्वकाले पुनः स्वेदः

नासापुटं पिधायैकं पर्य्यायेण निषेचयेत् ।
उष्णाम्बुतप्तं भेषज्यं प्रणाड्या पिचुना तथा ॥ १६ ॥
दत्ते पादतलस्कन्ध-हस्तकर्णादि मर्दयेत् ।
शनैरुच्छिङ्घ्य निष्ठीवेत् पार्श्वयोरुभयोस्ततः ॥
आ-भेषजक्षयादेवं द्विस्त्रिर्वा नस्यमाचरेत् ॥ १७ ॥

शिरोविरेचनानन्तरं कर्त्तव्यनिर्देशः ।—

स्नेहं विरेचनस्यान्ते दद्याद्दोषाद्यपेक्षया ॥ १८ ॥

स्नेहनस्य-शिरोविरेचनयोः दिनावधिनिर्देशः ।—

त्र्यहात् त्र्यहाच्च सप्ताहं स्नेहकर्म समाचरेत् ।
एकाहान्तरितं कुर्य्यात् रेचनं शिरसस्तथा ॥ १९ ॥

---

कर्त्तव्य इति बोधयति । किञ्चिदुन्नतपादस्येति । चरकेऽपि "पादोन्नतस्य" ( सि० त्रिमर्मीया० ) इत्युक्तम् । पर्य्यायेणेति—क्रमेण, न त्वेकदा । उष्णाम्बुतप्तमिति—उष्णाम्बुयोगादुष्णाम्बुवाष्पेण वा तप्तम् । प्रणाड्येति—नस्यनलिकया । पिचुनेति—तूलकेन । आदिशब्दात् ग्रीवाललाटादीनां ग्रहणम् । पार्श्वयोरिति—वामदक्षिण-नासापुटयोः । आ-भेषजक्षयादिति छेदः, भेषजनिःसरणपर्य्यन्तं शनैरुच्छिङ्घ्य निष्ठीवेदित्यर्थः । एवमुक्तपरिपाट्या वारद्वयं त्रयं वा दोषापेक्षया अधिकमपि वा नस्यं कुर्य्यादित्यर्थः । नस्ये क्रियमाणे यदि नस्यस्य सम्यक्प्रयोगेण मूर्च्छा स्यात् तदा शिरः परित्यज्य शीततोयेन सेचनं कार्य्यम् ; अत एवैतदनन्तरं वाग्भटे यथा—"मूर्च्छायां शीततोयेन सिञ्चेत् परिहरन् शिरः" ( सू० २० अ० ) इति ॥ १४—१७ ॥

शिरोविरेचनस्यानन्तरीयं विधिमाह, स्नेहमित्यादि वाग्भटस्य ।—स्नेहमिति—स्नेहनस्यम् ॥ १८ ॥

स्नेहनस्यं विरेचननस्यञ्च कियन्तं कालं कया परिपाट्या कुर्य्यादित्याह, त्र्यहात् त्र्यहादित्यादि ।—एकैकदिनमन्तरीकृत्य सप्ताहमन्तरितदिनानि वर्जयित्वा स्नेहनस्यं, शिरसो विरेचनन्तु एकाहान्तरितं कुर्य्यात्, तेन यस्मिन् यस्मिन् दिने स्नेहनस्यं न दीयते तस्मिन् तस्मिन्नेव दिने विरेचनं नस्यं देयमित्यर्थः ; एतेनैकस्मिन् दिने स्नेहनम्, अपरस्मिन् दिने शिरोविरेचनमेव । सपरतापरत्वेति (?) शिरोविरेचनान्तरितं भवति । एकाहान्तरितः शिरोविरेकः कार्य्य इत्युत्सर्गस्तेन द्व्यन्तरमपि ज्ञेयं, तथा सप्ताहमित्युपलक्षणं, तेन त्र्यहादिकमपि दोषाद्यपेक्षया ज्ञेयम् ; उक्तं हि—

स्नेहनस्यस्य सम्यक्लक्षणम्।—

सम्यक्स्निग्धे सुखोच्छ्वास-स्वप्नबोधाक्षिपाटवम्॥ २०॥

स्नेहनस्यस्य अयोगातियोगलक्षणम्।—

रूक्षेऽक्षिस्तब्धता शोषो नासास्ये मूर्द्धशून्यता।
स्निग्धेऽति कण्डूगुरुता प्रसेकारुचिपीनसाः॥ २१॥

शिरोविरेचनस्य सम्यग्योगायोगातियोगलक्षणानि।—

सुविरिक्तेऽक्षिलघुता वक्त्रस्वरविशुद्धयः।
दुर्विरिक्ते गदोद्रेकः क्षामताऽतिविरेचिते॥ २२॥

नस्यानर्हाः।—

तोयमद्यगरस्नेह-पीतानां पातुमिच्छताम्।
भुक्तभक्तशिरःस्नात-स्नातुकामस्रुतासृजाम्॥ २३॥
नवपीनसरोगार्त्त-सूतिकाश्वासकासिनाम्।
शुद्धानां दत्तवस्तीनां तथाऽनार्त्तवदुर्दिने॥
अन्यत्रात्ययिके व्याधौ नैषां नस्यं प्रयोजयेत्॥ २४॥

"एकान्तरं द्व्यन्तरं वा नस्यं दद्याद्विचक्षणः। सप्ताहन्तु परं ज्ञेयं विश्रान्तस्य पुनःपुनः॥ त्र्यहं पञ्चाहमथवा सप्ताहं वा सुयन्त्रितम्। परं नवाहमूर्द्धन्तु नवाहात् सात्म्यतां व्रजेत्॥" इति॥ १९॥

सम्यक्स्निग्धलक्षणमाह, सम्यगित्यादि वाग्भटस्य।—सुखशब्दः उच्छ्वासादिना बोधान्तेन सम्बध्यते। अक्षीतीन्द्रियोपलक्षणम्। "अक्षपाटवम्" इति वा पाठः; तन्त्रान्तरे "प्रसादश्चेन्द्रियाणाम्" इत्युक्तत्वात्॥ २०॥

असम्यक्स्निग्धलक्षणमाह, रूक्षे इत्यादि वाग्भटस्य।—रूक्षे इति—असम्यक्स्निग्धे। अतिस्निग्धलक्षणमाह, स्निग्धे इत्यादि वाग्भटस्य। अतिस्निग्धे इत्यन्वयः। प्रसेक इति—कफप्रसेकः॥ २१॥

स्नेहिकनस्यस्य सम्यग्योगादीनभिधाय रेचननस्यस्यापि तानाह, सुविरिक्ते इत्यादि वाग्भटस्य।—क्षामता शुष्कद्रवधातुता॥ २२॥

येषां नस्यं न विधेयं तानाह, तोयेत्यादि वाग्भटस्य।—तोयादिकं पीतं येस्ते तथोक्ताः आहिताग्न्यादित्वात् परनिपातः। अनार्त्तवदुर्दिने हेमन्तशिशिरयो-

नस्यधूमादिप्रयोगस्य वयोनिर्देशः।—

न नस्यमूनसप्ताब्दे नातीताशीतिवत्सरे।
न चोनद्वादशे धूमः कवलो नोनपञ्चमे ॥ २५ ॥
न शुद्धिरूनदशमे न चातिक्रान्तसप्ततौ।
आ-जन्ममरणं शस्तः प्रतिमर्शस्तु वस्तिवत् ॥ २६ ॥

इति नस्याधिकारः।

---

## अथ धूमपानाधिकारः।

पञ्चविधधूमनिर्देशः।—

प्रायोगिकः स्नैहिकश्च धूमो वैरेचनस्तथा।
कासहरो वामनश्च धूमः पञ्चविधो मतः ॥ १ ॥

---

मैंषव्यात्रेऽङ्गि। अन्यत्रात्ययिके व्याधाविति—आत्ययिके तु व्याधौ नस्येऽसाध्ये निषिद्धनस्यानामपि नस्यं विधेयमेवेत्यर्थः। नैषां नस्यं प्रयोजयेदिति श्लोकपाद-चक्रेण प्रतिसंस्कृत्य दत्तः ॥ २३।२४ ॥

इदानीं यस्मिन् वयसि नस्यं न विधेयं तदाह, न नस्यमित्यादि वाग्भटस्य।—ऊनसप्ताब्दे इति—एकवर्षमारभ्य षष्ठवर्षपर्य्यन्तं प्रतिमर्शव्यतिरिक्तं नस्यं न प्रयोज्यं, सप्तमवर्षात् प्रभृति तु विधेयमेवेत्यर्थः; उक्तं हि कृष्णात्रेयेण—"सप्तवर्षमुपादाय नस्तःकर्म चतुर्विधम्" इति। अतीताशीतिवत्सरे इति—एकाशीतीत्यादौ। निषेध्य-प्रस्तावात् निषेध्यधूमकवलादीनप्याह, न चोनद्वादशे इत्यादि। ऊनद्वादशे इति—एकवर्षमारभ्य एकादशवर्षपर्य्यन्ते। एवं वक्ष्यमाणेऽपि ज्ञेयम्। शुद्धि-रिति—वमनविरेचने। प्रतिमर्शस्तथा वस्तिरिति सर्वकालमेव विधेय इत्याह, आजन्मेत्यादि ॥ २५।२६ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां नस्याधिकार-विवृतिः।

---

नस्यवन्नासाप्रयोज्यत्वसाधर्म्यात् पञ्चकर्मसामान्याच्च नस्यानन्तरविधेयत्वाच्च नस्या-नन्तरं धूमविधिमाह, प्रायोगिक इत्यादि।—प्रायोगिक इति नित्यपेयधूमस्य संज्ञा। प्रयोगः सततात्यासः, तद्विषयको धूमः प्रायोगिकः। स्नेहाय प्रभवतीति स्नैहिकः। दोषविरेचनात् वैरेचनिकः। कासं हरतीति कासहरः। वामयतीति वामनः। यद्यपि

धूमनेत्रस्य स्वरूपम् ।—

ऋजु त्रिकोषाफलितं कोलास्थ्यग्रप्रमाणितम् ।
वस्तिनेत्रसमद्रव्यं धूमनेत्रं प्रशस्यते ॥ २ ॥

धूमविशेषे नेत्रप्रमाणनिर्देशः ।—

सार्द्धस्त्र्यंशयुतः पूर्णो हस्तः प्रायोगिकादिषु ।
नेत्रे कासहरे त्र्यंश-हीनः शेषे दशाङ्गुलः ॥ ३ ॥

धूमवर्त्तिप्रकृतविधिः धूमपानस्य सामान्यविधिश्च ।—

औषधैर्वर्त्तिकां कृत्वा शरीगर्भां विशोषिताम् ।

---

चरके प्रायोगिकस्नैहिकवैरेचनिकभेदात् त्रिविध एव धूम उक्तस्तथाऽपि प्रायोगिके कासहरं, वैरेचनिके च वामनीयमन्तर्भाव्य चरकसुश्रुतयोर्विरोधः परिहरणीयः ॥१॥

धूमपानार्थं नलिकाविधानमाह, ऋज्वित्यादि चरकस्य ।—त्रिकोषाफलित-मिति—त्रिभिः पर्वभिर्भिन्नैः समन्वितं किंवा त्रिकोषस्त्रिभङ्गः, तेन तस्मिन् नेत्रे स्थानत्रये भङ्गः कार्य्यः, स च नलिकात्रयेण घटनीय इत्याहुः। कोलास्थ्यग्रप्रमाणित-मिति—अस्य नेत्रस्याग्रं कोलास्थिप्रवेशयोग्यं कार्य्यमित्यर्थः। मूलस्याङ्गुष्ठप्रवेश-योग्यम्; यदाह वाग्भटः,—"मूलाग्रेऽङ्गुष्ठकोलास्थि प्रवेशं धूमनेत्रकम्" ( सू० २१ अ० ) इति। वस्तिनेत्रसमद्रव्यमिति—वस्तिनेत्रेण समं तुल्यं द्रव्यं सुवर्णरूप्यताम्रादिकं यस्य तादृशम्। यथोक्तनलिकादिकृतधूमपानगुणश्चरकेणैवोक्तः; यथा—"दूराद्विनिर्गतः पर्व-च्छिन्नो नाडीतनूकृतः। नेन्द्रियं बाधते धूमो मात्राकालनिषेवितः॥" ( सू० मात्राशितीय० ) इति ॥ २ ॥

धूमभेदेन नेत्रमानभेदमाह, सार्द्ध इत्यादि।—हस्तोऽत्र चतुर्विंशत्यङ्गुलपरिमितः, तेन प्रायोगिके धूमे सार्द्धो हस्तः षट्त्रिंशदङ्गुलं नेत्रमित्यर्थः। त्र्यंशयुत इति—चतुर्विंशत्यङ्गुलस्य तृतीयोऽंशोऽष्टाङ्गुलं, तेन संयुतो हस्त इत्यर्थः, एतेन स्नैहिके द्वात्रिंशदङ्गुलं नेत्रमित्यर्थः। वैरेचने तु पूर्णो हस्तश्चतुर्विंशत्यङ्गुलमित्यर्थः। कासहरे धूमे त्र्यंशहीनो हस्तः षोडशाङ्गुलमित्यर्थः। शेषे इति—वामने ॥ ३ ॥

इदानीं धूमपानार्थं नलिकामभिधाय धूमपानं यथा विधेयं तदाह, औषधै-रित्यादि।—औषधैरिति—गन्धैरकुष्ठतगरैरित्यादिना वक्ष्यमाणैरौषधैर्वर्त्तिकां कृत्वा धूमं पिबेत्। वर्त्तिकाकरणप्रकारमाह, शरीगर्भामित्यादि। शरी शरपुष्पस्य शलाका, सा गर्भे अभ्यन्तरे यस्याः ताम्, एतेन पिष्टैर्भेषजैः शरीं प्रलिप्य वर्त्तिः

विगर्भामग्निसंप्लुष्टां कृत्वा धूमं पिबेन्नरः॥
वक्त्रेणैव वमेद्धूमं नस्तो वक्त्रेण वा पिबन्॥ ४॥

दोषस्य अवस्थानविशेषे धूमपानद्वारनिर्देशः।—

उरःकण्ठगते दोषे वक्त्रेण धूममापिबेत्।
नासया तु पिबेद्दोषे शिरोघ्राणाक्षिसंश्रये॥ ५॥

पञ्चविधधूमवर्त्तीनां द्रव्यनिर्देशः।—

गन्धैरकुष्ठतगरैर्वर्त्तिः प्रायोगिकी मता।
स्नैहिकी तु मधूच्छिष्ट-स्नेहगुग्गुलुसर्जकैः॥ ६॥
शिरोविरेचनद्रव्यैर्वर्त्तिर्वैरेचनी मता।
कासघ्नैरेव कासघ्नी वामनैर्वामनी मता॥ ७॥

---

कार्य्येत्यर्थः। विगर्भामिति—तां वर्त्तिं विशोष्य ततः शरीकाकृष्य विगर्भां कुर्य्यादित्यर्थः। अग्निसंप्लुष्टामिति—तां विगर्भां वर्त्तिं नेत्राग्रे समारोप्य अग्निसंप्लुष्टां कृत्वा धूमं पिबेदित्यर्थः। एषा वर्त्तिरष्टाङ्गुला यववन्मध्यस्थूला परिणाहेनाङ्गुष्ठसम्मिता कर्त्तव्या; यदाह चरकः,—"पिष्टा लिम्पेच्छरैषीकां तां वर्त्तिं यवसन्निभाम्। अङ्गुष्ठसम्मितां कुर्य्यादष्टाङ्गुलसमां भिषक्॥" (सू० मात्राशितीय०) इति। धूमं पीत्वा धूमं कथं वमेदित्याह, वक्त्रेणेत्यादि। एवकारेण नासिका निषिध्यते, वक्त्रेणैव धूमं वमेत्, न तु नासयेत्यर्थः; अत्र हेतुश्चरकेणोक्तो यथा—"प्रतिलोमं गतो ह्याशु धूमो हिंस्याद्धि चक्षुषी" (सू० मात्राशितीय०) इति। नस्त इति—नासिकया, सार्वविभक्तिकस्तसिः॥ ४॥

वक्त्रधूमपान-नासाधूमपानयोर्विषयमाह—उर इत्यादि॥ ५॥

औषधैर्वार्त्तिकां कृत्वेत्युक्तम्, अतो वर्त्त्यर्थमौषधान्याह, गन्धैरित्यादि।—गन्धैरिति—अगुर्वादिसुगन्धिद्रव्यैः। अकुष्ठतगरैरिति—कुष्ठतगरवर्जितैः, कुष्ठतगरयोरतितीक्ष्णत्वेन मस्तुलुङ्गस्रावकत्वात्; उक्तञ्च शालाक्ये—"नतकुष्ठे स्रावयतो धूमवर्त्तिप्रयोजिते। मस्तुलुङ्गं विशेषेण तस्मात् ते नैव योजयेत्॥" इति। मधूच्छिष्टं सिक्थकम्। स्नेहोऽत्र घृतं वसा च; "वसाघृतमधूच्छिष्टैः" (च० सू० मात्राशितीय०) इति वचनात्। शिरोविरेचनद्रव्यैरिति—श्वेताज्योतिष्मत्यादिभिश्चरकोक्तैः। कासघ्नैरिति—बृहतीकण्टकारीत्रिकटुकासमर्दादिभिः सुश्रुतोक्तैः। वामनैरिति—स्नायुचर्मखुरशृङ्गादिभिः सुश्रुतोक्तैः॥ ६।७॥

धूमानर्हाः ।—

योज्या न पित्तरक्तार्त्ति-विरिक्तोदरमेहिषु ।
तिमिरोर्द्ध्वानिलाध्मान-रोहिणीदत्तबस्तिषु ॥ ८ ॥
मत्स्यमद्यदधिक्षीर-क्षौद्रस्नेहविषाशिषु ।
शिरस्यभिहते पाण्डु-रोगे जागरिते निशि ॥ ९ ॥

अकालपीतातिपीतयोर्दोषनिर्देशः चिकित्सा च ।—

रक्तपित्तान्ध्यबाधिर्य्य-तृण्मूर्च्छामदमोहकृत् ।
धूमोऽकालेऽतिपीतो वा तत्र शीतो विधिर्हितः ॥ १० ॥

उपसंहारः ।—

एतद्धूमविधानन्तु लेशतः सम्प्रकाशितम् ॥ ११ ॥

इति धूमपानाधिकारः ।

---

# अथ कवलगण्डूषाधिकारः ।

चतुर्विधकवलानां द्रव्यं विषयश्च ।—

स्निग्धोष्णैः स्नैहिको वाते स्वादुशीतैः प्रसादनः ।
पित्ते कट्वम्ललवणै रूक्षैः संशोधनः कफे ॥
कषायस्वादुतिक्तैश्च कवलो रोपणो व्रणे ॥ १ ॥

---

येषु धूमो न विधेयस्तानाह, योज्या इत्यादि वाग्भटस्य ।—दत्तबस्तिष्विति—कृतनिरूहेषु ; "विरिक्तास्थापितजागरित" (चि० ४० अ०) इत्यादि सुश्रुतदर्शनात् ॥ ८।९ ॥

अकालातिपीतधूमयोर्दोषमाह, रक्तपित्तेत्यादि ।—अत्र पीतो वेति छेदः ॥ १० ॥

धूमपानविधिश्चरकसुश्रुतादावतिप्रपञ्चितः, इह तु ग्रन्थविस्तारभयात् सङ्क्षेपेणैवोक्त इत्याह—एतदित्यादि ॥ ११ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां धूमपानाधिकार-विवृतिः ।

---

ऊर्द्ध्वगतदोषहरत्वसामान्यात् धूमाधिकारानन्तरं कवलगण्डूषाधिकारः प्रारभ्यते । तत्र कवलश्चतुर्विधो भवति ; यदाह सुश्रुतः,—"चतुर्द्धा कवलः स्नेही प्रसादी शोधि-

कवलगण्डूषयोर्भेदलक्षणम्।—

सुखं सञ्चार्य्यते या तु सा मात्रा कवले हिता।
असञ्चार्य्या तु या मात्रा गण्डूषे सा प्रकीर्त्तिता॥ २॥

धारणस्य कालावधिनिर्देशः।—

तावच्च धारणीयोऽयं यावद्दोषप्रवर्त्तनम्।
पुनश्चान्योऽपि दातव्यस्तथा क्षौद्रघृतादिभिः॥ ३॥

सम्यक् लक्षणम्।—

व्याधेरपचयस्तुष्टिर्वैशद्यं वक्त्रलाघवम्।
इन्द्रियाणां प्रसादश्च कवले शुद्धिलक्षणम्॥ ४॥

मधुगण्डूषस्य गुणः।—

दाहतृष्णाव्रणान् हन्ति मधुगण्डूषधारणम्॥ ५॥

---

रोपणौ" (चि० ४० अ०) इति; अतस्तेषां चतुर्णां स्वरूपं विषयञ्चाह, स्निग्धोष्णे-त्यादि सुश्रुतस्य।—यद्यपि तन्त्रान्तरे वैरेचनस्तम्भनाभ्यां सह षड्‌विधत्वमेवोक्तं, तथाऽप्यत्र संशोधने वैरेचनस्य, प्रसादने च स्तम्भनस्यान्तर्भावान्न विरोधः। वाग्भटे तु कवलगण्डूषयोरभेदमवलम्ब्य चतुर्विधत्वमुक्तम्; यथा—"चतुःप्रकारो गण्डूषः स्निग्धः शमनशोधनौ। रोपणश्च त्रयस्तत्र त्रिषु योज्याश्चलादिषु॥ अन्त्यो व्रणघ्नः—" (सू० २२ अ०) इति॥ १॥

मात्राभेदेन कवलगण्डूषयोर्भेदमाह,—सुखमित्यादि सुश्रुतस्य॥ २॥

असौ कवलः कियन्तं कालं मुखे धारणीयः? इत्याह, तावदित्यादि।—अत्र क्षौद्रं कफे कफपित्ते च, घृतं वाते वातपित्ते च। आदिशब्देन दुग्धादिकम्; यदाह सुश्रुतः,—"एवं स्नेहपयःक्षौद्र-रसमूत्राम्लसंयुताः। कषायोष्णोदकाभ्याञ्च कवला दोषतो हिताः॥" (चि० ४० अ०) इति॥ ३॥

कवलस्य सम्यग्योगलक्षणमाह, व्याधेरित्यादि सुश्रुतस्य।—अयोगातियोग-लक्षणमितोऽनन्तरं यथा—"हीने जाड्यकफोत्क्लेशावरसज्ञानमेव च। अति-योगान्मुखे पाकः शोषतृष्णाऽरुचिक्लमाः॥" (सु० चि० ४० अ०) इति। एतच्च सम्यग्योगातियोगलक्षणं शोधनकवलस्येति भानुमतीप्रभृतयः। चक्रेण तु सम्यग्योग-लक्षणविपर्य्ययेणैव असम्यग्योगलक्षणं सुधीभिरूहनीयमित्यभिप्रायेण अयोगातियोग-लक्षणं नोक्तमिति॥ ४॥

काञ्जिकगण्डूषस्य गुणः ।—

धान्याम्लमास्यवैरस्य-मलदौर्गन्ध्यनाशनम् ।
तदेवालवणं पीतं मुखशोषहरं परम् ॥ ६ ॥

क्षारोदक-तैलगण्डूषयोर्गुणः ।—

आशु क्षाराम्बुगण्डूषो भिनत्ति श्लेष्मणश्चयम् ।
सुखे हितं वातहरं तैलगण्डूषधारणम् ॥ ७ ॥

इति कवलगण्डूषाधिकारः ।

---

## अथाश्च्योतनाञ्जन-तर्पण-पुटपाकाधिकारः ।

आश्च्योतनस्य गुणाः ।—

सर्वेषामक्षिरोगाणामादावाश्च्योतनं हितम् ।
रुक्तोदकण्डूघर्षाश्रु-दाहरागनिवर्हणम् ॥ १ ॥

दोषभेदेन शीतोष्णप्रयोगविधिः ।—

उष्णं वाते कफे चोष्णं तच्छीतं रक्तपित्तयोः ॥ २ ॥

कफवातकाक्षिरोगे प्रयोगविधिः ।—

निवातस्थस्य वामेन पाणिनोन्मील्य लोचनम् ।
शुक्तौ प्रलम्बयाऽन्येन पिचुवर्त्या कनीनिके ॥ ३ ॥

---

दाहेत्यादि ख्यातं—वाग्भटस्य ॥ ५।६ ॥

आश्वित्यादि ।—आशु शीघ्रम् । क्षाराम्बु यवक्षारजलम् । तैलमिति—तिल-तैलम ॥ ७ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां कवलगण्डूषाधिकार-विवृतिः ।

---

पूर्वोक्तसङ्गत्यैवाश्च्योतनाधिकारमाह, सर्वेषामित्यादि ।—घर्षः करकरिका ॥ १ ॥

दोषभेदेन तदाह, उष्णमित्यादि वाग्भटस्य ।—उष्णमिति—ईषदुष्णम ॥ २ ॥

निवातस्थस्येत्यादि ।—अत्र शुक्ताविति निर्मलपात्रोपलक्षणम् । अन्येनेति—

दश द्वादश वा बिन्दून् द्व्यङ्गुलादवसेचयेत्।
ततः प्रमृज्य मृदुना चेलेन कफवातयोः॥
अन्येन कोष्णपानीय-प्लुतेन स्वेदयेन्मृदु॥ ४॥

अत्युष्णाद्याश्च्योतनस्य दोषः।—

अत्युष्णतीक्ष्णं रुग्राग-दृङ्नाशायाक्षिसेचनम्।
अतिशीतन्तु कुरुते निस्तोदस्तम्भवेदनाः॥ ५॥

अधिकाल्पादिमात्राश्च्योतनस्य दोषः।—

कषायवर्त्मतां घर्षं कृच्छ्रादुन्मेषणं बहु।
विकारवृद्धिमत्यल्पं संरम्भमपरिस्रुतम्॥ ६॥

---

दक्षिणपाणिना। प्रलम्बयेति—लम्बमानयेत्यर्थः। पिचुवर्त्त्येति—तूलकवर्त्त्या। कनीनिके नासिकादेशसन्निहितचक्षुःकोणे। द्व्यङ्गुलादिति नेत्रकनीनिकस्योपरि। पिचुवर्त्तिं द्व्यङ्गुलमुत्तोल्य निवातप्रदेशस्थातुरस्य वैद्यो वामेन पाणिना लोचनमुन्मील्य प्रकाश्य दक्षिणेन पाणिना शुक्तिं धृत्वा तस्यां शुक्तौ प्रलम्बमानया औषधद्रव्यसहितपिचुवर्त्त्या कनीनिकस्योपरि द्व्यङ्गुलमुत्तोलितया दश द्वादश वा बिन्दून् अवसेचयेदित्यर्थः। सेचनानन्तरञ्च यत् कार्य्यं तदाह, तत इत्यादि वाग्भटस्य। ततः सेचनानन्तरं मृदुना मृदुस्पर्शेन चेलेन वस्त्रेण लोचनं प्रमृज्य अन्येन चेलेन पिचुना ईषदुष्णजलसिक्तेन मृदु यथा भवति तथा लोचनं स्वेदयेत्। कफवातयोरिति न तु रक्तपित्तयोरित्यर्थः॥ ३।४॥

अत्युष्णतीक्ष्णाश्च्योतनस्य तथा अतिशीतस्य च दोषमाह—अत्युष्णतीक्ष्णमित्यादि॥ ५॥

इदानीं बहुमात्रस्य तथाऽल्पमात्रस्य तथा वस्त्रापूतस्याश्च्योतनस्य दोषमाह, कषायेत्यादि वाग्भटस्य।—कषायवर्त्मतामिति—रक्तवर्त्मतां रूक्षवर्त्मतां वा। घर्षमिति—करकरिकाम्। बहु इति—बहुपरिमाणाश्च्योतनं कषायवर्त्मतादिकं, कुरुते इति शेषः। अत्यल्पमाश्च्योतनं विकारवृद्धिं कुरुते; तथा अपरिस्रुतमिति—अपूतमाश्च्योतनं संरम्भं शोथं कुरुते। यद्यपि सुश्रुते आश्च्योतनवत् सेकोऽप्युक्तः; यथा—"तर्पणं पुटपाकश्च सेकश्चाश्च्योतनाञ्जनम्" (उ० १८ अ०) इति, तथाऽपि वाग्भटमते आश्च्योतने एव सेकस्यान्तर्भावादविरोधो ज्ञेयः॥ ६॥

अञ्जनस्य विषयः पक्वाक्षिरोगलक्षणञ्च।—

अथाञ्जनं शुद्धतनोर्नेत्रमात्राश्रिते मले।
पक्वलिङ्गेऽल्पशोथार्त्ति-कण्डूपैच्छिल्यलक्षिते॥
मन्दवर्षाश्रुरागेऽक्ष्णि प्रयोज्यं घनदूषिके॥ ७॥

त्रिविधाञ्जनम्।—

लेखनं रोपणं दृष्टि-प्रसादनमिति त्रिधा।
अञ्जनं—" ॥ ८॥

अञ्जनत्रयाणां द्रव्यम्।—

"—लेखनं तत्र कषायाम्लपटूषणैः।
रोपणं तिक्तकैर्द्रव्यैः स्वादुशीतैः प्रसादनम्॥ ९॥

अञ्जनशलाकायाः स्वरूपम्।—

दशाङ्गुला तनुर्मध्ये शलाका मुकुलानना॥ १०॥

अञ्जनभेदेन शलाकाभेदः।—

प्रशस्ता लेखने ताम्री रोपणे काललोहजा।
अङ्गुली च सुवर्णोत्था रूप्यजा च प्रसादने॥ ११॥

---

आश्चोतनानन्तरमञ्जनमाह, अथेत्यादि।—अथेति—आनन्तर्ये। शुद्धतनोरिति कायशिरोविरेकाभ्याम्। नेत्रमात्राश्रिते मले इति—नेत्रे एव स्थिते दोषे इत्यर्थः; एतेन प्रदेशान्तरस्थदोषाद्यनुबन्धकमञ्जनस्योक्तम्; सुश्रुतेऽप्युक्तं—"नेत्रे एव स्थिते दोषे प्राप्तमञ्जनमाचरेत्" (उ० १८ अ०) इति। तथा पक्वलिङ्गे पक्वाक्षिरोगलक्षणे सत्येवाञ्जनं प्रयोज्यम्। तदेव पक्वलक्षणं कथं ज्ञातव्यम्? इत्यत आह, अल्पशोथेत्यादि। अल्पशब्दस्य शोथादिभिः प्रत्येकमन्वयः; एवं मन्दशब्दस्यापि वर्षादिभिरिति। लक्षिते इति—ज्ञाते। दूषिका नेत्रपिच्चोड़िका॥ ७॥

अञ्जनस्य वैविध्यमाह, लेखनमित्यादि वाग्भटस्य।—अञ्जनमिति छेदः॥ ८॥

एषां स्वरूपमाह, लेखनं तत्रेत्यादि।—तत्रेति—त्रिषु लेखनादिषु मध्ये। पटु लवणम्। ऊषणं कटु। पिप्पल्यादिकषायादिभिर्द्रव्यैर्यदञ्जनं तल्लेखनमित्यर्थः॥ ९॥

अञ्जनदानार्थं शलाकामाह, दशाङ्गुलेत्यादि वाग्भटस्य।—मुकुलानना कुन्दजातीमल्लिकामुकुलमुखी॥ १०॥

अञ्जनभेदेन शलाकाभेदमाह, प्रशस्तेत्यादि तस्यैव।—काललोहः पाण्ड्वादिः।

दोषाणां गुरुत्वादिभेदेन कल्पनात्रैविध्यम्।—

पिण्डो रसक्रिया चूर्णं त्रिधैवाञ्जनकल्पना।
गुरौ मध्ये लघौ दोषे तां क्रमेण प्रयोजयेत्॥ १२॥

अञ्जनानन्तरं कर्त्तव्यनिर्देशः।—

अथानुन्मीलयन् दृष्टिमन्तः सञ्चारयेच्छनैः।
अञ्जिते वर्त्मनी किञ्चिच्चालयेच्चैवमञ्जनम्॥ १३॥
अपेतौषधसंरम्भं निर्वृतं नयनं यदा।
व्याधिदोषर्त्तुयोग्याभिरद्भिः प्रक्षालयेत् तदा॥ १४॥
दक्षिणाङ्गुष्ठकेनाक्षि ततो वामं सवाससा।
ऊर्द्ध्ववर्त्मनि सङ्गृह्य शोध्यं वामेन चेतरत्॥ १५॥

---

प्रसादनाञ्जने तु अङ्गुल्येव शारीरी शलाका, तथा सुवर्णजा रूप्यजा च शलाका प्रशस्तेत्यर्थः॥ ११॥

त्रिविधस्यैवाञ्जनस्य प्रत्येककल्पनात्रैविध्यमाह, पिण्ड इत्यादि।—पिण्डः गुडिकाञ्जनं, तदेव वर्त्तिका अप्युच्यते भवति। घर्षणादिना घनीभूतखरसचौद्रघृतादिरेव रसक्रियेत्युच्यते। पिण्डादीनां विषयमाह, गुरावित्यादि तस्यैव। सुश्रुतेऽप्युक्तं— "गुडिकारसचूर्णानि त्रिविधान्यञ्जनानि तु। यथापूर्वं बलं तेषां श्रेष्ठमाहु-र्मनीषिणः॥" (उ० १८ अ०) इति॥ १२॥

अञ्जितनयनेन यत् कर्त्तव्यं तदाह, अथेत्यादि तस्यैव।—दृष्टिमनुन्मीलयन्-प्रकाशयन्, अन्तरिति—चक्षुर्मध्ये शनैः शनैः सञ्चारयेत्, तथा अञ्जिते वर्त्मनी च किञ्चिच्चालयेत्। अनन्तरमञ्जनद्रव्यवीर्य्ये प्रशान्ते सति यत् कार्य्यं तदाह, अपेतेत्यादि। अपेतोऽपगत औषधसंरम्भो भेषजक्षोभो यस्मात्तदेवमपेतौषधसंरम्भम्, अतो निर्वृतं स्वस्थम्। व्याधिदोषर्त्तुयोग्याभिरिति—व्याध्यादिविपरीताभिः। कथमञ्जनमप-सार्य्यमित्याह, दक्षिणेत्यादि तस्यैव। सवाससा वस्त्रवेष्टितेन दक्षिणहस्ताङ्गुष्ठकेन वाममक्षि ऊर्द्ध्ववर्त्मनि सङ्गृह्य शोध्यम् अञ्जनक्लेदरहितं कार्य्यम्। एवमितरदिति— दक्षिणनयनं ऊर्द्ध्ववर्त्मनि सङ्गृह्य सवाससा वस्त्रवेष्टितेन वामहस्ताङ्गुष्ठकेन शोध्यमित्यर्थः॥ १३—१५॥

अञ्जनप्रयोगस्य सयुक्तिसमयनिर्देशः ।—

निशि स्वप्नेन मध्याह्ने पानान्नोष्णगभस्तिभिः ।
अक्षिरोगाय दोषाः स्युर्वर्द्धितोत्पीड़ितद्रुताः ॥
प्रातः सायञ्च तच्छान्त्यै व्यभ्रेऽर्केऽतोऽञ्जयेत् सदा ॥ १६ ॥

समयविशेषे सोपपत्तिकमञ्जनविधानमाह, निशीत्यादि ।—वर्द्धितोत्पीड़ितद्रुता इति—सञ्चितप्रकुपितप्रसृता दोषा इत्यर्थः । यस्मान्निशि रात्रौ दोषकालस्वभावेन स्वप्नेन निद्रया वर्द्धितोत्पीड़ितद्रुताः सन्तः अक्षिरोगाय अभिष्यन्दादिनेत्ररोगाय स्युः, अतो हेतोस्तच्छान्त्यै रात्रिनिद्रोद्भूतदोषप्रशमनाय प्रातःकाले अञ्जयेत् ; सदेति—सर्वस्मिन्नेव ऋतौ । तथा मध्याह्ने च दोषाः पानान्नोष्णगभस्तिभिर्वर्द्धितोत्पीड़ितद्रुताः सन्तः चक्षूरोगाय स्युः, अतो हेतोः तच्छान्त्यै मध्याह्नकालीनपानान्नादिसमुद्भूतदोषशान्त्यै सायमञ्जयेत् । सुश्रुतस्तु रात्रावप्यञ्जनं कार्य्यमित्याह ; यथा—"यथादोषं प्रयोज्यानि तानि दोषविशारदैः । अञ्जनानि यथोक्तानि प्राह्णसायाह्नरात्रिषु ॥" ( उ० १८ अ० ) इति । यथादोषमित्यनेन प्रातर्लेखनमञ्जनं कफप्रत्यनीकतया देयम् ; यदाह विदेहः,—"विलीनो हि दिवा दोषः स्राव्यते लेखनाञ्जनैः" इति । सायाह्ने तु वातप्रत्यनीकतया सस्नेहनं रोपणाञ्जनं देयम् । रात्रौ तु प्रसादनं, चक्षुष्यत्वाद्रोपणत्वाच्चेति चन्द्रिका । रात्रावप्यतिशीते तीक्ष्णाञ्जनं न कार्य्यम् ; यदाह वाग्भटः,—"न रात्रावपि शीतेऽपि नेत्रे तीक्ष्णाञ्जनं हितम् । दोषमस्रावयत् स्तम्भ-कण्डू-जाड्यादिकारि तत् ॥" ( सू० २३ अ० ) इति । ननु दिवा कथमञ्जनम् ? यतः,—"दिवा तु न प्रयोक्तव्यं नेत्रयोस्तीक्ष्णमञ्जनम् । विरेकदुर्बलं चक्षुरादित्यं प्राप्य सीदति ॥" ( वा० सू० २३ अ० ) इति ? उच्यते ; स्वस्थाभिप्रायादिदं वाक्यं, किंवा अत्युद्रिक्तकफापेक्षया दिवाऽञ्जनविधानं बोध्यम् ; यदाह वाग्भटः,—"अत्युद्रिक्ते बलासे तु लेखनीयेऽथवा गदे । काममह्न्यपि नात्युष्णे तीक्ष्णमक्ष्णि प्रयोजयेत् ॥" ( सू० २३ अ० ) इति । लेखनीये गदे इति—लेखनीयशुक्लार्मादौ । ननु विरेकदुर्बलं चक्षुरादित्यं प्राप्य सीदतीति वचनमनुपपन्नं, यतो नेत्रस्य तैजसत्वादादित्यं प्राप्य तेजोवृद्धिरेव युक्ता "सामान्यं वृद्धिकारणम्" ( च० सू० दीर्घञ्जीवितीय० ) इति सिद्धान्तः ? नैवम् ; कालस्यौष्ण्यादञ्जनस्य च तीक्ष्णत्वादतियोगेन ह्युपघातः स्यादिति ; अत एवाह वाग्भटः,—"अश्मनो जन्म लोहस्य तत एव च तीक्ष्णता । उपघातोऽपि तेनैव तथा नेत्रस्य तेजसः ॥" ( सू० २३ अ० ) इति । अस्यार्थः,—यथा लोहस्य जन्म अश्मनस्तथा तीक्ष्णताऽपि अश्मनः शाणप्रस्तरात्, तथा

अवस्थाविशेषे तीक्ष्णाञ्जनादिविधिः।—

**कण्डूजाड्येऽञ्जनं तीक्ष्णं धूमं वा योजयेत् पुनः।**
**तीक्ष्णाञ्जनाभितप्ते तु चूर्णं प्रत्यञ्जनं हितम्॥ १७॥**

अञ्जनानर्हाः।—

**नाञ्जयेद्भीतवमित-विरिक्ताशितवेगिते।**
**क्रुद्धज्वरिततान्ताक्ष-शिरोरुक्शोषजागरे॥ १८॥**
**अदृष्टेऽर्के शिरःस्नाते पीतयोर्धूममद्ययोः।**
**अजीर्णेऽग्न्यर्कसन्तप्ते दिवास्वप्ने पिपासिते॥ १९॥**

तर्पणप्रयोगे स्थानकालादिनिर्देशः।—

**निवाते तर्पणं योज्यं शुद्धयोर्मूर्द्धकाययोः।**
**काले साधारणे प्रातः सायं वोत्तानशायिनः॥ २०॥**

---

उपघातः कुण्डलादिरपि अप्रसन्न एव; एवं नैवस्य जन्म तेजसस्तथा तीक्ष्णताऽपि अनुपहतात् पित्तरूपात् तेजसः, तथा उपघातोऽपि अतितीक्ष्ण-सौरादितेजस इति दृष्टत्वात् कल्प्यते॥ १६॥

अञ्जने दत्तेऽपि यदि कण्डूजाड्यादिकं तिष्ठति, तदा पुनरपि तीक्ष्णमञ्जनं धूमं वा योजयेदित्याह,—कण्डूजाड्ये इत्यादि वाग्भटस्य। यदि पुनस्तीक्ष्णाञ्जनविधानेन दाहः स्यात्, तदा दृष्टिप्रसादनमञ्जनं कार्य्यमित्याह, तीक्ष्णाञ्जनेत्यादि तस्यैव। अभितप्ते इति—सदाहे। प्रत्यञ्जनमिति—तीक्ष्णाञ्जनप्रत्यनीकमञ्जनं मृदुशीतस्निग्धमित्यर्थः॥ १७॥

अञ्जनं येषु न विधेयं तानाह, "नाञ्जयेत्" इत्यादि "पिपासिते" इत्यन्तं वाग्भटस्य।—अशिते सद्योभुक्तवति। वेगिते इति—दोषवेगोदये; सुश्रुतेऽप्युक्तं—"दोषवेगोदये दत्तं कुर्य्यात् तांस्तानुपद्रवान्" (उ० १८ अ०) इति। ज्वरित इति—नवज्वरितः। तान्ताक्षे इति—सूक्ष्मभास्वरादिरूपदर्शनात् तान्ते ग्लाने अक्षिणी यस्य तस्मिन्। अदृष्टेऽर्के इति—अनुदिते रवौ; अरुणस्तु अदृष्टेऽर्के इति—जलदादिच्छन्ने इत्याह। सुश्रुते तु—"शिरःस्नातेऽतिशीते च रवावनुदितेऽपि च" (उ० १८ अ०) इत्युक्तम्॥ १८।१९॥

एकाश्रयत्वादस्मिन्नधिकारे तर्पणमाह, निवाते इत्यादि वाग्भटस्य।—

तर्पणप्रयोगविधिः वसाप्रयोगविषयश्च।—

यवमाषमयीं पालीं नेत्रकोषाद्बहिः समाम्।
द्व्यङ्गुलोच्चां दृढां कृत्वा यथास्वं सिद्धमावपेत्॥ २१॥
सर्पिर्निमीलिते नेत्रे तप्ताम्बुप्रविलायितम्।
नक्तान्ध्य-वाततिमिर-कृच्छ्रबोधादिके वसाम्॥
आ पक्ष्माग्रात्—" ॥ २२॥

रोगाधिष्ठानविशेषे स्नेहस्य स्थितिकालः।—

"—अथोन्मेषं शनकैस्तस्य कुर्वतः।
मात्रां विगणयेत् तत्र वर्त्मसन्धिसितासिते॥ २३॥
दृष्टौ च क्रमशो व्याधौ शतं त्रीणि च पञ्च च।
शतानि सप्त चाष्टौ च दश मन्थेऽनिले दश॥
पित्ते षट् स्वस्थवृत्ते च बलासे पञ्च धारयेत्॥ २४॥

मूर्द्धकायविशुद्धिर्नस्यविरेकाभ्याम्। साधारणे काले इति—नात्युष्णवर्षशीते। तर्पणं स्नेहेन चक्षुःपूरणम्॥ २०॥

अतस्तदर्थं चक्षुषि पालिबन्धनं कर्त्तुं द्रव्यमाह, यवेत्यादि वाग्भटस्य।—पालीमिति—आलवालम्। द्व्यङ्गुलोच्चां दृढामिति—द्व्यङ्गुलोच्छ्रयां दृढां निविडां यथा स्नेहो न स्रवतीत्यर्थः। यथास्वं सिद्धं सर्पिरिति—तत्तद्दोषप्रत्यनीकद्रव्यपक्वमित्यर्थः। पात्रस्थं घृतं तप्तजलस्योपरि स्थापयित्वा प्रविलायितं द्रवीकृतमित्यर्थः। आवपेत् पूरयेत्। व्याधिविशेषे स्नेहविशेषमाह, नक्तान्ध्येत्यादि वाग्भटस्य। अत्रापि यथास्वं सिद्धमित्यादि योज्यमित्यस्यार्थः। पूरणविधिमाह, आ पक्ष्माग्रादिति—पक्ष्माग्रपर्य्यन्तं पूरयेदित्यर्थः॥ २१, २२॥

अथ स्नेहेन चक्षुः पूरयित्वा कियन्तं कालं व्याप्य सस्नेहं स्थातव्यम्? इति जिज्ञासायामाह, अथेत्यादि।—अथ घृताद्यावपनानन्तरं, शनकैरुन्मेषं कुर्वतस्तस्य आतुरस्य मात्रां विगणयेत्। मात्रा च लघ्वक्षरोच्चारणम्। तत्र वर्त्मस्थे व्याधौ शतमात्रां धारयेत् लघ्वक्षरशतोच्चारणकालसमकालं व्याप्य स्नेहं धारयेत्। सन्धिगते तु व्याधौ त्रीणि शतानि। शुक्लमण्डलगते तु पञ्च शतानि। कृष्णमण्डलगते तु सप्त शतानि। दृष्टिमण्डले चाष्टौ। मन्थे इति—अधिमन्थे दश, इत्यादिक्रमेण धारयेत्॥ २३।२४॥

स्नेहधारणानन्तरं कर्त्तव्यनिर्देशः।—

कृत्वाऽपाङ्गे ततो द्वारं स्नेहं पात्रे तु गालयेत्।
पिबेच्च धूमं नेचेत व्योम रूपञ्च भास्वरम्॥ २५॥

दोषभेदे तर्पणप्रयोगस्य दिनावधिनिर्देशः।—

इत्थं प्रतिदिनं वाते पित्ते त्वेकान्तरं कफे।
स्वस्थे च द्व्यन्तरं दद्यादा-तृप्तेरिति योजयेत्॥ २६॥

तर्पणस्य सम्यग्योगायोगातियोगलक्षणम्।—

प्रकाशक्षमता स्वास्थ्यं विशदं लघु लोचनम्।
तृप्ते विपर्य्ययोऽतृप्तेऽतितृप्ते श्लेष्मजा रुजः॥ २७॥

पुटपाकस्य विषयनिर्देशः।—

पुटपाकं प्रयुञ्जीत पूर्वोक्तेष्वेव लक्ष्मसु॥ २८॥

पुटपाकभेदानां विषयनिर्देशः।—

स वाते स्नेहनः श्लेष्म-सहिते लेखनो हितः।
दृग्दौर्बल्येऽनिले पित्ते रक्ते स्वस्थे प्रसादनः॥ २९॥

---

धारणानन्तरञ्च यत् कार्य्यं तदाह, कृत्वेत्यादि।—द्वारमिति—आलवादौ छिद्रं कृत्वा। व्योमेति—आकाशं नेचेत। भास्वरं रूपमग्न्यादि। अयञ्च कर्म्म यस्मिन् दोषे यावद्दिनं कार्य्यस्तदाह, इत्थमित्यादि। अयञ्च दिनक्रमः चक्षुस्तृप्ति-पर्य्यन्तं योज्य इत्याह, आ-तृप्तेरित्यादि। योजयेदिति—उक्तदिनक्रमं चक्षुस्तृप्ति-पर्य्यन्तं योजयेदित्यर्थः॥ २६॥

सम्यक्तृप्तस्य चक्षुषः किं लक्षणम्? इत्याह, प्रकाशेत्यादि।—प्रकाशक्षमता भास्वरादिप्रभादर्शनक्षमत्वम्। स्वास्थ्यमवेदनत्वम्। तर्पणायोगातियोगलक्षणमाह, विपर्य्यय इत्यादि। विपर्य्ययः प्रकाशक्षमतादिवैपरीत्यम्। अतितृप्ते तु श्लेष्मजा रुजः कण्डूपैच्छिल्यादयः॥ २७॥

पुटपाकमाह, पुटपाकमित्यादि भवेदित्यन्तं वाग्भटस्य।—पूर्वोक्तेष्विति—तर्पणोक्तेषु रोगेष्वित्यर्थः॥ २८॥

स्नेहनादिभेदेन त्रिविधस्य पुटपाकस्य पृथक् पृथक् विषयमाह, स वाते इत्यादि। —स इति—पुटपाकः स्नेहनः वाते हितः। श्लेष्मसहिते तु वाते लेखनः पुटपाको हित इति। दृग्दौर्बल्यादौ तु प्रसादनः पुटपाको हित इत्यर्थः। इदञ्च पुटपाकत्रयं

पुटपाकत्रयस्य औषधनिर्देशः।—

बिल्वमात्रं पृथक् पिण्डं मांसभेषजकल्कयोः।
उरुवूकवटाम्भोज-पत्रैः स्निग्धादिषु क्रमात्॥ ३०॥
वेष्टयित्वा मृदा लिप्तं धवधन्वनगोमयैः।
पचेत् प्रदीप्तैरग्न्याभं पक्वं निष्पीड्य तद्रसम्॥
नेत्रे तर्पणवत् युञ्ज्यात्—" ॥ ३१॥

लेखनादिभेदत्रयेषु धारणकालनिर्देशः।—

—"शतं द्वे त्रीणि धारयेत्।
लेखनस्नेहनान्त्येषु—" ॥ ३२॥

यैर्द्रव्यैर्विधेयं तत् वाग्भटेनोक्तम्, इह तु ग्रन्थविस्तारभयात्तन्नेह न लिखितं, किन्तूप-युक्तमिति कृत्वा मया लिख्यते; यथा—"मृगयपक्षिजानूप-मेदोमज्जवसामिषैः। स्नेहनं पयसा पिष्टैर्जीवनीयैश्च कल्पयेत्॥ मृगपक्षियकृन्मांस-मुक्तायस्तास्रसैन्धवैः। स्रोतोजशङ्खफेनालैर्लेखनं मस्तुकल्कितैः॥ मृगपक्षियकृन्मज्ज वसाऽन्त्रहृदयामिषैः। मधुरैः सघृतैः स्तन्य-क्षीरपिष्टैः प्रसादनः॥" ( सू० २४ अ० ) इति॥ २९॥

पुटपाकत्रयस्य कल्पनामाह, बिल्वेत्यादि।—मांसं मृगयादिमांसं, भेषज-श्चानन्तरोक्तजीवनीयादिकं, तयोः कल्करूपयोः पिण्डम्। पृथक् बिल्वमात्रमिति—पलमात्रम्। एरण्डादिपत्रैः क्रमेण स्निग्धादिषु स्नेहादिपुटपाकेषु वेष्टयित्वा अनन्तरं मृदा लिप्तं प्रदीप्तैर्धवधन्वनगोमयैः पचेत्। क्रमादिति धवधन्वनगोमयैरित्यत्रापि योजयन्ति केचित्, तेन स्नेहनपुटपाके एरण्डपत्रेण वेष्टनं, धवकाष्ठाङ्गारेण च पाकः। लेखने वटदलेन वेष्टनं, धन्वनकाष्ठाङ्गारेण च पाकः। प्रसादने तु अम्भोजपत्रैर्वेष्टनं, गोमयाग्निना च पाक इति। अग्न्याभमिति—अग्निवर्णम्, एतच्च सम्यक्पाकज्ञानार्थमुक्तम्। तर्पणवत् युञ्ज्यादित्यनेन निवाते तर्पणोक्त-विधिमत्राप्यतिदिशति॥ ३०।३१॥

एतद्रसञ्च कियन्तं कालं नेत्रे धारयेत्? इत्याह, शतं द्वे त्रीणि धारयेत् इति।—लेखनस्नेहनान्त्येष्विति। एतच्च यथाक्रमं योज्यं, तेन लेखनपुटपाके शतमिति—मात्राशतं धारयेत्। स्नेहने तु द्वे मात्राशते। अन्त्ये इति—प्रसादने त्रीणि मात्राशतानि धारयेदित्यर्थः॥ ३२॥

शेषद्वयेषु शीतोष्णप्रयोगनिर्देशः अनन्तरकृत्यं योगायोगादिलक्षणातिदेशश्च।—

"—कोष्णौ पूर्वौ हिमोऽपरः।

धूमपोऽन्ते तयोरेव योगास्तत्र च तृप्तिवत्॥ २३॥

तर्पणपुटपाकानर्हाः आचारपालनस्य अवधिनिर्देशश्च।—

तर्पणं पुटपाकञ्च नस्यानर्हे न योजयेत्।

यावन्त्यहानि युञ्जीत द्विगुणो हितभाग्भवेत्॥ २४॥

इत्याश्च्योतनाञ्जन-तर्पण-पुटपाकाधिकारः।

---

## अथ शिराव्यधाधिकारः।

शिरोगतशिरोत्थापनविधिः।—

अथ स्निग्धतनुः स्निग्ध-रसान्नप्रतिभोजितः।

प्रत्यादित्यमुखं स्विन्नो जान्वासनसंस्थितः॥ १॥

---

कोष्णावित्यादि।—पूर्वौ स्नेहनलेखनौ कोष्णौ योज्यौ। अपर इति—प्रसादनो हिमः शीतलो योज्यः। धूमपोऽन्ते तयोरेवेति। तयोरिति—पूर्वयोः स्नेहनलेखनयोरेव अन्ते धूमपः स्यात्, न तु प्रसादनान्ते इत्येवशब्दार्थः। योगा तत्र च तृप्तिवदिति—तत्र तेषु स्नेहनादिपुटपाकेषु, योगा इति—सम्यग्योगातियोगलक्षणानि, तृप्तिवदिति—तर्पणवदित्यर्थः॥ २३॥

तर्पणपुटपाकौ येषां न कार्य्यौ तानाह, तर्पणमित्यादि।—नस्यानर्हे इति—निषिद्धनस्यपुरुषे। इदानीं तर्पणपुटपाकविधानानन्तरं यावन्ति दिनानि हितसेवापरेण भूत्वा स्थातव्यं तदाह, यावन्तीत्यादि। यावन्ति दिनानि व्याप्य तर्पणपुटपाकविधिः कृतः, तद्द्विगुणानि दिनानि हितसेवी भूत्वा तिष्ठेदित्यर्थः॥ २४॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायाम् आश्च्योतनाञ्जनतर्पण-

पुटपाकाधिकार-विवृतिः।

---

पूर्वन्तु मेदरोगे "स्निग्धस्याज्येन कोष्णेन शिरावेधैः शमं नयेत्" इत्युक्तम्, अत

मृदुपट्टात्तकेशान्तो जानुस्थापितकूर्परः ।
अङ्गुष्ठगर्भमुष्टिभ्यां मन्ये गाढं निपीड़येत् ॥ २ ॥
दन्तप्रपीड़नोत्कास-गण्डाध्मानानि चाचरेत् ।
पृष्ठतो यन्त्रयेच्चैनं वस्त्रमावेष्टयेन्नरः ॥ ३ ॥
कन्धरायां परिक्षिप्य न्यस्यान्तर्वामतर्जनीम् ।
एवमुत्थाप्य विधिना शिरां विध्येच्छिरोगताम् ॥ ४ ॥

हस्तगतशिरोत्थापनविधिः ।—

विध्येद्धस्तशिरां बाहावनाकुञ्चितकूर्परे ।
बद्ध्वा सुखोपविष्टस्य मुष्टिमङ्गुष्ठगर्भिणीम् ॥
ऊर्द्ध्वं वेध्यप्रदेशाच्च पट्टिकां चतुरङ्गुले ॥ ५ ॥

---

आश्चोतनादिवत् शिराव्यधस्यापि नेत्ररोगहरत्वादनन्तरं शिराव्यधविधिर्वाच्यः। तत्र प्राधान्यात् प्रथमं शिरोगतशिराव्यधे कर्त्तव्ये शिरोत्थापनप्रकारमाह, अथेत्यादि वाग्भटस्य।—आदित्याभिमुखं सम्मुखीकृत्य, जान्वासनसंस्थित इति—उपविष्ट इत्यर्थः। मृदुना पट्टेनात्तौ गृहीतौ बद्ध इति यावत्, केशान्तौ यस्य स तथा। जानुनि स्थापितः कूर्परः कफोणिद्वयं येन स तथा। अङ्गुष्ठः वृद्धाङ्गुष्ठद्वयं गर्भे अभ्यन्तरे ययोः एतादृग्भ्यां मुष्टिभ्यां वामदक्षिणमुष्टिभ्यां, मन्ये ग्रीवाधमन्यौ प्रपीड़येत्, तथा दन्तप्रपीड़नादीनामन्यतममाचरेत्, आर्त्त इति शेषः। दन्तैर्दन्तानां प्रपीड़नं दन्तप्रपीड़नम्। उत्कासः कास एव। गण्डाध्मानं वायुना मुखपूरणम्; सुश्रुतेऽप्युक्तं—"अर्भपुरुषश्च वायुपूर्णमुखं स्थापयेत्" ( शा० ८ अ० ) इति। तथा नरः परिचारकजनः, पृष्ठत इति—पृष्ठदेशे स्थित्वा एनमातुरं यन्त्रयेत्; किं कुर्वन् यन्त्रयेत्? इत्याह, वस्त्र कन्धरायां ग्रीवायां परिक्षिप्य तस्य मध्ये स्वकीयवामतर्जनीं न्यस्य आरोप्य वस्त्रमावेष्टयन् मोटयन् पीड़येदित्यर्थः ॥ १—४ ॥

विध्येदित्यादि वाग्भटस्य।—अनाकुञ्चितः कूर्परः कफोणिर्यस्य। किं कृत्वा विध्येत्? इत्याह, सुखोपविष्टस्यातुरस्य अङ्गुष्ठगर्भिणीं मुष्टिं बद्ध्वा बन्धयित्वा। पुनः किं कृत्वा? वेध्यप्रदेशादुपरि चतुरङ्गुले यन्त्रपट्टिकां शिरायन्त्रणार्थं पट्टिकां क्षौमादिपट्टीं बद्ध्वा ॥ ५ ॥

पादगतशिरोत्थापनविधिः।—

पादे तु सुस्थितेऽधस्तात् जानुसन्धेर्निपीड़िते।
गाढं कराभ्यामा-गुल्फं चरणे तस्य चोपरि॥ ६॥
द्वितीये कुञ्चिते किञ्चिदारूढ़े हस्तवत् ततः।
बद्धा विध्येच्छिराम्—" ॥ ७॥

अनुक्तस्थानगतशिरोत्थापनातिदेशः।—

"—इत्यमनुक्तेष्वपि कल्पयेत्
तेषु तेषु प्रदेशेषु तत्तत् यन्त्रमुपायवित्॥ ८॥

व्रीहिमुखशस्त्रेण शिराविधविधिः।—

ततो व्रीहिमुखं वेध्य-प्रदेशे न्यस्य पीड़येत्।
अङ्गुष्ठतर्जनीभ्यान्तु तलप्रच्छादितं भिषक्॥ ९॥

कुठारिकाशस्त्रेण शिरावेधविधिः।—

वामहस्तेन विन्यस्य कुठारीमितरेण तु।
ताड़येन्मध्यमाङ्गुल्याऽङ्गुष्ठविष्टब्धमुक्तया॥ १०॥

---

पादगतशिराव्यधप्रकारमाह,पादे त्वित्यादि वाग्भटस्य।—सुस्थिते इत्यनेन विषमपादन्यासं निरस्यति। किंविशिष्टे पादे? जानुसन्धेरधस्तात् वेद्यस्य कराभ्यामा-गुल्फं गुल्फपर्य्यन्तं गाढ़ं निपीड़िते इत्यर्थः। द्वितीये तु चरणे तस्य सुस्थितपादस्योपरि आरूढ़े सति; किंविशिष्टे द्वितीये चरणे? किञ्चित् कुञ्चिते। हस्तवत् ततः बद्धेति—यथा हस्ते यन्त्रादिकं बद्धा शिरां विध्येत् तथा अत्रापि इत्यर्थः॥ ६।७॥

एवमुक्तरीत्या अनुक्तप्रदेशविषयमपि यन्त्रं स्वबुद्धा कल्पयेदित्याह—इत्थमित्यादि॥ ८॥

व्रीहिमुखादिशस्त्रेण यथा शिराव्यधो विधेयस्तदाह, तत इत्यादि।—न्यस्तारोप्य अङ्गुष्ठतर्जनीभ्यां पीड़येदित्यन्वयः। तलप्रच्छादितमिति पीड़नक्रियाविशेषणम्, एतेन रक्तधारा नोर्द्ध्वमुत्तिष्ठति इत्यभिसन्धिः॥ ९॥

कुठारिकया वेधनप्रकारमाह, वामहस्तेनेत्यादि।—इतरेण दक्षिणहस्तेन ताड़येत्। कथं ताडयेत? इत्याह, मध्यमाङ्गुल्येति। अङ्गुष्ठविष्टब्धमुक्तयेति—आदौ बद्धाङ्गुष्ठेन विष्टभ्य मुक्तयेत्यर्थः॥ १०॥

अस्त्रद्वयस्य प्रयोगस्थानादिकम्।—

मांसले निक्षिपेद्देशे व्रीह्यास्यं व्रीहिमात्रकम्।
यवार्द्धमस्थ्नामुपरि शिरां विध्यन् कुठारिकाम्॥ ११॥

अयोगे चिकित्सा।—

असम्यगस्रे स्रवति वेल्लव्योषनिशानतैः।
सागारधूमलवण-तैलैर्दिह्याच्छिरामुखम्॥ १२॥

सम्यग्योगे कर्त्तव्यनिर्देशः।—

सम्यक् प्रवृत्ते कोष्णेन तैलेन लवणेन च॥ १३॥

रक्तस्रावस्य परिमाणम् अतिस्रावणस्य दोषश्च।—

अशुद्धौ बलिनोऽप्यस्रं न प्रस्थात् स्रावयेत् परम्।
अतिस्रुतौ हि मृत्युः स्याद्दारुणा वाऽनिलामयाः॥ १४॥

अतियोगे चिकित्सा।—

तत्राभ्यङ्गरसक्षीर-रक्तपानानि भेषजम्॥ १५॥

स्रावणानन्तरं कर्त्तव्यनिर्देशः।—

स्रुते रक्ते शनैर्यन्त्रमपनीय हिमाम्बुना।
प्रक्षाल्य तैलप्रोतार्क्तं बन्धनीयं शिरामुखम्॥ १६॥

---

इदानीमुक्तमस्त्रद्वयं यस्मिन् प्रदेशे प्रयोज्यं, तदाह, मांसले इत्यादि।—मांसले प्रदेशे शिरां विध्यन् इति योज्यम्। व्रीह्यास्यमिति—व्रीहिमुखं शस्त्रं, व्रीहिमात्रकं निक्षिपेत् प्रवेशयेत्। अस्थ्नामुपरि शिरां विध्यन् कुठारिकां यवार्द्धमात्रां निक्षिपेदित्यर्थः॥ ११॥

अयोगे चिकित्सामाह, असम्यगित्यादि।—वेल्लः विडङ्गः॥ १२।१३॥

अशुद्धावित्यादि।—अशुद्धाविति—असम्यक्शुद्धौ। प्रस्थादिति। प्रस्थोऽत्र अर्द्धत्रयोदश पलम्। परमिति—ऊर्द्धम्। अत्रैव हेतुमाह, अतिस्रुतावित्यादि॥ १४॥

तत्रेत्यादि।—तत्रेति—रक्तातिस्रुतौ। रसः मांसरसः॥ १५॥

स्रुते इत्यादि।—प्रक्षाल्येति शिरामुखमित्यन्वयः। तैलप्रोतार्क्तमिति—तैलप्रोतः तैलेन पिचुः, तेन आक्तमभ्यक्तम्; उक्तं हि ढल्वणपाठे—"सतैलञ्च प्रोतं शिरामुखे दत्त्वा बध्नीयात्" इति॥ १६॥

असम्यक् शुद्धे पुनः स्रावणविधिः।—

अशुद्धं स्रावयेद्भूयः सायमह्न्यपरेऽपि वा ॥ १७ ॥

अतिस्रावे स्तम्भनचिकित्सा।—

रक्ते त्वतिष्ठति क्षिप्रं स्तम्भनीमाचरेत् क्रियाम्।

लोध्रप्रियङ्गुपत्तङ्ग-माषयष्ट्याह्वगैरिकैः ॥ १८ ॥

मृत्कपालाञ्जनक्षौम-मसीक्षीरित्वगङ्कुरैः।

विचूर्णयेत् व्रणमुखं पद्मकादि हिमं पिबेत् ॥ १९ ॥

अतिस्रावे चिकित्साऽन्तरम्।—

तामेव वा शिरां विध्येद्व्यधात् तस्मादनन्तरम्।

शिरामुखं वा त्वरितं दहेत् तप्तशलाकया ॥ २० ॥

अतिस्रावणनिषेधः उपायान्तरेण शोधनविधिश्च।—

सशेषमप्यसृक् धार्यं न चातिस्रुतिमाचरेत्।

हरेच्छृङ्गादिभिः शेषं प्रसादमथवा नयेत् ॥

मर्म्महीने यथाऽऽसन्ने देशेऽन्यां व्यधयेच्छिराम् ॥ २१ ॥

---

अशुद्धमित्यादि।—अशुद्धमिति—असम्यक्शुद्धम्। सायमिति तस्मिन्नेव दिने। अपरे वा अह्नीति—द्वितीयदिने ॥ १७ ॥

रक्ते इत्यादि।—स्तम्भनीं क्रियामिति वक्ष्यमाणाम्। तामेव स्तम्भनीं क्रियामाह, लोध्रेत्यादि। पत्तङ्गं रक्तचन्दनम्। अञ्जनं रसाञ्जनम्। क्षौममसी दग्धवस्त्रभस्म। क्षीरिणः वटोडुम्बरादयः, तेषां त्वक् अङ्कुराश्च। पद्मकादि पद्मकादिगणः। हिममिति—शीतकषायं पिबेत् ॥ १८।१९ ॥

तामेवेत्यादि।—तामिति—पूर्वविद्धाम्। व्यधात् तस्मादनन्तरमिति—पूर्वव्यधसमीपोर्द्ध्वभागे। शिरामुखमिति—विद्धशिराया व्रणमुखम् ॥ २० ॥

दुष्टमपि रक्तं न निःशेषं स्रावयेदित्याह, सशेषमपीत्यादि।—सशेषमिति—दुष्टशोणितशेषम्। प्रसादमथवा नयेदिति प्रसादनलेपनादिना। शिरा हि दुष्टा एव वेध्याः, न त्वदुष्टाः; उक्तं हि—"व्यध्याश्चादुष्टा न विध्येत्" (सू० शा० ८ अ०) इति। ननु यत्र प्रदेशे तु वेध्यशिरा न दृश्यते, कथं तत्र शिराव्यधः कार्य्यः? इत्याह, मर्म्महीने इत्यादि वाग्भटस्य। अत्र व्यध्यशिराणामदर्शने इति शेषः। अत एवैतस्मात् पूर्वं वाग्भटे—"यथोक्तानामदर्शने" (सू० २७ अ०) इत्युक्तम्।

रक्तस्रावणानर्हाः ।—

न तूनषोड़शातीत-सप्तत्यब्दस्रुतासृजाम् ।
अस्निग्धास्वेदितात्यर्थ-स्वेदितानिलरोगिणाम् ॥ २२ ॥
गर्भिणीसूतिकाऽजीर्ण-पित्तास्रश्वासकासिनाम् ।
अतिसारोदरच्छर्दि-पाण्डुसर्वाङ्गशोफिनाम् ॥
स्नेहपीते प्रयुक्तेषु तथा पञ्चसु कर्मसु ॥ २३ ॥
नायन्त्रितां शिरां विध्येन्न तिर्य्यङ्नाप्यनुत्थिताम् ।
नातिशीतोष्णवाताभ्रेष्वन्यत्रात्ययिकाद्गदात् ॥ २४ ॥

पथ्यविधिः ।—

नात्युष्णशीतं लघु दीपनीयं रक्तेऽपनीते हितमन्नपानम् ।
तदा शरीरं ह्यनवस्थितासृग्वह्निर्विशेषेण च रक्षणीयः ॥ २५ ॥

पथ्यनियमस्य अवधिनिर्देशः ।—

नरो हिताहारविहारसेवी मासं भवेद्वा-बललाभतो वा ॥ २६ ॥

विशुद्धरक्तपुरुषस्य लक्षणम् ।—

प्रसन्नवर्णेन्द्रियमिन्द्रियार्थानिच्छन्तमव्याहतपक्तृवेगम् ।
सुखान्वितं पुष्टिबलोपपन्नं विशुद्धरक्तं पुरुषं वदन्ति ॥ २७ ॥

इति शिराव्यधाधिकारः ।

---

मर्महीने इति—मर्मवर्जिते । यथाऽऽसन्ने देशे इति—यत्र देशे व्यध्यशिरा न दृश्यते, तत्र तत्समीपदेशे या अन्याः शिरा दृश्यन्ते, ता एव वेध्या इत्यर्थः ॥ २१ ॥

येषां शिराव्यधो न कार्य्यस्तानाह, न त्वित्यादि वाग्भटस्य ।—अन्यत्रात्ययिकाद्गदादिति आत्ययिके तु व्याधौ एष्वपि कालेषु शिरा व्यध्येत्यर्थः ॥ २२—२४ ॥

रक्तस्रावानन्तरं यद्विधेयं तदाह, नात्युष्णेत्यादि ।—अनवस्थितासृगिति—प्रचलद्रक्तम् ॥ २५।२६ ॥

इदानीं शोणितादर्शनेऽपि विशुद्धरक्तज्ञानार्थं लक्षणमाह, प्रसन्नेत्यादि ।—वेगः पुरीषादीनाम् ॥ २७ ॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां शिराव्यधाधिकार-विवृतिः ।

# अथ स्वस्थाधिकारः ।

दिनाचारविधिः ।—

ब्राह्ममुहूर्त्ते शय्यात्यागस्य शौचादेश्च कर्त्तव्यतानिर्देशः ।—

ब्राह्मे मुहूर्त्ते उत्तिष्ठेत् स्वस्थो रक्षार्थमायुषः ।
शरीरचिन्तां निर्वर्त्त्य कृतशौचविधिस्ततः ॥ १ ॥

दन्तशोधनविधिः ।—

अर्कन्यग्रोधखदिर-करञ्जककुभादिकम् ।
प्रातर्भुक्त्वा च मृद्वग्रं कषायकटुतिक्तकम् ॥
भक्षयेद्दन्तपवनं दन्तमांसान्यबाधयन् ॥ २ ॥

दन्तकाष्ठेन दन्तशोधनानर्हाः ।—

नाद्यादजीर्णवमथु-श्वासकासज्वरार्दिती ।
तृष्णाऽऽस्यपाकहृन्नेत्र-शिरःकर्णामयी च तत् ॥ ३ ॥

अञ्जनस्य कर्त्तव्यता ।—

सौवीरमञ्जनं नित्यं हितमक्ष्णोः प्रयोजयेत् ।
पञ्चरात्रेऽष्टरात्रे वा स्रावणार्थं रसाञ्जनम् ॥ ४ ॥

---

इदानीमातुरहितचिकित्सामभिधाय सुस्थवृत्तमाह, ब्राह्मे इत्यादि ।—ब्राह्मो मुहूर्त्तः रात्रेः पश्चिमयामस्य शेषनाड़िकाद्वयम् । शरीरचिन्तां मूत्रपुरीषोत्सर्गादिरूपाम् । तत इति—शौचविधेरनन्तरम् ॥ १ ॥

अर्केत्यादि ।—भुक्त्वा चेति—भोजनानन्तरमपीत्यर्थः । दन्तपवनं भक्षयेदिति—दन्ताः पूयन्ते अनेनेति दन्तपवनं दन्तकाष्ठम् ॥ २ ॥

दन्तकाष्ठं येनं विधेयं तानाह, नाद्यादित्यादि ।—नाद्यादित्यत्र दन्तपवनमित्यन्वयः ॥ ३ ॥

सौवीरमित्यादि ।—सुवीरा नाम नदी, तद्भवमञ्जनं सौवीरमञ्जनम् ; तल्लक्षणं यथा—"वल्मीकशिखराकारं भङ्गे नीलोत्पलद्युति । सौवीराञ्जनमिच्छन्ति आयुर्वेदार्थचिन्तकाः ॥" इति । नित्यं प्रत्यहम् । अत्र पञ्चरात्राष्टरात्रग्रहणमदूरान्तरकालेऽनियमदर्शनार्थं, तेन दोषकालमपेक्ष्य अर्वाङ्मध्ये ऊर्द्ध्वं कर्त्तव्यं स्रावणाञ्जनमिति भवति । रसाञ्जनमिति—"दार्वीक्वाथसमुद्भवम्" इत्यर्थः । "पञ्चरात्रेऽष्टरात्रे वा"

नस्यादेः कर्त्तव्यता।—

ततो नावनगण्डूष-धूमताम्बूलभाग्भवेत्॥ ५॥

ताम्बूलभक्षणानर्हाः।—

ताम्बूलं क्षतपित्तास्र-रूक्षोत्कुपितचक्षुषाम्।
विषमूर्च्छामदार्त्तानामपथ्यञ्चापि शोषिणाम्॥ ६॥

अभ्यङ्गस्य कर्त्तव्यता गुणाश्च।—

अभ्यङ्गमाचरेन्नित्यं स जराश्रमवातहा।
शिरःश्रवणपादेषु तं विशेषेण शीलयेत्॥ ७॥

अभ्यङ्गानर्हाः।—

वर्ज्योऽभ्यङ्गः कफग्रस्त-कृतसंशुद्ध्यजीर्णिभिः॥ ८॥

व्यायामस्य कर्त्तव्यता।—

शरीरचेष्टा या चेष्टा स्थैर्य्यार्था बलवर्द्धिनी।
देहव्यायामसङ्ख्याता मात्रया तां समाचरेत्॥ ९॥

व्यायामानर्हाः।—

वातपित्तामयी बालो वृद्धोऽजीर्णी च तां त्यजेत्॥ १०॥

उद्वर्त्तन-स्नानयोः कर्त्तव्यता।—

उद्वर्त्तनं ततः कार्य्यं ततः स्नानं समाचरेत्॥ ११॥

---

(सू० मात्राशितीय० अ०) इत्यत्र चरकपाठे—"समरात्रेऽष्टरात्रे वा" (सू० २ अ०) इति वाग्भटे पठ्यते॥ ४।५॥

निषिद्धताम्बूलानाह—ताम्बूलमित्यादि॥ ६॥

अभ्यङ्गमित्यादि।—तमिति—अभ्यङ्गम्॥ ७।८॥

शरीरेत्यादि।—या च इष्टा अभिमता, एतेन भारवहनाद्या अनिष्टाऽपि कार्य्यवशात् क्रियमाणा चेष्टा निरस्यति। अत्र देहेत्यनेन मनोव्यायामं चिन्तनादिकं निरस्यति। सङ्ख्याता इति—संज्ञिता। मात्रया तां समाचरेदिति मात्रा चार्द्धशक्तिः; यदाह वाग्भटः,—"अर्द्धशक्त्या निषेव्यस्तु बलिभिः स्निग्धभोजिभिः" (सू० २ अ०) इति। अर्द्धशक्तिलक्षणं यथा—"कक्षे ललाटे ग्रीवायां स्कन्धे नासाऽङ्गसन्धिषु। स्वेदः सञ्जायते यत्र बलार्द्धं तं विनिर्दिशेत्॥" इति॥ ९॥

निषिद्धव्यायामानाह—वातेत्यादि॥ १०।११॥

उष्णोदकेन स्नानस्य विशेषविधिः।—

उष्णाम्बुनाऽधःकायस्य परिषेको बलावहः।
तेनैव चोत्तमाङ्गस्य बलहृत् केशचक्षुषोः॥ १२॥

स्नाननिषेधः।—

स्नानमर्दितनेत्रास्य-कर्णरोगातिसारिषु।
आध्मानपीनसाजीर्ण-भुक्तवत्सु च गर्हितम्॥ १३॥

शौचादेः कर्त्तव्यता।—

नीचरोमनखश्मश्रु-निर्मलाङ्घ्रिमलायनः।
स्नानशीलः सुसुरभिः सुवेशो निर्मलाम्बरः॥
धारयेत् सततं रत्न सिद्धमन्त्रमहौषधीः॥ १४॥

दिवा रात्रौ च भ्रमणविधिः।—

सातपत्रपदत्राणो विचरेत् युगमात्रदृक्।
निशि चात्ययिके कार्य्ये दण्डी मौली सहायवान्॥१५॥

भोजनकालादिनिर्देशः।—

जीर्णे हितं मितञ्चाद्यान्न वेगानीरयेत् बलात्।
न वेगितोऽन्यकार्य्यः स्यान्नाजित्वा साध्यमामयम्॥ १६॥

दशविधपापाचरणनिषेधः वाक्प्रयोगनियमश्च।—

दशधा पापकर्माणि कायवाङ्मानसैस्त्यजेत्।

---

उष्णाम्बुनेत्यादि।—तेनैवेति—उष्णाम्बुना उत्तमाङ्गस्य मस्तकस्य सेकः केशचक्षुषोर्बलं हरतीति बलहृत्॥ १२॥

निषिद्धस्नानमाह—स्नानमित्यादि॥ १३॥

नीचेत्यादि।—अङ्घ्री पादौ, मलायनानि गुदोपस्थादीनि, तानि निर्मलानि यस्य सः। निर्मलाम्बर इत्यत्र "अनुल्बणोज्ज्वलः" (सू० २ अ०) इति वाग्भटे पठ्यते, अनुल्बणोऽनुद्धत इत्यर्थः॥ १४॥

सातपत्रेत्यादि।—युगं हस्तचतुष्टयम्। आत्ययिके इति—अवश्यकर्त्तव्ये॥ १५॥

जीर्णे इत्यादि।—वेगानिति—मूत्रपुरीषवेगान्। ईरयेदिति—उदीरयेत्। वेगित इति—सञ्जातमूत्रपुरीषादिवेगः॥ १६॥

कालो हितं मितं ब्रूयादविसंवादि पेशलम् ॥ १७ ॥

सर्वभूते आत्मवद्दर्शनोपदेशः।—

आत्मवत् सततं पश्येदपि कीटपिपीलिकाम्।
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥ १८ ॥

प्रात्यहिकाचारस्मरणोपदेशः तत्फलञ्च।—

नक्तन्दिनानि मे यान्ति कथम्भूतस्य सम्प्रति।
दुःखभाक् न भवत्येवं नित्यं सन्निहितस्मृतिः ॥ १९ ॥

इति दिनाचारविधिः।

ऋतुचर्य्या।—

ऋतुनिर्देशः।—

मासैर्द्विसङ्ख्यैर्माघाद्यैः क्रमात् षडृतवः स्मृताः।
शिशिरश्च वसन्तश्च ग्रीष्मवर्षाशरद्धिमाः ॥ २० ॥

---

दशधेत्यादि।—दशधा पापकर्माणीति—उक्तञ्च—"अदत्तानामुपादानं हिंसा चैवाविधानतः। परदारोपसेवा च कायिकं त्रिविधं स्मृतम् ॥ पारुष्यमनृतञ्चैव पैशुन्यञ्चापि सर्वशः। असम्बद्धप्रलापश्च वाङ्मयं स्याच्चतुष्टयम् ॥ परद्रव्येष्वभिध्यानं मनसाऽनिष्टचिन्तनम्। वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतम् ॥" इति। काले इति—यथोचितसमये। अविसंवादीति—न पूर्व्वापरविरुद्धम्। पेशलं मधुरम् ॥ १७ ॥

आत्मवदित्यादि।—परेषां न समाचरेदिति—परेषां प्रतिकूलानि अनिष्टानि न समाचरेत; कुतो न आचरेत? इत्याह, आत्मनः इत्यादि। आत्मनः प्राणभृतामेव आत्मसम्बन्धादित्यर्थः; किंवा आत्मनो यानि प्रतिकूलानि अनिष्टानि तानि परेषामपि नाचरेदिति ॥ १८ ॥

नक्तमित्यादि।—कथम्भूतस्य कीदृशस्य मम पापं कुर्व्वतः पुण्यं कुर्व्वतो वा इदं परिहरतो वा सम्प्रति नक्तं दिनानि यान्ति एवं नित्यं सन्निहितस्मृतिर्यः पुरुषो भवति, स दुःखभाक् न स्यात, यस्मादेवं सर्व्वदा स्मरन् पुरुषो दुःखहेतुतया दुष्कृतं त्यजति, सुखहेतुतया च सुकृतमन्विच्छति इत्यर्थः ॥ १९ ॥

इति दिनाचारविधि-विवृतिः।

हैमन्तिकाहाराचारविधिः।—

बलिनः शीतसंरोधाद्धेमन्ते प्रबलोऽनलः।
सेवेतातो हिमे स्निग्ध-स्वाद्वम्ललवणान् रसान्॥ २१॥
गोधूमपिष्टमाषेक्षु-क्षीरोत्थविकृतीः सुराः।
नवमन्नं वसां तैलं शौचकार्य्ये सुखोदकम्॥ २२॥
शुक्त्याऽर्ककिरणान् स्वेदं पादत्राणञ्च सर्वदा।
प्रावाराजिनकौषेय-प्रवेणीकौचवास्तृतम्॥ २३॥
उष्णस्वभावैर्लघुभिः प्रावृतः शयनं भजेत्।
अङ्गारतापसन्तप्त-गर्भभूवेश्मनि प्रियाम्॥
पीवरोरुस्तनश्रोणीमालिङ्ग्यागुरुचर्चिताम्॥ २४॥

पारिशेष्यादृतुचर्य्यारूपं सुखहितमाह, मार्गेत्यादि।—षडृतव इति—शिशिर-वसन्त-ग्रीष्म-वर्षा-शरद्धेमन्ता इत्यर्थः॥ २०॥

यद्यपि शिशिरादि-ऋतुत्रयमुत्तरायणरूपत्वेन प्रशस्तत्वादग्रे वोढ़ुं, तथाऽपि बलवृद्धिप्रकर्षत्वेन प्राशस्त्यात् प्रथमं हेमन्तविधिमाह, बलिन इत्यादि।—बलिन इत्यनेन प्राणिबलस्याग्निबलहेतुत्वं दर्शयति; उक्तं हि पालकाप्ये—"अन्याहृता-द्भिप्रायात् प्रीतिः प्रीतेर्बलं बलात्। अग्निरग्नेश्च धातूनां बलं नाशश्च तौ रुजाम्॥" इति। किंवा बलिन इति—उपचयवतः। शीतसंरोधादिति—कुम्भकारपचनपङ्क-लेपन्यायात् शीतेन बहिरनिर्गच्छदौष्मणो रोधात्। रसानिति—औदकानूप-मांसरसान्; कीदृशान्? स्निग्धस्वाद्वम्ललवणद्रव्यसंस्कारात् स्निग्धस्वाद्वम्ललवणान्; उक्तं हि चरके—"तस्मात् तुषारसमये स्वाद्वम्ललवणान् रसान्। औदकानूपमांसानां मेध्यानामुपयोजयेत्॥" (सू० तस्याशितीय०) इति। आद्यस्थाने "मांस" इति पाठो वाग्भटपुस्तके नास्ति, टीकायाञ्च न व्याख्यात इति। प्रावारेत्यादि वाग्भटस्य। प्रावारः गुरुप्रावरणं कम्बलादि। अन्ये तु प्रावारः कार्पासलोमबहुलत्वात्। अजिनं सुखस्पर्शं लोमशं चर्म। कौषेयं क्रिमिकोषोद्भवं वस्त्रम्। प्रवेणी लोमी। अन्ये तु प्रवेणी सूचीबाणाख्यो वस्त्रविशेष इत्याहुः। कौचवः रल्लकादि वस्त्रभेद इति केचित्, अन्ये तु कार्पासवस्त्रमेवेत्याहुः। चरके तु कौचवस्थाने "कुथक" (सू० तस्याशितीय०) इति पठ्यते, कुथकस्तु चित्रकम्बलः। उष्णस्वभावैर्लघुभिरिति नेपालकम्बल-प्रचुरतूलकपटादिः। किं कृत्वा शयनं भजेत्? इत्याह, अङ्गारेत्यादि।

शैशिरिकाहाराचारविध्यतिदेशः ।—

अयमेव विधिः कार्य्यः शिशिरेऽपि विशेषतः ।
तदा हि शीतमधिकं रौक्ष्यञ्चादानकालजम् ॥ २५ ॥

वासन्तिकाहाराचारविधिः ।—

कफश्चितो हि शिशिरे वसन्तेऽर्कांशुतापितः ।
हत्वाऽग्निं कुरुते रोगांस्ततस्तत्र प्रयोजयेत् ॥ २६ ॥
तीक्ष्णं वमननस्यादि-कवलग्रहमञ्जनम् ।
व्यायामोद्वर्त्तनं धूमं शौचकार्य्यं सुखोदकम् ॥ २७ ॥
स्नातोऽनुलिप्तः कर्पूर-चन्दनागुरुकुङ्कुमैः ।
पुराणयवगोधूम-क्षौद्रजाङ्गलशूल्यभुक् ॥ २८ ॥
अपिबेदासवारिष्ट-सीधुमाध्वीकमाधवान् ।
वसन्तेऽनुभवेत् स्त्रीणां काननानाञ्च यौवनम् ॥ २९ ॥

वसन्ते अपथ्यानि ।—

गुर्वम्लस्निग्धमधुरं दिवास्वप्नञ्च वर्जयेत् ॥ ३० ॥

---

अङ्गारतापेन सन्तप्तं यत् गर्भगृहं गृहकोष्ठकं तथा भूगृहञ्च तत्र; भू-पदमत्र बहुभील्यवच्छेदाय; चरकेऽप्युक्तं—"सेवेत भूगृहञ्चोष्णमुष्णं गर्भगृहं तथा" ( सू० तस्याशितीय० ) इति ॥ २१—२४ ॥

उक्तविधिं शिशिरेऽप्यतिदिशति, अयमेवेत्यादि ।—अत्रैव हेतुमाह, तदे-त्यादि ॥ २५ ॥

वसन्तविधिमाह, कफ इत्यादि ।—शूल्यं भटित्रं, शूलपाचितमित्यर्थः । आस-वारिष्टं सुराकृतसन्धानम् । सीधु गुडासवः । अन्ये तु—"मद्याकराधिकद्रव्य-खदिराद्यैः कृतस्तु यः । सोऽरिष्टः स्यादासवस्तु द्रव्याण्यामुत्य यः कृतः ॥" इति । माध्वीकं मधूकपुष्पकृतं मद्यम् । अरुणस्तु "मार्द्वीक" ( वा० सू० ३४० ) इति पठित्वा मृद्वीकारसोद्भवं मद्यमिति व्याचष्टे । माधवः मधुकृत आसवः । अनुभवेदित्यनेन स्नेहचयार्थं स्तोकं मैथुनमनुजानाति, वसन्तस्यादानमध्यत्वादिति भावः ॥२६—२९॥

गुर्वित्यादि ।— अत्र अम्लस्थाने लवणेत्यपपाठः ॥ ३० ॥

ग्रैष्मिकाहाराचारविधिः ।—

मयूखैर्जगतः स्नेहं ग्रीष्मे पेपीयते रविः ।
स्वादु शीतं द्रवं स्निग्धमन्नपानं तदा हितम् ॥ ३१ ॥
शीतं सशर्करं मन्थं जाङ्गलान् मृगपक्षिणः ।
घृतं पयः सशाल्यन्नं भजन् ग्रीष्मे न सीदति ॥ ३२ ॥
मद्यमल्पं न वा पेयमथवा सुबहूदकम् ।
मध्याह्ने चन्दनार्द्राङ्गः स्वप्याद्धारागृहे निशि ॥ ३३ ॥
निशाकरकराकीर्णे प्रवाते सौधमस्तके ।
निवृत्तकामो व्यजनैः पाणिस्पर्शैः सचन्दनैः ॥
सेव्यमानो भजेतास्यां मुक्तामणिविभूषितः ॥ ३४ ॥

ग्रीष्मे अपथ्यानि ।—

लवणाम्लकटूष्णानि व्यायामञ्चात्र वर्जयेत् ॥ ३५ ॥

वार्षिकाहाराचारविधिः ।—

भूवाष्पान्मेघनिष्यन्दात् पाकादम्लाज्जलस्य च ।
वर्षास्वग्निबले क्षीणे कुप्यन्ति पवनादयः ॥ ३६ ॥
भजेत् साधारणं सर्वमूष्मणस्तेजनञ्च यत् ।
आस्थापनं शुद्धतनुर्जीर्णं धान्यं कृतान् रसान् ॥ ३७ ॥

---

ग्रीष्मविधिमाह, मयूखैरित्यादि ।—मयूखैरिति—किरणैः । स्नेहम् इति—क्लेदः । पेपीयते अत्यर्थं पिबति । ग्रीष्मेऽम्लत्वादुष्णत्वाच्च मद्यं न पेयमित्युत्सर्गः, मद्यसात्म्यानान्तु सात्म्यत्यागेन सात्म्यत्यागजाः रोगा भवन्ति, तत्र किं प्रतिविधेयम ? इत्याह, अल्पं वा सुबहूदकं वा पेयमिति । मध्याह्ने इत्यादि । धारागृहे इति छेदः । निशीति परेण सम्बध्यते ॥ ३१—३४ ॥

वर्जनीयमाह—लवणेत्यादि ॥ ३५ ॥

वर्षाविधिमाह, भूवाष्पादित्यादि ।—भूवाष्पः प्रभावादेव दोषत्रयकोपकः । अन्ये तु पित्तस्य इत्याहुः । मेघनिष्यन्दः शैत्याद्वातकफजनकः । अम्लपाकता च जलस्य वर्षास्वभावकृता पित्तकरी । अग्निबले क्षीणे इत्यनेन अग्निमान्द्यमपि त्रिदोषकोपणमिति दर्शयति, अग्निमान्द्यं हि अपाकाम्लपाकाभ्यां कफपित्तकारि, धातुपोषक-

शरदि अपथ्यानि।—

तुषारक्षारसौहित्य-दधितैलवसातपान्।
तीक्ष्णमद्यदिवास्वप्न-पुरोवातान् परित्यजेत् ॥ ४३ ॥

ऋतुविशेषे विशेषविशेषरसोपयोगः।—

शीते वर्षासु चाद्यांस्त्रीन् वसन्तेऽन्त्यान् रसान् भजेत्।
स्वादुं निदाघे शरदि स्वादुतिक्तकषायकान् ॥ ४४ ॥

ऋतुविशेषे रूक्षशीताद्यन्नपानोपयोगः।—

शरद्वसन्तयो रूक्षं शीतं घर्मघनान्तयोः।
अन्नपानं समासेन विपरीतमतोऽन्यथा ॥ ४५ ॥

नित्यं सर्वरसाभ्यासोपदेशः।—

नित्यं सर्वरसाभ्यासः स्वस्वाधिक्यमृतावृतौ ॥ ४६ ॥

ऋतुसन्धिः तत्र कर्त्तव्यञ्च।—

ऋत्वोरन्त्यादिसप्ताहावृतुसन्धिरिति स्मृतः।
तत्र पूर्वो विधिस्त्याज्यः सेवनीयोऽपरः क्रमात् ॥ ४७ ॥

---

घृतं पद्मोत्पलादिकम्। आविलपय इति—स्रुतं दुग्धम्। प्रदोषे चेति चकारोऽवधारणे, प्रदोषे एवेत्यर्थः ॥ ४०—४२ ॥

वर्जनीयमाह—तुषारेत्यादि ॥ ४३ ॥

ऋतुभेदे रसानाह, शीते इत्यादि वाग्भटस्य।—शीते इति—हिमशिशिरयोः। आद्यान् त्रीन् इति—स्वाद्वम्ललवणरसान्। अन्यानिति—कटुतिक्तकषायान् ॥ ४४ ॥

शरद्वसन्तयोरित्यादि।—अत्र भजेदित्यनेन पूर्वोक्तेनान्वयः। अतः अन्यथेति—हेमन्तशिशिरवर्षासु, विपरीतमिति—स्निग्धम् उष्णञ्चान्नपानं भजेदित्यर्थः ॥ ४५ ॥

नित्यमित्यादि।—नित्यं सर्वदा सर्वेषां षण्णां रसानामभ्यासः कार्यः। एवञ्च सति "शीते वर्षासु चाद्यांस्त्रीन्" इत्यादि यदुक्तं तत् विरुध्यते इत्यत आह, स्वस्वाधिक्यमित्यादि। यस्मिन् ऋतौ यो रसः सेव्यत्वेनोक्तः तस्याधिक्यमात्रं तत्र तत्र कार्यमिति भावः ॥ ४६ ॥

ऋत्वोरित्यादि।—पूर्व-ऋतोरन्त्यसप्ताहात्मकसप्ताहः, तथा पर-ऋतोरादिमसप्ताहश्च सप्ताहद्वयं इति पक्षात्मकः ऋतुसन्धिरित्यर्थः। क्रमादिति—न सहसा त्यागसेवने

ऋतुचर्य्याया उपसंहारः ओकसात्म्यलक्षणञ्च ।—

इत्युक्तमृतुसात्म्यं यच्चेष्टाहारव्यपाश्रयम् ।
उपशेते यदौचित्यादोकसात्म्यं तदुच्यते ॥ ४८ ॥

सात्म्यलक्षणम् ।—

देशानामामयानाञ्च विपरीतगुणं गुणैः ।
सात्म्यमिच्छन्ति सात्म्यज्ञाश्चेष्टितञ्चाऽऽद्यमेव च ॥ ४९ ॥

सङ्क्षेपेण स्वास्थ्यपालनोपायनिर्देशः ।—

तच्च नित्यं प्रयुञ्जीत स्वास्थ्यं येनानुवर्त्तते ।
अजातानां विकाराणामनुत्पत्तिकरञ्च यत् ॥ ५० ॥

---

विधेये ; अत्र हेतुर्वाग्भटेनैवोक्तो यथा—"असात्म्यजा हि रोगाः स्युः सहसा त्यागशीलनात्" ( सू० ३४० ) इति ; सात्म्यत्यागादसात्म्यमेव नाचरेदित्यर्थः ॥४७॥

उपसंहरति, इत्युक्तमित्यादि ।—ऋतुसात्म्यप्रसङ्गेनाभ्याससात्म्यमप्याह, उपशेते इत्यादि । उपशेते सुखयति, अपथ्यमपि सत् विकारं न जनयति । कुतः ? इत्याह, औचित्यादिति—अभ्यासात्, अपथ्यमपि हि निरन्तराभ्यासात् विषमिवाशीविषस्य नोपघातकं भवतीति भावः । ओकः अभ्यासः, तेन सात्म्यमोकसात्म्यम् ॥ ४८ ॥

देशसात्म्यं रोगसात्म्यञ्च दर्शयति, देशानामित्यादि ।—देशानाम् आनूपादीनां, गुणैः स्नेहगौरवादिभिः सह विपरीतगुणं स्नेहगौरवविपरीतरौक्ष्यलाघवगुणं मुद्गजाङ्गलमांसमध्वादि, आद्यमदनीयं, चेष्टितञ्च व्यायामादि, देशसात्म्यमिच्छन्त्यायुर्वेदविद इत्यर्थः । एवमामयविपरीतञ्च शीतविकारे उष्णमित्यादि रोगसात्म्यमित्यर्थः । गुणशब्दोऽत्र धर्ममात्रवचनः, तेन विपरीतप्रभावाणामपि ग्रहणम् ; ततश्च प्रभाववैपरीत्यात् तद्विपरीतार्थकारिणाञ्च ग्रहणम् । आमयशब्देन आमयहेतुरपि गृहीतव्यः, तेन हेतुविपरीतस्यापि सात्म्यस्य ग्रहणम् ॥ ४९ ॥

इदानीं ग्रन्थविस्तारभयात् सङ्क्षेपेण स्वास्थ्यपरिपालनोपायमाह, तच्चेत्यादि ।—स्वास्थ्यमिह उद्रेकक्षयधातुवैषम्यविरहितधातुसाम्यं, तच्च स्वास्थ्यमुभयथा परिपाल्यते, विशुद्धाहाराचाराभ्यां सदा जीर्यमाणशरीरपोषणेन प्रत्यवायहेतुपरिहारेण च ; यथा दीपपरिपालनं स्नेहवर्त्तिदानात् पोषणेन क्रियते, तथा निर्वापकहेतुवातादिपरिहारेण च ; तत्र श्लोकपूर्वार्द्धेन स्वास्थ्यपोषकहेतुरुक्तः, उत्तरार्द्धेन तु स्वास्थ्यविघातक-

शरीररक्षायां अवश्यकर्त्तव्यतोपदेशः।—

नगरी नगरस्येव रथस्येव रथी सदा।
स्वशरीरस्य मेधावी कृत्येष्ववहितो भवेत्॥ ५१॥

इति स्वस्थाधिकारः।

ग्रन्थकर्त्तुः वंशपरिचयः।—

गौड़ाधिनाथरसवत्यधिकारिपात्र-
नारायणस्य तनयः सुनयोऽन्तरङ्गात्।
भानोरनु प्रथितलोध्रवलीकुलीनः
श्रीचक्रपाणिरिह कर्त्तृपदाधिकारी॥ ५२॥

ग्रन्थोक्तविषयापह्नवे अभिशापः।—

यः सिद्धयोगलिखिताधिकसिद्धयोगा-
नत्रैव निक्षिपति केवलमुद्धरेद्वा।

---

हेतुपरिहारोऽभिधीयते इति न पौनरुक्त्यम्। अनुत्पत्तिरिह उत्पादकसामग्री-विघटनम्॥ ५०॥

इदानीमुक्तस्यानुक्तस्य च स्वास्थ्यविधेरवधानेन कर्त्तव्यतामाह, नगरीत्यादि।—नगरी रथी चेति—नगर-रथयोरधिकृतः। कृत्येषूक्तेष्वनुक्तेषु च॥ ५१॥

इति श्रीशिवदाससेनविरचितायां तत्त्वचन्द्रिकायां स्वस्थाधिकार-विवृतिः।

इदानीं ग्रन्थपरिसमाप्तौ पित्रादीनामुत्कीर्त्तनपूर्वकं स्वनाम निर्दिशन्नाह, गौड़ाधिनाथेत्यादि।—गौड़ाधिनाथः नयपालदेवः, तस्य रसवती महानसं, तस्या अधिकारी, तथा पात्रमिति—मन्त्री, ईदृशो यो नारायणस्तस्य तनयः। सुनय इति—नीतिमान्। अन्तरङ्गादिति—अभ्यन्तरङ्गपदविकात् भानोरनु नारायणस्य तनय इति योज्यं, तेन भानोरनुज इत्यर्थः। विद्याकुलसम्पन्नो हि भिषगन्तरङ्ग इत्युच्यते। लोध्रवलीकुलीन इति—लोध्रवलीसंज्ञकदत्तकुलोत्पन्नः॥ ५२॥

य इत्यादि।—अत्र सिद्धयोग इति वृन्दकृतग्रन्थस्य संज्ञा, तल्लिखितयोगमपेक्ष्य अधिका ये च सिद्धयोगा अत्र ग्रन्थे उक्तास्तानधिकयोगान् तत्रैव सिद्धयोगे यो निक्षिपति, तथा यो वा तानधिकान् सिद्धयोगानितः ग्रन्थादुद्धरेत् दूरीकुर्यात्,

भट्टत्रयत्रिपथवेदविदा जनेन
दत्तः पतेत् सपदि मूर्द्धनि तस्य शापः॥ ५३॥

इति महामहोपाध्याय-श्रीचक्रपाणिदत्तविरचितः
चिकित्सासङ्ग्रहः समाप्तः।

तस्य मूर्द्धनि ईदृशेन पुंसा दत्तः शापः पतेत्। कीदृशेन पुंसा? भट्टत्रयत्रिपथवेदविदा कारिका, बृहट्टीका, तन्त्रटीकेति भट्टत्रयं, त्रिपथवेदः ऋग्यजुःसामरूपः, तद्विदा॥ ५३॥

टीकाकर्त्तृपरिचयः।—

असद्व्याख्यानतमसा सुच्छन्नं चक्रसङ्ग्रहम्।
प्रकाशयितुमस्माभिर्निर्मिता तत्त्वचन्द्रिका॥
आसीत् सभायां शिखरेश्वरस्य लब्धप्रतिष्ठः किल साङ्गसेनः।
वाणीविलासं कविसार्वभौमं विजित्य यः प्राप यशःसमुद्रम्॥
काकुत्स्थसेनस्तनयस्ततोऽभूत् ततोऽपि लक्ष्मीधरसेननामा।
तस्मादभूद्दुर्लभसेनसूनुस्तस्मादनन्तस्तनयोऽथ जज्ञे॥
मालञ्चिकाग्रामनिवासभूमेर्गौड़ावनीपालभिषग्वरस्य।
अनन्तसेनस्य सुतो व्यधत्त टीकामिमां श्रीशिवदाससेनः॥
टीकासु पूर्वैर्विहितासु येऽर्था ये वा गुरुभ्योऽधिगता मयाऽपि।
सन्त्यत्र ते बलदलं श्रमेण टीकाऽन्तरान्वेषणजेन धीराः॥
इति श्रीशिवदाससेनविरचिता तत्त्वचन्द्रिका समाप्ता॥

सम्पूर्णोऽयं ग्रन्थः।

कफाश्रितवायोर्लक्षणम्।

प्राक्सञ्चितं यस्य बलासजालमन्वेति भूयः प्रबलः समीरः।
तेनावृतस्तं प्रविधाय शुष्कं कुर्य्यात् प्रवृद्धोऽथ विकारवृन्दम्॥
त्वक्स्फोटनं पाणिपदोत्क्षणानां दाहोऽतिशोषो वदनस्य तोदः।
हृत्कम्पदौर्बल्यमतिश्रमत्वं भ्रान्तिर्मृषोद्भावनजल्पनञ्च॥
वैस्वर्य्यमालस्यमथाविपाको ह्युदासचिन्ता रुचिगात्रभङ्गम्।
निद्राक्षयं मूत्रपुरीषबद्धं तमःप्रवेशो गमनेऽप्यशक्तिः॥
श्लेष्मान्वितोऽयं कथितः समीरः करोति नानागदवृन्दमेषः॥

सूतिकाकालः।

यावन्न दृश्यते पुष्पं यावत् वा क्षीरपोऽर्भकः।
सूतां प्रजायिनीं विद्यान्मासा नष्टा दशैव तु।
तस्मिन् यो जायते व्याधिः स स्मृतः सूतिकागदः॥

अन्यच्च।—

प्रसूता सार्द्धमासान्ते दृष्टे वा पुनरार्त्तवे।
सूतिकानामहीना स्यादिति धन्वन्तरेर्मतम्॥

सम्पूर्णम्।

